श्रीगणेशाय नमः॥ अथ…

हें अनुक्रमणिकेचें पुस्तक मु· मुंबई येथें बापुसदाशिव शेट हेगिष्टे श्रीकर्द्दनकर याणि आपले छापखान्यांत छापिलें· शके १७८९
प्रभवनामसंवत्सरे माघशुक्लप्रतिपत्तिथौ मंदवासरे संपूर्णं

श्रीगणेशायनमः श्रीगुरुभ्योनमः ॐकारविघ्नेशगुरून्सरस्वतीं गौरीशलक्ष्मीधवहारिंचभैरवम् प्रणम्यदेवान्कुरुतेहिग्रं
थंदैवज्ञशर्माजगतोहिताय १ विष्ण्वर्चनंदानशिवार्चनंचउत्सर्गधर्मंव्रतनिर्णयंच वेदान्पुराणान्स्मृतिनश्चतद्वदुक्तोक्तसिद्धांत
विधिंविधत्ते २ संगृह्यसर्वस्यमतंपुराणसिद्धांतवाक्यंमुनिभिःप्रणीतं लोकोपकारायकृतोनिबंधोव्रतप्रकाशःसुधियां-
मुदेस्यात् ३ यावंतोब्राह्मणालोकेधर्मशास्त्रविशारदाः तावंतःकृपयायुक्ताःकुर्वंतुग्रंथशोधनं ४ विज्ञाप्यंतेमयासर्वेपंडि-
तागुणमंडिताः मत्कारणीयोग्रंथोयंबालवद्बालकस्यमे ५ रामांकमुनिभूसंख्ये १७ ९३ वस्विषुगेंदुसंख्यके १६५८ वर्षेशाके-
शुक्लपक्षेपंचम्यांतपसःशुभे ६ विलोक्यविविधान्ग्रंथांल्लिख्यतेसुजनायवै तन्निमित्तोमयारंभःकिमज्ञातंमनीषिणः ७
चित्तपावनजातीयःशांडिल्यकुलमंडणः गोपालात्मजदैवज्ञः संगमेश्वरसंज्ञिनः ८ दुर्गाघाटेवसन्काश्यांनत्वापितृपिता
महान् कुर्वेवैविश्वनाथोहंव्रतराजस्यविस्तरम् ९ ॥अथव्रतराजप्रारंभः॥ अत्रचस्वकर्तव्यविषयोनिय
तःसंकल्पोव्रतमिति नन्वअग्निहोत्रसंध्यावंदनादिविषयेसंकल्पेअतिप्रसक्तेकिंकृत्वाभियुक्तव्रतप्रसिद्धिविषयः संकल्प
विशेषःसएवव्रतं नचव्रतंसंकल्पयेदित्यनन्वयइतिवाक्यं पाकंपचतिदानंदद्यादितिवत्प्रत्ययानुग्रहार्थंप्रयोगोत्पत्तिरिति
वक्तव्या अत्रव्रतकालमाह हेमाद्रौगार्ग्यः अस्तगेचगुरौशुक्रेबाल्येवृद्धेमलिम्लुचे उद्यापनमुपारंभंव्रतानांनैवकारये
त् १ तत्रैववृद्धमनुबृहस्पती अग्न्याधानंप्रतिष्ठांचयज्ञदानव्रतानिच मांगल्यमभिषेकंचमलमासेविवर्जयेत् बाले
वायदिवावृद्धेशुक्रेचास्तंगतेगुरौ मलमासेचएतानिवर्जयेद्देवदर्शनं लल्लः नीचस्थेवक्रसंस्थेप्यतिचरणगतेबाल
वृद्धास्तगेवासंन्यासोदेवयात्राव्रतनियमविधिः कर्णवेधस्तुदीक्षा मौंजीबंधोथचूडापरिणयनविधिर्वास्तुदेवप्रतिष्ठाव-
र्ज्याःसद्भिःप्रयत्नात्त्रिदशपतिगुरौसिंहराशिस्थितेचेति नीचस्थोमकरस्थःकल्पतरौदेवीपुराणे सिंहसंस्थगुरुशु
क्रंसर्वारंभेषुवर्जयेत् प्रारब्धंनचसिद्ध्येतमहाभयकरंभवेत् पुत्रमित्रकलत्राणिहन्याच्छीघ्रंनसंशयः देवारामतडागेषु

व्रतोद्यानगृहेषु च सिंहस्थं मकरस्थं च गुरुं यत्नेन वर्जयेत् वसिष्ठः सिंहस्थे तु मघासंस्थं गुरुं यत्नेन वर्जयेत् अन्यत्र सिंहभा-
गेतु सिंहस्थोऽपि न दुष्यति सिंहस्थगुरोर्वर्जनीयत्वं नर्मदोत्तरभाग एव अन्यत्र तु सिंहांश एव वर्ज्यः तथा च मदनरत्नादि घृत-
कालविधाने सिंहस्थितः सुरगुरुर्यदि नर्मदायास्तं वर्जयेत्सकलकर्मसु सौम्यभागे विंध्यस्य दक्षिणदिशि प्रवदंति चार्याः सिं-
हांशके मृगपतावपि वर्जनीयः सिंहांशस्तु पूर्वाफाल्गुन्यः प्रथमः पादः मृगपतौ मकरस्थे गुरौ देशविशेषमाह लल्लः नर्मदा
पूर्वभागे तु शोणस्योत्तरदक्षिणे गंडक्याः पश्चिमे भागे मकरस्थो न दोषभाक् केषांचित्स्त्रीकर्तृकाणामन्येषां च व्रतानामगस्त्योद
ये प्यारंभनिषेध इति हेमाद्रौ लौगाक्षिः उद्यानिका शिवपवित्रकं मेघपूजा दूर्वा शमी फलविरूढक जागराणि स्त्रीणां व्रतानि नि-
खिलान्यपि वार्षिकाणि कुर्यादगस्त्य उदिते न शुभानि लिप्सुरिति उद्यानिका व्रतविशेषः शिवपवित्रकं आषाढ्यामथवा माघ्यां
विहितं शिवपवित्रारोपणम् मेघपूजा व्रतविशेषः दूर्वाशमी भाद्रशुक्लाष्टमी फलविरूढकं भाद्रपदशुक्लचतुर्दश्यां पालीव्रतं क-
दलीव्रतापरनामकं जागरं आश्विनपौर्णमास्यां कोजागरव्रतं कार्तिकशुक्लचतुर्दश्यां विहितं जागरव्रतं वा अत्रोभयत्रागस्त्योदयस्यावश्यं
भावित्वेन विधेरनवकाशापत्तेर्विकल्पो ज्ञेयः वार्षिकाणीत्यत्र वर्षासु भवानि वार्षिकाणि इत्येव व्युत्पत्तिर्न तु वर्षे भवानीति तथा सति शर-
दादिग्रीष्मपर्यंतं अगस्त्योदयानुवृत्ते स्तन्मध्ये विहितानां स्त्रीव्रतानां सर्वथानारंभ एवापद्यत इति अगस्त्योदयकालश्च दिवोदासीये
उदेति याम्यां हरिसंक्रमाद्रवेरकाधिके विंशतिमेत्यगस्त्यः स सप्तमे स्तं वृषसंक्रमाच्च प्रयाति गर्गादिभिरत्यभाणि व्रतारंभसमा-
प्त्योस्तिथिविशेषनिर्णयो हेमाद्रौ सत्यव्रतः उदयस्था तिथिर्या हि न भवेद्दिनमध्यभाक् सा खंडा न व्रतानां स्यादारंभश्च समापनं एतच्चाति
रिक्तायामखंडायां प्रारंभमाह नैवैवद्द्वं वसिष्ठः अखंडव्यापिनी मार्तंडा यद्यखंडा भवेत्तिथिः व्रतप्रारंभणं तस्यामनस्तगुरु
शुक्रयोरिति अनस्तमितगुरुशुक्रायां तिथौ व्रतप्रारंभणीयमित्यर्थः रत्नमालायां सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु
भवंति सिद्धिदाः भानुभौमशनिवासरेषु च प्रोक्तमेव खलु कर्म सिद्ध्यति विरुद्धसंज्ञा इह ये च योगास्तेषामनिष्टः खलु पाद आ

द्यः संवैधृतिस्तुव्यतिपातनामासर्वोप्यनिष्टःपरिघस्यचार्धं तिस्रस्तुयोगेप्रथमेसवज्रेव्याघातसंज्ञेनवपंचशूले गंडेतिगंडेचषडे
वनाड्यःशुभेषुकार्येषुविवर्जनीयाः दर्शसंक्रांतिपातोपरिघसुखदलंवैधृतिपातयोगांविष्कंभाद्यत्रिनाडीःशुभकृतिषुचषट्गंड
योःपंचशूले व्याघातेवज्रकेकाःपितृमृतिदिवसानाधिमासानुकुहोराजन्याज्जन्मोत्थमासोडुतिथिरवलुतिथिंव्युत्क्रमांश्चुक्र-
मांश्च ब्रह्मयामले दिनभद्रायदारात्रौरात्रिभद्रायदादिवा नत्याज्याशुभकार्येषुप्राहुरेवपुराननाइति अथवेदव्यासः स
र्वेशिलोच्चयाःपुण्याःसागराःसरितस्तथा अरण्यानिचपुण्यानिविशेषान्नैमिषंतथा देवीपुराणे देशोनदीगयाशैलगंगानर्म
दपुष्करं वाराणसीकुरुक्षेत्रंप्रयागंजंबुकेश्वरम् केदारंवामपादंचकुंडंचपुष्कराह्वयम् सोमेश्वरंमहापुण्यंतथाचामरकंटकं काल
जरंतथाविंध्यंयत्रवासोगुहस्यच गुहःस्वामिकार्तिकेयःमनुः सरस्वतीदृषद्वत्योर्देवनद्योर्यदंतरं तंब्रह्मनिर्मितंदेशंब्रह्मा-
वर्तंप्रचक्षते यस्मिन्देशेयआचारःपारंपर्यक्रमागतः वर्णानांसांतरालानांससदाचारउच्यते कुरुक्षेत्रंचमत्स्याश्चपांचालाः
शूरसेनिकाः एषब्रह्मर्षिदेशोवैब्रह्मावर्तादनंतरः मत्स्यः विराटः पांचालः कान्यकुब्जः शूरसेनिकाःमथुरादेशाः अनंतरः
समः हिमवद्विंध्ययोर्मध्येयत्प्राग्विनशनादपि प्रत्यगेवप्रयागाच्चमध्यदेशउदाहृतः विनशनंकुरुक्षेत्रं आसमुद्रात्तुवैपूर्वादा
समुद्रात्तुपश्चिमात् तयोरेवांतरंगिर्योरार्यावर्तंविदुर्बुधाः सिंधुनदीपश्चिमतीरव्यावृत्त्यर्थमित्याह कृष्णसारस्तुचरतिमृगोयत्रस्व-
भावतः यज्ञियोयज्ञियोदेशोम्लेच्छदेशस्ततःपरः एतान्द्विजातयोदेशान्संश्रयेरन्प्रयत्नतः याज्ञवल्क्यो यस्मिन्देशेमृगःकृष्णस्त-
स्मिन्धर्मान्निबोधत अथव्रताधिकारिणःस्कांदे निजवर्णाश्रमाचारनिरतःशुद्धमानसः अलुब्धःसत्यवादीचसर्वभूतहितेरतः व्र
तेष्वधिकृताराजन्नन्यथाविफलःश्रमः श्रद्धावान्पापभीरुश्चमददंभविवर्जितः पूर्वंनिश्चयमाश्रित्ययथावत्कर्मकारकः अवेद
निंदकोधीमानधिकारीव्रतादिषु निजवर्णाश्रमाचारेत्यनेनचतुर्वर्णानामधिकारोगम्यते अतएवकौर्मे ब्राह्मणाःक्षत्रियावै-
श्याःशूद्राश्चैवद्विजोत्तम अर्चयंतिमहादेवंयज्ञदानसमाधिभिः व्रतोपवासनियमैर्होमस्वाध्यायतर्पणैः तेषांवैरुद्रसायुज्यं-

सामीप्यंचातिनिर्मलं सलोकतांचसारूप्यंजायतेतत्प्रसादतः देवलोपि व्रतोपवासनियमैःशरीरोत्तापनैस्तथा वर्णाःसर्वेविमुच्य-
न्तेपातकेभ्योनसंशयः अत्रअधिकारविशेषणस्यपुंस्त्वस्याविवक्षितत्वात्स्त्रीणामप्यधिकारः भारतेमांहिपार्थव्यपाश्रित्यकौंतेययेपिस्युः
पापयोनयः स्त्रियोवैश्यास्तथाशूद्रास्तेपियांतिपरांगतिं क्वचिन्म्लेच्छानामप्यधिकारोहेमाद्रौदेवीपुराणे स्नातैःप्रमुदितैर्हृ-
ष्टैर्ब्राह्मणैःक्षत्रियैर्नृपैः वैश्यैःशूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्चमानवैः स्त्रीभिश्चकुरुशार्दूलतद्विधानमिदंशृणु वैश्यशूद्रयोस्तुद्विरा
त्राधिकोपवासोनभवति वैश्याःशूद्राश्चयेमोहादुपवासंप्रकुर्वते त्रिरात्रंपंचरात्रंवातेषांव्युष्टिर्नविद्यते माध्यलिखितनिषेधात् व्युष्टिः
फलंसभर्तृकाणांस्त्रीणांभर्त्राज्ञांविनानाधिकारःतथाचमदनरत्नेमार्कंडेयपुराणे यानारीत्वननुज्ञाताभर्त्रापित्रासुतेनवा निष्फलं
तुभवेत्तस्यायत्करोतिव्रतादिकं भर्त्राज्ञयासर्वव्रतेष्वधिकारः भार्याभर्तृमतेनैवव्रतादीन्याचरेत्सदेतिकात्यायनोक्तेः तथाच प
त्यौजीवतियानारीह्युपवासव्रतंचरेत् आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् इतिविष्णुवचनात् तद्भर्तुरनुज्ञापरं यत्तुकश्चित्
नास्तिस्त्रीणांपृथग्यज्ञोनव्रतंनाप्युपोषणम् भर्तुःशुश्रूषयैवैतांल्लोकानिष्टान्व्रजंतिनाः यद्देवेभ्योयच्चपित्रादिकेभ्यः कुर्याद्भर्ता
भ्यर्चनंसत्क्रियांच तस्यत्वर्धंसाफलंनान्यचित्तानारीभुंक्तेभर्तृशुश्रूषयैव इतिस्कांदात् तस्मात्सभर्तृकाणामेकादश्याद्युप
वासादावनधिकारइति तन्न तस्यापिपृथक्स्वातंत्र्येणभर्तृननुज्ञापरत्वात् अतएवव्यासः कामंभर्तुरनुज्ञाताव्रताधिष्वधि-
कारिणी शंखोपि कामंभर्तुरनुज्ञयाव्रतोपवासनियमाः स्त्रीधर्माइति नचानुज्ञयाव्रतेष्विवयज्ञेपिपृथगधिकारापत्तिरितिशंक्यं
तस्याःश्रुत्यध्ययनानधिकारात् यद्वास्कांदे भर्तुःशुश्रूषायास्तावकत्वेनाप्युपपन्नत्वादिति नचभर्तुरनुज्ञयैवाधिकारसिद्धेः
विधवायाः व्रतेअधिकारापत्तिरितिवाच्यं नारीखल्वननुज्ञाताभर्त्रापित्रासुतेनवा विफलंतद्भवेत्तस्यायत्करोत्यौर्ध्वदैहिकं इ
तिमार्कंडेयोक्तेः पित्राद्याज्ञयातस्याअधिकारइतिहेमाद्रिः स्त्रीणांव्रतग्रहणविशेषोहेमाद्रौहरिवंशे स्नानंचकार्यंशिरसस्ततः
फलमवाप्नुयात् स्नात्वास्त्रीप्रातरुत्थायपतिंविज्ञापयेत्सती अथव्रतधर्माः व्रतसंकल्पविधिर्भारते गृहीत्वौदुंबरंपात्रंवारिपूर्ण-

मुदङ्मुखः उपवासंतुगृण्हीयाद्यद्वासंकल्पयेद्बुधः औदुंबरंताम्रमयम् औदुंबरंस्मृतंताम्रमितिनिबंधोक्तेः यद्वान्यन्नक्तव्रतादि कंकल्पयेदितिकल्पतरुः श्रीदत्तस्तु कल्पतरुमतेवाकारश्चार्थेनंनायमर्थः यस्तुनक्तादिकर्तुमिच्छेत्तदपिउक्तविधिनैवगृण्हीयादितितन्मतंपरिष्कृत्यवाकारस्योपवासपदस्यचवैयर्थ्यापत्तेः यत्संकल्पयेत्तद्गृण्हीयादित्यनेनैवोपपत्तेरित्यदूषयत् ताम्रपात्राद्यभावेहस्तेनापिजलंगृहीत्वासंकल्पयेदितिउक्तं अतएवानंतभट्टाःवर्षेवधारयेदितिपाठः मदनरत्नेदेवलवाक्येतुयथासंकल्पयेदितिपाठः यथाकामफलसुद्धिरेवेदित्यर्थः अतएवमार्कंडेयः संकल्पंचयथाकुर्यात्स्नानदानव्रतादिके अनंतरंकृत्यमाहमदनरत्नेदेवलः अभुक्त्वाप्रातराहारंस्नात्वाचम्यसमाहितः सूर्यायदेवताभ्यश्चनिवेद्यव्रतमाचरेत् अत्रप्रातर्व्रतमाचरेदित्येवान्वयः प्रधानक्रियान्वयस्याभ्यर्हितत्वात् अभुक्त्वेतितु अशक्तस्याभ्यनुज्ञातेस्वादिभक्षणापवादः केचित्तु व्रतदिनेप्रातराहारंअभुक्त्वाव्रतमाचरेदित्याहुः अत्रउपवासव्रतेकार्यइत्यनेनैवाभुक्तवताधिकारस्यप्राप्तत्वादेतस्यवैयर्थ्यापत्तेः अन्येतुपूर्वदिनेप्रातराहारमभुक्त्वा अर्थादेकभक्तंकृत्वास्नात्वाचम्यव्रतादिकंकुर्यादित्याहुः परेतुसर्वत्रपूर्वेद्युरेवसायंसंध्यानंतरंव्रतंग्राह्यंवारव्रतादौबहुशास्त्रथाहदृष्टत्वात् प्रातःस्नात्वेतिचान्वयइत्याहुः सामान्यधर्मोहेमाद्रौभविष्ये क्षमासत्यंदयादानंशौचमिंद्रियनिग्रहः देवपूजाग्निहवनंसंतोषःस्तेयवर्जनं सर्वव्रतेष्वयंधर्मःसामान्योदशधास्थितः देवपूजायद्देवत्यंव्रतंतस्यपूजाअग्निहवनंपूज्यदेवतोद्देशेनहोमःउपक्रमादेतच्चसप्तमीव्रतेसूर्यपूजाअग्निहवनं नवमीव्रतेदुर्गापूजा अनुक्तदेवताव्रतेइष्टदेवतापूजाहवनंव्याहृतिहोमइतिकेचित् अत्रक्षमादीनांस्वातंत्र्यतयाचतुर्वर्गसाधनत्वेनविहितानांव्रतांगतयाविधानंखादिरंवीर्यकामस्ययूपंकुर्यादितिवत्संयोगपृथक्त्वादुपपन्नमितिहेमाद्रिः सर्वव्रतेष्वित्यत्रसर्वव्रतपदंभविष्यपुराणोक्तं सर्वव्रतपरमेतेव्रतांतरेविध्यंतरंसएवहोमादीनामसंगतत्वं-नान्यथा अतएवएकादशीव्रतादौशिष्टानांहोमाद्यमाचरणमितिकेचित् येषुवपुराणांतरोक्तव्रतेषुहोमादिविधिरस्तितद्दूषयकमेवसर्वपदमन्यथातदितरपरत्वेनसंकोचापत्तेरितिपृथ्वीचंद्रोदयेअग्निपुराणे स्नात्वाव्रतवतासर्वव्रतेषुव्रतमूर्तयः पूज्याःस्कवर्णमय्याद्याःश

त्त्यावैभूमिशायिना जपोहोमश्चसामान्यंव्रतान्तेदानमेवच चतुर्विंशद्द्वादशवापंचवात्रयएववा विप्राःपूज्यायथाशक्तितेभ्यो-
दद्याच्चदक्षिणां व्रतमूर्तयःतद्देवप्रतिमाः देवलः ब्रह्मचर्यमहिंसाचसत्यमामिषवर्जनं व्रतेष्वेतानिचत्वारिचरितव्यानिनित्यशः स्त्री
णांतुप्रेक्षणात्स्पर्शात्ताभिःसंकथनादपि नश्यतेब्रह्मचर्यंननदारेष्वृतुसंगमात् स्वदारेष्वृतुसंगमादितिक्वचित्पाठः आमिषमांसं-
आमिषमिति पानीयं गोवर्जक्षीरमामिषं मसूरमामिषंसस्यफलेजंबीरमामिषं आमिषंशुक्तिकाचूर्णमारनालंतथामिषम् इति
स्मृत्यंतरोक्तम् व्रताद्यारंभेवृद्धिश्राद्धंकार्यं तदाहशातातपः नानिष्ट्वातुपितॄन्श्राद्धेकर्मकिंचित्समारभेत् गृहीतव्रतानाचरणे
मदनरत्नेछागलेयः पूर्वंव्रतंगृहीत्वायोनाचरेत्काममोहितः जीवन्भवतिचांडालोमृतेश्वाभिजायते काममोहितइतिविशेषणा
द्व्याध्यादिनानाचरणेनदोषः तथाचहेमाद्रौस्कांदे सर्वभूतभयंव्याधिप्रमादोगुरुशासनम् अव्रतघ्नानिपठ्यंतेसकृदेतानिशा-
स्त्रतः सर्वेभ्योभूतेभ्यःसकाशाद्व्रतकर्तुर्भयादितिहेमाद्रिः मदनरत्नेतु सर्वभूतभयंव्याधिरपरिचितत्वाद्व्याख्यातः सर्वभू
तभयंभूतेभ्यः सर्पादिभयाच्चव्रतांगवैकल्यते व्रतहानिर्भवतीत्यर्थः गुरुशासनंगुरोराज्ञासकृदुक्तिसकृत्त्यागप्रायश्चित्तं त
दुक्तंस्कांदगारुडयोः क्रोधात्प्रमादाल्लोभाद्वाव्रतभंगोभवेद्यदि दिनत्रयंनभुंजीतमुंडनंशिरसोथवा नचात्रप्रायश्चित्तोक्तेअ
तिक्रान्तव्रतानाचरणमितिवाच्यं प्रायश्चित्तमिदंकृत्वापुनरेवव्रतीभवेत् इतिस्कांदात् अथोपवासधर्माः तत्रोपवासस्वरूपंकात्यायनवृद्ध
वसिष्ठाभ्यांदर्शितं उपावृत्तस्यपापेभ्योयस्तुवासोगुणैःसह उपवासःसविज्ञेयःसर्वभोगविवर्जितः गुणैरितितज्जाप्ययजनध्यानतत्कथा
श्रवणादयः उपवासकृतामेतेगुणाःप्रोक्तामनीषिभिः दयाचसर्वभूतेषुक्षांतिरनसूयाशौचमनायासोकार्पण्यंचमांगल्यमस्पृहेतिवि
ष्णुधर्मोत्तरगौतमादिप्रतिपादिताः तच्छब्देनोपास्यादेवताव्रतदेवतावा एवंचपापानिहत्वागुणानुष्ठानसहितोनिराहारस्यवासोवस्था
नमुपवासइत्युक्तंभवति एवंचफलसाधनस्योपवासस्यस्वरूपमुक्तं उपवासपदार्थस्तुस्मृतिपुराणे व्यवहारेरूढ्यानिराहारावस्था
नमात्रम् वृद्धवसिष्ठः उपवासेतथाश्राद्धेनकुर्याद्दंतधावनं काष्ठेनेतिशेषः अतएवतन्निंदाति दंतानांकाष्ठसंयोगोहंतिसप्तकुलानिवै

निवाक्यशेषाद्विधेरिवनिषेधस्यापिविशेषपरतायुक्तेवनेन अलाभे वानिषेधेवा काष्ठानांदंतधावने पर्णादिनाविशुद्ध्येयतजिह्वोल्लेखः स
देवहि इति पैठीनसिवचनात् अलाभेदंतकाष्ठानांनिषिद्धायांतथातिथौ अपांद्वादशगंडूषैर्विदध्याद्दंतधावनं इतिव्यासवचनेदेव
लः असकृज्जलपानाच्च सकृत्तांबूलचर्वणात् उपवासः प्रणश्येतदिवास्वापाच्चमैथुनात् अशक्तौतु तेनैव जलपानमभ्यनुज्ञातम् अत्य
येचांबुपानेननोपवासः प्रणश्यति अत्ययेजलपानंविनाप्राणात्ययेविष्णुधर्मे असकृज्जलपानंचदिवास्वापंचमैथुनं तांबूलचर्वणं
मांसंवर्जयेद्व्रतवासरे असकृदुक्त्या सकृज्जलपानेननदोषः अत्र पारणांतंव्रतंज्ञेयंव्रतांतेविप्रभोजनं असमाप्तेव्रतेपूर्वंकुर्यान्नैवव्र
तांतरंइति तस्यापिव्रतवासरत्वान्मांसनिषेधः पारणादिनेएवउपवासप्रसक्त्यभावात् अतएवनिर्णयामृतेव्यासः वर्जयेत्पारणेमां
संव्रतेहप्यौषधंसदा अष्टैतान्यव्रतघ्नानि आपोमूलंफलंपयः हविर्ब्राह्मणकाम्याचगुरोर्वचनमौषधं इतिस्कांदवचनात् प्रसक्तमौ
षधरूपमपिमांसंव्रतेहवर्जयेदित्यर्थः विष्णुपुराणे स्मृत्यालोकनगंधादिस्वादनपरिकीर्तनं अन्नस्यवर्जयेत्सर्वंग्रासानांचाभि
कांक्षणम् गात्राभ्यंगंशिरोभ्यंगंतांबूलंचानुलेपनं व्रतस्थोवर्जयेत्सर्वंयच्चान्यद्बलरागकृत् इतिहारीतः पतितपाखंडादिनास्ति-
कादिसंभाषणानृताश्लीलादिकमुपवासादिषुवर्जयेत् अन्नादिपदेनयत्पुरुषार्थतयासर्वदानिषिद्धंतदपिकर्तव्यर्थतयासंगृह्यते
अतएवव्रताधिकारेस्मृतुः विहितस्याननुष्ठानमिंद्रियाणामनिग्रहः निषिद्धसेवनंनित्यंवर्जनीयंप्रयत्नतः पतितादेर्दर्शनेतु
विष्णुपुराणे तस्यावलोकनात्सूर्यंपश्येतमतिमान्नरः स्पर्शादौविष्णुधर्मे संस्पर्शेचनरःस्नात्वाशुचिरादित्यदर्शनात् सं
भाष्यतान्शुचिपदंचिंतयेदच्युतंबुधः योगयाज्ञवल्क्यः यदिवाग्यमलोपःस्याद्व्रतदानक्रियादिषु व्याहरेद्वैष्णवंमंत्रंस्मरेद्वावि
ष्णुमव्ययं यमः मानसेनियमेलुप्ते स्मरेद्विष्णुमनामयं बृहन्नारदीये रजस्वलांचचांडालंमहापातकिनंतथा सूतिकांपतितंचै
वउच्छिष्टंरजकादिकं व्रतादिमध्ये शृणुयाद्येषांध्वनिमुत्तमः अष्टोत्तरसहस्रंतुजपेद्वैवेदमातरम् वेदमातागायत्री मिता
क्षरायांदक्षः संध्याहीनोशुचिर्नित्यमनर्हःसर्वकर्मसु यदन्यत्कुरुतेकिंचिन्नतस्यफलमश्नुते अत्रप्रातःसंध्यैवअन्यांगभि

त्यांहुः अविशेषात् तत्संध्योत्तरभाविनिकर्मादौसांगमितियुक्तम् आहुः प्राज्ञाः व्रतादिकालः संकल्पस्तु प्रातःसंध्यांकृत्वैव कार्यः संध्यां
बुधःकृत्वासंकल्पंततआचरेत् इतिगौडनिबंधेऋष्यस्मृतेः मार्कंडेयपुराणे सूर्योदयंविनानैवस्नानदानादिककर्मइति क्रमइ-
तिउपक्रमः स्नानदानादिकाःक्रियाः सूर्योदयशब्देनउषःकालप्रशस्त्येन तद्विनारात्रौस्नानादिकंनकार्यमितिकल्पतरौ छंदो-
गपरिशिष्टेः सदोपवीतिनाभाव्यंसदाबद्धशिखेनच विशिखोव्युपवीतश्चयत्करोतिनतत्कृतम् पित्र्यमंत्रानुद्रवणे आत्मालंभे-
थपेक्षणे अधोवायुसमुत्सर्गेप्रहासेनृतभाषणे मार्जारमूषकस्पर्शेआक्रोशेक्रोधसंभवे निमित्तेष्वेषुसर्वत्रकर्मकुर्वन्नपःस्पृशेत्
मार्कंडेयपुराणे शिरःस्नातश्चकुर्वीतदैवंपित्र्यमथापिवा वराहपुराणे स्नानसंध्यातर्पणादिजपहोमसुरार्चनम् उपवासव
ताकार्यंसायंसंध्याहुतीर्विना भगवद्गीतायाम् तस्मादोमित्युदाहृत्ययज्ञदानतपःक्रियाः प्रवर्तंतेविधानोक्ताःसततंब्रह्मवा
दिनां तैत्तिरीये त्रिमात्रस्तुप्रयोक्तव्यःकर्मारंभेषुसर्वशः इतिसामान्यपरिभाषा विस्तृताचेयंसामान्यपरिभाषा आचा
रमयूखेद्रष्टव्या अथस्त्रीणांविशेषोहेमाद्रौपाद्मे गर्भिणीसूतिकादिश्चकुमारीचाथरोगिणी यदाशुद्धातदान्येनकारयेत्प्रय-
तास्वयम् प्रयताशुद्धास्वयंकुर्यादित्यर्थः पुंसोप्येषविधिर्लिंगस्याविवक्षितत्वादितिहेमाद्रिः एवंस्त्रीभिरजोदर्शनेपिकार्यम
तथाचसत्यव्रतः प्रारब्धदीर्घतपसांनारीणांयद्रजोभवेत् नचतत्रव्रतस्यस्यादुपरोधःकथंचन व्रतस्यउपवासस्येत्यर्थः -
पूजादिकंतुअन्येनकारयेत् तथाचमदनरत्नेमात्स्ये अंतरातुरजस्पर्शेपूजामन्येनकारयेत् सूतकेप्येवम् तथाचतत्रैव पूर्वसंकल्पितंयच्चव्रतं
सुनियतव्रतैः तत्कर्तव्यंनरैःशुद्धंदानार्चनविवर्जितं अन्येनकारयेदित्यपेक्षायांतत्रैवपैठीनसिः भार्यापत्युर्व्रतंकुर्याद्भार्यायाश्चपतिर्व्रतम्
असामर्थ्येपरस्ताभ्यांव्रतभंगोनजायते तत्रैववायुपुराणे उपवासेत्वशक्तस्तुआहिताग्निरथापिवा पुत्रान्वाकारयेदन्यान्ब्राह्मणान्वापिका
रयेत् उपवासंप्रकुर्वाणःपुण्यंशतगुणंभवेत् नारीचपतिमुद्दिश्यएकादश्यामुपोषिता पुण्यंशतगुणंप्रोक्तमित्याहगालवोमुनिः मातामहा
दीनुद्दिश्यएकादश्यामुपोषणे कृतेचभक्तितोविप्राःसमग्रंफलमाप्नुयुः मोक्षव्रतेनप्रतिनिधिःतथाचमंडनः काम्येप्रतिनिधिर्नास्तिनित्येनै

मिश्रिके नच काम्येष्युपक्रमादूर्ध्वंकेचित्प्रतिनिधिंविदुः नस्यात्प्रतिनिधिर्मंत्रस्वामिदेवाग्निकर्मसु स्वदेशकालयोःशब्देनारण्योःसु
त्रभार्ययोः नापिप्रतिनिधातव्यंनिषिद्धंवस्तुकुत्रचित् अथव्रतेहविष्याणि हेमाद्रौछंदोगपरिशिष्टेकात्यायनः हविष्ये-
षुयवामुख्यास्तदनुव्रीहयःस्मृताः माषकोद्रवगौरादीन्सर्वाभावेपिवर्जयेत् तत्रैवअग्निपुराणे व्रीहिचणकमुद्गाश्चकपालाःसलि
लपयः श्यामाकाश्चैववनीवारागोधूमाद्याव्रतेहिताः कूष्मांडालाबुवृंताकपालक्यज्योत्स्निकास्त्यजेत् चतुर्भैक्ष्यंसक्तुकणाःशाकंदधि-
घृतंमधु श्यामाकाःशालिनीवारायावकंमूलतंदुलं हविष्यव्रतनक्तादावग्निकार्यादिकेहितं मधुमांसविहायान्यत्सर्वैश्चव्रतिभिस्त
था पालकीपाथरीज्योत्स्निकाकोशातकी तत्रैवभविष्ये हैमंतिकंसितास्विन्नंधान्यंमुद्गायवास्तिलाः कालायकंगुनीवारावस्तुकं
हिलमोचिका षष्टिकाकालशाकंचमूलकंकेमुकेतरं कंदःसैंधवःसामुद्रंगव्येचदधिसर्पिषी पयोदधिघृतंचैवपयसाम्रहरीतकी
पिप्पलीजीरकंचैवनागरंगकंतिंतिणी कदलीलवलीधात्रीफलान्यगुडमैक्षवं अतैलपक्वंमुनयोहविष्याणिप्रचक्षते लवणेमधु
सर्पिषीइतिक्वचित्पाठः हैमंतिकंधान्यंकमलाःतदपिसीतंस्वेतं अस्मिन्नंहविष्यंकालायाः संतिनारपर्यायाः मटरइतिप्रसिद्धाः वा
टाणेइतिदक्षिणप्रसिद्धा वास्तुकंबथुवाइतिख्यातः शाकःहिलंशाकंमोचयति इतिक्षीरस्वामी शाकासारोहिलसारइतिप्रसिद्धः
शाकः जलोद्भवः गौडदेशेहिलांचेलइतिप्रसिद्धा कालशाकउत्तरदेशेकालिकेतिप्रसिद्धं केमुकंकेमुत्राइतिपूर्वदेशेप्रसिद्धं नागरं
नारिंगएरावतोनागरिंगोनादेयीभूमिजंबुकेत्यमरात् नागरंचैवेतिपाठेनागरशुंठी लवलीरायआवळी इतिमहाराष्ट्रभाषयोच्यमानफलं हर
फरवडीइतिमध्यदेशभाषया अतैलपक्वंइत्येननकथितंहविष्याणामेवविशेषणं मनुः उत्पन्नानिपयःसोमोमांसंयच्चानुपस्कृतं अक्षार
लवणंचैवप्रकृत्याहविरुच्यते अनुपस्कृतंअपक्वं अथव्रताद्युपयुक्तानिवस्तूनि तत्रपंचरत्नानि आदित्यपुराणे सुवर्णंरजतंमुक्ता-
राजावर्तप्रवालकं रत्नपंचकमाख्यातंशेषंवस्तुब्रवीम्यहं कनकंकुलिशंनीलंपद्मरागंचमौक्तिकं एतानिपंचरत्नानिरत्नशास्त्रविदोविदुः
इतिमघप्रदीपधृतकालिकापुराणोक्तानिवा कुलिशंहीरकंस्मृत्यंतरे अभावेसर्वरत्नानांहेमसर्वत्रयोजयेत् विष्णुधर्मोत्तरे मुक्ताफलंहिरण्यंचवै

डूर्यपद्मरागकं पुष्परागंचगोमेदंनीलंगारुत्मकंतथा प्रवालमुक्तामुक्तानिमहारत्नानिवैनव हेमाद्रौब्रह्मांडपुराणे अश्वत्थोदुंबरप्ल
क्षचूतन्यग्रोधपल्लवाः पंचभंगाइतिख्याताःसर्वकर्मसुशोभनाः पंचभंगाःपंचपल्लवाः पंचगव्यंचतत्रैवस्कांदे गोमूत्रंगोमयंक्षीरंद
धिसर्पिर्यथाक्रमं विष्णुधर्मे गोमूत्रभागतस्त्वार्धंसकृत्क्षीरस्यचत्रयं द्वयंदध्नोघृतस्यैकमेकश्चकुशवारिजः गोमूत्रप्रमाणंतुमाष
श्चिन्तमयूरेवज्ञेयं विष्णुधर्मे गायत्र्यादायगोमूत्रंगंधद्वारेतिगोमयं आप्यायस्वेतिक्षीरंचदधिक्राव्णेतिवैदधि शुक्रमसीतिआज्य
स्यदेवस्यत्वाकुशोदकं एभिस्तुमंत्रराजैस्तुपंचगव्यंप्रचक्षते पंचामृतंतुहेमाद्रौशिवधर्मे पंचामृतंदधिक्षीरंसितामधुघृतंस्मृतं अन्यत्र
पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतमितिख्यातंभाषितंमुनयोविदुः मदनरत्नेकात्यायनः आज्यंक्षीरंमधुतथामधुरत्रयमु
च्यते मधुरोम्लश्चलवणःकषायस्तिक्तएवच कटुकश्चेतिराजेंद्ररसषट्कमुदाहृतं चंदनंतुगारुडं कस्तूरिकायाद्वौभागौचत्वा
रोचंदनस्यच कुंकुमस्यत्रयश्चैवशशिनस्याच्चतुःसमं कुंकुमंकेशरं शशीकर्पूरः कर्पूरंचंदनंदर्पकुंकुमंचसमांशकं सर्वगंधमिति
प्रोक्तंसमस्तसुरभूषणंदर्पः कस्तूरिकातथा कस्तूरीत्यगरुश्चैवकर्पूरश्चंदनंतथा कंकोलंचभवेदेभिःपंचभिर्यक्षकर्दमः अथ
सर्वौषधीः कुष्ठमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचंपकमुस्तंचसर्वौषध्योदशस्मृताः पाद्मे इक्षवस्तृणराजंचनिष्पावाजाजि
धान्यकं विकारवच्चगोक्षीरंकुसुंभंकुंकुमंतथा लवणंचाष्टमंतत्रसौभाग्याष्टकमुच्यते तृणराजस्तालः अजाजिजीरकं आपः
क्षीरंकुशाग्राणिदध्यक्षततिलास्तथा यवाःसिद्धार्थकाश्चेतिद्व्यर्घोऽष्टांगःप्रकीर्तितः पंचरात्रेरजांसिपंचवर्णानिमंडलार्थंहिकार
येत् शालितंदुलचूर्णेनशुक्लंवायवसंभवं रक्तंकुसुंभसिंदूरगैरिकादिसमुद्भवं हरितालोद्भवंपीतंरजनीसंभवंतथा कृष्णंदग्धंचहरि
तंपीतकृष्णाविमिश्रितं रजनीहरिद्रा कौतुकसंज्ञानिभविष्ये दूर्वायवांकुराश्चैववालकंचूतपल्लवाः हरिद्राद्वयसिद्धार्थशिखिपत्रोर
गत्वचः कंकणौषधयश्चैताकौतुकाख्यादशस्मृताः अथसप्तमृदोमात्स्ये गजाश्वरथ्यवल्मीकसंगमात्ह्रदगोकुलात् मृदमानीय
कुंभेषुप्रक्षिपेच्चत्वरात्तथा गोकुलावधिसप्तचत्वरेणसहाष्टौमृदोभवेयुरितिहेमाद्रौभविष्ये सुवर्णंरजतंताम्रमारकूटंतथैवच लोहंत्र

पुनर्यासीसंधानवः ससकीर्तिनाः आरकूटंपित्तलंतचैवषट्त्रिंशन्मते यवगोधूमधान्यानितिलाःकंगुश्चमुद्गकाः श्यामाकंचीनकंचैव
सप्तधान्यमुदाहृतं सप्तदशधान्यानिमार्कंडेयपुराणे व्रीहयश्चयवाश्चैवगोधूमाः कंगुकास्तिलाः प्रियंगवःकोविदाराः कोरदूषाःसतीन
काः माषामुद्गामसूराश्चनिष्पावाःसकुलित्थकाः आढक्यश्चणकाश्चैवयावनालास्तथास्मृताः क्रमादेवंविजानीयाद्धान्याःसप्तदश-
स्मृताः कोरदूषाः कोद्रवाः सतीनकाः कलापाः मटइति अष्टदशधान्यानिस्कांदे व्रीहिर्यवास्तिलाश्चैवयावनालास्तथैवच सतीनकाः
कुलित्थाश्चकंगुकाःकोरदूषकाः माषमुद्गमसूराश्चनिष्पावाःश्यामसर्षपाःगोधूमाश्चणकाश्चैवनीवाराढक्यएवच एवंक्रमेणजानीयाद्धान्यान्यष्टाद
शानिच हेमाद्रौक्षीरस्वामी मूलपत्रकरीराग्रफलकांडाधिरूढकाः त्वक्पुष्पंकवचंचेतिशाकंदशविधंस्मृतं करीरवंशांकुरः अग्रंपल्लवःकांडनालक
वचंछत्राकं कलशाउक्ताविष्णुधर्मे हेमराजतताम्राश्चमृन्मयालक्षणान्विताः यात्राह्राहस्पतिस्थौदौकुंभास्तुरभिषेचने पंचाशांगुलवैपुल्याउत्से
धेषोडशांगुलाः द्वादशांगुलमूलास्युर्मुखमष्टांगुलंभवेत् पंचच आशाश्च पंचाशाः आशादश पंचाशदंगुलानिवैपुल्यमित्यर्थः केचित्तु
पंचदशांगुलंवैपुल्यमित्याहुः प्रतिमाद्रव्ययोःपरिमाणं हेमाद्रौभविष्ये अनुक्तद्रव्यतत्संख्यादेवताप्रतिमानृप सौवर्णीराजतीताम्रीवृक्ष-
जामार्त्तिकीतथा चित्रजापिष्टलेपोत्थानिजवित्तानुरूपतः आमाषात्पलपर्यंताकर्तव्याशक्तिसंभवे अंगुष्ठपर्वमारभ्यवितस्त्यवधिकास्मृता ॥
मात्स्येतुविशेषः अंगुष्ठपर्वादारभ्यवितस्त्यवधिदेवता गृहेतुप्रतिमाकार्यानाधिकाशस्यतेबुधैः आषोडशात्तुप्रासादेकर्तव्यानाधिकाततः इत्य
धिकंकल्पतरौप्रतिष्ठाकांडेज्ञेयं तथा अनुक्तसंख्याहोमेस्याच्छतमष्टोत्तरंस्मृतं मात्स्ये होमोग्रहादिपूजायांशतमष्टोत्तरंभवेत् अष्टाविं
शतिरष्टौवा यथाशक्तिविधीयते मदनरत्नेब्राह्मे यथोक्तवस्त्वसंपत्तौग्राह्यंतदनुकारियत् यवाभावेचगोधूमाव्रीह्यभावेचतंदुलाः आज्यं
द्रव्यमनादेशेजुहुयाच्चयथाविधि मंत्रस्यदेवतायाश्चप्रजापतिरितिस्थितिः मंत्रस्यदेवतायाश्चविधानेनप्रजापतिर्देवता समस्तव्याहृ
तिभिर्मंत्रःस्मृत्यंतरेपि तव्याहृत्यासमंहुतइति गारुडे प्रणवादिनमोंतंचचतुर्थ्यंतंचसत्तम देवतायाःस्वकंनाम मूलमंत्रःप्रकीर्ति
तः द्रव्याभावेप्रतिनिधिः दध्यलाभेपयोग्राह्यंमध्वलाभेतथागुडः घृतेप्रतिनिधिःकार्यःपयोवादधिवानृप तंत्रेवमैत्रायणीयपरिशिष्टे दर्भा

माषेकाशः पैठीनसिः सर्वाभावेयवाः आज्यहोमेषुसर्वेषुगव्यमेवभवेद्धुतं तदभावेमहिष्यास्तु आज्यमाविकमेवतु तदभावेतुतैलंस्यात्तदभावे-
तुजार्तिलं तदभावेतुकौसुंभंतदभावेतुसार्षपम् अथपवित्रं अनंतर्गर्भिनंसाग्रंकौशंद्विदलमेवच प्रादेशमात्रंविज्ञेयंपवित्रंयत्रकुत्रचित्
अथेध्माः पलाशाश्वत्थखदिरवटोदुंबरमेवच अथधूपाः अगरुश्चंदनंमुस्तासिल्हकंवृषणंतथा समभागंतुकर्तव्योधूपोयममृताव्हयः
सिल्हकंसिल्हाद इतिप्रसिद्धः वृषणंकस्तूरीषड्भागकुष्ठंद्विगुणोगरुश्चलाक्षात्रयंपंचनखस्यभागाः हरीतकीसर्जरसः समांसिभागे
कमेकंत्रिवलंशिलाजं घनस्यचत्वारिपुरस्यचैकोधूपोदशांगःकथितोमुनींद्रैः सर्जरसः राळइति मांसीजटामांसी त्रिवलंत्रिभागघनः
कर्पूरः पुरंगुग्गुलः सुवर्णमानमाह याज्ञवल्क्यः जालसूर्यमरीचिस्थंत्रसरेणूरजःस्मृतम् तेऽष्टौलीक्षास्तुतास्तिस्रोराजसर्षपउच्यते गौ
रस्तुतेत्रयःषट्तेयवोमध्यस्तुतेत्रयः कृष्णलः पंचतेमाषस्तेसुवर्णस्तुषोडशपलंसुवर्णाश्चत्वारः पंचवापिप्रकीर्तितंरजतमानमाह द्वे
कृष्णलेरूप्यमाषोधरणंषोडशैवते शतमानंतुदशभिर्धरणैःपलमेवतु निष्कंसुवर्णाश्चत्वारइति ताम्रमानमाह कार्षिकस्ताम्रिकःप-
णइति पलचतुर्थांशेनकर्षेणोन्मितः कार्षिकस्ताम्रसंबंधीपणोभवतिकर्षसंज्ञश्चनिघंटौतेषोडशाक्षः कर्षोस्त्रीपलंकर्षचतुष्टयमि-
तितेषोडशमासाःअक्षः हेमाद्रौनारदः अक्षः सचकर्षइत्यर्थः धरणस्यैवपुराणेसंज्ञांतरंतेषोडशस्याद्धरणंपुराणश्चैवराजतमितिमि
ताक्षरायांस्मृतेः शतमानेपलपर्यायेसुवर्णचतुष्टयसमतोल्तिंरूप्यं राजतोनिष्कइत्यर्थः सुवर्णनिष्कस्तुचतुःसौवर्णिकोनिष्कोविज्ञे
यस्तुप्रमाणतइतिसचपलसमानएवकोत्रकार्षापणइत्यपेक्षायांदेशभेदेनकर्षापणोभिन्नइतिआह हेमाद्रौनारदे कर्षापणोदक्षिणस्यां
दिशिरौप्यः प्रवर्तते पणैर्निबद्धःपूर्वस्यांदिशिषोडशस्यैवपणाः अष्टौटक्कूकाः कार्षापणःपूर्वस्यामित्यर्थः तावतालभ्यंरूप्यंदक्षिणस्यां
सइतिहेतन्निर्णयेपितामहचरणाः लीलावत्यां वराटकानांदशकद्वयंयत्साकाकिणीताश्चपणाश्चतस्रः तेषोडशद्रम्मइहावगम्योद्रम्मैस्त
थाषोडशभिश्चनिष्कः अथधान्यमानंभविष्ये पलद्वयंतुप्रसृतंद्विगुणंकुडवंमतं चतुर्भिःकुडवैःप्रस्थःप्रस्थाश्चत्वारआढकःआढकै
स्तैश्चतुर्भिश्चद्रोणस्तुकथितोबुधैः कुंभोद्रोणद्वयंशूर्पःखारीद्रोणास्तुषोडश द्रोणद्वयस्यैवशूर्पइतिसंज्ञा पलंचकुडवःप्रस्थआढको

द्रोणएवच ध्यानमानेषुबोद्धव्याःक्रमशोमीचतुर्गुणाः द्रोणैःषोडशभिःखारीविंशत्याकुंभउच्यते कुंभैस्तुदशभिर्वाहोधान्यसंख्याःप्र
कीर्तिताः विंशत्येत्यत्रापि द्रोणैरितिसंबध्यते तथाच कुंभोद्रोणद्वयमितिपक्षाद्विंशतिद्रोणमितःकुंभइतिपक्षांतरं द्रोणाढकयोःपरिमा
णांतरमुक्तं पराशरेण वेदवेदांतविद्भिर्धर्मशास्त्रानुपालकैः प्रस्थाद्वात्रिंशतिद्रोणमितोद्विप्रस्थआ ढकइति एतेषुन्यूनाधिकपक्षा
णांशक्तिदेशकालाद्यपेक्षयाव्यवस्थाज्ञेया अथहोमद्रव्यमानंसिद्धांतशेखरे होमद्रव्यप्रमाणानिवक्ष्यंतेतुयथाक्रमं कर्षप्रमाणमाज्यस्या
न्मधुक्षीरंचतत्समम् तंदुलानांशक्तिमात्रंपायसंप्रसृतेःसमम् कर्षमात्राणिभक्ष्याणिलाजामुष्टिमितामताः अन्नंग्राससमंग्राह्यंशाकं
ग्रासार्द्धमात्रकम् मूलानांतुत्रिभागः स्यात्कंदानामष्टमोंशकः इक्षुःपर्वप्रमाणंस्यादंगुलद्वितयंलताप्रादेशमात्राःसमिधोव्रीहीणांचां
जलिःसमःतिलसक्तुकणादीनांमृगीमुद्राप्रमाणतः पत्रपुष्पफलादीनांप्रमाणाहुतिरिष्यते चंद्रं श्रीखंडकस्तूरीकुंकुमागरुकर्दमाःहरि
मंथसमाःप्रोक्तागुग्गुलुर्बदरोपमः हरिमंथस्त्वणकः आहुतीनामिदंमानंकथितंवेदवेदिभिः स्यात्त्रिमुद्रामृगीमुद्राहोमेसर्वफलप्रदा मालां
तरंशारदातिलकटीकायांपदार्थादर्शे कर्षमात्रमिदंहोमस्तुक्तिमात्रंपयःस्मृतम् उक्तानिपंचगव्यानिशक्तिमात्राणिसाधुभिः तत्समं
मधुदुग्धान्नंग्रासमात्रमुदाहृतम् दधिप्रसृतिमात्रंस्याल्लाजाःस्युर्मुष्टिसंमिताः पृथुकास्तत्प्रमाणाःस्युःसक्तवोपितथाविधाः पलार्धं
गुडमानंचशर्करापितथाविधा ग्रासार्द्धमात्रमन्नानामिक्षुःपर्वप्रमाणतः एकैकस्यात्पत्रपुष्पंचतथाधूपादिकल्पयेत् मातुलिंगंचतुःखंडं
पनसंदशधाकृतम् अष्टधानारिकेलंचचतुर्धाकदलीफलम् त्रिधाकृतफलंबैल्वंकपित्थंखंडितंद्विधा व्रीहयोमुष्टिमानाःस्युर्मुद्गामा-
षायवास्तथा तंदुलास्युस्तदर्धांशाःकोद्रवामुष्टिसंमिताः लवणंशक्तिमात्रंस्यान्मरीचान्येकविंशतिः घृतस्यकार्षिकोहोमःक्षीरस्य
मधुनस्तथा शक्तिमात्राहुतिर्दध्नःप्रसृतिःपायसस्यच खंडत्रयंतुमूलानांफलानांस्वप्रमाणतःग्रासमात्रंतुहोतव्याइतरेषांचतंदुलाः
अक्षतास्तुयवाःप्रोक्ताअभावेव्रीहयःस्मृताः तदभावेचगोधूमानतुखंडिततंडुलाः येषांकेषांचिदन्येषांद्रव्याणामप्यसंभवेसर्व-
त्राज्यमुपादेयंभरद्वाजमुनेर्मतात् सर्वप्रमाणमाहुत्यापंचांगुलगृहीतयेति संपूर्णानिचसर्वत्रसूक्ष्माणिपंचपंचच इक्षूणांपर्वकं

मानंलत गुलहयं चंद्रचंदनकाश्मीरकस्तूरीयक्षकर्दमान् कलापसंमितानेतान्गुग्गुलंबदरास्थिवत् द्रवःस्रुवेणहोतव्यःपाणि
नाकृति हविः स्रुवपूर्णाद्रवाःप्रोक्ताःकठिनाग्रासमानकाः व्रीहयोयवगोधूमप्रियंगुतिलशालयः स्वरूपेणैवहोतव्याइतरेषांचतंदुलाः
अथऋत्विग्वरणं हेमाद्रौपाद्मे बालाग्निहोत्रिणांविप्रंस्वरूपंचगुणान्वितं सपत्नीकंचसंपूज्य भूषयित्वाचभूषणैः पुरोहितंमुख्यतम-
कृत्वान्यांश्चतथर्त्विजः चतुर्विंशतिगुणोपेतान्सपत्नीकान्विमंचितान् अहतांबरसंछन्नान्स्रग्विणःशुचिभूषितान् अंगुलीयका
निचतथाकर्णभूषान्प्रदापयेत् तत्रैवलैंगे वस्त्रयुग्मंतथोष्णीषंकुंडलेकंठभूषणं अंगुलीभूषणंचैवमणिबंधस्यभूषणं एतानिचैवस
र्वाणिप्रारंभेधर्मकर्मणां पुरोहितायदत्वाथऋत्विग्भ्यः संप्रदापयेत् पूर्वोक्तभूषणंसर्वसोष्णीषवस्त्रसंयुतम् दद्यादेतत्रयोऋत्विग्भ्योआ
च्छादनपटंतथा ततोनाममधुपर्कमाह विश्वामित्रः संपूज्यमधुपर्केणऋत्विजःकर्मकारयेत् अपूज्यकारयेत्कर्मकिल्बिषेणचयुज्यते ऋ
त्विजांसंख्यामाह मात्स्ये हेमाद्रौकारिणःकार्याःपंचविंशतिऋत्विजः तोषयेच्चसमंसर्वानाचार्योद्विगुणंभवेत् दक्षिणयातोषयेदित्यर्थः
अथसर्वतोभद्रमंडलं हेमाद्रौस्कांदे प्रागुदीच्यागतारेखाःकुर्यादेकोनविंशतिः खंडेंदुस्त्रिपदःकोणेशृंखलापंचभिःपदैः एकादशपदाव
ल्लीभद्रंतुनवभिःपदैः चतुर्विंशत्पदावापीविंशत्यापरिधिःपदैः मध्येषोडशभिःकोष्ठैःपद्ममष्टदलंस्मृतम् श्वेतेंदुःशृंखलाकृष्णावल्लीनीले
नपूरयेत् भद्रारुणासितावापीपरिधिःपीतवर्णकः बाह्यांतरदलश्वेताकर्णिकापीतवर्णिका परिध्यावेष्टितंपद्मंबाह्येसत्वंरजस्तमः तन्म
ध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान् इतिसर्वतोभद्रपीठं अथलिंगतोभद्रं चतुर्विंशतिरालेख्यारेखाःप्राग्दक्षिणायताः कोणेषुशृं
खलाःपंचपदावल्यस्तुपार्श्वतः पदैर्नवभिरन्तरस्थाश्चतुर्भिर्लघुशृंखलाः लघुवल्ल्यःपदैःषड्भिस्ततोष्टादशभिःपदैः कृत्वालिंगानिवा
प्यस्तुत्रयोदशभिरंतरा ततोवाप्यांद्वयेर्वेपीठंकुर्याद्दिक्षुद्वाराणः तस्यपदाःपंचपदाद्वाराण्यपितथैवच एकाशीतिपदंमध्येपद्मंस्व-
स्तिकमुच्यते कोणेषुशृंखलाःकार्याः [illegible]स्त्रिभिस्ततःपरं पदेश्चतुर्भिर्दिक्षुस्युर्भद्राण्येषांसमंततः एकादशपदावल्योमध्येष्टदल
मालिखेत् पद्मंनवपदंह्येवंलिंगतोभद्र[illegible]च्यते शृंखलाःकृष्णावर्णेनवल्लीर्नीलेनपूरयेत् रक्तेनशृंखलालघ्वोर्वल्लीःपीतेनपूरयेत्

लिंगाभिकृष्णावर्णानिश्वेतेनाथथवापिकाः पीठंसपादंश्वेतेनपीतेनद्वारपूरणम् मध्येस्तुःशृंखलास्तावल्लीर्नीलेनपूरयेत् भद्राणिपीत
वर्णानिपीतापंकजकर्णिका दलानिश्वेतवर्णानियद्वाचित्राणिकल्पयेत् निस्रोरेखाबहिःकार्याःसितारक्तासिताक्रमात् अथचतुर्लिं
गोद्भवेलिंगे रेखास्त्वष्टादशप्रोक्ताश्चतुर्लिंगसमुद्भवे कोणेंदुस्त्रिपदश्वेतस्त्रिपदैःकृष्णाशृंखलाः वल्लीसप्तपदानीलाभद्रंरक्तंचतुष्पदं
भद्रपार्श्वेमहारुद्रंकृष्णमष्टादशैःपदैः शिवस्यपार्श्वतोवापीकुर्यात्पंचपदांसिता पदमेकंतथापीतंभद्रवाप्योस्तुमध्यतः शिरसिशृंखला
याश्चकुर्यात्पीनंपदत्रयम् लिंगानांस्कंधतःकोणीरक्तवर्णकाः परिधिःपीतवर्णैस्तुपदैःषोडशभिःस्मृतः पदैस्तुनवभिःपश्चाद्ध-
स्कंपद्मंसकर्णिकम् अथद्वादशलिंगोद्भवम् तदीच्यायनारेखाःषट्त्रिंशद्भिःप्रकल्पयेत् पदानिद्वादशशतंपंचविंशतिरेवच खं
डेंदुस्त्रिपदःकोणेशृंखलाःषट्पदैःस्मृताः त्रयोदशपदवल्लीभद्रंतुनवभिःपदैः त्रयोदशपदावापीलिंगमष्टादशस्मृतं लिंगत्रयस्य
पंक्तौतुशोभाकाष्ठाश्चतुर्दश तेषामुपरिपंक्तौतुकोष्ठासमदशैवतु पूजापंक्तिस्तुविज्ञेयोपरितःपरिकीर्तिता पूजापंक्त्यंतरापंक्तौको
ष्ठाद्यशीतिसंख्यया परिधिःसचविज्ञेयोमंडलेत्वंतरष्ठयोः परिध्यंतरकोष्ठेषुसर्वतोभद्रमालिखेत् विशेषश्चात्रविज्ञेयःशृंखला
षट्पदाभवेत् त्रयोदशपदावल्लीभद्रंतुनवभिःपदैः पंचविंशत्पदावापीपरिधिःषोडशात्मकः मध्येनवपदंपद्मंकर्णिकाकेसरान्वितम्
सत्वरजस्तमोवर्णाःपरितोमंडलस्यच त्रयःपरिधयःकार्यास्तत्रद्वाराणिकारयेत् सितेंदुःशृंखलाकृष्णावल्लीनीलाप्रकीर्तिता भद्रंचैवा
रुणंज्ञेयंवापीस्याच्छुक्लकर्णिका लिंगानिकृष्णवर्णानिपार्श्वतोद्वादशैवतु परिधिःपीतवर्णःस्यात्कमलंपंचवर्णकम् इतिसर्वतोभद्र-
लिंगतोभद्रादिमंडलानि अथसर्वतोभद्रमंडलविधिरुच्यते शिवव्रतंविनासर्वव्रतोद्यापनेषुसर्वतोभद्रमंडलंकारयेत् तत्रकारि
का बाहुमात्रायदावेदींकुर्याच्छुद्धमृदाबुधः तद्वेद्यांसर्वतोभद्रंमंडलंविलिखेत्ततः विलिखेत्सर्वतोभद्रंवेदिकायांतुसुंदरम् तत्रैव
शिवव्रतेषुलिंगतोभद्रंलिखेत् तन्मध्येस्थापयेद्देवान्ब्रह्माद्यांश्चसुरेश्वरान् अथमंडलदेवतारंभः तन्मध्येब्रह्माण-
म् ब्रह्मजज्ञानंगोतमोवामदेवोब्रह्मात्रिष्टुप् मध्येब्रह्मावाहनेविनियोगः ॐब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनः

आवं: सबुध्याउपमाअस्यविष्ठा:सनभ्वयोनिमसतश्वविव: भोब्रह्मन्इहागच्छ इहतिष्ठ पूजांगृहाण ममसंमुखः सुप्रसन्नोवरदोभव
इत्येवंप्रकारेणसर्वत्रदेवतानांज्ञेयम् ततःउदीचीमारभ्यवायवीपर्यंतंसोमादयोवाय्वंताष्टौलोकपालाःस्थापनीयाः १ तत्रआप्यायस्व
राहूगणोगोतमःसोमोगायत्री उत्तरेसोमावाहनेविनियोगः ॐआप्यायस्वसमेतुतेविश्वतःसोमवृष्ण्यं भवावाजस्यसंगथे २ अभि
त्वाअजीगर्तिःशुनःशेपईशानोगायत्री ईशान्यांईशानावाहनेविनियोगः अभित्वादेवसवितरीशानंवार्याणां सदावन्भागमीमहे ३ इं
द्रंवोमधुच्छंदाइंद्रोगायत्री पूर्वेइंद्रावाहनेवि० ॐइंद्रंवोविश्वतस्परिहवामहेजनेभ्यः अस्माकमस्तुकेवलः ४ अग्निंदूतंकाण्वोमेधा
तिथिरग्निर्गायत्री आग्नेय्यांअग्न्यावाहनेवि० ॐअग्निंदूतंवृणीमहेहोतारंविश्ववेदसं अस्ययज्ञस्यसुक्रतुं ५ यमायसोमंवैवस्वतो
यमो नुष्टुप् दक्षिणेयमावा० ॐयमायसोमंसुनुतयमायजुहुताहविः यमंहयज्ञोगच्छत्यग्निदूतोअरंकृतः ६ मोषुणोघोरःक
ण्वोनिर्ऋतिर्गायत्री नैर्ऋत्यांनिर्ऋत्यावा० ॐमोषुणःपरापरानिर्ऋतिर्दुर्हणावधीत् पदीष्टतृष्णयासह ७ तत्वायामिशुनःशेपोवरु
णस्त्रिष्टुप् पश्चिमेवरुणावा० ॐतत्वायामिब्रह्मणावंदमानस्तदाशास्तेयजमानोहविर्भिः अहेळमानोवरुणेहबोध्युरुशंसमान
आयुःप्रमोषीः ८ वायोशतंवामदेवोवायुरनुष्टुप् वायव्यांवाय्वावाह० ॐवायोशतंहरीणांयुवस्वपोष्याणां उतवातेसहस्त्रिणोर
थआयातुपाजसा ९ वायुसोमयोर्मध्येअष्टौवसवः ज्मयाअत्रमैत्रावरुणिर्वसिष्ठोवसवस्त्रिष्टुप् वायुसोमयोर्मध्येवस्वावा० ज्मयाअ
त्रवसवोरंतदेवाउरावंतरिक्षेमर्जयंतशुभ्राः अर्वाक्पथउरुज्रयःकृणुध्वंश्रोतादूतस्यजग्मुषोनोअस्य १० आरुद्रासःश्यावाश्वएकादशरु
द्राजगती सोमेशानयोर्मध्येएकादशरुद्रावा० ॐआरुद्रासइंद्रवंतःसजोषसोहिरण्यरथाःसुवितायगंतन इयंवोअस्मत्प्रतिहर्यते
मतिस्तृष्णजेनदिवउत्साउदन्यवे ११ त्यान्नुमत्स्यःसामदोद्वादशादित्यागायत्री ईशानेंद्रयोर्मध्येद्वादशादित्यावाह० ॐत्यान्नुक्ष-
त्रियांअवआदित्यान्याचिषामहे सुमृळीकांअभिष्टये १२ अश्विनावर्तिराहूगणोगोतमोश्विनावुष्णिक् इंद्राग्न्योर्मध्येअश्व्यावा-
ह० ॐअश्विनावर्तिरस्मदागोमद्दस्राहिरण्यवत् अर्वाग्रथंसमनसानियच्छतं १३ ओमासोमधुच्छंदाविश्वेदेवागायत्री अग्नि

यमयोर्मध्येविश्वेदेवावा० ॐ ओमासश्चर्षणीधृतोविश्वेदेवासआगत दाश्वांसोदाशुषःसुतं १४ अभित्यंदेवंगोतमोवामदेवः स
त्यस्सावशी यमनिर्ऋत्योर्मध्येसप्रयक्षावा० ॐ अभित्यंदेवंसवितारमोण्योःकविक्रतुमर्चामिसत्यसवंरत्नधामभिप्रियंमतिंकविं ऊ
र्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनिहिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः १५ आयंगौःसार्पराज्ञीसर्पागायत्री निर्ऋतिवरुणयोर्म-
ध्येसर्पावा० ॐ आयंगौःपृश्निरक्रमीदसदन्मातरंपुरः पितरंचप्रयन्त्स्वः १६ अप्सरसामेनशक्रऋष्यशृंगोगंधर्वाप्सरसोनुष्टुप् वरुणवाय्वो-
र्मध्येगंधर्वाप्सरसावा० अप्सरसांगंधर्वाणांमृगाणांचरणेचरन् तीरक्तवर्णकेतस्यविद्वान्सखास्वादुर्मदिंतमः १७ यदक्रंदऔचथ्योदीर्घतमास्कंद
स्त्रिष्टुप् ब्रह्मसोमयोर्मध्येस्कंदावाहनेवि० ॐ यदक्रंदःप्रथमंजायमानउद्यन्त्समुद्रादुतवापुरीषात् श्येनस्यपक्षाहरिणस्यबाहूउपस्तु
त्यंमहिजाततेअर्वन् १८ तचेवऋषभमृषभोवैराजोन दीश्वरोनुष्टुप् ब्रह्मसोमयोर्मध्येनंदीश्वरावा० ॐ ऋषभंमासमानानांसपत्ना-
नांविषासहिं हंतारंशत्रूणांकृधिविराजंगोपतिंगवां १९ कद्रुद्रायघोरःकण्वःशूलोगायत्री तत्रैवशूलावा० ॐ कद्रुद्रायप्रचेतसेमीढुष्ट
मायतव्यसे वोचेमशंतमंहृदे २० कुमारंकुमारोमहाकालस्त्रिष्टुप् तत्रैवमहाकालावा० ॐ कुमारंमातायुवतिःसमुब्धंगुहाबिभर्तिं
नददातिपित्रे अनीकमस्यनमितज्जनासःपुरःपश्यंतिनिहितमरतौ २१ अदितिर्लौक्योबृहस्पतिर्दक्षोनुष्टुप् ब्रह्मेशानयोर्मध्येदक्षा
वाहने० ॐ अदितिर्ह्यजनिष्टदक्षयादुहितातव तान्देवाअन्वजायंतभद्राअमृतबंधवः मोदक्षादिसप्तगणान्०२२ तामग्निवर्णांसो
भरिर्दुर्गात्रिष्टुप् ब्रह्मेंद्रयोर्मध्येदुर्गावा० ॐ तामग्निवर्णांतपसाज्वलंतींवैरोचनींकर्मफलेषुजुष्टां दुर्गांदेवींशरणमहंप्रपद्येसुतरसित
रसेनमः २३ इदंविष्णुःकाण्वोमेधातिथिर्विष्णुर्गायत्री ब्रह्मेंद्रयोर्मध्येविष्वावा० ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूळ्हमस्य
पांसुरे २४ उदीरतामवरशंखःस्वधापितरस्त्रिष्टुप् ब्रह्माग्न्योर्मध्येस्वधावा० ॐ उदीरतामवरउत्परासउन्मध्यमाःपितरःसोम्यासः अ
सुंयईयुरवृकाऋतज्ञास्तेनोवंतुपितरोहवेषु २५ परंमृत्योःसंकुशिकोमृत्युरोगास्त्रिष्टुप् ब्रह्मयमयोर्मध्येमृत्युरोगावा० ॐ परंमृत्योअ-
नुपरेहिपंथांयस्तेस्वइतरोदेवयानात् चक्षुष्मतेशृण्वतेतेब्रवीमिमानःप्रजांरीरिषोमोतवीरान् २६ गणानांत्वाशौनकोगृत्समदोगण

पतिर्जगती ब्रह्मनिर्ऋत्योर्मध्येगणपत्या० ॐ गणानांत्वागणपतिंहवामहे कविंकवीनामुपमश्रवस्तमं ज्येष्ठराजंब्रह्मणांब्रह्मणस्पत-
आनःशृण्वन्नूतिभिःसीदसादनं २७ शन्नोदेवीरांबरीषसिंधुद्वीपआपोगायत्री ब्रह्मवरुणयोर्मध्येअबा वा० शंनोदेवीरभिष्टयआ
पोभवंतुपीतये शंयोरभिस्रवंतुनः २८ मरुतोयस्यराहूगणोगौतमोमरुतोगायत्री ब्रह्मवाय्वोर्मध्येमरुदावा० ॐ मरुतोयस्यहिक्षये
पाथादिवोविमहसः ससुगोपातमोजनः २९ स्योनापृथिवीकाण्वोमेधातिथिर्भूमिर्गायत्री ब्रह्मणःपादमूलेकर्णिकाधःपृथिव्यावा० ॐ
स्योनापृथिविभवानृक्षरानिवेशनी यच्छानःशर्मसप्रथः ३० इमंमेगंगेसिंधुक्षित्प्रैयमेधोगंगादिनद्योजगती तत्रैवगंगादिनद्यावा०
ॐ इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरुष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ३१ धाम्नोगो
तमोवामदेवःससमुद्रानुष्टुप् तत्रैवसप्तसागरावाहनेवि० ॐ धाम्नोधाम्नोराजन्नितोवरुणनोमुंच यदापोअघ्न्याइतिवरुणेतिश
पामहेततोवरुणनोमुंच मयिवापोमोषधीर्हिंसीरतोविश्वव्यचाभूस्तेनोवरुणनोमुंच ३२ तदुपरिमेरुंनाममंत्रेणपूजयेत् मेरवे
नमः मेरुंआवा० ततोमंडलाद्बहिः सोमादिसंनिधौआयुधान्यावाहयेत् सोमसमीपेगदा ईशानसमीपेत्रिशूलं इंद्रसमीपेवज्रं अ
ग्निसमीपेशक्तिं यमसमीपेदंडं निर्ऋतिसमीपेखड्गं वरुणसमीपेपाशं वायुसमीपेअंकुशं ८ तद्बाह्येउत्तरे गौतमायनमः गौ
तमंआ० ईशान्यांभरद्वाजं पूर्वेविश्वामित्रं आग्नेय्यांकश्यपं दक्षिणेजमदग्निं नैर्ऋत्यांवसिष्ठं पश्चिमेअत्रिं वायव्यांअरुंधतीं
तद्बाह्येपूर्वादिक्रमेण ऐंद्रीं कौमारीं ब्राह्मीं वाराहीं चामुंडां वैष्णवीं माहेश्वरीं वैनायकीं इत्यष्टौशक्तीः ८ प्रतिष्ठाप्य प्रत्येकंसहवा
वाहयेत्पूजयेत् इतिमंडलदेवताः अथलक्षपूजनोद्यापनविधिःउच्यते अद्येत्यादिपूर्वोच्चरितएवंगुणविशेषणविशिष्टायां
पुण्यतिथौ० मयाकृतस्य अमुकदेवताप्रीत्यर्थलक्षसंख्यामुकपूजनकर्मणःसांगतासिध्यर्थंतदुद्यापनंकरिष्ये तदंगत्वेनस्वस्ति
वाचनंआचार्यवरणंचकरिष्ये तत्रादौ निर्विघ्नतासिध्यर्थंगणपतिपूजनंकरिष्ये अस्यलक्षपूजनोद्यापनकर्मणःपुण्याहंभवंतोब्रुवंतु
अस्तुपुण्याहं एवंस्वस्तिभवंतोब्रुवंतु आयुष्मतेस्वस्ति ऋद्धिंभवंतोब्रुवंतुऋध्यतां श्रीरस्त्विनिभवंतोब्रुवंतुअस्तुश्रीः लक्ष्मीनारायणौ

प्रीयेताम् तत्रगोत्रनामोच्चारणपूर्वकंअमुकगोत्रअमुकशर्मा अहं यजमानः अमुकगोत्रं अमुकशर्माणंस्वशाखाध्यायिनंब्राह्मणंअस्मि
नूलक्षपूजनोद्यापनाख्येकर्मणिआचार्यत्वामहंवृणे आचार्यत्वेनवृतोऽस्मि यथाज्ञानेनकर्मकरिष्यामि आचार्यस्तुयथास्वर्गेशक्रादीनां
बृहस्पतिः तथात्वंममयज्ञेस्मिन्नाचार्योभवसुव्रत गंधादिनाआचार्यपूजनं तथैवब्राह्मणंवृणुयात् यथाचतुर्मुखोब्रह्मास्वर्गेलो
केपितामहः तथात्वंममयज्ञेस्मिन्ब्रह्माभवद्विजोत्तम अस्ययागस्यनिष्पत्तौ० आचार्यः आचम्यप्राणानायम्य अमुककर्मकरिष्ये क
र्माधिकारार्थंआत्मनःशुद्ध्यर्थंचपुरुषसूक्तजपमहंकरिष्ये पृथ्वीत्यस्यमंत्रस्य मेरुपृष्ठऋषिः कूर्मोदेवता सुतलंछंदः आसनोपवेशने-
वि० पृथ्वित्वयाधृतालोका० पुरुषसूक्तजपानेकलशपूजनंसर्वतोभद्रेलिंगतोभद्रेवाब्रह्मादीनावाहयेत् ततः मूर्तौअग्न्युत्तारणम् अ
स्यांमूर्तौअवघातादिदोषपरिहारार्थं अग्न्युत्तारणंदेवतासान्निध्यार्थंप्राणप्रतिष्ठांचकरिष्ये अग्निः सप्तिमितिसूक्तं अग्निपदरहितंसाहि
तंचपठेत् ॐ अग्निःसप्तिंवाजंभरंददात्यग्निर्वीरंश्रुत्यंकर्मनिष्ठां अग्नीरोदसीविचरत्समंजन्नग्निर्नारींवीरकुक्षिंपुरंधिम् अग्नेरप्नसः
समिदस्तुभद्राग्निर्महीरोदसीआविवेश अग्निरेकंचोदयत्समत्स्वग्निर्वृत्राणिदयतेपुरूणि अग्निर्हत्यंजरतःकर्णमावाग्निरद्भ्यो
निरदहज्जरूथम् अग्निरत्रिंघर्मउरुष्यदंतरग्निर्नृमेधंप्रजयासृजत्सं अग्निर्दाद्द्रविणंवीरपेशाअग्निर्ऋषिंयःसहस्रासनोति अ
ग्निर्दिविहव्यमाततानाग्नेर्धामानिविभृतापुरुत्रा अग्निमुक्थैर्ऋषयोविह्वयंतेग्निंनरोयामनिबाधितासः अग्निंवयोअंतरिक्षेपतंतोग्निः
सहस्रापरियातिगोनां अग्निंविशईळतेमानुषीर्याअग्निंमनुषोनहुषोविजाताः अग्निर्गांधर्वीपथ्यामृतस्याग्नेर्गव्यूतिर्घृतआनिषत्ता अ
ग्नयेब्रह्मऋभवस्ततक्षुरग्निंमहामवोचामासुवृक्तिं अग्नेप्रावजरितारंयविष्ठाग्नेमहिद्रविणमायजस्व इतिअग्न्युत्तारणं अथषोड-
शोपचारपूजनं सहस्रशीर्षेत्यावाहनं पुरुषएवेदमित्यासनं एतावानस्येतिपाद्यं त्रिपादूर्ध्वेत्यर्घ्यं तस्माद्विराळेत्याचमनीयं यत्पुरुषेणेति
स्नानं तंयज्ञमितिवस्त्रं तस्माद्यज्ञात्सर्वहुतःसंभृतमित्युपवीतं तस्माद्यज्ञात्सर्वहुतऋचइतिगंधं तस्मादश्वेतिपुष्पं यत्पुरुषंव्यदधुरितिधूपं ब्राह्मणोस्येतिदीपं
चंद्रमामनसइतिनैवेद्यम् नाभ्याआसीतिप्रदक्षिणाम् सप्तास्येतिनमस्कारान् यज्ञेनयज्ञमितिमंत्रपुष्पांजलिम् इतिषोडशोपचारपूजा

व्रीह्यादिधान्ययवतिलैः त्रिकूटं कृत्वा तत्र महीद्यौरित्यादिना अव्रणकलशं संस्थाप्य कलशोपरि उपपात्रं संस्थाप्य तस्योपरि त्र्यंबकमंत्रेण
उमया सह त्र्यंबकं वा विष्णुमंत्रेण लक्ष्म्या सह विष्णुं सिद्धिबुद्धिसहितं गणेशं अथवा पत्न्या सहितं सूर्यं वा भवानीं तत्तन्मंत्रेण आवाह्य शिव
स्य दक्षिणे लक्ष्म्या सह विष्णुं आवाहयेत् शिवस्य उत्तरे सावित्र्या सह ब्रह्माणं एवं विष्ण्वादीनामपि देवे प्राणप्रतिष्ठां कृत्वा अस्य श्रीप्राणप्र
तिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वरा ऋषयः ऋग्यजुःसामाथर्वाणि छंदांसि क्रियामयवपुः प्राणाख्या देवता आं बीजं ह्रीं शक्तिः क्रौं कीलकं
अस्यां मूर्तौ प्राणप्रतिष्ठापने विनि० ॐ आं ह्रीं क्रौं अं यं रं लं वं शं षं सं हं ळं क्षं अः क्रौं ह्रीं आं हंसः सोहं अस्यां मूर्तौ प्राणा इह प्राणाः तिष्ठंतु पुनः
अस्यां मूर्तौ जीव इह स्थितः पुनः० अस्यां मूर्तौ सर्वेंद्रियाणि वाङ्मनस्त्वक्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थानि इहागत्य स्वस्ति सुखं
चिरं तिष्ठंतु स्वाहा असुनीते पुनरस्मासु० यानस्वस्ति गर्भाधानादि पंचदशसंस्कारसिद्ध्यर्थं पंचदश प्रणवावृत्तिं कुर्या० ॐ रक्ताम्भोधिस्थ
पोतोल्लसदरुणसरोजाधिरूढा कराब्जैः पाशं कोदंडमिक्षूद्भवमथ गुणमप्यंकुशं पंचबाणान् बिभ्राणासृक्कपालं त्रिनयनलसिता पी
नवक्षोरुहाढ्या देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः षोडशोपचारैः पंचामृतैश्च वैदिकमंत्रैः पुराणोक्तमंत्रैः संपूज्य
रात्रौ जागरणं कुर्यात् प्रातः नित्यकृत्यं विधाय तस्य लक्षपूजनस्य वा व्रतानाचरितस्य सांगतासिद्ध्यर्थं पूजनदशांशेन तिलयवव्रीहिभिः पायसा
दिभिर्वा होमं करिष्ये होमस्तु वेदोक्तेन मूलमंत्रेण पौराणोक्तेन वा कुर्यात् अथाग्निमुखं आचम्य तिथ्यादि संकीर्त्य एवंगुणविशेषण
विशिष्टायां पुण्यतिथौ अमुककर्मांगतया विहितं अमुकहवनं करिष्ये शंकुमृदा ईशान्यामारभ्य उदक्संस्थं चतुरंगुलोन्नतं चतुर्दिक्षु
मीलितं कृत्वा द्विःसप्तत्यंगुलपरिधिकं फलितमष्टादशांगुलविस्तृतं होमानुसारेण तदधिकं वा न तु ततो न्यूनं मध्योन्नतं स्थंडिलं कुर्या
त् तदंगं स्थंडिले उल्लेपन उल्लेखनाग्निप्रतिष्ठापनं करिष्ये गोमयादि लिप्ते शुद्धदेशे स्थंडिलं कुर्यात् स्थंडिलं तद्गोमयेन प्रदक्षिणमुपलि
प्य दक्षिणे ऽष्टौ उदीच्यां द्वे प्रतीच्यां चतुः प्रत्यामर्धमित्यंगुलानि त्यक्त्वा दक्षिणोपक्रमामुदक्संस्थां प्रादेशमात्रां मेकां लेखां तस्याद्दक्षिणो
त्तरयोः प्रागायते पूर्वरेखया असंस्पृष्टे प्रादेशसंमिते द्वे लेखे लिखित्वा तयोर्मध्ये परस्परमसंस्पृष्टा उदक्संस्थाः प्रागायताः प्रादेशसंमि

तास्तिस्रइतिपद्लेखा यज्ञीयशकलमूलेनदक्षिणहस्तेनोल्लिखेल्लेखास्त तच्छकलमुदगग्रंनिधाय स्थंडिलमद्भिरभ्युक्ष्यशकलमाग्नेय्यां
निरस्यपाणिंप्रक्षाल्यवाग्यतोभवेत् तैजसादिपात्रेपिधानसहितमग्निमानीय स्थंडिलादाग्नेय्यांदिशिनिधाय जुष्टोदमूनाआत्रेयोवसुश्रुतो
ग्निस्त्रिष्टुप् अग्न्याधा० ॐ जुष्टोदमूनाअतिथिर्दुरोणइमन्नोयज्ञमुपयाहिविद्वान् विश्वाअग्नेअभियुजोविहत्याशत्रूयतामाभराभोजना-
नि एह्यग्नइत्यस्यमंत्रस्यराहूगणोगौतमऋषिः अग्निर्देवता त्रिष्टुप्छंदः अग्न्यावाहनेवि० ॐ एह्यग्नइहहोतानिषीदादब्धःसुपुरएताभ
वानः अवतांत्वारोदसीविश्वमिन्वेयजामहेसौमनसायदेवान् इत्यक्षतैरावाह्य आच्छादनंदूरीकृत्य समस्तव्याहृतीनांपरमेष्ठीप्रजापतिःप्र
जापतिर्बृहती अग्निप्रतिष्ठापनेविनियोगः ॐ भूर्भुवःस्वरोमित्यग्निंप्रतिष्ठाप्य चत्वारिशृंगागौतमोवामदेवोग्निस्त्रिष्टुप् अग्निमूर्तिध्याने
विनियोगः ॐ चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअस्य त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश सप्तहस्तश्चतुः
शृंगःसप्तजिह्वोद्विशीर्षकः त्रिपात्प्रसन्नवदनःसुखासीनःशुचिस्मितः स्वाहांतुदक्षिणेपार्श्वेदेवींवामेस्वधांतथा बिभ्रद्दक्षिणहस्तैस्तुश
क्तिमन्नंस्रुचंस्रुवं तोमरंव्यजनंवामैर्घृतपात्रंचधारयन् आत्माभिमुखमासीनएवंरूपोहुताशनः एषहिदेवःप्रदिशोनुसर्वाःपूर्वोहिजातःस
उगर्भेअंतः सविजायमानःसजनिष्यमाणःप्रत्यङ्मुखस्तिष्ठतिविश्वतोमुखः अग्नेवैश्वानरशांडिल्यगोत्रमेषध्वजप्राङ्मुखममसंमु
खोवरदोभव तदंगमन्वाधानंकरिष्ये आचम्यप्राणानायम्यदेवतापरिग्रहार्थंअस्मिन्नन्वाहितेग्नौजातवेदसमग्निमिध्मेनप्रजापतिंप्र-
जापतिंचाघारदेवतेआज्येन अग्नीषोमौचक्षुषीआज्येनात्रप्रधानदेवताः अमुकहोमद्रव्येण ब्रह्माद्यावाहितदेवताश्चनाममंत्रेणएकैक
याज्याहुत्यायक्ष्ये शेषेणस्विष्टकृतमग्निमिध्मसंनहनेनरुद्रं अयासमग्निंदेवान्विष्णुंअग्निंवायुंसूर्यंप्रजापतिंचएताःप्रायश्चित्तदेवताः
आज्यद्रव्येण ज्ञाताज्ञानदोषपरिहारार्थंत्रिवारमग्निंसकृत्मरुतश्चाज्येन अंगदेवताः प्रधानदेवताःसर्वाःसन्निहिताःसंतु एवंसांगो-
पांगेनकर्मणासमिद्भिःसद्योयक्ष्ये व्याहृतीनांप्रजापतिःप्रजापतिरग्निर्वायुःसूर्यःप्रजापतिर्देवताः गायत्र्युष्णिगनुष्टुब्बृहत्यश्छंदांसि
अन्वाधानसमिद्धोमेविनियोगः ॐ भूर्भुवःस्वःस्वाहा प्रजापतयइदंन० इध्माबर्हिषोश्चसन्नहनं परिसमूहनं ३ अग्नेःषोडशाभि ११

दर्भैः प्राच्यादिषु परिस्तृणाति। परिस्तरणं पर्युक्षणं पवित्रकरणं पात्रासादनं चरुस्थाली प्रोक्षिण्यौ दर्वीस्रुवौ प्रणीता आज्यपात्रे इध्माबर्हिषि एता-
नासादयामि प्रोक्षिणीपात्रमुत्तानं कृत्वा प्रादेशमात्रे द्वे पवित्रे निधाय अद्भिः पूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य अंगुष्ठोपकनिष्ठिकाभ्यां उदगग्रे पृ-
थक् पवित्रे धृत्वा ऽपस्त्रिरुत्पूय पात्राण्युत्तानानि कृत्वा इध्मं च विस्रस्य सर्वाणि पात्राणि त्रिः प्रोक्षयेत्। ता आपः किंचित्कमंडलौ क्षिपेत्। दिंत्येके प्र-
णीतापात्रमग्नेः प्रत्यङ् निधाय तत्र ते पवित्रे निधाय उदकेन पूरयित्वा गंधपुष्पाक्षतान्निक्षिप्य अस्मिन्कर्मणि ब्रह्मत्वेन त्वामहं वृणे पाणिना
पाणिं स्पृष्ट्वा ततो ब्रह्मा वृतोस्मि इत्युक्त्वा आचम्याग्नेर्दक्षिणतस्तिष्ठन् ततो ब्रह्मणे इदमासनं निरस्तः परावसुः इदमहमर्वावसोः सदने सी-
दामि ॐ ब्रह्मन्नपः प्रणेष्यामि बृहस्पतिर्ब्रह्मा ब्रह्मसदन आशिष्यते बृहस्पते यज्ञं गोपाय स यज्ञं पाहि स यज्ञपतिं पाहि स मां पाहि ॐ भूर्भु-
वः स्वर्बृहस्पतिप्रसूतः ॐ प्रणय यदि ब्रह्मा न भवेत्तदा स्वयमेव तत्र प्रणीतापात्रं नासिकासमीपं नीत्वा उत्तरतोऽग्नेर्निधाय अन्यैर्दर्भैराच्छा-
दयेत्। तत्पवित्रं आज्यपात्रे निधाय ततोपरिस्तरणाद्बहिरुत्तरतोंऽगारानपोह्य तदुपरि आज्यपात्रं निधाय विलीनाज्यं निक्षिप्य वामहस्ते दर्भाग्र-
द्वयं धृत्वा एकेनैवोल्मुकेनावज्वाल्य दर्भाग्रद्वयं निक्षिप्य उल्मुकेन प्रधानद्रव्यसहितं त्रिः पर्यग्निकृत्वा उल्मुकं निरस्यांगारानग्नौ क्षिपेत्। अंगु-
ष्ठोपकनिष्ठिकाभ्यां पवित्रे गृहीत्वा सवितुष्ट्वेति मंत्रस्य हिरण्यगर्भस्तूप ऋषिः सविता देवता पुरउष्णिक् छंदः आज्यस्योत्पवने विनि० ॐ स-
वितुष्ट्वा प्रसव उत्पुनाम्यच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः प्रागुत्पुनाति सकृन्मंत्रेण द्विस्तूष्णीं ते पवित्रे अद्भिः प्रोक्ष्य अग्नौ प्रहरे-
त् स्कंदाय स्वाहा स्कंदायेदं न० तत आत्मनो ऽग्रतो भूमिं प्रोक्ष्य तत्र बर्हिः सन्नहनीं रज्जुमुदगग्रां प्रसार्य ततो बर्हिरास्तरणं तदुपरि आज्य-
पात्रं निधाय कुशान्स्रुक्स्रुवौ च दक्षिणहस्ते वामहस्ते च गृहीत्वा अग्नौ प्रताप्य दर्वीं निधाय स्रुवं वामहस्ते गृहीत्वा स्रुवबिलं दर्भाग्रेण
त्रिः संमृज्य तथैव स्रुवपृष्ठं दर्भाग्रेण आत्माभिमुखं त्रिः संमृज्य कुशमूलेन पृष्ठादारभ्य बिलपर्यंतं त्रिस्त्रिः संमृज्य प्रोक्ष्य प्रताप्य घृतादुत्तरतः
स्थापयेत्। पुनस्तथैव स्रुचं संमृज्य प्रोक्ष्य प्रताप्य स्रुवोत्तरतः स्थापयेत्। दर्भान्संमृज्य अग्नौ प्रहरेत्। स्रुवेणाज्यं गृहीत्वा होमद्रव्यमभिघार्य
उदगुद्वास्य अग्न्याज्ययोर्मध्येन नीत्वा ऽग्न्याद्दक्षिणतो बर्हिषि सांतरमासाद्य तन्मध्ये एकपात्रं निधाय अग्निमलंकृत्य ॐ विश्वानि न दु-

त्यनयोर्वसुश्रुतोग्निस्त्रिष्टुप् द्वाभ्यामर्चनेनेत्योपस्थानेविनियोगः ॐ विश्वानिनोदुर्गहाजातवेदःसिंधुंननावादुरितातिपर्षि अग्नेअ
त्रिवन्नमसागृणानोऽस्माकंबोध्यविताननूनां यस्त्वाहृदाकीरिणामन्यमानोमर्त्यमर्त्योजोहवीमि जातवेदोयशोअस्मासुधेहिप्रजाभिर
ग्नेअमृतत्वमश्यां यस्मैत्वंसुकृतेजातवेदउलोकमग्नेकृणवस्योनं अश्विनंसपुत्रिणंवीरवंतंगोमंतंरयिंनशतेस्वस्ति अष्टदिक्षुगंधपुष्पा
दिभिरायतनं आत्मानंचालंकृत्य एकयोपस्थाय ततोपाणिनाइध्ममादायत्रिरभिघार्य अयंतइध्मेत्यस्यमंत्रस्यवामदेवऋषिःजातवेदाग्नि-
र्देवतात्रिष्टुपृछंदः इध्महवनेविनि॰ ॐ अयंतइध्मआत्माजातवेदस्तेनेध्यस्ववर्धस्वचेद्धवर्धयचास्मान्प्रजयापशुभिर्ब्रह्मवर्चसेनान्नाद्ये
नसमेधयस्वाहा अग्नयेजातवेदसेइदंनमम स्रुवेणाज्यंगृहीत्वा वायव्यांदिशिआरभ्य अग्निदिक्पर्यंतंआज्यधारांजुहुयात् प्रजापतये
मनसाध्यायन् स्वाहेतिजुहुयात् स्वाहेतिमुखेनस्मृत्वा तथैवनिर्ऋतिदिशिआरभ्य ईशानदिक्पर्यंतंजुहुयात् उभयत्रप्रजापतयइदं॰ उ
त्तरेअग्नयेस्वाहा अग्नयइदं॰ दक्षिणेसोमायस्वाहा सोमायेदं॰ अथप्रधानहोमंकुर्यात् ब्रह्मादिदेवतानामंत्रेणएकैकयाज्याहुत्याय॰
ब्रह्मणेस्वा॰ सोमाय॰ ईशानाय॰ इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ अष्टौवसुभ्यः॰ एकादशरुद्रेभ्यः॰ द्वादशादित्ये
भ्यः॰ अश्विभ्यां॰ विश्वेभ्योदेवेभ्यः॰ समयक्षेभ्यः॰ भूतनागेभ्यः॰ गंधर्वाप्सरोभ्यः॰ स्कंदाय॰ नंदीश्वराय॰ शूलाय॰ महाकाला॰ दक्षादि
सप्तगणेभ्यः॰ दुर्गायै॰ विष्णवे॰ स्वधायै॰ मृत्युरोगाभ्यां॰ गणपतये॰ अद्भ्यः॰ मरुद्भ्यः॰ पृथिव्यै॰ गंगादिनदीभ्यः॰ सप्तसागरेभ्यः॰ मेर-
वेस्वाहा गदायै॰ त्रिशूलाय॰ वज्राय॰ शक्तये॰ दंडाय॰ खड्गाय॰ पाशाय॰ अंकुशाय॰ गोतमाय॰ भरद्वाजाय॰ विश्वामित्रा॰ कश्यपा॰
जमदग्नये॰ वसिष्ठा॰ अत्रये॰ अरुंधत्यै॰ ऐंद्र्यै॰ कौमार्यै॰ ब्राह्म्यै॰ वाराह्यै॰ चामुंडायै॰ वैष्णव्यै॰ माहेश्वर्यै॰ वैनायक्यै॰ स्वाहांतं अथस्विष्ट
कृद्धोमः यदस्यकर्मणोत्यस्यमंत्रस्यहिरण्यगर्भऋषिः अग्निर्देवता अतिधृतिच्छंदः स्विष्टकृद्धोमेविनियोगः ॐ यदस्यकर्मणोत्यरीरि
चंयद्वान्यूनमिहाकरं अग्निष्टत्स्विष्टकृद्विद्वान्सर्वंस्विष्टंसुहुतंकरोतुमे अग्नयेस्विष्टकृतेसुहुतहुतेसर्वप्रायश्चित्ताहुतीनांकामानांसम
र्धयित्रेसर्वान्नःकामान्समर्धयस्वाहा अग्नयेस्विष्टकृतइदं॰ त्रिसंधानं रुद्रायपशुपतयेस्वाहा पशुपतयेरुद्राये॰ अपउपस्पृश्यस्रुवेणभाय

श्चित्ताज्याहुतीः सप्तजुहुयात् तत्रमंत्राः अयाश्चेत्यस्यमंत्रस्यविमदऋ० अयाळग्निर्देवता पंक्तिछंदः सर्वप्रायश्चित्ताज्यहोमेविनियोगः ॐ
अयाश्चाग्नेस्यनभिशस्तीश्चसत्यमित्वमयाअसि अयासावयसाकृतोयासन्हव्य मूहिषेयानोधेहिभेषजंस्वाहा अयसेग्नयइदं० अतो
देवाइतिद्वयोः काण्वोमेधातिथिर्ऋषिः आद्यादेवादेवता द्वितीयाविष्णुर्देवता गायत्रीछंदः प्रायश्चित्ताज्याहुतिहोमेविनियोगः अतोदेवा
अवंतुनोयतोविष्णुर्विचक्रमे पृथिव्याः सप्तधामभिः स्वाहा देवेभ्यइदं० इदंविष्णुर्विचक्रमेत्रेधानिदधेपदं समूढमस्यपांसुरेस्वाहा
विष्णवइ० व्यस्तसमस्तव्याहृतीनांविश्वामित्रजमदग्निभरद्वाजभृगवऋषयः अग्निवायु सूर्यप्रजापतयोदेवताः गायत्र्युष्णिगनुष्टुप्बृ
हत्यश्छंदांसि सर्वप्रायश्चित्ताज्यहोमेवि० ॐ भूः स्वाहा अग्नयइदं० भुवः स्वाहा वायवइ० स्वः स्वाहा सूर्याये० भूर्भुवः स्वः स्वाहा प्रजा
पतयइ० ततोब्रह्माकर्तारंपरित्याग्नेर्वायव्यदेशेतिष्ठन्नेताएवसप्ताहुतीर्जुहुयात् त्यागः यजमानः अत्रकुर्यात् अनाज्ञातमितिमंत्रद्वयस्य
हिरण्यगर्भऋषिः अग्निर्देवता त्रिष्टुप्छंदः ज्ञाताज्ञातदोषपरिहारार्थंप्रायश्चित्ताज्यहोमेविनि० ॐ अनाज्ञातंयदाज्ञातंयज्ञस्यक्रियते
मिथु अग्नेतदस्यकल्पयत्वꣳहिवेत्थयथातथꣳस्वाहा अग्नयइ० ॐ पुरुषसंमितोयज्ञोयज्ञः पुरुषसंमितः अग्नेतदस्यकल्पयत्वꣳहि
वेत्थयथातथꣳस्वाहा अग्नयइ० यत्पाकत्रेत्यस्यमंत्रस्य आप्तस्त्रितऋषिः अग्निर्देवता त्रिष्टुप्छंदः न्यूनातिरिक्तदोषपरिहारार्थंप्रायश्चित्ता-
ज्यहोमेविनि० ॐ यत्पाकत्रामनसादीनदक्षानयज्ञस्यमन्वतेमर्त्यासः अग्निष्टद्धोताक्रतुविद्विजानन्यजिष्ठोदेवाँऽऋतुशोयजातिस्वाहा
अग्नयइ० यद्वोदेवाइत्यस्यअभितपाऋषिः मरुतोदेवता त्रिष्टुप्छंदः मंत्रविपर्यासादिनिमित्तकप्रायश्चित्ताज्यहोमेविनियोगः ॐ यद्वोदे
वाअतिपातयानिवाचाचप्रयुतीदेवहेळनम् अरायोअस्माँअभिदुछुनायतेन्यत्रा स्मन्मरुतस्तंनिधेतनस्वाहा मरुद्भ्यइदं० पूजास्विष्ट-
नवाहुत्याबलिंपूर्णाहुतिंचरेत् श्रेयः संपाद्यदानंचअभिषेकोविसर्जनम् पूर्णाहुतिमुत्तमांजुहोति सर्वंवैपूर्णाहुतिः सर्वमेवाप्नोति अथो
इयंवैपूर्णाहुतिः अस्यामेवप्रतितिष्ठति० इदमग्नयेवैश्वानरायशतऋतवेसप्तवते अद्यश्चनमम वसोर्धाराकुर्यात् धामंतेवामदेवआ
पोजगती पूर्णाहुतिहोमेविनियोगः ॐ धामंतेविश्वंभुवनमधिश्रितमंतः समुद्रेहृद्य१न्तरायुषि अपामनीकेसमिथेयआभृतस्तमश्याम

मधुमंतंतऊर्मिस्वा० अद्भ्यइदं० बर्हिषिपूर्णपात्रंनिनयेत् पूर्णमसिपूर्णमेभूयाः सुपूर्णमसिसुपूर्णमेभूयाः सदसिसन्मेभूयाः सर्वमसिस
र्वंमेभूयाः अक्षितिरसिमामेक्षेष्ठाः प्राच्यांदिशिदेवाऋत्विजोमार्जयंतांदक्षिणस्यांदिशिमासाःपितरोमार्जयंतां प्रतीच्यांदिशिगृहाःपशवो-
मार्जयंतां उदीच्यांदिश्यापओषधयोवनस्पतयोमार्जयंतांऊर्ध्वायांदिशियज्ञःसंवत्सरःप्रजापतिर्मार्जयतां आपोअस्मानित्यस्यदेवश्रवाआप
स्त्रिष्टुप् मार्जनेविनियोगः ॐ आपोअस्मान्मातरःशुंधयंतुघृतेननोघृतप्वःपुनंतु विश्वंहिरिप्रंप्रवहंतिदेवीरुदिदाभ्यःशुचिरापूतएमि इद
मापःप्रवहनयत्किंचदुरितंमयि यद्वाहमभिदुद्रोहयद्वाशेपउतानृतं सुमित्र्यानआपओषधयःसंतु इत्येतैर्मंत्रैर्मार्जनंकृत्वा दुर्मित्र्यास्त-
स्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्म स्तहन्मीतिनिर्ऋतिदेशेकुशाग्रैरपःसिंचेत् माहंप्रजांपरासिचंयानःसयावरीस्थन समुद्रेवोनिनयानिः
स्वंपाथोअपीथ शांतिःपुष्टिस्तुष्टिश्चास्तु आग्नेय्याभिमुखस्तिष्ठन् अग्निपूजनं विश्वानिनोदुर्गहाजातवेदः० अग्न्युपस्थानंजस्वा अ
ग्नेनयसुपथारायेअस्मान्विश्वानिदेववयुनानिविद्वान् युयोध्या १ स्मज्जुहुराणमेनोभूयिष्ठांतेनमउक्तिंविधेम बोधानोअस्यवच
सोयविष्ठमंहिष्ठस्यप्रभृतस्यस्वधावः पीयतित्वोअनुत्वोगृणातिवंदारुस्तेतनुवंवंदेअग्ने नमस्कारः मानस्तोकेतिमंत्रस्य कुत्स
ऋषिःरुद्रोदेवता जगतीछंदः विभूतिग्रहणेविनियोगः ॐ मानस्तोकेतनयेमानआयौमानोगोषुमानोअश्वेषुरीरिषः वीरान्मानोरु
द्रभामितोवधीर्हविष्मंतःसदमित्वाहवामहे त्र्यायुषंजमदग्नेरितिललाटे कश्यपस्यत्र्यायुषमितिकंठे अगस्त्यस्यत्र्यायुषमिति
नाभौ यद्देवानांत्र्यायुषमितिदक्षिणस्कंधे तन्मेअस्तुत्र्यायुषमितिवामस्कंधेसर्वमस्तुशतायुषमितिशिरसिइतिविभूतिधारणं परिस्तरणा
न्युत्तरेविसृजेत् परिसमुह्य ३ पर्युक्ष्य ३ ॐ चमेस्वरश्चमेयज्ञोपचतेनमश्च यत्तेन्यूनंतस्मैतउपयत्तेतिरिक्तंतस्मैतेनमः स्वस्तिश्र
द्धांमेधांयशःप्रज्ञांविद्यांबुद्धिंश्रियंबलम् आयुष्यंतेजआरोग्यंदेहिमेहव्यवाहन यस्यस्मृत्याचनामोक्त्यातपोयज्ञक्रियादिषु न्यू
नंसंपूर्णतांयातिसद्योवंदेतमच्युतं प्रमादात्कुर्वतांकर्मप्रच्यवेताध्वरेषुयत् स्मरणादेवतद्विष्णोःसंपूर्णंस्यादितिश्रुतिः अनेनकर्म
णाश्रीपरमेश्वरःप्रीयताम् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छहुताशन होमंसंपाद्य उत्तरपू

जोंकृत्वा आचार्यंसंपूज्यगांदद्यात् यज्ञसाधनभूतायाविश्वस्याघौघनाशिनी विश्वरूपधरोदेवःप्रीयतामनयागवा ब्राह्मणभोजनं
संकल्प्य यांतुदेवगणाःसर्वेपूजामादायपार्थिवीं इष्टकामप्रसिध्यर्थंपुनरागमनायच इतिअग्निमुखं अथमुद्रालक्षणं हेमाद्रौ सं
मुखीकृत्यहस्तौद्वौकिंचित्संकुचितांगुली मुकुलीतुसमाख्यातापं कजप्रसृतेवसा पूर्वोक्तामुकुलीयाचप्रादेश्योनिःसृतांगुलिः व्याको
शमुद्रामुकुळापद्ममुद्राप्रदर्शयेत् अंगुष्ठौकुंचितांतौतुस्वकीयांगुलिवेष्टितौ उच्चौवाभिमुखौहस्तौयोजयित्वातुनिष्ठुरा तर्जन्योकुंचि
तेकृत्वातथैवचकनीयसी अधोमुखीदृष्टनखास्थितामध्येकरस्यतु चतस्रश्चोत्थिताःपृष्ठेअंगुष्ठावेकतःकुरु नालव्यवस्थितौहौतु-
व्योममुद्राप्रकीर्तिता तत्रांतरेसर्वदेवतापूजनसाधारण्येनषण्मुद्राउच्यते देवताननसंतुष्टासर्वदासंमुखीभवेत् अंगुष्ठौनिक्षिपेत्सेयं-
मुद्रात्वावाहनीमता संग्रंथ्यानिक्षिपेत्सेयंमुद्रात्वावाहनीस्मृता अधोमुखीत्वियंचेत्स्यात्स्थापनीमुद्रिकामता उच्छ्रितावुच्छ्रितौकुर्या
त्संमुखीकरणाभवेत् प्रसृतांगुलिकौहस्तौमिथःश्लिष्टौतुसंमुखौ कुर्यात्स्वहृदयेसेयंमुद्राप्रार्थनसंज्ञिका इत्येवंसर्वदेवानांपूजनेषट्प्र
दर्शयेत् शिवपूजनेलिंगमुद्रा उच्छ्रितंदक्षिणांगुष्ठंवामांगुष्ठेनबंधयेत् वामांगुलीदक्षिणाभिरंगुलीभिश्चवेष्टयेत् लिंगमुद्रेतिविख्याता
शिवसान्निध्यकारिणी श्रीकामःशीर्षिकुर्वीतराज्यकामस्तुनेत्रयोः मुखेअन्नादिकामस्तुग्रीवायांरोगशांतिकृत् हृदयेसर्वकामीचज्ञा
नार्थीनाभिमंडले राज्यकामस्तुगुह्येचराष्ट्रकामस्तुपादयोः रामपूजनेसप्तदशमुद्राः तथाचरामार्चनचंद्रिकायांअगस्त्यः आवाहनीस्था
पनीचसंनिधीकरणीतथा संनिरोधिनीमुद्रा ... ।।तथा संकलीकरणीचैवमहामुद्रातथैवच शंखचक्रगदापद्मधेनुकौस्तुभ
गारुडाः श्रीवत्सवनमालेचयोनिमुद्रांप्रदर्शयेत् एताभिःसप्तदशभिर्मुद्राभिस्तुविचक्षणः योराममर्चयेन्नित्यंमोदयेत्ससुरेश्वरं द्रावयेद
पिविभेंद्रततःप्रार्थितमाप्नुयात् मूलाधाराद्धृद ... नमानीतःकुसुमांजलिः त्रिस्थानगननेजोभिर्विनीतःप्रतिमादिषु आवाहनीचमुद्रास्या
द्देवार्चनविधौमुने एषैवाधोमुखीमुद्रास्थाप ... शस्यतेपुनःउन्नतांगुष्ठयोगेनमुष्टीकृतकरद्वयम् सन्निधीकरणीमुद्रादेवार्चनविधौमुने अं
गुष्ठगर्भिणीसैवमुद्रास्यात्संनिरोधिनी उत्त ... मुष्टीयुगलासंमुखीकरणीमता अंगैरेवांगविन्यासःसंकलीकरणीभवेत् अन्योन्यांगुष्ठसं

लग्नविस्तारितकरद्वयं महामुद्रेयमाख्याता न्यूनाधिकसमापनी कनिष्ठानामिकामध्यांतस्थांगुष्ठात्तदग्रतः गोपितांगुष्ठमूलेन सन्निधामुकु
लीकृता करद्वयेनमुद्रास्याच्छुरवाख्येयसुरार्चने अन्योन्याभिमुखस्पर्शव्यत्ययेनतुवेष्टयेत् अंगुलीभिःप्रयत्नेनमंडलीकरणंमुने चक्रमुद्रे
यमाख्यातागदामुद्राततःपरं अन्योन्याभिमुखाश्लिष्टाततःकौस्तुभसंज्ञका कनिष्ठेन्योन्यसंलग्नेभिमुखेहिपरस्परं वामस्यतर्जनीमध्येम
ध्यानामिकयोरपि वामानामिकसंस्पृष्टातर्जनीमध्यशोभिता पर्यायेणानतांगुष्ठद्वयाकौस्तुभलक्षणा कनिष्ठान्योन्यसंलग्नविपरी-
तांगुष्ठपोनितः अधस्तात्स्थापितांगुष्ठामुद्रागरुडसंज्ञि निर्दिष्टा न्यंगुष्ठमध्यस्थामध्यमानामिकाद्वयी कनिष्ठानामिकामध्यातर्जन्यग्रकरद्व
यी मुनेश्रीवत्समुद्रेयंवनमालाभवेत्ततः कनिष्ठानामि मध्यामुष्टिरुन्नततर्जनी परिभ्रांताशिरस्युच्चैस्तर्जनीश्यादिवौकसः योनिमु
द्रासमाख्यातायोतत्करद्वयाश्रिता तर्जन्याकृष्टमध्यांतोस्थितानामिकयुग्मिका मध्यस्थलस्थितांगुष्ठासेयंशस्तामुनेर्चने इतिमुद्राल
क्षणं अथोपचाराः पदार्थादर्शेज्ञानमालायाम् अष्टत्रिंशत्षोडशवादशपंचोपचारकाः तान्विभज्यप्रवक्ष्यामिकेतैस्यकृतेश्वकिं अ
र्घ्यंपाद्यमाचमनंमधुपर्कमुपस्पृशाम् स्नानंनीराजनंवस्त्रंआचमंचोपवीतकं पुनराचमभूषेचदर्पणालोकनंततः गंधपुष्पेधूपदीपौनै
वेद्यंचततःक्रमात् पानीयंतोयमाचामंहस्तवासस्ततःपरम् हस्तवासःकरोद्वर्तनं तांबूलमनुलेपंचपुष्पदानंततःपुनः गीतंवाद्यंतथा
नृत्यंस्तुतिंचैवप्रदक्षिणाः पुष्पांजलिनमस्कारावष्टत्रिंशत्समीरिताः इत्यष्टत्रिंशदुपचाराः अन्यच्च आसनंस्वागतंचार्घ्यंपाद्यमाचम-
नीयकं मधुपर्कासनस्नानवसनाभरणानिच स्रगंधःसुमनोधूपोदीपमन्नेनभोजनम् माल्यानुलेपनेचैवनमस्कारविसर्जने इतिषोड
शउपचाराः अर्घ्यंपाद्यंचाचमनंस्नानंवस्त्रनिवेदनं गंधादयोनैवेद्यांताउपचारादशक्रमात् शारदातिलकेषोडशोपचाराउक्ताः तथाच आ
सनस्नानवस्त्राणिभूषणंचविसर्जयेत् राज्ञोदेवार्चनेतैश्चपदार्थैर्द्वादशैःक्रमात् पूजनंकपिलेनोक्तंतत्सर्वंचविसर्जयेत् गंधतैलमथो
दद्याद्देवस्याप्रतिमंततः दूर्वांचविष्णुक्रांताचश्यामाकंपद्यमेवच पाद्यंग निचचत्वारिकथितानिसमासतः कर्पूरमगरुंपुष्पंद्रव्याण्याचमनी
यके सिद्धार्थमक्षतंचैवदूर्वांचतिलमेवच यवगंधफलपुष्पमष्टांगंत्वर्घ्यमुच्यते स्नानेवस्त्रेतथाभक्षेदद्यादाचमनीयकम् उद्वर्तनमपितत्रैव

रजनीसहदेवीचशिरीषंलक्ष्मणापिच सहाभद्राकुशाग्राणि उद्वर्तनमिहोच्यते मंत्रतंत्रप्रकाशे अक्षतागंधपुष्पाणिस्नानपात्रेनथात्रयम्
द्रव्याभावेप्रदातव्याः क्षालितास्तंदुलाःशुभाः तत्रैवोक्तं अगस्त्यसंहितायांतथाचमनपात्रेपिदद्याज्जातीफलंमुने लवंगमपिकंको-
लंशस्तमाचमनीयकं द्रव्याभावेतंत्रांतरेउक्तम् तंदुलान्प्रक्षिपेत्तेषुद्रव्याभावेतुतत्स्मरन् प्रयोगपारिजातेव्यासः प्रतिमापटयंत्राणां
नित्यंस्नानंनकारयेत् कारयेत्पर्वदिवसेयदावामलधारणम् ज्ञानमालायां नाक्षतैरर्चयेद्विष्णुंनतुलस्यागणाधिपम् नदूर्वयायजे
द्देवींबिल्वपत्रैश्चभास्करम् उन्मत्तमर्कपुष्पंचविष्णोर्वर्ज्यंसदाबुधैः अक्षतास्तुयवाःप्रोक्ताः इतिपदार्थादर्शेउक्तत्वाद्यवानामेवाऽयं
प्रतिषेधोनतंदुलानांतंत्रांतरे महाभिषेकंसर्वत्रशंखेनैवप्रकल्पयेत् सर्वत्रैवप्रशस्तोब्जःशिवसूर्यार्चनंविना अथव्रतोद्यापना
नुक्तौ पृथ्वीचंद्रोदयेनंदिपुराणे कुर्यादुद्यापनंयस्यसमासोयदुदीरितं उद्यापनंविनायत्तुतद्व्रतंनिष्फलंभवेत् यत्रचोद्यापनंनोक्तं
व्रतानुगुणतश्चरेत् वित्तानुसारतोदद्यादनुक्तोद्यापनेव्रते गांचैवकांचनंदद्याद्व्रतस्यपरिपूर्तये समासाद्युद्यापनमनुक्तोद्यापनविषयंउ-
क्तोद्यापनेतु आदौमध्येनथाप्यंतेव्रतस्योद्यापनंभवेत् तद्व्रतोद्यापनंकार्यंसंपूर्णफलमाप्नुयात् अथव्रतभंगेसंपूर्णतायांविधिः हेमा
द्रौभविष्ये युधिष्ठिरउवाच संपूर्णतामनुष्ठानंव्रतानांनंदनंदन कुरुप्रसादंगुह्यार्थमेतन्मेवक्तुमर्हसि श्रीकृष्णउवाच साधु-
साधुमहाबाहोकुरुराजयुधिष्ठिर रहस्यानांरहस्यंतेकथयामिव्रतेतव संपूर्णताकृतायत्रतत्रसम्यक्फलप्रदम् यच्चीर्णंनृवनारी
भिर्भवेत्संपूर्णकारकं अवश्यंतच्चकर्तव्यंसंपूर्णफलदं केचिद्भग्नंप्रमादेनयद्व्रतंव्रतिनास्थितम् नत्संपूर्णंभवेत्सर्वंव्रतेनाने
नपांडव उपद्रवैर्बहुविधैर्महामोहाच्चपांडव यद्भग्नंकिंचिदेवस्याद्व्रतंविघ्नविनाशनं तत्संपूर्णंभवेत्पार्थसत्यंसत्यंनसंशयः कांचनं
रूप्यकंरूपंशिल्पिनातुघटापयेत् भग्नव्रतस्ययोदेवस्तस्यरूपंविनिर्दिशेत् व्रतस्त्रीपुरुषयोःपार्थप्रारब्धंयद्व्रतंकिल नत्वनिष्पादितंकिंचि
द्दैवात्सर्वंतथास्थितं द्विभुजंपंकजारूढंसौम्यंप्रहसिताननं निष्पादितंशिल्पिनाचतस्मिन्नेवदिनेपुनः तन्मानेतुमनःप्राप्तेब्राह्मणेविधि-
नागृहे स्नापयेत्पयसादध्नाघृतक्षौद्ररसांबुभिः वस्त्रचंदनपुष्पैश्चपूजांकुर्यात्समाहितः तोयपूर्णस्यकुंभस्यमुखेविन्यस्यदेवतां धूप

दीपाक्षतैर्वस्त्रैरत्नैर्बहुप्रकारकैः अर्घ्यंप्रदद्यात्तन्नाम्नामंत्रेणानेनपांडव उपासनस्यदानस्यप्रायश्चित्तंकृतंजले शरणंवःप्रपन्नास्मःकु-
रुध्वाद्यदयांमम व्रत।छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि तत्सर्वंतवप्रसादेनसंपूर्णंजायतांमम कुरुप्रसादंसंपूर्णंव्रतंसंजायतांमम पूर्वद-
क्षिणपश्चात्सूउत्तरेचबलिंहरेत् उपर्यधस्तात्सर्वेभ्योदिक्पालेभ्योनमोनमः इदमर्घ्यमिदंपाद्यंतेभ्यस्तेभ्योनमोनमः पादौचजानुनीचैव-
कट्यशीर्षकवक्षसि कुक्षिंतुहृदयंपृष्ठंवाकुचक्षुश्चशिरोरुहान् पूजयित्वातुदेवस्यततःपश्चात्क्षमापयेत् पूजितस्त्वंयथाशक्त्यानमस्तेस्तु
सुरोत्तम ऐहिकामुष्मिकींदेवकार्यसिद्धिंदिशस्वमे एवंक्षमापयित्वातुप्रणामेच्चप्रयत्नतः तन्मूर्तिंचाद्विजातिभ्योविधिवत्संनिपादयेत्
स्थित्वापूर्वमुखोविप्रोगृण्हीयाद्दर्भपाणिना विप्रहस्तेप्रयच्छेच्चदाताचैवोत्तरामुखः मंत्रेणानेनकौंतेयसोपवासप्रयत्नतः इदंव्रतंमया
खंडंकृतमासीत्पुराद्विज तत्सर्वंपूर्णमेवास्तुतवमूर्तिप्रदानतः ब्राह्मणोपिप्रयच्छेतमंत्रेणानेनतद्व्रतम् वाक्यपूर्णमतःपूजाव्रतेनानेनते
पुरा संपूर्णंस्यात्प्रसादेनतवपूर्णामनोरथाः ब्राह्मणायत्नप्रार्पनेतन्मन्यंनदिवौकसः सर्वदेवमयाविप्रानतद्वचनमन्यथा जलधिःक्षारतांनी-
तःपावकःसर्वभक्षनाम् सहस्रनेत्रःशक्रोपिकृतोविप्रैर्महात्मभिः ब्राह्मणानांतुवचनाद्ब्रह्महत्याविनश्यति अश्वमेधफलंसाग्र्यंलभते
नात्रसंशयः व्यासवाल्मीकिवचनात्पराशरवसिष्ठयोः गर्गगौतमधौम्यात्रिवामदेवपुलस्त्ययोः वचनान्नारदादीनांपूर्णंभवतुमेव्रतं एवं
विधिविधानेनगृहीत्वाब्राह्मणोव्रजेत् दातानत्प्रेषयेत्सर्वंब्राह्मणस्यगृहंस्वयं ततःपंचमहायज्ञान्कृत्वावैभोजनादिकं एवंयःकुरुतेभक्त्याव्र-
तमेतन्नरोत्तम तस्यसंपूर्णतांयातितद्व्रतंयत्पुराकृतं खंडंसंपूर्णतांयातिप्रसन्नेव्रतदेवते भग्नानियानिमदमोहवशाद्वहीत्वाजन्मांतरेष्वपि
नरेणसवत्सरेण संपूर्णपूजनपरस्यपुरोभवंतिसर्वव्रतानिपरिपूर्णफलप्रदानि अथसर्वव्रतेषुसामान्यतःपूजाविधिः सहस्रशीर्षेत्यावा-
हनं १ आगच्छागच्छदेवेशतेजोराशेजगत्पते क्रियमाणांमयापूजांगृहाणसुरसत्तम पुरुषएवेदमित्यासनं २ नानारत्नसमायुक्तंकार्तस्वर-
विभूषितं आसनंदेवदेवेशप्रीत्यर्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं ३ गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपा-
द्यार्थंप्रतिगृह्यतां त्रिपादूर्ध्वमर्घ्यं ४ नमस्तेदेवदेवेशनमस्तेधरणीधर नमस्तेकमलाकांतगृहाणार्घ्यंनमोस्तुते तस्माद्विराळित्याचम-

नीरं ५ कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतम् आचम्यतांजगन्नाथमयादत्तंहिभक्तितः यत्पुरुषेणेतिस्नानं ६ गंगाचयमुनाचैवनर्मदाचसरस्व
ती कृष्णाचगोतमीवेणीक्षिप्रासिंधुस्तथैवच तापीपयोष्णीरेवाचताभ्यःस्नानार्थमाहृतं तोयमेतत्सुखस्पर्शंस्नानार्थंप्रतिगृह्यताम् पंचामृ
तस्नानंपंचमंत्रैः ५ पृथक्कुर्यात् तंयज्ञमितिवस्त्रं सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम्
वस्त्रंचसोमदेवत्यंलज्जायास्तुनिवारणम् मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् तस्माद्यज्ञादितियज्ञोपवीतम् दामोदरनमस्तेस्तु
त्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम तस्माद्यज्ञात्सर्वहुतइतिगंधं श्रीखंडचंदनंदिव्यंगंधाढ्यंसुमनोहरम् वि
लेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यतां अक्षताश्चसुरश्रेष्ठाःकुंकुमाक्ताःसुशोभनाः मयानिवेदिताभक्त्यागृहाणपरमेश्वर तस्माद-
श्वेतिपुष्पं माल्यादीनिसुगं० यत्पुरुषंव्यदधुरितिधूपं वनस्पतिरसोद्भू० ब्राह्मणोस्येतिदीपं साज्यंचवर्तिसंयुक्तं० चंद्रमामनसइति
नैवेद्यं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् इदंफलमितिफलं नाभ्याआसीदितितां
बूलं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरादिसमायुक्तंतांबूलंप्रतिगृह्यताम् सप्तास्येतिप्रदक्षिणा हिरण्यगर्भगर्भस्थंहेमबीजं-
विभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यतां
नीराजनं यज्ञेनयज्ञमितिपुष्पांजलिः नमस्तेपुंडरीकाक्षनमस्तेन्ध्रमरप्रिय नमस्तेकमलाकांतवासुदेवनमोस्तुते यानिकानिचपापा
निब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणाः नमःसर्वहितार्थायजगदाधारहेतवे साष्टांगोयंप्रणामोस्तुप्र
णयेनमयाकृतः इतिनमस्कारः इतिसामान्यपूजाविधिः इतिश्रीव्रतराजपरिभाषासमाप्ता अथादौप्रतिपदादितिथिव्रतानिलिख्यंते
मात्स्ये वर्जयित्वामधौयस्तुदधिक्षीरघृतेक्षवं दद्याद्वस्त्राणिसूक्ष्माणिरसपात्रैर्युतानिच रसपात्रैर्दध्यादिपात्रैःसंपूज्यविप्रमिथुनं
गौरीमेप्रीयतामिति हेमाद्रौपाद्मेच अर्चयेच्चैत्रमासेतुयस्तुगंधानुलेपनैः शुक्तिगंधमृतांदद्याद्विप्रायश्वेतवाससी भक्त्यातुदक्षिणांद
द्यात्सर्वकामार्थसिद्धये गंधवस्त्रदानमंत्रः चंदनावासगंधानांसरवेवृंदारकार्चित चंदनत्वंप्रसादेनसांद्रानंदप्रदोभव शरण्यंसर्वलो

कानांलज्जायारक्षणंपरं सुवेषधारिलंयस्माहासःशांतिंप्रयच्छमे इतिमंत्राभ्यांगंधवाससीदद्यात् अथवाचैत्रशुक्लप्रतिपदिसंवत्सरारंभ
विधिर्ब्राह्मे अत्रप्रतिपत्सूर्योदयव्यापिनीग्राह्या श्रीभगवानुवाच चैत्रेमासिजगद्ब्रह्मासससर्जप्रथमेहनि शुक्लपक्षेसमग्रेतुतदासूर्योदये
सति इतिवचनात् दिनद्वयेव्याप्तावव्याप्तौवापूर्वैव वत्सरादौवसंतादौबलिराज्येनथैवच पूर्वविद्धैवकर्तव्याप्रतिपत्सर्वदाबुधैः वसिष्ठवच-
नादितिबहवः युक्तंतुदिनद्वयेउदयसंबंधाभावेसंवत्सरारंभप्रयुक्तकार्यलोपप्रसक्तौयद्वचनंपूर्वयुताग्राह्यताविधायकम् दिनद्व
येतत्संबंधेतुसंपूर्णत्वादेवपूर्वाप्राप्तेःकादाकार्यमित्याकांक्षाविरहात्पूर्वयुतत्वविरहाच्चैवैतद्वचनात् पूर्वैतिब्राह्म्ये प्रवर्तयामासतथा-
कालस्यगणनामपि ग्रहानब्दानृतून्मासान्पक्षान्संवत्सराधिपान् ददौसभगवान्ब्रह्मासर्वदेवसमागते ब्राह्म्यासभायांब्रह्माणमनि
र्देश्यतनुंततः यथोक्तेतेनमस्यंतस्तुवंतश्चाप्युपासते ततस्तेकृतशुश्रूषागत्वाचैवाहिमालयं स्थानिस्थान्यथकर्माणितेनयुक्ताश्चचक्रि
रे ब्राह्मीसभाकामरूपाविशेषेणतदानघ धारयंत्यमलंरूपमनिर्देश्यंमनोहरम् ततःप्रभृतियोधर्मःपूर्वैःपूर्वतरैःकृतः अद्यापिरूढःस्त
तरांसकर्तव्यःप्रयत्नतः तत्रकार्यामहाशांतिःसर्वकल्मषनाशिनी सर्वोत्पातप्रशमनीकलिदुःस्वप्रणाशिनी आयुःप्रदावृद्धिकरीधन
सौभाग्यवर्धिनी मांगल्याचपवित्राचलोकद्वयसुखावहा तस्यामादौतुसंपूज्योब्रह्माकमलसंभवः पाद्यार्घपुष्पधूपैश्चवस्त्रालंकार
भूषणैः होमैर्बलिसूपहारैश्चतथाब्राह्मणभोजनैः ततःक्रमेणदेवेभ्यःपूजाकार्यापृथक्पृथक् कृत्वोंकारवषट्कारौकुशोदकतिलाक्षतैः पु
ष्पधूपप्रदीपाद्यैर्भोजनैश्चयथाक्रमं मंत्रंसंपूजनार्थंतुब्रह्मरूपंपरिस्पृशेत् मंत्रमितिधातावेत्येकवचनम् बहुरूपंमंत्रंनानारूपान्मंत्रा
न्परिस्पृशेत् परिगृण्हीयादित्यर्थः तेन ॐनमोब्रह्मणइत्यादिविष्णवेपरमात्मनेनमइत्येवंमंत्रवाक्यवृंदोयात्रादेवताशब्दाश्चतुर्थ्यंताःप्र
णवादयोनमोंतामंत्रत्वेनग्राह्याः प्रार्थनामंत्राः ॐनमोब्रह्मणेतुभ्यंकामायचमहात्मने नमस्तेस्तुनिमेषायत्रुटयेचनमोस्तुते ल
वायच्चनमस्तुभ्यंनमस्तेस्तुक्षणायच नमोनमस्तेकाष्ठायैकलायैनेनमोस्तुते नाडिकायैसुषुम्नायैमुहूर्तायैनमोनमः नमोनिशाभ्यःपु
ण्येभ्योदिवसेभ्यश्चनित्यशः पक्षाभ्यांचाथमासेभ्योऋतुभ्यश्चनमोनमः अष्टाविंशतिसंख्येभ्योनक्षत्रेभ्योनमोनमः प्रतिवर्षाधिपेभ्यश्च

विज्ञातेभ्योनमःसदा नमोस्तुकुलनागेभ्योसानुयात्रेभ्यएवच सानुयात्रेभ्यःसानुचरेभ्यः नमोस्तुसर्वदिग्भ्यश्चदिक्पालेभ्योनमोनमः
नमःपुरंदरेभ्यश्चतत्संख्येभ्योनमोनमः पंचाशतेनमोनित्यंदक्षकन्याभ्यएवच नमोदेव्यैस्वभद्रायैजयायैचाथसर्वदा स्वशास्त्रायन
मस्तुभ्यंसर्वस्त्रिजनकायच नमस्तेबहुपुत्राय पत्नीभिःसहितायच नमोबुध्यैतथावृध्यैनिद्रायैधनदायच नमःकुबेरपुत्रायगुह्यकस्वा
मिनेनमः नमोस्तुशंखपद्मेभ्योनिधिभ्योमेयनित्यशः भद्रकाल्यैनमस्तुभ्यंसुरभ्यैचनमोनमः वेदवेदांगवेदांतविद्यासंस्थेभ्यएवच नागय
क्षसुपर्णेभ्योनमोस्तुगरुडायच सप्तभ्यश्चसमुद्रेभ्यःसागरेभ्यश्चसर्वदा उत्तरेभ्यःकुरुभ्यश्चनमोमेरुगतायच भद्राश्वकेतुमालेभ्योनमःस
र्वत्रसर्वदा इलावृतायचनमोहरिवंशायचैवहि नमःकिंपुरुषेभ्यश्चभरतायनमोनमः नमोभारतभेदेभ्योमहद्भ्यश्चाथसर्वदा पातालेभ्यश्च
सप्तभ्योनरकेभ्योनमोनमः कालाग्निरुद्रशेषेभ्योहरयेक्रोधरूपिणे सप्तभ्यस्त्वथलोकेभ्योमहाभूतेभ्यएवच नमःसंबुद्धयेचैवनमःप्रकृत
येतथा पुरुषायाभिमानाय नमोस्तुव्यक्तमूर्तये हिमवत्प्रमुखेभ्यश्चपर्वतेभ्योनमस्त्वथ पौराणीभ्यश्चगंगाभ्यःसप्तभ्यश्चनमोनमः नमो-
स्त्वादिमुनिभ्यश्चसप्तभ्यश्चाथसर्वथा नमोस्तुपुष्करादिभ्यस्तीर्थेभ्यश्चपुनःपुनः निम्नगाभ्योनमोनित्यंवितस्तादिभ्यएवच चतुर्दशभ्यो
दीर्घेभ्योधरणीभ्योनमोनमः नमोधात्रेविधात्रेचछंदोभ्यश्चनमोनमः स्वरभ्यैरावणाभ्यांचनमोभूयोनमोनमः नमस्तथोच्चैःश्रवसेध्रुवाय
चनमोनमः नमोस्तुधन्वंतरयेशस्त्रास्त्राभ्यांनमोनमः विनायककुमारायविद्याभ्यश्चनमःसदा शाण्डायचविशाखायनैगमेयायचैनमः
नमःस्कंदग्रहेभ्यश्चस्कंदमातृभ्यएवच ज्वरायरोगपतयेभस्मप्रहरणायच ऋषिभ्योवालखिल्येभ्यःकेशवायनमःसदा अगस्त्ययेनारदा
यव्यासादिभ्योनमोनमः अप्सरोभ्यःसोमपेभ्योदेवेभ्यश्चनमोनमः असोमपेभ्यश्चनमस्तुषितेभ्योनमःसदा आदित्येभ्योनमोनित्यंद्वादशभ्य
श्चसर्वदा एकादशभ्योरुद्रेभ्यस्तपस्विभ्योनमोनमः नमोनासत्यदस्राभ्यामश्विभ्यांनित्यमेवहि साध्येभ्योद्वादशभ्यश्चपौराणेभ्योनमः
सदा एकोनपंचाशतेभ्योमरुद्भ्यश्चनमोनमः शिल्पाचार्यायदेवायनमस्तेविश्वकर्मणे अष्टभ्योलोकपालेभ्योसानुगेभ्यश्चसर्वदा आयुधेभ्यो
वाहनेभ्योचर्मभ्यश्चनमःसदा आसनेभ्योदुंदुभिभ्योदेवेभ्यश्चनमःसदा दैत्यराक्षसगंधर्वपिशाचेभ्यश्चनित्यशः पितृभ्यःसमभेदेभ्योप्रेतेभ्यश्चनमः

सदा स्कसूर्येभ्यश्चदेवेभ्योभावगम्येभगवन्नमस्तेबहुरूपायविष्णवेपरमात्मने अथकिंबहुनोक्तेनमंत्रेणानेनवार्चयेत् प्राङ्मुखोदङ्मुखो-
विप्रान्देवानुद्दिश्यपूर्ववत् अथवाकिमत्रविस्तरेणब्राह्मणानेवदेवतोद्देशेनपूजयेदित्यर्थः पूर्ववन्मंत्रोक्तक्रमेणअर्घैःपुष्पैश्चधूपैश्चवस्त्रमा
ल्यैःसुलक्षकसरामंसमर्चयेदित्यर्थः धनधान्यान्विभवैर्दक्षिणाभिश्चसर्वदा इतिहासपुराणानांप्रवक्तॄंश्चद्विजोत्तमान् कालज्ञान्वेद
वेदज्ञान्भृत्यान्संबंधिबांधवान् अनेनैवतुमंत्रेणस्वाहांतेनपृथक्पृथक् प्रतिष्ठायाग्नयेहोमःकर्तव्यःसर्वतृप्तयेवेदविच्चस्कषीदत्वास्था
नेप्राधानिकेसदा प्रतिष्ठाप्यश्चशावेदविद्दोक्तविधिज्ञः मदनरत्नेतुवेदवित् इतिपठित्वा वेदोक्तविधिनेतिव्याख्यानम् चक्षुषीआज्यभागो
प्राधानिकेस्थाने प्रधानहोमारंभेहोमारंभेननःकुर्यान्मंगलालंभनंनरः मदनरत्ने शालशोभांततःकुर्यान्मंगलालंभनंततः इतिपठेत् भोजयि
त्वाद्विजान्सर्वान्सुहृत्संबंधिबांधवान् विशेषेणचभोक्तव्यंकार्यश्चापिमहोत्सवः नवसंवत्सरारंभःसर्वसिद्धिप्रवर्तकः इतिसंवत्सरारंभ-
विधिः अथअत्रैवविष्णुधर्मोत्तरोक्तआरोग्यप्रतिपद्व्रतम् पुष्कर उवाच संवत्सरावसानेतुपंचदश्यामुपोषितः प्रातःप्रतिपदिस्नातःकु-
र्याद्व्रतमनन्यधीः पूजयेद्भास्करंदेवंवर्णकैःकमलेकृते वर्णकैरक्तनीलश्वेतपीतादिभिः शङ्खेनगंधमाल्येनचंदनेनासितेनच तथाकुंदुरुधू
पेनहृत्तदीपेनभार्गव कुंदुरुःसल्लकीनिर्यासः अपूपैःसैकतैर्दध्नापरमान्नेनभूरिणा सैकतैःशर्कराविकारैः ओदनेनचभक्तेनसतालव
णसर्पिषा सताउत्तमेन क्षीरेणचफलैःशुक्लैर्बहुब्राह्मणतर्पणैः पूजयित्वाजगद्धामदिनभागेचतुर्थके आहारंप्रथमंकुर्यात्सघृतंम
नुजोत्तम सर्वंचमनुजश्रेष्ठघृतहीनंविसर्जयेत् भुक्त्वासकलदेवान्नमाहारंचसमाचरेत् पानीयपानंकुर्वीतब्राह्मणानुमतेपुनः प्रथमंआ-
हारंप्रथमग्रासम् सर्वंप्रथमंचआहारं एकमेवग्रासंभक्षयित्वाऽवशिष्टमन्नंत्यजेत् ब्राह्मणानुमत्याभुंजानोपिघृतहीनंनभुंजीत घृतहीनंवि
वर्जयेदितिनिषेधात् संवत्सरमिदंकृत्वाततःश्वस त्रयोदशे पूजनंदेवदेवस्यतस्मिन्नहनिभार्गव संवत्सरशुक्लप्रतिपत्सत्रयोदशामितिलिंगदर्शना
त् सवस्त्रंसहिरण्यंचततोदद्याद्द्विजातये पूजनंपूजोपकरणं प्रतिपद्व्रतेनानेनधर्मज्ञरोगमेवंव्यपोहति आरोग्यमाप्नोतिगतिंतथाग्र्यांयशस्तथाग्र्यं
विपुलांश्चभोगान् व्रतेनसम्यक्पुरुषोथनारीसंपूजयेद्यस्तुजगत्प्रधानम् जगत्प्रधानंसूर्यम् इतिचैत्रशुक्लप्रतिपदिआरोग्यदायकव्रतम् अ

स्यामेवोक्तंविद्याव्रतम् मदनरत्ने विष्णुधर्मे मार्कंडेयउवाच अष्टपत्रंतुकमलंविन्यसेद्वर्णकैःशुभैः ब्रह्माणंकर्णिकायांतुतस्यसंपूजयेद्वि
भुम् ऋग्वेदंपूर्वपत्रेतुयजुर्वेदंतुदक्षिणे पश्चिमेसामवेदंतुउदक्चाथर्वणंतथा आग्नेयेचतथांगानिधर्मशास्त्राणिनैर्ऋते पुराणंचैववायव्ये
ईशान्यांन्यायविस्तरं एवंविन्यस्यधर्मज्ञःसोपवासस्तुपूजयेत् चैत्रशुक्लमथारभ्यसोपवासोजितेंद्रियः सदाप्रतिपदंप्राप्यशुक्लपक्षस्ययादव सं
वत्सरंमहाराजशुक्लगंधानुलेपनैः भूषणैःपरमान्नेनधूपदीपैरतंद्रितः संवत्सरांतेगांदद्याद्वृतेजीर्णेनरोत्तम इदंव्रतंयस्तुकरोतिराजन्सवेदवि
त्स्यात्सुविधर्मनिष्ठः कृत्वासदाद्वादशवत्सराणिविरिंचिलोकंपुरुषःप्रयाति इतिविद्याप्रतिपद्व्रतम् अथात्रैवभविष्योक्तंतिलकव्रतम् श्री
कृष्णउवाच वसंतेकिंशुकाशोकशोभितेप्रतिपत्तिथिः शुक्लातस्यांप्रकुर्वीतस्नानंनियममाश्रितः नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः नद्या
स्तीरेतडागेवागृहेवानदलाभतः पिष्टातकेनविलिखेद्वत्सरंपुरुषाकृतिं पिष्टातकः पटवासकोगंधः इतिचूर्णविशेषः ततश्चंदनचूर्णैनपुष्प
धूपादिनार्चयेत् मासर्तुनामभिःपश्चान्नमस्कारैस्तथार्चितैः मासर्तुनामभिश्चैत्रवसंताद्यैश्चनामभिः पूजयेद्ब्राह्मणोविद्वान्मंत्रैर्वेदोदि
तैःशुभैः संवत्सरंपठन्मंत्रंतथावेदोदितंद्विजः नमस्कारेणमंत्रेणशूद्रोपीत्थंप्रपूजयेत् शूद्रोपीत्यनेनस्त्रीणांपरिग्रहः तासांविशेषवि
त्स्यभावेवैदिकमंत्राधिकारात् संवत्सरोसिपरिवत्सरोसीत्यादियजुर्वेदप्रसिद्धामंत्राः नमस्कारेणमंत्रेणसंवत्सरायतेनमइत्यादिनाए
वमभ्यर्च्यवासोभिःपश्चात्तमभिवेष्टयेत् कालोद्भवैर्मूलफलैर्नैवेद्यैर्मोदकादिभिः ततस्तंपूजयेत्पार्थपुरस्थित्वाकृतांजलिः भगवंस्त्वत्प्रसा
देनवर्षंक्षेममिहास्तुमे संवत्सरोपसर्गामेविलयंयांत्वशेषतः एवमुक्त्वायथाशक्त्यादत्वाविप्रायदक्षिणाम् ललाटपट्टेतिलकंकुर्याच्चंद
नपंकजं ततःप्रभृत्यनुदिनेतिलकालंकृतंमुखं धार्यंसंवत्सरंयावच्छशिनेवनभस्तलं एवंनरोवानारीवाव्रतमेतत्समाचरेत् सदैवपुरुषव्या
घ्रभोगान्भुविभुनक्त्यसौ भूतप्रेतपिशाचाद्यैर्दुर्वारावैरिणोग्रहाः निरर्थकाःभवंत्येतेतिलकंवीक्ष्यतत्क्षणात् निरर्थकाःप्रयोजनशून्याः अनि
ष्टकरणेअसमर्थाइत्यर्थः अत्रवसंतेप्रतिपत्तिथिः शुक्लातस्यांप्रकुर्वीतेतिवसंतशुक्लाप्रतिपद्ग्राह्या नयाव्रतमिदंचैत्रेगृहीतेद्विजसन्नि
धौ इत्यग्रेनेनचैत्रस्यैवेतिज्ञायते पूर्वमासीन् महीपालोनाम्नाशत्रुंजयोजयी चित्रलेखेतितस्याभूद्भार्याचातिविभूषणातयाव्र

तमिदंभक्त्यागृहीतंद्विजसन्निधौ वत्सरंपूजयित्वातुध्यात्वादेवंजनार्दनम् हेतुंवासेयंकामोवासमागच्छतियःपुनः प्रयातिसप्रियंकृत्वाहृष्ट्वा
तुतिलकंनरः सपत्नीहर्षप्रहरावशीकृतमहीतला भर्तृदृष्टाप्रहृष्टास्यासुरवमास्तेनिराकुला पावकेनाभिभूतस्तुभर्तापुत्रःससेदनः शिरोर्ति
नासंप्रयातःसद्गुदासकृत्वदायकः शिरोर्तिनाशिरोवेदनायुक्तः धर्मराजपुरींप्राप्तःसर्वतापकरींततः तस्मिन्क्षणेमहाराजधर्मराजस्यकिंकराः
तस्याद्वारमनुप्राप्ताःप्रविष्टागृहमंजसा शत्रुंजयंसमानेतुंकालमृत्युपुरःसराः पार्श्वेस्थितांचित्रलेखांतिलकालंकृताननाम् दृष्ट्वाप्रनष्टसं
कल्पाःपरावृत्यगताःपुनः गतेषुतेषुसनृपःपुत्रेणसहभारत भूभुजांबुभुजेभोगान्पूर्वकर्मार्जितांच्छुभान् अक्रूरेणसमाख्यातंममपू
र्वंयुधिष्ठिर एतत्त्रिलोकतिलकाख्यविभूषितंचपुण्यप्रदंसकलदुष्टहरंपरंच इत्थंसमाचरतियःसस्रवंविहृत्यमर्त्यःप्रयातिपदमच्युत
मिंदुमौलेः इतितिलकव्रतं अस्यामेवनवरात्रारंभः तत्रपरयुताग्राह्या अमायुक्तानकर्तव्याप्रतिपच्चंडिकार्चने मुहूर्तमात्राकर्तव्याद्वितीया-
यांगुणान्विता अत्रैवप्रपादानमुक्तं अतीतेफाल्गुनेमासिप्राप्तेचैवमहोत्सवे पुण्येन्हिविप्रकथितेप्रपादानंसमारभेत् ततश्चोत्सर्जयेद्विद्वा
न्मंत्रेणानेनमानवः प्रपेयंसर्वसामान्यभूतेभ्यःप्रतिपादिता अस्याःप्रदानात्पितरस्तृप्यंतुहिपितामहाः अनिवार्यंततोदेयंजलंमासचतुष्ट-
यं प्रपादातुमशक्तेनविशेषाद्धर्ममीप्सुना प्रत्यहंधर्मवटकोवस्त्रसंवेष्टिताननः ब्राह्मणस्यगृहेदेयःशीतामलजलःशुचिः एषधर्मघटोदत्तो
ब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्सकलाममसंतुमनोरथाः अनेनविधिनायस्तुधर्मकुंभंप्रयच्छति प्रपादानफलंसोपिप्राप्नोतीहनसंशयः
इतिप्रपादानं अथश्रावणशुक्लप्रतिपदिसोमवारमारभ्याचारप्राप्तरोटकव्रतं अथसर्वशिवव्रतेषुपूजाविधिः ममेहजन्मनिसमस्तसौभाग्य
प्राप्त्यर्थंधनपुत्रप्राप्तिकामःसार्द्धमासत्रयात्मकंरोटकाख्यंसोमेश्वरप्रीत्यर्थंबिल्वव्रतंकरिष्ये तत्रसोमेश्वरपूजनम् कार्तिकशुक्लचतुर्दश्यांउद्या
पनम् मयाआनुष्ठितस्यसार्द्धमासत्रयात्मकबिल्वव्रताख्यस्यकर्मणःसांगतासिध्यर्थंबिल्वरोटकाख्यव्रतोद्यापनंकरिष्ये तंदुलैरष्टदलंकृत्वा
तत्रसप्तमातॄर्लोकपालांश्चपूजयेत् मध्येसोमेश्वरम् आयाहिभगवन्शंभोशर्वत्वंगिरिजापते प्रसन्नोभवदेवेशनमस्तुभ्यंहिशंकर
त्रिपुरांतकरंदेवंचंद्रचूडंमहाद्युतिं गजचर्मपरीधानंसोममावाहयाम्यहं आवाहनं बंधूकसन्निभंदेवंत्रिनेत्रंचंद्रशेखरं त्रिशूलधारिणंदेवं

चारुहासंस्फुनिर्मलम् कपालधारिणंदेवंवरदाभयहस्तकं उमयासहितंशंभुंध्यायेत्सोमेश्वरंसदा ध्यानं विश्वेश्वरमहादेवराजराजेश्वरप्रिय
आसनंदिव्यमीशानदास्येहंतुभ्यमीश्वर आसनं महादेवमहेशानमहादेवपरात्पर पाद्यंगृहाणमद्दत्तंपार्वतीसहितेश्वर पाद्यं त्र्यंबकेशसदा
चारजगदादिविधायक अर्घ्यंगृहाणदेवेशसांबसर्वार्थदायक अर्घ्यं त्रिपुरांतकदीनार्त्तिनाशश्रीकंठशाश्वत गृहाणाचमनीयंचपवित्रो
दककल्पितं आचमनीयं क्षीरमाज्यंदधिमधुशर्कराचामृतंपयः प्रकल्पितंमयोमेशगृहाणेदंजगत्पते पंचामृतं गंगागोदावरीरेवाप-
योष्णीयमुनातथा सरस्वत्यादितीर्थानिस्नानार्थंप्रतिगृह्यतां स्नानं वस्त्राणिपट्टकूलानिविचित्राणिनवानिच मयानीतानिदेवेशप्रस
न्नोभवशंकर वस्त्रं सौवर्णराजतंताम्रंकार्पासस्यतथैवच उपवीतंमयादत्तंप्रीत्यर्थंप्रतिगृह्यतां उपवीतं सर्वेश्वरजगद्वंद्यदिव्यासनसम
स्थित गंधंगृहाणदेवेशचंदनंप्रतिगृह्यतां गंधं गंधोपरिशुक्लाक्षतान् अक्षताश्चसुरश्रेष्ठाःशुभ्राधूताश्चनिर्मलाः मयानिवेदिताभक्त्या-
गृहाणपरमेश्वर अक्षतान् माल्यादीनिसुगंधीनि॰पुष्पाणि वनस्पति॰धूपं आज्यंचेतिदीपं अपूपानिचपक्वानिमंडकावटकानिच पाय
संसूपमन्नंचनैवेद्यंप्रतिगृह्यतां नैवेद्यं मध्येपानीयं करोद्वर्तनं कूष्मांडमातुलिंगंचनारीकेरफलानिच गृहाणपार्वतीकांतसोमेशप्रतिगृ
ह्यतां फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणा अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिर्नारायणोविभुः नीराजयामिदेवेशंपंचदीपैःसु
रेश्वरं नीराजनं हेतवेजगतामेवसंसारार्णवसेतवे प्रभवेसर्वविद्यानांशंभवेगुरवेनमः नमस्कारः यानिकानिचेतिप्रदक्षिणा हरविश्वा
खिलाधारनिराधारनिराश्रय पुष्पांजलिंगृहाणेशसोमेश्वरनमोस्तुते पुष्पांजलिं बिल्वपत्रंसुवर्णेनत्रिशूलाकारमेवच मयार्पितंतुतु
च्छंभोबिल्वपत्रंगृहाणमे बिल्वपत्रार्पणम् अथकथा युधिष्ठिरउवाच हृषीकेशमयाकारिव्रतदानान्यनेकधा श्रोतुमिच्छामिदेवेश
व्रतंसंपत्तिदायकम् येनव्रतेनदेवेशपुराराज्यंलभामहे तथाव्रतंतुमेब्रूहियादवानांकृपाकर श्रीभगवानुवाच वदामिशृणुभद्रंपार्थल
क्ष्मीवृद्धिप्रदायकम् धर्मार्थकाममोक्षाणांनिदानपरमंव्रतम् युधिष्ठिरउवाच येनचादौपुराचीर्णंमर्त्येकेनप्रकाशितम् विधिनाकेन
कर्तव्यंतत्सर्वंब्रूहिकेशव श्रीभगवा॰ आसीत्सौम्यपुरेराजासोमनामेतिविश्रुतः क्षात्रधर्मेतिकुशलःप्रजापालनतत्परः तस्यराज्येप्रजाः

सौम्याःसर्वधर्मपरायणाः तस्यराज्ञस्तुचामात्यःसोपिसौम्यःशुभावहः तस्मिन्पुरस्तुसौम्यंचसदासौम्यांबुनापुनम अभूत्सोमेश्वरोदेवोलोका
नांपालनायच तत्राभवत्सोमशर्माब्राह्मणोवेदपारगः वेदार्थविच्छास्त्रविच्चशुद्धाचारोतिदुर्लभः तस्यभार्याशुभाचारापुरंध्रीचारुभाषि-
णी भर्तृशुश्रूषणरताकल्याणीप्रियवादिनी सोकरोच्चकुटुंबार्थंकणयज्ञांदिनेदिने नलभ्यतेधिकंतेनधनंधान्यंतथैवच अतीवखेदखि
न्नस्तुविचार्यचपुनःपुनः किंकरोमिक्वगच्छामिसभार्योहंमहीतले केनकर्मविपाकेनकीदृशंलभ्यतेफलम् अथवार्थकरंधर्मंदेवपू-
जादिकंशुभं ससोमेशेकरोद्भक्तिंदैत्यनाशायपार्थिव कदाचिदतिखिन्नःसन्सजगामसरोवरम् अभूत्सोमेशःप्रत्यक्षस्तस्मिन्सौम्यस
रोवरे वृद्धब्राह्मणरूपेणकृपयापरयायुतः तेनासौदुःखितोदृष्टःसोमशर्माद्विजोत्तमः किमर्थंक्रियतेदुःखंत्वयाविद्यावरेणच किंचित्कृतं
नास्तिपूर्वंतदर्थमीदृशीदशा तस्यतद्वचनंश्रुत्वाब्राह्मणस्त्विदमब्रवीत् भोभोविप्रवरश्रेष्ठव्रतमेकंवदामिते तेनादिष्टंव्रतंचेदपूर्णसंपत्तिदायकं
सोमशर्माउ० भोभोब्राह्मणशार्दूलव्रतंतद्वदमेप्रभो यस्यानुष्ठानमात्रेणलक्ष्मीवृद्धिःप्रजायते कस्मिन्मासेचकर्तव्यंकिंदानंकस्यभोजनं धनला
भायकर्तव्यंकस्यदेवस्यपूजनं कैस्तुपुष्पैःप्रकर्तव्यापूजाचारुतराशुभा नैवेद्यंकीदृशंदेयंअर्घ्यंकैस्तुफलैर्भवेत् यदितुष्टोसिविप्रेंद्रतत्सर्वंब्रूहिमे
प्रभो ब्राह्मणउ० साधुत्वयाविप्रदृष्टंव्रतंवृद्धिप्रदायकं विधानंतस्यवक्ष्यामिसर्वसिद्धिप्रदायकं श्रावणेचासितपक्षेप्रथमेसोमवासरे प्रक-
र्तव्यंव्रतंविप्रशुभंनियमपूर्वकं सार्द्धमासत्रयंविप्रकर्तव्यंविधिपूर्वकं बिल्वपत्रैरखंडैश्चपूजनंचदिनेदिने पंचसप्तत्रिभिश्चैवपूजनंविधि
पूर्वकं परिपूर्णंतुकर्तव्यंचतुर्दश्यांतुकार्तिके व्रतारंभेतुकर्तव्योनियमस्तुविचक्षणैः अद्यारभेव्रतंदेवरोटकाख्यमनोहरं करोमिपरयाभ-
क्त्यापाहिमांजगतांगुरो दिनेदिनेप्रकर्तव्यापूजादेवस्यशूलिनः कथांविनानभोक्तव्यंप्रत्यहंचपुनःपुनः उपोषणंचचतुर्दश्यांकर्तव्यं
विधिपूर्वकम् शुचिर्भूत्वादिनेतस्मिन्कर्तव्यंरोटकाव्रतं अथउपोषणप्रार्थनामंत्रः चतुर्दश्यांनिराहारःस्थित्वाचैवपरेहनि भोक्ष्या
मिपार्वतीनाथसर्वसिद्धिप्रदायक कृत्वामाध्यान्हिकंकर्मस्थापयेद्व्रणंघटम् पंचरत्नसमायुक्तंपुष्पादिभिरलंकृतम् वेष्टितंश्वेतवस्त्रेण
सर्वाभरणभूषितम् तस्योपरिन्यसेत्पात्रंताम्रंचैवाथवैणवं विरच्याष्टदलंतत्रपूजयेदुमयाशिवं कृत्वासायान्हिकंकर्मनित्यपूजादिकंतथा

तस्यांरात्रौतुकर्तव्यापूजादेवस्यशूलिनः शुभेचैवप्रदेशेतुकर्तव्यःपुष्पमंडपः पूज्यस्तत्रशिवोदेवोधर्मकामार्थसिद्धये क्षीरादिस्नापनंकु
र्य्याच्चंदनादिविलेपनं कृष्णागरुंचकर्पूरमृगनाभि मिश्रितम् पुष्पैर्नानाविधैरम्यैःपूज्योदेवोमहेश्वरः धनकामेनकर्तव्यापूजादेवस्यशू
लिनः बिल्वपत्रैरखंडैश्चतुलसीपत्रकैस्तथा नीलोत्पलैश्चारुतरैःकर्तव्यापुण्यवर्धिनी कल्हारकमलैश्चैवकुमुदैश्चातिशोभनैःचंपकै
र्मालतीपुष्पैर्मुचुकुंदैःशुभावहैः मंदारैश्चार्कपुष्पैश्चपूजार्हैश्चशिवप्रियैः अन्यैर्नानाविधैःपुष्पैर्ऋतुकालोद्भवैस्तथा धूपैर्नानाविधैः
पार्थपुण्यवर्द्धनसाधकैः दीपास्तत्रप्रकर्तव्याघृतपूर्णामनोरथाः लेह्यपेयैस्तथाभोज्यैःस्वादुभिश्चशिवप्रियैःअन्यैर्नानाविधैरम्यैस्त
थाविप्रवरैस्ततः नैवेद्यंतुप्रकुर्वीतरोटकानांविशेषतः कर्तव्यारोटकाःपंचपुरुषाहारमानकाः शालितंदुलपिष्टेनसमभागेनवापुनः द्वौ
तुविप्रायदातव्यौद्वाभ्यांवैभोजनंशुभम् एकोदेवायदातव्योनैवेद्यार्थंसदाबुधैः महेशायचदातव्यंतांबूलंशुभमनोहरं अर्घ्यदानंप्रकर्त-
व्यंधनसंपत्तिदायकं पनसंनारिकेरंचपूगीजंबीरपूरकं खर्जूरीचशुभाद्राक्षामातुलिंगंमनोहरं अक्षोडानिचदाडिंबंनारिंगानिशुभानिच
कर्कटीचशुभाप्रोक्ताअर्घ्यदानेमनोहरा अन्यैर्नानाविधैःपार्थऋतुकालोद्भवैःशुभैः यःकरोत्यर्घ्यदानंचतस्यपुण्यंवदाम्यहं इलांचसागरैर्युक्तां
रत्नैश्चान्यैर्मनोहरैः दत्वायत्फलमाप्नोतितेननत्फलमाप्नुयात् अनेनैवविधानेनतत्कार्यंव्रतसिद्धये पंचवर्षंतुकर्तव्यमतुलंधनमीप्सुभिः पश्चा
दुद्यापनंकुर्याद्रोटकाख्यव्रतस्यच उद्यापनेतुकर्तव्योहेमरूप्योनुरोटकौ बिल्वपत्रंसुवर्णस्यसोमेशप्रीतयेशुभं रात्रौजागरणंकुर्यात्पूज्योदे
वोमहेश्वरः पूर्णेनविधिनाविप्रकर्तव्यंचशिवप्रियं दारिद्र्यनाशनंपुण्यलक्ष्मीवृद्धिप्रदायकं कर्तव्यंविधिवद्भक्त्याश्रोतव्यंतुकथानकं गीतवा
द्यादिसहितंकुर्याज्जागरणंनिशि ततःप्रभातेविमलेस्नात्वापूजांसमापयेत् पूर्वोक्तविधिनानेनकर्तव्यंशिवपूजनं तत्सर्वंदापयेद्भक्त्याब्रा-
ह्मणायकुटुंबिने विप्रायवेदविदुषेवस्त्रालंकारभोजनैः गुरुंसपत्निकंपूज्यततोभक्त्याक्षमापयेत् यन्मयाकृतसंकल्पोव्रतेस्मिन्ब्राह्मणप्र
भो तत्सर्वंपूर्णतांयातुयुष्मद्दृष्टिविलोकनात् एवंयःकुरुतेपार्थशास्त्रोक्तंरोटकाव्रतं अनायासेनसिध्यंतिवद्यद्याःसर्वेमनोरथाः सभर्तृकामहा
नारीकरोतिविधिवद्व्रतं पतिव्रतासाकल्याणीजायतेनात्रसंशयः मयाअनुष्ठितस्यसार्द्धमासत्रयात्मकस्यबिल्वव्रताख्यस्यकर्मणःसांगता-

सिध्यये ब्राह्मणाय एतद्वायनप्रदानंकरिष्ये ब्राह्मणंसंपूज्य विप्रायवेदविदुषेश्रोत्रियायकुटुंबिने नरकोत्तारणार्थायशंकरःप्रीयतांनमः इति
दानमंत्रः इतिशिवपुराणेबिल्वरोटकसोमनाथव्रतकथोद्यापनम् अथाश्विनशुक्लप्रतिपदिदौहित्रेणमातामहश्राद्धंकार्यं तदुक्तंहेमाद्रौ
जातमात्रोपिदौहित्रोजीवत्यपिचमातुले कुर्यान्मातामहश्राद्धंप्रतिपद्याश्विनेसिते इयञ्चसंगवव्यापिनीग्राह्येतिनिर्णयदीपेउक्तम् प्रतिपद्या
श्विनेशुक्लेदौहित्रस्त्वेकपार्वणम् श्राद्धंमातामहंकुर्यात्सपितासंगवेसति जातमात्रोपिदौहित्रोजीवत्यपिहिमातुले प्रातःसंगवयोर्मध्येया
श्वयुक्प्रतिपद्भवेत् अत्रापिताइतिविशेषणात्जीवत्पितृकएवाधिकारी अतएवपिंडरहितंकुर्यात् मुंडनंपिंडदानंचप्रेतकर्मचसर्वशः नजी
वत्पितृकःकुर्याद्गुर्विणीपतिरेवच अत्रैवनवरात्रारंभः तत्रपरविद्धाग्राह्या तदुक्तंगोविंदार्णवेमार्कंडेयपुराणदेवीपुराणयोः पूर्वविद्धातुया
शुक्लाभवेत्प्रतिपदाश्विनी नवरात्रव्रतंतस्यांनकार्यंशुभमिच्छता देशभंगोभवेत्तत्रदुर्भिक्षंचोपजायते नंदायांदर्शयुक्तायांयत्रस्यान्
मंत्रपूजनं तथादेवीपुराणे नदर्शकलयायुक्ताप्रतिपच्चंडिकार्चने उदयेद्विमुहूर्तापिग्राह्यासोदयकारिणी यदापूर्वदिनेशुद्धाभूत्वापर
दिनेपिच वर्धतेचतदाभूत्वासंपूर्णत्वादमांविना यानितुद्वितीयायोगनिषेधपराणिवचनानिश्रुतानितानिश्राद्धादिपराण्येव परदिनेप्र
तिपदोसत्वेतु अमायुक्तापिग्राह्या अमायुक्ताप्रकर्तव्येतिनृसिंहप्रसादोदाहृतवचनान्यपिएतद्विषयाण्येव अत्रदेवीपूजाप्रधानं अष्ट
म्यांचनवम्यांचजगन्मातरमंबिकां पूजयित्वाश्विनेमासिविशोकोजायतेनरः यतीचब्रह्मचारीचविधवाचरजस्वला नवरात्रंचोपवासमेक
भक्तमयाचितं चैत्रावैधृतियुक्ताचेत्प्रतिपच्चंडिकार्चने तयोरंतेविधातव्यंकलशस्थापनंध्रुवं प्रतिपद्याश्विनेमासिभवेद्वैधृतिचित्रयोः
आद्यपादौपरित्यज्यप्रारंभेन्नवरात्रकं चित्रावैधृतिसंयुक्ताप्रतिपत्तुभवेन्नृप वैधृत्यावापियुक्तास्यात्तदामध्यंदिनेरवौ त्याज्याअंशास्त्र
यस्त्वाद्यास्तुरीयांशेतुपूजनम् नरात्रौस्थापनंकार्यंनचकुंभाभिषेचनम् भास्करोदयमारभ्ययावत्तुदशनाडिकाः प्रातःकालइति
प्रोक्तःस्थापनारोपणादिषु आद्याःषोडशनाडीस्तुत्यक्त्वायःकुरुतेनरः कलशस्थापनंतत्रअरिष्टंजायतेध्रुवं वृद्धौसमाप्तिरष्टम्यांह्रासे २०
नप्रतिपन्निशि प्रारंभोनवचंड्यास्तुनवरात्रमतोर्थवत् तिथिवृद्धौतिथिह्रासेनवरात्रमपार्थकं घटस्थापनविधिः प्रतिपदिप्रातरभ्यंग

कृत्वादेशकालौसंकीर्त्यममेहजन्मनिदुर्गाप्रीतिद्वारासर्वापच्छांतिपूर्वकदीर्घायुर्विपुलधनपुत्रपौत्राद्यनवच्छिन्नसंततिवृद्धिस्थिरलक्ष्मीकी
र्तिलाभशत्रुपराजयसदभीष्टसिद्ध्यर्थंशारदनवरात्रप्रतिपदिविहितंकलशस्थापनंदुर्गापूजाकुमारीपूजादिकरिष्ये इतिसंकल्प्य तदंगं
गणपतिपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंकलिग्वरणंचकरिष्ये ततोमहीद्यौरितिभूमिंस्पृष्ट्वा ओषधयःसंवदंतेइतियवान्
निक्षिप्य आकलशेष्वितिकुंभंसंस्थाप्य इमंमेगंगेतिजलेनापूर्य गंधद्वारामितिगंधं ओषधयइतिसर्वौषधीः कांडात्कांडादितिदूर्वाःअश्व
त्थेवइतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलं सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यंक्षिप्त्वा युवा
सुवासाइतिवस्त्रेणसूत्रेणवावेष्ट्य पूर्णादर्वीतिपूर्णपात्रंकलशोपरिनिधाय तत्रवरुणंचसंपूज्य जीर्णायांनूतनायांवाप्रतिमायांदुर्गा
मावाह्यपूजयेत् नूतनमूर्तिकरणेग्न्युत्तारणंकुर्यात् अथपूजा आगच्छवरदेदेविदैत्यदर्पनिषूदनि पूजांगृहाणसुमुखिनमस्तेशंक
रप्रिये सर्वतीर्थमयंवारिसर्वदेवसमन्वितं इमंघटंसमागच्छतिष्ठदेविगणैःसह दुर्गादेविसमागच्छसान्निध्यमिहकल्पय बलिंपू
जांगृहाणत्वमष्टभिःशक्तिभिःसह इतिआवाह्य शंखचक्रगदाहस्तेशुभ्रवर्णेशुभासने ममदेविवरंदेहिसर्वैश्वर्यप्रदायिनि सह
स्रशीर्षा० हिरण्यवर्णां० आवाहनं नानाप्रभासमाकीर्णंनानावर्णविचित्रितं आसनंकल्पितंदेविप्रीत्यर्थंतवगृह्यताम् पुरुष० तांमआ० इत्या
सनं गंगादिसर्वतीर्थेभ्योआनीतंतोयमुत्तमम् पाद्यंतेहंप्रदास्यामिगृहाणपरमेश्वरि एतावा० अश्वपूर्वां० पाद्यं गंधाक्षतैश्चसंयुक्तंफल-
पुष्पयुतंनव अर्घ्यंगृहाणदत्तंमेप्रसीदपरमेश्वरि त्रिपाद० कांसोस्मितां० अर्घ्यं गंगागोदावरीचैवयमुनाचसरस्वती मयाआचमनीया
र्थमानीतंतोयमुत्तमं तस्माद्विरा० चंद्रांप्रभासां० आचमनीयं० पंचामृतमयानीतंपयोदधिसमन्वितं घृतंमधुशर्करयाप्रीत्यर्थंप्रतिगृह्यता
म् श्रुतिमंत्राःआप्यायस्व० दधिक्राव्णोति० घृतंमिमिक्षेति० मधुवाताऋ० ३ स्वादुःपवस्वेति० पंचभिर्मंत्रैःपंचामृतस्नानम् ज्ञानमूर्तेम
द्रकालिदिव्यमूर्तेसुरेश्वरि स्नानंगृहाणदेवित्वंनारायणिनमोस्तुते यत्पुरुषेण० आदित्यवर्णे० स्नानं सूक्ष्मतंतुविनिर्मितंनानावर्णवि
चित्रितम् वस्त्रंगृहाणमेदेविप्रीत्यर्थंप्रतिगृह्यतां तस्माद्यज्ञात्सर्व० क्षुत्पिपासा० उत्तरीयं० अलंकारान्महादिव्यान्नानारत्नविनिर्मि-

नान् गृहाणदेवदेवित्वंप्रसीदपरमेश्वरि अलंकारान्सम० मलयाद्रिसमुद्भूतंकर्पूरागरुवासितम् मयानिवेदितंभक्त्याचंदनंप्रतिगृह्य-
ता तस्माद्यज्ञात्स० गंधद्वारां० गंधं० अक्षताश्चसुरश्रेष्ठाः कुंकुमेनसमन्विताः मयानिवेदिताभक्त्याप्रीत्यर्थंप्रतिगृह्यताम् अक्षतान् मंदा
रपारिजाताश्चपाटलीकेतकीनथा मारुतंमोगरंचैवशतपत्राणिचंपकं तस्मादश्वा० मनसःकाममा० पुष्पाणि० अहिरिवभो० ऋक् परिम-
लद्रव्याणि अथांगपूजा दुर्गायैनमः पादौपूजयामि महाकाल्यै० गुल्फौपू० मंगलायैनमः जानुनीपू० कात्यायिन्यै० ऊरूपू० भद्रकाल्यै०
कटीपू० कमलायै० नाभिंपू० शिवायै० उदरंपू० क्षमायै० हृदयंपू० स्कंदायै० कंठंपू० महिषासुरमर्दिन्यै० नेत्रेपू० उमायै० शिरःपू० विंध्य
वासिन्यै० सर्वांगंपूजयामि दशांगंगुग्गुलंधूपंचंदनागरुसंयुतं मयानिवेदितंभक्त्यागृहाणपरमेश्वरि यत्पुरुषं० कर्दमेनप्रजा० धूपं आज्य
चवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवित्वंप्रीत्यर्थंप्रतिगृह्यताम् ब्राह्मणोस्य० आपःस्रज० दीपं० अन्नंचतुर्विधंस्वादुरसैःष-
ड्भिःसमन्वितं भक्ष्यभोज्यसमायुक्तंप्रीत्यर्थंप्रतिगृह्यताम् चंद्रमामनसो० आर्द्रांपुष्क० नैवेद्यं० आचमनीयं० मलयाचलसंभूतकस्तूर्या
चसमन्वितम् करोद्वर्तनकंदेविगृहाणपरमेश्वरि करोद्वर्तनं० इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजे
न्मनि नाभ्याआसी० आर्द्रांयःकरिणी० फलं० पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतम् कर्पूरैलासमायुक्तंताम्बूलंप्रतिगृह्यतां तांबूलं० हिर
ण्यगर्भेतिदक्षिणां० यज्ञेनयज्ञ० यःशुचिःप्रयतो० मंत्रपुष्पांजलिं० अश्वदायैगोदायै इत्यादिप्रार्थयेत् श्रियेजातः० नीराजनं० श्रीसूक्तस
पूर्णंपठित्वापुष्पांजलिः मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वरि यत्पूजितंमयादेविपरिपूर्णंतदस्तुमे महिषघ्निमहामायेचामुंडेमुंडमा-
लिनि यशोदेहिधनंदेहिसर्वान्कामांश्चदेहिमे नमस्कारः ततोऽऋत्विग्वरणम् अथकुमारीपूजा एकवर्षातुयाकन्यापूजार्थंतांविवर्जयेत्
गंधपुष्पफलादीनांप्रीतिस्तस्यानविद्यते मंत्राक्षरमयींलक्ष्मींमातृणांरूपधारिणीं नवदुर्गात्मिकांसाक्षात्कन्यामावाहयाम्यहम् द्विवर्षक
न्यामारभ्यदशवर्षांतविग्रहां पूजयेत्सर्वकार्येषुयथाविध्युक्तमार्गतः कुमारिकाद्विवर्षातुत्रिवर्षातुत्रिमूर्तिका चतुर्वर्षातुकल्याणीपंचवर्षातु
रोहिणी षष्ठवर्षातुकालीस्यात्सप्तवर्षातुचंडिका अष्टवर्षाशांभवीचदुर्गाचनवमेस्मृता दशवर्षासुभद्रेतिनामतःपरिपूजयेत् प्रातः

कालविशेषणकृत्वाभ्यंगसमाहितः आवाहयेत्ततःकन्यामंत्रैरभिःपृथकपृथक् जगत्पूज्येजगद्वंद्येसर्वशक्तिस्वरूपिणि पूजांगृहाण
कौमारिजगन्मातर्नमोस्तुते प्रतिपदमारभ्यदशमीपर्यंतंकन्यापूजाऽएवमग्रेपि त्रिपुरांत्रिगुणाधारांत्रिमार्गज्ञानरूपिणीं त्रैलोक्यवंदितांदेवीं
त्रिमूर्तिंपूजयाम्यहं द्वितीयायांकलात्मिकांकलातीतांकारुण्यहृदयांशिवां कल्याणजननींनित्यांकल्याणींपूजयाम्यहं तृतीयायांअणिमादि
गुणाधारांआकाराद्यक्षरात्मिकां अनंतशक्तिभेदांतांरोहिणींपूजयाम्यहम् चतुर्थ्यांकामचारींकामरांत्रिकालचक्रस्वरूपिणीं कामदांक
रुणाधारांकालिकांपूजयाम्यहम् पंचम्यांउग्रहासांचोग्ररूपांदुष्टासुरनिबर्हिणीम् चार्वंगींचंडिकांलोकेपूजितांपूजयाम्यहम् षष्ठ्यां
सदानंदकरींशांतांसर्वदेवनमस्कृताम् सर्वभूतात्मिकांलक्ष्मींशांभवींपूजयाम्यहम् सप्तम्यां दुर्गमेदुस्तरेयुद्धेभयदुःखविनाशिनीम्
पूजयामिसदाभक्त्यादुर्गांदुर्गार्तिनाशिनीम् अष्टम्यां रुद्रांगींस्वर्णवर्णाभांसर्वसौभाग्यदायिनीम् सुभद्रजननींदेवींसुभद्रांपूजया-
म्यहम् नवम्यां इतिकुमारीपूजनम् अष्टरात्रेनदोषोयंनवरात्रंतिथिक्षये सूतकेपूजनंप्रोक्तंजपदानंविशेषतः देवीमुद्दिश्यकर्तव्यंतत्र
दोषोनविद्यते रजस्वलांतथाशौचेब्राह्मणेश्चसुपूजयेत् गंधालंकारतांबूलपुष्पमालानुलेपनैः उपवासंनदुष्यंतिदंतधावनमंजनम् इति
आश्विनशुक्लप्रतिपत्कृत्यम् अथकार्तिकशुक्लप्रतिपत्सापूर्वायात्या पूर्वविद्धाप्रकर्तव्याशिवरात्रिर्बलेर्दिनम् वत्सरादौवसंतादौबलि-
राज्येतथैवच तैलाभ्यंगमकुर्वाणोनरकंप्रतिपद्यते प्रातर्गोवर्धनःपूज्योद्यूतंचापिसमाचरेत् पूजनीयास्तथागावस्त्याज्यंदोहनमंजसा अथक
था वालखिल्याऊचुः प्रतिपद्युदयेभ्यंगंकृत्वानीराजनंततः सुवेषःसत्कथागीतैर्दानैश्चदिवसंनयेत् शंकरस्तुतदाद्यूतंससर्जसुमनो
हरम् कार्तिकेशुक्लपक्षेतुप्रथमेहनिसत्यवत् प्रत्युवाचवचश्चेदंदेवीप्रतिसदाशिवः कालक्षेपायकेषांचितकेषांचिद्धननहेतवे केषां-
चिद्धननाशायपश्यद्यूतंकृतंमया तस्यत्वंकौतुकंपश्यभुवनलापयाम्यहम् ऊद्यत्स्यंक्रीडिनंताभ्यांभवान्याचजितंतदा पुनर्द्वितीय-
भुवनंलापितंनिर्जितंतया पुनस्तृतीयंभुवनलापितंनिर्जितंतया पुनर्वृषंपुनश्चर्मपुनःपन्नगबंधनम् शशिलेखांडमरुकंवृषभंचा
प्यजीजयत् निर्गतस्तुहरोगेहाच्चीरवल्कलधारकः गंगातीरंसमागत्यतस्थौचिंतासमन्वितः तस्मिन्क्षणेकार्तिकेयःखेलितुंचगतःक्वचित्गृहा

तीरायसौगेहमपश्यत्तथिशंकरम् ईषत्क्रुद्धंविरक्तंचवननामचरणोपितुः तेनापिमूर्ध्निचाघ्रातःपुत्रयाहिगृहंस्करवं तवमात्राजितश्चाहंग
च्छामिगहनंवनं स्कंदउवाच कथंमात्राजितोदेवोवनंकस्माच्चगच्छसि अहमप्यागमिष्यामित्वत्पादौसेवयाम्यहं शिवउ० विजित्यतवमा
त्रातुक्षणंनस्थेयमत्रवै ममलोकेतथेत्युक्त्वाक्वचिद्गच्छाम्यहंततः स्कंदउवाच मागच्छत्वंमहादेवद्यूतमार्गंप्रदर्शय आनीयतेमयाजि-
त्वासर्वंतवधनादिकं शिवेनापितथेत्युक्त्वाद्यूतमार्गःप्रदर्शितः स्कंदोपिगृहमागत्यपार्वतींवाक्यमब्रवीत् स्कंदउ० देविदेवोगतःक्वासौवृष
मोत्रैवसंस्थितः शीर्षेचनविधुःकस्मान्मातःसत्यंवदाद्यमे देव्युवा० स्वयमेवकृतंद्यूतंस्वयमेवपराजितः स्वयमेवगतःक्वापि धात्र्यास्थ्यंनास्ति
कथंमया स्कंदउवा० मयासहक्रीडितव्यंकथंतत्क्रीडनंत्विति देव्यक्रीडत्तेनसार्द्धंततःस्कंदेननिर्जितं मयूरेणवृषस्तस्याःशक्त्यापन्नगबं
धनम् वृषेणेंदुस्ततोर्धांगंतत्सर्वंतेननिर्जितम् कौपीनंनिर्जितंचर्मगृहीत्वातदुपाययौ गंगातीरेयत्रशिवस्तत्रागत्यन्यवेदयत् ततोदेवीस
मीपेतुविघ्नराजःसमाययौ किमर्थंम्लानवदनादेविजानासितद्वद देव्युवाच मयाजितोमहादेवःसतुगेहाद्विनिर्गतः आयास्यतिवृषाद्यर्थंमि-
तिसंचिंत्यसंस्थितिम् तवभ्रात्रातुनज्जित्वासर्वंतस्मैनिवेदितं नायास्यत्यधुनादेवइतिचिंतापरास्म्यहम् गणेशउवाच देविशिक्षयमेद्यूतंजे
ष्यामिभ्रातरंहरम् आनयिष्यामिसामग्रीं यद्यहंस्यांसुतस्तव सगृहीत्वापाशयुगंसारिकाःशीघ्रमाययौ इतिपुत्रवचःश्रुत्वातस्मैद्यूत
मशिक्षयत् पृष्ट्वापृष्ट्वाययौदेवःस्कंदोयत्रव्यवस्थितः गणेशउवाच मयानीताविमौपाशौसारिकापटएवच क्रीडत्वंतुमयासार्द्धंदेवे
स्याग्रेममाग्रज इतिभ्रातृवचःश्रुत्वातुभाभ्यांक्रीडितंतदा मूषकेनबलीवर्दंमयूरंचाप्यजीजयत् शिवस्यसर्वविषयंस्कंदस्यचतथैवच
गृहीत्वासतुविघ्नेशस्तत्कालंपार्वतींययौ पार्वत्यपिचसंतुष्टागणेशंवाक्यमब्रवीत् सम्यक्कृतंत्वयापुत्रनानीतोसौमहेश्वरः सामदाना
दिकंकृत्वाअनयात्रमहेश्वरम् तथेत्युक्त्वागणेशोसौसमारुह्यचमूषकं त्वरितंचाययौतत्रगृहेनेतुंमहेश्वरम् ईश्वरस्तुसमुत्थायहरिद्वारंस
मागतः नारदेरितवृत्तांतोविष्णुस्तत्रसमागतः विष्णुरुवाच त्र्यक्षांविद्यांकुरुशिवएकाक्षोहंभवाम्यहम् एकश्चास्मावक्षःपाशकइति
विग्रहेपिपरिनिष्ठितरूपत्वात्काणोभवेतिशब्दछलम् रावणेनतथेत्युक्तंकाणोभवजनार्दन विष्णुरुवाच ओंतुवसश्यसेमांत्वंतस्मादोत्तु

र्भविष्यसि नारदउवाच देवस्मिन्महत्कार्यमायातिसगणेश्वरः ज्ञातुमत्र भवद्वृत्तंमूषकस्तस्य धर्षतांम् इतिश्रुत्वानारदस्यवचनंरावणोग्रतः
कुर्वन्मार्जारवच्छब्दंमूषकोसौपलायितः मूषकंत्यज्यगणपः शनैःशनैरुपाययौ जातोविष्णुःपाशइतिदूरस्तस्तद्विलोकितम् प्रणिपत्यमहा
देवंविनयाननकंधरः गणेशउवाच आगम्यतांदेवगेहंदेवीमानपुरःसरम् यदिनायासिगेहत्वंप्राणांस्त्यक्ष्यतिचांबिका त्वय्यागतेमयासर्वं
कार्यमेतदुपायनम् महादेवउवा० एषाक्ष्यक्षामयाविद्याऽधुनागणपनिर्मिता अनयाक्रीडतेदेवीआगमिष्येगृहंतदा गणेशउ० सर्वथैवक्री
डितव्यंदेव्यानास्त्यत्रसंशयः आगम्यतांगृहंदेवंप्रातरंयाहिमाव्रज इतितस्यवचःश्रुत्वाईश्वरःसगणोययौ नारदोपिगतस्तत्रमहोत्तुरपिचा
गतः उपविष्टास्तुकैलासेदेवास्तत्रसमागताः दृष्ट्वादेवींप्रहस्यादौमहेशोवाक्यमब्रवीत् व्यक्षविद्यामहादेविगंगाद्वारेविनिर्मिता अनया
जयसेत्वंचतदात्वंसत्यभाषिणी देव्युवाच वृषादितवसामग्रीमयेयंलापिताशिव त्वयाकिंलाप्यतेब्रूहिदर्शयस्वसदागतान्इतिश्रुत्वाव
चस्तस्याःप्रेक्षताधोमुखंहरः तस्मिन्क्षणेनारदेनस्वकौपीनंसमर्पितं वीणादंडश्चोपवीतमनेनप्रीयतामिति सदाशिवःप्रसन्नोभूत्क्री
डनंसमचक्रतुः यद्यद्याचयतेरुद्रस्तथाविष्णुःप्रजायते यद्यद्याचयतेदेवीविपरीतःपतत्यसौ स्वकीयाभरणाद्यंचमहादेवेननिर्जितम् स्कंदालंका-
रिकंसर्वंपुनराप्तंहरेणच ततोगणेशःप्रोवाचवाक्यंसदसिगर्वितः नक्रीडितव्यंहेमातःपाशोलक्ष्मीपतिःस्वयम् क्रतोहरेणसर्वस्वंतेहरिष्यति
मतिता इतिपुत्रवचःश्रुत्वापार्वतीक्रोधमूर्च्छिता तथाविधायमालोक्यरावणोवाक्यमब्रवीत् रावणउवा० पापिष्ठेनाद्यशमोस्मिदुर्दुरूहेनवि
ष्णुना अधर्मोयंनकर्तव्यइत्युक्तंतेमयायतः देव्युवाच सर्वान्शापिष्येवत्साहंधूर्तानेतान्महाबलान् सामर्थ्यंपश्यमेपुत्रधर्मत्यागफलंतथा
देवयस्मादबलयाकपटंचकृतंत्वया तस्मात्तदास्कृतेमूर्धागंगाभारप्रपीडितः इतस्ततःकुचेष्टात्वंयतःशिक्षयसेमुने स्वमेपितेसुखंस्त्रीणां
नकदापिभविष्यति यतःकृतात्वबलयासहमायात्वयाहरे एषवैरीरावणोयंतवभार्यांनयिष्यति एषवैरीभविताय:अयंपुनस्तवभार्यांन-
यिष्यतिसंबंधहृद्यादेतदिदंप्रयोगेदुष्टः हित्वामांमातरंपुत्रबालकत्वंत्वयाकृतं अतस्त्वंनस्तुवात्वृद्धोबालएवभविष्यसि गणेशउ० अनेनत्वो
तुरूपेणमूषकोयंपलायितः मध्येमार्गेकृतंविघ्नंशापेनंराक्षसाधमम् देव्युवाच यस्माद्विघ्नंत्वयादुष्टकृतंमद्बालकस्यतु तस्माद्यंतवरिपुर्विष्णु

स्त्वांघातयिष्यति इतिदेव्यावचःश्रुत्वासर्वेसंक्रुद्धमानसाः देवीशापेमनश्चक्रुर्नारदोवाक्यमब्रवीत् नारदउवाच कोपंकुर्वंतुमादेवानैवंशाप्या
कदाचन सर्वेषामादिमायेयंयथायोग्यफलप्रदा नायंशापइयंदेवीस्मर्तव्यातुविचक्षणैः गंगासदातिष्ठतुरुद्रमस्तकेबलाइमांवानयतुस्व
पाचरः जायाहरस्याथयथोचितामृतिश्वानंगतृष्णारहितःकुमारः अहंक्षमामिधरिणीनस्थातव्यंतपोधनैः सम्यग्देविलयाप्रोक्तंश्रृणुविदा
नींवचोमम सर्वक्रोधापनुत्यर्थंननर्तमुनिपुंगवः कक्षानादंचकारोच्चैर्हाहाहीहीतिचाब्रवीत् तस्यचेष्टांविलोक्याथसर्वेहर्षमवाप्नुयुः देव्यु
वाच भोभोविदूषकश्रेष्ठकृतकृत्योसिनारद विदूषकविनोदकृत् वरंवरयभद्रंतेयद्यन्मनसिरोचते नारदउवाच याचयंतुवरंसर्वेकोवाकिंया
चयिष्यति सर्वेतेयाचयिष्यंतियथाश्रेष्ठंब्रुवंतुतेम् शिवउवाच सर्वेसंक्षम्यतांदेविजितंयद्वृषभादिकं तन्मयातुद्यूतशतनर्मयास्त्वंजगद-
म्बिके देव्युवाच मास्तुत्वयासमंनाथस्वप्नेपिममचांतरं एतदेववरंमन्येक्रोधोमाभून्ममोपरि कार्तिकेशकृपक्षेतुप्रथमेहनिसत्यवत् जयोल
ब्धोमयात्वत्तःसत्येनैवमहेश्वर तस्माद्द्यूतंप्रकर्तव्यंप्रभातेनरमानवैः तस्मिन्द्यूतेजयोयस्यतस्यसंवत्सरंजयः विष्णुरुवाच अहंप्र
यंकरिष्यामिश्रेष्ठंवालघुमेववा तथातथाभवतुस्ववरमेनंवदाम्यहम् स्कंदउवाच सदामनस्तपस्यायांममातिष्ठतुदेवताः कदापिविषये-
मास्तुदेयएषवरोमम गणेशउवाच संसारेयानिकार्याणितदादौममपूजनम् यांतुसिद्धिंममकृपांविनासिद्ध्यंतुमाकचित् रावणउ
वाच वेदव्याख्यानसामर्थ्यंममशीघ्रंभवत्विति सदाशिवेसदाचास्तुभक्तिर्मेव्यभिचारिणी नारदउवाच क्रुद्धाकुद्धाश्चयेकेचिन्मू
र्खामूर्खाश्चयेजनाः मद्वाक्यंसत्यमित्येवमानयंतुसदासुराः इत्युक्त्वांतर्हिताःसर्वेदेवारुद्रपुरोगमाः तस्मात्प्रतिपदिद्यूतंकुर्यात्सर्वोपि-
वैजनः द्यूतंनिषिद्धंसर्वत्रहित्वाप्रतिपदंबुधाः स्वस्योद्यमादिज्ञानायकुर्याद्द्यूतमतंद्रितः विशेषवच्चभोक्तव्यंसुहृद्भिर्ब्राह्मणैःसह पक्वान्नादि
विशेषमित्यर्थः योषिताभिश्चसहितंनेयासाचभवेन्निशा ततःसंपूजयेन्मानैरंतःपुरनिवासिनीः पदातिजनसंघातान्ग्रैवेयैःकटकैःशु
भैः स्वनामांकैःस्वयंराजातोषयेत्स्वजनान्पृथक् वृषभान्माहिषांश्चैवयुध्यमानान्परैःसह गजानश्वांश्चयोधांश्चपदातीन्समलंकृतान्
मंचारूढःस्वयंपश्येन्नटनर्तकचारणान् यथापतेत्त्रासयेच्चगोमहिष्यादिकंतथा ततोपराह्णसमये पूर्वस्यांदिशिकाश्यप मार्गपाली

मध्यायांतु गमभ्यापपादयाः [redacted] हाभिनयत् दृशायत्वागजानश्वान्मायमश्वाकृतेनयेत् कृतहोमेद्विजेंद्रेभ्यश्च श्री
यान्मार्गपालिकां मार्गपालिनमस्तेस्तुसर्वलोकसुखप्रदे विधेयैःपुत्रदाराद्यैःपुनरेहिव्रतस्यमे नीराजनंचतत्रैवकार्यंराज्ञजयप्रदम् मार्गपाली
समुल्लिख्यनीडजास्तु सुखान्विताः तस्मादेतत्प्रकुर्वीतद्यूताद्यंविधिपूर्वकम् इतिसनत्कुमारसंहितायांद्यूतविधिः तत्रैववालखिल्या
ऊचुः पूर्वविद्धाप्रकर्तव्याप्रतिपद्बलिपूजने वर्धमानतिथौनंदायदासाधत्रयात्मिकाद्वितीयावर्धगामित्वादुत्तरातत्रैवोच्यते बलिमालिख्य
दैत्येंद्रंवर्णकैःपंचरंगकैःगृहमध्येविशालायांविंध्यावल्यासहासितंजिव्हाचार्वक्षिणीप्रांतेकरयोः पादयोःस्तले रक्तवर्णेनास्यकेशाः कृष्णेनवस्त्र-
मालिखेत् सर्वांगंपीतवर्णेनशस्त्राद्यंनीलवर्णकैः वस्त्रंच श्वेतवर्णेनयथाशोभंप्रकल्पयेत् सर्वाभरणशोभाढ्यंद्विभुजंनृपचिन्हयुक् लोको
लिखेद्गृहस्यांतःशय्यायांशुक्लतंदुलैःमंत्रेणानेनसंपूज्यःषोडशैरुपचारकैः बलिराजनमस्तुभ्यंदैत्यदानवपूजित इंद्रशत्रोऽमराराते विष्णुसा
न्निध्यदोभव बलिमुद्दिश्यदीयंतेदानानिमुनिपुंगवाः यान्यहान्यक्षयाण्याहुर्मयैतत्संप्रदर्शितम् कौमुदीतिवदंत्यस्मादीयतेऽस्यांयुधिष्ठिर पा
र्थिवेंद्रैर्मुनिवरास्तेनेयंकौमुदीस्मृता योयादृशेनभावेनतिष्ठत्यस्यांयुधिष्ठिर हर्षदैन्यादिरूपेणतस्यवर्षंप्रयातिवै बलिपूजांविधायैवपश्चाद्गो
क्रीडनंचरेत् गवांक्रीडादिनेयत्ररात्रौदृश्येतचंद्रमाः सोमोराजापशून्हंतिसुरभिःपूजकांस्तथा प्रतिपद्दर्शसंयोगेक्रीडनंचगवांमतम् पर्वत्ह्ये
ष्वयःकुर्यात्पुत्रदारधनक्षयः अलंकार्यास्तदागावोग्रासाद्यैश्चसुरार्चिताः गीतवादित्रनिर्घोषैर्नीयेन्नगरबाह्यतः आनीयचगृहंपश्चात्कुर्या-
न्नीराजनंविधिम् अथचेत्प्रतिपत्स्वल्पानारीनीराजनंचरेत् द्वितीयायांतदाकुर्यात्सायंमंगलमालिकाम् एवंनीराजनंकृत्वासर्वपापैःप्रमु-
च्यते प्रतिपत्पूर्वविद्धैववृष्टिकाकर्षणे भवेत् कुशकाशमयींकुर्याद्वृष्टिकांसुदृढांनवाम् देवद्वारेनृपद्वारेथवानेयाचतुष्पथे तामेकतोराजपुत्रा
हीनवर्णास्तथैकतः गृहीत्वाकर्षयेयुस्तांयथावारंमुहुर्मुहुः समसंख्याद्वयोःकार्याःसर्वेपिबलवत्तराः जयोत्रहीनजातीनांजयोराज्ञस्तुवत्सर
म् उभयोःपृष्ठतःकार्यारेखास्वार्ककरोपरि रेखांतेयोनयेत्तस्यजयोभवतिनान्यथा जयचिन्हमिदंराजाविदधीतप्रयत्नतः सनत्कुमारसं
हितायाम् वालखिल्याऊचुः कार्तिकस्यसितेपक्षेअन्नकूटंसमाचरेत् गोवर्द्धनोत्सवश्चैवश्रीविष्णुःप्रीयतामिति ऋषयऊचुः को

सौगोवर्द्धनोनामकस्मात्तंपरिपूजयेत् कस्मात्तदुत्सवःकार्यःकृतेकिंचफलंभवेत् वालखिल्याऊचुः एकदाभगवान्कृष्णोगत्वागोपालकैःसह गृहीत्वागाःप्रतिपदिकार्तिकस्यगतोवने तत्रनानाविधालोकागोप्यश्चापिसहस्रशः गोवर्द्धनसमीपेतुकुर्वंत्युत्सवमादरात् खाद्यंलेह्यंचचोष्यंचपेयंनानाविधंकृतं कृतानगास्तथानानानृत्यंनिचपुरेजनाः नानापताकाःसंगृह्यकेचिद्धावंतिचाग्रतः केचिद्गोपाःप्रनृत्यंतिकुर्वंतिचतथापरे-इतस्ततोवितानानितोरणानिसहस्रशः दृष्ट्वैतत्कौतुकंकृष्णोवाक्यमेतदुवाचह कृष्णउवाच उत्सवःक्रियतेकस्यदेवताकाचपूज्यते पक्वान्न-स्वादनार्थायकल्पितोवोत्सवोधुना नभक्षयंतियेदेवास्तेभ्योन्नंनैवदीयते दृष्ट्वेदृशींभवद्बुद्धिंगोपालावेधसाकृताः गोपालाऊचुः एवंमावदकृष्णत्वंवृत्रहंतुर्महोत्सवः वार्षिकःक्रियतेस्माभिर्देवेंद्रस्यचतुष्टये इमंपूजयभद्रंतेभविष्यतिनसंशयः अद्यकुर्वंतिदेवेंद्रमहोत्सवमिमंनराः कुर्वेइतिप्रतिजानातीतिशेषः इत्लोपआर्षःनरइतिराज्ञःलक्षणम् दुर्भिक्षंचतथावृष्टिर्देशेतस्यनजायते तस्मात्त्वमपिकृष्णात्रकुरूत्सवमनेकधा कृष्णउवाच अयंगोवर्धनःसाक्षाद्दृष्टिसौभिक्ष्यकारकः मथुरास्थैर्व्रजस्थैश्चपूर्वंचायंप्रपूजितः हित्वैनंपूज्यतेलोकेवृथेंद्रःपूज्य-तेकथम् उत्सवंक्रियमाणंचप्रत्यक्षोयंप्रभुनक्ति च करिष्यतिकृषिंसम्यगुपसर्गान्हनिष्यतियदायदासंकटंमेमहदागत्यजायते तदातदापूजयाभिदृष्टंगोवर्धनंगिरिं श्रवणेश्रवणेगोपावार्त्तांकुर्वंतिकिंत्विदम् तेषांमध्येकेश्चिदुक्तंकृष्णोक्तंक्रियतामिति यदाखादतिचान्नंचेन्नगोगोवर्धनस्तदातदाकृष्णोक्तमखिलंसत्यमेवभविष्यति सर्वएवतदागोपाविनिश्चित्यचनंदजं वचनंप्राहुरित्थंचेन्निश्चयोस्तितदाकुरु सर्वेषामग्रणीर्भूत्वागोवर्द्धनमहोत्सवम् ततःकृष्णस्तथेत्युक्त्वाउत्सवेकृतनिश्चयः नानासामग्रिकंचक्रुर्यथोक्तंनंदसूनुना नानावस्त्राणिपात्राणिविस्तृता-निनगाग्रतः तत्रदत्तान्नपुंजस्तुयथागोवर्द्धनोमहान् भक्तंसूपानिशाकाश्चकांजिकंवटकास्तथा रोटकाःपूरिकाद्यंचलड्डुकान्मंडकादिकम् दुग्धंदधिघृतंक्षौद्रंलेह्यंचोष्यंतथामिषम् कथिकाद्यंसर्वमपितत्रदत्त्वावचोब्रवीत् कृष्णउवाच मंत्रंपठित्वागोपालानेत्रेसंमीलयंतुच गोवर्धनेनभोक्तव्यंसर्वमन्नंनसंशयः कृष्णउवाच गोवर्धनधराधारगोकुलत्राणकारक बहुबाहुकृतच्छायगवांकोटिप्रदोभव लक्ष्मीर्यालोकपालानांधेनुरूपेणसंस्थिता घृतंवहतियज्ञार्थेममपापंव्यपोहतु पठंतिदंमंत्रयुतंसर्वेमुद्रितलोचनाः कृष्णोगोवर्द्धनंविश्य

सर्वमन्नमभक्षयत् भक्षणावसरेकेश्चिज्जनेर्दृष्टोगिरिस्तदा अनावाभून्नदाश्च यतच्चेतसिमुनीश्वराः ततोनाडीद्वयात्कृष्णोगोपान्वाक्यमु-
वाचसः अहोगोवर्द्धनेनात्रक्षणाद्भुक्तमिदं स्फुटम् पश्यंतुसर्वेगोपालाः प्रत्यक्षोयंनसंशयः यद्यस्तिसुखवांछावःकुर्वंतस्यमहोत्सवम् इतिश्रुत्वा
वचस्तस्यसर्वेविस्मितमानसाः गोवर्द्धनोत्सवंचक्रुरिंद्राच्छतगुणंततः इंद्रोत्सवंद्रष्टुकामः समागच्छतनारदः गोवर्द्धनोत्सवंदृष्ट्वादेवेंद्रस्यसभांय
यौदेवेंद्रेणकृतातिथ्योवारंवारंप्रणोदितः नोवाचवचनंकिंचिद्देवेंद्रःप्रत्यभाषत इंद्रउवा० युष्माकंकुशलंविप्रवर्त्ततेवानवेतिवा मदग्रेकथ्यतांदुःखं
मुनीश्वरहराम्यहम् नारदउ० अस्माकंकिंमुनींद्राणामिंद्रदुःखस्यकारणम् परंगोवर्धनःशैलःशक्रोजातोविलोक्यते त्वदुत्सवेपूज्यतेसो-
गोपालैर्गोकुलेहरिः अतःपरंयज्ञभागान्गृहीष्यतिसएवहि इंद्रासनंतथेंद्राणींक्रमात्सेवगृहीष्यति यस्यवीर्यंचशस्त्रंचतस्यराज्यंप्रजायते किं
मस्माकंमुनींद्राणांयएवेंद्रासनेवसेत् वर्षोद्यामासषट्कादाद्दृष्ट्वोसौसभागतः इत्युक्त्वाचदेवेंद्रंप्रययौनारदोभुवि इत्थंनारदवाक्यंचश्रुत्वाशक्रो
भ्यभाषत अहोआवर्त्तसंवर्त्तद्रोणनीलकपुष्कराः सर्वेमेघाजलंगृह्यकरकाभिःसमन्वितं प्रयांतुगोकुलेशीघ्रंमारयंतुचगोपकान् गोवर्द्धनंस्फोटयंतुव
ज्रपातैरनेकशः पातयंतुचगाश्चापिगृहाण्युच्चाटयंतुच ततोघनघटाघोषोगोकुलेभून्मुनीश्वरः जातआरादंधकारोमध्यान्हसमयेतदा कंपिता
स्तुतदागोपाःकिमकांडमुपस्थितं ववर्षुर्बहुपानीयंकरकाभिस्तदाघनाः गोपाउ० हाकृष्णकृष्णहेकृष्णकिमिदानींविधीयतां मृतास्मगोपकाः
सर्वेकुपितोयंहिवासवः कृष्णउ० निमील्याक्षीणिभोगोपाध्येयोगोवर्धनोगिरिः रक्षाकर्तासएवास्तिनान्योस्तिजगतीतले इत्युक्त्वोत्पाट्यतंशै
लंनखतलेस्थापितास्तकने ततःप्रोवाचवचनंगोपान्प्रतिबलाग्रजः श्रीकृष्णउ० अहोगोवर्धनेनैतत्स्थलंदत्तंव्रजव्रज अन्यःकोस्तिस्थलंदातुंमत्य
क्षोयंनगोत्तमः एवंसमर्दिनंतोयंवृष्टंमुसलधारया नानादेशाययुर्नाशंनगोपाःशरणंययुः गोवर्धनस्यनाम्नैवकृष्णोनित्यंप्रयच्छति पक्वान्ना
निचगोपेभ्यस्तत्रतेसुखमावसन् इत्येवंकौतुकंदृष्ट्वासत्यलोकंययौमुनिः ब्रह्मन्त्वंकिमस्कमोसिजायतेसृष्टिनाशनं तस्माच्छीघ्रंगोकुलेत्वं
गत्वावृष्टिंनिवारय ब्रह्मोवाच किमर्थंजायतेवृष्टिःकथंसृष्टिविनाशनम् कश्चिद्दैत्यःसमुत्पन्नःसर्वमाख्याहिमेमुने नारदउ० नोत्पन्नोदै
त्यःकश्चित्स्यक्तःशक्रोत्सवोभुविगोपालैरतिसंक्रुद्धोइंद्रएवंप्रवर्षति इतितस्यवचःश्रुत्वाहंसमारुह्यवैविधिः आगतोयत्रशक्रोतिक्रोधा

श्रीगोवर्द्धनो

द्धृत्या धनि ब्रह्मोवाच कथंव्यवसिताबुद्धिरीदृशीतेसुरेश्वर त्रैलोक्यनाथोभगवान्निर्जितव्यः कथंत्वया एकयैवकरांगुल्यापश्यगोव-
र्द्धनोधृतः ईर्ष्याकथंतेनसाकंत्वयाशक्रविधीयते इतिब्रह्मवचःश्रुत्वामेघान्संस्तभ्यवासवः प्रणिपत्यचतंकृष्णंशक्रोवचनमब्रवीत् क्षंत
व्यामत्कृतिर्विष्णोदासोहंशरणागतः यद्दोषवतेनखेदेयमपराधापनुत्तये कृष्णोवा० अज्ञात्वातवसामर्थ्यंगोपालैरचितंत्विदम् एषांदंड
स्त्वयोग्योयंसम्यगेवत्वयाकृतः अहंकनीयान्तेभ्रातानवाज्ञापरिपालकः शरणागतजातीनांरक्षणंतुमयाकृतम् यदिप्रसन्नोदेवेश
उत्सवोयंप्रदीयताम् गोवर्द्धनायगिरये गोकुलंरक्षितंयतः शक्रोपिचतथेत्युक्त्वातत्रैवांतरधीयत गतेशक्रेगिरींद्रंतंसंस्थाप्य हरिरब्रवीत्
कृष्णउवा० गोपाःपश्यंतुमाहात्म्यमद्भुतंशैलजंतुयत् अद्यारभ्यमकर्तव्योमहान्गोवर्द्धनोत्सवः गोवर्द्धनेनशैलेननिखिलातुधराधृता ए
तत्सारमजानद्भिः कथंसंक्रीडितंपुरा अद्यपर्वतराजंस्तुसर्वैर्भूतममायतः एतत्सेवाप्रभावेनबलंलब्धंमयामहत् प्रतिसंवत्सरंतस्मादन्नकू
टंविधीयताम् गवांभवतिकल्याणंपुत्रपौत्रादिसंततिः ऐश्वर्यंचसदासौख्यंभवेद्गोवर्द्धनोत्सवात् कृतंयत्कार्तिकेस्नानंजपहोमार्चनादि
कम् सर्वंनिष्फलतांयातिनोत्कृतेपर्वतोत्सवे एवमुक्तास्तुतेगोपाःसत्यंसर्वममन्यत ययुःकृष्णादयःसर्वेनवमेहनिगोकुले वालखिल्या
ऊचुः इत्येतत्सर्वमाख्यातनस्माभिस्तुमुनीश्वराः श्रीकृष्णस्यतुसंतुष्ट्यैह्यन्नकूटंविधीयताम् नानाप्रकारशाकादिदेशकालोद्भवानिच
पक्वान्नानिविचित्राणिकुर्याच्छक्त्यनुसारतः सर्वान्नपर्वतंकुर्याच्छ्रीकृष्णायनिवेदयेत् गोवर्धनस्वरूपायमंत्रौकृष्णोदितोपठन् यस्तु
ष्णोःरूपंकृत्वेतिमंत्रो एवंयःकुरुतेमर्त्योविष्णुलोकेमहीयते इतिश्रीसनत्कुमारसंहितायांप्रतिपत्कृत्यम् अथद्वितीयाव्रतानि
कार्तिकशुक्लद्वितीयायमद्वितीया साअपराह्णव्यापिनीग्राह्या ऊर्जेशुक्लद्वितीयायामपराह्णेर्चयेद्यमं स्नानंकृत्वाभानुजन्यांयमलो
कंनपश्यति ऊर्जेशुक्लद्वितीयायांपूजितस्तर्पितोयमः वेष्टितःकिन्नरैर्हृष्टैस्तस्मैयच्छतिवांछितम् इतिस्कांदात् दिनद्वये अपरा
ह्णव्याप्तौवापरैवेतियुग्मवाक्यात् प्रथमेश्रावणेमासितथाभाद्रपदेपरा तृतीयाश्वयुजेमासिचतुर्थीकार्तिकीभवेत् श्रावणेकलु
षानाम्नीतथाभाद्रे चनिर्मला आश्विनेप्रेतसंचाराकार्तिकेयाम्यतामतेति चतस्रोद्वितीयाउपक्रम्यप्रथमायांकिंचिदाश्वितम् 

द्वितीयायांसरस्वतीपूजा तृतीयायांश्राद्धंकर्तव्यं चतुर्थ्यांयमपूजनम् कार्तिकेशुक्लपक्षेतुद्वितीयायांयुधिष्ठिर यमोयमुनयापूर्वंभोजि
तःस्वगृहेर्चितः अतोयमद्वितीयेयंत्रिषुलोकेषुविश्रुता अस्यांनिजगृहेपार्थनभोक्तव्यमतोनरैः यत्नेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्धनम्
दानानिचप्रदेयानिभगिनीभ्योविशेषतः स्वर्णालंकारवस्त्रान्नपूजासत्कारभोजनैः सर्वाभगिन्यःसंपूज्या अभावेप्रतिपन्नकाः तत्स्थानेन
माता पितृव्यभगिनीहस्तात्प्रथमायांयुधिष्ठिर मातुलस्यसुताहस्ताद्द्वितीयायांयुधिष्ठिर पितुर्मातुःस्वसुश्चैवतृतीयायांतयोःकरात्
भोक्तव्यंसहजायाश्चभगिन्याहस्ततःपरम् सर्वासुभगिनीहस्ताद्भोक्तव्यंबलवर्धनम् धन्यंयशस्यमायुष्यंधर्मकामार्थसाधकम् न
स्यांतिथौयमुनयायमराजदेवःसंभोजितोनिजकरात्स्वसृसौहृदेन तस्यांस्वसाकरतलादिहयोभुनक्तिप्राप्नोतिरत्नधनधान्यमनुत्तमं-
सः इतिहेमाद्रौभविष्येयमद्वितीयाविधिः अथकथा वालखिल्याऊचुः कार्तिकस्यसितेपक्षेद्वितीयायमसंज्ञिता तत्रापराह्णेकर्तव्यं
सर्वथैवयमार्चनम् मत्यहंयमुनागत्ययममभ्यर्थयत्पुरा भ्रातर्ममगृहेयाहिभोजनार्थंगणावृतः अद्यश्वोवापरश्वोवामत्यहंवदतेयमः
कार्यव्याकुलचित्तत्वादवकाशोनजायते तदैकदायमुनयाबलात्कारान्निमंत्रितः सगतःकार्तिकेमासिद्वितीयायांमुनीश्वराः नारकीयजना-
न्मुक्त्वागणैःसहरवेःसुतः कृतानिभ्योयमुनयानानापाकाःकृतास्तथा कृताभ्यंगोयमुनयातैलैर्गंधमनोहरैः उद्वर्तनंलापयित्वास्नापितःसू
र्यनंदनः ततोलंकारिकंदत्तंनानावस्त्राणिचंदनम् माल्यानिचप्रदत्तानिमंचोपरिउपाविशत् पक्वान्नानिविचित्राणिकृत्वासास्वर्णभाजने यमंच
भोजयामासयमुनाप्रीतमानसा भुक्त्वायमोपिभगिनीमलंकारैःसमर्चयत् नानावस्त्रैस्ततःप्राहवरंवरयभामिनि इतितद्वचनंश्रुत्वायमुनावाक्यमब्रवीत्
यमुनोवाच प्रतिवर्षंसमागच्छभोजनार्थंतुमद्गृहे अद्यसर्वेमोचनीयाःपापिनोनरकाद्यम येचैवभगिनीहस्तात्करिष्यंतिचभोजनं तेषांसौख्यप्रदो-
हिलमेतदेववृणोम्यहम् यमउवाच यमुनायांतुयःस्नात्वासंतर्प्यपितृदेवताः भुनक्तिभगिनीगेहेभगिनींपूजयेदपि कदाचिदपिमद्द्वारंनसपश्यति
भानुजे वीरेशैशानदिग्भागेयमतीर्थंप्रकीर्तितम् तत्रस्नात्वाचविधिवत्संतर्प्यपितृदेवताः प ठेदेतानिनामानि आमध्यान्हंनरोत्तमः सूर्यस्याभि
मुखोमौनीदृढचित्तःस्थिरासनः यमोनिहंतापितृधर्मराजोवैवस्वतोदंडधरश्चकालः भूताधिपोदत्तकृतानुसारीकृतांतमेतद्दशभिर्जपंति

एतानिचदशशतैः नामदशकेन ॥ ॥ ततोयमेश्वरंपूज्यभगिनीगृहमाव्रजेत् मंत्रेणानेनचयथाभोजितःपूर्णमादरात् भ्रात दि॰
१६ स्तवानुजानाहंभुंस्वभक्ष्य मिदंशुभम् प्रीतयेयमराजस्ययमुनायाविशेषतः ततःसंतोष्यभगिनींवस्त्रालंकरणादिभिः स्वमेपियमलोक २
स्यभविष्यतिनदर्शनम् नृपैःकारागृहेयेचस्थापितामममवासरे अवश्यंतेप्रेषणीयाभोजनार्थंस्वसृगृहे यमो कथ्यामयापापानरकेभ्योद्यवास-
रे यद्येवंधिक्करिष्यंतितेदंड्यामममसर्वथा कनीयाभगिनीनास्तिनदाज्येष्ठागृहंव्रजेत् तदभावेसपत्नायाःपैतृव्यास्तदभावतः तदभावेमातृशील्या
मातृसमशिल्पायाः मातुर्भगिन्यावामातुलस्याथवातया सापत्नगोत्रसंबंधैःकल्पयेच्चयथाक्रमम् सर्वाभावेमाननीयाभगिनीकाचिदेवहि गो
नद्याद्यथवातस्याअभावेसानिकारयेत् तदभावेप्यरण्यादिकल्पयित्वासहोदरां अस्यांनिजगृहेदेविनभोक्तव्यंकदाचन येभुंजंतिदुराचारा नर
केतेपतंतिच स्नेहेनभगिनीहस्ताद्भोक्तव्यंपुष्टिवर्द्धनम् दानानिचप्रदेयानिभगिनीभ्योविशेषतः श्रावणेतुपितृव्यस्यकन्याहस्तेनभोजयेत् मातुलस्य
सुताहस्ताद्भुंजीयाद्भाद्रमासके पितुर्मातुःस्वसुःकन्येआश्विनेतुतयोःकरात् पितृष्वस्रेयीमातृष्वस्रेयीच अवश्यंकार्तिकेमासिभोक्तव्यंभगि
नीकरात् एवमुक्त्वाधर्मराजोययोसंयमिनींततः तस्माद्दषिवराःसर्वेकार्तिकव्रतकारकाः भुंजंतुभगिनीहस्तात्सत्यंसत्यंनसंशयः यमद्वितीयां
यःप्राप्यभगिनीगृहभोजनम् नकुर्याद्वर्षजंपुण्यंनश्यतीतिरवेःसुतात् यातुभोजयतेनारीभ्रातरंयुग्मकेतिथौ अर्चयेच्चापितांबूलैर्नसावै
धव्यमाप्नुयात् भ्रातुरायुःक्षयोनूनंनभवेत्तर्हिकर्हिचित् अपराह्णव्यापिनीसाद्वितीयाभ्रातृभोजने अज्ञानाद्यदिवामोहान्नभुक्तंभ-
गिनीगृहे प्रवासिनावाभावाद्वाज्वरिणेनाथवंदिना एतदाख्यानकंश्रुत्वाभोजनस्यफलंलभेत् इतिश्रीसनत्कुमारसंहितायांयमद्विती
याख्यानकंसंपूर्णम् अत्रैषभ्रातृद्वितीयाविधिस्थितितत्त्वे यमंचचित्रगुप्तंचयमदूतांश्चपूजयेत् अर्घ्यश्चात्रप्रकर्तव्योयमायसह
जद्वयैः भ्रातृभगिनीभिःसहअर्चनमंत्रस्तु एह्येहिमार्तंडजपाशहस्तयमांतकालोककरामरेश भ्रातृद्वितीयांकृतदेवपूजांगृहाणचा
र्घ्यंभगवन्नमस्ते धर्मराजनमस्तुभ्यंनमस्तेयमुनाग्रज पाहिमांकिंकरैःसार्द्धंसूर्यपुत्रनमोस्तुते लैंगेयातुभोजयतेनारीभ्रातरंयुग्म २६
केतिथौ अर्चयेच्चापितांबूलैर्नसावैधव्यमाप्नुयात् स्कांदेकार्तिकेतुद्वितीयायांशुक्लायांभ्रातृपूजनम् यानकुर्याद्विनश्यंतिभ्रातरःसप्तजन्मसु

पाद्मे उत्तरखंडे भद्रेभामिनिभोभामत्वदंघ्रिसरसीरुहम् श्रेयसेद्यनमस्कर्तुमागतोहंतवालयम् मृदुवाक्यंततःश्रुत्वासत्कारंक्रियतेतदा अद्य
भ्रातृमतीभ्रातस्त्वयाधन्यास्मिमानद भोक्तव्यंतेद्यमद्गेहेस्वायुषेममानद् कार्तिकेशुक्लपक्षस्यद्वितीयायांसहोदरः यमोयमुनयापूर्वंभो-
जितःस्वगृहेर्चितः यस्मिन्दिनेयमेनात्रनारीवापुरुषोपिवा अपविद्धाकर्मपाशैःस्वेच्छयायेपचंतिहि पापेभ्योविप्रमुख्यास्तेमुक्ताःकर्मनिबंध
नात् तेषांमहोत्सवोवृत्तोयमराष्ट्रेसुखावहः तस्माद्धंधोत्रमद्गेहेभोजनंकुरुकार्तिके आशिषःप्रतिगृह्याथनमस्कृत्यसमर्चयेत् सर्वाभगि
न्यःसंपूज्याज्ज्येष्ठाउभयतःस्मृताः वस्त्रादिनानमस्कुर्यान्निजवित्तानुसारतः भ्रातुरायुष्यवृद्ध्यर्थंभगिनीभिर्यमस्यवै पूजनीयाःप्रयत्नेनप्र
निमाश्चविधानतः मार्कंडेयोबलिर्व्यासोहनूमांश्चबिभीषणः कृपोद्रोणिःपरशुरामोअष्टैतेचिरजीविनः मार्कंडेयमहाभागसप्तकल्पांतजीवि
न चिरंजीवीयथात्वंहितथामेभ्रातरंकुरु इतिभ्रातृद्वितीया अथतृतीयाव्रतानि तत्रचैत्रशुक्लतृतीयायांसौभाग्यशयनव्रतम् मात्स्ये म
त्स्यउवाच वसंतमासमासाद्यतृतीयायांजनप्रिय सौभाग्यायसदास्त्रीभिःकार्यंपुत्रसुखेप्सुभिः शुक्लपक्षस्यपूर्वाह्णेतिलैःस्नानंसमाचरे
त् तस्मिन्नहनिसादेवीकिलविश्वात्मिकासती पाणिग्रहणकैर्मंत्रैरुमारूढावरवर्णिनी तयासहैवदेवेशंतृतीयायांसमर्चयेत् फलैर्नानावि
धैर्धूपैर्दीपैर्नैवेद्यसंयुतैः प्रतिमांपंचगव्येनतथागंगोदकेनच पंचामृतैःस्नापयित्वागौरीशंकरसंयुताम् नमोस्तुपाटलायैचपादौदेव्याः
शिवस्यतु शिवायेतिचसंकीर्त्यजयायैगुल्फयोस्तथा त्रिगुणायेतिरुद्रस्यभवान्यैजंघयोर्युगम् शिवंरुद्रेशिवायेतिजयायैइतिजानुनी सं
कीर्त्यहरिकेशायतथोरूवरदेनमः ईशायेतिकटिंरत्यैशंकरायेतिशंकरम् कुक्षिद्वयेचकोटव्यैशूलिनःशूलपाणये मंगलायैनमस्तुभ्यमुदरंचापि
पूजयेत् सर्वात्मनेनमोरुद्रईशान्यैचकुचद्वयं शिवेवेदात्मनेनद्वर्दिद्राण्यैकंठमर्चयेत् त्रिपुरघ्नायविश्वेशमनंतायकरद्वयम् त्रिलोचनायेतिहरं
त्वाहुःकालानलप्रिये सौभाग्यभुवनायेतिभूषणादिसमर्चयेत् नमोर्धनारीशहरंमसिततांगीतिनासिकाम् नमउग्रायलोकेशंललितेतिपुनर्भ्रुवौ
शर्वायपुरहंतारंवसुदेव्यैतथालकम् नमःश्रीकंठनाथायशिवंकेशांस्तथार्चयेत् भीमोग्रसौम्यरूपिण्यैशिरःसर्वात्मनेनमः शिवमभ्यर्च्यवि
धिवत्सौभाग्याष्टकमित्यतः स्थापयेद्घृतनिष्पावंकुसुंभंक्षीरजीरकम् तृणराजेक्षुलवणंकुस्तुंबुरुमथाष्टमम् दत्तंसौभाग्यकृद्यस्मात्सौभाग्या

ष्टकमित्यतः एवंनिवेद्यतत्सर्वमङ्गनंशिवयोःपुरः चैत्रेशृंगोदकंप्राश्यस्वपेद्भूमावरिंदम पुनःप्रभातेचतथाकृतःस्नानजपः शुचिः संपूज्य-
द्विजदांपत्यंमाल्यवस्त्रविभूषणैः सौभाग्याष्टकसंयुक्तंसुवर्णप्रतिमाद्वयम् प्रीयतामत्रललिताब्राह्मणायनिवेदयेत् एवंसंवत्सरंयावत्तृती
यायांसदामुने प्राशनेदानमंत्रेचविशेषंहिनिबोधमे गोशृंगोदकमाद्येस्याद्वैशाखेगोमयंपुनः ज्येष्ठेमंदारकुसुमंबिल्वपत्रंशुचौस्मृतम् मा
घेकृष्णतिलास्तद्वत्पंचगव्यंचफाल्गुने ललिताविजयाभद्राभवानीकुमुदाशिवा वासुदेवीतथागौरीमंगलाकमलासती उमाचदानकालेतु
प्रीयतामितिकीर्तनात् मल्लिकाशोककमलकुसुमोत्पलमालती कुब्जकंकरवीरंचबाणमम्लानकुंकुमम् बाणंनीरकुरंटः सिंदुवारंचसर्वे
षुमासेषुक्रमशःस्मृतम् जपाकुसुमकौसुंभमालतीशतपत्रिका यथालाभप्रशस्तानिकरवीरंचसर्वदा एवंसंवत्सरंयावदुपोष्यविधिवन्नरः
स्त्रीवाभक्त्याकुमारीवाशिवामभ्यर्च्यशक्तितः व्रतांतेशयनंदद्यात्सर्वोपस्करसंयुतम् उमामहेश्वरंहैमंवृषभंचगवासह स्थापयित्वाचशय
नेब्राह्मणायनिवेदयेत् अन्यान्यपियथाशक्त्यामिथुनान्यंबरादिभिः धान्यालंकारगोदानैरभ्यर्च्यधनसंचयैः वित्तशाठ्येनरहितःपूजये
द्गतविस्मयः एवंकरोतियासम्यक्सौभाग्यशयनव्रतम् सर्वान्कामानवाप्नोतिपदमानंत्यमश्नुते फलकस्यचसर्वांगमेतत्कुर्वन्समा-
चरेत् यत्रकीर्तिसमाप्नोतिप्रतिमासंनराधिप सौभाग्यारोग्यरूपायुर्वस्त्रालंकारभूषणैः नवियुक्ताभवेद्राजन्नब्दानांचशतत्रयम् य
स्तुद्वादशवर्षाणिसौभाग्यशयनव्रतम् करोतिसप्तचाष्टौवाश्रीकंठभवनेमरैः पूज्यमानोवसेत्सम्यक्यावत्कल्पायुतत्रयं नारीवाकुरु
तेभक्त्याकुमारीवानरेश्वर सापितत्फलमाप्नोतिदेव्यानुग्रहलालिता इतिमत्स्यपुराणेसौभाग्यशयनव्रतम् अत्रैवगौर्यादोलोत्सवः
तदुक्तंहेमाद्रौ देवीपुराणे चैत्रशुक्लतृतीयायांगौरीमीश्वरसंयुताम् संपूज्यदोलोत्सवकंकुर्यान्नारीशुभेप्सुका तथाचनिर्णयामृते तृ
तीयायांयजेद्देवींशंकरेणसमन्विताम् कुंकुमागरुकर्पूरमणिवस्त्रैरगर्हिताम् सुगंधिपुष्पधूपैश्चदमनेनविशेषतः आंदोलंदोलयेद्वत्स
शिवौमातुष्टयेसदा रात्रौजागरणंकुर्यात्प्रातर्दद्यात्तुदक्षिणा सौभाग्यायसदास्त्रीभिःकार्यापुत्रसुखेप्सुभिः इयंचपराग्राह्या मुहूर्तमात्रस
त्त्वेपिदिनेगौरीव्रतंपरे इतिमाधवोक्तेः इयंचमन्वादिः कृतंश्राद्धंविधानेनमन्वादिषुयुगादिषु हायनानिद्विसाहस्रंपितॄणांतृप्तिदंभवेत् अ

धिमासेपिइदंकर्तव्यं अत्रपिंडदानंनास्ति अथचैत्रशुक्लतृतीयायांमनोरथतृतीयाव्रतम् ईश्वरउवाच साधुपृष्टंत्वयादेविकृतवत्यापरिग्रहम् अ
स्येहधर्मपीठस्यमनोरथकृतःसति तएवविश्वभोक्तारोविश्वमान्यास्तएवहि येत्वांविश्वभुजामत्रपूजयिष्यंतिमानवाः विश्वेविश्वभुजोविश्वस्थित्यु
त्पत्तिलयप्रदे नरास्त्वदर्चकाश्चात्रभविष्यत्यमलात्मकाः मनोरथतृतीयायांयस्तेभक्तिंविधास्यति तन्मनोरथसंसिद्धिर्भवित्रीमदनुग्रहात् ना
रीवापुरुषोवापितद्व्रताचरणात्प्रिये मनोरथानिहप्राप्यज्ञानमंतेचलप्स्यते देव्युवाच मनोरथतृतीयायाव्रतंकीदृक्कथानकम् किंफलंकिं-
कृतंनाथकथयैतत्कृपांकुरु ईश्वरउवाच शृणुदेवियथापृष्टंभवत्याभवतारणम् मनोरथव्रतंचैतत्कृत्वाहुत्यमरंपरम् पुलोमतनयापू-
र्वंतितापपरमंतपः कंचिन्मनोरथंप्राप्तुनचापतपसःफलम् अपूपुजत्ततोमासंभक्त्यागौरीमहेश्वरम् गीतेनसरहस्येनकलकंठीरवेनाहि
तद्गानेनातिसंतुष्टोमृदुनामधुरेणच सुतालेनसुरंगेणधातुमात्रकलावता प्रोवाचचवरंशूलीप्रसन्नोस्मिपुलोमजे अनेनचसुगीतेनल
नयालिंगपूजया पुलोमजोवाच यदिप्रसन्नोदेवेशतदायोमेमनोरथः तंपूरयमहादेवमहादेव्याःप्रियंवद सर्वदेवेषुयोमान्यःसर्वदेवेषु
सुंदरः यायजूकेषुसर्वेषुयःश्रेष्ठःसोस्तुमेपतिः यथाभिलषितंरूपंयथाभिलषितंसुखम् यथाभिलषितंचायुःप्रसन्नोदेहिमेभव यदा
यदाचपत्यामेसंगःस्याच्चसुरेच्छया तदातदाचतंदेहंत्यक्त्वान्यंदेहमाप्नुयाम् सदाचदेवपूजायांममभक्तिरनुत्तमा ममपूजाभगवति-
जरामरणहारिणी भर्तुर्व्ययेपिवैधव्यंक्षणमात्रमपीहन ममभाविमहादेवपातिव्रत्यंचयातुमाम् ईश्वरउवा० पुलोमकन्येयश्चैषत्वयाका
रिमनोरथः लप्स्यसेव्रतचर्यायांतत्कुरुष्वजितेंद्रिया मनोरथतृतीयायाऽचरणेनभविष्यति तत्साफल्येव्रतंवक्ष्येतद्विधेहियथोदितम् तेनव्र
तेनचीर्णेनमहासौभाग्यदेनतु अवश्यंभविताबालेतवचैवमनोरथः पुलोमकन्योवाच कारुण्यवारिधेशंभोप्रणतार्तिहरप्रिय किंनामचा
थकाभक्तिःकापूज्यातत्रदेवता कदाचसाविधातव्याइतिकर्तव्यताचका इत्याकर्ण्यशिवोवाक्यंतांतुप्रीत्याजगादह ईश्वरउवा० मनोरथ-
तृतीयायांव्रतंपौलोमितच्छृणु पूज्याविश्वभुजागौरीचतुर्भुजविशालिनी वरदाभयहस्ताक्षसाक्षसूत्रःसमोदकः देव्याःपुरस्ताद्व्रतिनापू
ज्यआशाविनायकः चतुर्भुजस्त्र्यारुनेत्रःसर्वसिद्धिकरःप्रभुः चैत्रशुक्लतृतीयायांकृत्वावैदंतधावनम् सायंतनींचनिर्वर्त्यसंध्यांतिनृपांसुजाके

२७ द्विजदांपत्यं

यायाम्भेवेतिगृण्हीयाज्जितक्रोधोजितेंद्रियः संत्यक्तास्पृश्यसंभारंशुभचित्तकृतमानसः प्रातर्व्रतंचरिष्यामिमातर्विश्वभुजेनघे विधेहि
संसान्निध्यंमन्मनोरथसिध्धये नियमंचेतिसंगृत्यस्वपेद्रात्रौशुभंस्मरन् प्रातरुत्थायमेधावीविधायावश्यकंविधिम् शौचमाचमनंकृत्वाद
तकाष्ठंसमाहरेत् अशोकवृक्षस्यशुभंसर्वशोकविनाशनं नित्यंतनंचसंपाद्यविधिंविधिविदांवरः स्नात्वाशुक्लांबरःसायंगौरीपूजांसमाचरेत् आ
दौविनायकंपूज्यघृतापूपान्निवेदयेत् ततोर्चयेद्विश्वभुजामशोककुसुमैःशुभैः अशोकवर्तिनैवेद्यंधूपैश्चागरुसंभवैः कुसुमेनानुलिप्यादौए
कभुक्तंततश्चरेत् अशोकवर्तिसहितैर्घृतपूरैर्मनोहरैः एवंचैत्रतृतीयायांव्यतीतायांपुलोमजे चैत्रादिफाल्गुनांतासुतृतीयासुव्रतंचरेत् क्रमे-
णदंतकाष्ठानिकथयामितवानघे अनुलेपनवस्तूनिकुसुमानितथैवच नैवेद्यादिगजास्यस्यदेव्याश्चापिशुभव्रते अन्नानिचैकभक्तस्यशृणु
तानिफलासये जंब्वपामार्गखदिरजातीचूतकदंबकाः प्लक्षोदुंबरखर्जूरीबदरीदाडिमीतथा दंतकाष्ठद्रुमाएतेव्रतिनःसमुदाहृताः सिंदूराग
रुकस्तूरीचंदनंरक्तचंदनम् गोरोचनंदेवदारुपद्माक्षंचनिशाद्वयम् प्रीत्यानुलेपनंबालेयक्षकर्दमसंभवम् सर्वेषामप्यलाभेचप्रशस्तोय
क्षकर्दमः कस्तूरिकायाद्वौभागौद्वौभागौकुंकुमस्यच चंदनस्यत्रयोभागाःशशिनस्त्वेकएवहि यक्षकर्दमइत्येषसमस्तसुरवल्लभः अ-
नुलिप्याथकुसुमैरर्चयेद्दच्मितान्यपि पाटलीमल्लिकापद्मकेतकीकरवीरकैः उत्पलैराजचंपैश्चनंद्यावर्तैश्चराजभिः कुमारीभिःकर्णिका
रैरलाभेतच्छदैःसह सुगंधिभिःप्रसूनाद्यैःसर्वलाभेपिपूजयेत् करंभोदधिभक्तंचसचूतरसमंडकः फेणिकावटकाश्चैवपायसंचस-
शर्करम् समुद्गंसघृतंभक्तंकार्तिकेविनिवेदयेत् उदेरिकाश्चलड्डुकामाघेलपसिकाशुभा मुष्टिकाःशर्करागर्भाःसर्पिषापरिसाधिताः निवे
द्यफाल्गुनेदेव्यैसार्धंविघ्नजितामुदा निवेदयेद्यदन्नंहिएकभक्तेपितत्स्मृतम् अनिवेद्यनसंमूढोभुंजानोन्यपतेदधः प्रतिमासंतृतीयायामे
कमाराध्यवत्सरम् व्रतसंपूर्तयेकुर्यात्स्थंडिलेग्निसमर्चनम् जातवेदसमंत्रेणतिलाज्यद्रविणेनच शतमष्टाधिकंहोमंकारयेद्विधिनाव्रती
सदैवनक्तेपूजोक्तातदानक्तेतुभोजनम् नक्तएवहिहोमोयंनक्तएवक्षमापनम् गृहाणपूजांमेभक्त्यामातर्विघ्नजितासह नमोस्तुतेविश्वभु २८
जेपूरयाशुमनोरथम् नमोविघ्नकृतेतुभ्यंनमआशाविनायक त्वंविश्वभुजयासार्द्धंममदेहिमनोरथम् एतौमंत्रौसमुच्चार्यपूज्यौगौरीवि

नाग्नको व्रतक्षमापनेदेव्याःपर्यंकस्तूलिकान्वितः आचार्यंचसपत्नीकंपर्यंकेउपवेश्यच व्रतीसमर्चयेद्वस्त्रैःकरकर्णविभूषणैः दद्यात्स्वयस्ति
नीगांच्चव्रतस्यपरिपूर्तये मनोरथतृतीयायांव्रतमेतन्मयाकृतम् न्यूनातिरिक्तंसंपूर्णमेतदस्तुभवद्गिरा इत्याचार्यंसमागच्छेत्तथेत्युक्तश्चते
नवै प्रातश्चतुर्थ्यांसंपूज्यचतुरश्चकुमारकान् एवंसंपूर्णनायातिव्रतमेतत्स्मनिर्मलम् चिंतितंलभतेकामंव्रतस्यास्यनिषेवणात् इतिश्री
स्कंदपुराणेचैत्रशुक्लतृतीयायांमनोरथव्रतोद्यापनंसंपूर्णम् अथचैत्रशुक्लप्रतिपदमारभ्यत्रिरात्रपूर्वकंतृतीयायांअरुंधतीव्रतम् तत्रस्त्री
णामेवाधिकारः अवैधव्यादिफलश्रवणात् तत्रादौसंकल्पः ममइहजन्मनिजन्मांतरेवावाल्वैधव्यनाशार्थम् अनेकसौभाग्यपुत्ररूपसं-
पत्तिसमृद्ध्यर्थंअरुंधतीव्रतमहंकरिष्ये निर्विघ्नतासिध्यर्थंगणपतिपूजनंस्वस्तिवाचनंआचार्यवरणंचकरिष्ये पश्चात्पूजादिआचार्येण
कारयेत् वैशाखेश्रावणेमासिमाघेवाकार्तिकेतथा प्रतिपत्प्रातरुत्थायस्नात्वाशुक्लतिलामलकैः प्रतिपदिदिनेनक्तंद्वितीयायामयाचितम् तृ
तीयायामुपोष्यंचआचार्येणततःसह रात्रौअधिवासनम् सुवर्णनिर्मितं दिव्यांद्विभुजं प्रतिमात्रयम् अरुंधतींवसिष्ठंच ध्रुवंचैवपृथक्
न्यसेत् शिलोपरिसर्वतोभद्रस्थापनं कलशंधातुमयंतदुपरिताम्रपात्रप्रतिमायांअग्न्युत्तारणंकृत्वा तदुपरिअरुंधतींवसिष्ठंध्रुवंचस्था
पयेत् कुंकुमाक्षतैःपूजयेत् अथअरुंधतीपूजा अष्टकर्णिकयायुक्तेमंडलेपूजयेत्तुताम् अरुंधतींमहादेवींवसिष्ठसहितांसतीम्
आवाहनं अरुंधतिमहादेविसर्वसौभाग्यदायिनि दिव्यंसुचारुवेषंचआसनंप्रतिगृह्यताम् आसनं सुचारुशीतलंदिव्यंनानागंध
सुवासितम् पाद्यंगृहाणदेवेशिअरुंधतिनमोस्तुते पाद्यम् अरुंधतिमहाभागेवसिष्ठप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासह-
पतिव्रते अर्घ्यं गंगातोयंसमानीतंसुवर्णकलशेस्थितम् आचम्यतांमहाभागेवसिष्ठसहितेनघे आचमनीयम् गंगासरस्वतीरे
वापयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं नानारंगसमुद्भूतंदिव्यंचारुमनोहरम् वस्त्रंगृहाणदेवेशि
अरुंधतिनमोस्तुते वस्त्रं कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितम् गृहाणत्वंमयादत्तंअरुंधतिनमोस्तुते उपवस्त्रं कर्पूरकुंकु
मैर्युक्तंहरिद्रादिसमन्वितम् कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यताम् चंदनम् ० हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितं मयानिवेदि

तंमन्त्यागृहाणपरमेश्वरि सौभाग्यद्रव्या· माल्यादीनिसुगं· पुष्पं· वनस्पतिरसोद्भूतो· धूपं· आज्यंचवर्ति· दीपं· अन्नंचतुर्विधंस्वादुरसैःष-
ड्भिःसमन्वितम् नैवेद्यंगृह्यमांदेविप्रसीदपरमेश्वरि नैवेद्यं· पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यता-
म् तांबूलं· इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं· हिरण्यगर्भगर्भस्थंहेमबीजंविभाव-
सोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे दक्षिणां· पुत्रान्देहिधनंदेहिसौभाग्यंदेहिसुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमो-
स्तुते॥ प्रार्थनां· अरुंधतिमहाभागेवसिष्ठप्रियवादिनि सौभाग्यंदेहिमेदेविधनंपुत्रांश्चसर्वदा उत्तरार्घ्यं द्विभुजांचारुसर्वांगींसाक्ष-
सूत्रकमंडलुम् प्रतिमांकांचनींकृत्वानामभिःपरिपूजयेत् ॐ देववंद्यायनमः पादौपूजयामि लोकवंद्यायै॰जानुनीपू॰ संपत्तिदायिन्यै॰
कटीपू॰गंभीरनाभ्यै॰नाभिंपू॰लोकधात्र्यै॰ स्तनौपू॰ जगद्धात्र्यै॰कंठंपू॰ शांत्यैन॰ बाहूपू॰वरप्रदायै॰हस्तौपू॰ धृत्यैनमः मुखंपू॰अरुंधत्यै॰शि-
रःपू॰सकलप्रियायै॰शिरःपू॰वसिष्ठ प्रियायै॰वसिष्ठध्रुवसहिता॰सर्वांगंपूजयामि नमोदेव्याइतिनीराजनं·पुष्पांजलिं·वायनंदद्यात् वंश-
पात्रेस्थितंपूर्णंवाणकंघृतसंयुतं अरुंधतीप्रीयतांचब्राह्मणायददाम्यहम् वायनं सुवर्णमूर्तिसंयुक्तांवसिष्ठध्रुवसंयुताम् अरुंधतीं
सोपचारांब्राह्मणायददाम्यहं मूर्तिदानमंत्रः गच्छदेवियथास्थानंसर्वालंकारभूषिता अरुंधतिनमस्तुभ्यंदेहिसौभाग्यमुत्तमं इतिविस-
र्जनम् इतिपूजनम् अथकथा स्कंदउवाच पुरावृत्तमिदंविप्राःशृणुध्वंव्रतमुत्तमम् आसीत्कश्चित्पुराविप्रःसर्वशास्त्रविशारदः तस्यै-
काकन्यकाजातारूपेणाप्रतिमाभुवि ततोविवाहंसम्यग्वैपितातस्याकरोद्द्विजः कुलशीलवतेदत्तासाकन्यावरवर्णिनी अचिरेणैवकाले-
नभर्त्तातस्यामृतोद्विजः बालरंडातुसाजातानिर्वेदादगमद्गृहात् यमुनातीरमासाद्यचकारविपुलंतपः एकभुक्त्यादिकैश्चैवकृच्छ्रचांद्राय-
णैस्तथा· मासोपवासनियमैरात्मानंपावयेत्सती कदाचिदागतस्तत्रभ्रमन्गौर्यासदाशिवः यमुनातीरमासाद्यवनितांतांददर्शसा
कृपयाचशिवागौरीमहादेवमुवाचसा देवकेनेदृशींप्राप्तासाबाल्येवैधव्यतांदशाम् वदमांकृपयादेवकृपांकुरुदयानिधे महादेवउवा॰ अयंवि-
प्रःपुरागौरिकुलशीलयुतोभुवि तेनकन्यापरीणीतासुरूपायुवतीसती॥सतांविवाह्यतरुणींविदेशमगमद्द्विजः ततोबहुतिथेकालेसापश्यद्भ्र-

र्नृपगमम् नागतस्तुतदाविप्रोयावज्जीवंगनोद्विजः तस्याजन्मगतंसर्वंविफलंपतिनाविना तेनपापेनविप्रोसौनारीत्वंप्राप्तवान्शिवे स्वना
रीयः परित्यज्यनिर्दोषांकुलसंभवाम् यातिदेशांतरंचाथअंधाइवमहार्णवे परदाररतोवास्यादन्यांवाकुरुतेस्त्रियम् सोन्यजन्मनिदेवेशि
स्त्रीभूत्वाविधवाभवेत् यानारीनृपतिंत्यक्त्वामनोवाक्कायकर्मभिः रहःकरोतिवैजारंगत्वावापुरुषांतरम् सोगान्पुरुषान्यावासेविनदैवम्
मदासती तेनकर्मविपाकेनसानारीविधवाभवेत् स्वपत्नीकुलसंभूतांपतिव्रतरतांसतीं अनुकूलांपरित्यज्यपरांयोयातिस्वेच्छया सप
पीजायतेन्यस्मिन्स्त्रीहीनोविप्रजन्मनि अनेनसदृशंदेविलोकेस्मिन्नास्तिपातकम् नवैधव्यात्परोव्याधिर्नवैधव्यात्परोज्वरः नवैधव्यात्प
रःशोकोनवैधव्यात्परोंकुशः निरयोनचवैधव्यात्कष्टंवैधव्यतानृषु तेनपापेनबहुनाजायतेबालरंडका इतितस्यवचःश्रुत्वासागौरीविस्मि-
ताभवत् पप्रच्छतंमहादेवंगौरीसाकरुणान्विता केनेदृशंमहत्पापंबालवैधव्यदायकम् नश्यतेकर्मणाकेनतन्मावदकृपांकुरु म
हादेवउवाच शृणुदेविप्रवक्ष्यामिबालवैधव्यनाशनम् अरुंधतीव्रतंपुण्यंनारीसौभाग्यदायकम् यत्कृत्वाबालवैधव्यान्मुच्यतेनात्रसंश
यः श्रुतमेतत्तदाविप्रागौर्याःशंकरतोव्रतम् यमुनातीरमासाद्यउपदिष्टंतदाद्विजाः तस्यैनार्यैमहादेव्याकारितंव्रतमुत्तमम् तेनपुण्येनमहद्-
ताव्रतजेनमुनीश्वराः सानारीचागमत्स्वर्गंमुक्त्वावैधव्यतांतदा इत्थंव्रतंश्रुतंसम्यगुपदिष्टंमुनीश्वराः कृतमन्यैश्चबहुभिस्तेपिमुक्तामु
नीश्वराः अरुंधतीव्रतमितंसदाकार्यंमुनीश्वराः नारीवैधव्यतोमुच्येत्सौभाग्यंप्राप्नुयात्परम् इतिश्रीस्कंदपुराणेअरुंधतीव्रत
म् अथउद्यापनम् युधिष्ठिरउवाच उद्यापनविधिंब्रूहिअरुंधत्याःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्ण
हेतवे कृष्णउवाच अरुंधतीव्रतंवक्ष्येनारीसौभाग्यदायकम् येनचीर्णेनवैसम्यक्नारीसौभाग्यमाप्नुयात् जायतेरूपसंप
न्नापुत्रपौत्रसमन्विता वसंतेतुसमासाद्यतृतीयायांयुधिष्ठिर माघेवामाधवेचैवश्रावणेकार्तिकेयवा स्नानंकृत्वातुवैसम्यक्त्रिरात्रोपो
षितासती मिथुनानिचचत्वारिसमाहूयपतिव्रता पूजयेत्तुच्यतांचैवंदंपत्यंतथासतेः कुंकुमागरुकस्तूरीकर्पूरमृगनाभिभिः शिला
पटेचसंस्थाप्यनीरकल्पणान्वितम् अष्टकेनमन्त्रयुक्तेनरक्तसूत्रेणवेष्टितम् आवाहयेदरुंधतींवसिष्ठप्राणसंमितां पतिव्रतानांसर्वां

सां मुरव्यां वेदव भामिनीं द्विभुजां चारुसर्वांगीं साक्षसूत्रकमंडलुम् प्रतिमां कांचनीं कृत्वा नामभिः परिपूजयेत् वसिष्ठं च ध्रुवं चैव प्रतिमां प्र पूजयेद्वुता दूववंदोनमः पादौ जानुनी लोकवंदिते कटिं संपूजयेत्तस्याः सर्वसंपत्तिदायिनीम् नाभिं गंभीरनाभ्यैतु लोकधात्र्यै तथास्तनौ जगद्धात्र्यै तथा स्कंधौ बाहू शांत्यै नमस्तथा हस्तौ तु वरदायै तु मुखं धृत्यै नमः पुनः अरुंधत्यै तथा पूज्यं शिरस्तु सकलप्रियम् एवं संपूज्य नांदैवी गंधपुष्पोपचारकैः पूजयित्वा सतीं देवीं ततश्चार्घ्यं प्रदापयेत् अरुंधति महाभागे वसिष्ठप्रियवादिनि सौभाग्यं देहि मे देवि धनं पुत्रांश्च सर्वदा पुत्रान्देहि धनं देहि सौभाग्यं देहि सुव्रते अन्यांश्च सर्वकामांश्च देहि देवि नमोस्तु ते सुवासिन्यो थ संपूज्याः समामिद्दिवसं तदा शुभगंधाक्षतैः पुष्पैर्द द्यात्सूर्पेण भक्षकान् होमं चैव तदा कुर्यात्समिद्भिश्च तिलैः पृथक् अष्टोत्तरशतं संख्या प्रार्थनामंत्रतः सुधीः मिथुनानि च संपूज्य भूषणाच्छा दनादिभिः नानाविधोपचारैश्च चतुर्विंशतिसंख्यया आचार्याय च गां दद्याद्वस्त्राण्याभरणानि च शय्यां सोपस्करां दद्यात्कांस्यपात्रं सदीपकं आदर्शं चामरं चैव अश्वं दद्यात्स भोजनम् यथावद्भोजयित्वा शक्त्या यः सूर्पान्सुसमोदकान् मोदकान्कांचनं चैव तथा वस्त्रं यथाविधि पो लिकाघृतपूर्णाश्च पूरिकाश्च विशेषतः सोहालिकाश्च दातव्या एकैकं द्विगुणं तथा भोजनद्वयपर्याप्तं दीनानंधांश्च पूजयेत् अनेनैव विधानेन भामिनी कुरुते व्रतं अवैधव्यत्वमाप्नोति तथा जन्मसहस्रकं पुत्रपौत्रसमायुक्ता धनधान्यसमावृता जीवेद्वर्षशतं साग्रं सह भर्त्रा महाव्रता एवमभ्यर्चयित्वा तु पदं गच्छेदनामयं देवभार्या यथा स्वर्गे ऋषिभार्या तथैव च राजते च महाभागा सर्वकामसमृद्धिभिः इति श्रीस्कंदपुराणे अरुंधतीव्रतोद्यापनम् अथ वैशाखशुक्लतृतीयायां भविष्योत्तरोक्तमक्षय्यतृतीयाव्रतम् तीर्थे वा तद्दिने स्नानं तिलैश्च पितृतर्पणम् दानं धर्मघटादीनां मधुसूदनपूजनम् माधवे मासि कुर्वीत मधुसूदनतुष्टिदम् तुलामकरमेषेषु प्रातः स्नानं विधीयते हविष्यं ब्रह्मचर्यं च महापातकनाशनम् वैशाखस्नाननियमं ब्राह्मणानामनुज्ञया मधुसूदनमभ्यर्च्य कुर्यात्संकल्पपूर्वकम् वैशाखं सकलं मासं मेष संक्रमणे रवेः प्रातः सनियमः स्नास्ये प्रीयतां मधुसूदनः मधुसूदनसंतोषाद्ब्राह्मणानामनुग्रहात् निर्विघ्नमस्तु मे पुण्यं वैशाखस्नानमन्वहम् माधवे 30
मेषगे भानौ मुरारे मधुसूदन प्रातः स्नानेन मे नाथ फलदः पापहा भव यदा न जायते नामतस्यतीर्थस्य भो द्विजाः तत्र उच्चारणं कार्यं विष्णुतीर्थमि

दंत्विति अपिसम्यग्विधानेननारीवा पुरुषोपिवा प्रातःस्नानः सनियमः सर्वपापैः प्रमुच्यते वैशाखेविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश कृ
त्स्नशः सर्वपापेभ्योमुच्यतेनात्रसंशयः इतिवैशाखस्नानविधिर्भविष्ये इयमेवतृतीयापरशुरामजयंती साचप्रदोषव्यापिनी ग्राह्या तदुक्तं
भार्गवार्चनदीपिकायांस्कांदभविष्ययोः वैशाखस्यसितेपक्षेतृतीयायांपुनर्वसौ निशायाः प्रथमेयामेरामाख्यः समयेहरिः रेणुकायास्तुयोगर्भाद
वतीर्णोविभुःस्वयं दिनद्वयेतथाव्याप्तौअंशतः समव्याप्तौचपरा शुक्लतृतीयावैशाखेशुद्धोपोष्यादिनद्वये निशायापूर्वयामेचेदुत्तरान्
यत्रपूर्विका नचैववैशाख तृतीया अक्षय्यतृतीयासाचपूर्वाह्णव्यापिनी ग्राह्या दिनद्वयेतद्व्याप्तौतुपरैवेति इयंयुगादिरपि यामन्वाद्या
युगाद्याश्चतिथयस्तासुमानवः स्नात्वाहुत्वाचजप्त्वाचदत्त्वानंतफलंलभेत् श्राद्धेपिपूर्वाह्णव्यापिनी ग्राह्या पूर्वाह्णेतुसदाकार्याः शुक्लामनुयु
गादयः दैवेकर्मणिपैत्र्येचकृष्णेचैवापराह्णिका वैशाखस्यतृतीयांचपूर्वाविद्धांकरोतिवै हव्यंदेवानगृह्णंतिकव्यंचापितरस्तथा इतिवैशा
खस्यतृतीयायांश्रीसमेतंजगद्गुरुं नारायणंपूजयेच्चपुष्पधूपविलेपनैः योस्यांददातिकरकान्वारिव्यंजनसंयुतान् सयातिपुरुषोवीरलोका
न्वैहेममालिनः वैशाखशुक्लपक्षेतुतृतीयायांतथैवच गंगातोयेनरः स्नात्वामुच्यतेसर्वकिल्बिषैः श्रीकृष्ण० बहुनात्रकिमुक्तेनकिंबह्वक्षरमालया वैशा
खस्यसितामेकांतृतीयामक्षयांशृणु तस्यांस्नानंतपोहोमःस्वाध्यायः पितृतर्पणं दानंचक्रियतेतस्यांतत्सर्वस्यादिहाक्षयं आदिः कृतयुग
स्येयंयुगादिस्तेनकथ्यते सर्वपापप्रशमनी सर्वसौख्यप्रदायिनी पुरामहोदयेपार्थवणिगासीत्सनिर्धनः प्रियंवदः सत्यव्रतोदेवब्राह्मण
पूजकः पुण्याख्यानैकचित्तोभूत्कुटुंबव्याकुलोपिसन् तेनश्रुतावाच्यमानातृतीयारोहिणीयुता यदास्याद्बुधसंयुक्तातदासातुमहत्फला
यस्यांयद्दीयतेकिंचिदक्षय्यंस्यात्तदेवहि इतिश्रुत्वाचगंगायांसंतर्प्यपितृदेवताः गृहमागत्यकरकान्सान्नानुदकसंयुतान् अन्नपूर्णान्
बृहत्कुंभान्जलेनविमलेनच यवगोधूमलवणान्सक्तुदध्योदनंतथा इक्षुक्षीरविकारांश्चसहिरण्यांश्चशक्तितः शुचिः शुद्धेनमनसाब्राह्मणेभ्यो
ददौवणिक् भार्ययावार्यमाणोपिकुटुंबासक्तचित्तया तावत्तस्थौस्थिरेसत्वेमत्वासर्वंविनश्वरं धर्मासक्तमतिः पार्थकालेनबहुनाततः जगामपं
चत्वमसौवासुदेवमनुस्मरन् ततः सक्षत्रियोजातः कुशावत्यांयुधिष्ठिर बभूवचाक्षयातस्यसमृद्धिर्धर्मसंयुता ईजेसचमहायज्ञैः समाप्तवरदक्षि

णैः सद्दोगोहिरण्यानिदानान्यन्यान्यहर्निशम् बुभुजेकामतोभोगानदीनांधांस्तर्पयन्च्छनैः तथाप्यक्षयमेवास्यांक्षयंयातिनतद्धनं श्रद्धा
पूर्वंतृतीयायांयद्दत्तंविभवंविना इत्येतच्चसमाख्यातंश्रूयतामत्रयोविधिः तृतीयायासमाख्यातःस्नात्वासन्तर्प्यदेवताः एकभक्तंतदाकुर्याद्धा
स्त्रदेवंप्रपूजयेत् तस्याकार्योयवैर्होमोयवैर्विष्णुंसमर्चयेत् यवान्दद्याद्द्विजातिभ्यः प्रयतःप्रार्थयेद्द्विजान् उदकुंभान्सकरकान्सान्नान्सर्वरसैः
सह यवगोधूमचणकान्सक्तुदध्योदनंतथा ग्रैष्मकंसर्वमेवान्नसम्यक्दानेप्रशस्यते तृतीयायांतुवैशाखेरोहिण्यृक्षेप्रपूज्यच उदकुंभप्र
दानेनशिवलोकेमहीतले तत्रमंत्रः एषधर्मघटोदत्तोब्रह्मविष्णुशिवात्मकः अस्यप्रदानात्तृप्यन्तुपितरोपिपितामहाः गंधोदकतिलैर्मि
श्रंसान्नंकुंभंसदक्षिणम् पितृभ्यःसंप्रदास्यामित्यक्षय्यमुपतिष्ठतु छत्रोपानत्प्रदानंचगोभूकांचनवाससाम् यद्यदिष्टंकेशवस्यतद्देय
मविशंकया एतत्तेसर्वमाख्यातंकिमन्यच्छ्रोतुमिच्छसि अनाख्येयंनमेकिंचिदस्तिस्वल्पंतुतेनघ नास्यांतिथौक्षयमुपैतिहुतंचदत्तंतेना
क्षयेतिकथितामुनिभिस्तृतीया उद्दिश्यदैवतपितॄन्क्रियतेमनुष्यैस्तच्चाक्षयंभवतिभारतसर्वमेव इतिश्रीभविष्ये अक्षय्यतृतीयाव्रत
म् अस्यामेवविष्णुधर्मोत्तरेपिउक्तम् वैशाखशुक्लपक्षेतुतृतीयायामुपोषितः रात्रौभुक्तेवत्सरेतुमन्वादिषुयुगादिषु अभिस्व
दृष्टिमंत्रंचअष्टोत्तरशतंजपेत् कृतोपवासाःसलिलंयेयुगादिदिनेषुच दास्यंत्यन्नादिसहितंतेषांलोकामहोदयाः अक्षय्यफलमाप्नोति-
सर्वस्यसुकृतस्यच तथासाकृत्तिकोपेताविशेषेणचपूजिता तत्रजप्तंहुतंदत्तंसर्वमक्षय्यमुच्यते अक्षय्यासातिथिस्तस्मात्तस्यांसुकृतम
क्षयं अक्षतैःपूज्यतेविष्णुस्तेनसाप्यक्षयास्मृता अक्षतैस्तुनरःस्नातोविष्णोर्दत्वातथाक्षतान् सत्कृत्यसंस्कृतांश्चैवहुत्वाचभृगुनंदन एका
क्षय्यतृतीयायांसर्वासांतुफलंलभेत् अत्रैवपरशुरामजयंतीदोलोत्सवश्चहेमाद्रौभविष्ये इतिअक्षय्यतृतीयाव्रतंसंपूर्णं अथज्येष्ठशु
क्लतृतीयायांरंभाव्रतं तदुक्तंमाधवीयेभविष्ये कृष्णउवाच भद्रेकुरुष्वयत्नेनरंभाख्यव्रतमुत्तमं ज्येष्ठशुक्लतृतीयायांस्नात्वानियमवत्सरा
पूर्वविद्धातिथिर्ग्राह्यातत्रैवव्रतमाचरेत् बृहत्तपानथारंभासावित्रीवटपैतृकी कृष्णाष्टमीचभूताचकर्तव्यासंमुखीतिथिः इतिरंभाव्रतनिर्ण
यः अथश्रावणशुक्लतृतीयायांमधुस्रवाख्यागुर्जरेषुप्रसिद्धा सापरयुताग्राह्या अथाचारप्राप्तंश्रावणशुक्लतृतीयायांस्वर्णगौरीव्रत

म. तच्च कर्नाटके देशे भाद्रपद शुक्ल तृतीयायां प्रसिद्धं तत्र संकल्पः मम इह जन्मनि जन्मांतरे च अक्षय्य सौभाग्य प्राप्ति कामाया: पुत्र पौत्रादि
धन धान्यैश्वर्य प्राप्त्यर्थं श्री परमेश्वर प्रीत्यर्थं स्वर्णगौरी व्रतमहं करिष्ये तत्र पूजा देवि देवि समागच्छ प्रार्थयेऽहं जगत्पते इमां मया कृतां पूजां
गृहाण सुरसत्तमे आवाहनं भवानि त्वं महादेवि सर्व सौभाग्य दायके अनेक रत्न संयुक्तमासनं प्रति गृह्यताम् आसनम् सुचारु शीत
लं दिव्यं नाना गंध सुवासितम् पाद्यं गृहाण देवेशि महादेवि नमोऽस्तु ते पाद्यम् श्री पार्वति महाभागे शंकर प्रियवादिनि अर्घ्यं गृहाण कल्या
णि भर्त्रा सह पतिव्रते अर्घ्यं गंगातोय समानीतं सुवर्ण कलशे स्थितं आचम्यतां महाभागे भद्रेण सहितेऽनघे आचम. गंगा सरस्वती रेवा का
वेरी नर्मदा जलैः स्नापितासि मया देवि तथा शांतिं कुरुष्व मे स्नानं सर्व भूषाधिके सौम्ये लोक लज्जा निवारणे मयोपपादिते तुभ्यं वाससी प्र
तिगृह्यतां वस्त्रं. कंचुकी. आचम. कर्पूर कुंकुमैर्युक्तं हरिद्रादि समन्वितं कस्तूरिका समायुक्तं चंदनं प्रतिगृह्यतां चंदनं हरिद्रा कुंकुमं चैव
सिंदूरं कज्जलं तथा सौभाग्य द्रव्य संयुक्तं गृहाण परमेश्वरि सौभाग्य द्रव्यं. माल्यादीनि तिपुष्पाणि. देवद्रुमरसोद्भूतः कालागरु समन्वि
तः आघ्रेयतामयं धूपो भवानि घ्राण तर्पणः धूपं आज्यं चेति दीपं. अन्नं चतुर्विधं स्वादु रसैः षड्भिः समन्वितं भक्ष्य भोज्य समायुक्तं नैवेद्यं प्र
तिगृह्यतां नैवेद्यं. आचम. कर्पूरैला लवंगादि तांबूलं दलसंयुतं क्रमुकादि फलं चैव तांबूलं प्रतिगृह्यतां तांबूलं इदं फलं मया देवि स्थापितं पु
रतस्तव तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि फलं हिरण्यगर्भेति दक्षिणा नीराजनं नमस्कारः प्रदक्षिणा पुष्पांजलिः पुत्रान्देहि धनं
देहि सौभाग्यं देहि सुव्रते अन्यांश्च सर्व कामांश्च देहि देवि नमोऽस्तु ते इति प्रार्थना भवान्याश्च महादेव्या व्रत संपूर्ण हेतवे प्रीतये हि द्विजव
र्याय वाणकं प्रददाम्यहम् स्वलंकृताः सुवासिन्यः पातिव्रत्येन भूषिताः मम काम समृद्ध्यर्थं प्रतिगृह्णंतु भूषिताः इति स्व
र्णगौरी पूजा अथ कथा पुरा कैलास शिखरे सिद्ध गंधर्व सेविते उमया सहितः स्कंदः पप्रच्छ शिवमव्ययम् स्कंद उवाच करु
णासागरेशान लोकानां हित काम्यया व्रतं कथय देवेश पुत्र पौत्र प्रवर्धनम् शंकर उ० साधु पृष्टं महाभाग कथयामि षडानन स्वर्णगौरी व्रतं ना
म सर्व संपत्करं नृणां पुरा सरस्वती तीरे विमलाख्या महापुरी तत्र चंद्रप्रभो नाम राजा भूद्भुवनदीपकः महादेवी विशालाख्यौ भार्ये बालमृगेक्षणे तयोः प्रियतरा

ज्येष्ठातस्यासीन्नृपतेर्मता सकदाचिद्वनंभेजेमृगयासक्तमानसः तत्रशार्दूलवाराहवनमाहिषकुंजरान् हत्वाश्रमवृष्णार्तोददर्शसमहत्स
रः चक्रोरचक्रकारंडखंजरीकशताकुलम् उत्फुल्लकल्हरोद्दामकुमुदोत्पलमंडितम् अपूर्वमवनीशोसौददर्शाप्सरसांगणम् समासाद्यस
रस्तीरंपीत्वाजलमनुत्तमम् भक्त्यागौरीमर्चयंतंददर्शाप्सरसांगणम् किमेतदितिपप्रच्छराजाराजीवलोचनः स्वर्णगौरीव्रतमिदंक्रियतेस्मा-
भिरुत्तमम् सर्वसंपत्करन्नृणांतत्कुरुष्वनृपोत्तम राजोवाच विधानंकीदृशंब्रूतकिंफलंव्रतचारणात् ताऊचुर्योषितःसर्वानभेमासितृती
यके प्रारब्धव्यंव्रतमिदंगौर्याःषोडशवत्सरान् तच्छ्रुत्वासोपिजग्राहव्रतंनियतमानसः गुणैःषोडशसंयुक्तंदोरकंदक्षिणेकरे बबंधानेनमंत्रे-
णकरिष्येहंव्रतंतव ततःकृत्वाव्रतंदेव्याअगमन्निजमंदिरे विशालाक्ष्यास्ततोदृष्टोराज्ञागौर्याःप्रपूजकः बद्धंतंदोरकंहस्तेदृष्ट्वाचपतिकोपना
नकर्तव्यंनकर्तव्यमितिराजावदत्यपि त्रुटित्वासाचनिक्षेपबाह्यशुष्कतरूपरि तेनसंस्पृष्टमात्रेणतरुःपल्लवतांगतः तद्द्वितीयाततोदृष्ट्वाविस्म-
याश्चर्यान्विताभवत् तन्मूलेदोरकंछिन्नंगृहीत्वासाबबंधह ततस्तद्व्रतमाहात्म्यात्सातिप्रियतराभवत् देवीव्रतापचारेणसात्यक्तादुःखितावने भय
योसामहादेवींध्यायंतीनित्यमन्विता मुनीनामाश्रमेपुण्येनिवसंतीत्यपिक्वचित् निवारितामुनिवरैर्गच्छपापेयथासुखम् धावंतीविपिनंघो-
रंगणाध्यक्षंददर्शह तेनदृष्टापिसागौरीरक्षाम्यहमुपेक्षिताम् ततोददर्शाग्रतरुंगच्छंतीचसरोवरम् ततोवनश्रियंचाग्रेसर्वाभरणभूषिता
पश्यंतीशनकैस्तद्वद्व्रजंतीचैवमानुषी तेस्तैर्निराकृतादृष्ट्वानिर्विण्णानिषसादह ततस्तत्कृपयागौरीप्रादुरासीन्महासती तांदृष्ट्वादंडवद्भू
मौनत्वास्तुत्वानृपप्रिया जयदेविनमस्तुभ्यंजयभक्तवरप्रिये जयशंकरसर्वांगेमंगलेसर्वमंगले ततोलब्ध्वावरंभक्त्यागौरीमभ्यर्च्यतद्व्रतं चक्रे
देवीपदंतस्यैददौसौभाग्यसंपदः इतितस्याःप्रसादेनसर्वान्भोगानवाप्यच अंतेशिवपुरंप्राप्तःकांताभिःसहितोनृपः यच्छोभनंव्रतमिदंकथि-
तंशिवायाःकुर्यान्नमप्रियतरोभविताचगौर्याः प्राप्यश्रियंस्वसततंभुविशत्रुसंघान्निर्जित्यनिर्मलपदंसहसाप्रयाति इतिश्रीस्कंदपुराणे
गौरीखंडेस्वर्णगौरीव्रतकथा अथोद्यापनं युधिष्ठिरउवाच उद्यापनविधिंब्रूहितृतीयायाःसुरेश्वर भक्तितःश्रोतुमिच्छा-
मिभ्रमसंपूर्तिहेतवे कृष्णउवाच उद्यापनविधिंवक्ष्येसावधानेनवैशृणु त्रिंशद्दंडप्रमाणेनप्रमितंदक्षिणोत्तरे प्रत्यक्प्रागपिराजेंद्रनव-

गोचर्ममिष्यते गोचर्ममात्रं संलिप्य गोमयेन विचक्षणः मंडपं कारयेत्तत्र नानावर्णैः सुशोभनम् गृहमंडलपार्श्वे तु पद्ममष्टदलं लिखेत् तन्मध्ये स्था
पयेत्कुंभमव्रणं मृन्मयं शुभम् ताम्रपात्रं प्रकुर्वीत पलैः षोडशभिस्तथा तदर्धार्धेन वा कुर्याद्वित्तशाठ्यं विवर्जयेत् कर्षमात्रसुवर्णेन प्रति
मां कारयेद्बुधः तदर्धं मध्यमं प्रोक्तं तदर्धं तु कनिष्ठकम् कृत्वा रूपं प्रयत्नेन पार्वत्याश्च हरस्य च अथ ताम्रमये पात्रे प्रतिमां तत्र विन्यसेत्
श्वेतवस्त्रयुगच्छन्नं श्वेतयज्ञोपवीतिनम् भाजनं च तिलैः पूर्णं कलशोपरि विन्यसेत् पार्वत्यास्तु युगं दद्यात्तस्योपरि यथाविधानतः वेदो
क्तेन प्रतिष्ठा च कर्तव्या तु यथाविधि पंचामृतेन स्नपनं कृत्वा देवस्य चोत्तमम् स्नानं च कारयेत्पश्चात्ततः पूजां समाचरेत् चंदनेन सुगंधे
न सुपुष्पैश्च प्रपूजयेत् धूपं च कल्पयेद्गंधं चंदनागरुसंयुतम् नानाप्रकारैर्नैवेद्यं तथा दीपं च कारयेत् अर्घ्यं च पूजयेद्भक्त्या गंधपुष्पैः
फलाक्षतैः आवाहनादिकर्तव्यं पुराणागमसंभवैः कार्या विधानतः पूजा भक्तिश्रद्धाविधानतः देवदेव समागच्छ प्रार्थयेऽहं जगत्पते इमां म
या कृतां पूजां गृहाण सुरसत्तम एवं पूजा प्रकर्तव्या रात्रौ जागरणं ततः गीतनृत्यादिसंयुक्तं कथाश्रवणपूर्वकम् अर्चयेत्पूर्ववद्देवं पश्चाद्धो
मं समाचरेत् स्वगृह्योक्तविधानेन कृत्वाग्निस्थापनं ततः प्रारभेच्च ततो होमं नवग्रहपुरःसरम् तिलांश्च यवसंमिश्रानाज्येन च परिप्लुतान्
संकर्षणेन मंत्रेण गौरीमंत्रेण वा शिवम् एवं समाप्य होमं तु तत्राचार्यं प्रपूजयेत् अर्घ्यपुष्पप्रदानैश्च वस्त्रालंकारभूषणैः शक्त्या सदक्षि
णां दद्यात्प्रचारे गोऽधिकां मताम् धेनुं सदक्षिणां दत्वा सुशीलां च पयस्विनीम् स्वर्णशृंगीं रौप्यखुरां कांस्यदोहनसंयुताम् रत्नपुच्छां च
रूप्ययुतां ताम्रपृष्ठामलंकृताम् सवत्सामव्रणां भद्रां धेनुं दद्यात्प्रयत्नतः सुवर्णेन समोपेतामाचार्याय च साधने षोडशभिः प्रकारैश्च प
क्वान्नैः प्रीणयेत्सदा षोडशप्रमितैर्दद्याद्ब्राह्मणेषु प्रयत्नतः वंशपात्रस्थितैः पश्चात्पक्वान्नवायनैः शुभैः अन्येभ्यो ब्राह्मणेभ्यश्च दक्षिणां
च प्रयत्नतः बंधुभिः सह भुंजीत नियतश्च परेऽहनि एवं कृत्वा भवेत्पार्थ परिपूर्णं व्रतीयतः इति श्रीस्कंदपुराणे स्वर्णगौरीव्रतोद्यापनम्
अथ सुकृततृतीया श्रावणशुक्लतृतीयायां सुकृतव्रतम् सा मध्याह्नव्यापिनी ग्राह्या शौनक उवाच सर्वकामप्रदानानि व्रतानानि क
थितानि वै व्रतं कथय यत्नेन येन श्रेयोऽहमाप्नुयाम् सूत उवाच साधु साधु महाभाग लोकानां हितकाम्यया कथयामि व्रतं दिव्यं यो

पितोफलदायकम् कृष्णस्यावरजासाध्वीसुभद्रानामविश्रुता रूपलावण्यसंपन्नासुभगाचारुहासिनी गांडीवधन्वनश्चासौयोषितान्व
वराप्रिया त्रैलोक्याधिपतिःकृष्णस्तस्याहंभगिनीप्रिया इतिगर्वसमाविष्टानकिंचिदकरोच्छुभम् कलौपियस्यआज्ञांवैशिरसाधारय
त्सदा सुमेभ्रातासखाकृष्णोदनुजानांनिकृन्तनः इतिसंचिंत्यमनसिनकिंचित्साकरोत्तदा सर्वज्ञातंतदातेनदेवदेवेनशार्ङ्गिणा इतिसंचित्य
मनसिभ्रातृत्वान्ममगौरवात् भवाब्धितारणंकिंचिन्नूदत्वान्नकरिष्यति ध्यात्वामुहूर्तंमनसिश्रीकृष्णोभक्तवत्सलः सुभद्रांनिकटेगत्वाव
चनंचेदमब्रवीत् परलोकजिगीषार्थेनकिंचिदपितेकृतम् व्रतंकुरुष्वमनसासर्वान्कामानवाप्स्यसि सुकृतंतारकंलोकेलोकानांहितकारकम्
यत्कृत्वासर्वपापेभ्योमुच्यतेनात्रसंशयः भुक्तिमुक्तिप्रदंचापिसर्वसौभाग्यदायकम् व्रतंकुरुष्वचाद्यैवसुकृतस्यफलाप्तये कालोहंसर्व
लोकेषुवृक्षरूपेणसंस्थितः धर्मस्तस्यचमूलंहिकृतंवस्कंधएवच मासाद्वादशसंख्याकाश्चोपशाखात्यनुक्रमात् षष्ठ्याधिकंचत्रिंश
तंफलानिसमजायत पर्णानिघटिकाःप्रोक्ताकालोहंवृक्षरूपकः तस्मात्फलानांप्राप्त्यर्थंव्रतंकुरुष्वशोभने नभसिमासेसंप्राप्तेशुक्लपक्षे
चभामिनि तृतीयाहस्तसंयुक्ताव्रतंकार्यमिदंशुभम् प्रातश्चैवसमुत्थायदंतधावनपूर्वकम् स्नानंकुर्याद्यथान्यायंहरिद्राभिःसमन्वितं म
ध्यान्हेचैवसंप्राप्तेकृत्वागोमयमंडलं चतुर्द्वारेणसहितंमंडपंतत्रकारयेत् वेदिंविरच्यधवलांहस्तमात्रांविशेषतः तन्मध्येष्टदलंपद्म-
मक्षतैःपरिकल्पयेत् पीठेमांचोपरिस्थाप्यक्षीराब्धितनयासह उपचारैःषोडशभिःपूजयेद्भक्तिसंयुतः षष्ठ्याधिकंचत्रिंशतंसुकृतस्य
फलानिवै गोधूमस्यचूर्णफलंशर्कराभिःसमन्वितं औदुंबरस्यवृक्षस्यफलाकारंचकारयेत् वेणुपात्रेचसंस्थाप्यवाणकंचद्विजातये सहिर-
ण्यसतांबूलंदद्याच्चैवयथाविधि वायनमंत्रः पुत्रपौत्रसमृद्ध्यर्थंसौभाग्यावाप्तयेतथा वाणकंवैप्रदास्यामिव्रतसंपूर्णहेतवे पिष्टस्यचफ-
लानांवैपायसंपरिकल्पयेत् भ्रातृस्वरूपिणंमांचभोजयित्वायथाविधि इतिकृत्वाचविधिवत्समाप्यचततःपरम् तृतीयवत्सरेप्राप्तेउद्या
पनविधिंचरेत् आचार्यंवरयेद्भक्त्यावेदवेदांगपारगम् सुशीलंसर्वधर्मज्ञंशांतंदांतंकुटुंबिनम् स्वस्तिवाच्यद्विजैःसाकंनांदीश्राद्धंविधा
यच हैमींचप्रतिमांकुर्यान्निष्कनिष्कार्धसंख्यया क्षीराब्धितनयासाकंमांप्रतिष्ठाप्यभक्तितः नवीनंकलशंताम्रंपिधानेनसमन्वितम्

पक्वैर्भक्ष्यैर्हिरण्येनवस्त्रयुग्मेनवेष्टितम् तन्मध्येमांप्रतिष्ठाप्यउपचारैःप्रपूजयेत् ततःपुष्पांजलिंदद्यात्समाप्यचततःपुनः वायनंदि
प्रदद्याच्चव्रतसंपूर्तिहेतवे लक्ष्मीनारायणोदेवोत्वस्मात्संसारसागरात् रक्षेद्वैसकलात्पापादिहसर्वंददातुमे अच्युतः प्रतिगृह्णातिअ
च्युतोवैददातिच अच्युतस्तारकोभाभ्यामच्युतायनमोनमः रात्रौजागरणंकुर्याद्गीतवादित्रमंगलैः पुराणश्रवणेनैवरात्रिशेषंततोनयेत्
प्रभातेविमलेस्नात्वानित्यकर्मसमाप्यच विष्णोर्नुकंसत्कुमिवहोममंत्रद्वयंस्मृतम् अष्टाधिकद्विशतंचतिलैर्होमंतुकारयेत् कलशंप्रति
माद्युक्तमाचार्यायनिवेदयेत् गांदद्यात्कपिलांचैवसालंकारांसदक्षिणाम् आचार्यंपूजयेद्भक्त्यावस्त्रैराभरणैरपि ब्राह्मणान्भोजयेत्पश्चा
च्चतुर्विंशतिसंख्यकान् आशिषोवैगृहीत्वाथस्वयंभुंजीतभक्तितः इतितस्यवचःश्रुत्वातत्सर्वंहिचकारसा भुक्त्वाभोगान्यथाकामम
न्तेस्वर्गंजगामसा इतिश्रीभविष्योत्तरपुराणेस्कंदव्रतोद्यापनम् अथभाद्रपदशुक्लतृतीयायांशिष्टपरिगृहीतंहरितालिकाव्रतम्
तच्चपराविद्धायांकार्यंमुहूर्तमात्रसत्त्वेपिदिनेगौरीव्रतंपरेइतिमाधवोक्तेः हरितालिकाव्रतसत्वेपुरस्कारेणापिपरविद्धायग्रहणवचनाद्दि
वोदासीयेउदाहृतत्वाच्च तत्रव्रतविधिः भाद्रपदशुक्लतृतीयायांप्रातस्तिलामलककल्केनस्नात्वापट्टवस्त्रंपरिधाय मासपक्षा
द्युल्लिख्यममसमस्तपापक्षयपूर्वकसप्तजन्मराज्यअखंडितसौभाग्यादिविवृद्धये उमामहेश्वरप्रीत्यर्थंहरितालिकाव्रतमहंक
रिष्ये तत्रादौगणपतिपूजनंकरिष्ये गौरीयुक्तंमहेश्वरंपूजयेत् अथपूजा पीतकौशेयवसनांहेमाभांकमलासनां भक्ता
नांवरदांनित्यंपार्वतींचिंतयाम्यहम् मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबरायनमःशिवायैचन
मःशिवाय उमामहेश्वराभ्यांनमः ध्यायामि देवदेवसमागच्छप्रार्थयेहंजगन्मये इमांमयाकृतांपूजांगृहाणसुरसत्तम उमामहेश्वराभ्यां
नमः आवाहनं भवानित्वंमहादेविसर्वसौभाग्यदायिके अनेकरत्नसंयुक्तमासनंप्रतिगृह्यताम् आसनं सुचारुशीतलंदिव्यंनानागं-
धसमन्वितम् पाद्यंगृहाणदेवेशिमहादेविनमोस्तुते पाद्यं श्रीपार्वतिमहाभागेशंकरप्रियवादिनि अर्घ्यंगृहाणकल्याणिभर्त्रासं
हपतिव्रते अर्घ्यं गंगाजलंसमानीतंसुवर्णकलशेस्थितम् आचम्यतांमहाभागेरुद्रेणसहितेनघे आचमनं गंगासरस्वतीरेवा

पयोष्णीनर्मदाजलैः स्नापितासिमयादेवितथाशांतिंकुरुष्वमे स्नानं· पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनस्नपनंप्रीत्यर्थंप्रतिगृह्य
ताम् पंचामृतस्नानं· किरणाधूतपापाचपुण्यतोयासरस्वती मणिकर्णिजलौघाढ्यस्नानार्थंप्रतिगृह्यताम् स्नानं· सर्वभूषाधि॰ वस्त्रं· उप
वीतं· कंचुकीमुपवस्त्रंचनानारत्नैःसमन्वितम् गृहाणत्वंमयादत्तंपार्वतीचनमोस्तुते कंचुकी· कुंकमागरुकर्पूरंचंदनंकस्तुरीयुतम् वि
लेपनंमहादेविगंधंदास्यामिभक्तितः गंधं· रंजिताःकुंकुमौघेनअक्षताश्चातिशोभनाः भक्त्यासमर्पितास्तुभ्यंप्रसन्नाभवपार्वति
अक्षतान् हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणि सेवंतिकाबकुलचंपक
पाटलाब्जैः पुन्नागजातिकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद पुष्पं· अथां
गपूजा उमायैनमः पादौपूजयामि गौर्यैनं· जंघे· पार्वत्यै· जानुनी· जगद्धात्र्यै· उरू· जगत्प्रतिष्ठायै· कटी· शांतिरूपिण्यै· नाभिं
देव्यै· उदरं· लोकवंदितायै· स्तनौ· काल्यै· कंठं· शिवायै· मुखं· भवान्यै· नेत्रे· रुद्राण्यै· कर्णौ· शर्वाण्यै· ललाटं· मंगलदात्र्यै· शिरः पू· देवद्रुमर
सोद्भूतः कृष्णागरुसमन्वितः आनीतोयंमयाधूपोभवानिप्रतिगृह्यताम् धूपं· त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमं आत्मज्योतिःपरं
धामदीपोयंप्रतिगृह्यतां दीपं· अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं· आचमनी· म
लयाचलसंभूतंकर्पूरेणसमन्वितं करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं· इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भ
वेज्जन्मनिजन्मनि फलं· पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं· हिरण्यगर्भगर्भस्थंहेमबीजं
विभावसोः अनंतपुण्यफलदमतःशांतिंप्रयच्छमे दक्षिणां· वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितं पुष्परागसमायुक्तंभूषणंप्रतिगृह्यताम्
भूषणं· चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यंप्रतिगृह्यतां नीराजनं· अथनामपूजा उमायैनं· गौर्यै· पार्वत्यै· ज
गद्धात्र्यै· जगत्प्रतिष्ठायै· शांतिरूपिण्यै· हरायै· महेश्वरा· शंभवे· शूलपाणये· पिनाकधृषेन· शिवाय· पशुपतये· महादेवा· पुष्पांजलिंस· यानि
कानिचपापानिब्रह्महत्यासमानिचेति· प्रदक्षिणां· अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेनक्षमस्वपरमेश्वरि नमस्कारः

पुत्रान्देहि धनंदेहि सौभाग्यंदेहि सुव्रते अन्यांश्चसर्वकामांश्चदेहिदेविनमोस्तुते इतिप्रार्थना ततोवैणवपात्राणिसौभाग्यद्रव्यसहितानि
वायनानिदद्यात् अन्नंसुवर्णपात्रस्थंसवस्त्रफलदक्षिणम् वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्यारोग्यकामायसर्वसंपत्समृ-
द्धये गौरीगौरीशतुष्ट्यर्थंवायनंतेददाम्यहमितिमंत्राभ्यांवायनं तस्मिन्नहनिकर्तव्यंपूजनंरजनीमुखे अर्द्धरात्रेउमाकांतेअर्चनंजागरं-
चरेत् इतिपूजा अथकथा सूतउवाच मंदारमालाकुलितालकायैकपालमालांकितशेखराय दिव्यांबरायैचदिगंबरायनमःशि-
वायैचनमःशिवाय १ कैलासशिखरेरम्येगौरीपृच्छतिशंकरम् गुह्याद्गुह्यतरंगुह्यंकथयस्वमहेश्वर सर्वेषांसर्वधर्माणामल्पायासंमहत्फ-
लं प्रसन्नोसियदानाथतथ्यंब्रूहिममाग्रतः केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्ताचैवजगत्प्रभुः ईश्वरउवाच
शृणुदेविप्रवक्ष्यामितवाग्रेव्रतमुत्तमम् यद्गोप्यंममसर्वस्वंकथयामितवप्रिये यथाचोडुगणेचंद्रोग्रहाणांभानुरेवच वर्णानांचयथावि-
प्रोदेवानांविष्णुरेवच नदीनांचयथागंगापुराणानांचभारतम् वेदानांचयथासामइंद्रियाणांमनोयथा पुराणंवेदसर्वस्वमागमेनयथोदितम्
एकाग्रेणशृणुष्वैतद्यथादृष्टंपुरातनम् येनव्रतप्रभावेनप्राप्तमर्धासनंमम तत्सर्वंकथयिष्येहंत्वंममप्रेयसीयतः भाद्रेमासिसितेपक्षेतृती
याहस्तसंयुता तदनुष्ठानमात्रेणसर्वपापैःप्रमुच्यते शृणुदेवित्वयापूर्वंयद्वृत्तंचरितंमहत् तत्सर्वंकथयिष्यामियथावृत्तंहिमालये पार्वत्यु
वाच कथंकृतंमयानाथव्रतानामुत्तमंव्रतम् तत्सर्वंश्रोतुमिच्छामित्वत्सकाशान्महेश्वर शिवउवाच अस्तितत्रमहान्दिव्योहिमवान्नगउ
त्तमः नानाभूमिसमाकीर्णोनानाद्रुमसमाकुलः नानापक्षिसमायुक्तोनानामृगविचित्रकः यत्रदेवाःसगंधर्वाःसिद्धचारणगुह्यकाः विचरंति
सदाहृष्टागंधर्वागीततत्पराः स्फटिकैःकांचनैःशृंगैर्मणिवैडूर्यभूषितैः भुजैर्लिखन्निवाकाशंसुहृदोमंदिरंयथा हिमेनपूरितोनित्यंगंगा-
ध्वनिनिनादितः पार्वतित्वंयथाबाल्येपरमाचरत्तीतपः अब्दद्वादशकंदेविधूम्रपानमधोमुखी संवत्सरचतुःषष्टिपक्वपर्णाशनंकृतम् मा
घमासेजलेमग्नावैशाखेचाग्निसेवनम् श्रावणेचबहिर्वासअन्नपानविवर्जिता दृष्ट्वातातेनतत्कष्टंचिंतयादुःखितोभवत् कस्मैदेयाम
याकन्याएवंचिंतातुरोभवत् तदैवावसरेप्राप्तोब्रह्मपुत्रस्तुधर्मवित् नारदोमुनिशार्दूलःशैलपुत्रीदिदृक्षया दत्वार्घ्यंविष्टरंपाद्यंनारदंप्रोक्तवा

न्गिरिः हिमवानुवाच किमर्थमागतःस्वामिन्वदस्वमुनिसत्तम महद्भाग्येनसंप्राप्तंत्वदागमनमुत्तमम् नारदउवाच शृणुशैलेंद्रमहत्कार्यं
विष्णुनाप्रेषितोस्म्यहम् योग्यंयोग्यायदातव्यंकन्यारत्नमिदंत्वया वासुदेवसमोनास्तिब्रह्मविष्णुशिवादिषु तस्मैदेयात्वयाकन्याअत्रार्थेसं
मतंमम हिमवानु० वासुदेवःस्वयंदेवःकन्यांप्रार्थयतेयदि तदामयाप्रदातव्यात्वदागमनगौरवात् इत्येवंगदितंश्रुत्वानभस्यांतर्दधेमुनिः य
योपीतांबरधरंशंखचक्रगदाधरम् कृतांजलिपुटोभूत्वामुनींद्रस्तमभाषत नारदउवा० शृणुदेवभवत्कार्यंविवाहोनिश्चितस्तव हिमवांस्तु
तदागौरीमुवाचवचनंमुदा दत्तासित्वंमयापुत्रीदेवायगरुडध्वजे श्रुत्वावाक्यंपितुर्देवीगतांचसखिमंदिरम् भूमौपतित्वासादेवीविललापा
तिदुःखिता विलपंतींतदादृष्ट्वासखीवचनमब्रवीत् सख्युवाच किमर्थंदुःखितादेविकथयस्वममाग्रतः यद्भवत्याभिलषितंकरिष्येहंन-
संशयः पार्वत्युवा० सखिशृणुममप्रीत्यामनोभिलषितंमया महादेवंचभर्तारंकरिष्येहंनसंशयः एतन्मेचिंतितंकार्यंतातेनकृतमन्यथा
तस्माद्देहपरित्यागंकरिष्येहंसखिप्रिये पार्वत्यावचनंश्रुत्वासखीवचनमब्रवीत् सख्युवाच पितायत्रनजानातिगमिष्यामोहितद्वनम्
इत्येवंसंमतंकृत्वानीतासित्वंमहद्वनम् पितानिरीक्षयामासहिमवांस्तुगृहेगृहे केननीतासिमेपुत्रीदेवदानवकिन्नरैः नारदायेकृतंसत्यं
किंदास्येगरुडध्वजे इत्येवंचिंतयाविष्टोमूर्छितोनिपपातह हाहाकृत्वाप्रधावंतिलोकास्तेगिरिपुंगवम् ऊचुर्गिरिवरंसर्वेमूर्छाहेतुंगिरेवद
गिरिरुवा० दुःखस्यहेतुंशृणुतकन्यारत्नंहृतंमम दष्टावाकालसर्पेणसिंहव्याघ्रेणवाहता नजानेक्वगतापुत्रीकेनदुष्टेनवाहृता चकंपेशो
कसंतप्तोवातेनेवमहातरुः गिरिर्वनाद्वनंयातस्त्वदालोकनकारणात् सिंहव्याघ्रैश्चभल्लैश्चरोहिभिश्चमहावनम् त्वंचापिविपिनेघोरेव्रज
तासखिभिःसह तत्रदृष्ट्वानदींरम्यांतत्तीरेचमहागुहां तांप्रविश्यसखीसार्द्धमन्नभोगविवर्जिता संस्थाप्यवालुकालिंगंपार्वत्यासहितंमम
भाद्रशुक्लतृतीयायांअर्चयंतीतुहस्तभे तत्रवाद्येनगीतेनरात्रौजागरणंकृतम् व्रतराजप्रभावेनआसनंचलितंमम संप्राप्तोहंतदातत्रयत्र
त्वंसखिभिःसह प्रसन्नोस्मिमयाप्रोक्तंवरंब्रूहिवरानने पार्वत्युवाच यदिदेवप्रसन्नोसिभर्त्ताभवमहेश्वर तथेत्युक्त्वातुसंप्राप्तःकैलासंपु- ३५
नरेवच ततःप्रभातेसंप्राप्तेनद्यांकृत्वाविसर्जनम् पारणंतुकृतंतत्रसख्यासार्द्धंत्वयाशुभे हिमवानपितंदेशमाजगामघनंवनं चतुरा

शान्निरीक्षंस्तुविह्वलःपतितोभुवि दृष्ट्वातत्रनदीतीरेप्रसुप्तंकन्यकाद्वयम् उत्थाप्योत्संगमारोप्यरोदनंकृतवान्गिरिः सिंहव्याघ्राहिभल्लूकैर्वने
दुष्टेकुतःस्थिता पार्वत्युवाच शृणुतातमयाज्ञातंत्वंदास्यसीश्वरायमां तदन्यथाकृतंताततेनाहंवनमागता ददासितातंयदिमामीश्वरायतत्
दागृहमागमिष्यामिनैवंचेदिहस्थास्यामिनिश्चितम् तथेत्युक्ताहिमवतानीतासित्वंगृहंप्रति पश्चाद्दत्तात्वमस्माकंकृत्वावैवाहिकीं
क्रियाम् तेनव्रतप्रभावेनसौभाग्यंसाधितंत्वया अद्यापिव्रतराजस्तुनकस्यापिनिवेदितः नामास्यव्रतराजस्यशृणुदेवियथाभवत् आ
लिभिर्हरितायस्मात्तस्मात्साहरितालिका देव्युवाच नामेदंकथितंदेवविधिंवदममप्रभो किंपुण्यंकिंफलंचास्यकेनचक्रियतेव्रतम् ईश्वरउ०
शृणुदेविविधिंवक्ष्येनारीणांव्रतमीदृशं करिष्यतिप्रयत्नेनयदिसौभाग्यमिच्छति तोरणादिप्रकर्तव्यंकदलीस्तंभमंडितम् आच्छाद्यपट्ट
वस्त्रैस्तुनानावर्णविचित्रितैः चंदनेनसुगंधेनलेपयेद्गृहमंडपम् शंखभेरीमृदंगैस्तुकारयेद्बहुनिस्वनैः नानामंगलगीतंचकर्तव्यंममसद्म
नि स्थापयेद्वालुकालिंगंपार्वत्यासहितंमम पूजयेद्बहुपुष्पैश्चगंधधूपादिभिर्नवैः नानाप्रकारैर्नैवेद्यैःपूजयेज्जागरंचरेत् नारिकेरैःपू
गफलैर्जंबीरैर्बहुभिस्तथा बीजपूरैःसनारिंगैःफलैश्चान्यैश्चभूरिशः ऋतुकालोद्भवैर्भूरिप्रकारैःकंदमूलकैः गंधपुष्पैर्धूपदीपैर्मंत्रेणा
नेनपूजयेत् ॐनमःशिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिमहाकालगणयुक्तायशंभवे शिवायैहरकांतायैप्रकृत्यैसृष्टिहेतवे
शिवायैसर्वमांगल्यैशिवरूपेजगन्मये शिवेकल्याणदेनित्यंशिवरूपेनमोस्तुते शिवरूपेनमस्तुभ्यंशिवायैसततंनमः नमस्तेब्रह्मचारिण्यै
जगद्धात्र्यैनमोनमः संसारभयसंतापात्त्राहिमांसिंहवाहिनि येनकामेनदेवित्वंपूजितासिमहेश्वरि राज्यसौभाग्यसंपत्तिंदेहिमामंबपार्वति
मंत्रेणानेनदेवित्वांपूजयित्वामयासह कथांश्रुत्वाविधानेनदद्यादन्नंचभूरिशः ब्राह्मणेभ्योयथाशक्त्यादेयावस्त्रहिरण्यगाः अन्येषांभू
यसींदेयास्त्रीणांवाभूषणादिकं भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा कृत्वाव्रतेश्वरंदेविसर्वपापैःप्रमुच्यते सप्तजन्मभवेद्राज्यंसौभाग्यं
चैववर्धते तृतीयायांतुयानारीआहारंकुरुतेयदि सप्तजन्मभवेद्वंध्यावैधव्यंजन्मजन्मनि दारिद्र्यंपुत्रशोकंचकर्कशादुःखभागिनी पच्य
तेनरकेघोरेनोपवासंकरोतिया राजतेकांचनेताम्रेवैणवेचाथमृन्मये भाजनेविन्यसेदन्नंसवस्त्रफलदक्षिणं दानंचद्विजवर्यायदद्यादंतेचपा

रणम् एवंविधियाकुरुतेचनारीत्वयासमानारमतेचभर्त्रा भोगाननेकान्भुविभुज्यमानासायुज्यमंतेलभतेहरेण अश्वमेधसहस्राणिवा-
जपेयशतानिच कथाश्रवणमात्रेणतत्फलंप्राप्यतेनरैः एतत्तेकथितंदेवितवाग्रेव्रतमुत्तमम् कोटियज्ञकृतंपुण्यमस्यानुष्ठानमात्रतः इ
तिश्रीभविष्योत्तरपुराणे हरगौरीसंवादेहरितालिकाव्रतकथासंपूर्णा अथोद्यापनं पार्वत्युवाच उद्यापनविधिंब्रूहितृतीयायाः सुरे-
श्वर भक्तितः श्रोतुमिच्छामिव्रतसंपूर्णहेतवे महादेवउवाच उद्यापनविधिंवक्ष्येव्रतराजस्यशोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्र
तंभवेत् चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितम् घंटिकाचामरयुतंकमलैरुपशोभितम् चंदनागरुकर्पूरैर्लेपितंमंडपंशुभम् मध्येवितान
नंबध्नीयात्पंचवर्णैरलंकृतं तन्मध्ये कारयेत्पद्मंपंचवर्णैःसुशोभनैः तस्योपरिन्यसेद्व्रीहीनद्रोणेनपरिसंमितान् सौवर्णंराजतंताम्रंक
लशंविन्यसेद्बुधः पंचरत्नानिनिक्षिप्यसर्वौषधिसमन्वितम् तस्योपरिन्यसेत्पात्रंसौवर्णंराजतंचवा वृषारूढंमहादेवंरजतेनविनिर्मितं
सर्वावयवसंयुक्तांगौरींहेम्नाविनिर्मितां पूजयेत्तत्रगंधाद्यैःपुष्पैर्नानाविधैःशुभैः रात्रौजागरणंकुर्यात्कथावाचनपूर्वकम् ततःप्रभातस
मयेकृत्वास्नानादिकर्मंच पूर्ववच्चार्चयेद्देवींपश्चाद्धोमंसमाचरेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः प्रारभेच्चततोहोमंनवग्रहपु-
रःसरं तिलांश्चयवसंमिश्रानाज्येनचपरिप्लुतान् जुहुयाद्रुद्रमंत्रेणगौरीमंत्रेणवेदवित् अष्टोत्तरशतंचापिअष्टाविंशतिमेववा एवंसमाप्यहोमं
तुतत्राचार्यंप्रपूजयेत् सुवर्णरत्नवासोभिर्गांदद्याच्चयथाविधि शय्यांसोपस्करांदद्यादाचार्यायप्रयत्नतः षोडशद्विजयुग्मानिपक्वान्नैश्चसुभो
जयेत् सौभाग्यद्रव्यवस्त्राणिवंशपात्राणिषोडश दातव्यानिप्रयत्नेनब्राह्मणेभ्योयथाविधि अन्येभ्योद्विजवर्येभ्योदक्षिणांचप्रयत्नतः भूय
सींपरयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीशंचसर्वंकुर्यादतंद्रितः बंधुभिःसहभुंजीतानियतश्चपरेहनि एवंयाकुरुतेनारीव्रतराजंम
नोहरं सौभाग्यमखिलंतस्याःसप्तजन्मस्वसंशयः इतिश्रीहरितालिकाव्रतोद्यापनंसंपूर्णम् अथाश्विनकृष्णतृतीयायांदृहद्गौरीव्रतं
डोलगौतिदेशभाषाया शाखामूलफलैःसहरिंगिणीगृहे आनीयसिकतावेद्यांनिक्षिप्यउदकेनासिच्यचंद्रोदयदृष्ट्वास्नात्वातापंचसखिभिः
सहअलंकृत्यप्रपूजयेत् तद्यथा ममइहजन्मनिजन्मांतरेचाक्षय्यसौभाग्यप्राप्तिकामा पुत्रपौत्रादिधनधान्यैश्वर्यप्राप्त्यर्थंश्रीगौरीप्रीत्यर्थं

बृहद्गौरीव्रतमहंकरिष्ये कलशेवरुणंसंपूज्यबृहद्गौरींप्रपूजयेत् चतुर्भुजांस्वर्णाभांनानालंकारभूषिताम् हिमेंदुतुहिनाभांतांमुक्तामणिविभू
षिताम् पाशांकुशधरांदेवींध्यायेत्सर्वार्थसिद्धिदाम् कमंडलुधरांसूक्ष्मांपानपात्रंचबिभ्रतीम् ध्यायामि एहिमातर्विशुद्धेत्वंत्रिगुणेपरमेश्व
रि आवाहयामिभक्त्यात्वांप्रसन्नाभवसर्वदा आवाहनं हेमरत्नकृतंदेविआसनंतेविनिर्मितम् पाशांकुशधरांदेवीमासनेस्थापयाम्यहम् .
आसनं अक्षमालांकुशधरेवीणापुस्तकधारिणि भक्त्यादत्तंमयातोयंपाद्यार्थंप्रतिगृह्यताम् पाद्यं अर्घ्यंददामितेमातर्भक्तानामभयंकरे गृहा
णत्वंबृहद्गौरिगंधाक्षतसमन्वितम् अर्घ्यं भक्तानामिष्टदेमातःसर्वालंकारसंयुते आचम्यतांजगन्मातर्बृहद्गौरिनमोस्तुते आचमनं त
तःपंचामृतं स्नापयामिजगन्मातस्त्वांसतीर्थजलेनवै प्रार्थयित्वामयादेविसद्यस्तापविनाशनि स्नानं वस्त्रयोर्नमयादेविदुकूलंनवनि-
र्मितम् भक्त्यासमर्पितंमातर्गृह्यतांजगदंबिके वस्त्रं हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि
सौभाग्यद्रव्यं पंचसूत्रनिर्मितंदोरकंअर्पयेत् मलयाचलसंभूतंचंदनसारंमनोहरम् गंधंगृहाणदेवित्वंबृहद्गौरिनमोस्तुते गंधं कर-
वीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वरीम् पुष्पं धूपोयंगृह्यतांदेविकालागरुसमन्वितः आघ्रेयःस
र्वदेवानांदेवद्रुमरसोद्भवः धूपं दीपंगृहाणदेवेशित्रैलोक्यतिमिरापहम् वन्हिनायोजितंमातर्बृहद्गौरिनमोस्तुते दीपं नैवेद्यंगृह्यतांदेवि
भक्तिमेत्वचलांकुरु ईप्सितंमेवरंदेहिपरत्रचपरांगतिम् नैवेद्यं पानीयं इदंफलमितिनारीकेलफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिद
क्षिणां नीराजनं पुष्पांजलिं अथकंठेदोरकंबध्नीयात् धारयिष्यामिभद्रेत्वांत्वद्भक्तात्वत्परायणा आयुर्देहियशोदेहिसौभाग्यंदेहिमेशिवे
दोरकबंधनं क्षेमसंपत्करेदेविसर्वसौभाग्यदायिनि सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते इतिविशेषार्घ्यं ततश्चंद्रार्घ्यं क्षीरोदार्णवसं
भूतलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् प्रार्थना गग नांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितादि
गंतांतरमानुजनमोस्तुते आनीतासिमयादेविपूजितासिमयाशुभे सौभाग्यममदेहित्वंयत्रस्थातत्रगम्यताम् इतिविसर्जनम्
अथकथा विजयोवाच अथान्यच्चबृहद्गौरीव्रतंवक्ष्यामिकन्यके मासिभाद्रपदेकृष्णेतृतीयायांचतद्व्रतम् आनयेद्बृहतींगो

रीशाखामूलफलैः सह शिंगिणीं वृक्षं समूलं आनयेत् निक्षिप्य गृहवेद्यां तु नदध: सिकतां शुभाम् न्यसेच्चंद्रोदये दृष्ट्वा स्नात्वा धौतांबरावृता
सखीभिः सहिता सम्यक् अलंकृत्य प्रपूजयेत् गौरीमावाह्य विधिवत् सिकतामंडले शुभे गंधपुष्पाक्षतैर्दिव्यैर्धूपदीपैरनेकशः सर्वोपचारै
र्हरितालीं पंचपंचभिरर्चयेत् एवं पूज्य यथाशक्त्या कृत्वा चैव प्रदक्षिणाम् बध्नीयाद्दोरकं पश्चात् तंतुपंचकनिर्मितम् बध्नामि दोरकं कंठे त्वद्भक्त्या
त्वत्परायणा आयुर्देहि यशो देहि सौभाग्यं देहि मे शुभे अनेन दोरकं बध्वा चंद्रायार्घ्यं समर्पयेत् क्षेमसंपत्करे देवि सर्वसौभाग्यदायिनि
सर्वकामप्रदे देवि गृहाणार्घ्यं नमोस्तु ते गगनांगणसंदीप क्षीराब्धिमथनोद्भव भाभासितदिगंतान सोमराज नमोस्तु ते कथामेतां च शृणु
यात् गौर्यर्थे तन्मनाः सदा ततो गोधूमचूर्णेन पंचभिः कुडवैस्तु तम् पक्वान्नमर्द्धं विप्राय दत्वा भुंजीत च स्वयम् एवं वै पंच वर्षाणि कृत्वा व्रतमनु
त्तमं सर्वान्कामानवाप्नोति नात्र कार्या विचारणा ऋषिकन्योवाच केन चादौ पुरा चीर्णं व्रतमेतत्त्वयोदितं ईप्सितं कोपि लेभे वा व्रतस्यास्य प्र
भावतः विजयोवाच शृणु कन्ये यथा प्राप्तं पार्वत्या कथितं पुरा सूत उवाच शृणुध्वमृषयः सर्वे नैमिषारण्यवासिनः पुरा कृतयुगस्यादौ सर्वभूत
हितैषिणा शंभुना कथितं गौर्यै तद्व्रतं कथयाम्यहं कदाचिदुपविष्टं तं पार्वती पर्यपृच्छत पार्वत्युवाच शंभो त्वां प्रष्टुमिच्छामि करुणाकर शं
कर सर्वबाधोपशमनं सर्वकामफलप्रदं व्रतानां सर्वदानानामुत्तमं ब्रूहि तत्त्वतः आयुरारोग्यदं देव पुत्रपौत्रप्रदायकम् एतद्व्रतं ब्रूहि देवेश यद्य
हं तव वल्लभा ईश्वर उवाच शृणु देवि परं गुह्यं व्रतं परमदुर्लभं पुराभूद्द्वापरस्यांते पंडोः प्रियवरांगना वर्षषोडशसंपूर्णा संपन्ननवयौवना
अनपत्या तु सा कुंती भर्तारमिदमब्रवीत् कुंत्युवाच केन कर्मविपाकेन पुत्रहीनास्मि दुःखिता अनपत्यप्रतीकारमिदानीं ब्रूहि तत्त्वतः पंडु
रुवाच ऋषिशापोस्ति मे भद्रे यतस्तेन भविष्यति भर्तुस्तद्वचनं श्रुत्वा पितृगेहेभ्यगात्स्वयम् पितुर्गेहे वर्तमाना कुंती व्यासं ददर्श ह नम
स्कृत्य च तं प्राह कुंती मुकुलितांजलिः कुंत्युवाच व्रतमेकं कथय श्रेष्ठ पुत्रसंतानकारकं सर्वसंपत्करं नृणां व्रतमेकं महामुने व्यास उवाच शृ
णु वक्ष्ये हरितालीगौर्या व्रतं संतानदायकं भाद्रकृष्णतृतीयायां निशि चंद्रोदये शुभे स्नानं कृत्वा च विधिवत् मौनी भूत्वा व्रतं चरेत् सर्वसंपत्करं चैव
स्त्रीणां पुत्रान्नसौख्यकृत् भूहिरण्यादिदानानां सर्वेषामधिकं व्रतं पंचवर्षं विधातव्यं ततनउद्यापनं चरेत् उद्यापनविधानेन संपूर्णफलमश्नु

ते अंतेतु कारयेद्भक्त्यासौवर्णंबृहतीफलं षष्ठ्युत्तरचतुर्भिश्चशुभैर्बीजैर्युतंतुतत् देव्याःपुरस्तुसंस्थाप्यपूर्ववत्प्रतिपूजयेत् आचार्यंपूज
येद्भक्त्याविप्रान्पंचतथैवच सुवासिन्यःपंचपूज्यावस्त्रालंकारभूषणैः कंचुकैश्चैवताटंकैःकंठसूत्रैर्हरप्रियाम् वंशपात्राणिपंचैवसूत्रैः
संवेष्टितानिच सिंदूरंजीरकंचैवसौभाग्यद्रव्यसंयुतम् गोधूमपिष्टजातंचबृहतीफलपंचकं वायनानिचपंचैवताभ्योदद्यात्तुभोजनं
अर्घ्यंदत्त्वावायनानिदत्त्वाभुंजीतवाग्यता तत्फलंधारयेत्कंठेसर्वकामसमृद्धये ततःप्रातःसमुत्थायसालंकारासखीजनैःगीतवाद्ययुतान
द्यांगौरींतांतुविसर्जयेत् आगच्छवरदेदेविपूजितासिमयाशुभे ममसौभाग्यदानाययथेष्टंगम्यतांत्वया एतद्व्रतप्रभावेनकाचिद्ब्राह्मणक
न्यका पतिंसंजीवयामासनिर्भर्त्स्ययमकिंकरान् तस्माच्चरत्विदंव्रतमेतदायुर्मायुःप्रदंपुत्रसमृद्धिदंच पुत्रैश्चपौत्रैश्चयुताचपत्याःगौरीप्र
सादात्तुवजीववत्सा यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः सभुक्त्वाविपुलान्भोगानंतेशिवपदंव्रजेत् इतिभविष्योत्तरपुराणेबृहद्गौ
रीव्रतोद्यापनंसंपूर्णं इदंकर्णाटकेप्रसिद्धं अथमार्गशीर्षेमाघेवाकृष्णातृतीयायांसौभाग्यसुंदरीव्रतं तच्चचतुर्थीयुतायांकार्यं नद्वि
तीयाविद्धायां द्वितीयावेधरहितातृतीयायासिताभवेत् चतुर्थीयोगिनीकिंचित्शुद्धावापियदाभवेत् नारदउवाच भगवंस्तेप्रजा
सृष्टानानावर्णास्तथागुणाः स्वेदजा अंडजाश्चैवउद्भिज्जाश्चजरायुजाः देवासुराःसगंधर्वाःसयक्षोरगराक्षसाः एकेसुरूपाःसुभगा
बलिनश्चापरेतथा तथान्येदुःखसंयुक्ताःकाणामूकाश्चपंगवः दुःशीलादुर्भगादीनाःपापकर्मकराःसदा एवंमेत्वदिसंतापःसंशयं
छेत्तुमर्हसि ब्रह्मोवाच शृणुवत्सप्रवक्ष्यामित्वंभक्तोसिप्रियोसिमे कर्मबीजप्ररूढंहिशरीरंपांचभौतिकं येदत्तदानाजायंतेसुरूपाःसुखि
नोजनाः तपःप्रभावाज्जायंतेबलिनःसुभगास्तथा अदत्तदानाजायंतेपरकर्मकराःसदा परापवादवक्तारःपरद्रव्यापहारकाःहंतारःप्राणि
नांचैवअभक्ष्याणांचभक्षकाः क्रमशोनरकान्भुक्त्वाजायंतेकुत्सितानराः दरिद्राःपंगवोमूकाःकाणाद्यादुर्भगास्तथा नारदैवंस्वकर्मोत्था
नरानार्यश्चदुःखिताः नारदउ० उपायंब्रूहिभगवन्येनकर्मक्षयोभवेत् तपोदानव्रततीर्थंशरीरस्यचशोषणं दुःखसंतापतप्तानांजीवि
तान्मरणंवरं ब्रह्मोवा० शृणुनारदयद्व्रतंव्रतानामुत्तमंव्रतं सर्वदुःखप्रशमनंव्याधिदारिद्र्यनाशनं सुखसौभाग्यजननंपुत्रपौत्रप्रदायकं

वसिष्ठायपुराप्रोक्तंऋषीणांचसमागमे कैलासशिखरेरम्येशंकरेणमहात्मना नारदउ० कस्मात्सोवाचभगवान्कृपाकस्माच्चजायते
ब्रह्मोवाच दृष्ट्वाद्भुतंचसौभाग्यमरुंधत्याजगत्प्रभुः तस्यारूपंचशीलंचसौभाग्यमतुलंतथा हलाशिरःप्रकंपंचजहाससमृदुशंकरः पृ
ष्टवान्शंकरंदेवंवसिष्ठःस्मितकारणं ईश्वरउवाच अहोव्रतस्यमाहात्म्यंश्रूयतामृषिसत्तमाः पुराजन्मनिशूद्रस्यदासकर्मकरासदा
उच्छिष्टभोजनानित्यंउच्छिष्टशयनासदा कुरूपादुर्भगादीनारूक्षागद्गदभाषिणी नाम्नामेघवतीख्यातादुर्दर्शवदनाशुभा एकदाप्रे
षणार्थसागताब्राह्मणसन्निधौ श्रुतंव्रतंचनारीणांवाच्यमानंद्विजन्मना सौभाग्यसुंदरीनामतृतीयासर्वकामदा ज्ञाताचारागमेशास्त्रेस
र्वकामफलप्रदा मयाप्रकाशितंसर्वंप्रार्थितेनोमयातथा चीर्णतासांप्रसंगाच्चमेघवत्याप्रसंगतः कुत्सितंचैवनैवेद्यंदत्तंदानंचकिंचन
हविष्यंचतथोच्छिष्टंपारणंचतथाकृतम् केवलंचव्रतंचीर्णंश्रद्धापूतेनचेतसा श्रद्धयाधार्यतेधर्मोबहुभिर्नार्थराशिभिः ऋषयश्चाक्रि
रैधर्मश्रद्धयाभावितात्मना तेनधर्मविपाकेननिषादाधिपतेःसुता सुरूपाचसुशीलाचसर्वलक्षणसंयुता संपूर्णाचयवाजातातस्यादेव्याः
प्रसादतः उच्छिष्टभोजनाज्जातानिषादानांचयोनिषु अदत्तदानात्संजातातपसाभोगवर्जिता व्रतप्रभावात्संजातासुरूपाचपतिव्रता म
हासौभाग्यसंयुक्तासाक्षाल्लक्ष्मीरिवापरा सर्वकामप्रदादेवीनंदिनीवसतेगृहे तद्व्रतंचास्तिदेवर्षेसर्वकामफलप्रदम् नारदउवाच व्र
तस्यास्याविधिंब्रूहिकोविधिःकिंचपूजनं कस्मिन्मासेप्रकर्तव्यंदेवताकाप्रकीर्तिता किंपुण्यंकिंचनैवेद्यंध्यानंकस्यचपूजनं ब्रह्मोवाच व्र
तस्यारंभणंचादौमार्गशीर्षेथमाघके द्वितीयावेधरहितात्तृतीयायासिताभवेत् चतुर्थीयोगिनीकिंचिच्छुद्धावापियदाभवेत् उपवासप्र
कुर्वीतदंतधावनपूर्वकं अपामार्गेणकुर्वीतदंतशुद्धिंतदाव्रती उमेदेविनमस्तुभ्यंशंकरस्यार्द्धधारिणि प्रसीदश्रीमहेशानिकरिष्येव्रत-
मुत्तमम् सान्निध्यंकुरुदेवेशिव्रतेस्मिन्हरवल्लभे नियममंत्रः सौभाग्यसुंदरीनामवशिनीसाप्रकीर्तिता सर्वकामप्रदादेविस-
र्वसंपद्धशंकरी तस्यादर्शनमात्रेणसदासंजायतेजगत् द्रोणपुष्पैश्चसंपूज्यादाडिमंचार्घ्यहेतवे नैवेद्यंमोदकान्दद्यात्कर्पूरंप्राश-
येत्ततः वत्सपौषासितेपक्षेतृतीयायांव्रतंभवेत् चेलिकादंतकाष्ठंचमरुकेणचपूजनम् राज्यसौभाग्यदानामसुंदरीपूजयेत्ततः

धात्रीफलंतदेवार्घ्येकंकोलंप्राशयेन्निशि नैवेद्येवटकाःकार्याघृतशर्करयान्विताः कंकोलांबुतथाप्राश्यराज्यसौभाग्यहेतवे घृतेनबो-
धयेद्दीपंरात्रौजागरणंतथा सर्वकामप्रदादेवीसर्वदुःखहरापरा सर्वैश्वर्यप्रदादेवीसर्वपापहराशुभा एकापिबहुधाख्यातानामरूपप्र-
भेदतः माघमासेचसंप्राप्तेबदर्यादंतधावनं प्रातःकुर्वीतनियमंरूपसौभाग्यहेतवे अपराह्णेततःस्नात्वासर्वाभरणभूषिता चूतपुष्पै-
श्चसंपूज्यारूपसौभाग्यसुंदरी नारिकेलार्घ्यदानंचनैवेद्येशष्कुलीस्मृता प्राशनंचैवकस्तूरीरूपसौभाग्यसंयुता पूजयेत्तत्रयासर्व-
कामसौभाग्यसुंदरीं फाल्गुनस्यसितेपक्षेप्रातर्नियमसंयुता सौभाग्यसुंदरीबिल्वदंतकाष्ठंतुकारयेत् स्नानंकृत्वातथानारीकांच-
नारैश्चपूजयेत् नैवेद्यंसक्तवस्तत्रघृतशर्करयान्विताः यक्षकर्दमजोलेपोधूपश्चागरुसंभवः सर्वासुचतृतीयासुविधिरेषउदाहृतः
बीजपूरार्घ्यदानंचप्राशनंचंदनोदकम् प्राशनस्यप्रभावेनसर्वान्कामानवाप्नुयात् पारणंचप्रकर्तव्यंसहसर्वैश्चबांधवैः चैत्रेमा-
सिप्रकर्तव्यातृतीयापापनाशिनी प्रयत्नेनप्रकर्तव्यासुखसौभाग्यसुंदरी दंतकाष्ठंसमुद्दिष्टंजंबूवृक्षसमुद्भवम् पूजादमनकै-
र्नामत्यर्घ्येबिल्वफलंस्मृतम् नैवेद्येमंडकाःप्रोक्ताःशर्कराघृतसंयुताः सुखसौभाग्यप्राप्त्यर्थंप्राशनंवज्रधारिणः वैशाखस्यसितेप-
क्षे तृतीयायामुपोषयेत् मालतीदंतकाष्ठंचनियमग्रहणंततः पतिसौभाग्यदांदेवींसुंदरींपूजयेत्ततः पद्मैःसितैःसुरक्तैश्चमल्लि-
काभिश्चपूजयेत् दधिभक्तंसकर्पूरंशर्कराघृतसंयुतं नैवेद्यंकल्पयेद्देव्याअर्घ्यंचात्रफलंभवेत् हेमोदकंचसंप्राश्यपुष्टिसौभाग्यमा-
प्नुयात् ज्येष्ठमासितृतीयायांउपवासपराभवेत् यूथिकादंतकाष्ठंचलावण्यसुभगार्थिनी मल्लिकाकुसुमैःपूज्यायक्षकर्दमचर्चिता
लावण्यसुभगांदेवींसुंदरींपूजयेत्ततः कदलीफलार्घ्यदानंचनैवेद्यंघृतपूरिका मौक्तिकांबुततःपीत्वालावण्यसुभगाभवेत् आषा-
ढेचततोमासिपतिसौभाग्यसुंदरी प्रातरुत्थायकर्तव्यंदंतकाष्ठमशोकजम् नियमंतत्रकुर्वीततृतीयायांप्रयत्नतः बिल्वपत्रैःकोम-
लैश्चपतिसौभाग्यसुंदरीं जंबूफलार्घ्यदानंचनैवेद्यंपायसंस्मृतं शर्कराघृतसंयुक्तंसुंदरीप्रीयतामम बिंदुनांबुनिशिप्राश्यहविष्या-
पारणंस्मृतं सपत्नीनापुरंनैवसापश्यतिकदाचन श्रावणेमासिसंप्राप्तेतृतीयायामुपोषिता बैल्वंवाबादरंकाष्ठंजातिपुष्पैश्चपूजनं सर्वै-

श्वर्यंचसौभाग्यसुंदरीपूजयेत्ततः नैवेद्यंश्वेतपक्वान्नंधूपदीपादिकंतथा कदलीफलार्घ्यदानंचप्राशयेद्राजतंपयः गजाश्वपशुदासीनां
हेमरत्नादिवाससा ईश्वरीसर्वलोकानांभगवत्याःप्रसादतः मासिभाद्रपदेप्राप्तेपूज्यासौभाग्यसुंदरी दंतकाष्ठंतुकर्तव्यंमातुलिंगीसमुद्भवं
उत्पलैःपूजयेद्देवीमर्घ्यंकर्कोटकीफलं नैवेद्येशोकवर्तिन्यापिबेन्माणिक्यजंपयः कर्पूरागरुकस्तूरीमुखदेशेसुगंधिना आश्वयुज्यासिते
पक्षेतृतीयायांव्रतंचरेत् दंतकाष्ठंप्रकर्तव्यंप्लक्षवृक्षसमुद्भवं पूजयेत्परयाभक्त्यापुत्रसौभाग्यसुंदरी उत्पलैःशतपत्रैश्चपूजाकार्याप्रयत्नतः
नारिंगमर्घ्यदानार्थंकूष्मांडंवापिकल्पयेत् नैवेद्यंगणकान्शष्कुलीःशर्कराघृतपाचितान् औदुंबरंपयःप्राश्यसुंदरीप्रीयतांमम पुत्रपौत्रसमायुक्ता
सुखसौभाग्यसुंदरी कार्तिकेमासिसंप्राप्तेतृतीयायामुपोषिता औदुंबरंदंतकाष्ठंकृत्वाव्रतमुपाचरेत् केतकीभिश्चसौभाग्यप्राप्तयोगाच्चसुंदरी
निवेदयेदपूपांश्चसुगंधान्शालिसंभवान अक्षोडंचार्घ्यदानंचलवंगंप्राशयेत्ततः सावित्रीयोगनचाप्नोतिपितृश्चानृसज्ञादिभिः एवंचीर्णंव्रतंकुर्या
दुद्यापनविधिंततः सर्वशास्त्रमधीयानमागमेषुविशारदं आचार्यंप्राशयेत्स्नातमार्गशीर्षेयथाविधि चीर्णंव्रतंमयाचार्यउद्यापनविधिंमम व्रत
वैकल्यनाशाययथाशास्त्रंसमाहितः सुंदरीमंडलंकार्यंगौरीतिलकमेववा उमामहेश्वरंदेवंसौवर्णंनतुकारयेत् व्रतारंभेयथाशक्त्याराजतंवापि-
कारयेत् वित्तशाठ्यंनकुर्वीतसतिद्रव्येफलार्थिना वर्षप्रपूज्यतांमूर्तितामेवंमंडलेर्चयेत् सर्वोपचारगंधैश्चपुष्पैर्नानाविधैरपि एकैवसाजगन्माता
बहुरूपाव्यवस्थिता रूपैर्द्वादशभिश्चैवपूज्यासौभाग्यसुंदरी ततःपद्मनिभांदेवींरक्तवस्त्रोपशोभिताम् रक्ताभरणशोभाढ्यांरक्तकुंकुमच-
र्चितां ध्यात्वाचैवंविधांदेवींपूजयेदेकमानसा रात्रौजागरणंकार्यंगीतवादित्रनिःस्वनैः ततःसर्वाणिपुष्पाणिनैवेद्यादिफलानिच अर्घ्यार्थंपरि
कल्प्यानिसर्वकामार्थसिद्धये ततःप्रभातेविमलेस्नानंकृत्वाविधानतः कुसुंभकुसुमैर्होमंकिंशुकैर्वापिकारयेत् अष्टोत्तरशतंपूर्णमध्वान्न
पयसान्वितम् तदभावेतुकर्तव्यःशतपत्रैर्विधानतः आसुरेणचमंत्रेणगौणंमुख्यंसमाचरेत् भोजयेच्चप्रयत्नेनचत्वारिंशोविधानतः मिष्टा
न्नेनसपत्नीकान्भक्त्यावैपरितोषयेत् वस्त्रालंकरणैश्चैवयथाशक्त्याप्रपूजयेत् सौभाग्यवस्त्रंचैकैकंनारीणांचैवदापयेत् ततोहस्तेप्रदा
तव्यंकुंकुमंलवणंगुडम् नारिकेरंतथावल्लीदूर्वासिंदूरकज्जलम् मंगलाष्टकमेतद्धिदत्वासौभाग्यमाप्नुयात् आचार्यंचसपत्नीकंव-

स्त्वालंकरणैः शुभैः परिधाययथाशक्त्यामंडलंतत्समर्पयेत् प्रार्थयेच्चततोदेवींसर्वसौभाग्यसुंदरीम् पूजितासिमयादेविसर्वसौभाग्य
सुंदरी दत्वामभ्यार्थितान्कामानगच्छदेवियथासुखं मूर्तिंचमंडलंदेव्याउपहारांश्चसर्वशः गुरोगृहाणसर्वत्वंसुंदरीप्रीयतामिति त्वत्प्र
सादान्मयाचीर्णव्रतमेतत्सुदुर्लभम् क्षमस्वविप्रशार्दूलप्रसादसुमुखोभव एवंचीर्णव्रतानारीकृतकृत्याभवेत्सदा येनेदंचकृतंवर्षसंप्रा
प्तंजन्मनःफलं नातःपरतरंकिंचिद्व्रतंसौभाग्यकारकं देहांतेशिवलोकेतुदेहान्भुक्त्वायथेप्सितान् इतिभविष्योत्तरसौभाग्यसुंदरीव्रतोद्या
पनंसंपूर्णं अथचतुर्थीव्रतानिलिख्यंते तत्रश्रावणकृष्णचतुर्थ्यांसंकष्टचतुर्थीव्रतं तच्चचंद्रोदयव्यापिन्यांकार्यं श्रावणेबहुलेपक्षेचतु
र्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् १ दिनद्वयेतद्व्याप्तौपूर्वैव मातृविद्धागणेशस्यइतिवचनात् दिनद्वयेअव्याप्तौप
रैवहेमाद्रौ चंद्रोदयाभावेचतुर्थीनिशिषट्घटिव्यापायापरेवव्रतेइति अथव्रतविधिः मासपक्षाद्युल्लिख्यतिथौममविद्याधनपुत्रपौत्र
प्राप्त्यर्थंसमस्तरोगमुक्तिकामः श्रीगणेशप्रीत्यर्थंसंकष्टचतुर्थीव्रतमहंकरिष्ये तत्रादौस्वस्तिवाचनंगणपतिपूजनं कलशार्चनंच
करिष्ये सौवर्णरौप्यताम्रमृन्मयाद्यन्यतमांगणपतिमूर्तिंकृत्वाजलपूर्णवस्त्रयुतकुंभंतस्याग्रेस्थापयित्वाषोडशोपचारैःपूजयेत्
आदौध्यानम् तद्यथा लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकम् नानारत्नैःसुवेषाढ्यंप्रसन्नास्यंविचिंतयेत १ ध्यायेद्गजाननंदेवंत-
प्तकांचनसुप्रभम चतुर्बाहुंमहाकायंसूर्यकोटिसमप्रभम् २ इतिध्यानम् आगच्छत्वंजगन्नाथसुरासुरनमस्कृत अनाथ
नाथसर्वज्ञविघ्नराजकृपांकुरु सहस्रशीर्षापुरुषः० गजास्याय० आवाहयामि गोप्तात्वंसर्वलोकानामिंद्रादीनांविशेषतः भक्त
दारिद्र्यविच्छेत्ताएकदंतनमोस्तुते पुरुषएवेदंसर्वंयद्भूतं० विघ्नराजाय० आसनम् मोदकान्धारयन्हस्तेभक्तानांवरदायक
देवदेवनमस्तेस्तुभक्तानांफलदोभव एतावानस्यमहिमा० लंबोदराय० पाद्यं० महाकायमहारूपअनंतफलदोभव देवदे
वनमस्तेस्तुसर्वेषांपापनाशन त्रिपादूर्ध्वउदैत्पुरुः० शंकरसूनवे० अर्घ्यं० कुरुष्वाचमनंदेवसुरवंद्यसुवाहन सर्वाघदलन-
स्वामिन्नीलकंठनमोस्तुते तस्माद्विराळजायत० विराजो० उमासुताय० आचमनीयं० स्नानंपंचामृतेनैवगृहाणगणनायक

अनाथनाथसर्वज्ञनमोमूषकवाहन पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनस्नपनंप्रीयतांगणनायकः वक्रतुंडाय० पंचामृतस्नानं
गंगाचयमुनाचैवगोदावरीसरस्वती नर्मदासिंधुकावेरीजलस्नानायकल्पितम् यत्पुरुषेणहविषा० हेरंबाय० स्नानंस० रक्तवस्त्रंस्
युग्मंचदेवानामपिदुर्लभम् गृहाणमंगलंदेवलंबोदरहरात्मज तंयज्ञंबर्हिषिप्रौ० शूर्पकर्णाय० वस्त्रं० ब्रह्मसूत्रंसोत्तरीयंगृहाणग
णनायक आरक्तंब्रह्मसूत्रंचकनकंसोत्तरीयकम् तस्माद्यज्ञात्सर्वहुतः सं० कुब्जाय० यज्ञोपवीतंस० गृहाणेश्वरसर्वज्ञदिव्यचंदन
मुत्तमम् करुणाकरअज्ञानगौरीसूतनमोस्तुते तस्माद्यज्ञात्सर्वहुतऋचःसामानि० गणेश्वराय० गंधं० अक्षताश्चसुरश्रेष्ठकुंकु-
माक्ताःसुशोभिताः मयानिवेदिताभक्त्यागृहाणगणनायक अक्षतान् सुगंधिदिव्यमालांचगृहाणगणनायक विनायकनमस्तुभ्यं
शिवसूनोनमोस्तुते माल्यं माल्यादीनिसुगंधीनि० तस्मादश्वाअजा० विघ्ननाशिने० पुष्पाणिस० अथांगपूजा गणेश्वराय
पादौपूजयामि विघ्नराजाय·जानुनीपू· आखुवाहनाय·ऊरूपू· हेरंबाय·कटीपू· कामहारिसूनवे·नाभिंपू· लंबोदरा·उदरंपू· गौ-
रीसुताय·स्तनौपू· गणनायकाय·हृदयंपू· स्थूलकंठा·कंठंपू· स्कंदाग्रजा·स्कंधौपू· पाशहस्ताय·हस्तौपू· गजवक्त्राय·वक्त्रंपू· विघ्न
हर्त्रे·ललाटंपू· सर्वेश्वराय·शिरःपू· गणाधिपाय·सर्वांगंपूजयामि दशांगंगुग्गुलंधूपमुत्तमंगणनायक गृहाणदेवदेवेशउमासुतन
मोस्तुते यत्पुरुषंव्यदधुः० विकटायनमः धूपं· सर्वज्ञसर्वरत्नादयसर्वेशविबुधप्रिय गृहाणमंगलंदीपंघृतवर्तिसमन्वितम् ब्राह्मणो
स्यमुखमासी० वामनाय० दीपं· नैवेद्यंगृह्यतांदेवनानामोदकसंयुतम् पक्वान्नफलसंयुक्तंषड्रसैश्चसमन्वितम् चंद्रमामनसोजातः
सर्वायन·नैवेद्यं· कृष्णावेण्यागोनर्मानापयोष्णीनर्मदाजलैः आचम्यतांविघ्नराजप्रसन्नोभवसर्वदा आचमनं फलान्यमृतकल्पा-
निसुगंधीन्यघनाशन आनीतानियथाशक्त्यागृहाणगणनायक सर्वार्तिनाशिनेन·फलं· तांबूलंगृह्यतांदेवनागवल्यादलैर्युतम्
कर्पूरेणसमायुक्तंसुगंधंमुखभूषणम् विघ्नहर्त्रेन·तांबूलं· सर्वदेवाधिदेवायसर्वसिद्धिप्रदायक भक्त्यादत्तांमयादेवगृहाणजग-
दीश्वर सर्वेश्वरायनमः दक्षिणास० पंचवर्तिसमायुक्तंवन्हिनायोजितंमया गृहाणमंगलंदीपंविघ्नराजनमोस्तुते नीराजनं

यानिकानिचपापानि० नाभ्याआसीतिप्रदक्षिणा नमोस्त्वनंताय० सप्तास्येतिनमस्कारः यज्ञेनयज्ञमिति मंत्रपुष्पांजलिं एवंपू
जाप्रकर्तव्याषोडशैरुपचारकैः मोदकान्कारयेदेवमेकविंशतिसंख्यया तेषांमध्येप्रकर्तव्यादशसंख्याश्चपार्वती देवाग्रेस्थापयेत्संचपं
चविप्रायकल्पयेत् पूजयित्वातुतंविप्रंभक्तिभावेनदेववत् दक्षिणांचयथाशक्त्यादद्यादेवंपंचमोदकान् पूजयेन्निशिचंद्रंच अर्घ्यंदत्वाय-
थाविधि क्षीरसागरसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंगणेशप्रीतिवर्धन रोहिणीसहितचंद्रायनमः इदमर्घ्यंस०
क्षीरोदार्णवसंभूतसुधारूपनिशाकर गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःशशिन् रोहिणीसहितचंद्रायनमः इदमर्घ्यंसमर्प०
गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक संकष्टहरमेदेवगृहाणार्घ्यंनमोस्तुते कृष्णपक्षेचतुर्थ्यांतुपूजितोसिविधूदये क्षिप्रं
प्रसादितोदेवगृहाणार्घ्यंनमोस्तुते संकष्टहरगणेशायनमः इदमर्घ्यं० तिथीनामुत्तमेदेविगणेशप्रियवल्लभे सर्वसंकष्ट-
नाशायचतुर्थ्यर्घ्यंनमोस्तुते वायनमंत्रः विप्रवर्यनमस्तुभ्यंमोदकान्वैददाम्यहम् मोदकान्सफलान्पंचदक्षिणाभिःसमन्वि
तान् आपदुद्धरणार्थायगृहाणद्विजसत्तम प्रार्थना अबुद्धमतिरिक्तंवाद्रव्यहीनंमयाकृतम् तत्सर्वंपूर्णतांयातुविप्ररूपगणेश्वर
ब्राह्मणान्भोजयेदेवंयथासंख्यंयथासुखम् स्वयंभुंजीतमौनेनमोदकान्ब्राह्मणैःसह अशक्तश्चैकमन्नंचभुंजीतदधिसंयुत
म् अथवाभोजनंकार्यमेकवारंहिमाद्रिजे प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणाम् वस्त्रकुंभसमायुक्तामादौमंत्रमिमंजपेत्
ॐ नमोहेरंबमदमोदितसंकष्टान्निवारयनिवारय इतिमूलमंत्रएकविंशतिवारंजपेत् विसर्जनमंत्रः गच्छगच्छसुरश्रेष्ठ
स्वस्थानेत्वंगणेश्वर व्रतेनानेनदेवेशयथोक्तफलदोभव इतिपूजा अथकथा ऋषयऊचुः दारिद्र्यशोककष्टा-
द्यैःपीडितानांचवैरिभिः राजभ्रष्टैर्नृपैःसर्वैःक्रियतेकिंशुभार्थिभिः धनहीनैर्नरैःस्कंदसर्वोपद्रवपीडितैः॥ विद्यापुत्रगृह
भ्रष्टैर्योगयुक्तैःशुभार्थिभिः कर्तव्यंकिंवदोपायंपुनःक्षेमार्थसिद्धये स्कंदउवाच शृणुध्वंमुनयःसर्वव्रतानामुत्तमव्रतम्
संकष्टतरणंनामसंपत्तिसुखदायकम् ॥ येनोपायेनसंकष्टंतरंतिभुविदेहिनः॥ यद्व्रतंदेवकीपुत्रःकृष्णोधर्मायदत्तवान् अ

रण्येक्लिश्यमानायपुनःक्षेमायसिद्धये यथाकथितवान्पूर्वंगणेशोमातरंप्रति तथाकथितवान्श्रीशोद्वापरेपांडवान्प्रति
ऋषयऊचुः यथाकथितवानंबांपार्वतींश्रीगणेश्वरः तथापृच्छंतिमुनयोलोकानुग्रहकांक्षिणः स्कंदउवाच पुराकृतयुगेपु
ण्येहिमाचलसुतासती तपस्तप्तवतीभूरितेनालब्धःशिवःपतिः तदास्मरत्साहेरंबगणेशंपूर्वजंसुतम् तत्क्षणादागतंदृष्ट्वागणे-
शंपरिपृच्छति पार्वत्युवाच तपस्तप्तंमयाघोरंदुश्चरंलोमहर्षणम् नप्राप्तःसमयाकांतोगिरिशोममवल्लभः संकष्टतरणं-
दिव्यंव्रतंनारदउक्तवान् त्वदीयंयद्व्रतंतावत्कथयस्वपुरातनम् तच्छ्रुत्वापार्वतीवाक्यंसंकष्टतरणव्रतम् प्रीत्याकथितवान्देवोगणे
शोज्ञानसिद्धिदः गणेशउवाच श्रावणेबहुलेपक्षेचतुर्थ्यांतुविधूदये गणेशंपूजयित्वातुचंद्रायार्घ्यंप्रदापयेत् पार्वत्युवा० क्रिय
तेकेनविधिनाकिंकार्यंकिंचपूजनम् उद्यापनंकदाकार्यंमंत्राःकेस्युस्तुपूजने किंध्यानंश्रीगणेशस्यगणेशवदविस्तरात् गणेशउ०
चतुर्थ्यांप्रातरुत्थायदंतधावनपूर्वकं ग्राह्यंव्रतमिदंपुण्यंसंकष्टतरणंशुभं कर्तव्यमितिसंकल्प्यव्रतेस्मिन्गणपंस्मरेत् स्वीकरमं
त्रः निराहारोस्मिदेवेशयावच्चंद्रोदयोभवेत् भोक्ष्यामिपूजयित्वाहंसंकष्टात्तारयस्वमाम् एवंसंकल्प्यराजेंद्रस्नात्वाकृष्णातिलैःशुभैः
आह्निकंतुविधायैवपश्चात्पूज्योगणाधिपः त्रिभिर्माषैस्तदर्धेनतृतीयांशेनवापुनः यथाशक्त्यातुवाहैमीप्रतिमाक्रियतेमम माषमा
त्रात्तदर्धस्यतृतीयांशेनवापुनः यथाशक्त्यातुवाहैमीनाम्नस्यापियथासुखम् सर्वथैवदरिद्रेणक्रियतेमृन्मयीशुभा वित्तशा
ठ्यंनकर्तव्यंकृतेकार्यंविनश्यति जलपूर्णंवस्त्रयुतंकुंभंतस्याग्रतोन्यसेत् पद्ममष्टदलैःकार्यंगंधपुष्पैःप्रपूजयेत् एवंव्रतंप्र
कर्तव्यंचतुर्थ्यांश्रावणेसिते स्वीकार्यश्चतथाचार्यःसंकष्टहरणेतिथौ गणाधीशंतथाचार्यंसर्वशास्त्रविशारदम् श्रद्धयाप्रा-
र्थयेदादौतेनोक्तंविधिमाचरेत् एकविंशतिविप्रांश्चवस्त्रालंकारभूषणैः पूजयेद्धोहिरण्याद्यैर्हुत्वाग्नौविधिपूर्वकम् होमद्र
व्यंमोदकाश्चतिलयुक्ताघृतप्लुताः अष्टोत्तरसहस्रंवानोचेदष्टोत्तरशतम् अष्टाविंशतिसंख्याकैर्मोदकैर्वासशर्करैः अश
क्तौष्टौशुभान्स्थूलान्जुहुयाज्जातवेदसि वैदिकेनचमंत्रेणआगमोक्तेनवातथा अथवानाममंत्रेणहोमंकुर्याद्यथावि-

धि पुष्पमंडपिकाकार्यागणेशाल्हादकारिणी पूजयेत्तत्रगणपंभक्तसंकष्टनाशनम् गीतवादित्रनिनदैर्भक्तिभावपुरस्कृतैः पुराणवेद
निर्घोषैस्तोषयेच्चगणेश्वरम् एवंजागरणंकार्यंशक्त्यादानादिकंतथा सपत्नीकमथाचार्यंतोषयेद्वस्त्रभूषणैः उपानच्छत्रगोदानं
कमंडलुजलादिभिः यथाशक्त्याप्रकर्तव्यंदारिद्र्याभावमिच्छता एकविंशतिविप्रांश्चभोजयेन्नामभिर्मम गजास्योविघ्नराज-
श्चलंबोदरशिवात्मजौ वक्रतुंडःशूर्पकर्णःकुब्जश्चैवविनायकः विघ्ननाशोहिविकटोवामनःसर्वदैवतु सर्वार्तिनाशीभगवान्विघ्न
हर्ताचधूम्रकः सर्वदेवाधिदेवश्चसर्वेषोडशवैस्मृताः एकदंतःशूर्पकर्णोभालचंद्रोगणेश्वरः गणपश्चैकविंशाश्चसर्वेएतेगणेश्वराः
दुर्गापिंद्रश्चरुद्रश्चकुलदेव्याधिकंभवेत् विशेषेणाष्टसंख्यांकेर्मोदकैर्हवनंस्मृतम् एवंकृतविधानेनप्रसन्नोहंनसंशयः ददामिवांछिता-
न्कामांस्तद्व्रतंमत्प्रियंकुरु श्रीकृष्णउवाच एवंतुकथितंसर्वंगणेशेनस्वयंनृप पार्वत्यातत्कृतंराजन्व्रतंसंकष्टनाशनम् व्रतेनानेन
सार्धाब्देप्रापशंभुंपतिंस्वकम् तत्कुरुष्वमहाराजव्रतंसंकष्टनाशनम् चतुर्थीसंकटानामस्कंदेनकथिताऋषीन् ऋषिभिर्लोककामै
स्तैर्लोकेतुतदिदंव्रतम् सूतउवाच कृतंयुधिष्ठिरेणैतद्राज्यकामेनवैद्विज तेनशत्रून्निहत्याजौस्वराज्यंप्राप्तवान्स्वयम् तस्मात्स
र्वप्रयत्नेनव्रतंकार्यंविचक्षणैः येनधर्मार्थकामांश्चमोक्षश्चापिभवेत्किल यःकरोतिव्रतंविप्राःसर्वकामार्थसिद्धिदम् सवांछितफ
लंप्राप्यपश्चाद्गणपतिंव्रजेत् यदायदाव्रतंविप्रानरःप्राप्नोतिसंकटम् तदातदाप्रकर्तव्यंव्रतंसंकष्टनाशनम् त्रिपुरंहंतुकामेनकृतंदे
वेनशूलिना त्रैलोक्यभूतिकामेनमहेंद्रेणतथाकृतम् रावणेनकृतंपूर्वंबलिबंधनसंकटे स्वकीयंप्राप्तवान्राज्यंगणेशस्यप्रसादतः
सीतान्वेषणकामेनकृतंवायुसुतेनच संकल्प्यदृष्टवान्सोयंसीतांरामप्रियांपुरा दमयंत्याकृतंपूर्वंनलान्वेषणकारणात् सापतिंनैषधं
लेभेपुण्यश्लोकंद्विजोत्तमाः अहल्यापिपतिंलेभेगौतमंप्राणवल्लभम् विद्यार्थीलभतेविद्यांधनार्थीधनमाप्नुयात् पुत्रार्थीपुत्रमा
प्नोतिरोगीरोगात्प्रमुच्यते इतिश्रीस्कंदपुराणेसंकष्टचतुर्थीव्रतोद्यापनंसंपूर्णम् अथश्रावणेकार्तिकेवाशुक्लचतुर्थ्यांदूर्वा
गणपतिव्रतम् मदनरत्ने सौरपुराणे स्कंदउवाच केनव्रतेनभगवन्सौभाग्यमतुलंभवेत् पुत्रपौत्रधनैश्वर्यैर्मनुजःस्त्रस्वमेध

ते तन्मेवदमहादेवव्रतानामुत्तमंव्रतम् महादेवउ० अस्तिदूर्वागणपतेर्व्रतंत्रैलोक्यविश्रुतम् भगवत्यापुराचीर्णंपार्वत्याश्रद्धयासह
सरस्वत्याचइंद्रेणविष्णुनाधनदेनच अन्यैश्चदेवैर्मुनिभिर्गंधर्वैःकिन्नरैस्तथा चीर्णमेतद्व्रतंसर्वैःपुराकल्पेषडानन चतुर्थ्यायाभवे
च्छुक्लानभोमासस्यपुण्यदा तस्यांव्रतमिदंकुर्यात्कार्तिक्यांवाषडानन कार्तिकेशुक्लपक्षेतुचतुर्थ्यामुत्तमंव्रतम् गजाननंचतुर्बाहुमेक
दंतविपाटितं विधायहेम्नाविघ्नेशंहेमपीठासनस्थितं तथाहेममयींदूर्वांतदाधारेव्यवस्थितां संस्थाप्यविघ्नकर्तारंकलशेताम्रभाजने
वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैःपत्रिकाभिश्चपंचभिः बिल्वपत्रमपामार्गंशमीदूर्वाहरिप्रियाः गंधपुष्पैश्चधू
पैश्चकुसुमैश्चसुगंधिभिः फलैश्चमोदकैःपश्चादुपहारंप्रकल्पयेत् उपहारैस्तुविधिनापूजयेद्गिरिजासुतम् उमासुतनमस्तुभ्यंवि
श्वव्यापिन्सनातन विघ्नौघांश्छिंधिसकलान्सर्वमाद्यंवदामिते गणेश्वरायदेवायउमापुत्रायवेधसे पूजयेच्चमहादेवगृहाणभगवन्
मम विनायकायशूरायवरदायगजानन उमासुतायदेवायसर्वविघ्नौघहारिणे उमांगमलसंभूतोदानवानांवधायवै अनुग्रहाय-
लोकानांसदेवःपातुविश्वधृक् परंज्योतिःप्रकाशायसर्वसिद्धिप्रदायक दीपंतुभ्यंप्रदास्यामिमहादेवायतेनमः गणेश्वरगणाध्यक्षगौ
रीपुत्रगजानन व्रतंसंपूर्णतांयातुत्वत्प्रसादादिभानन एवंसंपूज्यविघ्नेशंयथाविभवविस्तरैः सोपस्करंगणाध्यक्षमाचार्यायनिवेद
येत् गृहाणभगवन्ब्रह्मन्गणराजसदक्षिणम् व्रतंत्वद्वचनादद्यपूर्णतांयातुसुव्रत दानं श्रावणेशुक्लपक्षस्यचतुर्थ्यांतुजितेंद्रि-
यः कुर्याद्वर्षत्रयंत्वेवंसर्वसिद्धिप्रदायकम् एवंयःपंचवर्षाणिकृत्वोद्यापनमाचरेत् ईप्सितान्लभतेकामान्देहांतेशांकरंपदम् उद्या
पनंविनायस्तुकरोतिव्रतमुत्तमम् तेनशुक्लतिलैःकार्यंप्रातःस्नानंषडानन हेम्नावाराजतेनापिकृत्वागणपतिंबुधः पंचगव्यैस्तुसं-
स्नाप्यदूर्वाभिःसंप्रपूजयेत् मंत्रैस्तुदशभिर्भक्त्यादूर्वायुक्तैःशिखिध्वज दूर्वायुग्मैःपंचगव्यैःपूजनंदशमंत्रकैः गणाधिपनमस्तेस्तु
उमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंगणेशायप्रपूजयेत्
इत्येवंकथितंसम्यक्सर्वसिद्धिप्रदंशुभम् व्रतंदूर्वागणपतेःकिमन्यच्छ्रोतुमिच्छसि इतिसौरपुराणोक्तंदूर्वागणपतिव्रतोद्यापनम्

अथैकविंशतिदिनगणपतिपूजनं तत्रश्रावणशुक्लचतुर्थीमारभ्यश्रावणकृष्णदशमीपर्यंतंगणपतिपूजनं सामध्यान्हव्यापिनीकार्या
एकदंतंशूर्पकर्णंगजतुंडंचतुर्भुजम् पाशांकुशधरंदेवंमोदकंविभ्रतंकरे ध्यानं आगच्छजगदाधारसुरासुरवरार्चित अनाथनाथ
सर्वज्ञगीर्वाणपरिपूजित आवाहनं स्वर्णसिंहासनंदिव्यंनानारत्नसमन्वितम् समर्पितंमयादेवतत्रत्वंसमुपाविश आसनं
देवदेवेशसर्वेशसर्वतीर्थहृतंजलम् पाद्यंगृहाणगणपगंधपुष्पाक्षतैर्युतम् पाद्यं प्रवालमुक्ताफलपूगरत्नताम्बूलजांबूनदमष्टगं
धम् पुष्पाक्षतैर्युक्तममोघशक्तेर्दत्तंमयार्घ्यंसफलीकुरुष्व अर्घ्यं गंगादिसर्वतीर्थेभ्यःप्रार्थितंतोयमुत्तमम् कर्पूरैलालवंगैश्चयु-
क्तमाचम्यतांविभो आचमनं चंपकाशोकबकुलमालतीमोगरादिभिः वासितंस्निग्धताहेतुस्तैलंचारुप्रगृह्यताम् अभ्यंगस्ना
नं कामधेनुसमुद्भूतंसर्वेषांजीवनंपरम् पावनंयज्ञहेतुश्चपयःस्नानार्थमर्पितम् पयस्नानं पयसस्तुसमुद्भूतंहिमादिद्रव्ययोग
तःदध्यानीतंमयादेवस्नानार्थंप्रतिगृह्यताम् दधिस्नानं नवनीतसमुत्पन्नंसर्वसंतोषकारकं यज्ञांगंदेवताहेतोर्घृतंस्नानार्थमर्पितं
घृतस्नानं पुष्पसारसमुद्भूतंमक्षिकैराहृतंचयत् सर्वतुष्टिकरंदेवमधुस्नानार्थमर्पितम् मधुस्नानं इक्षुरससमुद्भूतांशर्करांसु
मनोहराम् मलापहरणंस्नानेगृहाणत्वंमयार्पितम् शर्करास्नानं सर्वमाधुर्यताहेतुःस्वादुःसर्वप्रियंकरः पुष्टिकृत्स्नानमानीतइक्षु
सारभवोगुडः गुडस्नानं कांस्येकांस्येनपिहितंदधिमधुघृतपयः मधुपर्कोमयानीतःपूजार्थंप्रतिगृह्यताम् मधुपर्कस्नानम्
सर्वतीर्थाद्धृतंतोयंमयाप्रार्थनयाविभो सुवासितंगृहाणेदंसम्यक्स्नातुंसुरेश्वर स्नानं रक्तवस्त्रयुगंदेवलोकलज्जानिवारणम्
अनर्घ्यमतिसूक्ष्मंचगृहाणेदंमयार्पितम् वस्त्रं राजतंब्रह्मसूत्रंचकांचनंरत्नसंयुतम् भक्त्योपपादितंदेवगृहाणपरमेश्वर यज्ञो
पवीतंसं अनेकरत्नयुक्तानिभूषणानिबहूनिच तत्तदंगेकांचनानियोजयामितवाज्ञया भूषणं पूर्वादिक्रमेणअष्टौदिक्पाला
नावाहयेत् इष्टगंधसमायुक्तंरक्तचंदनमिश्रितम् द्वादशांगेषुतेदेवलिंपयामिकृपांकुरु चंदनं रक्तचंदनसंमिश्रास्तंडुलास्ति
लकोपरि शोभार्थंसंप्रदास्यामिगृहाणजगदीश्वर अक्षतान् पाटलंकर्णिकारंचबंधूकरक्तपंकजम् मोगरंमालतीपुष्पंगृह्य

तांभुवनेश्वर पुष्पाणि नानापंकजपुष्पैश्चग्रथितांपल्लवैरपि बिल्वपत्रयुतांमालांगृहाणत्वमनोहराम् मालां अथांगपूजा
गणेशायनमः पादौपूजयामि गौरीपुत्राय॰गुल्फौपू॰विश्वेश्वराय॰जानुनीपूज॰गजाननाय॰ऊरूपू॰लंबोदराय॰वक्षस्थलपू॰गणना-
थाय॰स्तनौपू॰द्वैमातुराय॰कंठंपू॰वक्रतुंडाय॰शिरःपूजयामि अथैकविंशतिपत्रपूजा गणाधिपाय॰ भृंगराजपत्रंस॰उमापुत्राय॰
बिल्वपत्रंस॰ गजाननाय॰दूर्वापत्रं॰ लंबोदरा॰बदरीपत्रं॰ हरसूनवे॰मधूपत्रं॰गजवक्त्राय॰तुलसीपत्रं॰गुहाग्रजाय॰ अपामार्गप
त्रंस॰ एकदंताय॰ बृहतीपत्रं॰इभवक्त्राय॰शमीपत्रं॰विकटाय॰करवीरपत्रं॰विनायकाय॰अश्वत्थपत्रं॰कपिलाय॰अर्कपत्रं॰ बटवे
न॰चंपकप॰अभयदाय॰अर्जुनपत्रं॰ पत्नीहिताय॰विष्णुक्रांताप॰सुराधिपतये॰देवदारुप॰भालचंद्रा॰अगरुपत्रं॰हेरंबा॰श्वेत
दूर्वा॰शूर्पकर्णाय॰जातीप॰सुरनाथाय॰धत्तूरप॰एकदंता॰केतकीपत्रं॰ अथैकविंशतिनामपूजा गजाननाय॰विघ्नराजा॰लंबोद
राय॰शिवात्मजा॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ विनायकाय॰ विघ्ननाशनाय॰ विकटाय॰ वामनाय॰सर्वार्तिनाशिनेन॰भगवते
न॰विघ्नहर्त्रे॰ धूम्रका॰सर्वदेवाधिदेवाय॰ एकदंता॰ कृष्णपिंगा॰ भालचंद्राय॰ गणेश्वराय॰ गणपाय॰ पुष्पंस॰ २१ दशांगंगुग्गुलंधू
पंसर्वसौगंधिकारकम् सर्वपापक्षयकरंगृहाणत्वंमयार्पितं धूपं॰ सर्वज्ञसर्वलोकेशतमोनाशनमुत्तमं गृहाणमंगलंदीपंदेवदेवन-
मोस्तुते दीपं॰ नानापक्वान्नसंयुक्तंपायसंशर्करान्वितं राजिकाधान्यसंयुक्तंमेथीपिष्टसतक्रकं हिंगुजीरककूष्मांडैर्मरीचीमाषपि-
ष्टकैः संपादितैःसूपधैश्चभजितैर्वटकैर्युतम् मोदकापूपलड्डुकशष्कुलीवटकादिभिः पर्पटरससंयुक्तंनैवेद्यममृतान्वितं हरिद्राहिंगु
लवणसहितंसूपमुत्तमं ससामुद्रंगृहाणेदंभोजनंकुरुसादरं मयानिवेदितंतुभ्यंगृहाणजगदीश्वर नैवेद्यं अतितृप्तिकरंतोयंसुगंधि-
चपिबेच्छया त्वयितृप्तेजगत्तृप्तंनित्यतृप्तेमहात्मनि मध्येपानीयं॰ उत्तरापोशनार्थंतेदद्यितोयंसुवासितं मुखपाणिविशुद्ध्यर्थंपुनस्तोयं
ददामिते दाडिमंमधुरंनिंबूजंब्वाम्रपनसादिकं द्राक्षारंभाफलंपक्वंकर्कंधूःखार्जुरंफलं नारिकेरंचनारिंगंकलिंगंमांजिरंतथा उर्वारुकंच
देवेशफलान्येतानिगृह्यतां फलानि गृहाणचंदनंचारुकरंगोद्वर्तनंसुभम् नानापरिमलैर्द्रव्यैर्निर्मितंचूर्णमुत्तमम् अबीरंनामकंपु-

णयगंधिचारुप्रगृह्यताम् चारुवालूरसंभूतंवंशसारसमुद्भवम् सचंद्रपूगचूर्णादयैरखादिरेणचसंयुतम् एलालवंगसंमिश्रंतांबूलंप्रतिगृह्य
तां न्यूनातिरिक्तपूजायांसंपूर्णफलहेतवे दक्षिणांकांचनींदेवस्थापयामितवाग्रतः दक्षिणा· सितपीतैस्तथारक्तैर्जलजैःकुसुमैःशुभैः ग्रथि
तांसुंदरांमालांगृहाणपरमेश्वर मालां· हरिताश्वेतवर्णावापंचत्रिपत्रसंयुताः दूर्वांकुरामयादत्ताएकविंशतिसंमिताः गणाधिपायनमः
दूर्वांकुरान्समर्पयामि उमापुत्राय॰ अभयप्रदाय॰ एकदंताय॰ मूषकवाहनाय॰ विनायकाय॰ ईशपुत्राय॰ इभवक्त्राय॰ सर्वसिद्धिप्रदाय
काय॰ लंबोदराय॰ विघ्नराजाय॰ विकटाय॰ मोदकप्रियाय॰ विघ्नविध्वंसकर्त्रेन॰ विश्ववंद्याय॰ अमरेशाय॰ गजकर्णाय॰ नागय-
ज्ञोपवीतिने॰ भालचंद्राय॰ विद्याधिपाय॰ विद्याप्रदायनमः इतिदूर्वा गणेशंहृदयेध्यात्वासर्वसंकष्टनाशनम् एकविंशतिसंख्या
कः करोमिचप्रदक्षिणाः प्रदक्षिणाः औदुंबरेराजतेवाकांस्येकांचनसंभवे पात्रेप्रकल्पितान्दीपान्गृहाणचक्षुरर्पितान् पंचार्तिं
पंचदीपैश्चदीपितांपरमेश्वर चारुचंद्रप्रभंदीपंगृहाणपरमेश्वर पंचार्तिं कर्पूरस्यमयादेवदीपस्तेचनिवेदितः यथास्यनेक्षनेभस्मत
थापापंविनाशय कर्पूरदीपं· स्तोत्रैर्नानाविधैःसूक्तैःसहस्रनामभिस्ततः उपविश्यस्तुवीतेनंकृत्वास्थिरतरंमनः दीनानाथदयानिधे
सुरगणैःसंसेव्यमानोद्विजब्रह्मेशानमहेंद्रशेषगिरिजागंधर्वसिद्धैःस्तुतः सर्वारिष्टनिवारणैकनिपुणत्रैलोक्यनाथप्रभोभक्तिंमेसफ
लांकुरुघसकलांक्षंतापराधान्मम आवाहनंनजानामिनजानामितवार्चनम् विसर्जनंनजानामिक्षम्यतांजगदीश्वर क्षमापनं· गौरी
सुतनमस्तेस्तुसर्वसिद्धिप्रदायक सर्वसंकष्टनाशार्थमर्घ्यमेप्रतिगृह्यताम् अनेनएकविंशतिअर्घ्याणि कृतपूजायाःसांगतासिध्य
र्थंब्राह्मणायवायनप्रदानंकरिष्ये ब्राह्मणपूजनम् दशमोदकसंयुक्तंवाणकंचफलप्रदम् गणेशप्रीणनार्थायगृहाणत्वंद्विजोत्तम
वाणकम् सांगतासिद्ध्येब्राह्मणान्भोजयेत् इत्येकविंशतिदिनगणपतिपूजा अथैकविंशतिदिनगणपतिकथा शौनकउ
वाच सूतसूतमहाप्राज्ञव्यासविद्याविशारद संकष्टेचसमुत्पन्नेकार्यसिद्धिःकथंनृणाम् सूतउवाच शृणुध्वंमुनयःसर्वेशौ
नकप्रमुखानघाः संकष्टनाशनंपुण्यंव्रतंवच्मियथाश्रुतं यत्कृत्वासर्वकार्याणिसिद्धिंयांतिनसंशयः पूजयित्वागणेशंहिएकविंशद्दिना

वधि शौनकउवाच कथंपूज्योगणाध्यक्षोविघ्नहर्तागणाधिपः केनचादौपुराचीर्णंव्रतंविघ्नहरस्यच वदसर्वंमहाप्राज्ञअस्माकंविधि
पूर्वकं प्राप्तोसित्वंमहाभाग्यादरण्येसत्रमंडपे सूतउवा० एवमेवपुरापृष्टःषण्मुखोवदतांवरः सनत्कुमारमुनिनाब्रह्मपुत्रेणयोगिना
सनत्कुमारउ० कार्तिकेयमहाप्राज्ञदेवसेनाधिपप्रभो संकटात्तुकथंमुच्येज्जनोविज्ञानदुर्लभः श्रुत्वावाक्यंब्रह्मसूनोःसर्वेषांकार्यगौर
वम् सेनानीस्तुतदाहर्षान्नमस्कृत्यमहामुनिम् स्कंदउवा० विप्रवर्यमहायोगिन्पार्वत्यामुखतःश्रुतं वदामितद्व्रतंतुभ्यंशृणुसर्वंसमा-
सतः कैलासभुवनेरम्येवसमानोमहेश्वरः स्नातुंजगामभगवान्भोगवत्यांयथासुखम् तस्मिन्नेवदिनेअंबाप्यभ्यंगस्नानमारभत्
स्वशरीरान्मलंगृह्यतस्यमूर्तिमकल्पयत् सजीवंचपुनःकृत्वाएहिपुत्रेत्यचोदयत् अवदत्तेततोनामबद्धुवस्त्वविनायकः पुत्रगच्छबहि-
र्द्वारेतिष्ठतत्रदृढायुधः आयास्यतिकदाचिद्धैपुरुषोभवनांतरे तंनिवारयितुंशक्तोयावत्स्नानंकरोम्यहं ममाज्ञांगृह्यपश्चात्त्वंप्रवेष्टुमर्हसि
ध्रुवं मात्राज्ञांगृह्यशिरसिअगमद्द्वारदेहली मुद्गरंतुसमादायहस्तेबद्धुवनामकः अरक्षद्द्वारदेशंसपार्वत्याज्ञांस्मरन्बलात् तदानीमेव
आयांतंविभूत्याचर्चितंविभुम् संप्राप्तेभवनद्वारेशंभुःसर्वेश्वरोहरः देहलींप्रविशन्यावद्द्वारस्थद्वारपोबली द्वारपालउ० कोसित्वंचकि
मर्थंहिगम्यतेभवनेशुभे मात्राज्ञायातियावत्त्वंस्थातव्यंतावदेवहि स्कंदउ० द्वारपालवचःश्रुत्वाशंभुःकोपमथाकरोत् शंभुरु० कस्या-
ज्ञाचमयाग्राह्याकोसित्वंभाषसेकथं गृहीत्वाडमरुंहस्तेद्वारपालशिरोहनत् प्रविशच्चततस्तूर्णंस्वगृहंपार्वतीपतिः दृष्ट्वानाथंसकोपंसा
चिंतयत्पार्वतीहृदि बहुधाबाधनेक्षद्धेशंकरेकोपकारणं अलंकृताचसुस्नाता पार्वतीजगदंबिका पायसेनतुपूर्णेद्वेभक्ष्यभोज्येनसंयुते
संस्थाप्यचैवपीठाग्रेघृतेनसितयान्विते पात्रद्वयंसमालोक्यअवदत्पार्वतींशिवः शंभुरुवा० दिव्यकांचनभूतोददर्वाभ्यांचसुलोचने
भोज्यपात्रंतुकस्येदंस्थापितंचद्वितीयकम् भोजनार्थंद्वितीयोद्यकोयातिवदवल्लभे नायातित्वरयाचात्रविलंबेकारणंवद इतिश्रुत्वा
वचःशंभोःसर्वेशस्यमहासती प्रीतिहर्षसमायुक्तासर्वज्ञमवदत्तदा पार्वत्युवाच ममाद्यस्नानसमयेउद्वर्तनमलोद्भवम्
पुत्रंविरच्यचद्वारदेदेहल्यांस्थापितोमया तदर्थंचद्वितीयंवैभाजनंस्थापितंध्रुवम् इतिश्रुत्वावचस्तस्याःस्वकंपेप्राकृतोयथा

शिवउवाच प्रविशंतंचमांद्वारेतवपुत्रोन्यवारयत् कोसित्वंचमयापृष्टस्तेननोक्तातवाभिधा कोपेनचततस्तस्यशिरश्छित्वानिपा-
तितम् इतिश्रुत्वाततोदेवीविव्हलापतिताभुवि पार्वत्युवा० पुत्रंजीवयसेदेवनर्हिमोक्ष्येमहेश्वर तथैवचममप्राणागमिष्यंतिनसंश
यः इत्युक्त्वाचततोदेवीहाकष्टमित्यवीवदत् पुनःपपातसाभूमौवातेनकदलीयथा शिवउवा० उत्तिष्ठभद्रेकिंदुःखपुत्रार्थंमाकुरुप्रि
ये अधुनातवपुत्रंहिजीवयामिशिरोविना प्रियामेवंचआश्वास्यगतोद्वारंस्वयंविभुः इतस्ततोवलोक्याथगजोदृष्टोमृतस्तदा निकृत्यचना
गशिरोबह्लुवंयोजयद्विभुः संजीव्यबह्लुवंपुत्रंपार्वतींविनिवेदयत् दृष्ट्वागजशिरंपुत्रंपार्वतीहर्षनिर्भरा भोजयित्वापतिंपुत्रंस्वर्णपा-
त्रेसुशोभने नमस्कृत्यततोदेवंपतिपात्रेउपाविशत् बुभुजेतुततोदेवीपतिशेषंतुभोजनम् कैलासभुवनेरम्येपार्वत्यानिवसन्बहु अटन्
विभुःकदाचित्सवृषभेणबलीयसा पार्वत्यासहितोदेवःप्राप्तवान्नर्मदातटम् रम्यंरेवातटंदृष्ट्वापार्वतीत्यवदच्छिवं पार्वत्युवा० दे
वदेवमहादेवशंकरप्राणवल्लभ अक्षक्रीडनकामाहंत्वयासार्द्धंसुरेश्वर शंकरउ० अक्षक्रीडनकामात्वमासनेस्मिन्स्थिराभव जये
पराजयेचात्रसाक्ष्यर्थंयोजयप्रिये स्वामिवाक्यंचसाश्रुत्वाएरकांगृह्यमुष्टिना नराकृतिमथाकल्प्यप्राणान्सासमयोजयत् देहंतस्य
चसास्पृश्यपाणिपद्मेनसांभसा तमुवाचततोबालमक्षक्रीडांविलोकय आवाभ्यांक्रीडयमानाभ्यांकोजेष्यतिवदस्व इतिमातुर्वचः
श्रुत्वाबालकोवेतथेतिभोः अक्षक्रीडासमारब्धापार्वत्याशंकरेणच जयोजातश्चपार्वत्याःशंकरस्तुपराजितः शंकरस्तुतदापृच्छत्को
जितोवदबालक अवदद्बालकस्तत्रजितंदेवेनशूलिना पुनःक्रीडांप्रवृत्तासासाक्षीकृत्वातुबालकम् पुनर्जितंतुपार्वत्याशंकरस्तु
पराजितः बालंपप्रच्छसादेवीजितंकेनवदाधुना पुनरप्याहबालोसौजितंदेवेनशूलिना हर्षेणचसमायुक्तःपार्वतीमाहशंकरः
क्रीडांकुरुमहादेविरोषंत्यजशुभानने क्रीडतीसापुनर्देवीजितोदेव्यासशंकरः लज्जितःशंकरोबालंकोजितोवदनिश्चितं शंकरंप्रा
हबालास्त्वोजितस्त्वंभुवनाधिप बालवाक्यंसमाकर्ण्यपार्वतीकोपनिर्भरा मिथ्यावदसिदुष्टात्मन्पादहीनोत्रकर्दमे पच्यमानोतिदुःखे
नभविष्यसिनसंशयः बालउ० विशापंकुरुमांमातर्बालभावान्मयेरितम् इतिश्रुत्वावचस्तस्यमातृभावाद्दयान्विता पार्वत्युवा०

नागकन्यायदापुत्रपूजार्थंचनतटेशुभे गणेशंपूजयंत्यार्यदृष्ट्वापूजाविधिंशिवम् नासांश्रुत्वावचोदिव्यंतवभक्तिर्भविष्यति गणेशंपूजयि त्वातुममसान्निध्यमेष्यसि इत्युक्त्वामाननोदेवीहिमाचलमगाद्बुधा व्यतीतेवत्सरेपूर्णेश्रावणेमासिचागते गणेशपूजनार्थंतानाग-कन्याः समागताः दृष्टवान्नर्मदातीरेस्त्रीवृंदंबहुभूषितम् बालउवाच किमर्थंचागताबालाःकिंचात्रक्रियतेधुना भवतीभिःपू ज्यतेकः किंफलंवदताद्यमे नागकन्याऊ० वत्सपूजागणेशस्यक्रियतेस्माभिरुत्तमा पूजितेतुजगन्नाथेलभतेवांछितंध्रुवम् बालउ० कथंपूज्योगणाध्यक्षःकियत्कालंवदाद्यमेः कोविधिःकेचसंभाराःकदापूज्योगणेश्वरः नागकन्याऊचुः श्रावणेमासि संप्राप्तेचतुर्थ्यांचरवगोदये निलामलककल्केनस्नानंकुर्याज्जलाशये शुक्लपक्षेसमारभ्ययावत्कृष्णादशमीभवेत् मध्यान्हेपूजयेत्ता वदेकविंशद्दिनावधि एकविंशतिदूर्वाभिस्तावत्पुष्पैःशुभैःसदा मोदकैरेकविंशैश्चपूजयेत्प्रत्यहंजनः मोदकादशविप्रायदातव्याश्चस दक्षिणाः एकंगणाधिपेदत्वास्वयंचाद्याद्दशैवतु पूजामौनेनकर्तव्याभोजनंचतथानघ ब्रह्मचारीभूमिशायीशूद्रभाषणवर्जितः ह विष्याशीतथाभूयाच्छुचिरंतर्बहिःसदा एवंनियममास्थायपूजांकुर्यात्सदाव्रती ताम्रपात्रेजलंगृह्यगंधपुष्पसमन्वितम् फलरत्नस मायुक्तमर्घ्यंदद्याद्गणाधिपे दक्षिणांतेसदावत्सएकविंशान्निवेदयेत् पूजासमाप्तौविप्रायवायनंचसमर्पयेत् गणेशायनमस्तेस्तुपा र्वतीनंदनायच गंधपुष्पसमायुक्तंगृहाणार्घ्यंनमोस्तुते गणेशप्रीतयेतुभ्यंवायनंदशमोदकम् दक्षिणाफलसंयुक्तंवंशपात्रेसुकल्पि नम् गणेशःप्रतिगृण्हातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः एवंपूज्योगणाध्यक्षोनार्मदोभक्तितःशुभः ग णेशेपूजितेवत्सतवसिद्धिर्भविष्यति एवमुक्त्वागतादेव्योनागकन्याःशुचिस्मिताः बालकेनकृतंपश्चादन्यस्मिन्वत्सरेततः श्रावणेमा-सिसंप्राप्तेशुक्लपक्षेतिथौशुभे चतुर्थ्यांकृतसंभारोव्रतंजग्राहबालकः गणेशंनार्मदंतत्रएकविंशद्दिनावधि विधिवत्पूजयामाससनम स्कृत्यगणेश्वर गणेशोवरदोजातोयाचयस्वयदीप्सितं श्रुत्वावाक्यंगणेशस्यहर्षनिर्भरमानसः बालउ० नमस्कृत्यगणेशानंवरंदेहि-नमोस्तुते पादयोर्मेबलंदेहिवासंशंकरसन्निधौ गणेशउवा० यथेच्छसितथैवास्तुपार्वत्याःप्रीतिरस्तुते इत्युक्त्वातुगणेशोसोंतर्दै

वांनृर्द्देवेविभुः हृढपादश्चबालोसौकैलासमगमन्ततः दृष्ट्वाहरस्यचरणौशिरसाजगृहेसुभो शिवउवाच उत्तिष्ठवत्सतेपादौकथंजा-
नौदृढोवद कस्यप्रसादात्त्वमिहआगतोसिममालयम् बालउवाच कृतंमयागणेशस्यएकविंशद्दिनात्मकम् श्रुतंचनागकन्याभ्यस्त
त्कृतंपूजनंमया तेनपुण्यप्रभावेनप्राप्तोहंतवसन्निधौ गणेशस्यप्रसादेनशरीरंदृढतांगतम् शिवउवा० कीदृशंतत्कृतंब्रूहिकरिष्येहं
चतत्कृतम् वल्लभायादर्शनार्थंपार्वत्यारोषशांतये बालउवाच श्रावणेशुक्लपक्षेतुचतुर्थ्यांचसमारभेत् श्रावणेबहुलेपक्षेद-
शम्यांचसमापयेत् गणेशंपूजयेन्नित्यमेकविंशद्दिनावधि एकविंशतिदूर्वाभिःपुष्पैरपितथैवच कर्तव्यामोदकास्तत्रएकविंशति
संख्यकाः दशविप्रायदत्वातुएकंदेवेनियोजयेत् अवशिष्टाःस्वयंभक्ष्याःश्रुतमेवंमयाविभो किंमयाद्यत्वयाज्ञप्तंकर्तव्यंवर्ततेविभो
आचरच्छंभुरप्येवंगणेशस्यव्रतंसुभम् पूजनाच्चगणेशस्यपार्वत्याश्चलितंमनः हिमाचलंनमस्कृत्यवचनंचेदमब्रवीत् पार्वत्यु
वाच गम्यतेद्यमयातातकैलासंनिजमंदिरम् शिवस्यचरणौद्रष्टुमुत्सुकंमेमनोभवत् शीघ्रंदेहिममाज्ञांभोःक्षणंस्थातुंनश
क्यते हिमाचलउवा० प्रेषयिष्येक्षणंतिष्ठविमानेनार्कवर्चसा सैन्यंददामिरक्षार्थंतवमार्गेशुचिस्मिते पितृवाक्यंसमाकर्ण्यवि
मानंचारुरोहसा क्षणमात्रेणसायातांकैलासभवनोत्तमं दृष्ट्वामहेश्वरंदेवंप्रणनामविहस्यच किंकृतंभोनजानीममनोमेचालितं
त्वया वाक्यंश्रुत्वाप्रियायाश्चमनसाचालिलिंग्यताम् अवदत्कारणंतस्याहरणेमनसोध्रुवम् शिवउवाच कृतंमयागणेशस्य
पूजनंनवहेतवे तेनपुण्यप्रभावेनआगतात्वंममांतिकम् पार्वत्युवाच कथंपूज्योगणाध्यक्षोवदमह्यंजगद्विभो अहमद्यकरि-
ष्यामिसेनानीदर्शनायच शंकरउवाच कुरुदेविगणेशस्यपूजनंचयथाविधि एकविंशतिदूर्वाभिःपुष्पैर्नानाविधैःशुभैः मोदकै
रेकविंशैश्चएकविंशद्दिनानिच अर्घ्यैस्तावतिसंख्याकैस्तथाब्राह्मणतर्पणैः त्रिलोचनमुखाच्छ्रुत्वागणेशःपूजितस्तथा एकविंश
द्दिनात्सश्चाकुमारोभ्यगमत्स्वयं स्कंदंदृष्ट्वातदादेव्यास्तनाभ्यांनिर्झरावपुः सतमालिंग्यसादेवीचुचुंबेचमुखंपुनः वत्साद्यचमुखंदृ
ष्टंगणेशस्यप्रसादतः बहुकालंचमांत्यक्त्वागतःषण्मुखबालक कृतंकृत्वाद्यजानास्मिदर्शनात्तेनसंशयः रोषंत्यजमहाबुद्धेशपथंतेव

दास्यहं . स्कंदउवाच मानर्वदगणेशस्यपूजनंचयथाश्रुतम् विश्वामित्रंचराजानंममित्रंवदाम्यहम् पार्वत्युवाच वदमिन्नंग
णेशस्यपूजनंकुरुभक्तितः एकविंशतिदूर्वाभिःपुष्पैरप्येकविंशतिः कर्तव्यामोदकास्तत्र एकविंशतिसंख्यकाः दशविप्राय दातव्याः
स्वयंचाद्याद्दशैवच एकंगणाधिपेदत्वाअर्घ्याण्यपितथैवच पूजयस्वगणाध्यक्षमेकविंशद्दिनावधि इदंव्रतंगणेशस्यभक्तितोयः
करिष्यति तस्यकार्याणिसिध्यंतिमनसाचिंतितानिच व्रतराजविधिंश्रुत्वासेनानीश्चतथाकरोत् सेनानीनामग्रणीत्वंसमवाप्यश्रु
चिव्रतः कथयामासविप्रायविश्वामित्रेनराधिपे सोपिराजानमस्कृत्यव्रतंतत्स्वयमाचरत् गणेशोवरदोजातोविश्वामित्रायतत्क्ष
णात् गणेशउवाच वदराजन्किमिच्छास्तिददामितवयाचितम् विश्वामित्रउवा० देहिदेवप्रसन्नश्चेत्वाग्विप्रर्षित्वमस्त्वि
ति प्राप्तेनविप्रर्षित्वेनसर्वेमाशामनोरथाः गणेशउवा० विप्रर्षित्वंचराजेंद्र प्राप्स्यसिब्रह्मपुत्रतः वसिष्ठाद्ब्राह्मणश्रेष्ठान्ममवाक्या
न्नसंशयः एवमुक्त्वागणेशोसौपूजितोभूमिपेनसः पुनरन्यंवरंचादात्पूजकानांहितायवै यदायदाचराजेंद्रसंकटंचकलौभुवि भविष्य
तिजनानांहिकर्तव्यंपूजनंमम स्मरिष्यंतिचमांभक्त्यानमस्कृत्यपुनःपुनः तेषांदुःखानिसर्वाणिनाशयामिनसंशयः एवंदत्वावरान्
सम्यक्तत्रैवांतर्हितोभवत् सनत्कुमारयोगींद्रपार्वत्यासुखपद्मतः श्रुतंमयाचत्रेतायांगणेशस्यव्रतंमहत् निवेदितंचतत्सर्वंकुरुविप्र
तपोनिधे सनत्कुमारउ० महदाख्यानकंश्रुत्वातृप्तोहंतन्नसंशयः एवमुक्त्वागतोयोगीनमस्कृत्यषडाननं सनत्कुमारसेनानीसंवा
दंचयथाश्रुतं व्यासप्रसादाच्छ्रुतवांस्तथातुभ्यंनिवेदितः इदंव्रतंगणेशस्यकरिष्यतिचमानवः तस्यकार्याणिसर्वाणिसिद्धिंयास्यंति
सत्वरम् किमन्यच्छ्रोतुमिच्छास्तिश्रोतुकामास्तपोधनाः तत्सर्वंकथयिष्यामिवक्तव्यंयदिवेच्छय यइदंशृणुयाद्भक्त्या आख्यानं-
चसमाहितः नदीप्सितानिकार्याणिसलभेन्निश्चितंभुवि शौनकाद्योऋषिगणःश्रुत्वासूतवचोद्भुतम् पौराणिकंनमस्कृत्यविर
रामासनेशुभे इतिश्रीभविष्योत्तरपुराणेस्कंदसनत्कुमारसंवादेतृतीयोध्यायः एकविंशतिदिनगणपतिव्रतकथासंपूर्णा ४६
अन्यच्चश्रावणशुक्लचतुर्थीमारभ्यमाघशुक्लचतुर्थीपर्यंतंदूर्वागणपतिव्रतं स्कांदे तत्रविधिः मासंपक्षंवायुक्तिरव्ययमम

समस्तपापक्षयपूर्वकसप्तजन्मराज्यसौभाग्यादिविवृद्ध्यर्थंउमामहेश्वरसायुज्यतासिद्ध्यर्थंषण्मासपर्यंतंगणपतिप्रीत्यर्थंदूर्वाव्रतंकरिष्ये षोडशोपचारैःपूजयेत् सूतउवाच कैलासशिखरेरम्येसर्वदेवनिषेविते सिद्धसंघसमाकीर्णेगंधर्वगणसेविते देव्यासह महादेवोदीव्यंस्त्वक्षैर्विनोदतः जितासित्वंजितेत्याहपार्वतींपरमेश्वरः सापित्वंजितइत्याहसविवादस्तयोरभूत् चित्रनेमिस्तदा दृष्ट्वामृषावादमभाषत तदाक्रोधसमाविष्टागौरीशापंददौततः प्रसादितानतस्तेनविशापंकुरुपार्वती पार्वत्युवाच य दासरोवरेरम्येचरिष्यतिभवान्भुवि तदास्वर्गणिकाःसर्वावीक्ष्यंतित्वांसमागताः तदाभवविशापस्त्वमित्युक्तःसपपातह ततः कतिपयाहोभिःकृष्णानंतसरोवरे कुष्ठीभूत्वावसंस्तत्रददर्शस्वर्विलासिनीः ततस्तुसागरंगत्वापप्रच्छप्रणिपत्यताः क्रियतेकिंम हाभागाःपूजायांवांछितंचकिम् ततस्ताअब्रुवंस्तस्मैदूर्वाविघ्नेश्वरव्रतम् क्रियतेस्माभिरिहचपरत्राभीष्टसिद्धये ततोब्रवीच्चित्र नेमिर्व्रतंमेदातुमर्हथ येनाहंगिरिजाशापान्मुच्येयंचिरदुःखितः ततस्ताअब्रुवन्सर्वाव्रतमेतदनुत्तमम् दूर्वाविघ्नेश्वरोयत्रपूज्यते सर्वसिद्धिदः शुक्लपक्षेचतुर्थ्यांयाभानुवारेणसंयुता तस्यांतिथौसमारभ्यषण्मासंव्रतमाचरेत् प्रत्यहंषड्नमस्काराःषड्दूर्वाःषट्प्रद क्षिणाः शुक्लपक्षेचतुर्थ्यांचप्रत्येकंचैकविंशतिः एकभक्तंचकर्तव्यंकथांचशृणुयादिमां ध्यायेद्विनायकंदेवंसमाहितमनाःसदा त रुणारुणसंकाशंसर्वाभरणभूषितं जटाकलापसंभग्नंकुंकुमेनापराजितं गजाननंप्रसन्नास्यंसिंदूरतिलकांकितम् विशालवक्ष संप्रानुमुक्तमणिविभूषितम् चतुर्भुजमुदारांगंकिंकिणीकंकणैर्युतम् पाशांकुशधरंदेवंदंतमोदकधारिणम् महोदरंमहानागंब द्धकुक्षिमुदान्वितम् स्कंदेरांशकसंवीतमभिभास्यमपराजितम् प्रणतामरसंदोहमौलिमाणिक्यरश्मिभिः विराजिताघ्रिकमलंसर्व देवनमस्कृतम् अभीष्टफलदंदेवंसर्वभूतोपकारकं एवंध्यात्वाजपेन्नित्यंविनायकमतंद्रितः एवंचरित्वाषण्मासान्शुचिःसत्यपरा यणः पश्चाद्गंधादिदूर्वाभिरर्चयेत्तंसदापुनः उद्यापनंप्रकर्तव्यंदेशकालानुसारतः ततोमगधदेशस्यमानेनयवपिष्टकम् दशमान कमादायदशाष्टावपिमोदकान् कृत्वाघृतप्लुतान्सम्यक्षट्देवायषडात्मने षट्चविप्रायदातव्याःश्रोत्रियायकुटुंबिने विनाय-

कोगणाध्यक्षोविघ्नेशः श्रीगणाधिपः वरदः सुमुखश्चैवदूर्वाषट्कैः प्रपूजयेत् षट्दूर्वाश्चतथादद्यान्महापूजांप्रकल्पयेत् एवंकुरुमहे
शानप्रीत्यर्थमभिवांछितम् तथेत्युक्त्वाचित्रनेमिः प्रीणयित्वाविनायकम् शापान्मुक्तस्ततः शंभुमभ्यगात्प्रहसन्निव शंकरेणततः पृ
ष्टश्चित्रनेमिस्तथाजगौ व्रतंश्रुत्वाततःशंभुर्गणेशस्यकुतूहलात् गौरीकोपप्रसादायशिवोपिकृतवानथ शिवेनोक्तंव्रतंचक्रेगणेशा
स्यप्रसादज कार्त्तिकेयोपिसंप्राप्तः सेनानीत्वंचतन्महत् व्रतंचकारनंदीचकार्त्तिकेयोक्तमादरात् सोपिराजाप्रसादायपुत्रार्थंचचकारह
ततःक्रमेणलोकेस्मिन्प्रचुरीभूतमुत्तमं व्रतंदूर्वागणेशस्यसर्वसिद्धिकरंपरं शोकव्याधिभयोद्वेगबंधव्यसनदुःखतः विमुक्तःपुत्रपौत्रा
द्धिनधान्यसमावृतः इहलोकेसुखीभूत्वापश्चाच्छिवपुरंव्रजेत् व्रतेनानेनदूर्वाख्यविघ्नेशस्यप्रसादतः यःपठेत्सरयाभक्त्याकथामेतां
दिनेदिने शृणुयाद्वापिसततंसर्वसिद्धिमवाप्नुयात् इतिश्रीस्कंदपुराणोक्तंदूर्वागणपतिव्रतोद्यापनंसंपूर्णं अथभाद्रपदशुक्लचतु-
र्थ्यांसिद्धिविनायकव्रतंहेमाद्रौस्कांदे तच्चमध्यान्हव्यापिन्यांकार्यम् प्रातःशुक्लतिलैःस्नात्वामध्यान्हेपूजयेन्नृप पार्थिवस्यगणेशस्यत
त्रैवंपूजनंचरेत् दिनद्वयेतद्व्याप्तौएकदेशव्याप्तौवापूर्वाऽन्यथापराचतुर्थीगणनाथस्यमातृविद्धाप्रशस्यते मध्यान्हव्यापिनीसातुपरत-
श्चेत्परेहनि इतिबृहस्पत्युक्तेः अथव्रतविधिः मासपक्षाद्युल्लिख्यममेहजन्मनिजन्मांतरेचपुत्रपौत्रधनविद्याजययशःश्रीक्म
मायुष्याभिवृद्ध्यर्थंसिद्धिविनायकप्रीत्यर्थंयथाज्ञानेनपुरुषसूक्तपुराणोक्तमंत्रैर्ध्यानावाहनादिषोडशोपचारैःपंचामृतैःसहपार्थिव
गणपतिपूजनंकरिष्ये तथाचमूर्तौप्राणप्रतिष्ठादिकमासनादिकलशाराधनंपुरुषसूक्तन्यासंचकरिष्ये पार्थिवमूर्तौदेवस्थापनं हेरंबा०
मृदाहरणं सुमुखाय० संघट्टनं गौरीसुताय० स्थापनं अथप्राणप्रतिष्ठांकुर्यात् अस्यश्रीप्राणप्रतिष्ठामंत्रस्य ब्रह्माविष्णुमहेश्व
राऋषयः ऋग्यजुःसामाथर्वाणिच्छंदांसि क्रियामयवपुःप्राणाख्यादेवता आंबीजं ह्रींशक्तिः क्रोंकीलकं अस्यांमूर्तौप्राणप्रतिष्ठापनेवि
नियोगः ॐ आंह्रींक्रों अंयंरंलंवंशंषंसंहंळंक्षंअः अस्यांमूर्तौप्राणास्तिष्ठंतु पुनः आं० अस्यांमूर्तौजीवइहस्थितः पुनः ॐ आं० अस्यां
मूर्तौसर्वेंद्रियाणिश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थानिइहैवागत्यसुखंचिरंतिष्ठंतुस्वाहा असुनीतेपुनरितिऋचंपठित्वा

गर्भाधानादिपंचदशसंस्कारसिद्ध्यर्थं पंचदशप्रणवावृत्तीः करिष्ये ॐ १५ तच्चक्षुर्देवहितं० देवस्याज्येननेत्रोन्मीलनंकृत्वापंचोपचार
पूजनंकृत्वा अथध्यानम् एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजम् पाशांकुशधरंदेवंध्यायेत्सिद्धिविनायकं ध्यायेदेवंमहाकायंतप्त
कांचनसंनिभं दंताक्षमालापरशुपूर्णमोदकहस्तकम् मोदकासक्तशुंडाग्रमेकदंतंविनायकं ध्यानं आवाहयामिविघ्नेशसुरराजा
र्चितेश्वर अनाथनाथसर्वज्ञपूजार्थंगणनायक सहस्रशीर्षेत्यावाहनं· विचित्ररत्नरचितंदिव्यास्तरणसंयुतम् स्वर्णसिंहासनंचारुगृहा
णसुरपूजित पुरुषएवे० आसनं० सर्वतीर्थसमुद्भूतंपाद्यंगंधादिसंयुतम् विघ्नराजगृहाणेदंभगवन्भक्तवत्सल एतावा० पाद्यं० अर्घ्यं
चफलसंयुक्तंगंधपुष्पाक्षतैर्युतं गणाध्यक्षनमस्तेस्तुगृहाणकरुणानिधे त्रिपादूर्ध्व· अर्घ्यं· दध्याज्यमधुसंयुक्तंमधुपर्कंमयाहृतम् गृहा
णसर्वलोकेशगणनाथनमोस्तुते मधुपर्कं· विनायकनमस्तुभ्यंत्रिदशैरभिवंदित गंगोदकेनतोयेनशीघ्रमाचमनंकुरु तस्माद्विराळ·
आचमनीयं· पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनस्नपनात्प्रीयतांगणनायकः पंचामृतस्नानं गंगादिसर्वतीर्थेभ्य आनीतंतोय
मुत्तमम् भक्त्यासमर्पितंतुभ्यंगृह्णाभीष्टदायक यत्पुरुषेणस्नानं· रक्तवस्त्रमिदंदेवदिव्यकांचनसंभवं सर्वप्रदगृहाणेदंलंबोदर
हरात्मज तंयज्ञमितिवस्त्रं· राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयकम् गृहाणचारुसर्वज्ञभक्तानांवरदोभव तस्माद्यज्ञा० उपवस्त्रं·
यज्ञोपवीतं· उद्यद्भास्करसंकाशंसंध्यावदरुणंप्रभो वीरालंकरणंदिव्यंसिंदूरंप्रतिगृह्यतां सिंदूरं· नानाविधानिदिव्यानिनानारत्नो
ज्ज्वलानिच भूषणानिगृहाणेशपार्वतीप्रियनंदन आभरणानि· कस्तूरीचंदनंचैवकुंकुमेनसमन्वितं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृ
ह्यतां तस्माद्यज्ञात्सर्वहुतऋचःसा गंधं· रक्ताक्षतांश्चदेवेशगृहाणद्विरदानन ललाटपटलेचंद्रस्तस्योपर्यवधार्यतां अक्षतान् माल्यादीनिसु
गंधीनिमालत्यादीनिवैप्रभो मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकह्ला
रैरर्चयेद्गणनायकं तस्मादश्वा० पुष्पाणि· अथांगपूजा गणेश्वरायनमः पादौपूजयामि· विघ्नराजाय० जानुनीपू० आखुवाहना०
ऊरूपू० हेरंबाय० कटीपू० कामारिसूनवे० नाभिंपू० लंबोदराय० उदरंपू० गौरीसुताय० स्तनौपूज० गणनायका० हृदयंपूज० स्थूलक

र्णाय० कंठंपू० स्कंदाग्रजाय० स्कंधौपू० पाशहस्ताय० हस्तौपू० गजवक्त्राय० वक्त्रंपू० विघ्नहर्त्रे० ललाटंपू० सर्वेश्वराय० शिरःपू० गणाधिपाय० सर्वांगं
पू० अथपत्रपूजा सुमुखाय० मालतीपत्रं० गणाधिपाय० भृंगिराजपत्रं० उमापुत्राय० बिल्वपत्रंस० गजाननाय० श्वेतदूर्वापत्रं० लंबोद
राय० बदरीपत्रंस० हरसूनवे० धत्तूरपत्रं० गजकर्णाय० तुलसीपत्रं० वक्रतुंडाय० शमीपत्रंस० गुहाग्रजाय० अपामार्गपत्रं० एकदंताय०
बृहतीपत्रं० विकटाय० करवीरपत्रं० कपिलाय० अर्कपत्रं० गजदंताय० अर्जुनपत्रं० विघ्नराजाय० विष्णुक्रांतापत्रं० बटवेनमः दाडिमीपत्रं०
सुराग्रजाय० देवदारुपत्रं० भालचंद्राय० मरुपं० हेरंबाय० अश्वत्थपत्रं० चतुर्भुजाय० जातीपत्रं० विनायकाय० केतकीप० सर्वेश्वराय०
अगस्तिपत्रं० २१ दशांगंगुग्गुलंधूपंसुगंधंचमनोहरम् गृहाणसर्वदेवेशउमापुत्रनमोस्तुते यत्पुरुषंव्यद्धुः० धूपं० सर्वज्ञसर्वलो
केशत्रैलोक्यतिमिरापह गृहाणमंगलंदीपंरुद्रप्रियनमोस्तुते ब्राह्मणोस्य० दीपं० नैवेद्यंगृह्यतांदेवभक्तिंमेह्यचलांकुरु ईप्सितं
मेवरंदेहिपरत्रचपरांगतिं नानारवाद्यमयंदिव्यंतुष्ट्यर्थेतेनिवेदितम् मयाभक्त्याशिवापुत्रगृहाणगणनायक चंद्रमामनसो०
नैवेद्यं० एलोशीरलवंगादिकर्पूरपरिवासितम् प्राशनार्थंकृतंतोयंगृहाणगणनायक मध्येपानीयं० उत्तरापोशनं० मुखप्रक्षाल०
मलयाचलसंभूतंकर्पूरेणसमन्वितं करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं बीजपूराम्रपनसखर्जूरीकदलीफलं नारी
केलफलंदिव्यंगृहाणगणनायक इदंफलंमया० फलं० एकविंशतिसंख्याकान्मोदकान्घृतपाचितान् नैवेद्यंसफलंदद्यान्नमस्तेवि-
घ्ननाशिने गणेशाय० मोदकार्पणं पूगीफलंमहद्दिव्यंनागवल्लीदलैर्युतं कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यताम् तांबूलं० हि
रण्यगर्भेतिदक्षिणां० वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितम् पुष्परागसमायुक्तंभूषणंप्रतिगृह्यतां भूषणानि० दूर्वायुग्मंगृह्य
णेदंगंधपुष्पाक्षतैर्युतम् पूजयेत्सिद्धिविघ्नेशंप्रत्येकंपूर्वनामभिः गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूष
कवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक कुमारगुरवेतुभ्यंपूजनीयःप्रयत्नतः इतिदूर्वार्पणं चंद्रादित्यौचधरणीविद्युद
ग्निस्तथैवच त्वमेवसर्वतेजांसिआर्तिक्यंप्रतिगृह्यताम् नीराजनम् विघ्नेश्वरविशालाक्षसर्वाभीष्टफलप्रद प्रदक्षिणां

..॥मत्वांसर्वान्कामान्प्रयच्छमे नाम्न्याआसीःतमदक्षिणां॰ नमस्तेविघ्नसंहर्त्रेनमस्तेईप्सितप्रद नमस्तेदेवदेवेशनमस्तेगणनायक
स गस्यासन्य॰ नमस्कारान् विनायकेशपुत्रेतिगणराजस्करोत्तम देहिमेसकलान्कामान्वंदेसिद्धिविनायक यज्ञेनयज्ञमय॰
मन्त्रपुष्पांजलिः॰ अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणाध्यक्षसमीपेकुरुनंदन दशाविप्रायदातव्यास्थाप
येद्दशआत्मनि एकंगणाधिपेदद्यात्सघृतंमोदकंशुभं दशानांमोदकानांचफलदक्षिणयायुतं विप्रायतत्तुसर्वंवायनंतेददाम्य
हं वायनमंत्रः विनायकस्यप्रतिमांवस्त्रयुग्मेनवेष्टिताम् तुभ्यंसंप्रददेविप्रप्रीयतांमेजनार्दनः विनायकगणेशानसर्वदेवनम
स्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय इतिप्रार्थना अथकथा शौनकाद्याऋषिगणानैमिषारण्यवासिनः सूतंपौराणि
कश्रेष्ठमिदमूचुर्वचस्तदा ऋषयऊचुः निर्विघ्नेनतुकार्याणिकथंसिद्ध्यन्तिसूतज अर्थसिद्धिःकथंनृणांपुत्रसौभाग्यसंप
दः दंपत्योःकलहेचैवबंधुभेदेतथानृणाम् उदासीनेषुलोकेषुकथंस्यात्सुमुखताभवेत् विद्यारंभेतथानृणांवाणिज्येचकृषौयथा नृ
पतेःपरचक्रस्यजयसिद्धिःकथंभवेत् कांदेवतांनमस्कृत्यकार्यसिद्धिर्भवेन्नृणां एतत्समस्तंविस्तार्यब्रूहिमेसूतपृच्छतः सूत
उवाच सन्नद्धयोःपुराविप्राःकुरुपांडवसेनयोः पृष्टवान्देवकीपुत्रंकुंतीपुत्रोयुधिष्ठिरः युधिष्ठिरउवाच निर्विघ्नेनजयंमत्र्यवदलदेवकीसु
त कांदेवतांनमस्कृत्यसम्यग्राज्यंलभेमहि कृष्णउ॰ पूजयत्त्वगणाध्यक्षमुमामलसमुद्भवं तस्मिन्संपूजितेदेवेध्रुवंराज्यमवाप्स्य
सि मासिभाद्रपदेशुक्लेचतुर्थ्यांपूजयेन्नृप मासिमाघेश्रावणेवामार्गशीर्षेतथाभवेत् गजवक्त्रंतुशुक्लायांचतुर्थ्यांपूजयेन्नृप
यदाचोद्भवतेभक्तिस्तदापूज्योगणाधिपः प्रातःशुक्लतिलैःस्नात्वामध्यान्हेपूजयेन्नृप निष्कमात्रसुवर्णेनतदर्धार्धेनवापुनः स्व
शक्त्यागणनाथस्यस्वर्णरौप्यमयाकृतिं अथवामृन्मयींकुर्याद्वित्तशाठ्यंनकारयेत् एकदंतंशूर्पकर्णंगजवक्त्रंचतुर्भुजं पाशां
कुशधरंदेवंध्यायेत्सिद्धिविनायकं कृत्वापूजांप्रयत्नेनस्नाप्यपंचामृतैःपृथक् गणाध्यक्षेतिनाम्नावैगंधंदद्याच्चभक्तितः आवाह
नार्घ्यपाद्यंचदत्वापश्चात्प्रयत्नतः रक्तवस्त्रयुगंचैवदद्याद्देवायभक्तितः विनायकेतिपुष्पाणिधूपंचोमासुतायच दीपंरुद्रप्रियायेतिनैवेद्यं

विघ्ननाशिने किंचित्स्वर्णपूजांचतांबूलंचसमर्पयेत् ततोदूर्वांकुरान्गृह्य विंशतिंचैकमेवहि पूजनीयः प्रयत्नेन एभिर्नामपदैः सह गणाधिपनम
स्तेस्तु उमापुत्राघनाशन विनायकेशपुत्रेतिसर्वसिद्धिप्रदायक एकदंतेभवक्त्रेतितथामूषकवाहन कुमारगुरवेतुभ्यंपूजनीयः प्रयत्नतः दूर्वा
युग्मंगृहीत्वातुगंधपुष्पाक्षतैर्युतम् एकैकेनतुनाम्नावैदद्यादेकंसर्वनामभिः अथैकविंशतिंगृह्यमोदकान्घृतपाचितान् स्थापयित्वागणा
ध्यक्षसमीपेकुरुनंदन दशविप्रायदातव्याःस्वयंग्राह्यास्तथादश एकंगणाधिपेदद्यात्सनैवेद्यंनृपोत्तम विनायकस्यप्रतिमांब्राह्मणाय
निवेदयेत् तुभ्यंसंप्रददेदेवप्रीयतांमेगजाननः विनायकगणेशत्वंसर्वदेवनमस्कृत पार्वतीप्रियविघ्नेशममविघ्नंविनाशय गणेशः प्र
तिगृह्णातिगणेशोवैददातिच गणेशस्तारकोभाभ्यांगणेशायनमोनमः कृत्वानैमित्तिकंकर्मपूजयेदिष्टदेवताम् ब्राह्मणान्भोजयेत्
पश्चाद्भुंजीयात्तैलवर्जितम् एवंकृतेधर्मराजगणनाथस्यपूजने विजयस्तेभवेन्नूनंसत्यंसत्यमयोदितम् वेष्णवाद्यास्तुदीक्षासुआ
दौपूज्योगणाधिपः तस्मिन्संपूजितेविष्णुरीशोभानुस्तथात्युमा हव्यवाहमुखादेवाःपूजिताःस्युर्नसंशयः चंडिकाद्यामातृगणाः
परितुष्टाभवंतिच तस्मिन्संपूजितेविप्राभक्त्यासिद्धिविनायके यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः सिध्यंतिसर्वकार्याणि
विनायकप्रसादतः इतिसिद्धिविनायकव्रतंभविष्योक्तंसंपूर्णम् मासिभाद्रपदेशुक्लेशिवलोकेप्रपूजिता तस्यांस्नानंतथादानंउ
पवासोर्चनंतथा क्रियमाणंशतगुणंप्रसादाद्दातिकौनृप चतुर्थीत्यनुषंगः अस्यामेवचंद्रदर्शनेदोषमाह पराशरः कन्यादित्येच
तुर्थ्यांचशुक्लेचंद्रस्यदर्शनम् मिथ्याभिदूषणंकुर्यात्तस्मात्पश्येन्नतंसदा तद्दोषशांतयेजाप्यंविष्णुनोक्तंचमन्त्रकम् सिंहःप्र
सेनमवधीत्सिंहोजांबवताहतः सुकुमारकमारोदीस्तवह्येषस्यमंतकः अथस्यमंतकोपाख्यानं नंदिकेश्वरउवाच शृणुष्वैका
ग्रचित्तःसन्व्रतंगाणेश्वरंमहत् चतुर्थ्यांशुक्लपक्षेतुसदाकार्यंप्रयत्नतः सनत्कुमारयोगींद्रयदीच्छेच्छुभमात्मनः नारीवा
पुरुषोवापियःकुर्याद्विधिवद्व्रतम् मोचयत्याशुविप्रेंद्रसंकष्टाद्व्रतिनंहितत् अपवादहरंचैवसर्वविघ्नप्रणाशनम् कांतारेवि
षमेवापिरणेराजकुलेऽथवा सर्वसिद्धिकरंविद्धिव्रतानामुत्तमंव्रतम् गजाननप्रियंचाथत्रिषुलोकेषुविश्रुतम् अतोनविद्यते

ब्रह्मन्सर्वसंकष्टनाशनम् सनत्कुमारउ० केनचादौपुराचीर्णंमर्त्यलोकेकथंगतम् एतत्समस्तंविस्तार्यंब्रूहिगणेश्वरमह
त् नंदिकेश्वरउ० चक्रांकितजगन्नाथोवासुदेवःप्रतापवान् आदिष्टोनारदेनैववृथालांछनमुक्तये सनत्कुमारउवो० षड्गुणैश्वर्य
संपन्नःसृष्टिसंहारकारकः वासुदेवोजगद्व्यापीप्राप्तवान्लांछनंकथं एतदाश्चर्यमाख्यानंब्रूहित्वंनंदिकेश्वर नंदिकेश्वरउ०
भूमिभारनिवृत्त्यर्थंवसुदेवसुतावुभौ रामकृष्णौसमुत्पन्नौपन्नगारिफणीश्वरौ जरासंधभयात्कृष्णोद्वारकांसमकल्पयत् विश्वक
र्माणमाहूयपुरींहाटकनिर्मिताम् तत्रषोडशसाहस्रस्त्रीणांचैवशताधिकम् भवनानिमनोज्ञानितेषांमध्येव्यकल्पयत् पारिजात
तरुंमध्येतासांभोगायकल्पयत् यादवानांगृहास्तत्रषट्पंचाशतकोटयः अन्येपिबहवोलोकावसंतिविगतज्वराः यत्किंचित्त्रिषुलो
केषुसुंदरंतत्रदृश्यते सत्राजितप्रसेनाख्यौपुत्रावुग्रस्यविश्रुतौ अंभोधितीरमासाद्यतन्मनस्कतयाचसः सत्राजितस्तपस्तेपेसूर्यमु-
द्दिश्यबुद्धिमान् व्रतंनिरशनंगृह्यसूर्यसंबद्धलोचनः ततःप्रसन्नोभगवान्सत्राजितपुरःस्थितः सत्राजितोपितुष्टावदृष्ट्वादेवंदिवाकरं
तेजोराशेनमस्तेस्तुनमस्तेसर्वतोमुख विश्वव्यापिन्नमस्तेस्तुहरिदश्वनमोस्तुते ग्रहराजनमस्तेस्तुनमस्तेचंडरोचिषे वेदत्रयनमस्ते
स्तुसर्वदेवनमोस्तुते प्रसीदपाहिदेवेशकृदृष्ट्यामांदिवाकर इत्थंसंस्तूयमानोसौदेवदेवोदिवाकरः स्निग्धगंभीरमधुरंसत्राजितमुवा
च सूर्यउ० वरंब्रूहिप्रदास्यामियत्तेमनसिवर्त्तते सत्राजितमहाभागतुष्टोहंतवनिश्चयात् सत्राजितउ० स्यमंतकमणिंदेहियु-
दितुष्टोसिभास्कर ददौतस्यचतद्रत्नंस्वकंठादवतार्यसः भास्करउ० भाराष्टकंशातकुंभंस्रवतेसौमहामणिः शुचिष्मतासदाधार्यर
त्नमेतन्महोत्तमं सत्राजितक्षणेनैतद्दंतिस्यशुभमानसम् इत्युक्त्वांतर्दधेदेवस्तेजोराशिर्दिवाकरः तत्कंठरत्नज्वलमानरूपीपुरींसकृ
ष्णस्यविवेशसत्वरम् दृष्ट्वातुलोकामनसादिवाकरंसंचिंतयंतोहिविनष्टदृष्टयः समागतोयंहरिदश्ववदीधितिर्जनार्दनंद्रष्टुमसंश
येन नायंसहस्रांशुरितीहलोकाःसत्राजितोयंमणिकंठभास्वान् स्यमंतकंमहारत्नंदृष्ट्वातत्कंठमंडले स्पृहांचक्रेजगन्नाथोनज
हारमणिंततः सत्राजितोजातभयोयाचयिष्यतिमांहरिः प्रसेनायददौभ्रात्रेधार्योयंशुचिनात्वया एकदाकंठदेशेसोक्षिप्त्वातंम-

णिमुत्तमं मृगयार्थीऽटनार्थीययौकृष्णेनसंयुतः अश्वारूढोशुचिर्भ्रांसोहतः सिंहेनतत्क्षणात् रत्नमादायसिंहोपिगच्छन्जांबवताहतः नी
त्वासविवरंरत्नंददौपुत्रायजांबवान् पुरींविवेशकृष्णोपिस्वकैः सर्वैः समावृतः प्रसेनोऽद्यापिनायातिहतःकृष्णेननिश्चितम् मणिलोभेनहा
कष्टं वांधवः पापिनाहतः द्वारकावासिनः सर्वेजनाऊचुःपरस्परम् वृथापवादसंतप्तःकृष्णोपिनिरगाच्छनैः सहैववनैर्यथाऽरण्येदृष्ट्वासि
हेनपातितम् प्रसेनंवाहनयुतंततस्तदानुचराःशनैः ऋक्षेणनिहतंदृष्ट्वाकृष्णोऽधर्षविलंगतः विवेशयोजनशतमंधकारंस्वतेजसा निवा
रयन्ददर्शाग्रेप्रासादंवहुभूमिकम् तंकुमारंजांबवतीदोलायामभितद्युतिम् माणिक्यंलंबमानंचददर्शभगवान्हरिः रूपयौवनसंपन्नां
कन्यांजांबवतींपुनः दोलांदोलयमानांचददर्शकमलेक्षणः महांतंविस्मयंचक्रेदृष्ट्वातांचारुहासिनीं दोलांदोलयमानांचजगौगीतमिदंसुहुः
सिंहःप्रसेनमवधीत्सिंहोजांबवताहतः सुकुमारकमारोदीस्तवह्येषस्यमंतकः मदनज्वरदाहार्तादृष्ट्वातंकमलेक्षणं उवाचललितंबालागम्य
तांगम्यतामिति रत्नंगृहीत्वावेगेनयावच्छेतेतुजांबवान् इत्याकर्ण्यहसन्शौरिःशंखंदध्मौप्रतापवान् आकर्ण्यसहसोत्थाययुयुधेयस्तरादृत
तः तयोर्युद्धमभूद्घोरंहरिजांबवतोस्तदा द्वारकावासिनःसर्वेगतास्तेसप्तमेदिने मृतःकृष्णोनिरीक्षतोनिःसंदिग्धंविचार्यच परलोकक्रि
यांचक्रुःपरेतस्यतुतेतदा एकविंशद्दिनंयावद्बाहुप्रहरणोविभुः युयुधेतेनऋक्षेणयुद्धरूमणितोऽपितः जांबवान्माक्रमनस्मृत्वादृष्ट्वादेव
बलंमहत् जांबवान्। अजेयोऽहंसुरैःसर्वैर्यक्षराक्षसदानवैः त्वयाजितोऽहंदेवेशदेवस्त्वमसिनिश्चितं जानेत्वांवैष्णवंतेजोनान्यथाबलमीदृशं
इतिप्रसाद्यदेवेशंददौमाणिक्यमुत्तम सुतांजांबवतींनामभार्यार्थंवरवर्णिनीम् पाणिंवैग्राहयामासदेवदेवंचजांबवान् मणिमादायदेवोपिजां
बवत्यापिसंयुतः तद्वृत्तांतंसमाचष्टेद्वारकावासिनांस्वयं सत्राजितस्यमाणिक्यंदत्तवान्संसदिस्थितः मिथ्यापवादसंशांतिंप्राप्तवान्मधुसूद
नः सत्राजितोपिसंत्रस्तःकृष्णायप्रददौसुतां सत्यभामांमहाबुद्धिर्ददौसर्वगुणान्विताम् शतधन्वाक्रूरमुख्यायाद्धवादुष्टमानसाः सत्राजि
तेनृतंवैरंचक्रूरत्नाभिलाषिणः दुरात्माशतधन्वापिगतेकृष्णेचपांडवान् सत्राजितंनिहत्याशुमणिंजग्राहपापधीः कृष्णस्यपुरतःसत्या
समाचष्टेविचेष्टितम् अंतर्हृष्टोबहिःकोपीकृष्णःकपटनायकः बलदेवपुरोवाक्यमुवाचधरणीधरः हत्वासत्राजितंदृष्ट्वामणिमादा

यगच्छति निहत्यशतधन्वानंगृहीत्वारत्नमावयोः ममभोग्यंचतद्रत्नंभविष्यतिसुनिश्चितम् एतच्छ्रुत्वाभयात्रस्तः शतधन्वापिया
दवः आहूयाक्रूरनामानंमणिवर्यंप्रददौचसः आरुह्यवडवांवेगान्निर्गतोदक्षिणांदिशम् रथस्थावनुगच्छेतांतदारामजनार्दनौ शतयो
जनमात्रेणममारवडवानदा पलायमानोनिहतः नचकृष्णेनपदातिना रथस्थेबलदेवेनुहतेरत्नस्यलोचनः नदृष्टंनचतद्रत्नंबलदेवपु
रेवदत् तदाकर्ण्यमहारोषादुवाचवचनंबली कपटीत्वंसदाकृष्णलोभीपापीसुनिश्चितम् अर्थायस्वजनंहंसिकस्त्वांबंधुंसमाश्रयेत्
अनेकशपथैःकृष्णोबलदेवप्रसादयन् सोपिधिक्कष्टमित्युक्त्वाययौवैदर्भमंडलम् कृष्णोपिरथमारुह्यद्वारकांप्रययौपुनः नथैवोद्ध
र्जनाःसर्वेनसाधीयानयंहरिः निष्कासितोरत्नलोभाज्ज्येष्ठोभ्रातानाबलोबली तच्छ्रुत्वादीनवदनःपापीयानिवसंस्थितः वृथाभिशा
पात्संतप्तोबभूवसजगत्पतिः अक्रूरोपिविनिष्क्रम्यतीर्थयात्रानिमित्ततः काशीगत्वासुखेनासोयजन्यज्ञपतिंप्रभुम् तोषयुत्पादयामा
सतेनद्रव्येणबुद्धिमान् सुरालयगृहेश्चित्रैर्नगरंसमकल्पयत् नदुर्भिक्षंनवैरोगाईतयोनचाविड्वरम् शुचिनाधार्यतेतत्रमणिःसूर्य
स्यनिश्चितम् जानन्नपिहितत्सर्वंमानुषभावमाश्रितः लोकाचारंतथामायामज्ञानंचसमाश्रितः बंधुवैरंसमुत्पन्नंलांछनंसमुप-
स्थितं वृथापवादबहुलंजायमानंकथंहरेत् इतिचिंतातुरंकृष्णंनारदःसमुपस्थितः गृहीत्वातत्कृतापूजांसुखासनगतोब्रवीत्
नारदउवाच किमर्थंखिद्यसेदेवकिंवातेशोककारणम् यथावृत्तंसमाचष्टेनारदायचकेशवः जानामिकारणंदेवयदर्थंलांछनंत
व त्वयाभाद्रपदेशुक्लेचतुर्थ्यांचंद्रदर्शनम् कृतंतेनसमुत्पन्नंलांछनंतुवृथैवहि श्रीकृष्णउ० वदनारदमेशीघ्रंकोदोषश्चंद्रदर्शने कि
मर्थंतुद्वितीयायांनस्यकुर्वंतिदर्शनं नारदउ० गणनाथेनसंशप्तश्चंद्रमारूपगर्वतः तद्दर्शनेनराणांहिवृथानिंदाभविष्यति श्रीकृ
ष्णउ० किमर्थंगणनाथेनशप्तश्चंद्रःसुधामयः इदमाख्यानकंश्रेष्ठंयथावद्वक्तुमर्हसि नारदउ० गणानामाधिपत्येचरुद्रेणाधि
हितःपुरा अणिमामहिमाचैवलघिमागरिमा तथा प्राप्तिःप्राकाम्यमीशित्वंवशित्वंचाष्टसिद्धयः भार्यार्थंप्रददौदेवोगणेशस्यप्रजा
पतिः पूजयित्वागणाध्यक्षंस्तुतिंकर्तुंप्रचक्रमे ब्रह्मोवाच गजवक्त्रगणाध्यक्षलंबोदरवरप्रद विघ्नराजाधिदेवेशसृष्टिसंहार

कारकं संपूजयेद्गणाध्यक्षं मोदकाद्यैः प्रयत्नतः तेषां प्रजायते सिद्धिर्निर्विघ्नेन न संशयः असंपूज्य गणाध्यक्षं ये वांछंति सुरासुराः नतेषां-
जायते सिद्धिः कल्पकोटिशतैरपि त्वद्भक्त्या तु गणाध्यक्ष विष्णुः पालयते सदा रुद्रोपि संहरत्याशु त्वद्भक्त्यैव करोम्यहम् इत्थं संस्तूयमानो
सौ देवदेवो गजाननः उवाच परमप्रीतो ब्रह्माणं जगतां पतिः श्रीगणेश उ॰ वरं ब्रूहि प्रदास्यामि यत्ते मनसि वर्त्तते ब्रह्मोवाच क्रियमा
णस्य मे सृष्टिर्निर्विघ्नं जायतां प्रभो एवमस्त्विति देवोसौ गृहीत्वा मोदकान्करे सत्यलोकान्समागत्य स्वेच्छया गगने शनैः चंद्रलोकं समा
साद्य चलितो गणनायकः उपहासं तदा चक्रे सोमो रूपमदान्वितः तं दृष्ट्वा कोपताम्राक्षो गणनाथः शशाप ह दर्शनीयः सुरूपोहं सुंदर-
श्चाहमित्यथ गर्वितोसि शशांक त्वं फलं प्राप्स्यसि सत्वरम् अद्यप्रभृति लोकास्त्वां नहि पश्यंति पापिनम् ये पश्यंति प्रमादेन त्वां नरा
मृगलांछनम् मिथ्याभिशापसंयुक्ता भविष्यंति हि ते ध्रुवम् हाहाकारो महानासीच्छ्रुत्वा शापं च भीषणम् अत्यंतम्लानवदनश्चंद्रो
जलमथाविशत् कुमुदं कौमुदीनाथः स्थितस्तत्र कृतालयः ततो देवर्षिगंधर्वा निराशो द्विग्नमानसाः तुराषाहं पुरोधाय जग्मुस्ते तं पिता
महम् देवः शशंस चंद्रस्य गणेशस्य च चेष्टितम् दत्तः शापो गणेशेन कथयामास सुरादरात् विचार्य भगवान्ब्रह्मा तान्सुरानिदम
ब्रवीत् गणेशशापो देवेंद्राः शक्यते केन वान्यथा कर्त्तुं रुद्रेण न मया विष्णुना चापि निश्चितम् तमेव देवदेवेशं व्रजध्वं शरणं सुराः
स एव शापमोक्षं च करिष्यति न संशयः देवा ऊचुः केनोपायेन वरदो गजवक्त्रो गणेश्वरः पितामह महाप्राज्ञ नदस्माकं वद प्रभो
पितामह उ॰ चतुर्थ्यां देवदेवोसौ पूजनीयः सदैव हि कृष्णपक्षे विशेषेण नक्तं कुर्याच्च तद्व्रतम् अपूपैर्घृतसंयुक्तैर्मोदकैः परितोषयेत्
मधुरान्नं हविष्यं च स्वयं भुंजीत वाग्यतः स्वर्णरूपं गणेशस्य दातव्यं द्विजसत्तमे शक्त्या च दक्षिणां दद्याद्वित्तशाठ्यं न कारयेत् एवं स
मेत्य ते सर्वे प्रेषयामासुर्गीष्पतिम् स गत्वा कथयामास चंद्राय ब्रह्मणोदितम् व्रतं चक्रे ततश्चंद्रो यथोक्तं ब्रह्मणा पुरा आविर्बभूव भग
वान्गणेशो व्रततोषितः तं क्रीडमानं गणनायकं च तुष्टाव दृष्ट्वा तु कलानिधानः त्वं कारणं कारणकारणानां वेत्तासि वेद्यं च विभो प्रसीद
प्रसीद देवेश जगन्निवास गणेश लंबोदर वक्रतुंड विरिंचिनारायणपूज्यमान क्षमस्व मे गर्वकृतं च हास्यम् ये त्वामसंपूज्य गणेश नूनं वां-

छंतिमूढाःस्वकृतार्थसिद्धिम् नदेवनष्टाविस्मृतंचलोकेज्ञातोमयातेसकलःप्रभावः येचाप्युदासीननरास्तुपापास्तेषांनिवासंनरकेसदेव
हेरंबलंबोदरमेक्षमस्वदुश्चेष्टितंतत्करुणासमुद्र एवंसंस्तूयमानोसौचंद्रेणाथगजाननः गणेशउवा० तुष्टोहंतववदास्वामिनेतद्दयंम
यातव ततोब्रह्मादयःसर्वेसमाजग्मुर्भयार्दिताः विशापंकुरुदेवेशप्रार्थयामोवयंनव विशापमकरोच्चंद्रंकमलासनगौरवात् शुक्लप-
क्षेचतुर्थ्यांतुयेपश्यंतिसदेवहि मिथ्यापवादमावर्षंप्राप्स्यंतीहनसंशयः मासादौपूर्वमेवत्वांयेपश्यंतिसदाजनाः चतुर्थ्यांशुक्लपक्ष
स्यतेषांदोषोनजायते तदाप्रभृतिलोकोयंद्वितीयायांकृतादरः पुनरेवनुपप्रच्छकलावान्गणनायकम् केनोपायेनदेवेशतुष्टोभवसित
द्वद गणेशउवा० सदाकृष्णचतुर्थ्यांतुमोदकाद्यैःप्रपूज्यमाम् रोहिण्यासहितंत्वांचसमभ्यर्च्यविधानतः यथाशक्त्याचमद्रूपंस्वर्णे
नपरिकल्पितम् दत्वाद्विजायभुक्त्वाथकथांश्रुत्वाविधानतः सदातस्यकरिष्यामिसंकष्टस्यनिवारणम् भाद्रशुक्लचतुर्थ्यांतुमृन्मयीम
निमास्तुमा हेमाभावेतुकर्तव्यानानापुष्पैःप्रपूज्यमाम् ब्राह्मणान्भोजयेत्तस्यांजागरंचविशेषतः स्थापयेद्व्रणंकुंभंधान्यस्योपरि
शोभितं यथाशक्त्याचमद्रूपंशातकुंभेननिर्मितम् वस्त्रद्वयसमाच्छन्नंमोदकाद्यैःप्रपूज्यमां रक्तांबरधरोमर्त्योब्रह्मचर्यव्रतःशुचिःरा
जतस्यतुरूपंमेयथाशक्त्याविनिर्मितं वस्त्रंशिवप्रियायेतिउपवस्त्रंगणाधिपे गंधंलंबोदरायेतिपुष्पंसिद्धिप्रदायके धूपंगजमुखायेति
दीपंमूषकवाहने विघ्ननाथायनैवेद्यंफलंसर्वार्थसिद्धिदे तांबूलंकामरूपायदक्षिणांधनदायच इक्षुदंडैर्मोदकैश्चहोमंकुर्याच्चना
मभिः विसर्जनंततःकुर्यात्सर्वसिद्धिप्रदायकम् एवंसंपूज्यविघ्नेशंकथांश्रुत्वाविधानतः मंत्रेणानेनतत्सर्वंब्राह्मणायनिवेदयेत् दानेना
नेनदेवेशप्रीतोभवगणेश्वर सर्वत्रसर्वदादेवनिर्विघ्नंकुरुसर्वदा मानोन्नतिंचराज्यंचपुत्रपौत्रान्प्रदेहिमे गाश्चधान्यंचवासांसिदद्या
त्सर्वस्वशक्तितः दत्वानुब्राह्मणैःसर्वैःस्वयंभुंजीतवाग्यतः मोदकापूपमधुरंलवणक्षारवर्जितम् एवंकरोतियश्चंद्रतस्याहंसर्वदाजयं
सिद्धिंचधनधान्येचददामिविपुलाःप्रजाः इत्युक्त्वांतर्दधेदेवोविघ्नराजोविनायकः तद्व्रतंकुरुकृष्णत्वंततःसिद्धिमवाप्स्यसि नारदेनैवमु
क्तश्चव्रतंचक्रेहरिःस्वयं मिथ्यापवादनिर्मुक्तस्ततःकृष्णोभवच्छुचिः येशृण्वंतितवाख्यानंस्यमंतकमणीयकम् चंद्रस्यचरितंसर्वं

तेषांदोषोनजायते भाद्रशुक्लचतुर्थ्यांतु कचिच्चंद्रस्यदर्शनम् जातंतत्परिहारार्थंश्रोतव्यंसर्वमेवहि यदायदामनःकष्टंसंदेहउपजा
यते तदातदाचश्रोतव्यमाख्यानकष्टनाशनम् एवमुक्त्वागतोदेवोगणेशःकृष्णतोषितः यदायदाचरतिकार्यंउत्थितोनारीनरश्चाथ
करोतितद्व्रतम् सिद्ध्यंतिकार्याणिमनोप्सितानिकिंदुर्लभंविघ्नहरेप्रसन्ने इतिश्रीस्कंदपुराणेनंदिकेश्वरसनत्कुमारसंवादेस्यमंतको
पाख्यानसंपूर्णम् अथकपर्दीविनायकव्रतम् श्रावणस्यसितेपक्षेचतुर्थ्यामेकभुग्व्रती व्रतंकुर्याद्गणेशस्यमासमेकंव्रतंचरेत्
सर्वसिद्धिकरंनृणांस्कंदचैवसुरेश्वर तद्विधिः तिथ्यादिस्मृत्वा ममचतुर्विधपुरुषार्थसिध्यर्थंकपर्दीगणेशव्रतमहंकरिष्ये
मूलमंत्रेणषडंगन्यासपूजांकुर्यात्समारभेत ॐ नमोभगवतेसकलगुणात्मशक्तियुतानंतयोगपीठायनमः अष्टदलंकारयेयुः
ॐ तीव्रायैनमः ज्वालिन्यैनमः नर्मदायैनमः कामरूपिण्यैनमः उग्रायै० तेजोवत्यै० मध्ये विघ्नविनाशिन्यैनमः अथध्यानं
एकदंतंमहाकायंलंबोदरगजाननम् विघ्ननाशकरंदेवंगणेशंप्रणमाम्यहम् इमांपूजांगृहाणेशकपर्दीगणनायक आगच्छइ-
तित्रिवारपठेत् विनायकनमस्तुभ्यमुमामलसमुद्भव इमांमयाकृतांपूजांप्रीत्यर्थंप्रतिगृह्यताम् सहस्रशीर्षेत्यावाहनम् अ-
लंकारसमायुक्तंमुक्तामणिविभूषितम् स्वर्णसिंहासनंचारुप्रीत्यर्थंप्रतिगृह्यताम् पुरुषएवेदमासनं गौरीसुतनमस्तेस्तुशंकर-
प्रियकारक भक्त्यापाद्यंमयादत्तंगृहाणगणनायक एतावानस्येतिपाद्यं व्रतमुद्दिश्यविघ्नेशगंधपुष्पादिसंयुतम् गृहाणार्घ्यंमया
दत्तंसर्वसिद्धिप्रदायक तस्माद्विराळाचमनीयं अनाथनाथसर्वज्ञगीर्वाणपरिपूजित स्नानंपंचामृतंदेवगृहाणगणनायक आप्या
यस्वेतिदुग्धं दधिक्राव्णोइतिदधि घृतंमिमिक्षेतिघृतं मधुवातेतिमधु स्वादुःपवस्वेतिशर्करा इतिपंचामृतस्नानं गंगाजलसमा-
नीतंहेमांभोरुहवासितम् स्नानंस्वीकुरुविघ्नेशकपर्दीगणनायक यत्पुरुषेणेतिस्नानं हरिद्राभंद्वयंदेवदेवांगवसनोपमम् भक्त्या
दत्तंगृहाणेशलंबोदरहरात्मज तंयज्ञमितिवस्त्रं० नानालंकारसंयुक्तंनानारत्नविभूषितम् अनेकदिव्याभरणंप्रीत्यर्थंप्रतिगृह्य
ताम् आभरणानि राजतंब्रह्मसूत्रंचकांचनंचोत्तरीयक भालचंद्रनमस्तुभ्यंगृहाणवरदोभव तस्माद्यज्ञादितियज्ञोपवीतम्

गंधंकर्पूरसंयुक्तंदिव्यंचंदनमुत्तमम् विलेपनंसुरश्रेष्ठप्रीत्यर्थंप्रतिगृह्यताम् तस्मादघ्नात्सर्वद्रुनेतिगंधं अक्षतान्धवलान्देवसिद्ध
गंधर्वपूजित भक्त्यादत्तान्गृहाणेमान्सर्वसिद्धिप्रदायक अक्षतान् सुगंधीनिचपुष्पाणिऋद्धिसिद्धिप्रदायक कपर्दिगणनाथेश
श्वेतपुष्पंददाम्यहम् तस्मादश्वेतिपुष्पं अथांगपूजा कपर्दिगणनाथाय० पादौपूजयामि गणेशाय० जानुनीपू० गणनाथाय०
ऊरूपू० गणक्रीडाय० कटीपू० वक्रतुंडाय० हृदयंपू० लंबोदराय० कंठंपू० गजाननाय० स्कंधौपू० हेरंबाय० हस्तौपू० विकटाय० मुखं
पू० विघ्नराजाय० नेत्रेपू० धूम्रवर्णाय० शिरःपू० कपर्दिनेनमः सर्वांगंपूजयामि अथावरणपूजा ईशानाय० अघोराय० तत्पुरुषा
य० वामदेवाय० सद्योजाताय० इतिप्रथमावरणं १ वक्रतुंडाय० एकदंताय० महोदराय० गजाननाय० विकटाय० विघ्नराजा० धूम्रवर्णा
य० विनायकाय० द्वितीयावरणं २ ब्राह्म्यैनमः माहेश्वर्यै० कौमार्यै० वैष्णव्यै० वाराह्यै० इंद्राण्यै० चामुंडायै० महालक्ष्म्यैनमः तृतीया
वरणं ३ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशानाय० वरुणनिर्ऋत्योर्मध्ये अनंताय० इंद्रेशानयो
र्मध्ये ब्रह्मणे० इतिचतुर्थावरणं ४ वज्राय० शक्तये० दंडाय० खड्गाय० पाशाय० अंकुशाय० गदायै० त्रिशूलाय० चक्राय० अब्जाय०
इतिपंचमावरणं ५ दशांगंगुग्गुलंधूपंचंदनागरुसंयुतम् उमासुतनमस्तुभ्यंगृहाणवरदोभव यत्पुरुषमितिधूपम् गृहाणमंगलंदे
वघृतवर्तिसमन्वितम् दीपंज्ञानप्रदंचारुरुद्रप्रियनमोस्तुते ब्राह्मणोस्येतिदीपं नैवेद्यंगृह्यतां० चंद्रमामनसेतिनैवेद्यम् आचम
नीयं० इदंफलमितिफलं० पूगीफलमितिताम्बूलं० हिरण्यगर्भेतिदक्षिणां० अग्निर्ज्योतिरविर्ज्योतिर्ज्योतिरग्निर्विभावसुः ज्योतिस्त्वंस
र्वदेवानांगणाधिपनमोस्तुते नीराजनं० यानिकानिचपापानि० नाभ्याआसीतिप्रदक्षिणा० नमोस्त्वनंतायस० सप्तास्यादिनिनम-
स्कारः गणाधिपनमस्तेस्तुनमस्तेस्तुगजानन लंबोदरनमस्तेस्तुनमस्तेत्वविकासुत एकदंतनमस्तेस्तुनमस्तेस्तुभवप्रिय स्कं
दाग्रजनमस्तेस्तुनमस्तेस्त्वीप्सितप्रद कपर्दिगणनाथेशसर्वसंपत्प्रदायक यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं अथब्रह्मचारीपू-
जा आकर्णान्मुष्टिगणकान्विंशत्यष्टौवराटकान् विप्रायबटवेदद्याद्गंधपुष्पार्चितायच तंडुलान्वेतनोदद्यात्पाकेचान्नेचशो

भनान् कपर्दीगणनाथासौप्रीयतांतंदुलैः सदा कथांश्रुत्वाविधानेनदेवमुद्वासयेत्ततः इतिकपर्दीगणपतिपूजा अथकथा
कदाचिदुपविष्टश्चपार्वत्यासहशंकरः द्यूतेच्छाकिंअस्तिदेविक्रीडितुंतवकिंसुभे दुरोदरमिषाज्जेतुंवांछितंप्रत्युवाचसा ममापिअ
स्तिसापेक्षादीयतेचेत्पणोमम तवकिंकिमभीष्टंतुदास्यामिपरमेश्वरि लोकत्रयंगाइच्छास्तेकिमन्यैर्वचनैर्वृथा पृच्छामिलावचोदेवि
दातव्यंकिंकिमिच्छसि विश्वासोयेनजायेततहृदायशक्मानने वाक्यमेवंविधंश्रुत्वाशर्वाणीचशिवांतिके नविश्वासोस्तितेवाक्येजि-
तादास्यासिमत्पणः इतिश्रुत्वावचोदेव्याःशंकरःप्राहनिश्चयं पणःप्रकल्प्यतांदेविदीयतेदेनसंशयः भावंसंचिंत्यदेवस्यसत्वरात्रीडि
तुंययौ आयुधानिततोदेवःपणेयोजितवान्हरः त्रिशूलंत्रिदशाच्छर्वीज्जितवत्येववल्लभा तस्मिन्कर्मणिनिर्जित्वापणमन्यंशिवाग्रही
त् एवंडमरुकादीनितान्यन्यान्यजयत्पृथक् दीनोभूत्वामहादेवोभवानीमब्रवीदिति शार्दूलचर्मतन्मध्येदेहिमेगिरिजेशुभे नचैवं-
वक्तुमुचितंमहादेवपणेगते पणेजितेनदास्यामिपूर्वमुक्तोसितत्स्मर अविचिंत्यब्रवीषित्वंजगदीशकृपानिधे इतिश्रुत्वावचोदेव्याः
कुपितोसौमहेश्वरः आद्वादशादिनंदेविनकरिष्यामिभाषणम् इत्युक्त्वाचमहादेवस्तत्रैवांतरधीयत रक्षरक्षमहादेवकिंजीवनम
तःपरम् इतिसंचिंत्यसाद्रष्टुमुद्यानमत्यपद्यत गिरिजानन्दवनितान्वृंदंदृष्ट्वाब्रवीदिति किमर्थमागताःसर्वाःकिमेतत्क्रियतेधुना
कपर्दीगणनाथस्यव्रतंकर्तुमिहागताः तस्यपूजांविहायादौइदानींश्रूयतेकथा किमर्थंतद्व्रतंनार्योयुष्माभिःक्रियतेवने फलमस्यकि
मस्तीतिपार्वतीप्राहताःप्रति पृच्छतोकिंसयादेविनरैर्नारीभिरंबिके अभीष्टसिद्धिरस्मिंस्तुवर्ततेभुवनत्रये इतिश्रुत्वावचस्ता
सांपार्वतीप्राहतांप्रति मानःकुपित्वाभगवान्निर्गतस्तुमहेश्वरः तस्यसंदर्शनायेदंकरिष्येव्रतमुत्तमम् व्रतस्यैतस्यकिंदानंविधानं
कीदृशंमम सर्वंविचिंत्यमनसाकथयंतुसुरांगनाः कालोविधानंदानंचव्रतस्यास्यफलंतथा तत्सर्वंसावधानेनवक्ष्यामिश्रृणु
पार्वति स्त्रियऊचुः पातादिदोषरहितेसचतुर्थ्यानुवासरे इषेमासिव्रतंसम्यक्गणेशार्पितमानसः तैलतांबूलभोगादीन्वर्ज
यित्वाशिवप्रिये मंदवारेतुभुंजीयादेकवारंमितंयथा प्रातःकालेशुचिर्भूत्वास्नानंकुर्याद्विधानतः वापीकूपतटागेषुनद्यांशुक्ल

तिलैः सह संध्यादिकंयथाविंत्यंसर्वंनिर्वर्त्ययत्नतः अर्चनागारमासाद्यगोमयेनोपलिप्यच गोचर्ममात्रंतन्मध्येकुर्यादंधेनमंडलम्
तन्मध्येऽष्टदलंपद्मंतन्मध्येगणनायकम् पूजयेत्स्वच्छकुसुमैर्हरिद्राभिश्रिताक्षतैः गांगींगूंगैंगौंगश्चन्यासंकृत्वाततःपरम् मंत्रेणा
नेनकुसुमैर्देवमावाह्यनिक्षिपेत् अथवागणनाथस्यप्रतिमामथपूजयेत् ततस्तद्गतचित्तःसन्ध्यानंकुर्याद्विधानतः एकदंतंमहाका
यंलंबोदरगजाननम् विघ्ननाशकरंदेवंहेरंबंप्रणमाम्यहम् इमांपूजांगृहाणेशकपर्दिगणनायक आगच्छेतिसमुच्चार्यकुर्यादावाह
नादिकम् पुराणमंत्रैरथवावेदमंत्रैश्चषोडशैः पूजयेदुपचारैश्चमूलमंत्रेणपार्वति तत्तत्प्रकाशकैर्मंत्रैर्गंधपुष्पाक्षतादिभिः इंद्रादिलो
कपालांश्चपूजयेद्देवसन्निधौ लंबोदरनमस्तेस्तुनमस्तेत्वंबिकासुत एकदंतनमस्तेस्तुनमस्तेस्त्वीप्सितप्रद कपर्दिगणनाथस्यसर्व
संपत्प्रदायिनः पूजाप्रकारःकथितस्तवनाभिःशुचिस्मिते अकृणानंजलिमतान्हविष्यव्रीहितंदुलान् स्वच्छानयत्नेनसंशोध्यचू
र्णंकुर्यान्महेश्वरि शिवेतुचूर्णंप्रथमेप्रानुवारेऽर्धचंद्रवत् कुर्याद्द्वितीयेसंचूर्णंचंद्रवत्पिष्टकाष्टकम् तृतीयेपायसान्नंचदध्यन्नंचचतु
र्थके आनीयाष्टांशकंसम्यक्देवंसंपूज्यभक्तितः अकल्पितान्यानिविधिवद्विद्यंतेयानितानिच तेषांतेषामष्टमांशंतस्मैसम्यक्समर्
पयेत् ततःशुद्धायबटवेदद्यादेवंवराटकम् मुष्ट्यामितंतंदुलांश्चभुंजीयाद्वागसप्तकम् याःकामयंतेयेभक्ताःपूजास्तेप्राप्नुवंतिहि इत्यू
चुस्ताःभवानींतुस्त्रियोविगतकल्मषाः तासांतद्वचनंश्रुत्वातदानीमकरोद्व्रतं तत्क्षणाच्चविश्वेशःप्रत्यक्षःसमजायत त्रिलोकनाथदेवेश
करुणाकरशंकर दीनामनन्यगतिकांभक्तवत्सलपाहिमां तुष्टश्चशंकरःप्राहकथमेतत्त्वयाकृतं कपर्दीगणनाथस्यमाहात्म्यात्किंनसिध्य
ति व्रतस्यैतस्यमाहात्म्यंज्ञातुंवांछितवान्स्वयम् उद्दिश्यागमनंविष्णोरकरोत्तद्व्रतंशिवः तदानींगरुडारूढःसमागत्यतमब्रवीत् मदा
गमनिमित्तंकिंकिंकृतंशंकरत्वया ममापितज्ञापनीयंतदित्युक्तेज्ञापयच्छिवः अथैतदकरोद्विष्णुरुद्दिश्यागमनंविधेः आगतःसन्विधिः
शीघ्रंममाज्ञापयमाधव प्रयोजनंचाखिलविधेतवागमनकारणं एकदंतव्रतंकिंचिद्व्रतत्वंवनसंशयः इंद्रागमनमुद्दिश्यतदानीतेनतत्कृतम्
आगत्यसहसासोपिममाज्ञापयविश्वसृट् हेरंबव्रतमाहात्म्यंदृष्टमेवंकृतंमया ममापितज्ञापनीयंतदित्युक्तोविधिनोदितम् विक्रमा

दिव्यमूर्तिर्दृश्यवज्जीनदकरोत्त्वसः आगतोऽहंमनुष्यस्त्वामिंद्रमत्तेकिमीप्सितम् कपर्दिहस्तिवदनव्रतमाहात्म्यमीदृशम् इतिज्ञातुंमयाऽ
भीष्टनल्लब्धंतंनदाऽब्रवीत् विधानंतस्यमाहात्म्यंज्ञापनीयंत्वयेतिमे पप्रच्छविक्रमादित्यउत्सुकश्चपुरंदरम् पुरंदरमुखाज्ज्ञात्वात
त्सर्वंस्वपुरींप्रति सायुधःप्रययौराजापराक्रमपरायणः कपर्दीशव्रतंकृत्वामहिष्याःपुरतोऽवदत् जेष्यामिसकलान्शत्रून्प्राप्स्यामिच
महोन्नतिम् तस्यव्रतस्यकिंदानमितिसामाहविक्रम प्रत्युवाचक्रियामर्कोदद्यादेकंवराटकम् एवंचेत्तत्रकर्तव्यंमद्गेहेयत्रकुत्रचित् एवं
राज्ञोमुखाच्छ्रुत्वादूषयामासतद्व्रतम् कपर्दीगणनाथेनकिंस्यान्ममसुशोभनम् नक्रियतेमयानाथकपर्द्याख्यंतुयद्व्रतम् इत्यादिदूषणादा
शुकुष्ठव्याधिमवाप्स्यसि कुष्ठव्याधियुतापत्नींदृष्ट्वाराजाऽब्रवीत्तदा नस्थातव्यंत्वयाऽत्रेतिसर्वराज्यंविनश्यति अर्कस्यवचनंश्रुत्वाश
य्याश्रममगात्त्वसा परिचर्यावशात्तुष्टास्तस्याःसर्वेमुनीश्वराः निश्चित्ययोगमार्गेणसर्वंतामब्रुवन्सतीम् कपर्दीशव्रताक्षेपाद्दुःखंप्राप्तं
त्वयाशुभे कुरुष्वतद्व्रतंसम्यक्सर्वंभद्रंभविष्यति ऋषीणामाज्ञयासाचकपर्दीशव्रतंमहत् तदानींराजमहिषीदिव्यदेहमवापसा अ
स्मिन्नंतरितेकालेभवान्यासहशंकरः अगमच्चवृषारूढोभुवनानिचतुर्दश मध्येमार्गेद्विजस्यरोदनंभववल्लभा श्रुत्वाब्राह्मणमारोदीः
किमर्थंनवरोदनम् नकिमप्यस्तिमेदुःखंदारिद्र्यादेवकेवलात् दुःखंचेत्तवविप्रेंद्रकपर्दीशव्रतंकुरु एतत्कर्तुंव्रतंदेविसामर्थ्यंनास्तिमेऽ
धुनाविक्रमार्कपुरेसर्वंवैश्योदास्यतितत्कुरु कपर्दीशव्रतेनैवमंत्रित्वंप्राप्स्यसिध्रुवम् दारिद्र्यमोचनंसम्यक्भविष्यतिनसंशयः गृहं
प्रतिसमागम्यगृहीत्वातंदुलान्द्विजः वैश्याद्गृहीत्वातत्सर्वंतदानीमकरोद्व्रतम् तस्मिन्नर्कपुरेविप्रस्तन्मंत्रित्वमवापसःआज्ञापयत्कपर्दी
शव्रतंवैश्यस्यतत्क्षणात् अकरोत्स्वसुतायाश्चविक्रमःपतिरस्त्विति व्रतप्रभावादादित्यमुपयेमेविशःसुता अनेनैवविवाहेनपरांप्रीतिमवा
पसा एवमंतरितेकालेमृगयार्थंप्रविश्यसः गहनंक्षुत्तृषार्त्तःसन्ययौमुनिवराश्रमम् उपचारैःश्रमंनीत्वातेषामर्कोमनोरमाम् रमणीया
श्रमेतस्मिन्दर्शयामासविक्रमः इत्थंपृच्छन्मुनीन्सर्वान्देयाचैषाममागना तवेयंमहिषीत्युक्त्वानयेनास्मैसमर्पयन् समंमहिष्यास्वपुरीं
दिव्यनारीनरैर्युतां हृष्टःसन्विक्रमादित्यःसम्प्रमात्याहभूपतिःकपर्दिगणनाथस्यव्रतंकृत्वास्त्रियासह अजयद्विक्रमादित्यःसकलंश

त्रुमंडलं गणनाथव्रतेनैवपुत्रपौत्रव्रतश्वसः धनधान्यादिसंपद्भिः सुखेनन्यवसद्भुवि एतद्व्रतंयेकुर्वंतियाश्चकल्पाविधानतः चतुर्णांपुरुषा
र्थानांतेषांप्राप्तिर्भवेद्ध्रुवम् हयमेधस्यविघ्नेतुसंजातेसगरःपुरा इदमेवव्रतंकृत्वापुनरश्वंप्रलब्धवान् इमांकथांपंचवारंप्रथमेभानुवासरे
द्वितीयेचतृतीयेचषड्वारंशृणुयाद्व्रती इतिश्रीस्कंदपुराणेकपर्दीविनायकव्रतकथासमाप्ता आश्विनकृष्णचतुर्थ्यांदशरथललिताव्रतम्
तच्चपौर्णिमांतमासेनकार्तिकवद्यचतुर्थ्यांकार्यम् देशकालौसंकीर्त्य ममपुत्रपौत्रादिसकलकामनासिद्ध्यर्थंदशरथललिताप्रीत्यर्थंयथामी
लितोपचारैःपूजनमहंकरिष्ये आसनादिकलशाराधनंकरिष्ये आगच्छललितेदेविसर्वसंपत्प्रदायिनि यावत्पूजांकरिष्यामितावत्त्वं
सन्निधौभव आवाहयामि नीलकौशेयवसनांहेमाभांकमलासनाम् भक्तानांवरदांनित्यंललितांचिंतयाम्यहम् ध्यायामि कार्तस्व
रमयेदिव्येनानामणिसमन्विते अनेकरत्नसंयुक्तेआसनेसंविशस्वभो आसनं. गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुख
स्पर्शंपाद्यार्थंप्रतिगृह्यताम् पाद्यं. दक्षस्यदुहितासाध्वीरोहिणीनामविश्रुता पुत्रसंपत्तिकार्यार्थंगृहाणार्घ्यंनमोस्तुते अर्घ्यं क्षीरोदा
र्णवसंभूतलक्ष्मीबंधोनिशाकर गृहाणार्घ्यंशशांकेशारोहिण्यासहितःशशिन् अर्घ्यं. पाटलोशीरकर्पूरसुरभिस्वादुशीतलम् तोय
माचमनीयार्थंशिशिरंप्रतिगृह्यताम् आचमनं. पयोदधिघृतंमध्वाशर्करासगुणान्वितं पंचामतेनस्नपनंप्रीयतांपरमेश्वरी पंचामृत
स्नानं. मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यानीरंस्वीक्रियतांशिवे स्ना.सर्वसत्वाधिकेसौम्येलोकलज्जानि
वारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् वस्त्रं मलयाचलसंभूतंघनसारमनोहरम् हृदयानंदनंचारुचंदनंप्रतिगृह्यतां
चंदनं. हरिद्रांकुंकुमंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं. कूष्मांडैर्मालतीकाद्यैर्जाती
पुष्पैःसुगंधिभिः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् पुष्पाणि. अथांगपूजा दशांगललितायैनमः पादौपूजयामि भवा
न्यै० गुल्फौ० सिद्धेश्वर्यै० जंघेपू० भद्रकाल्यै० जानुनीपू० श्रियै० ऊरूपू० विश्वरूपिण्यै० कटीपू० देव्यैनमः नाभिंपू० वरदायै० कुक्षिंपू०
शिवायै० हृदयंपू० वागीश्वर्यै० स्कंधौपू० महादेव्यै० बाहू० भद्रायै० करौपू० पद्मिन्यै० कंठंपू० सरस्वत्यै० मुखंपू० कमलासनायैन०

नासिकांपू० महिषमर्दिन्यै० नेत्रेपू० लक्ष्म्येन० कर्णौपू० भवान्यै० ललाटंपू० विंध्यवासिन्यै० शिरःपू० सिंहवासिन्यै० सर्वांगंपू० वनस्प
तिरसोद्भूतोगंधाढ्यश्चमनोहरः आघ्रेयःसर्वदेवानांधूपोऽयंप्रतिगृह्यताम् धूपं० साज्यंचवर्तिं० दीपं. नैवेद्यं. मध्येपानीयं. इदंफल
मितिफलं. पूगीफलंमहद्दिव्यं. तांबूलं. हिरण्यगर्भेतिदक्षिणां. कर्पूरगौरं. नीराजनं. नमोदेव्यैमहादेव्यै. मंत्रपुष्पं. यानिकानिचपापानि०
प्रदक्षिणां. अन्यथाशरणंनास्तित्वमेवशरणंमम तस्मात्कारुण्यभावेनरक्षमांपरमेश्वरि दशरथनामयादेवीदशपुष्पादशाक्षरा पुत्रार्थी
कामयेदेविसर्वान्कामान्प्रयच्छमे प्रार्थना दशरथललितादेव्याव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहं वायनं. सवाह
नाशक्तियुतावरदापूजितामया ममानुग्रहकुर्वाणागच्छत्वंनिजमंदिरं अथकथा सूतउवाच अरण्येवर्तमानास्तेपांडवादुःख
कर्शिताः कृष्णंदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमम् युधिष्ठिरउवाच देवदेवजगन्नाथलक्ष्मीप्रियजनार्दन कथयस्वसुरश्रेष्ठद
शागललिताव्रतं कथमेषासमुत्पन्नाकेनादौपूजिताभुवि पूजनात्किंफलावाप्तिःकथयस्वसुरेश्वर श्रीकृष्णउवाच पुरात्रेतायुगेपा
र्थराजादशरथोमहान् तस्यभार्यानुकौसल्याअपुत्रासापतिव्रता अथाजगामकस्मिंश्चिदृष्यशृंगऋषीश्वरः स्वागतंचकृतंराज्ञासोपवि
ष्टोवरासने तेनराज्ञामुनिश्रेष्ठःस्तोत्रैश्चबहुतोषितः तस्यभक्त्यातुसंतुष्टोऋषिर्वचनमब्रवीत् मुनिरुवा० तुष्टोऽहंतवराजेंद्रकौसल्याभा
र्ययासह ब्रूहित्वंचमहाभागकिंप्रियंतेकरोम्यहं दशरथउवा० यदितुष्टोसिमेविप्रअपुत्रोहंऋषीश्वर तीर्थंवाव्रतमेकंवातद्वदस्वमुनीश्वर
मुनिरुवा० शृणुराजन्नवहितोव्रतमेकंब्रवीमिते पुत्रकामव्रतंश्रेष्ठंकृतंराजन्सुरासुरैः रोहिणीनामचंद्रस्यभार्यापरमवल्लभा साचैवललिता
नाम्नीरोहिणीतिनराधिप आश्विनस्यसितेपक्षेदशम्यादिप्रपूजयेत् दशम्यादिचतुर्थ्यंतंदिगृदिनानिव्रतंचरेत् आश्विनस्यसितेपक्षे
चतुर्थ्यांतुविशेषतः स्नात्वासायंतनेकालेसन्नमनाभक्तिभावतः कूष्मांडैर्मातुलिंगाद्यैर्जातीपुष्पैःसुगंधिभिः गंधपुष्पैस्तथाधूपैर्नैवेद्यैर्द
शसंख्यकैः अर्घ्यंदद्याच्चदेव्यग्रेपूजयित्वासमापयेत् ततोमंगलवाद्यैश्चगायद्भिश्चनरेश्वर चंद्रोदयेचसंप्राप्तेअर्घ्यंदद्याद्युधिष्ठिर शंखेतोयं
समादायसपुष्पाक्षतचंदनैः जानुभ्यामवनींगत्वाचंद्रायार्घ्यंनिवेदयेत् पंचरत्नसमायुक्तंदशपुष्पैःसमन्वितम् अक्षतैश्चसमायुक्तंचंद्राया

र्घ्यंनिवेदयेत् दशरथनामयादेवी दशपुष्पादशांजलिः चंद्रेणसहितेदेविगृहाणार्घ्यंनमोस्तुते दशरथनामयादेवीनित्यमाराधितामया पु
त्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे दशसरत्यांश्चकरकान्शीतोदकसमन्वितान् वर्षेवर्षेप्रदेयानिमत्येकंकरकानिच इत्थंसंपूजयेद्देवींसर्व
दातुप्रयत्नतः अर्वाक्कुर्याद्दशवर्षाणांपूजयेद्भक्तिभावतः नारीनरोवाराजेंद्रव्रतमेतत्करोतिवै यंयंचिंतयतेकामंव्रतस्यास्यप्रभावतः पुत्रपौ
त्रधनंधान्यंलभतेनात्रसंशयः इतिभविष्योत्तरपुराणेदशरथललिताव्रतकथासंपूर्णा अथोद्यापनम् उद्यापनविधिंवक्ष्येव्रतसंपूर्णहे
तवे कृष्णपक्षेचतुर्थ्यांतुआश्विनेव्रतमाचरेत् दशविप्रैःसपत्नीकैर्वेदवेदांगपारगैः स्नात्वासायंतनेकालेसर्वैस्तैर्भक्तिभावतः चतुस्तंभंच
तुर्द्वारंकदलीस्तंभमंडितम् तन्मध्येकारयेत्पद्मंपंचवर्णैःसुशोभितं कलशंस्थापयेत्तत्रविधानेनसमन्वितं ताम्रंवामृन्मयंकुंभंवस्त्रयुग्मेन
वेष्टयेत् तस्योपरिन्यसेद्देवंरोहिण्यासहितंविधुं सुवर्णनिर्मितंदेवंचतुर्भुजसमन्वितं सौवर्णीरोहिणीकार्याचंद्रमारजतस्यच पूर्वोक्ते
नविधानेनपूजांकृत्वासमाहितः एवंपूजाप्रकर्तव्याषोडशोपचारकैः मोदकान्कारयेद्राजन्तिलजानेकविंशतिम् दशविप्रायदातव्याआ
त्मार्थंस्थापयेद्दश एकोदेवायदातव्योललितानामतयेव्रती दशरथललितादेव्याव्रतसंपूर्णहेतवे वायनंद्विजवर्यायसहिरण्यंददाम्यहं
दशरथनामयादेवीनित्यमाराधितामया पुत्रार्थीकामयेदेविसर्वान्कामान्प्रयच्छमे इतिसंप्रार्थ्यदेवेशींचंद्रायार्घ्यंनिवेदयेत् स्वगृह्यो
क्तविधानेनकृत्वाग्निस्थापयेत्ततः होमंचैवसमासंपाद्यतिलपायसलड्डुकैः अष्टोत्तरशतंसद्यो अष्टाविंशतिमेववा जुहुयाच्चंद्रमंत्रेणगणे
शनंचैवच एवंसमाप्यहोमंतुतत्राचार्यंप्रपूजयेत् सुहृद्भिर्दशयुग्मैश्चपक्वान्नैश्चप्रपूजयेत् विप्रायपीठदानंचततःकुर्याद्विसर्जनम्
ततःपुत्राःप्रजायंतेधनधान्यसमन्विताः सौभाग्यपुत्रसंपत्तिर्जायतेभूभृतांवर अवैधव्यंचलभतेसर्वान्कामानवाप्नुयात् एतत्तेक
थितंभूपकिमन्यच्छ्रोतुमिच्छसि कृतंदशरथेनास्मिन्कौसल्याभार्ययासह तुष्टादशरथादेवीगणेशेनसचंद्रमाः यस्मात्कृतंह
न्याराजाभार्ययासहमोदते तस्माद्दशरथानामललितासुविकीर्तिता एतत्तेकथितंराजन्दशागर्ललिताव्रतम् यइदंशृणुयान्नि
त्यंश्रावयेद्वासमाहितः अश्वमेधसहस्रस्यफलंतस्यध्रुवंभवेत् इतिश्रीभविष्योत्तरपुराणेदशरथललिताव्रतोद्यापनसंपूर्णम्

अथकार्तिककृष्णाचतुर्थ्यांअथवादक्षिणदेशेआश्विनकृष्णाचतुर्थ्यांकरकचतुर्थीव्रतम् तच्चलिख्यते अत्रस्त्रीणामेवाधिकारः तासामेव
फलश्रुतेः आचम्यमासपक्षाद्युल्लिख्य ममसौभाग्यपुत्रपौत्रादिसुस्थिरश्रीप्राप्तयेकरकचतुर्थीव्रतंकरिष्ये इतिसंकल्प्य चंद्रं
लिख्य ततः अधस्ताच्छिवंषण्मुखयुक्तांगौरींलिखित्वा षोडशोपचारैःपूजयेत् पूजामंत्रः नमःशिवायैशर्वाण्यैसौभाग्यंसंततिं
शुभाम् प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभेति ततः नमोंतनाममंत्रेणशिवषण्मुखगौरीगणपतीनांपूजाकार्या ततःसपक्वा
न्नान् अक्षतसंयुक्तान्दशकरकान्ब्राह्मणायदद्यात् ततःपिष्टकनैवेद्यंभोज्यंसर्वंनिवेदयेत् ततश्चंद्रोदयोत्तरंचंद्रायार्घ्यंदद्या
त् अथकथा मांधातोवाच अर्जुनेतुगतेतत्रइंद्रकीलगिरिंप्रति विषण्णमनसासुभ्रूर्द्रौपदीसमचिंतयत् अहोकिरीटि
नाकर्मसमारब्धंसुदुष्करम् बहवोविघ्नकर्तारोमार्गेवैपरिपंथिनः चिंतयित्वेतिसादेवीकृष्णाकृष्णंजगद्गुरुम् भर्तुःप्रियंचिकीर्ष
तीसाऽपृच्छद्विघ्नकारणम् द्रौपद्युवाच कथयस्वजगन्नाथव्रतमेकंसुदुर्लभम् यत्कृत्वासर्वविघ्नानिविलयंयांतितद्वद श्रीकृष्णउवाच
एवमेवमहाभागेशंभुःपृष्टःकिलामया तस्यास्तद्वचनंश्रुत्वाप्राहदेवोमहेश्वरः शृणुदेविवरारोहेवक्ष्यामित्वांमहेश्वरि सर्वविघ्नहरेत्याहक
रकाख्याचतुर्थिका पार्वत्युवाच भगवन्कीदृशीप्रोक्ताचतुर्थीकरकाभिधा विधानंकीदृशंप्रोक्तंकेनेयंचपुराकृता ईश्वरउवाच शक्रप्र
स्थपुरेरम्येविद्वज्जनसमाकुले स्वर्णरौप्यसमाकीर्णेरत्नप्राकारशोभने दिव्यनारीजनालोकेवशीकृतजगत्त्रये वेदध्वनिसमायुक्तेस्वर्गाद
पिमनोहरे वेदशर्माद्विजस्तत्रवसन्देशेविदांवरः पत्नीतस्यैवविप्रस्यनाम्नालीलावतीशुभा तस्यांसंजनयामासपुत्रान्सप्तामितौजसः क
न्यावीरावतीनाम्नीसर्वलक्षणसंयुता नीलोत्पलाभनयनापूर्णेंदुसदृशानना ततःकालेशुभदिनेविधिवच्चद्विजोत्तमः ददौवेदांग
विदुषेविप्रायविधिपूर्वकम् अत्रांतरेतुसातत्रचक्रेगौर्याःशुभंव्रतम् चतुर्थ्यांकार्तिकस्याथकृष्णायांतुविशेषतः स्नात्वासायंतनेत
कालेसर्वान्तान्भक्तिभावतः विलिख्यवटवृक्षंचगौरींतस्यतलेलिखेत् शिवेनविघ्ननाथेनषण्मुखेनसमन्विताम् गंधपुष्पाक्षतैर्गौ
रींमंत्रेणानेनपूजयेत् नमःशिवायैशर्वाण्यैसौभाग्यंसंततिंशुभाम् प्रयच्छभक्तियुक्तानांनारीणांहरवल्लभे तस्याःपार्श्वेमहादेववि

प्रनार्थंषडाननम् पुनः पुष्पाक्षतैर्धूपैरर्च्चयेच्चपृथक्पृथक् पक्वान्नाक्षतसंपन्नान्सदीपान्करकान्दश तथापिष्टकनैवद्यंभोज्यंसर्वंनिवेदयेत
प्रतीक्षंत्यःस्त्रियःसर्वाश्चंद्रोदयपरास्थिताः साबालाविकलादीनाक्षुत्तृड्भ्यांपरिपीडिता निपपातमहीपृष्टेरुरुदुर्बांधवास्तदा समाश्वा
स्यन्ते तां तु मुखमभ्युक्ष्यवारिणा तद्भ्राताचिंतयित्वैवमारुरोहमहावटम् हस्तेचोल्कांसमादायज्वलंतींस्नेहपीडितः भगिन्यैदर्श
यामासचंद्रव्याजादितंतदा तंदृष्ट्वाचार्तिमुत्सृज्यबुभुजेभावसंयुता चंद्रोदयंतमाज्ञायअर्घ्यंदत्वाविधानतः तद्दोषेणमृतस्तस्याः प
तिस्तत्तापदूषितः पतिंतथाविधंदृष्ट्वाशिवमभ्यर्च्यसापुनः व्रतंनिरशनंचक्रेयावत्संवत्सरोगतः चक्रुःसंवत्सरेतीतेव्रतंतद्भ्रातृयोषितः
पूर्वोक्तेनविधानेनसापिचक्रेशुभानना तदायाताशचीदेवीकन्याभिःपरिवारिता एतदेवव्रतंकर्तुमागतास्वर्गलोकतः वीरावत्यास्तदाभ्या
शमगमद्भाग्यतःस्वयं दृष्ट्वातांमानुषींदेवीपप्रच्छसकलंशची वीरावतीतदापृष्टाप्रोवाचविनयान्विता अहंपितृगृहंप्राप्तामृतोयंमेपतिः
प्रभुः नजानेकर्मणःकस्यफलंप्राप्तमयाधुना ममभाग्यवशाद्देविआगतासिमहेश्वरि अनुगृह्णीष्वमांमातर्जीवयास्तुपतिंमम इंद्राण्युवा
च त्वयापितृगृहेपूर्वंकुर्वंत्याकरकव्रतम् तदैवार्घ्यंत्वयादत्तंविनाचंद्रोदयंशुभे तेनतेव्रतदोषेणस्वामीलोकांतरंगतः इदानींकुरुयत्नेनकर
कव्रतमुत्तमम् पतिंतेजीवयिष्यामिव्रतस्यास्यप्रभावतः कृष्णउवाच तस्यास्तद्वचनंश्रुत्वाव्रतंचक्रेविधानतः प्रसन्नाप्राभवद्देवीश
क्रस्यप्राणवल्लभा तयाव्रतेकृतेदेवीजलेनाभ्युक्ष्यतत्पतिम् जीवयामासचेंद्राणीदेववच्चबभूवसः ततस्त्वागाद्गृहंस्वीयंरेमेसापतिनास
ह धनंधान्यंसुपुत्रांश्चदीर्घमायुश्चलब्धवान् तस्मात्त्वयापियत्नेनव्रतमेतद्विधीयताम् सूतउवाच श्रीकृष्णस्यवचःश्रुत्वाचकारद्रौपदी
व्रतम् तद्व्रतस्यप्रभावेनजित्वातान्कौरवान्रणे लेभिरेराज्यमतुलंपांडवादुःखनाशनम् येकरिष्यंतिसुभगाव्रतमेतन्निशागमे तेषांपु
त्रान्धनधान्यंसौभाग्यंचातुलंयशः करकंक्षीरसंपूर्णंतोयपूर्णमथापिवा ददामिरत्नसंयुक्तंचिरंजीवतुमेपतिः इतिमंत्रेणकरकान्प्र
दद्याद्द्विजसत्तमे सुवासिनीभ्योदद्याच्चआदद्यात्ताभ्यएवच एवंव्रतंयाकुरुतेनारीसौभाग्यकाम्यया सौभाग्यंपुत्रपौत्रादिलभतेसुस्थि
रांश्रियम् इतिवामनपुराणेकरकाभिधाचतुर्थीव्रतंसंपूर्णम् अथमाघशुक्लचतुर्थ्यांगौरीचतुर्थीव्रतं हेमाद्रौब्राह्म्ये उमाचतुर्थ्यांमा

घेतुशुक्लायांयोगिणीगणै: प्रागभदायित्वासृत्वात्वभूयस्त्वांगस्वकैर्गुणैः तस्मात्सानन्दसंपूज्यानरैः स्त्रीभिर्विशेषतः कुंदपुष्पैःप्रयत्नेन
नसम्यक्भक्त्यासमाहितैः कुंकुमालक्तकाभ्यांचरक्तसूत्रैःसकंकणैः रक्तपुष्पैस्तथाधूपैर्दीपैर्बलिभिरेवच गुडार्द्रकाभ्यापयसालवणे
नाथपालकैः पालकंमृद्वांडईनिह्माद्रिः पूज्यास्त्रियश्चविविधास्तथाविप्राश्चशोभनाः सौभाग्यवृद्धयेदेवंभोक्तव्यंबंधुभिःसह इतिगौ
रीचतुर्थीव्रतंब्रह्मपुराणोक्तम् अथमाघशुक्लचतुर्थ्यांवरदचतुर्थीव्रतम् तदुक्तंकाशीखंडे माघशुक्लचतुर्थ्यांतुनक्तव्रतपरायणाः ये
त्वांधुंढेर्चयिष्यंतितेर्चास्युरसुरद्रुहाः विधायवार्षिकींयात्रांचतुर्थींप्राप्यमाधवीम् शुक्लान्तिलान्गुडैर्बध्वाप्राश्नीयाल्लड्डुकान्व्रती
अत्रनक्तग्रहणात्प्रदोषव्यापिनीग्राह्येतिसिद्धम् इतिवरदचतुर्थीव्रतम् अथमाघकृष्णाचतुर्थ्यांतिलकचतुर्थीव्रतम् अथपूजा
विधिः येभ्योमाताक्कृ १ एवापित्रेतिचजपित्वा आगमार्थंतु० घंटानादंकृत्वा अपसर्पंत्विति छोटिकामुद्रां० तीक्ष्णदंष्ट्रेतिक्षेत्रपालंसंप्रार्थ्य
आचम्यप्राणानायम्य ममसहकुटुंबस्यक्षेमस्थैर्यविजयाभयआयुरारोग्यैश्वर्याभिवृद्ध्यर्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंश्रीसं
कष्टहरगणेश्वरप्रीत्यर्थंनारदीयपुराणोक्तप्रकारेणपुरुषसूक्तविधानेनयथासंभावितानियमेनयथोपचारमीलितद्रव्यैः संकष्टचतुर्थीव्रतां
गत्वेनगणपतिपूजनमहंकरिष्ये कलशार्चनंशंखार्चनंचकुर्यात् अथन्यासंकुर्यात् अस्यश्रीगणपतिमंत्रस्यशक्रऋषिः श्रीसंक
ष्टहरगणपतिर्देवता अनुष्टुप्छंदः श्रीसंकष्टहरगणपतिप्रीत्यर्थेन्यासेविनियोगः ओंनमोहेरंब अंगुष्ठाभ्यांनमः मदमोदित तर्ज
नीभ्यांनमः ममसंकष्टंनिवारयमध्यमाभ्यांनमः निवारय अनामिकाभ्यांनमः हुंफट्कनिष्ठिकाभ्यां० स्वाहाकरतलकरपृष्ठाभ्यांन०
एवंहृदयादि भूर्भुवस्स्वरोमितिदिग्बंधः ओंनमोहेरंबमदमोदितममसंकष्टंनिवारयहुंफट्स्वाहा अथध्यानम् श्वेतांगंश्वेतवस्त्रं
सितकुसुमगणैः पूजितंश्वेतगंधैः क्षीराब्धौरत्नदीपैःसुरतरुविमलेरत्नसिंहासनस्थम् दोर्भिःपाशांकुशेष्टाभयधृतरुचिरंचंद्र
मौलिंत्रिनेत्रंध्यायेच्छांत्यर्थमीशंगणपतिममलंश्रीसमेतंप्रसन्नम् लंबोदरंचतुर्बाहुंत्रिनेत्रंरक्तवर्णकम् सर्वाभरणशोभाढ्यंप्र ५७
सन्नास्यंविचिंतयेत् ध्यायामि आगच्छविघ्नराजेंद्रस्थानेचात्रस्थितोभव आराधयिष्येभक्त्याहंभवंतंसर्वसिद्धये सहस्रशीर्षेत्यावाहनं

गणेशाय॰ आवाहयामि अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः सर्वविघ्नच्छिदे तस्मै गणाधिपतये नमः पुरुषएवेदमासनं विघ्नना
शिनेनमः आसनं॰ गणाधिपनमस्तेस्तु सर्वसिद्धिकरप्रभो पाद्यं गृहाण देवेश सुरासुरसुपूजित एतावानस्य॰ लंबोदराय॰ पाद्यं॰ रक्त
गंधाक्षतोपेतं रक्तपुष्पसमन्वितम् अर्घ्यं गृहाण देवेश मयादत्तं हि भक्तितः त्रिपादूर्ध्व॰ चंद्रार्धधारिणेन॰ अर्घ्यं॰ सुरासुरसमाराध्य सर्व
सिद्धिप्रदायक मयादत्तं सुरश्रेष्ठ गृहाणाचमनीयकम् तस्माद्विराळ॰ विश्वप्रियाय॰ आचमनं॰ पयोदधिघृतं चैव शर्करामधुसंयुतम् पं
चामृतेन स्नपनं करिष्येसर्वसिद्धिदम् यत्पुरुषेणेतिस्नानं॰ पंचामृतस्नानम्॰ गंगादिसलिलं शुद्धं सुवर्णकलशेस्थितम् सुवासितं प
रिमलैः स्नापयामि गणेश्वर पुरुषसूक्तेन शुद्धोदकस्नानं॰ रक्तांबरं वस्त्रयुग्मं सर्वकार्यार्थसिद्धये मयादत्तं गणाध्यक्ष गृह्यताममरिवला
र्थद तंयज्ञं॰ सर्वप्रदाय॰ वस्त्रयुग्मं॰ कुंकुमाक्तं मयादत्तं सौवर्णमुपवीतकम् उत्तरीयणसंयुक्तं गृहाण गणनायक तस्माद्यज्ञात्सर्वहुतः
संभृ॰ वक्रतुंडाय॰ यज्ञोपवीतं॰ चंदनागरुकर्पूरकुंकुमादिसमन्वितम् गंधं गृहाण देवेश सर्वसिद्धिप्रदायक तस्माद्यज्ञात्सर्वहुतेति॰
गणाध्यक्षाय॰ गंधं॰ अक्षताश्च सुरश्रेष्ठाः कुंकुमाक्ताः सुशोभनाः गृहाण विघ्नराजेंद्र मयादत्ता हि भक्तितः गजवदनाय॰ अक्षता
न् रक्तपुष्पाणि विघ्नेश एकविंशतिसंख्यया गृहाण सुमुखो भूत्वा मयादत्तान्युमासुत तस्मादश्वा॰ गुणशालिनेनमः पुष्पाणि स॰ सुगं
धीनि च माल्यानि गृहाण गणनायक विनायक नमस्तुभ्यं शिवसूनो नमोस्तु ते विघ्ननाशिनेनमः माल्यानि॰ एकविंशतिनामभिः दूर्वाभिः
पूजयेत् ॐ गजाननायनमः विघ्नराजायन॰ लंबोदराय॰ शिवात्मजाय॰ वक्रतुंडाय॰ शूर्पकर्णाय॰ कुब्जाय॰ गणेशाय॰ विघ्ननाशिने॰
विकटाय॰ वामदेवाय॰ सर्वदेवाय॰ सर्वार्तिनाशिने॰ विघ्नहर्त्रे॰ धूम्राय॰ सर्वदेवाधिदेवाय॰ उमापुत्राय॰ कृष्णपिंगलाय॰ भालचं
द्राय॰ गणाधिपाय॰ एकदंताय॰ २१ एकविंशति दूर्वापुष्पाणि समर्पयामि अथांगपूजा संकष्टनाशिनेनमः पादौ पूजया॰ स्थूल
जंघाय॰ जंघे पू॰ एकदंताय॰ जानुनी पू॰ आखुवाहनाय॰ ऊरू पू॰ हेरंबा॰ कटीं पू॰ लंबोदराय॰ उदरं पू॰ गणाध्यक्षाय॰ हृदयं पू॰ स्थूलकंठा॰
कंठं पू॰ स्कंदाग्रजाय॰ स्कंधौ पू॰ परशुहस्ताय॰ हस्तौ पूज॰ गजवक्त्राय॰ वक्त्रं पू॰ सर्वेश्वराय॰ शिरः पू॰ संकष्टनाशिनेनमः सर्वांगं पूज॰

अथावरणपूजा गणाधिपाय० उमापुत्राय० अघनाशिने० हेरंबाय० लंबोदराय० गजवक्त्राय० एकदंताय० धूम्रकेतवे० भालचंद्राय० ईशपुत्राय० इभवक्त्राय० मूषकवाहनाय० कुमारगुरवेनमः संकष्टनाशिने० इतिप्रथमावरणम् १ विघ्नगणपतये० वीरगणपतये० शूर्पकर्णगणपतये० प्रसादगणपतये० वरदगणपतये० इंद्रगणपतये० एकदंतगणपतये० लंबोदरगणप० क्षिप्रगणप० सिद्धिगणप० द्वितीयावरणम् २ रामाय० रामेशाय० वृषांकाय० रतिप्रियाय० पुष्पबाणाय० महेश्वराय० वराहाय० श्रीसदाशिवाय० तृतीयावरणम् ३ आदित्याय० चंद्राय० कुजाय० बुधाय० बृहस्पतये० शुक्राय० शनैश्चराय० केतवे० सिद्ध्यै० समृद्ध्यै० कांत्यै० मदनरत्यै० मदद्राविण्यै० वसुमत्यै० वैनायक्यै० चतुर्थावरणम् ४ इंद्राय० अग्नये० यमाय० निर्ऋतये० वरुणाय० वायवे० सोमाय० ईशाय० पंचमावरणं ५ अथपत्रीपूजा गणाधिपाय० पाचीप० सुमुखाय० भृंगराज० उमापुत्राय० बिल्वप० गजवक्त्रा० श्वेतदूर्वा० लंबोदरा० बदरी० हरसूनवे० धत्तूर० गुहाग्रजा० तुलसीप० गजकर्णा० अपामार्ग० एकदंता० बृहती० इभवक्त्राय० शमी० मूषकवाहना० करवीर० विनायका० वेणुप० कपिलाय० अर्कप० भिन्नदंताय० अर्जुनप० पत्नीहिताय० विष्णुक्रांताप० वटवेनमः दाडिमीप० भालचंद्राय० देवदारुप० हेरंबाय० मरुपत्रं० सिद्धिदाय० सिंदूरपत्रं० सुराग्रजाय० जातीपत्रं० विघ्नराजाय० केतकीप० इत्येकविंशतिपत्राणि अथपुष्पपूजा सुमुखाय० जातीपु० एकदंताय० शेवंतीपु० कपिलाय० यूथिकापु० गजकर्णाय० चंपकपु० लंबोदराय० कल्हारपु० विकटाय० केतकीपु० विघ्ननाशिनेन० बकुलपुष्पं० विनायकाय० जपाकुसुमंस० धूम्रकेतवेनं० पुन्नाग० गणाध्यक्षाय० धत्तूरपु० भालचंद्राय० मातुलिंगपु० पत्नीहिताय० विष्णुक्रांतापु० उमापुत्राय० करवीरपु० गजाननाय० पारिजातपु० ईशपुत्राय० कमलपु० सर्वसिद्धिप्रदाय० गोकर्णिकापु० मूषकवाहना० कुमुदपु० कुमारगुरवे० तगरपुष्पं० दीर्घशुंडाय० सुगंधिराजपु० इभवक्त्राय० अगस्तिपु० संकष्टनाशनाय० पाटलापु० इत्येकविंशतिपुष्पाणि २१ अथाष्टोत्तरशतनामपूजा ॐ अस्यश्रीअष्टोत्तरशतविघ्नेश्वरदिव्यनामामृतस्तोत्रमंत्रस्य गृत्समदऋषिः गणपतिर्देवता अनुष्टुप्छंदः गंबीजम् नेंशक्तिः मंकीलकम्

श्रीगणपतिप्रसादसिद्ध्यर्थेपूजनेविनियोगः ॐ कारपूर्वकनामानि विनायकाय० विघ्नराजाय० गौरीपुत्राय० गणेश्वराय० स्कंदा
ग्रजाय० अव्ययाय० पूताय० दक्षाध्यक्षायन० द्विजप्रियाय० अग्निगर्वच्छिदेन० इंद्रश्रीप्रदाय० वाणीबलप्रदाय० सर्वसिद्धिप्र
दाय० शर्वतनयाय० शर्वप्रियाय० सर्वात्मकाय० सृष्टिकर्त्रेन० देवानीकार्चिताय० शिवाय० शुद्धाय० बुद्धिप्रियाय० शांताय० ब्र
ह्मचारिणे० गजाननाय० द्वैमातुराय० मुनिस्तुत्याय० भक्तविघ्ननाशिने० एकदंताय० चतुर्बाहवे० शक्तिसंयुताय० चतुराय० लंबोद
राय० शूर्पकर्णाय० हेरंबाय० ब्रह्मवित्तमाय० कालाय० ग्रहपतये० कामिनेन० सोमसूर्याग्निलोचनाय० पाशांकुशधराय० चंडाय०
गुणातीताय० निरंजनाय० अकल्मषाय० स्वयंसिद्धाय० सिद्धार्चितपदांबुजाय० बीजपूरकाय० अव्यक्ताय० वरदाय० शाश्व
ताय० कृतिने० विद्वत्प्रियाय० वीतभयाय० गदिनेन० चक्रिणेन० इक्षुचापधृतेन० अब्जोत्पलकराय० श्रीशाय० श्रीपतये० स्तु
तिहर्षिताय० कुलाद्रिभृते० जटिने० चंद्रचूडाय० अमरेश्वराय० नागयज्ञोपवीतिने० श्रीकंठाय० रामार्चितपदा० व्रतिने० स्थूलकंठा०
त्रयीकर्त्रे० सामघोषप्रिया० पुरुषोत्तमाय० स्थूलतुंडाय० अग्रगण्याय० ग्रामण्याय० गणपाय० स्थिराय० वृद्धिदा० सुभगदा० शूराय०
वागीशाय० सिद्धिदा० दूर्वाबिल्वप्रियाय० कांताय० पापहारिणे० कृतागमाय० समाहिताय० वक्रतुंडाय० श्रीपदाय० सौम्याय० भक्त
कांक्षितदा० अच्युताय० केवलाय० सिद्धायनमः सच्चिदानंदविग्रहाय० ज्ञानिने० मायायुक्ताय० दांताय० ब्रह्मिष्ठाय० भयवर्जिता
य० १०० प्रमत्तदैत्यभयप्रदाय० व्यक्तमूर्त्तयेन० अमूर्त्तकाय० पार्वतीशंकरोत्संगखेलनोत्सवलालसाय० समस्तजगदाधाराय० व
रदमूषकवाहनाय० हृष्टचित्ताय० प्रसन्नात्मनेन० सर्वसिद्धिप्रदायकाय० १०८ अष्टोत्तरशतेनैवंनाम्नाविघ्नेश्वरस्यच तुष्ट
पशंकरः पुत्रंत्रिपुरंहंतुमुद्यतः यः पूजयेदनेनैवभक्त्यासिद्धिविनायकम् दूर्वादलैर्बिल्वदलैः पुष्पैर्वाचंदनाक्षतैः सर्वकामानवा
प्नोतिसर्वापद्भ्यः प्रमुच्यते इतिभविष्यपुराणेविघ्नेश्वरअष्टोत्तरशतदिव्यनामस्तोत्रंसंपूर्णं वनस्पतिरसोद्भूतंदशांगंगुग्गुलान्वितं गृहाण
सर्वकामार्थंमयादत्तंविनायक यत्पुरुषंव्यदधुः० उमापुत्रा० धूपं० घृताक्तवर्तिसंयुक्तंदीपंशक्तिप्रदायक गृहाणेशमयादत्तंतेजोराशेजगत्पते

ब्राह्मणोस्य॰ रुद्रप्रियाय॰ दीपं॰ अन्नंचतुर्विधंस्वादुरसैःषड्भिः समन्वितम् भक्त्यानिवेदितंदेवनैवेद्यंप्रतिगृह्यताम् भक्ष्यैर्नाना
विधैर्युक्तान्मोदकान्घृतपाचितान् गृहाणविघ्नराजेंद्रतिललड्डुसमन्वितान् चंद्रमामनसो॰ विघ्ननाशिने॰ नैवेद्यं॰ फलानीमानिर
म्याणिस्थापितानितवाग्रतः तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि संकष्टनाशिने॰ फलं॰ पूगीफलंमहद्दिव्यं॰ नाभ्या आसी॰ सि
द्धिविनाय॰ तांबूलं॰ श्रियेजातइतिनीराजनं॰ पूजाफलसमृध्यर्थंतवाग्रेस्वर्णमीश्वर स्थापितंतेनमेप्रीतः पूर्णान्कुरुमनोरथान् सप्ता
स्यासन्॰ विघ्नेशाय॰ स्वर्णपु॰ अथदूर्वा गणाधिपाय॰ दूर्वायुग्मंस॰ उमापुत्रा॰ दूर्वा॰ अघनाशनाय॰ दूर्वा॰ एकदंताय॰ दूर्वायु॰
इभवक्त्राय॰ दू॰ मू॰ वा॰ दू॰ विनायकाय॰ दूर्वा॰ ईशपुत्राय॰ दूर्वा॰ सर्वसिद्धिप्रदायकाय॰ दूर्वा॰ कुमारगुरवेन॰ दूर्वा॰ श्रीगणेश्वराय॰ ए
कंदूर्वांकुरंस॰ गणाधिपनमस्तेस्तुउमापुत्राघनाशन एकदंतेभवक्त्रेतितथामूषकवाहन विनायकेशपुत्रेतिसर्वसिद्धिप्र
दायक कुमारगुरवेतुभ्यंगणराजप्रयत्नतः एभिर्नामपदैर्नित्यंदूर्वायुग्मंसमर्पयेत् श्रीगणेशोवक्रतुंडउमापुत्रस्तथैवच विघ्नरा
जः कामदश्चगणेश्वरइतिस्मृतः जीमूतः शक्तिरत्युग्रस्तथांजनसमप्रभः योगिध्येयोदिव्यगुणोमहाकायइतीरितः ततश्चसि
द्धिदः प्रोक्तोमहोदरइतिस्मृतः गजवक्त्रः कर्मभीमस्ततः परशुधार्यपि करिकुंभोविश्वमूर्तिरुग्रतेजास्ततः परम् लंबोदरस्ततः
सिद्धिर्गणेशश्चैकविंशतिः नामानिरमणीयानिजपंदेभिश्चपूजयेत् गणेशात्तस्यनश्यंतिसंकष्टानिमहांत्यपि महासंकष्टदग्धोः
हंगणेशंशरणंगतः तस्मान्मनोरथंपूर्णंकुरुविश्वेश्वरप्रिय ततःस्वर्णमयंपुष्पंविघ्नेशायनिवेदयेत् प्रदक्षिणानमस्कारान्कृत्वादेवंक्षमापये
त् यज्ञेनयज्ञं॰ संकष्टनाशना॰ पुष्पांजलिं॰ नमोस्तुदेवदेवेशभक्तानामभयप्रद विघ्नानांनाशकश्चैवहरात्मजनमोस्तुते विघ्ननाशिने॰ न
मस्कारं॰ ततः ओंनमोहेरंबइतिमूलमंत्रंएकविंशतिवारंजपेत् अथगणेशायार्घ्यंदद्यात् गणेशायनमस्तुभ्यंसर्वसिद्धिप्रदायक
संकष्टहरमेदेवगृहाणार्घ्यंनमोस्तुते संकष्टहरगणपत॰ इदमर्घ्यं॰ कृष्णपक्षेचतुर्थ्यांतुसंपूजितविधूदये क्षिप्रंप्रसीददेवेशगृहा
णार्घ्यंनमोस्तुते एताभ्यांमंत्राभ्यां अर्घ्यंदद्यात् तिथीनामुत्तमेदेविगणेशप्रियवल्लभे सर्वसंकष्टनाशायगृहाणार्घ्यंनमोस्तुते

चतुर्थ्यैनमः इदमर्घ्यं० रोहिणीसहितंचंद्रंपंचोपचारपूजयेत् क्षीरोदार्णवसंभूतलक्ष्मीबंधानशाकर गृहाणार्घ्यंमयादत्तंरोहिण्या
सहितःशशिन् इतित्रिरर्घ्यं ३ गगनांगणसंदीपक्षीराब्धिमथनोद्भव भाभासितदिगंतांतसोमराजनमोस्तुते चंद्रायनमस्का
रः ततःआचार्यंपूजयेत् वायनंदद्यात् मोदकान्सफलान्पंचदक्षिणाभिःसमन्वितान् गृहाणत्वंद्विजश्रेष्ठव्रतस्यपरिपूर्तये वायनमं
त्रः प्रतिमादानमंत्रः प्रतिमांगुरवेदद्यादाचार्यायसदक्षिणाम् वस्त्रकुंभसमायुक्तामादौमंत्रमिमंजपेत् गणेशस्यप्रसादेनममसंतुप्र
नोरथाःतुभ्यंसंप्रददेविप्रप्रतिमांतुगजाननीं इष्टकामार्थसिद्ध्यर्थंपुत्रपौत्रप्रवर्धिनीम् गणाधिराजदेवेशविघ्नराजविनायक तवमूर्तिप्र
दानेनप्रसन्नोभवसर्वदा इतिकलशप्रतिमादानमंत्रः अथप्रतिग्रहमंत्रः गणेशःप्रतिगृह्णातिगणेशोवैददातिच गणेशस्तारको
भाभ्यांगणेशायनमोनमः संसारपीडाव्यथितंहिमांसदासंकष्टभूतंसुमुखप्रसीद त्वंत्राहिमांनाशयकष्टसंघान्नमोनमःकष्टविनाश
नाय इतिप्रार्थना यदुद्दिश्यकृतंतेऽद्ययथाशक्तिप्रपूजनम् संकष्टहरमेदेवउमासुतनमोस्तुते इतिनमस्कारः इतिपूजावि
धिः अथकथा सूतउवाच अरण्येवर्तमानंतंपांडुपुत्रंयुधिष्ठिरम् सबांधवंसुखासीनंप्रययौव्यासआदरात् तंदृष्ट्वामुनि
शार्दूलंव्यासंप्रत्युत्थयौनृपः मधुपर्कंचसार्घ्यंचकृत्वातस्मैत्युवाचतम् युधिष्ठिरउवाच अद्यमेसफलंजन्मभवतागमनेकृते येसंक
ष्टाहिसंजातावनेममनिवासिनः तेसर्वेविलयंयाताभवतोदर्शनेनहि आत्मानंसाधुमन्येहंराज्यतृष्णापराङ्मुखं दुःखितंमांकथं
स्वामिन्राज्यभ्रष्टंवनेस्थितं एतेभीमादयःसर्वेबांधवाव्यथयंतिमां दुराधर्षाःसुवीर्याहिमच्छासनविधौरताः इयंतुद्रौपदी
साध्वीराजपुत्रीपतिव्रता राज्योपभोगयोग्यासाप्यद्यदुःखोपभोगिनी मयाचकिंकृतंव्यासपूर्वकस्यानुजीविता दायादैर्वंचि
तंराज्यंद्यूतछद्मपरैस्तथा पराजितावयंब्रह्मन्सुहृद्भिर्बंधुभिस्तथा वनंप्रस्थापितादुष्टैरिदमूचुस्तथैवच कुर्वंतुगमनंशी
घ्रंवनायभवदादयः इत्थंनिराकृताःस्वामिन्यदातद्वनमागताः अहंतदाप्रभृत्याहोनपश्यामिप्रभावाद्दृशान् यद्यस्तिव्रतमेकंहिसर्व
संकष्टनाशनं तद्व्रतंकथयब्रह्मन्ननुग्राह्योस्मिसुव्रत इत्युक्तवंतंराजानंसर्वसंकष्टनाशनंउवाचप्रीणयन्व्यासोधर्मजंमेदिनीपतिम् व्या

सउवाच   नास्तिभूमंडलेराजंस्त्वत्समोधर्मतत्परः कथयामिव्रतंतेऽद्यव्रतानामुत्तमोत्तमं संकष्टनाशनंनित्यंशुभदंफलदंभुवि
यत्कृत्वासर्वकार्याणिनिष्पन्निर्जायतेध्रुवं विद्यार्थीलभतेविद्यांधनार्थीलभतेधनम् प्रोषितायापुरंध्रीचकरोतिव्रतमुत्तमं ईप्सितं
लभतेसर्वंपतिनासहमोदते संकष्टेपियदाक्षिप्तोमानवोग्रहपीडितः साम्राज्येदीक्षितोनित्यंमंत्रिभिःपरिवारितः सुहृद्भिर्बंधुभिश्चै
वतथापुत्रैःसमन्वितः तस्यतुप्रियकर्त्रीचपत्नीगुणवतीप्रिया नानारत्नावलीत्यासीत्सातिव्रतपरायणा तयोःपरस्परंप्रीतिरभवच्चगुणा
श्रयी कदाचिद्दैवयोगेनहृतराज्यंचवैरिभिः कोशोबलंचापहृतंविध्वस्तोबंधुभिःसह रत्नावल्यातयासार्ध्यानिर्गतोभूमिवल्लभः वने
क्षुधार्त्तःक्रमितोत्येकवासास्तृषार्दितः इतस्ततश्चरन्राजन्नातपेनातिपीडितः एकाकीवनमासाद्यतयासार्द्धंयुधिष्ठिर सूर्येचास्त
चलयातेअरण्यंचशिवार्दिते व्याघ्राश्चचुक्रुशुस्तत्रपर्जन्योपिववर्षह कंटकैःक्लेशितानाराज्ञीदुःखमाक्रंदपीडिता तांविलोक्यनृपश्चै
वोदुःखेनैवतुपीडितः ततःप्रभातसमयेमार्कंडेयंमहामुनिं ददर्शराजातत्रैवविस्मयाविष्टमानसः उपगम्यशनैस्तंतुदंडवत्पतितोभुवि
अब्रवीद्वचनंराजामार्कंडेयंमहामुनिम् किंकृतंहिमयास्वामिन्दुष्कृतंकथयस्वतत् केनकर्मविपाकेनराज्यलक्ष्मीःपराङ्मुखी मा
र्कंडेयउवाच   शृणुराजन्प्रवक्ष्यामियत्त्वयापूर्वजन्मनि पूर्वंहिलुब्धकश्चासीर्गतोऽसिगहनंवनम् मृगशार्दूलशशकान्हन्य
मानोवनेतदा तस्मिन्नात्रौभ्रमन्राजन्चतुर्थ्यांमाघकृष्णके दृष्टंशुभंचकृष्णायास्तडागंपृथुनिर्मलम् तत्तीरेनागकन्यानांसमू
हंरक्तवाससाम् गणेशंपूजयंतीनांदृष्टवान्नियमव्रतम् उपगम्यशनैस्तत्रपृष्टंतासांत्वयाविभो आर्याःकिमेतन्मेसर्वंकथयध्वंहि
तत्त्वतः नागकन्याऊचुः पूजयामोगणपतिंवयंसिद्धिप्रदायकं शांतिदंपुष्टिदंनित्यंसर्वव्याधिविनाशनम् पुनःपृष्टंत्वयात
त्रकिंदानंपूज्यतेऽत्रकः स्त्रियऊचुः यदाचोत्पद्यतेभक्तिर्मासिपूज्योगणाधिपः कृष्णायांचचतुर्थ्यांवैरक्तपुष्पैःप्रपूजयेत् धूपै
र्दीपैश्चनैवेद्यैरन्यैर्भक्तिसमन्वितैः विविधान्मोदकान्कृत्वापूरिकाघृतपाचिताः नैवेद्यंषड्रसंसर्वंगणेशायनिवेदयेत् ततोगृहीतंराजे
द्रत्वयासंकष्टनाशनम् अभवद्धनधान्यंतेपुत्रपौत्रसमन्वितम् कस्मिंश्चित्समयेराजन्धनमत्तेनासिद्धिदम् विस्मृतंतद्व्रतंसर्वंत्व

यायत्नेन भूतिदं ततः प्राप्तं हि पंचत्वं त्वया प्राणविनाशनम् तत्प्रभावाद्राजकुले विशाले प्राप्तमुत्तमं त्वया जन्म नृपश्रेष्ठ राज्यं प्राप्तं त्वया वि
भो सुहृन्मित्रप्रियायुक्तः प्राप्तोसि विपुलं वसु कृता वज्ञा व्रतस्यातेतत्प्राप्तं फलमीदृशं राजोवाच अधुना क्रियते स्वामिन्कथ्यतां
मम सद्व्रतं यत्कृत्वा सकलं राज्यं प्राप्यते च मयापुनः ऋषिरुवाच व्रतं संकल्पमाशु त्वं कुरु राजन्नृपोत्तम प्राप्स्यसि त्वं हि राज्यं च संदेहं मा कु
रु प्रभो इत्युक्त्वा स मुनिश्रेष्ठो ह्यंतर्द्धानमगात्ततः मुनेस्तद्वचनं श्रुत्वा व्रतसंकल्पमातनोत् राज्ञा राज्ञी मुनिप्रोक्तं सकलं तद्व्रतं शुभं आयाताः
सकलास्तस्य मंत्रिभृत्याश्च सैनिकाः समाययौ नृपश्रेष्ठस्तत्क्षणात्स्वयमेव हि लब्ध्वा स्वकीयं राज्यं च गणेशस्य प्रसादतः बुभुजे मेदिनीं रा
जा पुत्रपौत्रसमन्वितः तस्मात्त्वमपि राजेंद्र कुरु संकष्टनाशनं व्रतं सिद्धिप्रदं नृणां स्त्रीणां चैव विशेषतः युधिष्ठिर उवा० सविस्तरं व्रतं
ब्रूहि कृपया कष्टनाशन व्यास उवाच यदा संक्लेशितो राजन्दुःखैः संकष्टदारुणैः पुमान्कृष्णचतुर्थ्यां तु तदा पूज्यो गणाधिपः श्रा
वणे बहुले पक्षे चतुर्थ्यां तु विधूदये तस्मिन्दिने व्रतं ग्राह्यं संकष्टाख्यं युधिष्ठिर निराहारो ह्यद्य देवेश यावच्चंद्रोदयो भवेत् माघे वा कृ
ष्णपक्षे तु चतुर्थ्यां तु विधूदये तस्मिन्दिने व्रतं ग्राह्यं संकष्टाख्यं नृपोत्तम प्रातः शुचिर्भवेत्सम्यग्दंतधावनपूर्वकं निराहारो ह्यद्य देवे
श यावच्चंद्रोदयो भवेत् भोक्ष्यामि पूजयित्वाऽहं गणेशं शरणं गतः एवं संकल्पमादौ तु स्नात्वा शुक्लतिलैः शुभैः आह्निकं तु विधायै
वं पूजां च कुरु सद्व्रत यथाशक्त्या तु सौवर्णीं प्रतिमां च विधाय च सौवर्णे राजते ताम्रे मृन्मये वा यथाशक्तितः कुंभे पुष्पैः फलैः पूर्णे देवं तत्रैव
विन्यसेत् शुभे देशे न्यसेत्कुंभं वस्त्रं तत्र निधाय च पद्ममष्टदलं कृत्वा गंधाद्यैः पूजयेत्ततः रक्तपुष्पैश्च धूपैश्च एभिर्नामपदैः पृथक् आ
वाहनं गणेशाय आसनं विघ्ननाशिने पाद्यं लंबोदरायेति अर्घ्यं चंद्रार्धधारिणे विश्वप्रियायाचमनं स्नानं च ब्रह्मचारिणे चंदनं
रुद्रपुत्राय पुष्पं च गुणशालिने भवानीप्रियकर्त्रे च धूपं दद्याद्यथाविधि दीपं रुद्रप्रियायेति नैवेद्यं विघ्ननाशिने तांबूलं सिद्धिदाये
ति फलं संकष्टनाशिने इति नामपदैः पूजां कृत्वा मासयमान्शृणु श्रावणे सल्लड्डुकान्नभस्ये दधिभक्षणं आश्विने चोपवासं च का
र्तिके पयभक्षणम् मार्गे मासि निराहारः पौषे गोमूत्रभक्षणं तिलानष्टशतं माघे फाल्गुने घृतशर्करां चैत्रे मासि पंचगव्यं दूर्वारसं

तुमाधवे ज्येष्ठेघृतंपलंभोज्यमाषाढेमधुभक्षणं इतिमासक्रमान्कृत्वानरोमुच्यतेसंकटात् भुंजीयाद्वातथासप्तग्रासान्वास्वेच्छयास्व
स्थम् अशक्तश्चेत्ततःसिद्धिर्भविष्यतिनसंशयः मंत्रेणानेनसंप्रार्थ्यदेवदेवंजगद्गुरुम् एवंपूजाप्रकर्तव्याषोडशैरुपचारकैः नानाभक्ष्या
दिसंयुक्तमुपहारंप्रकल्पयेत् मोदकान्कारयेद्राजन्तिलजान्दशसंख्यकान् देवाग्रेस्थापयेत्पंचदशविप्रायदापयेत् पूजयित्वातुतंवि
प्रंभक्तिभावेनदेववत् दक्षिणांचयथाशक्त्यादत्वापंचैवमोदकान् संसारपीडाव्यथितंहिमांसदासंकष्टभूतस्कसुखप्रसीद त्वंप्राहि
मांनाशयकष्टसंघान्नमोनमःकष्टविनाशनाय इतिसंप्रार्थ्यदेवेशंचंद्रायार्घ्यंनिवेदयेत् ब्राह्मणान्भोजयेत्पश्चाद्गणेशप्रीतयेसदा स्व
यंभुंजीतपंचैवमोदकान्बंधुभिःसह अशक्तोत्वेकमन्नंवाभुंजीयाद्दधिनासह अथवाभोजनंकार्यमेकवारंहिपांडव भूमिशायी
जितक्रोधोलोभदंभविवर्जितः प्रतिमांगुरवेदद्यादाचार्यायनिवेदयेत् गच्छगच्छसुरश्रेष्ठस्वस्थानेपरमेश्वर व्रतेनानेनसंप्रीतोय
थोक्तफलदोभव एवंव्रतंप्रकर्तव्यंचतुर्थ्यांमासकृष्णके गाणपत्यंतथाकार्यंसर्वशास्त्रविशारदम् आचार्यंवरयेदादौयथोक्तविधि
नार्चयेत् एकविंशतिविप्रान्वैवस्त्रालंकारभूषणैः पूजयेद्गोहिरण्याद्यैर्मोदकैश्चैवहोमयेत् अष्टोत्तरसहस्रंतुशतंवाप्यधिकंतथा
अष्टाविंशतिरेवावावेदोक्तैस्तिलसर्पिषा सपत्नीकस्तुवर्णाद्यैर्गोभूवस्त्रादिभूषणैः छत्रोपानहौदद्यात्कमंडलुगृहादिभिः आचार्यंपूजये
द्राजन् गणेशस्यतुतुष्टये एवंकृत्वाविधानेनप्रसन्नोनात्रसंशयः प्रतिमासंतुयःकुर्यात्त्रीण्यब्दान्येकमेववा अथवाजन्मपर्यंतंतस्य
दुःखंकदाचन दारिद्र्यंनभवेत्तस्यसंकटंनभवेदिह वत्सरांतेद्वादशान्वैब्राह्मणान्भोजयेत्ततः विद्यार्थीलभतेविद्यांधनार्थीलभतेधन
पुत्रार्थीलभतेपुत्रान्सौभाग्यंचसुवासिनी शृण्वंतियेव्रतमिदंशुभमीदृशंहि तेवैसुखंसुविमनोव्रतपूर्णकामाः नित्यंभवंतिललनाः
पुरुषाःसुखिन्यस्तेपुत्रपौत्रधनधान्ययुताःपृथिव्याम् एवमुक्त्वाततोव्यासस्तत्रैवांतरधीयत युधिष्ठिरस्तुतत्सर्वमकरोद्राजसत्तमः तेन
व्रतप्रभावेनस्वराज्यंप्राप्तवान्नृपः हत्वारिपून्कुरुश्रेष्ठःस्वराज्यमलभन्नृपः इतिश्रीनारदीयपुराणेकृष्णचतुर्थीसंकष्टहरव्रतसंपू
र्णम् अथअंगारकचतुर्थीव्रतंलिख्यते इंद्रउवाच अंगारकचतुर्थ्यांचविशेषोविहितःकुतः वदमेकृपयाब्रह्मन्प्रश्रयान्नियमेनच

शृण्वतोनचमेतृप्तिर्गजाननकथांशुभाम् ब्रह्मोवाच अंगारकचतुर्थ्यास्तुमाहिमानंमहीपते शृणुष्वावहितोभूत्वाकथयामितवाग्र
तः अवंतीनगरेराजन्भरद्वाजोमहामुनिः वेदवेदांगविद्प्राज्ञःसर्वशास्त्रविशारदः अग्निहोत्ररतोनित्यंशिवध्यानेचतत्परः नदीतीरे
गतोतिष्ठन्ननुष्ठानरतोमुनिः अकस्मात्कामिनींदृष्ट्वाकामासक्तोभवन्मुनिः कामबाणाभिभूतःसन्निपपातमहीतले अतिविह्व
लगात्रस्यतस्यरेतस्तदास्खलत् प्रविष्टंतस्यतद्रेतःपृथिव्याबिलमध्यतः ततएकःकुमारोभूज्जपाकुसुमसंनिभः तंधरित्रीस्नेह
वशात्पालयामाससादरम् जनुःस्वंतेनधन्यंसमन्यतेपितरौकुलम् ततःससप्तवर्षस्तांपप्रच्छजननींनिजाम् महांतोह्यिकथंमात
र्मानुषंदेहमाश्रितः कश्चमेजनकोमातस्तन्मयाच्यद्यसांप्रतम् धरोवाच भरद्वाजमुनेरेतः स्खलितंशयिसंगतम् ततोजातोसिरे
पुत्रवर्धितोसिमयाशुभम् सूतउवाच तर्हितंमेमुनिंमातर्दर्शयस्वतपोनिधिम् ब्रह्मोवाच तमादायतदादेवीभरद्वाजजगामह
धरोवाच भरद्वाजनमस्कृत्यतद्वीर्यप्रभवंसुतम् वर्धितंतंपुरोधायस्वीकुरुष्वमुनेऽधुना तदाजगामचधात्रीस्वधामरुचिरंतदा
भरद्वाजःसुतंलब्ध्वामुमुदेचालिलिंगतम् आघ्रायशिरउत्संगेस्थापयामासतंमुदा मुहूर्तेशुभलग्नेचव्रतकारोपनयंमुनिः वेदशा
स्त्राण्युपाशिक्ष्यगणेशस्यमनुंशुभम् उवाचकुर्वनुष्ठानंगणेशप्रीतयेचिरम् संतुष्टोदास्यतेकामान्सर्वांस्तवमनोगतान् ततोमं
दाकिनीतीरेपद्मासनगतोमुनिः संनियम्येंद्रियाण्याशुध्यायन्हेरंबमंतरा जजापपरमंमंत्रंलाभप्रदांभृशंमुनिः एवंवर्षसहस्रं
सस्तपस्तेपेसुदारुणम् माघकृष्णचतुर्थ्यांतमुदयेशशिनःशुभे दर्शयामासस्वरूपंगणनाथोयदिप्रभुजम् दिव्यांबरंभालचंद्रं
नानालंकारमंडितं ददर्शसूर्यदेवस्यसबालःपुरतःस्थितं उत्थायप्रणिपत्यैनंतुष्टावजगदीश्वरम् नमस्तेविघ्ननाशायनमस्तेविघ्नकारि
णे सुरासुरशिरोरत्नसर्वांशत्युपबृंहिणे निरामयायदेवायनिर्गुणायगुणाच्छिदे नमोब्रह्मविदांश्रेष्ठस्थितिसंहारकारिणे नमस्तेजगदाधा
रनमस्त्रैलोक्यपालक दयानिधेब्रह्मविदेब्रह्मणेब्रह्मरूपिणे लक्ष्यालक्ष्यस्वरूपायदुर्लक्षणच्छिदेनमः इतिस्तुतःप्रसन्नात्मापरमा
त्मागजाननः उवाचश्लक्ष्णयावाचावरयाचयबालक एवमुक्तोभूमिपुत्रस्ततऊचेगजाननम् भौमउवाच धन्योहंतातोममहिजन

नंदर्शनात्तेसुरेशधन्यंज्ञानंकुलमपितयोर्येनदृष्टोसिसाक्षात् धन्यावाणीवसतिमयियापादपद्मेचभक्तिर्जातोसित्वंवरदसुलभोभ
क्तिभावेनदेव यदितुष्टोऽसिदेवेशस्वर्गेभवतुमेस्थितिः अमृतंपातुमिच्छामिदेवैःसहगजानन कल्याणकारिमेनामख्यातिमेतुजग
त्त्रये दर्शनंमेचतुर्थ्यांयज्ज्ञायतेपुण्यदंविभो अतःसापुण्यदानित्यंसर्वसंकष्टहारिणी कामदाव्रतकर्तृणांत्वत्प्रसादात्सुरेश्वर गजा
ननउवाच अमृतंप्राप्स्यसेसम्यक्देवैःसहधरासुत मंगलेतिचनाम्नात्वंलोकेख्यातिंगमिष्यसि अंगारकेतिरक्तत्वाद्रूसमत्वा
यतःसुतः अंगारकचतुर्थींयेकरिष्यंतिनराभुवि तेषामब्दभवंपुण्यंसंकष्टीव्रतसंभवम् निर्विघ्नतासर्वकार्येभविष्यतिनसंश
यः अवंतीनगरेराजाभविष्यतिपरंतपः व्रतानामुत्तमंयस्मात्तत्कृतंमेव्रतमुत्तमम् यस्यसंकीर्तनान्मर्त्यःसर्वकामानवाप्नुयात्
इतिदत्वावरान्देवोंतर्दधेद्विरदाननः ततस्तुमंगलोदेवंस्थापयित्वाप्रयत्नतः शुंडामुखंदशामुखंसर्वावयवसुंदरम् प्रासादं
कारयामासगजाननमुदावह संज्ञांमंगलमूर्तिश्चदेवदेवस्यसोकरोत् ततोभवत्कामदंतत्क्षेत्रंसर्वजनस्ययत् अनुष्ठानात्पूजना
च्चदर्शनात्सर्वमोक्षदम् ततोविनायकोदेवोविमानवरमुत्तमम् प्रेषयामासस्वगणान्भौममानेतुमंतिके तेगत्वातेनदेहेनभौममा
नीतवान्तदा गणेशस्यांतिकंराजन्तदद्भुतमिवाभवत् ततोभौमोभवत्ख्यातस्त्रैलोक्येसचराचरे यतोभौमेनसंकष्टचतुर्थी
भौमसंयुता कृत्वाप्राप्तयथास्वर्गेसुधापानंसुरैःसह अतश्चांगारकयुताचतुर्थीप्रथिताभुवि चिंतितार्थप्रदानेनचिंतामणिरिविप्र
या प्रयातोमंगलमूर्तिःसर्वानुग्रहकारकः परिणेतुःसनगरात्पश्चिमेप्रथितोभवत् चिंतामणिरितिख्यातःसर्वविघ्ननिवारणः
अतःससिद्धगंधर्वैःपूज्यतेसविधूदये ददातिवांछितानर्थान्पुत्रपौत्रादिसंपदः इतिश्रीगणेशपुराणेब्रह्मेंद्रसंवादेअंगारक
चतुर्थीव्रतंसंपूर्णम् अथपंचमीव्रतानिलिख्यंते अथचैत्रशुक्लपंचमीकल्पादिः चैत्रेमासिसितेपक्षेपंचम्यांपूजयेद्धरिम्
तत्रदोलोत्सवंकुर्यात्पुष्पधूपैश्चपूजयेत् नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्तान्ब्राह्मणान्भोजयेत्ततः
इतिहेमाद्रौभविष्ये अथश्रावणशुक्लपंचमीनागपूजायांपरा पंचमीनागपूजायांकार्याषष्ठीसमन्विता तस्यांतुतुषितानागा

गाइतरासाचतुर्थिका अथनागपंचमीव्रतंहेमाद्रौप्रभासखंडे ईश्वरउवाच श्रावणमासिपंचम्यांशुक्लपक्षेतुपार्वति द्वारस्योभ
यतोलेख्यागोमयेनविषोल्बणाः सातुपुण्यतमाप्रोक्तादेवानामपिदुर्लभा कुर्याद्द्वादशवर्षाणिपंचम्यांचवरानने चतुर्थ्यामेकभक्तं
तुतस्यांनक्तंप्रकीर्तितम् भूरिचंद्रमयंनागमथवाकलधौतजम् कृत्वादारुमयंवापिअथवामृन्मयंप्रिये हरिद्राचंदनेनैवपंचसर्पा
न्विलेखयेत् पंचम्यामर्चयेद्भक्त्यानागाःपंचफणाःस्मृताः पूजयेद्दधिदूर्वाभिःलाजपंचामृतैःसह करवीरैःशतपत्रैर्जातीपुष्पैश्चप
द्मकैः तथागंधादिधूपैश्चपूजयेन्नागपंचकम् ब्राह्मणान्भोजयेत्तस्माद्घृतपायसमोदकैः अनंतंवासुकिंशेषंपद्मंकंबलमेवच
तथाकर्कोटकंनागंभुजगाश्वतरंतथा धृतराष्ट्रंशंखपालंकालीयंतक्षकंतथा पिंगलंचमहानागंमासिमासिप्रकीर्तिताः व्रतस्यां
तेपारणंस्यात्क्षीरैर्ब्राह्मणभोजनम् सुवर्णभारनिष्पन्नंनागंदद्याच्चगांतथा तथावस्त्राणिदेयानिव्यासायामिततेजसे एवंसं
पूजयेन्नागान्सदाभक्त्यासमन्वितः विशेषतस्तुपंचम्यांपयसापायसेनच दिवारात्रौनरैस्तत्रमेदिनीखननंनहि इतिप्रभासखंडे
नागपंचमीव्रतम् अत्रैवनागदष्टव्रतम् हेमाद्रौभविष्योत्तरपुराणे सुमंतउवाच नागदष्टोनरोराजन्प्राप्यमृत्युंव्रजत्यधः
अधोगत्वाभवेत्सर्पोनिर्विषोनात्रसंशयः शतानीकउवाच नागदष्टःपितायस्यभ्राताचदुहितापिच मातापुत्रोथवाभार्याक
र्तव्यंतद्वदस्वमे मोक्षायतस्यविप्रेंद्रदानव्रतमुपोषणम् ब्रूहिमेद्विजशार्दूलयद्भवेत्तत्करोम्यहम् सुमंतउवाच उपोष्यापंच
मीसम्यक्नागानांबलवर्धिनी एकमेकंयावच्चविधानंशृणुभारत एकमेकंसंवत्सरम् उपोष्येतिदिवाभोजनाभावः तस्यांनक्त
मित्यग्रेनक्तोक्तेः श्रावणेमासिपंचम्यांशुक्लपक्षेनराधिप सापिपुण्यतमाप्रोक्ताग्राह्यासागतिकाम्यया चतुर्थ्यामेकभक्तंचपं
चम्यांनक्तमाचरेत् कुर्याच्चाद्रुमसंनागमथवाकलधौतजम् हेमरौप्यंचेत्यर्थः अथदारुमयंभव्यंमृन्मयंवाप्यशक्तितः पंचम्या
मर्चयेद्भक्त्यानागपंचफणंतथा करवीरैस्तथापद्मैर्जातिपुष्पैःसुगंधिभिः गंधपुष्पैश्चनैवेद्यैःस्नाप्यक्षीरादिभिर्नृप ब्राह्मणा
न्भोजयेत्तस्माद्घृतपायसमोदकैः अनंतंवासुकिंशंखंपद्मंकंबलमेवच तथाकर्कोटकंनागंनागमश्वतरंनृप धृतराष्ट्रंशंख

पालं कालियं तक्षकं तथा पिंगलं च तथा नागं मासि मासि क्रमाद्यजेत् पूजयित्वा प्रयत्नेन पंचम्यां नक्तभुक् भवेत् एवं द्वादश कृत्वा
वैश्रावणे तु सिते नृप वत्सरांते यथाशक्त्या अन्नदानं च कारयेत् ब्राह्मणानां यतीनां च नागानुद्दिश्य भक्तितः इतिहासविदे नागं का
चनं रत्नचित्रितम् गां च दद्यात्सवत्सां वै सर्वोपस्करसंयुताम् दानकाले पठेदेतत्स्मरन्नारायणं विभुम् सर्वगंधर्व धातारमनंतमपरा
जितम् ये केचिन्मे कुले सर्पा दष्टाः प्राप्तास्त्वधोगतिम् व्रतदानेन गोविंद मुक्तिभाजो भवंतु ते इत्युच्चार्याक्षतैर्युक्तं सितचंदनमिश्रि
तं वासुदेवाग्रतो भूप तोयं तोये च निक्षिपेत् अनेन विधिना सर्वे ये मरिष्यंति वा मृताः सर्पतस्ते प्रियास्यंति स्वर्गं तिं नृपसत्तम
कृत्वा सर्वान्समुद्धृत्य कुलजान्कुरुनंदन प्रयाति विष्णुसान्निध्यं सेव्यमानोप्सरोगणैः वित्तशाठ्यविहीनो यः सर्वमेतत्फलं लभेत् नक्ते
न भक्तिसहिताः सितपंचमीषु ये पूजयंति सकृभगान्कुसुमोपहारैः तेषां गृहेषु भयदा हि भवंति सर्पा अर्चान्वितां मणिमयूखविभासि
तांगाः ये तस्यां पूजयंतीह नागान्भक्तिपुरःसराः न तेषां सर्पतो वीर भयं भवति किंचन इति नागदष्टपंचमीव्रतं भविष्योक्तं अथ भा
द्रपद शुक्लपंचमीव्रतं तच्च मध्याह्नव्यापिन्यां कार्यं तथा च माधवीये हारीतः पूजाव्रतेषु सर्वेषु मध्याह्नव्यापिनी तिथिः दिनद्वयेन
व्याप्तौ वा पूर्वविद्धायां कार्यमिति मदनरत्नात् प्राप्य भाद्रपदे मासि शुक्लपक्षस्य पंचमी तस्यां मध्याह्नसमये नद्यादौ विमले जले कृ
त्वा पामार्गसमिधा अष्टोत्तरशताधिकाः अथवा कारयेत्सप्त दंतधावनमादितः वनस्पति प्रार्थना आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि
च ब्रह्मप्रज्ञां च मेधां च त्वन्नो देहि वनस्पते संप्रार्थ्यानेन मंत्रेण कुर्याद्वै दंतधावनम् तत्र मंत्रः मुखदुर्गंधिनाशाय दंतानां च विशुद्धये
ष्ठीवनाय च गात्राणां कुर्वेऽहं दंतधावनं अनेन दंतान्संशोध्य स्नायात्मृत्स्नानपूर्वकं पंचगव्यमंत्रः देशकालौ संकीर्त्य अमुककाय
शुद्ध्यर्थं पंचगव्यमहं करिष्ये गायत्र्या गृह्य गोमूत्रं गंधद्वारेति गोमयं आप्यायस्वेति च क्षीरं दधिक्राव्णेति वै दधि शुक्रमसि ज्योति
रसि अमृतमसि नाम धामासि प्रियं देवानामनाधृष्टं देवयजनमसि इत्याज्यं देवस्य त्वेति कुशोदकम् आपो हिष्ठेति मंथयेत्तु तस्य
चतुर्भागं हुत्वा सप्तपत्राः शुभा दर्भा अक्षताश्चैव संस्थिताः तेनैवोद्धृत्य होतव्यं अग्नये स्वाहा सोमाय स्वाहा इरावती धेनुमती०

इदंविष्णु॰ब्रह्मजज्ञानं॰मानस्तोके॰गायत्र्या॰विष्णवे॰ब्रह्मणे॰रुद्राय॰सूर्यायस्वाहेतिहोमयेज्जलमध्येवा प्रणवेनअश्वत्थकेशवेति
नाममंत्रेणत्रीणांपंचगव्यंकुर्यात् प्राशयेदिति नद्यादिकेतदास्नात्वानियममेवच ब्राह्मणीक्षत्रियावैश्याशूद्रीवापिवराननेकृत्वानैमित्तिककर्मगत्वानिजगृहंपुनः वेदींसम्यक्प्रकुर्वीतगोमयेनोपलिप्यतां इतिहेमाद्रौ रंगवल्लीसमायुक्तेसर्वतोभद्रमंडले अव्रणंसतनंकुंभंताम्रंमृन्मयमेववा संस्थाप्यवस्त्रसंयुक्तंकंठदेशसुशोभितम् पंचरत्नसमायुक्तंफलगंधाक्षतैर्युतं सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैववाहि आच्छादयेत्तंचेलेनलिखेदष्टदलंततः तत्रसप्तऋषीन्ध्यात्वाभक्तियुक्तःप्रपूजयेत् अथसंकल्पः मासपक्षाद्युल्लिख्यममऋतुसंपर्कजनितदोषपरिहारार्थंअरुंधतीसहितकश्यपादिसप्तर्षिप्रीत्यर्थंऋषिपूजनमहंकरिष्ये अथपूजाविधिः आगच्छंतुमहाभागाश्चतुर्वेदपरायणाः यावत्कृतमिदंकुर्वेकृपयाभवतामहं आवाहयामिमूर्तिब्रह्मण्यदेवस्यब्रह्मण्यतेजउत्तमं सूर्यकोटिप्रतीकाशमृषिवृंदंविचिंतयेत् ध्यानं ऋग्यजुःसामवेदानांस्वरूपेभ्योनमोनमः पुराणपुरुषेभ्योहिदेवर्षिभ्योनमोनमः आसनं गंधपुष्पाक्षतैर्युक्तंपाद्यंगृह्णंतुमेद्विजाः प्रसादंकुरुतप्रीतास्तुष्टाःसंतुसदाममपाद्यं॰ नभस्येशुक्लपंचम्यामर्चिताऋषिसत्तमाः दहंतुपापंमेसर्वंगृह्णंत्वर्घ्यंनमोनमः अर्घ्यं॰ लोकानांतुष्टिकर्तारोयूयंसर्वेतपोधनाः नमोवोधर्मविज्ञेभ्योमहर्षिभ्योनमोनमः आचमनीयं॰पंचामृतस्नानं॰ पयोदधिघृतंचैवशर्करामधुसंयुतम् पंचामृतेनस्नपनंकरिष्येऋषिसत्तमाः पंचामृतस्नानं॰मंदाकिन्याःसमानीतंयमुनागोतनर्माजलम् कृष्णाचनर्मदातापीताभ्यःस्नानार्थमाहृतम् स्नानं॰ सर्वेनित्यंतपोनिष्ठाब्रह्मज्ञाःसत्यवादिनः वस्त्राणिप्रतिगृह्णंतुमुक्तिदाःसंतुमेसदा वस्त्रं॰नानामंत्रैःसमुद्भूतंत्रिवृत्यब्रह्मसूत्रकं प्रत्येकंचप्रयच्छामिऋषयःप्रतिगृह्यतां उपवीतानि कुंकुमागरुकर्पूरस्रग्गंधैर्निर्मितंशुभम् गंधाढ्यंचंदनंदिव्यंगृह्णंतु ऋषिसत्तमाः गंधं॰ शुभ्राक्षताश्चसंपूर्णाःप्रक्षाल्यचनियोजिताः शोभायैवोमयादत्तागृह्यतांमुनिसत्तमाः अक्षताः मालतीचंपकादीनिमालत्यादीनिवैद्विजाः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यतां पुष्पाणि॰वनस्पतिरसोद्भूतोगंधा

द्यः सुमनोहरः आघ्रेयः सर्वदेवानां धूपोयंप्रतिगृह्यताम् धूपं० आज्यंचवर्तिसंयुक्तं०दीपं० नानापक्वान्नसंयुक्तंरसैः षड्भिः सम
न्वितम् गृह्णंतुऋषयः सर्वेनैवेद्यंप्रतिगृह्यतां नैवेद्यं०मध्येपानीयं०उत्तरापोशनं०करोद्वर्तनार्थेचंदनं०नमोवेदविदः श्रेष्ठाऋषयः
सूर्यसन्निभाः गृह्णंत्विदफलंतुभ्यंमयादत्तंहिभक्तितः फलं०पूगीफलंमहद्दिव्यं०पूगीफलं०हिरण्यगर्भेतिदक्षिणा०यानिकानिच
पापानिब्रह्महत्यासमानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणां० नमोस्तुऋषिवृंदेभ्योदेवर्षिभ्योनमोनमः सर्वपापहरे
भ्योहिवेदविद्भ्योनमोनमः नमस्कारः एतेसप्तर्षयः सर्वेभक्त्यासंपूजितामया सर्वपापंव्यपोहंतुज्ञानतोज्ञानतः कृतम् प्रार्थना वा
यनम् कृतायाः पूजायाः सांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये तथाचब्राह्मणपूजनं वायनंफलसंयुक्तंसघृतंदक्षिणा
न्वितं द्विजवर्यायदास्यामिव्रतसंपूर्णहेतवे भवंतः प्रतिगृह्णंतुज्योतिरूपास्तपोधनाः उभयोस्तारकाः संतुवायनस्यप्रदानतः वाय
नं० न्यूनातिरिक्तकर्माणिमयायानिकृतानिच क्षमध्वंतानिसर्वाणिभूयंसर्वेतपोधनाः यांतुदेवगणाः० विसर्जनम् एवंसंपूज्य
विधिवद्भक्तियुक्तेनचेतसा तेषामग्रेचश्रोतव्यंशुभंचैवकथानकं इतिपूजाविधिः अथकथा हेमाद्रौब्रह्मांडे सिताश्वउ
श्रुतानिदेवदेवेशव्रतानिसुबहूनिवै सांप्रतंमेसमाचक्ष्वव्रतंपापप्रणाशनं ब्रह्मोवाच शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमंव्र
तं ऋषिपंचमिविख्यातंसर्वपापहरंपरम् येनचीर्णेनराजेंद्रनरकंनैवपश्यति तत्रैवोदाहरिष्यामिइतिहासंपुरातनम् वैदर्भेचद्वि
जवरोउत्तंकोनाममनामतः तस्यभार्यासुशीलेतिपतिव्रतपरायणा तस्याअपत्ययुगलंपुत्रोहिसुविभूषणः अधीतवान्सुतस्त
स्यवेदान्सांगपदक्रमान् समानेनकुलीनेनसुतावपिविवाहिता विवाहिताचसादैवाद्वैधव्यंप्रापसत्तमा सतीत्वंपालयंतीसा
आस्तेनिजपितुर्गृहे तस्यादुःखेनसंतप्तः सुतंसंस्थाप्यवेश्मनि गंगातीरंवनंप्रापः कदाचित्तुतयासह सतत्राध्यापयामास
शिष्यान्वेदान्द्विजोत्तमः सुताचकुरुतेतस्यपितुः शुश्रूषणंपरं पितुः शुश्रूषणंकृत्वापरिश्रांताकदाचन निशीथेकिलसंसुप्ताकृमिरा
शिरजायत शिष्यास्तथाविधांदृष्ट्वाविवस्त्रांप्रस्तरेस्थितां शिष्यानिवेदयामासुस्तन्मातुः करुणास्थिताः नजानीमोवयंकिंचिद्वै

वींसाध्वींतथाविधाम् कृमिराशिमयींजातामातः संप्रतिदृश्यते वज्रपातसमंश्रुत्वातद्धिष्येश्चउदाहृतम् साक्रांतमानसाशीघ्रं तत्समीपमुपागतम् सातांतथाविधांदृष्ट्वाविललापसुदुःखिता उरश्चताडयामाससुतरांमोहमापच क्षणेनप्राप्तचैतन्यमुत्थाप्यप रिमृज्यच समालंब्यचबाहुभ्यां निन्येतत्पितुरंतिकम् स्वामिन्कथयमेसाध्वीकेनदुष्कृतकर्मणा निशीथेचप्रसूतेयंजायतेकृमि संकुला एवंश्रुत्वाततोवाक्यंऋषिर्ध्यानपरायणः ज्ञात्वानिवेदयामासतस्याःप्राक्जन्मचेष्टितम् ऋषिरुवाच प्रागियंसप्तमे तीतेजन्मनिब्राह्मण्यभूत् रजस्वलाचसंजाताभांडादीन्यस्पृशत्तदा अस्याःकृपाप्मनातेनजायतेकृमिवद्वपुः रजस्वलायाः पापेनयुक्ताभवतिसानघे प्रथमेहनिचांडालीद्वितीयेब्रह्मघातिनी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुद्ध्यति तयातयासखीसं गाद्व्रतंदृष्ट्वावमानितम् दृष्टव्रतप्रभावेनजाताद्विजकुलेमले अवमानाद्व्रतस्यास्यकृमिराशिमयीऽधुना एतत्तेकथितंसर्वं कारणंदुष्कृतस्यच सुशीलोवा० दर्शनादपिजन्मस्याद्विप्राणांनिर्मलेकुले जन्मयुष्मद्विधानांहिजायतेब्रह्मतेजसा अवज्ञया प्रजायंतेनिशीथेकृमिराशयः महाश्चर्यंकथंनाथतद्व्रतंकथयस्वमे ऋषिरुवा० सुशीलेशृणुतत्सम्यक्व्रतानामुत्तमंव्रतम् येनचीर्णेनसहसापापादस्माद्विमुच्यते दुःखत्रयाच्चमुच्येननारीसौभाग्यमाप्नुयात् कल्याणानिविवर्द्धंतेसंपदश्चनिरापदः युधिष्ठिरउवाच श्रुतानिदेवदेवेशव्रतानिसुबहूनिच सांप्रतमन्यदाचक्ष्वव्रतंपापप्रणाशनं श्रीकृष्णउ० अथान्यदपिराजेंद्र पंचमींऋषिसंज्ञितां कथयिष्यामियत्कृत्वानारीपापात्प्रमुच्यते युधिष्ठिरउ० कीदृशीपंचमीकृष्णकथंचऋषिसंज्ञिता पात कान्मुच्यतेकस्मान्नारीयदुकुलोद्भव पापानिचबहून्यत्रविद्यंतेकिलकेशव कथंवाऋषिपंचम्यानारीकस्मात्प्रमुच्यते कृष्णउ वाच अज्ञानाज्ज्ञानतोवापियास्त्रीजातारजस्वला दृष्टास्पृशतिभांडानिगृहकर्माणिसंस्थिता प्राप्नोतिसामहापापंसत्यंसान रकंव्रजेत् शृणुतत्कारणंयस्माद्वर्जनीयारजस्वला प्रोत्सार्यगृहतोदूरंचातुर्वर्ण्येनभारत ब्रह्महत्यापुराशक्रोवृत्रंहत्वात्ववा पच तयावैराजशार्दूलव्रीडितोवृत्रसूदनः ब्रह्माणंसमुपागच्छदात्मनःशुद्धिकारणात् शुद्धिंशक्रस्यराजेंद्रप्रदृष्टेनांतरात्मना

विभज्यब्रह्महत्यातुचतुर्धाचचतुर्मुखः शाक्षिपद्राजशार्दूलचतुस्थानेषुवैतदा वह्नौप्रथमज्वालासुनदीषुप्रथमोदके पर्वताग्रेवृक्ष
जातौनारीरजसिपार्थिव ततोरजस्वलानारीप्रोत्सार्यचप्रयत्नतः ब्रह्मणःशासनात्पार्थचातुर्वर्ण्येनसर्वदा प्रथमेहनिचांडालीद्वि
तीयेब्रह्मघातकी तृतीयेरजकीप्रोक्ताचतुर्थेहनिशुध्यति भर्तुःशुद्धाचतुर्थेन्हिदैवेपित्र्येचपंचमे अज्ञानाज्ज्ञानतोवापिजातसंपर्क
पातकं तत्पापसंक्षयार्थंवैकार्यमृषिपंचमी सर्वपापप्रशमनीसर्वोपद्रवनाशिनी ब्रह्मक्षत्रियविट्शूद्रस्त्रीभिःकार्याविशेषतः कृष्णउवा
च अत्रार्थेयुधिष्ठिरवृत्तंप्रवक्ष्यामिकथानकं पुराकृतयुगेराजाविदर्भायांबभूवह श्येनजिन्नामराजर्षिश्चातुर्वर्ण्यानुपालकः तस्यदेशेव
सन्विप्रोवेदवेदांगपारगः सुमित्रोनामराजेंद्रसर्वभूतहितेरतः कृषिवृत्त्यासदायुक्तःकुटुंबपरिपालकः तस्यभार्यासुसाध्वीच
पतिशुश्रूषणेरता जयश्रीर्नामविख्यातावहुभृत्यसुतज्जना अतिविनाम्बिनासाचप्राप्तेकालेसुमध्यमा क्षेत्रादिषुरतासाध्वी
व्याकुलीकृतमानसा एकदासात्मनःप्राप्तमृतुकालंव्यलोकयत् रजस्वलापिसाराजन्गृहकर्मचकारह भांडादीन्यस्पृशद्राजन्नृतौ
प्राप्तेपिभामिनी कालेनबहुनासाध्वीपंचत्वमगमत्तदा तस्याभर्तापिविप्रोसौकालधर्ममुपेयिवान् एवंतौदंपतीराजन्स्वकर्मवश
गौतदा भार्यातस्यजयश्रीःसाऋतुसंपर्कदोषतः शुनियोनिंसमुत्पन्नाशुनीचाभून्नरेश्वर तस्याःसंपर्कदोषेणबलीवर्दोबभूवह
एवंतौदंपतीराजन्स्वकर्मवशगौतदा ऋतुसंपर्कदोषेणतिर्यग्योनिमुपागतौ स्वधर्माचरणाज्ज्ञातावुभौजाति स्मरौ तथा सुत
स्यैवगृहेराजन्स्मरंतौपूर्वपातकम् सुमित्रस्यचपुत्रोभूद्गुरुशुश्रूषणेरतः सुमतिर्नामधर्मज्ञोदेवतातिथिपूजकः अथतस्या
हसंप्राप्तेपितुस्तुसुमतिस्तदा भार्यांचंद्रवतींप्राहसुमतिःश्रद्धयान्वितः अद्यसांवत्सरदिनंपितुर्मेचारुहासिनि भोजनीया
द्विजाश्चापिरूपाकःशुद्धिर्विधीयताम् तयाकृतापाकशुद्धिःसुमतेर्भर्तुराज्ञया भुक्तपायसभांडेवैसर्पेणगरलंततः दृष्वाब्र
ह्मवधाद्भीताशुनीभांडानिसास्पृशत् द्विजभार्याचतांदृष्ट्वाउल्मुकेनजघानह भांडादीनिचप्रक्षाल्यत्यक्त्वापाकंसुम
ध्यमा पुनःपाकंचकृत्वातुश्राद्धंकृत्वाविधानतः ततोभुक्तेषुविप्रेषुनोच्छिष्टंचददौबहिः भूमौक्षिप्तंतयाशुन्याउपवास

स्ततोभवत् ततोरात्र्यांप्र[illegible]भिनादकाधनाभृशम् बलीवर्दमुपागत्यप्रतोरमिदमब्रवीत् क्षुधुक्षितोद्यहंभर्त्रानदत्तंभोजना
दिकम् ग्रासादिकंचनग्रासंक्षुधामांबाधतेभृशम् अन्यस्मिन्दिवसेपुत्रोममनत्यंददात्यसौ अद्यमत्स्याकिमप्येषउच्छिष्टमपि
नोददौ पायसान्नेपपाताद्यगरलंसर्पसंभवम् मयाविचिंत्यमनसामरिष्यंतिद्विजोत्तमाः संस्पृश्यपायसंगलाबध्वाःहंताडिताभृश
म् दुःखितंतेनमेगात्रंकटिर्भग्नाकरोमिकिम् ततःश्राद्धसचानड्वान्भद्रंतेपापसंग्रहान् किंकरोमिह्यशक्तोऽहंभारंवाहोद्यसंस्थि
तः अद्याहमात्मजक्षेत्रेवाहितःसकलंदिनम् मारितश्चात्मजेनाहंमुखबध्वाक्षुधुक्षितः वृथाश्राद्धंकृतंतेनजाताद्यममकष्टता
कृष्णउवाच तयोःसंवदतोरेवंमातापित्रोश्चभारत श्रुत्वापुत्रस्तदावाक्यंयदुक्तंचतदोभयोः ततोरजन्यांतत्कालंद्रुतंतस्यैवप्रो
जनम् पितरौतौविदित्वातुदत्तवान्सुमतिस्तदा तदाःसोदुःखितःपुत्रोज्ञात्वातस्थानदातयोः मातापित्रोस्तुराजेंद्रतदासोप्र
स्थितोवनम् ज्ञातुमिच्छामिकस्त्वैमातापित्रोश्चभारत तत्रगत्वाज्ञानवृद्धानृषीन्परमधार्मिकान् प्रणिपत्याब्रवीद्वाक्यंद्वि
तंचैवतदातयोः सुमतिरुवाच कथयध्वंविप्रवर्याःप्रश्नमेकंसमाहिताः केनकर्मविपाकेनापितरौमेतपोधनाः इमामवस्थां
संप्राप्तौमुच्येतेपातकात्कथम् कृष्णउवाच तदाकर्ण्यवचस्तस्यसुमतेर्दुःखितस्यच ऋषिःसर्वतपोनामसर्वज्ञःकरुणान्वि
तः सुमतिंप्रत्युवाचेदंतात्पित्रोर्मुक्तयेतदा ऋषिरुवाच तवमातापुराविप्रस्यगृहेत्वात्मभावतः प्राप्तमृतुंविदित्वातुसंपर्कमकरो
द्द्विज तेनकर्मविपाकेनशुनियोनिमुपागता पितापिरस्पर्शदोषेणबलीवर्दोबभूवह एतयोर्मुक्तिकामार्थंकुरुत्वमृषिपंचमीं प्रा
र्थयासहविप्रेंद्रऋषीन्संपूज्ययत्नतः आचरस्वव्रतंतच्चसनर्षयःद्विजोत्तम [illegible]द्यापनंकुर्याद्वित्तशाठ्यविवर्जितः शाकाहारस्तु
कर्त्तव्योनीवारैःश्यामकैस्तथा कंदैवाऽथफलंमूलंहलकृष्टंनभक्षयेत् [illegible]भाद्रपदेमासिशुक्लपक्षस्यपंचमीं तस्यामध्याह्नसम
येनद्यादौविमलेजले कृत्वापामार्गसमिधादंतधावनमादितः आयुर्बलं[illegible]र्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वं
नोदेहिवनस्पते संप्रार्थ्यानेनमंत्रेणकुर्याद्वैदंतधावनम् मुखदुर्गंधिनाशायदंतानांचविशुद्धये [illegible]नायचगात्राणांकुर्वेऽहंदंतधा

वनम् अनेनदंतान्संशोध्यस्नायान्मृत्स्नानपूर्वकम् तिलामलककल्केनकेशान्संशोध्ययत्नतः परिधायनवेशल्केवाससीचसमाहितः
विधायनित्यकर्माणिगत्वाद्वारवर्तामृषीन् द्वारवतीमग्निहोत्रशाला स्नापयेद्दाश्विवद्भक्त्यापंचामृतरसैःशुभैः चंदनागरुकर्पूरैर्विल
प्यन्सुगंधिभिः पूजयेद्विविधैःपुष्पैर्गंधपुष्पादिदीपकैः समाच्छाद्यशुभैर्वस्त्रैःसोपवीतैर्यथाविधि ततोनैवेद्यसंपन्नैरर्घ्यंदद्यान्छु
भैःफलैः पूजयस्वऋषीन्दिव्यानरुंधत्यासमन्वितान् कश्यपोत्रिर्भरद्वाजोविश्वामित्रोथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवा
प्यरुंधती मंत्रेणानेनसमर्षीन्पूजयेत्सुसमाहितः व्रतेनऋषिपंचम्याःकृतेनैवद्विजोत्तम ऋतुसंपर्कजोदोषःक्षयंयातिनसंशयः
श्रीकृष्णउवाच तच्छ्रुत्वासुमतिर्वाक्यंपरमंऋषिभाषितं गृहमेत्यव्रतंचक्रेसभार्यःश्रद्धयान्वितः व्रतंतुऋषिपंचम्याःसर्वपापप्र
णाशनम् कृत्वासर्वंयथोक्तंचमातापित्रोःफलंददौ व्रतपुण्यप्रभावेनमातातस्यशुवयोनितः मुक्तानृपतिशार्दूलविमानवरमास्थिता
दिव्यांबरधराभूत्वागतास्वर्गंचभारत पितापिसमृतोगच्छत्सुमतेःपशुयोनितः स्वर्गंप्राप्तोमहाराजव्रतस्यास्यप्रभावतः
दिव्यांबरधरोभूत्वागतःस्वर्गंचभारत कायिकंवाचिकंवापिमानसंयच्चदुष्कृतम् तत्सर्वंविलयंयातिव्रतस्यास्यप्रभावतः यस्यय-
ज्जायतेपुण्यंतच्छृणुष्वनृपोत्तम सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलम् सर्वदानेषुदत्तेषुनदेतद्व्रतचारणात् कुरुतेयाव्रतंनारी
साभवेत्सुखभागिनीरूपलावण्यसुक्तावपुत्रपौत्रादिसंयुता इहलोकेसुखंभूयात्सरत्रचपरांगतिम् एतत्तेकथितंराजन्व्रताना
मुत्तमंव्रतम् सर्वसपत्प्रदंचैवनारीणांपापनाशनम् धनंयशश्चस्वर्गंचपुत्रानपियुधिष्ठिर पठतांशृण्वतांचापिसर्वपापप्रणा
शनम् इतिश्रीभविष्योत्तरपुराणेऋषिपंचमीव्रतकथासंपूर्णा अथोद्यापनम् युधिष्ठिरउवाच किमस्योद्या
पनंप्रोक्तंव्रतपूर्णफलप्रदम् सुमतिःकेनविधिनाचकारवदतत्त्वतः कृष्णउवाच पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः
प्रातरुत्थायसुस्नातस्ततोगुरुगृहंव्रजेत् प्रार्थयेत्तंममाचार्योभवोद्यापनकर्मणि पूर्वोक्तेनैवविधिनास्नात्वाभक्त्यासम
न्वितः शुचौदेशेसमालिप्यसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशो

भनम् पंचरत्नसमायुक्तफलगंधाक्षतैर्युतम् सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आ
च्छादयेत्तचैलेनलिखेदष्टदलंततः सौवर्णीप्रतिमाकार्याऋषीणांभावितात्मनाम् पलेनवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावा
कारयेत्तत्रवित्तशाठ्यविवर्जितः कृष्णउवाच वितानंपंचवर्णंचफलपुष्पसमन्वितम् बध्नीयादुपरिश्रीमत्संभारान्संविधाय
च मध्यान्हेपूजयेद्भक्त्याऋषीन्श्रद्धासमन्वितः कश्यपोत्रिर्भरद्वाजोविश्वामित्रोऽथगौतमः जमदग्निर्वसिष्ठश्चसाध्वीचैवा
प्यरुंधती गृह्णंत्वर्घ्यंमयादत्तंतुष्टाभवतुमेसदा एवंपूजांविनिर्वृत्यऋषीन्ध्यात्वासमाहितः अनेनविधिनासप्तवर्षाणि
व्रतमाचरेत् आदौमध्येतथाचांतेकुर्यादुद्यापनंबुधः आचार्यान्वरयेत्सप्तवेदवेदांगपारगान् प्रतिमाःसप्तकुर्वीतसुवर्णेन
स्वशक्तितः जटिलाःसाक्षसूत्राश्चकमंडलुसमन्विताः गंधस्थाप्यकलशेष्वेतान्मृन्मयेष्वव्रणेषुच स्नापयेद्विधिवद्भक्त्यापंचामृत
पयादिभिः पूर्वोक्तविधिनाराजन्कृत्वापूजांसमाहितः रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः कृतनित्यक्रियःप्रातर्जुहुयात्ति
लसर्पिषा वैदिकोवाऽथपौराणअधिकारांमनुस्मृतः सहस्रंवामहावाथनाममंत्रैस्तुवापृथक् अष्टोत्तरसहस्रंवाशतमष्टोत्तरं
तुवा पुनःपूजांततःकृत्वागुरुंसंपूजयेद्व्रती स्वर्णांगुलीयवासोभिःकुंडलामृतभोजनैः सप्तगाश्चैवदातव्यावस्त्रालंकारसंयुताः दद्याद्दे
कांसवत्सांचगुरवेगांपयस्विनीम् पूजयेद्द्विजःसप्तवासोभिर्दक्षिणादिभिः कलशान्सुपर्वानानिदद्यात्तेभ्यःस्वभक्तितः आ
चार्यंचसपत्नीकंप्रणिपत्यसमापयेत् भोजयेद्ब्राह्मणान्भक्त्यादीनानाथान्प्रनर्प्यच सोपस्करास्ताःप्रतिमाआचार्येभ्योनिवे
दयेत् लब्ध्वानुज्ञांतुभुंजीतइष्टैर्बंधुजनैःसह उद्यापनविधिःप्रोक्तःसर्वत्रायंफलार्थिनाम् अनेनविधिनासम्यक्व्रतमेतत्समा
चरेत् सर्वव्रतेषुयत्पुण्यंसर्वतीर्थेषुयत्फलं सर्वदानेषुदत्तेषुतद्दत्तंव्रतचारिणां एवंयाकुरुतेभूपउद्यापनविधिंपरम् सर्वपापविनिर्मु
क्तास्वर्गलोकेमहीयते इहलोकेचिरकालंभर्त्रासहशुचिस्मिता पुत्रपौत्रैःपरिवृताभुक्त्वाभोगान्मनोहरान् निःपापासुभगानित्यं
लभतेचाक्षयांगतिम् इतिश्रीभविष्योत्तरपुराणेऋषिपंचमीव्रतोद्यापनविधिःसंपूर्णः आश्विनशुक्लपंचम्यासुपांगललिताव्रतं

तत्रदाक्षिणात्यानांशिष्टाचारएवप्रमाणं तच्चमध्यान्हव्यापिन्यांकार्यं पूजाव्रतेषुसर्वेषुमध्याह्नव्यापिनीतिथिः इतिमाधवीयेहारि
नोक्तेः दिनद्वयेतद्व्याप्तावव्याप्तौपूर्वायुगभूताइतियुग्मवाक्यात् अन्यत्रशक्तिपूजायांतु अर्धरात्रव्यापिनीग्राह्या यत्तु भूरिजन्मा
जल्पवचनंविनारात्रिव्यापिन्याग्रहणेप्रमाणाभावात् जागरणस्यचांगत्वात्पूर्वाह्णव्यापिन्येवग्राह्येतितत्त्वभूरिजन्मनोमंदप्रज्ञस्य
दुर्बुद्धिविलसितमात्रमित्युपेक्ष्यं अथव्रतविधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्य ममपुत्रधनविद्यारोगनिर्मुक्तिसुख
गोविजयपुष्ट्यायुष्यादिकामः स्त्री अवैधव्यकामा उपांगललितापीत्यर्थंयथामीलितोपचारैः उपांगललितापूजनमहंकरिष्ये इतिसं
कल्प्यपूजांकुर्यात् शुक्लपक्षस्यपंचम्यामिषेमासिचरेद्व्रतम् चत्वारिंशत्तथाद्वेवादंतधावनमादितः आयुर्बलंयशोवर्चः प्रजाः
पशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते समाख्यानेनमंत्रेणकुर्याद्वैदंतधावनम् मुखदुर्गंधिनाशायदंतानांचविशु
द्धये ष्ठीवनायचगात्राणांकुर्वेऽहंदंतधावनं अनेनदंतान्संशोध्यस्नात्वान्मृत्स्नानपूर्वकं ततोयथाविधिस्नात्वा शुक्लवासागृहंव्रजे
त् शुचौदेशेसमालिख्यसर्वतोभद्रमंडलं अव्रणंसजलंकुंभंताम्रंमृन्मयमेवच संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभनम् पंचर
त्नसमायुक्तंगंधपुष्पाक्षतैर्युतम् सहिरण्यंसमासाद्यताम्रेणपटलेनवै वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तंचैलेनालि
खेदष्टदलंततः सौवर्णंराजतंताम्रंपिधानंस्थापयेत्ततः उपचारैःषोडशभिरेभिर्मंत्रैःसमाहितः नित्यंनैमित्तिकंकुर्यात्ततःपूजांस
माचरेत् इतिविधिः ममनोभिप्सितकामनासिद्ध्यर्थंप्रतिवार्षिकमुपांगललितापूजनमहंकरिष्ये गणपतिपूजनंकुर्यात् अथ
पूजा नित्यकौशेयवसनांहेमाभांकमलासनाम् भक्तानांवरदांनित्यंललितांचिंतयाम्यहम् ध्यायामि निजासनेस्वायुधे
श्चललितेभक्तवत्सले उपांगललितेमातर्देहिमेव्रतकर्मणि आगच्छललितेदेविसर्वसंपत्प्रदायिनि यावद्व्रतंसमाप्येत
तावत्त्वंसन्निधौभव हिरण्यवर्णांहरिणींसुवर्णरजतस्रजाम् चंद्रांहिरण्मयींलक्ष्मींजातवेदोममावह आवाहयामि
कार्तस्वरमयंदिव्यंनानामणिगणार्चितं अनेकशक्तिसंयुक्तमासनंप्रतिगृह्यतां तांमआवहजातवेदोलक्ष्मीमनपगामिनीम्

यस्यांहिरण्यंप्रविंदेयंगामश्वंपुरुषानहम् आसनं गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृ
ह्यतां अश्वपूर्वांरथमध्यांहस्तिनादप्रमोदिनीं श्रियंदेवीमुपह्वयेश्रीर्मादेवीजुषतां पाद्यं निधीनांसर्वरत्नानांत्वमनर्घ्यंगुणान्यसि
तथापिभक्त्याललितेगृहाणार्घ्यंनमोस्तुते कांसोस्मितांहिरण्यप्राकारामार्द्रांज्वलंतींतृप्तांतर्पयंतीम् पद्मेस्थितांपद्मवर्णांतामिहोप
ह्वयेश्रियम् अर्घ्यम् पाटलोशीरकर्पूरसुरभिस्वादुशीतलम् तोयमाचमनीयार्थंललितेप्रतिगृह्यताम् चंद्रांप्रभासांयश
साज्वलंतींश्रियंलोकेदेवजुष्टामुदाराम् तांपद्मनीमींशरणमहंप्रपद्येलक्ष्मीर्मेनश्यतांत्वांवृणोमि आचमनीयं पयोदधिघृतंचैव
शर्करामधुसंयुतम् पंचामृतेनस्नपनंक्रियतांपरमेश्वरी आप्यायस्वेतिऋक् १ दधिक्राव्णेतिऋक् १ घृतंमिमिक्षेइतिऋक् १ मधु
वातेतिऋक् १ स्वादुःपवस्वेतिऋक् १ पंचामृतस्ना० मंदाकिन्याःसमुद्भूतंहेमांभोरुहवासितम् स्नानायतेमयाभक्त्यादत्तंस्वीक्रि
यतांजलम् आदित्यवर्णेतपसोधिजातोवनस्पतिस्तववृक्षोथबिल्वः तस्यफलानितपसानुदंतुमायांतरायाश्चबाह्या अल
क्ष्मीः स्नानम् सर्वभूषाधिकेसौम्येलोकलज्जानिवारणे मयोपपादितेतुभ्यंवाससीप्रतिगृह्यताम् उपैतुमांदेवसखःकीर्तिश्च
मणिनासह प्रादुर्भूतोस्मिराष्ट्रेस्मिन्कीर्तिमृद्धिंददातुमे वस्त्रम् प्रमुक्तामणिगणोपेतमनर्घ्यंचसुखप्रदं उत्तरीयंसुखस्पर्शं
ललितेप्रतिगृह्यताम् उत्तरीयवस्त्रम्स० कृष्णकाचाष्टसंयुक्तंसूत्रंग्रैवेयकंतथा दास्यामिकंठमालार्थंप्रत्यंगेललितेतवं कंठमा
लाम् मलयाचलसंभूतंघनसारंमनोहरम् हृदयानंदनंचारुचंदनंप्रतिगृह्यताम् क्षुत्पिपासामलांज्येष्ठामलक्ष्मींनाशयाम्य
हम् अभूतिमसमृद्धिंचसर्वांनिर्णुदमेगृहात् चंदनं अक्षताविमलाःशुद्धामुक्ताभाससमप्रभाः भूषणार्थंमयादत्तागृहाण
परमेश्वरि गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीम् ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियम् अक्षताः मालतीचंपकादीनिनाना
पुष्पैःसुवासितैः मयाहृतानिपुष्पाणिपूजार्थंप्रतिगृह्यताम् मनसःकाममाकूतिंवाचःसत्यमशीमहि पशूनांरूपमन्नस्यमयिश्रीः
श्रयतांयशः पुष्पं० अथांगपूजा उपांगललितायैनमः पादौपूजयामि भवान्यै० गुल्फौपू० सिद्धेश्वर्यै० जंघेपू० भद्रकाल्यै० जानुनीपू०

श्रियै० ऊरूपू० विश्वरूपिण्यै० कटीपू० देव्यै० नाभिंपू० वरदायै० कुक्षीपू० शिवायै० हृदयंपू० वागीश्वर्यै० स्कंधौपू० महादेव्यै० बाहूपू० प्रकृतिभद्रायै० करौपू० पद्मिन्यै० कंठंपू० सरस्वत्यै० मुखंपू० कमलासनायै० नासिकांपू० महिषमर्दिन्यै० नेत्रेपू० लक्ष्म्यै० कर्णौपू० भवान्यै० ललाटंपू० विंध्यवासिन्यै० शिरःपू० सिंहवाहिन्यै० सर्वांगंपू० देवद्रुमरसोद्भूतः कालागरुसमन्वितः आघ्रेयनामयंधूपो भवानिघ्राणतर्पणः कर्दमेनप्रजाभूतामयिसंभ्रमकर्दम श्रियंवासयमेकुलेमातरंपद्ममालिनीम् धूपं. चक्षुर्दांसर्वलोकानांति मिरस्यनिवारणम् आर्तिक्यंकल्पितंभक्त्यागृहाणपरमेश्वरि आपस्रजंतुस्निग्धानिचिक्लीतवसमेगृहे नीचदेवींमातरंश्रियं वासयमेकुले दीपं मोदकापूपलड्डुकवटकोदुंबरादिभिः सघृतंपायसान्नंचनैवेद्यंप्रतिगृह्यताम् आर्द्रांपुष्करिणींपुष्टींसुवर्णांहे ममालिनीम् सूर्यांहिरण्मयींलक्ष्मीं जातवेदोममावह नैवेद्यं. मलयाचलसंभूतंघनसारंमनोहरम् करोद्वर्तनकंचारुगृहाणपरमे श्वरि करोद्वर्तनं. कर्पूरैलालवंगादितांबूलीदलसंयुतम् क्रमुकस्यफलंनुम्यंतांबूलंप्रतिगृह्यताम् आर्द्रांयःकरिणींयष्टींपिंग लांपद्ममालिनीं चंद्रांहिरण्मयींलक्ष्मीं जातवेदोममावह तांबूलं मातुलिंगनारिकेलंफलंखर्जूरसंभवम् जंबीरंपनसंचापिगृ ह्यतांपरमेश्वरि इदंफलंमयादेविस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि तांमआवहजातवेदोलक्ष्मीमनपगा मिनीं यस्यांहिरण्यंप्रभूतिंगावोदास्योश्वान्विंदेयंपुरुषानहं फलम् हिरण्यगर्भगर्भस्थं. यःशुचिःप्रयतोभूत्वाजुहुयादाज्यम न्वहम् सूक्तंपंचदशर्चंचश्रीकामःसततंजपेत् दक्षिणा. चंद्रादित्यौचधरणीविद्युदग्निस्तथैवच त्वमेवसर्वज्योतींषिआर्तिक्यं प्रतिगृह्यताम् पद्मासनेपद्मऊरूपद्माक्षिपद्मसंभवे तन्मेभजसिपद्माक्षि येनसौख्यंलभाम्यहम् नीराजनं. उपांगललितेमा तर्नमस्तेविंध्यवासिनि दुर्गेदेविनमस्तुभ्यंनमस्तेविश्वरूपिणि अश्वदायैगोदायैधनदायैमहाधने धनंमेजुषतांदेवीसर्वकामां श्वदेहिमे पुष्पांजलिः अथदूर्वांकुरान्साग्रान्चत्वारिंशत्तथाष्टभिः अधिकान्हस्तआदायमंत्रमेतज्जपेद्बुधः मंत्रः बहुप्ररो हासततममृताहरितालता यथैवललितेमातस्तथामेस्युर्मनोरथाः इत्युक्त्वापूजयेद्देवीं दूर्वाभिःकुसुमैस्तथा मंत्रेणाष्टच

त्वारिंशद्भक्तितस्तु समाहितः दूर्वांकुरान् प्रदक्षिणात्रयं देवि प्रयत्नेन मया कृतम् तेन पापानि सर्वाणि व्यपोहंतु नमाम्यहम्
प्रदक्षिणा० साष्टांगोऽयं प्रणामस्ते नमस्कृत्य यथाविधि त्वद्दास इति मां मत्वा प्रसीद परमेश्वरि नमस्कारः दीनोहं पापयुक्तोहं दा
रिद्र्यैकनिकेतनः समुद्धर कृपासिंधो कामान्मे सफलान्कुरु प्रार्थना अथ वायनम् द्विजाय वायनं दद्याद्द्विंशत्यावटकादिभिः क
इदं कस्मा इति मंत्रेण आचार्याय निवेदयेत् पक्वान्नफलसंयुक्तं सघृतं दक्षिणान्वितम् द्विजवर्याय दास्यामि व्रतसंपूर्णहेतवे वायनं
द्विजवर्याय सहिरण्यं ददाम्यहम् इति वायनमंत्रः ततः कथां समाकर्ण्य वायनान्नस्य संख्यया स्वयं भुंजीत चैवान्नं वाग्य
तः सह बांधवैः रात्रौ जागरणं कुर्यान्नृत्यगीतादिमंगलैः प्रभाते पूजयेद्देवीं ततः कुर्याद्विसर्जनम् सवाहना शक्तियुता वरदा
पूजिता मया मातर्मामनुगृह्याथ गम्यतां निजमंदिरम् इति विसर्जनं इति वार्षिकपूजाविधिः अथ कथा सूत उवाच पुरा कैलास
शिखरे महर्षिगणसेविते षडाननं सुखासीनमिदमूचुर्महर्षयः ऋषय ऊचुः महासेन महादेवनंदनानंदविक्रम आख्याना
नि सुपुण्यानि श्रुतानि त्वत्प्रसादतः कथास्त्वद्वचनादेव प्रसूता भूरिसूतयः न तृप्तिमधिगच्छामः पायं पायं सुधामिव शुश्रूष
तो वयं देव्या व्रतं तत्कथयस्व नः मनोभिलषितार्थानां सिद्धिर्यस्मिन्कृते भवेत् स्कंद उवाच साधु पृष्टं महादेव्या माहात्म्यं मुनिपुं
गवाः वच्मि सर्वं विधानेन तच्छृणुध्वं जगद्धितं भृगुक्षेत्रे किल पुरा विप्रो भूद्धीतमाभिधः श्रुतिस्मृतिपुराणज्ञो धनी च बहुबांधवः
अनपत्यस्य तस्याथ जज्ञाते जरसः सुतौ श्रीपतिर्गोपतिश्चैव नामनी विदधनयोः अचिरेणैव कालेन स पंचत्वमगाद्द्विजः तौ तु बा
लौ धनं बंधून्हित्वा साधर्मचारिणी सती विवेश दहनं स्वर्यातु पतिना सह अथ ते बांधवाः सर्वे हाकष्टमिति चुक्रुशुः निंदतो दुःखि
तास्ते कुस्तस्त्रियां पारलौकिकीम् अथ तस्य सपत्नो भूज्ज्ञातास जगृहे धनम् आक्रोशंतौ च तौ गेहान्निजमानीय दुर्मनाः नास्ति
च क्रे धनं सर्वं ताभ्यां किंचिन्न वै ददौ ततो मौंजीधरौ बालौ बंधुभिः कथितं वसु ययाचतुः पितृव्यं तं देहि नो द्रविणं हि तत् सतात्व्रूते
गतं द्रव्यं युवाकेन भतारितौ निर्गच्छतां मम गृहादित्यादि परुषं बहु तौ तद्वचोभिर्निर्विण्णौ बालौ श्रीपतिगोपती बभाषाते मिथः के

र्थिगाहोपितृहानता यावोदेशांतरंयत्रस्वजनोनास्तिकश्चन अनाभाष्यैवस्वजनानूजग्मतुर्दिशमुत्तराम् भिक्षाचारौबहूनदेशा
न्वनानिसरितोगिरीन् समतिक्रम्यययतुर्विशालांनामतःपुरीम् कासारमीक्षांचक्रातेततोस्याःसन्निधौशुभं पुंडरीकवनाकीर्णं
रत्नसंध्याविभूषणम् संध्याभ्रभूषितंचारुयथातारकितंनभः श्रांतौपथिगतौबालौक्षणंविश्रम्यतत्तटे आचम्यशिशिरंतोयंस
स्नतुस्तौयथाविधि गताध्वखेदौविश्रान्तौपुरंमाविशतांततः वीथीचतुःपथियुतंचारुगोपुरमंडितम् देवतागाररुचिरंसौध
राजिविराजितम् नानावीथिरतिक्रम्याविशावासमवापतुः कस्यचित्वथविप्रस्यक्षुत्पिपासार्दितौगृहं ईयतुर्वेदिकायांतावुपविष्टौ
श्रमातुरौ स्वामीततोस्यगेहस्याविवेकइतिविश्रुतः आयातौवैश्वदेवांतेसददर्शातिथीद्विजौ अनापृच्छत्सतथाशीलंतथाचकुलना
मनी ऋषिवत्पूजयामासस्मरन्धर्मसनातनम् अतिथीभोजयामासस्वाहन्नसहचात्मना तौब्रह्मचारिणौविप्रौसपर्यातांवि
लोक्यच देशबंधुपरित्यागखेदयुक्तौबभूवतुः अथापृच्छद्द्विजस्तौनुकौयुवांकुतआगतौ किमर्थमल्पवयसौनिर्गतौस्वगृ
हादिति नह्विवेकस्यवचनमाकर्ण्यश्रीपतेस्तदा आनुपूर्वेणसकलवृत्तांतसमभाषत पितृहीनौचतौज्ञात्वात्यक्तौबंधुजने
नच आश्वास्यस्थापयामासस्वगृहेबहुवासरं प्रचक्रमे ऽथशिष्यैश्चसहाध्यापयितुंश्रुतिम् बभूवतुश्चतौबालौगुरुशुश्रूषणे
रतौ गुरोर्गेहेन्यवसतामागतानिर्मलाशरत् फुल्लपद्मविशालाक्षीप्रसन्नेंदुशुभानना तस्यांसशिष्यमाचार्यंचरंतंव्रतमुत्तमम् प
प्रच्छतुर्भोकिमिदमावाभ्यामितिकथ्यतां ताभ्यामेवंकृतेप्रश्नेविवेकइदमब्रवीत् विवेकउवाच उपांगललितादेव्याव्रतंदेवर्षिपूजि
तं सर्वकामकरंनृणामस्माभिःसमुपास्यते विद्याकामेनकर्तव्यंतथैवधनकाम्यया सुतार्थिनाप्रकर्तव्यंव्रतमेतदनुत्तमम् वि
द्याकामौचतौबालौव्रतमाचरतुर्मुदा भक्तितोगुर्वनुज्ञातौयथाशक्तियथाविधि व्रतप्रसादात्सकलंवेदशास्त्रमवापतुः अन्य
स्मिन्हायनेप्राप्तेकन्याविवाहार्थंप्रचक्रतुः श्रीपतिर्गोपतिश्चैवव्रतमेतत्तपोधनाः अचिरेणैवकालेनप्रासीसमाप्तेतयोर्गुरुः स्वांवि
वाहोचितांकन्यांनाम्नागुणवतीमिति विनीतायश्रुतवतेयूनेश्रीपतयेतदा विचार्यबांधवैःसाकंददौपुण्यर्क्षवासरे पारिबर्हंबहु

मुदाभादाद्दुहितृवत्सलः विवेकोपिमुदंलेभेसानुरागोविलोक्यतौ अन्याब्देपुनरेतत्तुव्रतंदेव्याश्चचक्रतुः भ्रातरौतौनिजंदेशमिच्छंतौ
चधनादिकम् अथान्येह्निकस्मिंश्चित्तावुपाध्यायमूचतुः स्वामिन्युष्मत्प्रसादेनलब्ध्वाविद्यातथावसु अनुजानीहिगच्छावोनि
जंदेशमितःपुनः इत्याकर्ण्यसमालोक्यशुभंवासरमादृतः स्वयंप्रापयितुंतौतौविप्रोकन्याचनिर्ययौ अथदेव्याःप्रसादेनपितृ
व्यस्यतयोःकिल अन्वेषणेमतिर्जातागतौश्रीपतिगोपती निर्गतौक्वगतौदेशंवसतःक्वेत्यचिंतयत् लोकानिंदंतिमांनिस्वंजा
ताअन्वेषणेमतिः दिदृक्षुस्तौततःसोपिनिर्जगामनिजात्पुरात् किंचित्सनगरंप्रापद्विजबालौगवेषयन् तदेवनगरंप्राप्तोविवेका
ख्योद्विजोत्तमः सशिष्यःकन्ययासार्द्धंक्रमन्मार्गेशनैःशनैः तत्रतेषांसमजनिसंगमोमुनिपुंगवाः विदांचकारतौकृच्छ्रान्मध्यमे
वयसिस्थितौ मूर्ध्न्यवघ्रायतौपश्चान्मुदंलेभेपरंतपाः नशक्नुवन्मुदावक्तुंप्रेमगद्गदयागिरा पादानतांगुणवतींविवेकेनप्रणोदिताम्
आशीर्वादैर्बहुविधैस्तांस्नुषांसमयोजयत् विवेकस्तुतदातत्रसंभाष्यचपरस्परम् विवेकउवाच सुतावेतौमयाऽनीतौपालितौ
पठितौतव संप्रापितुंप्रयातोऽस्मिभवतांग्राममुत्तमम् इतिसंभाष्यमाणस्तेभृगुक्षेत्रंययुर्मुदा ज्ञातिभिःसहसंगम्यसृण्वाद्वि
स्ताद्विवेष्टितम् तौपितृव्यगृहेस्थित्वाद्वायनान्यष्टसप्तच स्वपितृव्यगृहेकांश्चिदुषित्वादिवसांस्तदा लब्ध्वापितृधनंगेहंसर्वंश्रीप
तिगोपती ईयतुस्तदनुज्ञातोविवेकःस्वांपुरींययौ श्रीपतिर्गोपतेस्तत्रविवाहमकरोत्तदा नाविकचेतसोसत्रंचक्रतुर्द्विजतर्पणम्
श्रीपतिःश्रद्धयायुक्तःकनीयान्व्ययशंकितः विचार्यभार्ययासाकंविभक्तःश्रीपतेरभूत् सभोगान्विविधान्भुंजन्प्रमत्तोबहुस
पदा नदेव्याराधनंचक्रेगोपतिःसुखलंपटः अथस्वल्पेनकालेननष्टंतस्यशनैर्धनम् अकिंचनोगतश्चिंतांभार्ययाश्वासितस्तदा
तवभ्रातृगृहेविप्राभुंजंतेबहवःसदा गच्छावोनुदिनंकांततत्रभोक्तुमुभावपि एवंभोजनवेलायामागत्यागत्यतद्गृहम् भुंजन्
भुंजन्निजगृहेगतोनीवहुवासरं कदाचिदागतोयावद्गोपतिर्भार्ययासह उपविष्टेषुविप्रेषुभोक्तुंनोविंददासनम् अथान्न
राशेरभ्याशेभोजनायक्षुधातुरः उपविष्टःश्रीपतेस्तुभार्ययासन्निवारितः अस्मादुत्तिष्ठवैतूर्णंत्वमुच्छिष्टंकरिष्यसि तिष्ठ

तिष्ठक्षणंचैवपश्याद्रुंक्ष्वेतिचाब्रवीत् गोपतेःकांतयादृष्टंततोविमनसावुभौ अभुक्तावेवनिष्क्रांतौजग्मतुर्निजमंदिरम् ततःस्व
जायांप्रोवाचनिजमार्गंविचिंतयन् ज्ञातामयासमंवित्तंसंविभक्तमपिप्रिये दुर्बलोऽहंधनोन्मत्तःश्रूयतामत्रकारणम् पुराऽवा
भ्यांगुरुगृहेव्रतमाचरितंशुभम् उपांगललितादेव्याविद्यादिसकलंततः प्राप्तंमयानत्सकलंपरित्यक्तंप्रमादतः ज्येष्ठआचर
तेनित्यंतस्माच्छ्रीस्तत्रवर्तते तस्मादहंतदाभोक्ष्येयदाद्रक्ष्यामितांशिवाम् इत्युक्त्वानिर्गतस्तस्माद्गृहादकृतभोजनः तद्भा
र्याचिंतयाविष्टासापितस्यावनश्यती भुक्तवत्सुब्राह्मणेषुश्रीपतिःपर्यपृच्छत क्वगतोगोपतिरितितच्छ्रुत्वासोऽपिदुःखितः
गोपतिस्तुसरिद्दुर्गवनानिबहुशोऽभ्रमत् पृच्छंश्चपथिकान्मार्गेनदेव्याःपदमभ्यगात् पंचमेवासरेप्राप्तेक्षुत्पिपासार्दितोव
ने अलब्धदर्शनोदेव्यादुःखितोनिपपातह तंमूर्च्छागतमालोक्यभवानीभक्तवत्सला कृतापराधमपितमनुजग्राहवैतदा ग
तमूर्च्छःसमुत्थायदिगंतान्प्रविलोकयन् ददर्शदूरतोगोपंचारयंतंगवांगणम् तंदृष्ट्वाकिंचिदाश्वस्तोययौतस्यांतिकंशनैः
अपृच्छत्त्वंभवान्यातःकुत्रत्यःकुतआगतः कोऽयंदेशःक्वभूपालःकिंपुरंनामतद्वद निशम्यवचनंतस्यवक्तुंगोपःप्रचक्रमे
गोपउवाच उपांगंनामनगरमुपांगोनामभूपतिः तत्रत्योऽहंसमायातःपुनस्तत्रव्रजाम्यहम् उपांगललितादेव्याविद्यतेतत्रमंदिरम्
इत्याकर्ण्यवचस्तस्यविप्रःसमुदितोभवत् सगोपसहितःसायंविचरन्प्रविवेशह दूराद्ददर्शभवनंपुरमध्येतपोधनः उपांगललिता
देव्याःस्फाटिकंगगनंलिहम् सौवर्णेनविचित्रेणकलशेनोपशोभितम् यथोदयाचलःशैलोदधानोभानुमंडलं त्वरितोगोपमामं
त्र्यप्रासादंसययौमुदा प्रणम्यदंडवद्भूमौबद्धांजलिपुटस्तदा उपांगललितांदेवीमथस्तोतुंप्रचक्रमे गोपतिरुवाच नमस्तुभ्यंजगद्धा
त्रिभक्तानांहितकारिणि जगद्भीतिविनाशिन्यैसर्वमंगलमूर्तये हत्वानिशुंभमहिषप्रभृतीन्सुरारीन्निंद्रादयोनिजपदेषुयथाभि
षिक्ताः लोकत्रयावनगृहीतमहावतारेमातःप्रसीदसततंकुरुमेऽनुकंपाम् त्वांमुक्तयेनिजजनाःकुटिलीकृतांगींगौरींनिजेवपुषि
कुंडलिनींभजंति मुक्तौचदेवमनुजाःकनकारविंदबद्धासनामविरतकमलास्तुवंति सापराधोस्मिसततंप्राप्तस्त्वांजगदंबिके इदानीं

मनुकंप्योहंयद्वांच्छामिकुरुष्वतत् इतिस्तुत्वाऽथशर्वाणींप्रणिपत्यपुनःपुनः कृतसंध्याविधिस्तत्रकृत्वापाकंनृभोजनः स्वप्नेमू
र्तिमयीदेवीविप्रमेवंसमादिशत् गोपनेवत्सतुष्टास्मिगच्छोपांगमहीपतिम् मत्पूजनकरंडस्यप्रार्थयस्वपिधानकं तत्पूजयन्निजगृहे
परामृद्धिमवाप्स्यसि स्वप्नइत्याप्तसंदेशोप्रभातेगोपतिस्तदा राजदर्शनवेलायांनृपद्वारंसमभ्यगात् प्रविष्टोसौनृपसभांप्रतीहारै
र्निवेदितः राज्ञासंभाषितस्तत्रनिषसादासनेशुभे पृष्टोगमनहेतुंस्वंययाचेनृपपुंगवम् देव्यर्चनकरंडस्यपिधानंदेहिमेनृप इत्यर्थितः
सविप्रेणजातादेशोनृपोददौ पिधानकंनमस्कृत्यतस्मैचाभ्यर्चनादिकम् आशीर्भिरभिनंद्याथतमामंत्र्यचभूपतिम् उपांगललितादे
व्याःप्रासादंपुनरागमत् प्रणिपत्यांबिकांविप्रस्त्वरितोनिर्ययौपुरात् समीपेस्वपुरंदृष्ट्वात्वरितोगृहमुपागमत् सुहृद्भिःसहसंग
म्यसर्वंतत्कथयन्मुदा पूजयित्वापिधानंत्वद्विदधेपारणंद्विजः एवमाराध्यमानस्तुससमृद्धोभवत्पुनः सोपिसत्रंसमारेभे
द्विजाढ्योबहुवासरम् एकातस्याभवत्कन्याललितानामसुंदरी कन्यापिधानमादायविहर्तुंयातिसर्वदा प्रमत्तत्वात्प्रियत्वाच्च
पितृभ्यामनिवारिता कदाचित्स्ववयस्याभिःस्नानंगंगाजलेशुभे क्रीडंतीददृशेतोयेनीयमानंकलेवरम् पिधानहस्तासासिंचद
न्यांश्चांजलिभिस्तदा ससर्पदष्टउत्तस्थौततोदेव्याःप्रसादतः साऽतिश्रांतंद्विजंदृष्ट्वामनसाचिंतयत्सतिं जुहावाभ्यवहारायजनकस्य
निकेतनं मार्गेचपरिपप्रच्छकुलशीलंचतस्यसा सोपिसर्वंसमाचख्यौगुणराशीतिनामच ललितामंत्रयामासगुणराशिंद्वि
जोत्तमम् परिविष्टेपुचान्नेषुपितृवेश्मनिमेद्विज गृहीतापोशनोभूत्वाभार्यार्थेमांत्वमर्थय मयानुमोदितस्तातःसमांतुभ्यंप्रदा
स्यति यथोक्तोगुणराशिस्तुतथासर्वंचकारह गोपतिर्भार्ययाप्यात्रासमालोक्यास्वबांधवैः परीक्षितायविप्रायविद्यायांकुल
शीलयोः प्रतिजज्ञेततःकन्यांललितांगुणशालिने शुभेमुहूर्तेचतयोर्विवाहंकृतवान्प्रभुः वरायब्राह्मणेभ्यश्चददौबहुधनंतदा
विदधेचतयोर्गेहंनातिदूरंस्ववेश्मतः तत्रोषतुःसानुरागौमिथस्तौदंपतीचिरं पिधानकंतयानीतंनिजंललितयागृहं शनैस्थधनंसर्वं
गोपतेरगमद्गृहात् गुणराशिर्धनीजातोमहादेव्याःप्रसादतः करंडस्यपिधानंतज्जनन्याबहुवासरं याचितापिनवैप्रादाल्ललितापूजितं

गृहे अथसागोपतेर्भार्यातस्यैवानर्चनाद्व्रतम् इत्थंविचिंत्यपापात्माजामातरमथानयत् समिदर्थंवनंयातःस्वयंतद्गृहमाययौ शोचं
तींकिलतांकन्यांमतुदेव्याःप्रसादतः उत्थायविपिनादेत्यभुक्त्वाशेतेसरवंगृहे पादसंवाहनंतस्यकुरुतेललितातदा तंदृष्ट्वादुःखिताभूमौ
प्रणिपत्यपुनःपुनः गर्जिताकृच्छ्रात्पृष्टानिजपापंन्यवेदयत् स्कंदउवाच गुणराशिस्तदातस्यैमायाश्चित्तंददौबहु आत्मानंबहुकालेनपूतं
हृत्स्थेश्चकारह श्वापतेस्त्वचलान्लक्ष्मीसमालोक्यतपोधनः गोपतिस्तुयथापृच्छत्पत्नीतस्त्वंवर्तसेकथम् किमाचरसिकल्याणंयेनश्चीर
नपायिनी इतितस्यवचःश्रुत्वाश्चापर्तिर्विस्मितःपुनः अस्माभिस्तद्व्रतंदेव्यायत्कृतंगुरुमंदिरे सोपिदेव्याव्रतंचक्रेपुनर्भार्योपदेशितः लेभे
सपरमामृद्धिंपुत्रांश्चमुदितोभवत् उपानर्लितादेव्याःकुर्यादाराधनंततः एवमेतत्पुरावृत्तमाहात्म्यंकथितंमया कृतमन्यैश्चबहुभिस्ते
पिलब्धमनोरथाः स्कंदउवाच विधानमस्यवक्ष्येहंतच्छृणुत्वंतपोधनाः शुक्लपक्षेतुपंचम्यामिषेमासिचरेद्व्रतम् गर्जितंसंध्य
योस्त्याज्यंदिनवृद्धिक्षयोतथा निर्वर्त्यावश्यकंकर्मशुचीरागविवर्जितः चत्वारिंशत्तथाऽशौचंकल्पयित्वाविधानतः दंतकाष्ठा
न्युपादायतडागंवानदींव्रजेत् आयुर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते दंतधावनपूर्वाणि
मज्जनानिसमाचरेत् ततोयथाविधिस्नात्वाशुक्लवासागृहंव्रजेत् उपचारैःषोडशभिरेभिर्मंत्रैःसमाहितः कुर्यात्पूजांप्रयत्नेनदूर्वाभि
श्चविशेषतः शुचौदेशेमंडपिकांकृत्वाःतीवमनोहरां सौवर्णींप्रतिमांशक्त्याकल्पयेन्मंत्रपूर्विकाम् द्विजायवायनंदद्याद्विशत्यावट
कादिभिः ततःकथांसमाकर्ण्यवायनकान्नस्यसरव्यया स्वयमद्यात्तदेवान्नंवाग्यतःसहबांधवैः रात्रौजागरणंकुर्यान्नृत्यगीतादिमं
गलैः प्रभातेपूजयेद्देवींततःकुर्याद्विसर्जनम् सवाहनाशक्तियुतावरदापूजितामया मातर्मामनुगृह्याथगम्यतांनिजमंदिरं नाम
चांगुरवेदद्याद्दानानिचसमृद्धिशः व्रतमेवंचयःकुर्यात्पुत्रवान्धनवान्भवेत् विद्यावान्रोगनिर्मुक्तोसरवीगोधनमाप्नुयात् अवैधव्यं
वलभतेस्त्रीकन्यावरमुत्तमं विजयंपुष्टिमायुष्यंयच्चान्यदपिवांछितं इत्येतद्व्रतमारव्यातंसेतिहासंमहर्षयः शृण्वन्नपिनरोभ
क्त्यासरवमाप्नोतिनिश्चितम् निर्मुक्तःसरवीधीमान्व्रतराजप्रसादतः वित्तमारोग्यमायुष्यंप्राप्नोतिचप्रसादतः इतिश्रीस्कंदपु

राणेउपांगललिताकथासंपूर्णा अथोद्यापनम् आचार्यंवरयेत्पश्चाद्द्विजोविंशतिंतथा उपलिप्तेशुचौदेशेविलिखेन्मंडलंततः
ब्रह्मादींश्चततःस्थाप्यपूजयेद्विधिमंत्रतः अव्रणेकलशेशुद्धे ललितांस्थापयेत्तथा रात्रौजागरणंकृत्वाप्रभातेहोममाचरेत् इक्षु-
खंडतिलैःशुद्धैःपायसेनापिवाव्रती अष्टोत्तरशतंहुत्वाबलिदानंसमाचरेत् वायनंचततोदद्याद्वंशपात्रेनिधायच वटकान्विंशतिंसंख्या
न्निर्मलान्घृतपाचितान् आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारधेनुतः ऋत्विजश्चतथादद्यात्कुंभंवस्त्रसदक्षिणं विसृज्यचततःपीठमा-
चार्यायनिवेदयेत् भोजयेच्चततोविप्रान्पायसान्नेनभक्तितः विप्राज्ञांचततोगृह्यस्वयंभुंजीतबंधुभिः इतिश्रीस्कंदपुराणेउपांगल
लिताव्रतोद्यापनंसंपूर्णम् अथमाघशुक्लपंचम्यांवसंतप्रवृत्तिः सामध्यान्हव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तावव्याप्तौवापूर्वा
मुहूर्तमात्रसत्त्वेपिपराग्राह्या तत्रविष्णोःपूजाकार्या माघमासिसितेपक्षेपंचम्यांपूजयेद्धरिम् पूर्वविद्धाप्रकर्तव्यावसंतादौन
थैवच तैलाभ्यंगंततःकृत्वाभूषणानिचधारयेत् नित्यंनैमित्तिकंकृत्वागुलालेनार्चयेद्धरिम् गंधपुष्पैश्चधूपैश्चनैवेद्यैःपूजये-
त्सदा नारीनरोवाराजेंद्रसंतर्प्यपितृदेवताः स्रक्चंदनसमायुक्तान्ब्राह्मणान्भोजयेत्ततः इतिहेमाद्रौवसंतपंचमीविधिः
अथषष्ठीव्रतानि तत्रभाद्रशुक्लषष्ठ्यांललिताव्रतम् सामध्यान्हव्यापिनीग्राह्या तद्व्याप्तावव्याप्तौवापूर्वाजागरप्रधानत्वात्
कृष्णउवाच भद्रेभाद्रपदेमासिशुक्लषष्ठ्यांसुसंयुता नारीस्नात्वाप्रभातेतुशुक्लमाल्यांबराशुचिः सुवेषाभरणोपेता-
भूत्वासंगृह्यवालुकाम् आनीयवंशपात्रेतुपंचपिंडाकृतिशुभाम् ध्यात्वातुललितांदेवींतपोवननिवासिनीं पंकजंकरवी
रंचनेपालींमालतींतथा नीलोत्पलंकेतकंचसंगृह्यतगरंतथा एकैकाष्टशतंग्राह्यमक्षताविंशतिरेवच अक्षताःकलिकाग्रा
ह्यास्ताभिर्देवींसमर्चयेत् प्रार्थयेदग्रतोभूत्वादेवींनागगिरिशप्रियाम् गंगाद्वारेकुशावर्तेबिल्वकेनीलपर्वते स्नात्वाकनख
लेतीर्थेहरंलब्धवतींपतिं ललितेललितेदेविसौख्यसौभाग्यदायिनि अनंतंदेहिसौभाग्यंपुत्रपौत्रप्रवर्धनम् मंत्रेणानेनकु
सुमैश्चंपकैर्बकुलैःशुभैः एवमभ्यर्च्यविधिनानैवेद्यंपुरतोन्यसेत् अपूपैरपिकूष्मांडैर्नारिकेरैःसुदाडिमैः बीजपूरैःस

तुंडीरैःकारवेल्लैःसर्जिर्पटैः फलैस्तत्कालसंभूतैः कृत्वाशोभांतदग्रतः विरूढैर्धान्यसंभूतैर्दीपिकाभिःसमंततः सार्धैःसगु
णकैर्धूपैःसोहारीककरंजकैः घृतपक्वैःकर्णवेष्टैर्मोदकैरूपमोदकैः बहुप्रकारैर्नैवेद्यैर्यथाविभवसारतः एवमभ्यर्च्यविधि
वद्रात्रौजागरणोत्सवम् गीतवाद्ययुतैर्नृत्यैःप्रस्तार्ययेरनेकधा सखीभिःसहितासाध्वीतांरात्रिमशमनयेत् नचसंमीलयेन्ने
त्रेनारीयामचतुष्टयं दुर्भगादुःखितावंध्यानेत्रसंमीलनाद्भवेत् एवंजागरणंकृत्वासप्तम्यांसरितंप्रति स्नात्वावस्त्रंपरीधाय
धार्यसौभाग्यकुंकुमं गंधपुष्पादिधूपैश्चगीतवाद्यपुरःसरं तच्चदद्याद्द्विजेंद्रायनैवेद्यादिस्कुमद्रके ततोगृहंसमागत्यकृत्वावेश्मा
नर्चक्रमात् देवान्पितॄन्ब्राह्मणांश्चपूजयित्वासुवासिनीः कन्यकाश्चैवसंभोज्यादीनानाथांश्चभोजयेत् भक्ष्यभोज्यैर्बहुवि-
धैर्दत्वादानानिभूरिशः ललितामेस्तुसुप्रीताइत्युक्त्वातुविसर्जयेत् यःकश्चिदाचरेदेतद्व्रतंसौभाग्यदंपरं षष्ठ्यांतुललितासं
ज्ञंसर्वपापनिबर्हणम् नरोवायदिवानारीतस्यपुण्यफलंशृणु यत्तुलभ्यंव्रतैश्चान्यैर्दानैर्वानृपसत्तम तपोभिर्नियमैर्वापितदे
तेनहिलभ्यते इहचैवातुलासंपत्सौभाग्यमनुभूयच कृत्वामूर्ध्निपदंपार्थसपत्नीनांयशस्विनी मृताशिवपुरंप्राप्यदेवैरस्मरप
न्नगैः प्राप्नोतिदर्शनंदेव्यातयानुसहमोदते पुण्यशेषादिहागत्यपुण्यसौख्यैकभाजनं भर्त्रासहयुतानारीसीतेवप्रियवल्लभा
इदंयःशृणुयात्पार्थपठेद्वासाधुसंसदि सोपिपापविनिर्मुक्तःशक्रलोकेमहीयते षष्ठ्यांजलांतरगतांवरवंशपात्रेसंगृह्यपूजा
धितयासिकतांक्रमेण नक्तंचजागरमनुव्रतशेषषष्ठ्यालाकुर्यादसौत्रिभुवनेललितभवानि इतिहेमाद्रौललिताषष्ठीव्रतं इ
दंगुर्जरदेशेप्रसिद्धं अत्रैवभाद्रपदकृष्णाषष्ठ्यांकपिलाषष्ठीव्रतं तत्रयोगविशेषेणपूर्वस्यांवाकार्यम् तेचयोगाःपुराण
समुच्चयेदर्शिताः भाद्रमास्यसितपक्षेभानौचैवकरेस्थिते पातेकुजेचरोहिण्यांसाषष्ठीकपिलास्मृता संयोगेतुचतुर्णांचविनि-
र्दिष्टापरमेष्ठिना अथकथा हेमाद्रौस्कांदे विश्वांगउवाच रूपसंपदमारोग्यंसंततिंचातिपुष्कलाम् प्राप्नुवंतिनरायेननियतं
तद्वदस्वमे अगस्त्यउवा॰ साधुसाध्वित्ययाप्राज्ञयत्प्रष्टोहंशर्मचिव्रतं तत्सर्वंकथयिष्यामिततःश्रेयोभविष्यति शृणुपार्थप्रवक्ष्या

भिस्स्वर्गमोक्षप्रदं नृणां यच्च गुह्यं पुरा देवान्ब्रह्मरुद्रेंद्रदैवतैः असुराणां च सर्वेषां राक्षसानां तथैव च शंकरेण पुरा चैतत् षण्मुखा
य निवेदितं षण्मुखेन मम ख्यातं महापातकनाशनं ब्रह्मघ्नो ब्रह्महा गोघ्नः सुरापो गुरुतल्पगः अगारदाही गरदः सर्वपापरतोपि वा मु
च्यते सर्वपापेभ्यः स्वर्गलोकं च गच्छति यच्च पुण्यं पवित्रं च नृणामद्भुतमंगलं उपकाराय लोकानां तथा तव नृपोत्तम शृणु भूप म
हापुण्यं षष्ठीमाहात्म्यमुत्तमं भाद्रमासस्य सिते पक्षे षष्ठी भौमेन संयुता व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता आश्विन
स्य सिते पक्षे महापुण्यप्रवर्धिनी षष्टिसंवत्सरस्यांते सा पुनस्तेन संयुता चैत्रवैशाखयोर्मध्ये सिते पक्षे शुभोदये वैशाखे वापि
च राजेंद्र द्वारषष्ठ्यापरा स्मृता तस्यां चैव हुतं दत्तं यत्किंचित्प्रतिपादितं तस्य सर्वस्य पुण्यस्य संख्या वक्तुं न शक्यते यस्मिन्-
काले भवेदेतैर्गुणैः षष्ठी युता न दा पंचम्यामेकभक्तं च कुर्यात्तत्र विचक्षणः षष्ठ्यां प्रातः समुत्थाय कृत्वा दौ दंतधावनम् जल
पूर्णांजलिं कृत्वा इमं मंत्रमुदीरयेत् निराहारोद्य देवेश त्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहं भक्त्या शरणं भव भास्कर अर्घ्यं
दत्वेति संकल्पं कृत्वा यतात्मा शुचिस्मितः स्नानं कुर्यात्प्रयत्नेन नद्यां तीर्थोद्भवे ह्रदे तडागे दीर्घिकायां वा गृहे वा नियतात्मवान् दे
वदारु तथोशीरं कुंकुमं चामनःशिलम् पद्मकं पत्रकं यष्टिमधु गव्येन पेषयेत् सर्पिणालोड्य कल्केन स्नानं कुर्यात्समंत्रकं आप-
स्त्वमसि देवेश ज्योतिषां पतिरेव च पापं शमय देवेश मनोवाक्कायकर्मजं पंचगव्यकृतस्नानः पंचगव्येस्तु मार्जयेत् आनयेन्मृत्तिकां शुद्धां स्ना
नार्थं वै प्रयत्नतः मृत्तिके ब्रह्मपूतासि काश्यपेनाभिमंत्रिता पवित्रं कुरु मां नित्यं सर्वपापात्समुद्धर मंत्रेणानेन वरुणं पूजयेद्भक्तिमान्नरः पा
शाग्रहस्त वरुण सर्ववारीश्वर प्रभो अर्घ्यांहं प्रार्थयामि त्वां पूजनार्थं सुरेश्वर आदित्यो भास्करो भानू रविः सूर्यो दिवाकरः प्रभाकरो
मितो वीरो देवः सर्वेश्वरो हरिः गोमयेनोपलिप्तायां भूम्यां वै कुंकुमेन तु मंडलं सर्वतोभद्रमालिखेद्बुद्धिमान्नरः तत्र मध्ये लि
खेत् पद्ममष्टपत्रं सकर्णिकं पूर्वपत्रे न्यसेत्सूर्यमाग्नेये तपनं न्यसेत् सुवर्णरेतसं याम्ये नैर्ऋत्ये च न्यसेद्रविं आदित्यं वारुणप
त्रे वायव्ये च दिवाकरम् सौम्ये प्रभाकरं तत्र सूर्यमीशानपत्रके तीव्ररश्मिधरं देवं ब्रह्माणं चैव विन्यसेत् आधाररूपिणं देवं मध्ये

चैवारुणंन्यसेत् सहस्ररश्मिंसूर्यंचसूक्ष्मस्थूलगुणान्वितं सर्वगंसर्वरूपंचमध्येभास्करमेवच सप्ताश्वरथमारूढंपद्महस्तंदिवाक
रं अक्षसूत्रंधनुःपाणिंकुंडलैर्मुकुटेनच रत्नैर्नानाविधैर्युक्तंसौवर्णंतत्रकारयेत् शक्तितस्तुपलादूर्ध्वंतदर्धकर्षतोपिवा सौव-
र्णमरुणंकुर्याद्रज्जुंचैवतथाविधा सप्ताश्वैर्भूषितंकृत्वारथंतस्याग्रतःस्थितं अरुणंविनतापुत्रंगृहीताश्वमनूरुकं एवंरूपंर-
थंकृत्वापद्मस्योपरिविन्यसेत् तस्योपरिन्यसेद्देवंरक्तवस्त्रविभूषितं रक्तचंदनमाल्यादिमंडितंचातिशोभनं अग्रतःसारथिंकृ-
त्वापूजयेदरुणंशुचिः रक्तपुष्पैस्तुगंधैश्चतथान्यैरपिशक्तितः विनतातनयोदेवःकर्मसाक्षीतपोनुदः सप्ताश्वःसप्तरज्जुश्च-
अरुणोमेप्रसीदतु मंत्रेणानेनसंपूज्यसारथिंतदनंतरं देवस्यशंसनंकल्प्यप्रभूतादिकपंचकं प्रभूतंविमलंसारमाराध्यंपरमं
शुभं दीप्तादिशक्तिभिश्चैवततोभानुंप्रपूजयेत् दीप्तासूक्ष्मातथाभद्राविंबिनीविमलानघा अमोघावैद्युताचेतिनवमासर्वतो
मुखी अपवित्रःपवित्रोवासर्वावस्थांगतोपिवा यःस्मरेद्भास्करंदेवंसबाह्याभ्यंतरेशुचिः शिखायांभास्करंन्यस्यललाटेसूर्य
मेवच चक्षुर्मध्येन्यसेद्भानुंमुखेचतत्ररविंन्यसेत् कंठेन्यसेद्भानुमंतंपद्महस्तंद्विहस्तयोः तिमिरक्षयकृद्देवंस्तनयोरेवविन्यसे
त् जातवेदाभिधंनाभ्यांकट्यांभानुंतथान्यसेत् उग्ररूपंगुह्यदेशेतेजोरूपंद्विजंघयोः पादयोःसर्वरूपंतुसूक्ष्मस्थूलगुणान्वि
तम् एवंयथोक्तंविन्यस्यपात्रंगृह्यततोर्चयेत् करवीरार्ककुसुमैरक्तचंदनमिश्रितैः पुष्पैःसुगंधैर्धूपैश्चकुंकुमैरुपशोभितं मा
र्तंडंभानुमादित्यंभास्करंतपनंरविम् हंसंदिवाकरंचेतिपादयोर्मुकुटावधि पादौजंघेतथाजानुद्वयमूरूकटीशुभे नाभिंव
क्षस्थलंशीर्षमेतेष्वंगेषुपूजयेत् आनयेदर्घ्यपात्रंचसौवर्णंरौप्यताम्रजं अर्घ्यार्थंदैवतंपात्रमुदकेनप्रपूरयेत् पूजयेच्चाथश्रृं
गादिदेवतास्ताःसमाहितः दिग्देवतास्ततःपूज्यागंधपुष्पानुलेपनैः पात्रेतोयंसमादायसुपुष्पफलसंयुतं जानुभ्यामवनिं
गत्वासूर्यायार्घ्यंन्यवेदयेत् वेदगर्भनमस्तुभ्यंदेवगर्भनमोस्तुते अव्यक्तमूर्तयेतुभ्यमर्घ्यंगृण्हनमोस्तुते ब्रह्ममूर्तिधरायै
वचतुर्वक्त्रसनातन सृष्टिस्थितिविनाशायगृहाणार्घ्यंनमोस्तुते कालात्मासर्वभूतात्मावेदात्मासर्वतोमुखः जन्ममृत्युजरा

शोकसंसारभयनाशनः विष्णुरूपधरोदेवःपीनवस्त्रश्चतुर्भुजः प्रभवः सर्वलोकानामर्घ्यंगृण्हनमोस्तुते दारिद्र्यव्यसनध्वंसीश्रीमान्पा-
तुदिवाकरः स्वर्वर्णःस्फाटिकोभानुः स्वर्णरेतादिवामणिः हरिदश्वांशुमालीचअर्घ्यंगृण्हनमोस्तुते चतुर्भिर्मुनिभिःसम्यगष्टाभिःपरि
गीयते सामध्वनिस्तुतोयज्ञेअर्घ्यंगृण्हनमोस्तुते अर्घ्यंगंधंचपुष्पंचतथाधूपप्रदीपकं नैवेद्यंचयथाशक्त्याप्रार्थयेत्सूर्यदेवताम् अ
ग्निमीळेनमस्तुभ्यंनमस्तेजातवेदसे इषेत्वेवनमस्तुभ्यंअग्नेचेवनमोनमः आत्मरूपिन्नमस्तुभ्यंविश्वमूर्तेनमोनमः त्वंधातात्वं
चवैविष्णुस्त्वंब्रह्मात्वंहुताशनः मुक्तिकामोह्मिच्छामिप्रार्थयामिसुरेश्वर विश्वतश्चक्षुरव्यातोविश्वतश्चरणेनमः विश्वात्मासर्व
तोदेवःप्रार्थयामिसुरेश्वर इमंमंत्रंसमुच्चार्यनमस्कुर्वीतभास्करं संवर्चसेतिपाणिभ्यांतोयेनविमृजेन्मुखं हंसःशुचिषदित्य
र्चोसूर्यस्यैवावलोकनं उदुत्यंचित्रमित्येतत्सूक्तंदेवाग्रतोजपेत् पद्मकेसरकोणेषुफलकंचैवकारयेत् फलैःपुष्पैरक्षतैश्चभक्ष्यै
र्नानाविधैरपि शय्यांतत्रचदेवस्यशुभेदेशेप्रकल्पयेत् षट्धान्यंषड्रसंचैवरोप्यंचैवमहाप्रभुं पुरुषंखड्गहस्तंचकारयेच्चैवबुद्धि
मान् वस्त्रयुग्मेनसंछाद्यलवणोपरिविन्यसेत् अनेनैवतुमंत्रेणस्नानमर्घ्यार्चनंततः नमस्तेक्रोधयुक्तायखड्गहस्तजिघांसवे जि
घांसंतंचतं दृष्ट्वादुद्रुवुःसर्वदेवताः त्वयाव्याप्तमेरूपंचंडभास्करसुप्रभ अनस्त्वांपूजयिष्यामिअर्घ्यंगृण्हनमोस्तुते क्षपयि
त्वानुतांरात्रिंगीतवादित्रनिःस्वनैः ततस्त्वभ्युदितेसूर्येहोमंकुर्यात्स्वशक्तितः पूजयेत्तत्रशक्त्यात्वदेवांश्चविधिवद्गुरुः होमोर्क-
स्यसमिद्भिश्चघृतमिश्रैस्तिलैस्तथा सिद्धान्नंचचरुंद्रव्यंघृतंचजुहुयाद्विजः आकृष्णेनेतिमंत्रेणशतमष्टोत्तरंक्रमात् होमो
व्याहृतिभिर्वाथस्विष्टकृत्तदनंतरं कपिलांपूजयेद्देवीसवत्सांपापनाशिनीं वस्त्रयुक्तांसघंटांचस्वर्णशृंगविभूषितां ताम्र
पृष्ठींरौप्यखुरांकांस्यदोहनकान्वितां मंत्रेणानेनतांदद्याद्ब्राह्मणायेतिशक्तितः कपिलेसर्वभूतानांपूजनीयासिरोहिणी स
र्वतीर्थमयीयस्मादतःशांतिंप्रयच्छमे आचार्यस्यततोभक्त्यासर्वपापोविनिक्षिपेत् गोभूहिरण्यवासांसिव्रीहयोलवणंति
लाः एतत्सर्वंप्रदत्वातुकपिलांप्रार्थयेत्ततः कपिलेपुण्यकर्मासिनिधापेपुण्यकर्मणि मामुद्धारयपापात्तुददतोत्यक्षयंकुरु दि

विवादित्रशब्दैश्चसेव्यतेकपिलासदा तथाविद्याधराःसिद्धाभूतनागगणाग्रहाः कपिलांरोमसंख्यातास्तत्रदेवाःप्रतिष्ठिताः पुष्पवृ-
ष्टिंप्रमुंचंतिनित्यमाकाशसंस्थिताः ब्रह्मणोत्पादितांदेवीमग्निकुंडात्सुरप्रभा नमस्तेकपिलेपुण्येसर्वदेवनमस्कृते जयनित्यं
महासत्वेसर्वतीर्थादिमंगले दातारंस्वजनोपेतंब्रह्मलोकंनयाशुभा ततःप्रदक्षिणांकृत्वानत्वाब्राह्मणपुंगवान् आशीर्वादान्वदेयु-
स्तेपुत्रपौत्रधनागमान् आरोग्यंरूपसौभाग्यंसर्वदुःखविवर्जितः अंतेगोलोकमासाद्यचिरायुःसुखभाग्भवेत् यदास्वर्गात्प्र
च्युतःराजाभवतिधार्मिकः सप्तद्वीपवतींभुंक्तेसदाराज्यमकंटकं अहोव्रतमिदंपुण्यंसर्वदुःखविनाशनं अतःपरंप्रवक्ष्यामिदा
नस्यफलमुत्तमं कपिलाख्यायदाषष्ठीजायतेभुविमानद व्रतंसर्वव्रतश्रेष्ठमिदमग्र्यमहाफलम् उद्धरिष्यंतिदातारंनूनमक्षय्यम-
व्ययं एवंदेवगणाःसर्वेभूतसंघामहर्षयः आकाशस्थाःप्रवक्ष्यंतिपुण्येस्मिन्दिवसागमे पात्रभूतायकृष्णयेश्रोत्रियायकुटुंबिने
एवंयःकपिलांदद्याद्विधिदृष्टेनकर्मणा सयातिपरमंस्थानंयावन्नच्यवतेपुनः उद्यापनविधिंब्रूहिभक्तायममतत्वतः कृष्णउवाच
पूर्वस्मिन्दिवसेकुर्यादेकभक्तंसमाहितः शुचौदेशेसमालिप्यसर्वतोभद्रमंडलं स्थापयेदव्रणंकुंभंचंदनोदकपूरितं संवेष्ट्यव
स्त्रयुग्मेनकंठदेशेसुशोभनं पंचरत्नसमायुक्तंदूर्वापुष्पाक्षतान्वितं रक्तवस्त्रयुगच्छन्नंताम्रपात्रेणसंयुतं रथंरौप्यपलस्यै
वचतुरश्वैर्विचित्रितः सौवर्णींपलसंयुक्तांमूर्तिसूर्यस्यकारयेत् कुंभस्योपरिसंस्थाप्यगंधपुष्पैस्तथार्चयेत् आदित्यंपूजये-
द्देवंनामभिस्त्वेवयथोदितैः आदित्यभास्करभानुरविसूर्यदिवाकरं प्रभाकरनमस्तुभ्यंसंसारान्मांसमुद्धर भुक्तिमुक्तिप्रदोय
स्मात्तस्माच्छांतिंप्रयच्छमे नमोनमस्तेवरदऋक्सामयजुषांपते नमोस्तुविश्वरूपायविश्वधात्रेनमोस्तुते एवंसंपूज्यविधिवद्देव
देवंदिवाकरं पूजयेत्कपिलांदेवींवस्त्रमाल्यानुलेपनैः दानमंत्रः दिव्यमूर्तिर्जगच्चक्षुर्द्वादशात्मादिवाकरः कपिलासहितोदेवो
ममयुक्तिंप्रयच्छतु यस्मात्त्वंकपिलेपुण्येसर्वलोकस्यपावनी प्रदत्तासहसूर्येणममयुक्तिप्रदाभव इतिहेमाद्रौस्कांदेक
पिलाषष्ठीव्रतोद्यापनंसंपूर्णं अथकार्तिकेस्कंदषष्ठीव्रतं हेमाद्रौभविष्ये श्रीकृष्णउवाच षष्ठ्यांपलाशनेराजन्विशे

ष्ठ्यां कार्तिके नृप राज्यच्युतो विशेषेण त्वं राज्यं लभसे चिरात् षष्ठी तिथिर्महाराज सर्वदा सर्वकामदा उपोष्या सा प्रयत्नेन सर्वकालं
जयार्थिना कार्तिकेयस्य दयिता एषा षष्ठी महातिथिः देवसेनाधिपत्यं हि प्राप स मस्यां महात्मना अस्यां हि श्रीसमायुक्तो यस्मात् स्कं
दोऽभवत्पुरा तस्मात् षष्ठ्यां न भुंजीत प्राप्नुयाद्भार्गवीं सदा दत्त्वार्घ्यं कार्तिकेयाय स्थित्वा वै दक्षिणामुखः दध्याक्षतोदकैः पुष्पैर्मंत्रेणानें
न सुव्रत सप्तर्षिदारज स्कंद सेनाधिप महाबल रुद्रोमाग्निज षड्वक्त्र गंगागर्भ नमोस्तु ते प्रीयतां देवसेनानीः संपादयतु त्वद्धृतं दत्त्वा-
विप्राय चामान्नं यच्चान्यदपि वर्तते पश्चाद्भुंक्ते त्वसौ रात्र्यां भूमिं कृत्वा तु भाजनं एवं षष्ठीव्रतस्थस्य प्रोक्तं स्कंदेन यत्फलम् तन्निबोध
महाराज प्रोच्यमानं मयाखिलं षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति शुक्लायामथ कृष्णायां ब्रह्मचारी समाहितः तस्य सिद्धिं
धृतिं पुष्टिं राज्यमायुर्निरामयं इहलोके परत्रापि दद्यात्स्कंदो न संशयः अशक्तश्चोपवासे वै तेन नक्तं समाचरेत् तैलं षष्ठ्यां न भुं
जीत न दिवा कुरुनंदन यस्तु षष्ठ्यां नरो नक्तं कुर्याद्व्रतसत्तम सर्वपापैर्विनिर्मुक्तो गांगेयस्य प्रसादतः स्वर्गे च नियतं वासो लभते ना
त्र संशयः इह चागत्य कालांते यथोक्तफलभाग्भवेत् देवानामपि वंद्योसौ राजराजो भविष्यति इति॰ स्कंदषष्ठीव्रतं भविष्योक्तं
संपूर्णं अथ मार्गशीर्षशुक्लभाद्रपदे वा चंपाषष्ठीव्रतं हेमाद्रौ स्कांदे स्कंद उवाच प्राप्तराज्यं च राजानं धर्मपुत्रं युधिष्ठिरम्
कदाचिदाययौ द्रष्टुं दुर्वासा मुनिसत्तमः तं पप्रच्छ महातेजा धर्मसूनुः कृतांजलिः राज्यलाभः कथं जातो मम विप्र तपोनिधे तं व्रतं श्रो
तुमिच्छामि कर्तुं च मुनिसत्तम दुर्वासा उवाच शृणु राजन्महाभाग व्रतानामुत्तमं व्रतं अस्तीह यच्चीर्णमात्रं सर्वकामांस्तु पूरयेत्
सर्वपापक्षयं कुर्यादखंडितव्रतान्यपि षष्ठी भाद्रपदे शुक्ला वैधृत्या च समन्विता विशाखा भौमयोगेन सा चंपा इति विश्रुता देवासुरम
नुष्याणां दुर्लभा षष्टिहायनैः कृते त्रेतायां पंचाशद्धायनी द्वापरे पुनः चत्वारिंशत्कलौ त्रिंशद्धायनी दुर्लभा ततः आदौ कृतयुगे पूर्वं
याचीर्णा विश्वकर्मणा तत्फलाद्विश्वकर्तृत्वं प्राजापत्यमवाप्नुवान् प्रद्युम्नाकार्तवीर्येण प्रभुविनारायणेन च ईश्वरेण मया सार्धं इत
रैतरलिप्सया यश्चैतद्विधिवत्कुर्यात्सोत्यंतफलमश्नुते युधिष्ठिर उवाच॰ तद्विधिं श्रोतुमिच्छामि विस्तराद्वद तो मुने के मंत्राः

केचिन्नियमाः सापिकिंलक्षणाभवेत् दुर्वासाउवाच द्विदेवस्यक्षोभोमेनवेधृतेनसमन्विता भाद्रेमासिसितेषष्ठीसाचंपेतिनिगद्यते
पंचम्यांनियमंकुर्यादेकभुक्तंसमाचरेत् चंपाषष्ठीव्रतंकुर्याद्यथोक्तंवचनाद्गुरोः ततःप्रभातेविमलेदंतधावनपूर्वकं कृत्वास्नानं
शुचिर्भूत्वासंकल्प्यचयथाविधि निराहारोद्यदेवेशत्वद्भक्तस्त्वत्परायणः पूजयिष्याम्यहंभक्तयाशरणंभवभास्कर संकल्पमंत्रः
ततःस्नानंप्रकुर्वीतनद्यादौविमलेजले मृदमालभ्यमंत्रेश्चतिलैःशुक्लैश्चमंत्रवित् सावित्रंपरमंत्वंहिपरंधामजलेमम त्वत्तेजसापरि
भ्रष्टंपापंयातुसहस्रधा प्रार्थना आद्यस्त्वमसिदेवेशज्योतिषांपतिरेवच पापंनाशयमेदेववाङ्मनःकर्मभिःकृतं स्नानमंत्रः
ततःसंतर्पयेद्देवानृषीन्पितृगणानपि ततःश्चैत्यगृहंमौनीपाखंडालापवर्जितः स्थंडिलंकारयेच्छुभ्रंचतुरस्रंसुशोभनं स्थापये-
द्व्रणंकुंभंपंचरत्नसमन्वितम् कुंकुमेनलिखेत्पद्मंद्वादशारंसकर्णिकं तस्योपरिन्यसेत्सूर्यंसौवर्णंसरथारुणं शक्त्यावावित्त
सारेणवित्तशाठ्यविवर्जितः तमर्चयेद्गंधपुष्पैर्विधिमंत्रपुरःसरं पंचामृतेनस्नपनंकुर्यादर्कस्यसंयतः ततस्तुगंधतोयेनपरांपू-
जांसमारभेत् गंधैर्नानाविधैर्दिव्यैःकर्पूरागरुकुंकुमैः फलैर्नानाविधैर्दिव्यैःकुंकुमैश्चस्रुगंधिभिः मंडपंकारयेत्तत्रपुष्पमाला
विभूषितं यथाशोभंप्रकुर्वीतअधश्चोपरिसर्वतः ततःसंपूजयेद्देवंभास्करंकमलोपरि मध्येदलेषुपूर्वादिष्वादित्यादीन्प्रपू
जयेत् आदित्याय॰ भास्कराय॰ भानवेन॰ अर्यम्णेन॰ विश्वचक्राय॰ अंशुमते॰ सहस्रांशवेन॰ खगाय॰ शूराद्याय॰ सूर्या
य॰ द्वादशात्मने॰ प्रभाकराय॰ १२ जन्मांतरसहस्रेषुदुष्कृतंयन्मयाकृतं तत्सर्वंनाशमायातुत्वत्प्रसादाद्दिवाकर ततोस्य
पूजा ततःसंपूजयेद्देवमच्युतंतद्वयेस्थितं अष्टाक्षरेणमंत्रेणगंधपुष्पादिभिःक्रमात् मंत्रः ॐघृणिःसूर्यआदित्यः —
इतिमंत्रः कालात्मासर्वभूतात्मावेदात्माविश्वतोमुखः जन्ममृत्युजरारोगसंसारभयनाशनः उदयेअर्घ्यमंत्रः ततःसंपूजये
च्छुक्लांसवत्सांगांपयस्विनीं सवस्त्रघंटाभरणांकांस्यपात्रेचदोहिनीं ब्राह्मणोत्पादितेदेविसर्वपापविनाशिनि संसारार्णवम-
ग्नंमांगोमातस्त्रातुमर्हसि सुरूपाबहुरूपाश्चमातरोलोकमातरः गावोमामुपसर्पंतुसरितःसागरंयथा यालक्ष्मीःसर्वदेवा

नांयाचदेवेषुसंस्थिता धेनुरूपेणसादेवीममपापंव्यपोहतु तिलहोमंततःकुर्यात्सावित्र्याष्टोत्तरंशतं ततस्तांकल्पयेद्धेनुंतद्दोमेप्रीय
तामिति आचार्यायततोदद्यादादित्यंसरथारुणं सकुंभरक्तवस्त्रैश्चसर्वोपस्करसंयुतं मनोभिलषितावाप्तिंकरोतुममभास्करः दान
मंत्रः गृण्हामिभास्करंरथेभवंतंविश्वतोमुखं मनोभिलषितावाप्तिमुभयोःकर्तुमर्हसि प्रतिग्रहणमंत्रः सर्वतीर्थमयींधेनुंसर्वय
ज्ञमयींशुभां सर्वदानमयींदेवींब्राह्मणायददाम्यहं गोदानम् गृण्हामिसुरभींदेवींसर्वयज्ञमयींशुभां उभौपुनीहिवरदेउभ-
योस्तारकाभव ततस्तुभोजयेद्विप्रान्द्वादशैववस्वशक्तितः दद्याच्चदक्षिणांतेभ्यःप्रणिपत्यविसर्जयेत् अवेकल्प्यभवेत्तस्यशांतिमा
युर्द्विजोत्तम अभिनंद्यतमाशीर्भिस्तेसर्वेअभिनंदिताः ततस्तुस्वयमश्नीयाद्द्विजानामवशिष्टकं सहपुत्रैःकलत्रैश्चअन्यैर्बहुजनै
र्नः एवंयःकुरुतेराजन्सोत्यंतंपुण्यमश्नुते प्रभूणांचविधिःप्रोक्तःसर्वेषांदृष्टिगोचरः सर्वैश्चतत्कृतंकार्यंस्वशक्त्याद्दुःखभीरु-
भिः प्रभुःप्रथमकल्पस्ययोनुकल्पेनवर्तते विफलंतत्तुतस्यस्याद्ग्रुशास्त्रनुकल्पितः अथनिर्धनस्यविधिः पंचम्यांनियमंकु
र्यादाचार्यवचनाद्व्रती षष्ठ्यांस्नानंप्रकुर्वीतसंतर्प्यपितृदेवताः अभ्यर्च्यस्वगृहेमौनीसूर्यंमनसिचिंतयेत् स्थापयेदव्रणंकुंभंमृन्म
यंचतथोपरि तस्योपरिन्यसेत्सूर्यंफलकेनार्धनिर्मितं सौवर्णंभक्तिसंयुक्तंरथंसारथिनायुतं तमर्चयेज्जगन्नाथंगृहीत्वाज्ञांगु
रोःस्वयं षडक्षरेणमंत्रेणगंधपुष्पाक्षतादिभिः ॐनमःसूर्यायेतिमंत्रः संपूज्यविधिवद्देवंफलपुष्पादिकंचयत् सूर्यंनिवे
दयेत्सर्वंसूर्योमेप्रीयतामिति ततःप्रभातेविमलेगत्वागुरुगृहंप्रति सर्वोपकरणैःसूर्यमाचार्यायनिवेदयेत् धान्यंपुष्पंफलंव-
स्त्ररत्नधेन्वादिकंचयत् गवांकोटिसहस्रंतुकुरुक्षेत्रेर्कपर्वणि चंपादानस्यराजेंद्रकलांनार्हतिषोडशीं सर्वतीर्थप्रदानानितत-
थान्यान्यपिषोडश चंपयातुलितानीहचंपकाख्यातिरिच्यते इतिश्रीस्कंदपुराणेचंपाषष्ठीव्रतंसंपूर्णं अथमार्गशीर्षशुक्ल
चंपाषष्ठी मार्गेमासेशुक्लपक्षेषष्ठीवैधृतिसंयुता रविवारेगसंयुक्तासाचंपाइतिकीर्तिता इतिमल्लारिमाहात्म्ये मार्गशी
र्षेमलेपक्षेषष्ठ्यांवारेशुभमालिनः शततारागतेचंद्रेलिंगस्याद्दृष्टिगोचरमिति इयंयोगविशेषेणपूर्वायोगाभावेपराग्राह्या इति

चंपाषष्ठी अथसप्तमीव्रतानि तत्रवैशाखशुक्लसप्तम्यांगंगोत्पत्तिः तत्रपूजाचोक्ताप्रथिवीचंद्रोदयेब्राह्मे वैशाखशुक्लसप्तम्यां
जन्हुनाजान्हवीस्वयं क्रोधात्पीतातत्पुनस्त्यक्ताकर्णरंध्रात्तुदक्षिणात् तांतत्रपूजयेद्देवींगंगांगगनमेखलां इतिहरिवंशेपुण्य
कव्रतांते अब्दमातःस्नानमभिधाय गंगायाव्रतकथामहायशस्करीउक्ता मन्यूषेचसदास्नानंकार्यंमंदाकिनीजले अन्यत्रवा
जलेस्नानंशुक्लपक्षेहरिप्रिये एतद्गंगाव्रतंनामसर्वकामप्रदंशुभं सप्तसप्तचसप्ताथकुलानिहरिवल्लभे स्त्रीनारयतिधर्मज्ञे
गंगाव्रतकचारिणी देयंकुंभसहस्रंतुगंगायाव्रतकेशुभे तारणंसिद्धिदंचैवतद्व्रतंसर्वकामकं वैशाखेशुक्लपक्षेतुसप्तम्यांपूज-
येद्धरिं गंगायांविधिवत्स्नात्वाभोजयेद्ब्राह्मणान्दश पूजयेत्सूक्ष्मवस्त्रैश्चपुष्पस्रक्चंदनैःशुभैः पूजकःसर्वपापेभ्योमुच्यते
नात्रसंशयः इयंचशिष्टाचारात्मध्यान्हव्यापिनीग्राह्या दिनद्वयेतद्व्याप्तौएकदेशव्याप्तौवापूर्वायुग्मवाक्यात् इतिगंगास-
प्तमीव्रतं अथशुक्लादिश्रावणकृष्णसप्तम्यांशीतलाव्रतं तच्चमध्यान्हव्यापिन्यांकार्यं तच्चमाधवीयेहारीतः पूजाव्रतेषुसर्वे
षुमध्यान्हव्यापिनीतिथिरिति अथव्रतविधिः मासपक्षाद्युल्लिख्य ममइहजन्मनिजन्मांतरेचअवैधव्यप्राप्तये अखंडित-
भर्तृसंयोगपुत्रपौत्रादिधनधान्यप्राप्तयेशीतलाव्रतंकरिष्ये तयाचयथामिलितोपचारैःशीतलांपूजयिष्ये तत्रअष्टदलपीठे-
अव्रणंकलशंसंस्थाप्य तदुपरिसौवर्णींशीतलांपूजयेत् अथध्यानंस्कांदे वंदेहंशीतलांदेवींरासभस्थांदिगंबरां मार्जनीक
लशोपेतांशूर्पालंकृतमस्तकां कुंभेसंस्थापयेद्देवीं पूजयेन्नाममंत्रतः शीतलेदहमेपापंपुत्रसौख्यफलप्रदे धनधान्यप्रदेदेविपू
जांगृण्हनमोस्तुते इतिध्यानं आवाहनं आसनं पाद्यं विधायशीतलाकारिअवैधव्यफलप्रदे श्रावणस्यसितेपक्षेअर्घ्यं-
गृण्हनमोस्तुते अर्घ्यं नाममंत्रेणपूजनीया आचमनं स्नानं वस्त्रं उपवस्त्रं विलेपनं अलंकारं पुष्पाणि धूपं दीपं शी
तलेदंक्षकान्नंदध्योदनयुतंशुभं नैवेद्यंगृन्ह्यतांदेविघृतमिश्रंचसुंदरि संपूज्यसप्तगौरीश्चभोजयेच्चप्रयत्नतः नैवेद्यम्
करोद्वर्तनं फलं तांबूलं दक्षिणां नीराजनं पुष्पांजलिं प्रदक्षिणां नमस्कारं व्रतसंपूर्णफलावाप्तयेब्राह्मणायवायनं तत्रमं

भः दध्यन्नं दक्षिणायुक्तं वाणकं फलसंयुतं शीतलाप्रीतये तुभ्यं ब्राह्मणाय ददाम्यहं इति पूजनं अथ कथा हेमाद्रौ भविष्ये कृ
ष्ण उवाच प्रसिद्धं श्रूयतां रम्यं नगरं हस्तिनापुरं इंद्रद्युम्नश्च राजाभून्नृपतिर्लोकपालकः धर्मशीलाभिधा चासीत्तस्य भार्या य-
शस्विनी क्रियाकांडरता साध्वी दानशीला प्रियंवदा बभूव प्रथमः पुत्रो महाधर्मेति नामतः नंदते पितृवात्सल्यात्कालेन्यस्मिन्नृत
तोभवत् द्वितीया च तथा पुत्री तस्य जाता गुणोत्तमा पुत्री लक्षणसंपन्ना शुभकारीति नामतः वर्द्धते सा पितुर्गेहे सर्वांगगुणसुंदरी
नाम्ना रूपेण सा बाला सर्वासां च गुणाधिका सा ... द्रिकगुणोपेता पद्महस्ता प्रियंवदा कौंडिण्यनगरे राजा सुमित्रो नाम नामतः त
त्पुत्रो गुणवान्नाम शुभकार्याः पतिर्बभौ ... रे. ...हेनमानेन लक्ष्मीवान् रूपवान् गुणैः गुणवान् शुभकारिण्याः पाणिं जग्राह
धर्मवित् गृहीत्वा पारिबर्हाणि गतो सो नगरं प्रति पुनः समागतो राजन् गुणवान् हस्तिनापुरं आजगाम परिजनैस्तत्पुत्र्यानय
नोत्सुकः प्रणाम्य च पितुः पादौ त्वरितं चारुहासिनी आज्ञां देहि महाराज श्वशुरस्य गृहं प्रति त्वदुक्तं च पितुर्ज्ञात्वा मातुस्तु शु
भकारिणी रथमारुह्य हे स्वामिन्यास्यामि स्वपुरं प्रति ततः पितानुतस्याश्च दंपत्योः शुभहेतवे पुत्रि त्वं सुस्थिरा भूत्वा-
वारैकं च क्षमस्व मे शीतलासप्तमी नाम व्रतं चर शुभप्रदं कन्योवाच तात तत्र परिज्ञानं यदुक्तं पद्मयोनिना पतिव्रतासमो-
धर्मो नास्तीह भुवनत्रये ततस्तां कारयामास शीतलाव्रतमुत्तमं सौभाग्यारोग्यजनकमवैधव्यकरं परं पुत्रीं च प्रेषयामास
ब्राह्मणो वेदपारगः व्रतोपकरणं सर्वं गृह्य पूजां सरोवरे मार्गे पद्मानि संगृह्य व्रतोपकरणं शुभा शीतलापूजनेहेतोर्गता साध्वी-
सरोवरं तत्राहं एतया मे ... तडागं विधिसाधनं बभ्राम सा वने शून्ये स्मरंती शीतलाव्रतं अतिश्रांता ययौ मोहात्स्मरंती शीतलां
बहु ददर्श सा ततो नारीं वृद्धां रूपगुणान्वितां विप्रस्तु सर्पिणा मार्गे दृष्टिहीनो मृतस्तदा शुभकारीं ततो वाक्यं वृद्धा ऊचे यश
स्विनी भविष्यति चिरंजीवी भर्ता ते राजकन्यके आगच्छ पूजनार्थाय दर्शयामि सरोवरं तया सह गता साध्वी तडागं विधि-
पूर्वकं पूजयामास सा वर्णी तोषयामास शीतलां पूजयित्वा च तां देवीं स्वपथं गंतुमुद्यता शीतलाया वरं गृह्य सह सख्या

चमस्थिता ततोसाददृशेरण्ये ब्राह्मणं दष्टसर्पकं भार्या तु तस्य निकटे ब्राह्मणस्य महात्मनः ब्राह्मगोनिद्रयास्रुसः पूर्वकर्मप्रभा-
वतः दष्टोभुजंगरूपेण कालेनैव हतस्तदा विषेर्हतं पतिं दृष्ट्वा रुरोद ब्राह्मणी वहु राजपुत्री लब्धवरा शीतलायाः पतिव्रता वत्सं
गृह्य शालायां रुरोद करुणं बहु तयोस्तरुणदंपत्योर्योग्य सौभाग्य दर्शनात् रुदंतीकरुणं बाला शोचयामास तं वरं यावन्न पर-
लोकस्थं जनं संगत्य तत्कृते तावदनेन सहसा अनुगच्छामि वन्हिना तिष्ठ तिष्ठ क्षणं स्रुभ्रु गमिष्यामि हि पावकं अर्जयिष्ये दि
वं दिव्यमक्षय्यं भवनांतरे राजपुत्री वचः श्रुत्वा ब्राह्मण्याः करुणान्विता सस्मार शीतलां देवीं महा वैधव्य भंजनीं आगच्छच्छी
तलातत्र वरं दातुं शुभस्मिता शीतलोवाच वरं वरय वत्से त्वं किं दुःखं चारुहासिनि शीतलाव्रतजं पुण्यं देहि त्वं ब्राह्मणीशुभं
तेन पुण्यप्रभावेन भर्ता स्यान्निर्विषो भवेत् इति दिव्या वचः श्रुत्वा अददद्ब्राह्मणीं ततः बुबोधाशु ततो विप्रश्चिरं सुप्तो यथा पुनः
शीतलाया व्रते बुद्धिर्ब्राह्मण्याश्चाभवत्तदा अकरोत्सापि तत्पूजां भक्तिभावपुरःसरं तत्रांतरे राजपुत्र्या पतिरागाद्वनांति-
के सोपि दष्टोथ सर्पेण गच्छंस्त्यग्रे ददर्श ह विललाप ततः साध्वी सख्या सह वनांतरे शीतलोवाच वत्से मया पूर्वमुक्तं स्मर-
त हरवर्णिनि शीतलाव्रतचारिण्या वैधव्यं नैव जायते स्वयमुत्थाय कल्याणि पतिं स्वं संगृहे यथा बोधयाशु पतिं भीरु व्रतं वैध-
व्यनाशनं इत्युक्ता बोधयामास भर्तारं सा पतिव्रता भर्तापि मुदितो दृष्ट्वा स्वां स्वां प्रियां प्रीतिकर्मणि दृष्ट्वा तु महदाश्चर्यं तद्ग्रामस्थायि
नो जनाः सर्वे ते विस्मयं जग्मुर्ब्राह्मणीपतिरक्षणात् ब्राह्मणी हर्षिता हृष्टां प्रणिपत्य पतिव्रता देहि सा तन्नमस्ते स्तु अवैधव्यं वि
योगता अन्यापि शीतलायास्तु व्रतं नारी करिष्यति अवैधव्यमदारिद्र्यमवियोगः स्वभर्तृभिः तथेत्युक्त्वा तदंधे देवी शीतला कामरू
पिणी शीतलाया वरं लब्ध्वा जगामात्मीय वेश्मनि पद्मानि वासप्रभृति विश्व वंद्य समर्हणा साधित विश्व मंगला प्रसादमासाद्य
च शीतलाया नित्योत्सवा पार्वति वद्बभूव इति भविष्ये शीतलाव्रतं संपूर्णम् अथ भाद्र शुक्लसप्तम्यां मुक्ताभरणव्रतं हे- ७७
माद्रौ भविष्ये सा मध्यान्हव्यापिनी ग्राह्या तद्व्यासाव व्यासोपरा ममइह जन्मनि अखंडितसंततिपुत्रपौत्र वृद्ध्यर्थं मुक्ता-

भरणव्रतेउमामहेश्वरपूजनंकरिष्ये अथपूजा देवदेवमहेशानपरमात्मन्जगद्गुरो प्रतिपादितयासोमपूज़याप्जयाम्यहं
आवाहनं अनेकरत्नरवचितंसौवर्णमणिसंयुतं मुक्तार्चितंमहादेवगृहाणासनमुत्तमं आसनं पाद्यंगृहाणदेवेशसर्वविद्या
परायण ध्यानगम्यसतांशंभोसर्वेश्वरनमोस्तुते पाद्यं इदमर्घ्यमनर्घ्यंत्वममराधीशशंकर किंकरीभूतयासोममयादत्तं
गृहाणभोः अर्घ्यं गंगादिसर्वतीर्थेभ्यःसमानीतंसुशीतलं जलमाचमनीयार्थंगृहाणउमयासह आचमनीयं मध्वा
ज्यशर्करामिश्रमधुनापरिकल्पितः शंकरप्रीतयेतुभ्यंमधुपर्कोनिवेदितः मधुपर्कं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचा
मृतेनस्नपनंप्रीयतांपरमेश्वरः पंचामृतस्नानं गंगाचयमुनाचैवगोदावरीसरस्वती नर्मदासिंधुकावेरीस्नानार्थंप्रतिगृह्य
तां शुद्धोदकस्नानं स्नानादूर्ध्वंमहादेवप्रीत्यापापप्रणाशन वस्त्रयुग्मंमयादेवगृह्यतांकांतयासह वस्त्रं उपवीतंसोत्तरी
यंनानाभूषणभूषितं गृहाणसोमविमलंमयादत्तमिदंशुभं उपवीतं मलयाचलसंभूतंघनसारसुगंधियुक् चंदनंपंच
वदनगृहाणवनितासह चंदनं जातीचंपकपुन्नागवकुलैःपारिजातकैः शतपत्रैश्चकल्हारैरर्चयेहंसुमापतिं पुष्पाणि
त्रैलोक्यपावनंतेद्यपरमात्मन्जगद्गुरो चंदनागरुकर्पूरधूपंदास्यामिशंकर धूपं शुभवर्तिंयुतंसर्पिर्लोडितंवन्हिनायुतं
दीपमेकमनेकार्कप्रतिमंकलयस्विमं दीपं पयसापूपकुसरंदुग्धान्नंसगुडोदनं दिव्यान्नंषड्रसोपेतंसुधारससमन्वितम्
समर्पयामिदेवेशकिंकरीशंकरायते नैवेद्यं पुनराचमनंशुद्धंकुरुसोमांबुनामुना सुखशुद्धिकरंदेवकृपयालंगृहाणभोः
आचमनीयं कस्तूरिकासमायुक्तंमलयाचलसंभवम् गृहाणचंदनंसोमकरोद्वर्तनकंशुभं करोद्वर्तनं नारिकेरफलंज
बूफलंनारिंगमुत्तमं कूष्मांडंपुरतोभक्त्याकल्पितंप्रतिगृह्यतां फलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नी
राजनं पुष्पांजलिं प्रदक्षिणा नमस्कारं महादेवमहाराजप्रीत्यापापप्रणाशन अस्माकंकुर्वतांपूजाभवतासाधुयोजि
ता ज्ञाननोज्ञानतोवापियन्नतोविहिताचया संपूर्णासातुविश्वेशविमलाखनप्रसादतः इतिप्रार्थना देवदेवजगन्नाथस

र्वसौभाग्यदायक गृण्हीयांदोरकंरूपंपुत्रपौत्रप्रवर्धनं दोरकग्रहणं ममसामोपगीनंतांधारयामिजगद्गुरो सूत्रग्रंथिस्थितं
नित्यंधारयामिजगद्गुरो सूत्रग्रंथिस्थितंनित्यंधारयामिस्थिरोभव इतिदोरकबंधनं हरपापानिसर्वाणितुष्टिंकुरुदयानि
धे प्रसन्नःसन्नुमाकांतदीर्घायुःपुत्रदोभव इतिजीर्णदोरकोत्तारणं अथवायनं मंडकान्सफलान्युक्तानसघृतान्दक्षि
णायुतान् एकादशशतंकृत्वाब्राह्मणायकुटुंबिने वेदशास्त्रप्रवीणायदद्यात्सोमस्यतुष्टये शंकरःप्रतिगृण्हातिशंकरोवैद
दातिच शंकरस्तारकोभाभ्यांशंकरायनमोनमः इतिवायनम् एवंयापूजनंकुर्यात्सोमस्यस्करवदस्यच सर्वान्कामान
वाप्नोतिपुत्रपौत्रैश्चमोदते प्रार्थना इतिपूजा अथकथा श्रीकृष्णउवाच मुनींद्रोलोमशोनाममथुरायांगतःपुरा
सोर्चितोवसुदेवेनदेवक्याचयुधिष्ठिर उपविष्टःकथाःपुण्याःकथयित्वामनोरमाः ततःकथयितुंभूयःकथामेतांप्र
चक्रमे कंसेनतेहताःपुत्राजाताजाताःपुनःपुनः मृतवत्सादेवकित्वंपुत्रदुःखेनदुःखिता यथाचंद्रमुखीदीनाबभूवनहु
षप्रिया पश्चाच्चीर्णव्रताचैवबभूवनत्रवत्सका त्वमपिदेवकितथाभविष्यसिनसंशयः लोमशउवाच अयोध्यायांपु
राराजानहुषोनामविश्रुतः तस्यस्त्रीरूपसंपन्नादेवीचंद्रमुखीप्रिया तथातस्यैवनगरेविष्णुगुप्तोभवद्द्विजः आसीद्गु
णवतीतस्यपत्नीभद्रमुखीतथा तयोरासीदतिप्रीतिःस्पर्धयापरस्परम् अथतेद्वेअपिसख्योस्नानार्थंशरयूंजले प्रा
प्तेप्राप्तस्तत्रैववह्व्योविनगरांगनाः ताःस्नात्वामंडलंचक्रुस्तन्मध्येव्यक्तरूपिणं लेखयित्वाशिवंशांतमुमयासहशंकरम् गं
धपुष्पाक्षतैर्भक्त्यापूजयित्वायथाविधि प्रणम्यगंतुकामास्ताःपप्रच्छतुरुभेस्त्रियो ताऊचुः अस्माभिःशंकरोदेवःपार्व
त्यासहपूजितः बध्वास्त्रत्रमयंतंतुंशिवस्यात्मानिवेदितः धारणीयमिदंतावद्यावत्प्राणविधारणं तासांतद्वचनंश्रुत्वास
रव्यौतेचापिदेवकि कृत्वाचसमयंतत्रबध्वादोर्भ्यांस्वदोरकं ततस्ताश्चगृहंजग्मुःस्वसखीभिःसमाहृताः कालेनमहता
तस्यास्तद्व्रतंविस्मृतंशुभम् चंद्रमुख्याःप्रमत्तायाविस्मृतःसतुदोरकः भद्रमुख्यास्तथाभद्रेविस्मृतंसर्वमेवतत् मृता

केश्चिद्दहोरात्रैः सांबभूवश्लवंगमी भद्राख्याकुक्कुटीजाताव्रनभंगाच्छुभानने संभूयभूयः समयंप्राकुर्व्रतंचक्रतुःसदा कालेनपं
चत्वंग्रामेसरखीभावात्संहैवते अदेवमातृकेदेशेजातागोकुलसंज्ञके भद्राख्याब्राह्मणीजातायासीच्चंद्रमुखीपरा नाम्नाभ
द्रमुखीयासाभूषणानामसाभवत् अग्निमीळस्यसादत्तापचानस्यपुरोधसः अतीववल्लभाचासीद्भूषणाभूषणप्रिया भू
षिताभूषणवरैरूपेणालंकृतास्वयं तस्यांबभूवुरष्टौनपुत्राःसर्वगुणान्विताः मातृवद्रूपसंपन्नाःपितृवद्धर्मपालिनः सरखे
तेतेननदृक्चजातेजातिस्मरेकिल पुनर्निरंतराप्रीतिस्तयोरासीद्यथापुरा कालेबहुतिथेजातेजातासंत्यक्तयौवना मध्येवयसि
राज्ञीसापुत्रमेकमजीजनत् ईश्वरीरोगिणंमूकंप्रज्ञाहीनंचविस्वरं तादृशोपिमहाभागेमृतोसौनववार्षिकः ततस्तांभूषणाद्र
ष्टुमीश्वरीपुत्रदुःखितां सरखीभावादतिस्नेहात्पुत्रैःस्वैःपरिवारिता अमुक्ताभरणाभद्रास्वरूपेणैवभूषिता साहिभद्रा
द्विजस्याभूद्भार्याभूषणनामिका पुराहितस्याःकालेनकुक्कुटीबहुपुत्रिणी तांदृष्ट्वातादृशीभव्यांप्रजज्वालेश्वरीरुषा ततोगृहंप्रे
षयित्वाब्राह्मणींतीव्रमत्सरा चिंतयामाससार्शीघ्रंतस्याःपुत्रवधंप्रति निश्चित्यचेतसाक्रूराघातयामासतत्सुतान् हताहतास्च
तेपुत्राःपुनर्जीवंत्यनामयाः तदद्भुततरंदृष्ट्वासरखीमाहूयभूषणां उपविश्यासनेश्रेष्ठेबहुमानपुरःसरं अपृच्छदीश्वरीविप्रारा
ज्ञीसान्नृपवल्लभा ब्रूहितथ्यंमहाभागेकिंत्वयासुकृतंकृतं दानंव्रतंतपोवापिशक्त्यापणसुपोषणं येनतेनिहताःपुत्राःपुनर्जीवंत्य
नामयाः तथाहिबहुपुत्रावर्जीवद्वत्साशुभानना अमुक्ताभरणानित्यंभर्तुश्चैतस्यवस्थिता अतीवशोभसेभद्रेविद्युद्वयथां
बरे भूषणोवाच शृणुदेविप्रवक्ष्यामिजन्मांतरविचेष्टितं किंतद्धिविस्मृतंसर्वमयोध्यायांकृतंहियत् आवाभ्यांव्रतवैकल्यं
प्रमत्ताभ्यांवरानने येनत्वंप्लवगीजाताजानाहंकुक्कुटीतथा तथापिव्रतवैकल्यंत्वयाचापल्यतःकृतं मयातुसर्वभावेनचेतसाध्या
यशांकरं तिर्यग्योन्यनुसारेणमनोवृत्त्याप्यनुष्ठितम् एतद्धिकारणंभद्रेनान्यत्किंचित्करोम्यहं लोमशउवाच इत्याकर्ण्यव
चःस्मृत्वापूर्वजन्मविचेष्टितं ईश्वरीचतयासार्द्धंपुनःसम्यक्चकारह व्रतस्यास्यप्रभावेनपुत्रपौत्रादिसंभवं भुक्त्वातुसौख्य

मतुलंमृताशिवपुरंगता तस्मात्त्वमपिकल्याणिव्रतमेतत्समाचर आरब्धेस्मिन्व्रतेदिव्येजीवत्पुत्राभविष्यसि देवकुवाच ब्रह्मन्नारव्याहिमेसम्यक्व्रतमेतत्सुखप्रदम् संतानवृद्धिकरणंशिवलोकस्थितिप्रदं लोमशउवाच भद्रेभाद्रपदेमासिसप्तम्यांसलिलाशये स्नात्वाशिवंमंडलकेलेखयित्वासहांबिकाम् तत्रसंपूज्यसमयंकुर्याद्वध्वाकरेगुणं यावज्जीवमयात्मातुशिवस्यविनिवेदितः इत्येवंसमयंकृत्वाततःप्रभृतिदोरकं सौवर्णंराजतंवापिसूत्रंवाधारयेत्करे मंडकान्वेष्टितान्दद्यान्मासेपक्षेथवाब्दके स्वयंतांश्चेवभुंजीतव्रतभंगभयाच्छुभे प्रतिमासंतुसप्तम्यांशुक्लपक्षेविशेषतः कुर्यादेवंव्रतंभद्रेवर्षांतेपितुदेवकि कारितामुद्रिकांशर्वांहेमीरूप्यास्वशक्तितः ताम्रपात्रोपरिस्थाप्यब्राह्मणायनिवेदयेत् आचार्यायविशेषेणसुवर्णस्यांगुलीयकं पुष्पकुसुमसंयुक्तंतांबूलांजनसत्वकैः सहार्थैस्तृतीया एवंतत्कारयित्वातुव्रतंसंततिवर्धनं सर्वपापविनिर्मुक्तंभुक्त्वासौख्यमनामयं संतानंवर्धयित्वात्वंशिवलोकेमहीयते एतत्तेसर्वमाख्यातमाख्यानंव्रतमुत्तमं कुरुदेवकियत्नेनजीवत्पुत्राभविष्यसि कृष्णउवाच इत्युक्त्वातुमुनिश्रेष्ठस्तत्रैवांतरधीयत चकारसर्वंयत्नेनयदुक्तंतेनधीमता व्रतस्यास्यप्रभावेणदेवकीमामजीजनत् तस्मात्पार्थनरैःकार्यंस्त्रीभिःकार्यंविशेषतः व्रतंपापप्रशमनंसुखसंततिवर्धनं एवंयःशृणुयाद्भक्त्यायश्चेतत्प्रतिपादयेत् व्रतमाख्यानसहितंसोपिपापैःप्रमुच्यते आख्यानकंव्रतमिदंसुखसौख्यकामा यास्त्रीकरिष्यतिशिवंहृदयेनिधाय दुःखंविहायबहुशोगतकल्मषौघासास्त्रीव्रताद्भवतिशोभनजीववत्सा इतिहेमाद्रौभविष्येमुक्ताभरणसप्तमीव्रतंसंपूर्णं अथआश्विनशुक्लसप्तम्यांसरस्वतीपूजासाउदयव्यापिनीग्राह्या युगाद्यावर्षवृद्धिश्चसप्तमीपार्वतीप्रिया रवेरुदयमीक्षंतेलनाफतिथियुग्मके मतापमार्तंडेभविष्योक्तेः वर्षवृद्धिर्जन्मतिथिः तत्रैवमूलनक्षत्रेपुस्तकस्थापनमुक्तं रुद्रयामले मूलऋक्षेसुधाधीशाप्रपूजनीयासरस्वती पूजयेत्प्रत्यहंयावत्श्रवणांतेविसर्जयेत् नाध्यापयेन्नचलिखेन्नाधीयीतकदाचन पुस्तकेस्थापितेदेव्याविद्याकामोद्विजोत्तमः अहंभद्रान्चभद्राहंनावयो

रंतरंक्कचित् सर्वसिद्धिंप्रदास्यामि भद्रायांह्यर्चितास्म्यहं आश्विनस्यसितेपक्षेमेधानामसरस्वती मूलेनावाहयेद्देवीं श्रवणेनविस
र्जयेत् इतिसरस्वतीपूजनं अथरथसप्तमीव्रतं अस्यांस्नानविधिः तच्च अरुणोदयव्यापिन्यांकार्यंतदुक्तंमदनरत्नेस्मृ
तिसंग्रहे सूर्यग्रहणतुल्याहिशुक्लामाघस्यसप्तमी अरुणोदयवेलायांस्नानंतत्रमहाफलं माघेमासिसितेपक्षेसप्तमीको
टिपुण्यदा कुर्यात्स्नानार्घ्यदानाभ्यामायुरारोग्यसंपदः दिनद्वये अरुणोदयव्यापित्वेपूर्वैव सौवर्णेराजतेताम्रेभक्त्यालाबुनि
मयेतथा तैलेनवर्तिदानव्यामहापात्रेतुरंजिता समाहितमनास्नात्वादीपंशिरसिधारयेत् भास्करंहृदयेध्यात्वाइमंमंत्रमुदी
रयेत् नमस्तेरुद्ररूपायरसानांपतयेनमः अरुणायनमस्तेस्तु हरिदश्वनमोस्तुते जलोपरिदीपांस्त्यक्त्वासंतर्प्यपितृदेवताः
लोलार्करथसप्तम्यांस्नात्वागंगादिसंगमे सप्तजन्मकृतैःपापैर्मुक्तोभवतितत्क्षणात् इतिगर्गः षष्ठीसप्तमियोगेवारस्यारुद्रा
क्षमालिनः योगोयंपद्मकोनामसहस्रार्कग्रहैःसमः एतच्चस्नानंतिथ्यादिस्मरणानंतरंशिष्टाचारात् सप्तार्कपर्णानिसप्तबद
रीपत्राणिशिरसिनिधाय तत्रमंत्रः यद्यज्जन्मकृतंपापंमयासप्तसुजन्मसु तन्मेरोगंचशोकंचमाकरीहंतुसप्तमी स्ना-
नानंतरमर्घ्यंचदानव्यंमंत्रपूर्वकं सप्तसप्तिवहप्रीतसप्तलोकप्रदीपन सप्तम्यासहितोदेवगृहाणार्घ्यंदिवाकर अर्घ्यं जननी
सर्वभूतानांसप्तमीसप्तसप्तिके सप्तव्याहृतिकेदेविनमस्तेसूर्यमंडले प्रार्थना इतिस्नानविधिः अनेनैवतुमंत्रेणपूजयेच्च
दिवाकरं कृत्वाषोडशधाराजन्सप्ताश्वरथमंडले अथकथा युधिष्ठिरउवाच कथंसाक्रियतेकृष्णमनुष्यैरथसप्तमी
चक्रवर्तित्वफलदायाहिरव्याताभवयाभव कृष्णउवाच आसीत्कांबोजविषयेयशोवर्मानराधिपः वृद्धेवयसितस्यासी
त्सर्वव्याधियुतःसुतः तत्कर्मपापंसोपृच्छद्द्विजान्तंद्विजपुंगवं सप्राहराजन्वैश्योयंकृपणःपूर्वजन्मनि ददर्शरथसप्तम्याः
क्रियमाणंव्रतंनृप व्रतदर्शनमाहात्म्यादुत्पन्नोजठरेतव अदातात्वभवेयस्मात्तस्मात्सव्याधितोभवत् ततःसराजापप्रच्छ-
चिकित्सात्स्यविधीयतां यस्यसंदर्शनात्प्राप्तोलोभीस्थानमनुत्तमं ब्राह्मणउवाच तदेवक्रियतांराजन्रथसप्तमिसंज्ञितं व्र

नंपापहरंयेनचक्रवर्तित्वमाप्यते राजोवाच ब्रूहिविप्रव्रतंह्येतत्सविधानंसमंत्रकं रोगिणांचदरिद्राणांसर्वसंपत्प्रदायकम्
द्विजउवाच शुक्लपक्षेतुमाघस्यषष्ठ्यामामंत्रयेद्गृही स्नानंशुक्लतिलैःकार्यंनद्यादौविमलेजले वापीकूपतडागेषुविधि
वद्वर्णधर्मतः देवादीन्पूजयित्वातुनत्वासूर्यालयंगतः सूर्यंपूज्यनमस्कृत्यपुष्पधूपादिभिःशुभैः आगत्यभुवनंपश्चात्
पंचयज्ञांश्चनिर्वपेत् संभोज्यातिथिभृत्यांश्चबालकानाश्रितानृस्वयं विद्यमानेदिनेभोयात्वाग्यतस्तैलवर्जितं रात्रौविप्रा
न्समाहूयसर्वज्ञान्वेदपारगान् संपूज्यनियमंकुर्यात्सूर्यमाधायचेतसि सप्तम्यांतुनिराहारोभुक्त्वाभोगविवर्जितः भो
क्ष्येश्वम्यांजगन्नाथनिर्विघ्नंतन्ममेकुरु इत्युच्चार्यनृपश्रेष्ठतोयंतोयेषुनिक्षिपेत् ततोविसृज्यतंविप्रस्वपेद्भूमौजितेंद्रियः
ततःप्रातःसमुत्थायकृत्वाशौचंशुचिर्नरः कारयित्वारथंदिव्यंकिंकिणीजालमालिनं सर्वोपस्करसंयुक्तंरत्नैःसर्वांगचित्रि
तं कांचनंराजतंवाथहयसारथिसंयुतं ततोमध्यान्हसमयेकृतस्नानादिकोव्रती अतिर्यग्वीक्षमाणस्तुपाखंडालापवर्जि
तः सौरसूक्तंजपेत्प्राज्ञआगच्छेत्स्वमालयं निवृत्तनित्यकार्यस्तुकृत्वाब्राह्मणवाचनं वस्त्रमंडपिकामध्येस्थापयेत्तंरथो
त्तमं कुंकुमेनसुगंधेनचर्चयित्वासमंततः मालाभिःपुष्पधूपैश्चसमंतात्परिवेष्टयेत् धूपेनागरुमिश्रेणधूपयित्वाततोप
रि रथस्थंपूजयेद्भानुंसर्वसंपूर्णलक्षणं वित्तानुसारंहेमंचवित्तशाठ्यविवर्जितः शाठ्याद्व्रजतिवैकल्यंवैकल्यादिफलंभवे
त् ततोदेवंसमभ्यर्च्यसरथंसहसारथिं पुष्पैर्धूपैस्तथागंधैर्वस्त्रालंकारभूषणैः फलैर्नानाविधैर्भक्ष्यैर्नैवेद्यैर्घृतपाचितैः
पूजयेद्भास्करंभक्त्यामंत्रैरेभिस्त्रिभिःक्रमात् भानोदिवाकरादित्यमार्तंडजगतांपते अपांनिधेजगद्रक्षभूतभावनभास्क
र प्रणतार्तिहरानित्यविश्वचिंतामणेविभो विष्णोहंसादिमूर्तेशआदिमध्यांतभास्कर भक्तिहीनंक्रियाहीनंमंत्रहीनंजग
त्पते प्रसादात्तवसंपूर्णमर्चनंयदिहास्तुमे एवंसंपूज्यदेवेशंप्रार्थयेत्स्वमनोगतं ददातिप्रार्थितंभानुर्भक्त्यासंतोषितोनरैः
वित्तहीनोपिविधिनासर्वमेतत्प्रकल्पयेत् रथंससारथिंसाश्वंवर्णकैर्भिन्नलेखितं सौवर्णंचतथाभानुंयथाशक्त्याविनिर्मितं

प्रागुक्तेनविधानेनपूजयित्वारुधिस्तरं जागरंकारयेद्रात्रौगीतवादित्रनिस्वनैः प्रेक्षणीयैर्विचित्रैश्च पुण्याख्यानकथादिभिः रथ
यात्रांप्रपश्येतभानोरायतनंश्रिया अनिमीलितनेत्रस्तुनयेत्तांरजनींबुधः प्रभातेविमलेस्नात्वाकृतकृत्यस्ततोद्विजान् तर्पयेद्वि
विधैरत्नैर्दानैर्वासोविभूषणैः अश्वमेधेनतुल्यंतदिदंब्रह्मविदोविदुः अतोदेयानिदानानियथाशक्त्याविचक्षणैः रथस्तुगुरवेदे
योयथोपस्करसंयुतः सरक्तवस्त्रयुगलोरक्तधेनुसमन्वितः एवंचीर्णव्रतोराजन्किंनाप्नोतिजगत्त्रये तस्मात्सर्वप्रयत्नेनकुरुत्वंरथ-
सप्तमीं येनारोग्योभवेन्पुत्रस्त्वदीयोनृपसत्तम व्रतस्यास्यप्रभावेनप्रसादाद्भास्करस्यच भविष्यतिमहातेजामहाबलपराक्रमः
भोगान्सविपुलान्राजन्भुक्त्वाराज्यमकंटकं दत्वासोरथसप्तम्यांजायतेमानवोत्तमः लभतेपुत्रपौत्रांश्चसूर्यलोकंसपश्यति तत्र-
स्थित्वाकल्पमेकंचचक्रवर्तीभविष्यति कृष्णउवाच इतिसर्वंसमाख्यायतपोयुक्तोद्विजोत्तमः यथागतंजगामासौनृपःसर्वंचकारह
यथादिष्टंद्विजेंद्रेणतत्तत्सर्वंनभूपहः एवंसचक्रवर्तित्वंप्राप्तवान्नृपनंदनः श्रूयतेयस्तुमांधातापुराणेषुपरंतपः यइदंश‍ृणुयाद्भ
क्त्याश्रावयेच्चयथाविधि तस्यैवतुष्यतेभानुर्यच्छत्यैवाभिसंपदः एवंविधंरथवरंरथवाजियुक्तंहैमंचहेमशतदीधितिनात्तमे
तं दद्याच्चमाघसितसप्तमिवासरेयोसस्सर्वचक्रगतिरेवमहीभुनक्ति इतिरथस० भा अथ व्रतभञ्जनसप्तमी० व्रतं युधिष्ठिरउ
कथंस्त्रियःसुरूपाःस्युःसुभगाःसुप्रजास्तथा पुण्यस्यमहतस्त्वात्रसर्वमेतत्फलंयतः अल्पायासेनसुमहद्येनपुण्यमवाप्य
ते कथयस्वप्रसादेनयेनश्रेयोभविष्यति श्रीकृष्णउवाच श्रूयतांभारतश्रेष्ठरहस्यंमुनिभाषितं यन्मयाकस्यचिन्नोक्तमचलास
प्तमीव्रतं वेश्यानंदुमतीनामरूपौदार्यगुणान्विता आसीत्कुरुकुलश्रेष्ठसगरस्यविलासिनी सावसिष्ठाश्रमंपुण्यंजगामगजगा
मिनी वसिष्ठमृषिमासीनंप्रणम्याननकंधरा कृतांजलिपुटाभूत्वाप्राहेदंजगतोहितं मयानदत्तंनहुतंनोपवासकृतंव्रतं भक्त्या-
संपूजितःशंभुःस्वामिन्शार्ङ्गधरोनच संप्रतंतप्यमानायाव्रतंकिंचिद्वदस्वमे येनदुःखात्तुपापौघाद्दुस्तरामिभवार्णवात् एत
तस्याःसुबहुशःश्रुत्वातिकरुणंवचः कारुण्यात्कथयामासवसिष्ठोमुनिपुंगवः माघस्यसितसप्तम्यांसर्वकामफलप्रदं रूपसौ

भाग्यजननं स्नानं कुरु वरानने कृत्वा षष्ठ्यामेकभक्तं सप्तम्यां निश्चलं जलं राध्यं ते चालयेद्यास्त्वं दत्त्वा शिरसि दीपकं माघस्यासितसप्त-
म्यामचलं नातिनेत्वयत् जलामलानां सर्वेषां स्नानं प्रक्षालनं ततः वसिष्ठवचनं श्रुत्वा तस्मिन्नहनि भारत चकारेंदुमती स्नानं दा
नं सम्यग्यथाविधि स्नानस्यास्य प्रभावेन भुक्त्वा भोगान्यथेप्सितान् इंद्रलोके सरोमध्ये नायकत्वमवाप सा अचलासप्तमीस्ना
नं कथितं ते विशांपते सर्वपापप्रशमनं सर्वसौभाग्यवर्धनं युधिष्ठिर उवाच सप्तमीस्नानमाहात्म्यं श्रुतं तेनोरविशेषतः सांप्रतं श्रो
तुमिच्छामि विधिमंत्रसमन्वितं श्रीकृष्ण उ॰ एकभक्तेन संतिष्ठेत् षष्ठ्यां संपूज्य भास्करं सप्तम्यां तु व्रती प्रातः कृत्वा गंभीरं जला
शयं सरित्सरित्तडागं वा देवखातमथापि वा कुर्याद्वगाहं संस्पृष्टं दुष्टमत्र्यैर्दूषितं व्यालांबुपक्षिभिश्चैव जलगैर्मत्स्यकच्छपैः
नकेन चाल्यते यावत्तावत्स्नानं समाचरेत् सौवर्णे राजते पात्रे भक्त्या लाबुमये ऽथवा तैलस्य वर्तिं दीप्तव्या महारजनरंजिता महा
रजतं कुसुंभं समाहितमना भूत्वा दत्त्वा शिरसि दीपकं भास्करं हृदये ध्यात्वा इमं मंत्रमुदीरयेत् नमस्ते रुद्ररूपाय रसानां पत
ये नमः वरुणाय नमस्तेस्तु हरिवासन नमोस्तु ते जलोपरि हरेद्दीपं स्नात्वा संतर्प्य देवताः चंदनेन लिखेत्पद्ममष्टपत्रं सकर्णिकं
मध्ये शिवं सपत्नीकं प्रणवेन च संयुतम् शाक्रे दले रविः पूज्य आग्नेय्यां भानुरेवानले तथा याम्ये विवस्वान्नैर्ऋत्ये भास्करं पूजयेत्ततः प
श्चिमे सविता पूज्यः पूज्योर्कश्चानिले दले सौम्ये सहस्रकिरणः शैवे सर्वात्मको नृप पूज्याः प्रणवपूर्वास्तु नमस्कारांतयोजि
ताः पुष्पैः कुंगंधधूपैश्च पृथक्त्वेन युधिष्ठिर विसृज्य वस्त्रसंवीतं स्वस्थानं गम्यतामिति विसर्जितं सहस्रांशोः समागम्य स्व-
मालयं ताम्रपात्रे यथाशक्त्या मृन्मये वाथ भक्तिमान् स्थापयेत्तिलपिष्टं च सघृतं सगुडं तथा कांचनं तालकं कृत्वा अशक्तास्तिल
पिष्टजं संस्थाप्य रक्तवस्त्रेण पुष्पैर्धूपैरथार्चयेत् ततस्तं चालयेद्विप्रे दद्यान्मंत्रेण तालकं आदित्यस्य प्रसादेन प्रातःस्नानफले
न च दुष्टदौर्भाग्यदुःखघ्नं मयादत्तं तु तालकं तालकं तालकपत्रं पूजयित्वा पदेष्टारं विप्रानन्यांश्च पूजयेत् ततो दिनं समग्रं च स
नरो ध्यानतत्परः भास्करस्य कथाः शृण्वन्नन्यांश्चापि संहिताः पाखंडादिभिरालापदर्शनस्पर्शनादिकं वर्जयेत्तत्क्षपयेत्सा

ज्ञस्तनोर्बंधुजनैःसह एतत्तेकथितंपार्थरूपसौभाग्यकारकं अचलासप्तमीस्नानंसर्वकामफलप्रदम् इतिषष्ठतिसप्तमंग्रंथः स्प
र्शोतिप्रसंगात्कलिकलुषविनाशंसप्तमीस्नानमेतत् मतिमपिचजनानांयोददातिप्रयत्नात्स्वरसदनगतोसौसेव्यतेचाप्सरोभिः
इतिअचलासप्तमीव्रतकथासमाप्ता अस्यामेवपुत्रसप्तमीव्रतं मदनरत्ने आदित्यपुराणे आदित्यउवाच माघमासेतुशु-
क्लायांसप्तम्यांसमुपोषितः यःपूजयेतमांभक्त्या तस्याहंपुत्रतांव्रजे एवंचोभयसप्तम्यांमासिमासिस्करोत्तम यस्तुमांपूजये-
द्भक्त्यास्कमेकमेकमादरात् स्कमेकःसंवत्सरः मयच्छामिस्कृतंतस्य आत्मनोह्यंगसंभवं वित्तंयशस्तथापुत्रमारोग्यंपरमंसदा
माघमासेतुयोविप्रःशुक्लपक्षेजितेंद्रियः पाखंडान्पतितानंत्यान्नजल्पेद्दिजितेंद्रियः उपोष्यविधिवत्षष्ठ्यांश्वेतमाल्यविलेपनैः
पूजयित्वातुमांभक्त्यानिशिभूमौस्वपेद्बुधः प्रातरुत्थायसप्तम्यांकृत्वास्नानादिकाःक्रियाः पूजयित्वातुमांब्रह्मन्वीरहोमंसमाच
रेत् वीरहोमंनामअग्निहोत्रंहोमः प्रीणयित्वाहरिंभक्त्याहविषापद्मलोचनं हरिःआदित्यः दध्योदनेनपयसापायसेनद्विजांस्त-
था तस्यैवकृष्णपक्षस्यषष्ठ्यांसम्यगुपोषितः तस्यैवेतिमाघमासस्य रक्तोत्पलैःस्कगंधाद्यैरक्तपुष्पैश्चपूजयेत् एवंयःपूजयेद्भ-
क्त्यानरोमांविधिवत्सदा उभयोरपिदेवेंद्रस्कपुत्रंलभतेवरं इतिपुत्रस०व्र०संपूर्णं अथाष्टमीव्रतानिलिख्यंते चैत्रशुक्लाष्टम्यां
भवान्युत्पत्तिः तत्रयुग्मवाक्यात्पराग्राह्या अथभवानीयात्रोक्ताकाशीखंडे भवानींयस्तुपश्येतशुक्लाष्टम्यांमधौनरः नजातु
शोकंलभतेसदानंदमयोभवेत् अशोककलिकाश्चाष्टौयेपिबंतिपुनर्वसौ चैत्रेमासिसिताष्टम्यांनतेशोकमवाप्नुयुः त्वामशोकह
राभीष्टमधुमाससमुद्भवं पिबामिशोकसंतप्तोमामशोकंसदाकुरु पुनर्वसुबुधोपेताचैत्रेमासिसिताष्टमी प्रातस्तुविधिवत्स्न
त्वावाजपेयफलंलभेत् चैत्रेमासिचसंध्यायांमस्कसेचजनार्दने बुधाष्टमीनकर्तव्याहंतिपुण्यंपुराकृतं तत्रबुधवारयुक्ता-
यांशुक्लाष्टम्यांबुधाष्टमीव्रतं शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता दिनद्वयेतद्व्याप्ता
वव्याप्तौवापूर्वा मुहूर्तमात्रसत्वेपिपरा अत्रव्रतविधिः मासपक्षाद्युल्लिख्य ममइहजन्मनिजन्मांतरेचाबाल्याद्यारभ्यकर्म

णामनसावाचाजाननाजाननावापरस्वाद्यपन्द्दतिदोषपरिहारार्थं पुत्रपौत्रादिसकलमनोरथसिद्धिप्राप्त्यर्थं श्रीपरमेश्वरप्रीत्यर्थं बु
धाष्टमीव्रतमहंकरिष्ये बुधंषोडशोपचारैः कलशोपरिपूजयेत् चतुर्बाहुंग्रहपतिंस्कप्रसन्नमुखंबुधं ध्यायेद्दंशंखचक्रासिपाश
हस्तमिलाप्रियं ध्यानं पीतमाल्यांबरधरकर्णिकारसमद्युते गृहाणपूजांभगवन्समागत्यग्रहेश्वर आवाहनं उद्बुध्यस्वामि
तिऋचंपठेत् मध्येबुधंआवाहयामि अधिदेवतांविष्णुमिदंविष्णुरितिमंत्रेणप्रत्यधिदेवतांनारायणंसहस्रशीर्षेतिसूक्तेनावाह्य
इलापतेनमस्तेस्तुनिशेशप्रियसूनवे हेमसिंहासनंदेवगृहाणप्रीतयेमम आसनं शीतलोदकमानीतंस्कपुष्पसरिदुद्भवं पाद्यंगृ
हाणदेवेशममाद्यपरितुष्टये पाद्यं तारासुतनमस्तेस्तुसततंभगवत्प्रिय गृहाणार्घ्यंग्रहपतेनानाफलसमन्वितम् अर्घ्यं सुगं
धद्रव्यसंयुक्तैः शुद्धैः स्वादुसरिज्जलैः आचम्यतांनिशानाथनंदनप्रीतयेमम आचमनं पयोदधिघृतेनैवमधुशर्करसंयुतैः
पंचामृतैस्तथादेवस्नानंतत्त्वंकुरुप्रभो पंचामृतं वासितंगंधकर्पूरैर्निर्मलंजलमुत्तमं स्नानायतेमयाभक्त्यादीयतेव्रतसिद्धये
अतोदेवादिकैःषड्भिः स्नापनीयस्ततोबुधः पौरुषेणचसूक्तेनउद्बुध्यस्वेत्यृचैकया स्नानं पीतवस्त्रद्वयंदेवराजवंशकरप्रभो उर्व
शीनाथजनकगृहाणप्रीतयेसदा वस्त्रं यज्ञोपवीतकंसूत्रंत्रिगुणंत्रिदशप्रिय ममपापविनाशार्थंगृहाणप्रीतयेबुध उपवीतं हरिचं
दनकस्तूरीकर्पूरादिसमन्वितं गंधंभगवतेतुभ्यमिलानाथनमोस्तुते गंधं अक्षतांश्च॰ अक्षताः माल्यादीनिस्क॰पुष्पाणि अथां
गपूजा बुधायनमः पादौपूजयामि सोमपुत्राय॰ जानुनीपू॰ तारकाय॰ कटींपू॰ राजपुत्राय॰ उदरंपू॰ इलाप्रियाय॰ हृदयंपू॰ कु
माराय॰ वक्षस्थलंपू॰ पुरूरवःपित्रे॰ बाहूपू॰ सोमसुताय॰ स्कंधौपू॰ पीतवर्णाय॰ मुखंपू॰ ज्ञानाय॰ नेत्रेपू॰ बुधाय॰ मूर्धानंपू॰
सोमसूनवेन॰ सर्वांगंपू॰ वनस्पतिरसो॰ धूपं॰ आज्यंचेति दीपं नैवेद्यंगृ॰ नैवेद्यं पूगीफलमितितांबूलं इदंफलमिति फलं हि
रण्यगर्भेतिदक्षिणां नीराजनदीपं उद्बुध्यस्वामितिपुष्पांजलिं उर्वश्याश्चपतिर्यस्तुयः पुरूरवसःपिता ग्रहमध्येस्वरूपोयोबुधो
नःसंप्रसीदतु विशेषार्घ्यं यानिकानिचेतिप्रदक्षिणां नमस्कारं आवाहनंनजानामि॰ मायंना संतुष्टोवायनाद्स्मादिलानाथो

ग्रहेश्वरः सतांबूलाष्टलड्डुकेवायनंप्रतिगृह्यतां वायनं इतिपूजनं अथकथा श्रीकृष्णउवाच बुधाष्टमीव्रतंपुण्यंवक्ष्यामिशृणु
पांडव येनचीर्णेननरकेनरःपश्यतिनक्कचित् युधिष्ठिरउवा॰ बुधाष्टमीव्रतंकितत्कस्मात्पापाच्चमुंचति तत्सर्वंवदनिश्चित्य
ममदेवदयानिधे श्रीकृष्णउवाच पुराकृतयुगस्यादौइलोराजाबभूवह बहुभृत्यसमन्वितमित्रैर्मंत्रिभिःपरिवारितः जगामहिमव
त्पार्श्वंमहादेवेनशापितं योस्यांप्रविशतेभूमौसस्त्रीभवतिनिश्चितं सराजामृगयासक्तःप्रविष्टस्तदुमावनं एकाकीहयमारूढः
क्षणात्स्त्रीत्वंजगामह साबभ्रामवनेशून्येपीनोन्नतपयोधरा काहंकस्यकुतःप्राप्तानसाबुध्यतकिंचन तांददर्शबुधस्तन्वींरूपौ-
दार्यगुणान्वितां अष्टम्यांबुधवारेचतस्यास्तुष्टोबुधग्रहः ददौगृहाश्रमंरम्यमात्मीयंरूपतोषितः पुत्रमुत्पादयामाससोसौरव्यातः
पुरूरवाः चंद्रवंशकरोराजाआद्यःसर्वमहीभृतां ततःप्रभृतिपूज्येयंसाष्टमीबुधसंयुता सर्वपापप्रशमनीसर्वोपद्रवनाशिनी अथा
न्यदपितेवच्मिधर्मराजकथानकं कृष्णउवा॰ आसीद्राजाविदेहायांनिमिर्नामसवैरिभिः संग्रामेनिहतोराजातस्यभार्यातिनिर्ध
ना उर्मिलानामसबभ्रामममहींबालकसंयुता अवंतिनगरंप्राप्यब्राह्मणस्यनिकेतने चकारोदरपूर्त्यर्थंनित्यंकंडनपेषणे हत्वासास्म
गोधूमान्ददौबालकयोस्तदा कारुण्यात्पुत्रवात्सल्यात्क्षुधासंपीड्यमानयोः कालेनबहुनासाध्वीपंचत्वमगमत्तदा पुत्रस्त-
स्याविदेहायांगत्वास्वंपितुराश्रमे उपविष्टःसत्ययोगाद्बुभुजेगामनाकुलां अन्विष्यधर्मराजेनसाकन्यानिमिवंशजा श्यामला
नामचार्वंगीसर्वलक्षणसंयुता गांधर्वेणोपयित्वाचनीतास्वनगरंप्रति तामुवाचवरारोहांधर्मराजःस्वकांप्रियां वहस्वसर्वव्याप
रंश्यामलेत्वंगृहेमम कुरुष्वसर्वभृत्यानांदानशिक्षांयथोचितां किंत्वेतेमवराःसप्तकोलकैरतियंत्रिताः कदाचिदपिनोद्घाट्यास्त्व
यावैदेहिनंदिनि एवमस्त्वितिवैप्रोक्तानिजकर्मंचकारह ततोभुक्ताबुधस्याग्रेबांधवैःप्रीतिपूर्वकं तावदेवहिभोक्तव्यंयावत्सा-
कथ्यतेकथा कदाचिद्व्याकुलीभूत्वाधर्मराजविदेहजा उद्घाटयित्वाप्रवरंददर्शजननींस्वकां पच्यमानांचरुदतींभीषणैर्यमकिंक
रैः लीलयाक्षिप्यतेबध्वातप्तमेतैलेषुसापुनः तथैवनलकांबध्वापीडितासामनस्विनी द्वितीयेनरकेतद्वत्तांददर्शस्वमातरं यंत्रेनि

पीड्यमानासाशिलायांलोष्टकेनच तृतीयेप्रवरेतद्वन्नामेवचददर्शसा करिभिःपीड्यमानासाघंटायुक्तैश्चकल्पितैः श्वभिश्चतुर्थे
प्रवरेभीषणैर्दारुणाननैः अभक्ष्यभक्षणाद्धेश्चक्रंदंतींनांपुनःपुनः पंचमेप्रवरेभूमौकंठेपादेननाडितां संदंशैर्घनपातैश्चछिद्यमा
नांसहस्रशः षष्ठेतामिक्षुयंत्रस्थांमस्तकेमुद्गराहतां संपीड्यमानामनिशंक्रमशंदारुखंडवत् सप्तमेप्रवरेचैवक्रमिरूपैःसुदा
रुणैः दृष्ट्वातथागतांतांतुमातरंदुःखकर्षितां श्यामलाम्लानवदनाकिंचिन्नोवाचभामिनी किमर्थंम्लानवदनानिश्वसिषिमनिं
दिते कारणंतन्मेब्रूहिकिंचिन्नोह्लादितास्त्वया एतेप्रवरकाःसप्तनिषिद्धायेपुरामया इत्युक्ताश्यामलाप्राहभर्तारंविनयान्विता
किंतुपापंकृतंराजन्ममममात्रासुदारुणं येनेत्थंविविधैर्घोरैर्बाध्यतेबहुशस्त्वया इत्युक्तःप्रिययाप्राहतांयमःप्रहसन्निव तव
मात्राकृतःस्नेहाद्गोधूमाद्वैहृताःकिल किंनजानासितद्भद्रेयेनपृच्छसिमामिह ब्रह्मस्वंप्रणयाद्भुक्तंदहत्यासप्तमंकुलं तदे
वकृमिरूपेणाक्लिश्यत्यासप्तमंकुलं गोधूमास्तइमेभूत्वाकृमिरूपाःसुदारुणाः येपुराब्राह्मणगृहेहृतास्तेत्वत्कृतेनया जाना-
म्येतदहंसर्वंयत्तेमात्राकृतंपुरा श्यामलोवाच तथापित्वांसमासाद्यदेवंजामातरंविभुं मुच्यतेतेनपापेनयथात्वमधुनाकु
रु तच्छ्रुत्वाचिंतयाविष्टश्चिरंध्यात्वाजगादतां धर्मराजःस्वरवासीनःप्रियांप्राणहरेश्वरी इतस्त्वंसप्तमेतीतेजन्मनिब्राह्मणी
शुभा आसीत्तस्मिन्नुतदासंगात्सखीनांपर्युपोषिता बुधाष्टमीतुसंपूर्णायथोक्तफलदायिनी तस्याःपुण्यंददस्वत्वंयदिस
त्यंममायतः तेनमुच्येननरकात्तेमातापापसंघकृत् तच्छ्रुत्वात्वरितंस्नात्वाददौपुण्यंप्रिवाचकं स्वमात्रेश्यामलातुष्टातेनमो
क्षंजगामसा उर्मिलारूपसंपन्नादिव्यदेहावरांशुका विमानवरमारूढादिव्यमाल्यांबरावृता भर्तुःसमीपेस्वर्गस्थाद्यश
तेद्यापिसाजनैः बुधस्यपार्श्वेनभसिनिमिराजसमीपगा विस्फुरंतीमहाराजबुधाष्टम्याःप्रभावतः युधिष्ठिरउवाच य
द्येवंप्रवराकृष्णतिथिर्वैतुबुधाष्टमी तस्याएवविधिंब्रूहियदितुष्टोसिमाधव श्रीकृष्णउवाच शृणुपांडवयत्नेनबुधा
ष्टम्याविधिंशुभं यदायदासिताष्टम्यांबुधवारोभवेद्यदि तदातदाहिसाग्राह्याएकभक्ताशनेनृभिः स्नात्वानद्यांतुपूर्वा

पेहगृहीत्वाकरकंनवं जलपूर्णंलसद्रत्नैः कृत्वानर्घ्यैःसमन्वितं पूजयेच्चगृहंनीत्वाबुधमेकंक्रमेणतु एकमाषप्रवर्णेनतदर्धार्धे
नवापुनः कारयेद्बुधरूपंतुस्वशक्त्याचाभयत्नतः अंगुष्ठमात्रंपुरुषंचतुर्बाहुंसुलक्षणं पद्मगर्भेव्रणंकुंभंपूजयेत्सिततंडुलैः
हेमपात्रेचसंस्थाप्यपीनवस्त्रयुगेनच वस्त्रोपरिस्थितंदेवंपीतवस्त्राक्षतादिभिः पंचामृतेनसंस्नाप्यतत्तन्मंत्रैःक्रमेणतु नैवेद्यं
गुग्गुलंधूपंदशांगेनसुगंधितं पायसैर्घृतपूपैश्चमोदकाशोकवर्तिकैः फलैश्चविविधैश्चैवशर्कराभिर्गुडैःशुभैः ततःपुष्पाक्ष
तैःपीतैर्वक्ष्यमाणैश्चनामभिः नमोबुधायपादौतुसोमपुत्रायजानुनी तारकायकटिंचैवराजपुत्रायचोदरं इलाप्रियायहृद
यंकुमारायेतिवक्षसि बाहूपुरूरवःपित्रे अंसौसोमसुतायच मुखंतुपीतवर्णायज्ञानायचस्तनद्वयं मूर्धानंतुबुधायेतिएषु
स्थानेषुपूजयेत् सौवर्णंराजतंताम्रंपात्रमादायशोभनं गंधपुष्पाक्षतैःपीतैर्गुडमिश्रैश्चपूरितैः जानुभ्यामवनींगत्वातेनचा
र्घ्यंनिवेदयेत् उर्वश्याःश्वशुरोयस्तुयःपुरूरवसःपिता योग्रहाणामधिपतिर्बुधोनःसंप्रसीदतु वरांश्चविष्णुनादत्तान्सकल्यान्नः
प्रसीदतु मंत्रेणानेनदत्वार्घ्यंजप्त्वामंत्रमिमंबुधः प्रथमेमोदकान्दद्याद्द्वितीयेफेणिकास्तथा तृतीयेघृतपूर्णंश्चचतुर्थेवटकां
स्तथा पंचमेमंडकान्दद्यात्षष्ठेसोहालिकास्तथा अशोकवर्तिकाश्चैवसप्तमेमासिकारयेत् अष्टमेशर्करामिश्रैःखंडैर्वायुधिष्ठि
र विधायवायनंदद्याद्व्रतीभोजनमाचरेत् एवंक्रमेणकर्तव्यंबुधाष्टम्यांयुधिष्ठिर बांधवैःसहमित्रैश्चभोक्तव्यंप्रीतिपूर्वकं सौम्य
माख्यानकंश्रृण्वन्नरकेभ्योविमुच्यते सोमात्मजात्मकमशेषसुखप्रदंतंयःपूजयेत्सकलनीरयुतंचकुंभं पक्वान्नपात्रसहितंस
हिरण्यवस्त्रंपश्यत्यसौयमपुरीनकदाचिदेव युधिष्ठिरउवाच उद्यापनविधिंब्रूहिकृपयाभक्तवत्सल कस्मिन्कालेचकिं
द्रव्यंकथंसफलभाग्भवेत् श्रीकृष्णउवाच आदौमध्येतथाचांतेकुर्यादुद्यापनक्रियां सप्तम्यांप्रयतोभूत्वाकुर्याद्दंतधावनं
आचम्यकुर्यात्संकल्पंदशविप्रान्निमंत्रयेत् अष्टम्यांप्रातरुत्थायशुचिर्भूत्वाव्रतीततः गंगाद्यादिमहानद्यैःस्नात्वानित्यकृतक्रि
यः गृहमध्येशुचौदेशेरंगवल्याविराजिते पुण्याहवाचनंकृत्वाकुर्याद्दीक्षाविधानकं प्राणानायम्यविधिवत्कृत्वासंकल्पनादिकं

निष्याद्युल्लेखनानन्त्रवतनामसमर्काीर्त्तयेत् मयाकृतंबुधाष्टम्यांव्रतंसांगफलाप्तये उद्यापनंकरिष्येहमित्यक्षतकुशोदकं कृत्वाचार्या
दिवरणंकुर्याद्वस्त्रादिभिःफलैः ब्राह्मणवृणुयात्तत्रवस्त्रतांबूलभूषणैः ततःपूजादिकंकुर्याद्गृहयज्ञपुरःसरं ततस्त्वष्टदलंकु
र्यान्मध्येकर्णिकयासह पंचवर्णैःसमापूर्यसकेसरदलानिच कर्णिकायांन्यसेद्धान्यंपंचप्रस्थप्रमाणतः दलेषुचदलाग्रेषुयथा
शक्त्याविनिक्षिपेत् तत्रैवंस्थापयेत्कुंभान्मध्येपूर्वादिदिक्षुच गंगाजलेनसंपूर्यवस्त्रादिभिरलंकृतान् पंचत्वक्पल्लवोपेतान्न
वकुंभान्यथाविधि तदुत्तरेग्रहान्सर्वान्मंडलेस्थापयेत्ततः तत्पूर्वेस्थापयेत्कुंभंवारुणंचविशेषतः वस्त्रत्वक्पल्लवयुतैःपं
चरत्नैःसकांचनैः तत्तन्मंत्रैःप्रतिष्ठाप्यपूजयेच्चयथाविधि सप्तजन्मार्जितंचौर्येपानकादिचयत्कृतं तद्दोषपरिहारायबुधाष्ट
मीव्रतंकृतं तस्यसांगफलप्राप्त्यैपूजांहोमंकरोम्यहं बुधप्रीत्यैचतत्सर्वमितिसंकल्प्यपूजयेत् कर्षमात्रेणराजेंद्रतदर्धार्धेनवा
पुनः बुधस्यप्रतिमांकुर्यात्स्वर्णेनविचक्षणः कर्णिकायांमध्यकुंभेताम्रपात्रेबुधन्यसेत् पंचामृतेनस्नपनंवस्त्रयुग्मेनवे
ष्टयेत् आत्रेयंपीतवस्त्रंचपीतपुष्पाक्षतादिभिः उपचारैःषोडशभिःपुरुषसूक्तविधानतः तद्दक्षिणेविश्वमिदंविष्णुरि
त्यधिदेवतं सहस्रशीर्षापुरुषवामेप्रत्यधिदेवतं दलेषुविन्यसेद्वानूभागारभ्यप्रदक्षिणं रविचंद्रकुजगुरुशुक्रकार्कीराहुके
तुकौ अनंतवामनंविष्णुंशौरिंसन्यंजनार्दनं हंसनारायणंचाष्टदलाग्रेषुचपूजयेत् धूपैर्दीपैश्चनैवेद्यैःफलैश्चविविधैर्य
जेत् बहिरिंद्रादयःपूज्यादशदिक्पालिकास्तथा यमंचचित्रगुप्तंचश्यामलांदक्षिणेन्यसेत् कुंभेषुवंशपात्रेषुअष्टावष्टौ
चलड्डुकान् यज्ञोपवीतान्कलशान्दक्षिणासहितान्यजेत् पूजयित्वाततोहोमंशाखोक्तविधिनासुधीः मंडलात्पश्चिमे
भागेस्थंडिलंचतुरस्रकं कृत्वातुल्लेखनादीनिकृत्वाग्निंस्थापयेत्सुधीः इध्मदर्भैःपरिस्तीर्यपात्रासादनमाचरेत् पूर्णपा
त्रविधानांतंब्रह्मासनमतःपरं इध्माधानंसुखप्रांतंप्रधानाहुतिहोमकं अपामार्गसमिद्भिश्चयवव्रीहितिलैर्घृतैः गोधूमैश्च 
सितैर्होमंपृथक्पृथगतंद्रितः उद्बुध्यस्वेतिमंत्रेणहोममष्टोत्तरंशतं विष्णुमंत्रेणजुहुयात्तथानारायणंहुनेत्

अधिप्रत्यधिदेवैश्चमंत्राभ्यांजुहुयात्तथा ग्रहादिभ्यश्चजुहुयात्कुर्याद्ब्रह्मविसर्जनं पूर्णपात्रोद्वासनंचबलिदानमनःपरं वन्ह्या
दिपूजनंकृत्वादेवतोद्वासनंततः अभिषिच्याचार्यतिलकंरक्षाबंधनमेवच आचार्यंचसपत्नीकंपूजयित्वायथाविधि प्रतिमावस्त्र
कलशान्गोदानंदक्षिणांतथा दत्वान्नस्यादिविप्रेभ्यःकलशांश्चसदक्षिणान् ब्राह्मणान्भोजयेत्पश्चादाशिषोवाचयेत्तथा
इतिश्रीभ०बुधाष्टमीव्र०द्या०सं०म अथशुक्लादिश्रावणकृष्णाष्टम्यांदशाफलव्रतं सानिशीथव्यापिनीग्राह्यानोचेत्पूर्वा
ग्राह्या तत्रपूजाविधिः तमद्भुतंबालकमंबुजेक्षणंचतुर्भुजंशंखगदाद्युदायुधं श्रीवत्सलक्ष्मंगलशोभिकौस्तुभंपीतांबरंसांद्र
पयोदसौभगं महार्हवैडूर्यकिरीटकुंडलत्विषापरिष्वक्तसहस्रकुंतलं उद्दामकांच्यंगदकंकणादिभिर्विराजमानंवसुदेवनंदनं
कृष्णाय०ध्यानं वासुदेवाय०आवाहयामि शेषशायिने०आसनं०तीर्थपादाय०पाद्यं०गंगाजनकाय०अर्घ्यं०यमुनावेगसं
हारिणेन०आचमनीयं०नित्यमुक्ताय०पंचामृतस्ना०श्रीगोपालाय०स्नानं०पीतवाससेन०वस्त्रं०यज्ञप्रियाय०यज्ञोपवीतं
सर्वेश्वराय०चंदनं०अधोक्षजाय०अक्षतान् कमलाप्रियाय०पुष्पाणितुलसीं० नामपूजा कृष्णाय०विष्णवे०हरयेन०शेष
शायिने०गोविंदाय०गरुडध्वजाय०दामोदराय०हृषीकेशाय०पद्मनाभाय०उपेंद्राय०१० अथदोरकबंधनं संसारार्णवम
ग्नानांनराणांपापकर्मिणां इहमोक्षफलावाप्तिंकुरुष्वपुरुषोत्तम इतिदोरकबंधनं पारिजातापहाराय०धूपं०ज्ञानप्रदीपाय०
दीपं०चक्रिणे०नैवेद्यं०अघनाशिने०तांबूलं०सर्वव्यापिने०दक्षिणां०पद्मनाभाय०नीराजनं०अनंताय०पुष्पांजलिं दे
वदेवनमस्तेस्तुभक्तप्रियदयानिधे गृहाणार्घ्यंमयादत्तंदेवक्यासहितप्रभो विशेषार्घ्यं त्रिलोकनाथोदेवेशःसर्वभूतदयानि-
धिः दानेनानेनसुप्रीतोभवत्विहसदामम वायनमंत्रः श्रीकृष्णःप्रतिगृण्हातिश्रीकृष्णोवैददातिच श्रीकृष्णस्तारकोभाभ्यां
श्रीकृष्णायनमोनमः इतिवायनं यस्यस्मृत्येतिप्रार्थना अथकथा सूतउ० शृणुध्वमृषयःसर्वेनैमिषारण्यवासिनः पुराचद्वापर
स्यांतेकृष्णदेवेनभाषितं तद्व्रतंचप्रवक्ष्यामिसांगोपांगंमुनीश्वराः पुराचैवद्वापरस्यांतेपांडवाःकौरवास्तथा द्यूतंप्रचक्रिरेसर्वेधनमाने

नमोहिताः निर्जिताः पांडवाद्दुःखाद्दनंमापुर्मुनीश्वराः कुंतीविदुरगेहेतुसंस्थिताचमहायशाः तच्छ्रुत्वाकृष्णदेवोपिकृपयापरयायुतः
आयंयोगरुडारूढोविदुरस्यगृहंप्रति तदापश्यन्महाबाहुंकुंतीपरमहर्षिता विदुरेणार्चितःकृष्णःकुंतीचैवाहभक्तितः नमामित्वा
महंकुंतीसंस्थितंचविडंबनं खनपुत्रास्तुमहाद्दुःखान्मायपुगंहनंवनं नवापिस्कमहद्दुःखसर्वदातन्ममाप्रियं कुंत्युवाच न्हृ
षीकेशमहाबाहोमहद्दुःखेनकर्शिताःकृपयापरयादेवरक्षितावयमीदृशाः ममचैवमहद्दुःखंत्वंजानासिचवैप्रभो मत्पुत्रास्तु
महद्दुःखात्मविश्यगहनंवनं कृपयाविदुरोमन्द्यंकौरव्यःसख्यसंमितं ददातिमीतिदःकृष्णार्जीवनायमहामतिः गृहस्यपश्चिमे
भागेवसामिचजनार्दन दर्शितोकौरवाणांहिसर्वेषांकुमतिस्तथा इतितस्यावचःश्रुत्वाकृष्णःपरमधर्मवित् आहचैनांवासुदे-
वोभक्तमियतमस्तदा व्रतंतेकथयिष्यामियेनदुःखात्प्रमुच्यते पुत्रपौत्रैःपरिवृतास्वंराज्यंप्राप्स्यसेचिरात् दशाफलमितिख्या
तंतद्व्रतंकुरुसुव्रते कुंत्युवाच कस्मिन्कालेतुकर्तव्यंतद्व्रतंकेशवप्रभो वदमांप्रतिइत्युक्तोजगादयादवेश्वरः श्रावणस्यासिते
पक्षेअष्टम्यांचनिशीथके देवक्यांवासुदेवस्यप्रादुर्भूतोनसंशयः तस्याग्रेदशगुणितंसूत्रंस्थाप्यप्रपूजयेत् हस्तेबध्नातुतत्सूत्रं
दशाहंव्रतमाचरेत् संसारार्णवमग्नानांनराणांपापकर्मिणां इहामुत्रफलावाप्तिंकुरुष्वपुरुषोत्तम अनेनदोरकंबध्वादशवर्षंव्रतंच
रेत् देवस्यपुरतोनित्यंदशपद्मानिकारयेत् ततश्चशृणुयात्पुण्यांकथामेतांशुभावहां तुलस्याःकृष्णवर्णायादलैर्दशभिरर्चये
त् कृष्णंविष्णुंहृषीकेशंगोविंदंगरुडध्वजं दामोदरंहृषीकेशंपद्मनाभंहरिंप्रभुं एतैश्चनामभिर्नित्यंकृष्णदेवंसमर्चयेत् नम
स्कारंततःकुर्यात्प्रदक्षिणसमन्वितं एवंदशादिनंकुर्याद्व्रतानामुत्तमंव्रतं आदौमध्येतथाचांतेहोमंकुर्याद्विधानतः कृष्णमंत्रे
णाजुहुयाच्चरुणाष्टोत्तरशतं ततोहोमांतेविधिवदाचार्यंपूजयेत्सुधीः सौवर्णेताम्रपात्रेवामृन्मयेवेणुपात्रके सौवर्णंतुलसीप
त्रंकारयित्वासुलक्षणं प्रतिमांचतथाकृत्वाअर्चयित्वाविधानतः निधायप्रतिमांतत्रआचार्यायनिवेदयेत् दातव्यागौःसवत्साच
वस्त्रालंकारभूषिता दशाहोमेतुकृष्णायपूरिकादशचार्पयेत् दापयेत्तुब्राह्मणायस्वयंभक्तानयेवच उपायनंत्वगृण्हीष्वसर्वोप

स्करसंयुतं संसारार्णवमग्नांमांपाहित्वंदेवकीसुत एवंचोपायनंदत्वानमस्कृत्वाक्षमापयेत् दक्षिणाभिर्युतंदेविकर्तव्यंकृष्णस
न्निधौ व्रतांतेदशविप्रेभ्यः प्रत्येकंदशपूरिकाः एवंदशसुवर्षेषुव्रतंकुर्यादनंदितः एवंव्रतंत्वयादेविकर्तव्यंकृष्णसान्निधौ एव
मुक्त्वातुकृष्णेनकुंतीस्तुत्वामुदान्विता उवाचकृष्णदेवंसाममवित्तंनविद्यते प्रत्युवाचहृषीकेशस्तववित्तंभविष्यति एवमुक्त्वा
ययौकृष्णः कर्णंद्रष्टुंसुरवान्वितः कर्णोपिचमहात्मानंकृष्णंदृष्ट्वाप्रहर्षितः सिंहासनंददौतस्मैपाद्यमर्घ्यंतथैवच कर्णोप्युवा
चदेवेशंकिमर्थंतवचागमः इत्युक्तःकृष्णदेवोथतवमातानिदुःखिता कर्णउवाच भूरिभक्त्यातथाकृष्णमातरंप्रणमाम्यहम्
कथंवादुःखितामाताप्रमुच्येतवदस्वमे श्रीकृष्णउवाच सुवर्णपात्रेसंपूर्यपायसंक्षीरसंयुतं सहस्रशतनिष्कंतुदानव्यंवासु
हस्तके तवमातातथाप्रीताभविष्यतिनसंशयः एवमुक्त्वातथाकृष्णोद्वारकामाजगामह कृष्णवाक्यंततःश्रुत्वाकर्णश्चक्रेम
हायशाः पंचभक्ष्यसमायुक्तंपात्रंस्वर्णेनपूरितं शतनिष्कसमायुक्तंवासुहस्तेप्रदायसः प्रहसंतीतथाकुंतीपात्रंदृष्ट्वाथहर्षि
ता देवस्यसन्निधौकुंतीव्रतंचक्रेथभक्तितः कृष्णेनकारितंसर्वंममभाग्यायवैध्रुवं कृष्णपूजांततःकृत्वाकथांश्रुत्वाथभक्ति
तः उपायनंददौतत्रब्राह्मणेभ्योयथाक्रमं तुलसीदलंसुवर्णेनकारयित्वासुलक्षणं प्रतिमांविष्णुभक्तायस्वर्णपात्रेनिधाय
च गोदानेनसमायुक्तामाचार्यायमहामते कुंतीददौमहादेवीविष्णुर्नःप्रीयतामिति व्रतंदशसुवर्षेषुचकारोद्यापनंततः तद्व्रत
स्यप्रभावेणतनूजाश्चागतास्ततः हत्वाशत्रून्मृधेसर्वान्कृष्णस्यैवप्रसादतः युधिष्ठिरस्तुधर्मात्मास्वंराज्यंप्राप्तवान्सुधीः
प्रोवाचेदंव्रतंकुंतीद्रौपदींचपतिव्रतां दशाफलमितिख्यातंकृष्णदेवेनभाषितं यूयंसर्वेमहादुःखंनिस्तीर्यस्वपुरंगताः व्रतस्या
स्यप्रभावेणकृष्णस्यैवप्रसादतः त्वमप्येवंव्रतंभद्रेकुरुष्वसुसमाहिता पुत्रपौत्रैःपरिवृतासर्वान्कामानवाप्स्यसि आचरंत्यो
तद्व्रतंतस्यैकुंतीपरमहर्षिता साप्यचक्रेमहाभागाद्रौपदीव्रतमुत्तमं तस्मात्सर्वंप्रयत्नेनकर्तव्यंसुजनैःसदा सुभक्त्याकुरुते
नारीव्रतानामुत्तमंव्रतं सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते इदंव्रतंमहापुण्यंव्रतानामुत्तमंव्रतं वदतांशृण्वतांचैववि

ष्णुलोकोभवेद्ध्रुवं इतिश्रीभ० दशाफलव्रतोद्यापनंसंपूर्णं अत्रमूलंचिंत्यं अथकृष्णादिमासेनभाद्रकृष्णाष्टम्यांजन्माष्ट
मीव्रतं तच्चअर्धरात्रव्यापिन्यांकार्यं रोहिण्यासहिताकृष्णामासिभाद्रपदेष्टमी अर्धरात्रेतुयोगोयंतारापत्युदयेनथा नि
यतात्माशुचिःसम्यक्पूजांतत्रप्रवर्तयेत् इतिविष्णुधर्मोत्तरे तस्यकालतत्त्वेप्युक्तं दिनद्वये अर्धरात्रव्याप्तावव्याप्तौवापरैवप्रा
तःसंकल्पकालसत्वाद्वाराधियोगा दुर्जनीयाप्रयत्नेनसप्तमीसंयुताष्टमी ब्रह्मवैवर्ते सप्तमीयुक्तानिषेधाच्च यदापूर्वेद्युर्नि-
शीथेकेवलाष्टमीउत्तरेद्युर्निशीथास्पर्शिन्यष्टमीरोहिणीयुक्तातदापूर्वैवग्राह्या कर्मकालसत्वाद्रोहिणीयोगस्तुकेवलंफला
र्थातिशयार्थोनवमीबुधादियोगवत् नतुनिर्णयोपयोगी प्रेतयोनिगतानांतुप्रेतत्वंनाशितंनरैः यैःकृताश्रावणेमासिअष्ट
मीरोहिणीयुता किंपुनर्बुधवारेणसोमेनापिविशेषतः किंपुनर्नवमीयुक्ताकुलकोट्यास्तुमुक्तिदा उदयेचाष्टमीकिंचिन्नव-
मीसकलायदि भवेत्तुबुधसंयुक्ताप्राजापत्यर्क्षसंयुता अपिवर्षशतेनापिलभ्यतेयदिवानवा तत्रउदयशब्दश्चंद्रोदयपरः सू
र्योदयपरत्वेतुयदापूर्वेद्युर्निशीथेकेवलाष्टमी उत्तरेद्युर्निशीथस्पर्शिन्यष्टमीरोहिणीयुक्तासतीबुधयुक्तातदैवोत्तरास्यात् तद
भावेपियावद्वचनवाचनिकमितियावत् यदितुबुधभावेपिरोहिणीयोगमात्रात्तदैवोत्तरोच्यतेतदारोहिणीयोगाभावेपिबुध-
मात्रसद्भावात् उत्तरा ऋक्षयोगवद्वारस्यापिप्राशस्त्यहेतुत्वाच्च किंच यथापूर्वेद्युर्निशीथेऽष्टमीमात्रसत्वेउत्तरेद्युस्त्वनिशी
थात्पूर्वं ऋक्षयोगेबुधसत्वेचएतद्वचनादुत्तरेद्युर्व्रतं एवंपूर्वेद्युर्निशीथेसऋक्षाष्टमीबुधाधिक्याउत्तरेद्युर्व्रतापत्तिरिति यच्चवि
ष्णुरहस्ये प्राजापत्यर्क्षसंयुक्ताकृष्णानभसिचाष्टमी मुहूर्तमपिलभ्येतसोपोष्याचमहाफला अत्रापिमुहूर्तपदंनिशीथाख्यं
यदाहिशक्त्याप्यष्टम्यर्धरात्रेवर्तमानाग्राह्या तदारोहिणीसहितामुहूर्तमप्यहोरात्रेयस्मिन्नित्युक्तंहिलभ्यते अष्टम्यारोहिणी
ऋक्षंतास्तुपुण्यमुपावसेत् विष्णुरहस्येएवस्पष्टैर्वाहोरात्रसंबंधियत् किंचिन्मुहूर्तमत्रातिरिति कालतत्वविवेचनेतद्विपरीतं
ऋक्षयोगस्यवातात्कालिकत्वेनसार्थक्यात् किंचैतद्वचनद्वयगतापिशब्दस्यस्वार्थैतात्पर्याभावेनऋक्षयोगंतुप्राशस्त्यबोध

कल्पस्यैवउचितत्वादिति यत्पुनस्तत्रोक्तं कर्मकालव्याप्तिशास्त्रादेवप्रधानभूताया अष्टम्याएवअर्धरात्रसंबन्धप्रासंग्यात्प्राबल्यं दि
वावायदिवारात्रौनास्तिचेद्रोहिणीकला रात्रियुक्तांप्रकुर्वीतविशेषेणेंदुसंयुतां इतिवचनेनरोहिणीयोगाभावविषयंक्रियेतएवंतन्
स्यार्थः दिनावच्छेदेनरात्र्यवच्छेदेनवाकलामात्रापिचेत् रोहिणीअष्टम्यांनास्तितदैवचंद्रोदयसंयुता अर्धरात्रव्यापिनीतिथि
वत् दिनद्वयेपितादृश्याअभावेबहुरात्रिसंयुतामुत्तरांप्रकुर्वीतेति नेदंकर्मकालशास्त्रबाधकमन्यथाप्यर्थसंभवात् तथाहि
दिनद्वयेवैषम्येणनिशीथस्पर्शेअहोरात्रावच्छेदेनरोहिणीयोगाभावेचविशेषणाधिक्येनइंदुसंयुताअधिकनिशीथव्यापिनीग्रा
ह्येतियावद्रोहिणीयोगेत्वधिकनिशीथव्यापिनीमपिविहायस्वल्पापिनिशीथयोगिनीरोहिणीयुतैवग्राह्येतिव्याख्यानंतरंसमञ्जसंवद्
ष्टव्यं पारणंतुतिथिभांतेकार्यं तदाहभृगुः जन्माष्टमीरोहिणीचशिवरात्रिस्तथैवच पूर्वविद्धैवकर्तव्यातिथिभांतेचपारणं
निषेधोपिब्रह्मवैवर्ते अष्टम्यामथरोहिण्यांनकुर्यात्पारणंक्वचित् हन्यात्पुराकृतंकर्मउपवासार्जितंफलं तिथिरष्टगुणंहंति
नक्षत्रंचचतुर्गुणं तस्मात्प्रयत्नात्कुर्वीततिथिभांतेचपारणं तत्रदिवसेउभयांतेपारणमितिमुख्यःपक्षः एकतरांतेत्वनुकल्पः
यदातुतिथिनक्षत्रयोरन्यतरस्यैवदिनांतस्तदाहोरात्रेपारणानिषेधादन्यतरांतेपारणाभ्यनुज्ञानात्तद्दिवैवान्यतरांतेकार्यम् अ
तएववन्हिपुराणे भांतेकुर्यात्तिथेर्वापिशस्तंभारतपारणं इतिजन्माष्टमीनिर्णयः अथव्रतविधिः व्रतपूर्वदिनेदंत
धावनंकृत्वा उपवासदिनेप्रातःउत्थायतत्रकृत्यं श्रावणस्यासितेपक्षेशौचमाचमनंकृतं तस्यांमध्यान्हसमयेनद्यादौविम
लेजले कृत्वापामार्गसमिधादंतधावनमादितः तिलामलककल्केनस्नानंमृत्स्नानपूर्वकं नद्यादिकेतदास्नात्वाकृत्वानियम
मेवच परिधायनवेशुद्धेवाससीकृतसमाहितः ब्राह्मणःक्षत्रियोवैश्यःशूद्रश्चापितथाचरेत् कृत्वानैमित्तिकंकर्मगन्धानि-
जगृहेपुनः वेदींसम्यक्प्रकुर्वीतगोमयेनोपलिप्यतां सूर्यःसोमोयमःकालःसंध्येभूतान्यहःक्षपा पवनोदिक्पतिर्भूमि
राकाशंखेचरानराः ब्रह्मशासनमास्थायकल्पंतामिहसंनिधिं इत्युक्त्वासफलपुष्पाक्षतजलपूर्णं ताम्रपात्रमादायमासप

क्षाद्युल्लिख्य अमुकफलकामः पाप क्षयकामोवाकृष्णप्रीतये कृष्णजन्माष्टमीव्रतंकरिष्ये तथा वासुदेवंसमुद्दिश्यसर्वपाप
प्रशांतये उपवासंकरिष्यामिकृष्णाष्टम्यांनभस्यहं अद्यकृष्णाष्टमींचैवनमश्चंद्रंसरोहिणीं अर्चयित्वोपवासेन भोक्ष्येहमपरे-
हनि एनसोमोक्षकामोस्मियद्गोविंदत्रियोजितं तन्मेमुंचतुमांत्राहि पतितंशोकसागरे आजन्ममरणंयावद्यन्मयादुष्कृतंश-
तं तत्प्रणाशायगोविंदप्रसीदपुरुषोत्तम इत्युक्त्वापात्रस्थंजलंनिक्षिपेत् ततः कदलीस्तंभवासोभिराम्रपल्लवयुतसजल
पूर्णकलशैर्दीपैः पुष्पमालाभिर्युतंस्वगरुधूपितं अग्रखड्गकृष्णच्छागरक्षामणिद्वारन्यस्तमुसलादियुतंमंगलोपेतं पश्चाद्दे
वक्याःसूतिकागृहंविधायतस्यसमंतात्छिन्निपुकुस्मांजलीन्देवगंधर्वादीन्खड्गचर्मधरवसुदेवदेवकीनंदयशोदागर्गगोपी-
गोपान्कंसनियुक्तान्गोधेनुकुंजरान्यमुनांतन्मध्येकालियंअन्यच्चतत्काननगोकुलचरितंयथासंभवंलिखित्वासूतिकागृहम
ध्येमञ्चाद्युन्नतमंचकेस्थापयेत् अथपूजाविधिः कृत्वानैमित्तिककर्मस्नात्वानिजगृहंपुनः येभ्योमातेवापित्रेतिमंत्रान्जपि
त्वा आगमार्थंतुघंटानादंकृत्वा अपसर्पंत्विति छोटिकामुद्रां तीक्ष्णदंष्ट्रेतिक्षेत्रपालंप्रार्थ्य आचम्यप्राणानायम्यसंकल्प्य
ममसहकुटुंबस्याक्षेमस्थैर्यविजयाभयायुरारोग्यैश्वर्याभिवृद्ध्यर्थंधर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्ध्यर्थंनिशीथेसप
रिवारश्रीकृष्णप्रीत्यर्थंचपुराणोक्तप्रकारेणपुरुषसूक्तविधानेनचयथासंभवंनियमेनयथोपचारमीलितद्रव्यैः जन्माष्टमीव्रतांग
त्वेनपरिवारसहितश्रीकृष्णपूजनमहंकरिष्ये कलशार्चनंशंखार्चनंचकुर्यात् पुरुषसूक्तेनन्यासंकुर्यात् रंगवल्लीसमायु-
क्तेसर्वतोभद्रमंडले अव्रणंसजलंकुंभंताम्रंमृन्मयमेववा संस्थाप्यवस्त्रसंवीतंकंठदेशेसुशोभितं पंचरत्नसमायुक्तंफ
लगंधाक्षतैर्युतं सहिरण्यंसमासाद्यताम्रेणपटलेनवा वंशमृन्मयपात्रेणयवपूर्णेनचैवहि आच्छादयेत्तच्चैलेनलिखेदष्टद-
लंततः कांचनीराजतीताम्रीपित्तलीमृन्मयीचवा वार्क्षीमणिमयीचैववर्णकैर्लिखिताथवा इत्युक्तान्यतमेनप्रतिमांविधा
य अग्न्युत्तारणंकृत्वा प्रतिमाकपोलौस्पृष्ट्वातद्देवतानाममूलमंत्रंप्रणवादिचतुर्थ्यंतंनाम अस्यैदेवत्वासंस्थाप्यस्वाहेतिमंत्रंपठन्

प्राणप्रतिष्ठां कुर्यात् अस्मइत्यस्यस्थानेतत्तद्देवतानामग्राह्यं गायद्भिः किंनरौघैः सततपरिवृतावेणुवीणाविनोदैः शृंगारादर्शकुंभप्रवरकृतकरैः किंनरैः सेव्यमाना पर्यंकेस्वास्तृतायामुदिततरमुखीपुत्रिणीसम्यगास्ते सादेवीदेवमाता जयतिसुवदनादेवकीदिव्यरूपा इतिदेवकीं मंचकेबालकंकृष्णंपर्यंकेस्तनपायिनं श्रीवत्सवक्षसंशांतंनीलोत्पलदलच्छविं एवंदेवकीसहश्रीकृष्णंध्यात्वा ॐ नमोदेव्यैश्रियैइतिश्रियं देवकीसहितंवसुदेवंयशोदासहितंनंदं श्रीकृष्णसहितंबलदेवंचंडिकांच नमोंतैर्नाममंत्रैः पूजयेत् तत्रमंत्रः योगेश्वरायदेवाय योगिनांपतयेविभो योगोद्भवायनित्याय गोविंदायनमोनमः स्नानं यज्ञेश्वरायदेवायतथायज्ञोद्भवायच योगानांपतयेनाथ गोविंदायनमोनमः वस्त्रं कृष्णाय० चंदनं० कृष्णाय० यज्ञोपवीतं पुष्पाणि अथांगपूजा गोविंदाय० पादौपू० माधवाय० जंघेपूज० मधुसूदनाय० कटींपू० पद्मनाभाय० नाभिंपू० हृषीकेशाय० हृदयंपू० संकर्षणाय० स्तनौपू० वामनाय० बाहूपू० दैत्यसूदनाय० हस्तौपू० हरिकेशाय० कंठंपू० चारुमुखाय० मुखंपू० त्रिविक्रमाय० नासिकांपू० पुंडरीकाक्षाय० नेत्रेपू० नृसिंहाय० श्रोत्रेपू० उपेंद्राय० ललाटंपू० हरये० शिरःपू० श्रीकृष्णाय० सर्वांगंपू० कृष्णाय० धूपं० कृष्णाय० दीपं० विश्वेश्वरायदेवायतथाविश्वोद्भवायच विश्वानांपतयेतुभ्यंगोविंदायनमोनमः नैवेद्यं यज्ञायज्ञेश्वराय यज्ञपतयेयज्ञसंभवायगोविंदायनमोनमइति आदौसर्वेषांयज्ञपदानांस्थानेयोगपदादिस्तुत्वा अयमेवमंत्रः स्नानेविश्वाय० विश्वेश्वरायइत्युक्त्वा नैवेद्यं आचमनीयं० करोद्वर्तनं० फलं० तांबूलं० दक्षिणां० नीराजनं० पुष्पांजलिं० धर्मायधर्मेश्वरायेत्यादिस्वाहांतस्तिलहोमे विश्वायविश्वेश्वरायेत्यादिशयने सोमायसोमेश्वरायेत्यादिचंद्रपूजायांइतिमंत्राउक्ताः ततोगव्यघृतेनाग्नेवसोर्धाराःक्वचिद्गुडघृतेनेति ततोजातकर्मनालच्छेदषष्ठीपूजानामकर्माणि संक्षेपेणकार्याणि ततश्चंद्रोदयेरोहिणीयुतंचंद्रंस्थंडिलेप्रतिमायांवानाममंत्रेणसंपूज्य शंखेनादायसमादायसपुष्पकुशचंदनं जानुभ्यामवनिंगत्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव गृहाणार्घ्यंशशांकेदंरोहिण्यासहितोमम जो

त्स्नायाः पतयेतुभ्यंज्योतिषांपतयेनमः नमस्तेरोहिणीकांतसुधावासनमोस्तुते नमोमंडलदीपायशिरोरत्नायधूर्जटे कलाभि
र्वर्धमानायनमश्चंद्रायचारवे इतिप्रणमेत् अनंतंवामनंगौरींवैकुंठंपुरुषोत्तमं वासुदेवंहृषीकेशंमाधवंमधुसूदनं वराहंपुं
डरीकाक्षंनृसिंहंदैत्यसूदनं दामोदरंपद्मनाभंकेशवंगरुडध्वजं गोविंदमच्युतंकृष्णमनंतमपराजितं अधोक्षजंजगद्बीजंसर्ग
स्थित्यंतकारणं अनादिनिधनंविष्णुंत्रिलोकेशंत्रिविक्रमं नारायणंचतुर्बाहुंशंखचक्रगदाधरं पीतांबरधरंनित्यंवनमालावि
भूषितं श्रीवत्सांकंजगत्सेतुंश्रीकृष्णंश्रीधरंहरिं शरणंत्वांप्रपन्नोहंसर्वकामार्थसिद्धये प्रणमामिसदादेवंवासुदेवंजगत्पतिं
इतिमंत्रैःप्रणम्य त्राहिमांसर्वलोकेशहरेसंसारसागरात् त्राहिमांसर्वपापघ्नदुःखशोकार्णवात्प्रभो सर्वलोकेश्वरत्राहिप
तितंमांभवार्णवे देवकीनंदनश्रीशहरेसंसारसागरात् त्राहिमांसर्वदुःखघ्नरोगशोकार्णवाद्धरे दुर्गतांस्त्रायसेविष्णोयेस्मरं
तिसकृत्सकृत् सोहंदेहार्तिदुर्वृत्तस्त्राहिमांभवसागरात् पुष्कराक्षनिमग्नोहंमायाव्यज्ञानसागरे त्राहिमांदेवदेवेशत्वत्तोनान्यो
स्तिरक्षिता यद्बाल्येयच्चकौमारेयौवनेयच्चवार्धके यत्पुण्यंतत्समाप्नोतिपापंहरहलायुध इतिमंत्रैःप्रार्थयेत् ततःस्तोत्रंपठन्
पुराणश्रवणादिना जागरणंकुर्यात्द्वितीयेन्हिप्रातःकालेस्नानादिनित्यंकृत्वा पूर्ववद्देवंपूजयित्वाब्राह्मणान्भोजयेत् तेभ्यःसु
वर्णधेनुवस्त्रादिदत्वाकृष्णोमेप्रीयतामितिवदेत् नमस्तेवासुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवंचास्तु इत्युक्
त्वा प्रतिमासुद्रास्यतांब्राह्मणायदत्वा पारणंकृत्वा व्रतंसमापयेत् सर्वायसर्वेश्वरायसर्वेषांपतयेनमः सर्वसंभवा
यगोविंदायनमोनमइतिपारणं० भूतायभूतपतयेनमइतिनमस्कारः इतिपूजाविधिः अथकथा युधिष्ठिरउवाच
जन्माष्टमीव्रतंब्रूहिविस्तरेणममाच्युत कस्मिन्कालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः श्रीकृष्णउवाच मल्लयुद्धेप
रावृत्तेशमितेकुकुराधिके स्वजनैर्बहुभिस्त्रीभिःसमेतैःस्निग्धैःसमावृते हतेकंसासुरेदुष्टेमथुरायांयुधिष्ठिर देवकीमांप
रिष्वज्यकृत्वोत्संगेरुरोदह वसुदेवोपितत्रैववात्सल्यात्प्ररुरोदह समालिंग्यास्रुवदनःपुत्रपुत्रेत्युवाचह सगद्गदस्वरोदीनो

बाष्पपर्याकुलेक्षणः बलभद्रंचमांचैवपरिष्वज्यमुदापुनः अद्यमेसफलंजन्मजीवितंचसुजीवितं उभाभ्यामथपुत्राभ्यांसमुद्भूतः
समागमः एवंहर्षेणदंपत्योस्तुष्टपुष्टेनदास्यभूत् प्रणिपत्यजनाःसर्वेबभूवुस्तेप्रहर्षिताः एवंमहोत्सवंदृष्ट्वासमाजेमधुसूदनं
जनाऊचुः प्रसादःक्रियतामस्यलोकस्यानेस्यदुःखहन् यस्मिन्दिनेचप्रासूतदेवकीत्वांजनार्दनम् तद्दिनंदेहिवैकुंठकुर्म
स्तत्रमहोत्सवं एवंस्तुतजनौघेनवसुदेवोमयेक्षितः विलोक्यबलभद्रंचमांचहृष्टतनूरुहः उवाचसममादेशाल्लोकानूजन्माष्ट
मीव्रतं मथुरायांततःपश्चात्पार्थसम्यक्प्रकाशितं कुर्वंतुब्राह्मणाःसर्वेव्रतंजन्माष्टमीदिने क्षत्रियाश्चैवयेवैश्याःशूद्रायेः
न्येपिधर्मिणः युधिष्ठिरउवाच कीदृशंतद्व्रतंदेवसर्वैर्देवैरनुष्ठितं जन्माष्टमीतिसंज्ञंचपवित्रंपापनाशनं येनत्वंतुष्टिमायासि
सिकात्स्न्येनप्रभवाव्यय एतन्मेनत्त्वतोब्रूहिसविधानंसविस्तरं श्रीकृष्णउवाच मासिभाद्रपदेष्टम्यांनिशीथेकृष्णपक्षके
शशांकेवृषराशिस्थेऋक्षेरोहिणिसंज्ञके योगेस्मिन्वसुदेवाद्धिदेवकीमामजीजनत् भगवत्याश्चतत्रैवक्रियतेसुमहोत्सवः
योगेस्मिन्कथितेष्टम्यांसिंहराशिगतेरवौ सप्तम्यांलघुभुक्कुर्याद्दंतधावनपूर्वकं उपवासस्यनियमंरात्रौस्वपेज्जितेंद्रियः
केवलेनोपवासेनतस्मिन्जन्मदिनेमम सप्तजन्मकृतात्पापान्मुच्यतेनात्रसंशयः उपावृत्तस्तुपापेभ्योयस्तुवासोगुणैःसह
उपवासःसविज्ञेयःसर्वभोगविवर्जितः ततोष्टम्यांतिलैःस्नात्वानद्यादौविमलेजले सुदेशेशोभनंकुर्याद्देवक्याःसूतिका
गृहं सितपीतैस्तथारक्तैःकर्बूरैर्हरितैरपि वासोभिःशोभितंकृत्वासमंतात्कलशैर्नवैः पुष्पैःफलैरनेकैश्चदीपालि
भिरितस्ततः पुष्पमालाविचित्रंचचंदनागरुधूपितं अतिरम्यमनोपम्यंरक्षामणिविभूषितं हरिवंशस्यचरितंगोकुलंच
विलेखयेत् ततंवाद्यविनिनदैर्वीणावेणुरवाकुलं नृत्यगीतक्रमोपेतंमंगलैश्चसमंततः वेष्टकारीलोहखड्गंकृत्वानादंच
यत्नतः द्वारिविन्यस्यमुसलंरक्षितंरक्षपालकैः षष्ठ्यादेव्याधिष्ठितंचतद्गृहंचोत्सवैस्तथा एवंविभवसारेणकृत्वातत्सूति
कागृहं तन्मध्येप्रतिमास्थाप्यासाचाप्यष्टविधास्मृता कांचनीराजतीताम्रीपैत्तलीमृन्मयीतथा वार्क्षीमणिमयीचैववर्णके

लिखितातथा सर्वलक्षणसंपूर्णांपर्यंकेचाष्टशल्पके प्रतप्तकांचनाभासांमहाहांस्तनपस्विनीं प्रसूतांचप्रस्तमांचस्थापयेन्मंच
कोपरि मांतत्रबालकंस्तसंपर्यंकेस्तनपायिनं श्रीवत्सवक्षसंशांतंनीलोत्पलदलच्छविं यशोदांतत्रचैकस्मिन्प्रदेशेसूति-
कागृहे तद्दच्चकल्पयेत्पार्थप्रसूतांवरकन्यकां तथैवममपार्श्वस्थाःकृतांजलिपुटान्नृप देवाग्रहास्तथानागायक्षाविद्याधराम
राः प्रणताःपुष्पमालाग्रचारुहस्ताःसुरासुराः संचरंतइवाकाशप्रहारैरुदितोदितैः वसुदेवापितत्रैवखड्गचर्मधरःस्थितः
कश्यपोवसुदेवोयमदितिश्चैवदेवकी शेषोवैबलदेवोयंयशोदादितिरत्नभूत् नंदःप्रजापतिर्दक्षोगर्गश्चापिचतुर्मुखः
गोप्यश्चाप्सरसश्चैवगोपाश्चापिदिवौकसः एषावतारोराजेंद्रकंसोयंकालनेमिजः तत्रकंसनियुक्ताश्चमोहितायोगनिद्रया
गोधेनुकुंजराश्चैवदानवाःशस्त्रपाणयः नृत्यंतश्चाप्सरोभिस्तेगंधर्वागीततत्पराः लेखनीयश्चतत्रैवकालियोयमुनाह्रदे इ
त्येवमादियत्किंचिद्दृश्यतेचरितंमम लेखयित्वाप्रयत्नेनपूजयेद्भक्तितत्परः रम्यमेवंबीजपूरैःपुष्पमालादिशोभितं काल-
देशोद्भवैःपुष्पैःफलैश्चापियुधिष्ठिर पाद्यार्घ्यैःपूजयेद्भक्त्यागंधपुष्पाक्षतैःसह मंत्रेणानेनकौंतेयदेवकींपूजयेन्नरः गाय
द्भिःकिंनराद्यैःसततपरिवृतावेणुवीणानिनादैर्भृंगारादर्शकुंभप्रकटकृतकरैःकिंनरैःसेव्यमाना पर्यंकेस्वास्तृतेयामुदिततं
रसुखीपुत्रिणीसम्यगास्तेसादेवीदेवमाताजयतुचसुतानादेवकीकांतरूपा पादावभ्यंजयंतीसाश्रीदिव्याश्चरणांतिके नि
शीथेपंचकेपूज्यादिव्यगंधानुलेपनैः पंकजैःपूजयेद्देवींनमोदेव्यैश्रियेइति देवकीत्सेनमस्तेस्तुकृष्णोत्पादनतत्परा पाप-
क्षयकरीदेवीतुष्टिःस्यात्तुमयार्चिता प्रणवादिनमोंतंचपृथक्नामानुकीर्तनं कुर्यात्पूजाविधिज्ञश्चसर्वपापापनुत्तये देवक्यैव
सुदेवायवासुदेवायचैवहि बलदेवायनंदाययशोदायैपृथक्पृथक् क्षीरादिस्नपनंकृत्वाचंदनेनानुलेपयेत् विधुंतरस-
मीच्छंतिकेचिदत्रैवसूरयः चंद्रोदयेशशांकायअर्घ्यंदत्वाहरिंस्मरन् अनंतंवामनंशौरिंवैकुंठंपुरुषोत्तमं वासुदेवंहृषीके
शंमाधवंमधुसूदनं वराहंपुंडरीकाक्षंनृसिंहंब्राह्मणप्रियं गोपीशंपुंडरीकाक्षंसृष्टिस्थित्यंतकारकं अनादिनिधनंविष्णुं

त्रैलोक्येशंत्रिविक्रमं नारायणंचतुर्बाहुंशंखचक्रगदाधरं पीतांबरधरंनित्यंवनमालाविभूषितं श्रीवत्सांकंजगत्सेतुंश्रीप-
तिंश्रीधरंहरिम् योगेश्वरायदेवाययोगिनांपतयेनमः योगोद्भवायनित्यायगोविंदायनमोनमः यज्ञेश्वरायदेवायतथाजल
शायायच यज्ञानांपतयेनाथगोविंदायनमोनमः एभिर्मंत्रैःसमाराध्य अर्चयेत्पूजयेद्धरिं जगन्नाथनमस्तुभ्यंसंसार
भयनाशन जगदीशायदेवायभूतानांपतयेनमः धर्मेश्वरायधर्मायशंभवायजगत्पते धर्मज्ञायचदेवायगोविंदायनमोन-
मः मंत्रेणानेननैवेद्यंशयनादितथैवच चंद्रायार्घ्यंचमंत्रेण अनेनैवाथदापयेत् क्षीरोदार्णवसंभूत अत्रिगोत्रसमुद्भव गृ
हाणार्घ्यंशशांकेशरोहिण्यासहितोमम ज्योत्स्नापतेनमस्तुभ्यंज्योतिषांपतयेनमः नमस्तेरोहिणीकांतअर्घ्यंनःप्रतिगृह्य
तां स्थंडिलेस्थापयेद्देवंशशांकंरोहिणीयुतं देवकींवसुदेवंचनंदंचैवयशोदया बलदेवंमयासार्धंभक्त्यापरमयानृप संपू-
ज्यविधिवद्देहीकिंनाप्नोत्यतिदुर्लभं एकादशीनांविंशत्यःकोटयोयाःप्रकीर्तिताः ताभिःकृष्णाष्टमीतुल्याततोनंतचतुर्दशी
अर्धरात्रेवसोर्धारांपातयेद्धव्यसर्पिषा ततोवर्धापयेन्नालंषष्ठीनामादिकंमम कर्तव्यंतत्क्षणाद्रात्रौप्रभातेनवमीदिने यथा
ममतथाकार्योभगवत्यामहोत्सवः ब्राह्मणान्भोजयेद्भक्त्यातेभ्योदद्याच्चदक्षिणां हिरण्यंमेदिनींगावोवासांसिकुसुमानिच
यद्यदिष्टतमंतत्तत्कृष्णोमेप्रीयतामिति यंदेवंदेवकीदेवीवसुदेवादजीजनत् भौमस्यब्रह्मणोगुप्त्यैतस्मैब्रह्मात्मनेनमः न
मस्तेवासुदेवायगोब्राह्मणहितायच शांतिरस्तुशिवंचास्तुइत्युक्त्वातांविसर्जयेत् ततोबंधुजनोघंचदीनानाथांश्चभो-
जयेत् भोजयित्वासुशांतांस्तान्स्वयंभुंजीतवाग्यतः एवंयःकुरुतेदेव्यादेवक्याःसुमहोत्सवं प्रतिवर्षंविधानेनसभक्तो
धर्मनंदन नरोवायदिवानारीयथोक्तंलभतेफलं पुत्रसंतानमारोग्यंसौभाग्यमतुलंलभेत् इहधर्मरतिर्भूत्वामृतोवैकुंठमा
सुयात् तत्रदेवविधानेनवर्षलक्षंयुधिष्ठिर भोगान्नानाविधान्भुक्त्वापुण्यशेषादिहागतः सर्वकामसमृद्धेचसर्वाशुभ
विवर्जिते कुलेनृपातिशीलानांजायतेत्वद्वयोपम यस्मिन्सदैवदेशेतुलिखितंतुपटार्पितं ममजन्मदिनंयत्रसर्वालंकार

स्तूषितं पूजयेत्पांडवश्रेष्ठजनैरुत्सवसंयुतैः परचक्रभयंतत्रनकदापिभवेत्पुनः पर्जन्यःकामवर्षीस्यादीतिभ्योनभयंभ
वेत् गृहेवापूज्यतेतत्रदेवक्याश्चरितंमम तत्रसर्वसमृद्धिःस्यान्नोपसर्पादिकंभवेत् पशुभ्योनकुलाद्व्यालात्पापरोगाच्चपात
कात् राजतश्चौरतोवापिनकदाचिद्भयंभवेत् संसर्गेणापियोभक्त्याव्रतंपश्येदनाकुलं सोपिपापविनिर्मुक्तःप्रयातिहरिमंदि
रं जन्माष्टमीजनमनोनयनाभिरामापापापहास्कृतिनंविदधातिगोपाः योदेवकींसुतयुतांचभजेद्धितस्यांपुत्रानवाप्यस
मुपैतिपदंसविष्णोरिति व्यासउवाच निहत्तेभारतेयुद्धेकृतशौचोयुधिष्ठिरः उवाचवाक्यंधर्मात्माकृष्णंदेवकिनंदनं यु
धिष्ठिरउवाच त्वत्प्रसादाद्गुणोविंदनिहताःशत्रवोरणे कर्णाद्यानिहताःसैन्येत्वत्प्रसादाज्जनार्दन प्राप्तंनिष्कंटकंराज्यंकृ-
त्वाकर्मसुदुष्करं आचारोदंडनीतिश्चराजधर्माःक्रियान्विताः अधुनाश्रोतुमिच्छामिशक्रंजन्माष्टमीव्रतं जन्माष्टमीव्र
तंब्रूहिविस्तरेणममाच्युत कुतःकालेसमुत्पन्नंकिंपुण्यंकोविधिःस्मृतः श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिव्रताना
मुत्तमंव्रतं यतःप्रभृतिविख्यातंफलेनविधिनान्वितं राजवंशसमुत्पन्नैर्दैत्यानीकैःसुपीडिता धराभारभराक्रांताब्रह्मा
णंशरणंययौ ज्ञात्वातदाप्रभुर्ब्रह्माक्ष्मेभारंसमाहितः श्वेतद्वीपंसमागत्यसर्वदेवसमन्वितः समाहितमतिर्ब्रह्मामांतुष्टाव
विशांपते स्तुत्यास्मरागात्संप्रीतस्तेषांदृग्गोचरोभवम् दृष्ट्वामांप्रणिपत्याशुभक्तिभावसमन्वितः ब्रह्माणमग्रतःकृत्वातु-
ष्टाःसर्वेदिवौकसः विज्ञप्तुंमहाराजभूमिभारापनुत्तये उपधार्यतदातेषांवचनंचान्वचिंतयम् केनोपायेनहंतव्यादान
वाःक्षत्रियोद्भवाः स्वधर्मनिरताःसर्वेमहाबलपराक्रमाः ततोनिश्चित्यमनसाब्रह्माणमहमब्रुवम् वसुदेवोदेवकीचप्र
जाकामौपुरानृप भक्त्यामांभजमानौतौतस्यतुर्वैमहत्तपः तयोःप्रसन्नःसुप्रीतोयाचतांवरमुत्तमं अब्रुवंतावपिततोवर
यामासतुःकिल यदिदेवप्रसन्नोसित्वादृशोनौभवेत्सुतः तयोस्तच्चमयानाथाप्युक्तंप्रीतेनचेतसा तत्कामपूरणार्थाय-
संभविष्याम्यहंतयोः दिवौकसोपिस्वांशेनसंभवंतुसुरस्त्रियः योगमायाचनंदस्ययशोदायांभविष्यति देवक्याजठरे

गर्भमनंतधाममामकं सन्निकृष्यततस्तूर्णं रोहिण्याजठरेकुरु इतिसंदिश्यतान्सर्वानहमंतर्हितोभवम् ततोदेवैःसमं-
ब्रह्मातांदिशंप्रणिपत्यच आश्वास्यचमहादेवीं वरधात्रींजगामह ततोहंदेवकीगर्भमविशंस्वेनतेजसा हतेषुषट्सुबा-
लेषुदेवक्याऔग्रसेनिना कारागृहस्थितायांचवसुदेवेनवैसह गतेर्धरात्रसमयेसुप्तेसर्वजनेनिशि भाद्रेमास्यसित-
पक्षेऽष्टम्यांब्रह्मर्क्षसंयुजि सर्वग्रहशुभेकालेप्रसन्नहृदयाशये आविरासंनिजेनैवरूपेणान्यवनीपते वसुदेवोपिमांदृष्ट्वा
हर्षशोकसमन्वितः भीतःकंसादतितरांतुष्टावचकृतांजलिः पुनःपुनःप्रणम्याथप्रार्थयामाससादरं वसुदेवउवाच अलौ-
किकमिदंरूपंदुर्दर्शंयोगिनामपि यत्तेजसाऽरिष्टगृहमभवत्सुप्रकाशितं उद्विग्नोभगवन्कंसाद्योमेबालानघातयत् उपसंहर-
तस्मात्त्वमेतद्रूपमलौकिकं शंखचक्रगदापद्मलसत्कौस्तुभमालिकं किरीटहारमुकुटकेयूरवलयांकितं तडिद्वसनसंवी-
तंक्वणत्कांचनमेखलं स्फुरद्राजीवनामाक्षंस्निग्धांजनसमप्रभं महामरकतस्वच्छंकोटिसूर्यसमप्रभं कृष्णउवाच
एवंसंप्रार्थितोराजन्वसुदेवेनवैतदा तेनैवनिजरूपेणभूत्वाहंप्राकृतःशिशुः नयमांगोकुलमितिवसुदेवमचोदयं समादा-
यागमत्सोपिनंदगोकुलमंजसा द्वाराण्यपावृतान्यासन्ममप्रभावात्स्वयंप्रभो ददौमार्गंचकालिंदीजलकल्लोलमालिनी
ततोयशोदाशयनेन्यस्यचानकदुंदुभिः तत्पर्यंकेस्थितांगृह्यदारिकामगमत्पुनः द्वाराणिपिहितान्यासन्पूर्ववन्निगडंन
नः विन्यस्यपादयोरास्तेशयनेन्यस्यदारिकां ततोरुरोदमहतास्वरेणापूरयन्सादिशः तस्यारुदितशब्देनउत्थितारक्षकागृ-
हात् कंसायागत्यचाचख्युःप्रसूतादेवकीतिच सोपितल्पात्समुत्थायभयेनातीवविह्वलः जगामसूतिकागेहंदेवक्याः
प्रस्खलन्पथि दारिकांशयनाद्गृह्यरुदंत्याश्चैवस्वसुः अपोथयच्छिलापृष्ठेसापितस्यकराच्च्युता उवाचकंसमा-
भाष्यदेवीत्वाकाशगासती किंमयाहतयामंदजातःकुत्रापितेरिपुः इत्युक्तोसौसकंपोभूत्परमोद्विग्नमानसः आज्ञाप-
यामासततोबालानांकदनायवै दानवाअपिबालानांकदनंचक्रुरुद्यताः वनेषूपवनेचैवपुरग्रामवनेष्वपि अहंचगोकुलेस्थि-

त्वापूतनांबालघातिनीं स्तनंदातुंप्रवृत्तांत्वप्राणैः सममशोषयं तृणावर्तबकारिष्टान् धेनुकंकेशिनंतथा अन्यानपिखलान्हत्वास्व
प्रभावमदर्शयं ततश्चमथुरांगत्वाहत्वाकंसादिदानवान् ज्ञातीनांपरमंहर्षकृतवानस्मिसादरं देवकीवसुदेवौचपरिष्वज्यसुदाम
म आनंदजेजलेर्मूर्ध्निसिचयामासतुर्नृप तस्मिन्पुरवरेमल्लान्हत्वाचाणूरमुरव्यकान् गजंकुवलयापीडंकंसभ्रातॄननेकशः
एवंहतेक्रूरेकंसेसर्वलोकैककंटके अन्येषुदुष्टदैत्येषुसर्वलोकभयंकरे लोकाःसमुत्सुकाःसर्वेकृत्तुर्मांचसमाहृताः कृष्णाकृ
ष्णमहायोगिन्भक्तानामभयप्रद प्रलयात्पाहिनोदेवशरणागतवत्सल अनाथनाथसर्वज्ञसर्वभूतहितेरत किंचिद्विज्ञ
प्तुकामाहंतन्नोवक्तुंत्वमर्हसि नवजन्मदिनंलोकेनज्ञातंकेनचित्क्वचित् ज्ञात्वाचतव्रतःसर्वेकुर्मोवर्धापनोत्सवं तेषांदृष्ट्वाम
याभक्तिःश्रद्धांचमयिसौहृदं मयाजन्मदिनंतेभ्यःख्यातंनिर्मलचेतसा श्रुत्वातेपितथाचक्रुर्विधिनायेनतच्छृणु पार्थतद्दि
वसेप्रातेदंतधावनपूर्वकं स्नात्वापुण्यजलेशुद्धेवाससीपरिधायच निर्वर्त्यावश्यकंकर्मव्रतसंकल्पमाचरेत् अद्यस्थित्वा
निराहारःश्वोभूतेतुपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत गृहीत्वानियमंचैवसंपाद्यार्चनसाधनं मंडपंशोभनंकृ
त्वापुष्पमालादिभिर्युतं तस्मिन्संपूजयेद्भक्त्यागंधपुष्पाक्षतैःक्रमात् उपचारैःषोडशभिर्द्वादशाक्षरविद्यया सद्यःप्रसूतां
जननींवसुदेवंचमारिष बलदेवसमायुक्तांरोहिणींगुणशोभिनीं नंदंयशोदांगोपींश्चगोपान्गाश्चैवसर्वशः गोकुलंयमुनां
चैवयोगमायांचदारिकां यशोदाशयनेसुप्तांसद्योजातांवरप्रभां एवंसंपूजयेत्सम्यक्नाममंत्रैःपृथक्पृथक् सुवर्णरौ
प्यताम्रारमृदादिभिरलंकृताः काष्ठपाषाणरचिताश्चित्रमप्यथलेखिताः प्रतिमाविविधाःप्रोक्तास्तासुमांचनरोयजेत् रा
त्रौजागरणंकुर्याद्गीतनृत्यादिभिःसह पुराणैःस्तोत्रपाठैश्चजाननामादिषूत्सवैः श्वोभूतेपारणंकुर्याद्द्विजान्संभोज्ययत्न
तः एवंकृतेमहाराजव्रतानामुत्तमव्रतं सर्वान्कामानवाप्नोतिविष्णुलोकेमहीयते मोहान्नकुरुतेयस्तुयातिसंसारगह्वरे त ९१
स्मात्कुर्वन्प्रयत्नेननिष्पापोजायतेनरः अत्रैवोदाहरंतीममितिहासंपुरातनं अंगदेशोद्भवोराजामित्रजिन्नामनामतः त-

स्यपुत्रोमहातेजाः सत्यजित्सनृपथेस्थितः पालयामासधर्मज्ञोविधिवद्रंजयन्प्रजाः तस्यैवंवर्तमानस्यकदाचिद्दैवयोग
नः पारवंडैः सहसंवासोबभूवबहुवासरं तत्संसर्गात्सनृपतिरधर्मनिरतोभवत् वेदशास्त्रपुराणानिविनिंद्यबहुशोनृप ब्रा
ह्मणेषुतथाधर्मेविद्वेषपरसंगतः एवंबहुनियेकालेगतेभारतसत्तम कालेननिधनंप्राप्तोथमदूतवशंगतः बध्वापाशैर्नीयमा
नोयमदूतैर्यमांतिकं पीडितस्ताड्यमानोसौदुष्टसंगवशंगतः नरकेपतितःपापोयातनाबहुवत्सरं भुक्त्वापापस्यशेषेणपै
शाचींयोनिमास्थितः तृषाक्षुधासमाक्रांतोभ्रमन्समरुधन्वसु कस्यचित्त्वथवैश्यस्यदेहमाविश्यसंस्थितः सहतेनैवसं-
प्राप्तोमथुरांपुण्यदांपुरीं तत्रस्थैरक्षकैःसोथतद्देहात्तुबहिष्कृतः वध्यामविपिनेसोपिऋषीणामाश्रमेष्वपि कदाचिद्दैवयो
गेनममजन्माष्टमीदिने क्रियमाणांमहापूजांव्रतिभिर्मुनिभिर्द्विजैः रात्रौजागरणंचैवनामसंकीर्तनादिभिः ददर्शसर्वंवि
धिवच्छुश्रावचहरेःकथाः निःपापस्तत्क्षणादेवशुद्धनिर्मलमानसः प्रेतदेहंसमुत्सृज्यविष्णुलोकेविमानगः ममदूतैःस
मानीतोदिव्यभोगसमन्वितः ममसान्निध्यमापन्नोव्रतस्यास्यप्रभावतः नित्यमेवव्रतंचैतत्पुराणंसार्वकालिकं गीयतेविधि
वत्सम्यक्मुनिभिस्तत्वदर्शिभिः सर्वकालिकमेवैतत्कृत्वाकामानवाप्नुयात् एतत्तेसर्वमाख्यातंव्रतानामुत्तमंव्रतं ममसांनि
ध्यकृद्राजन्किंभूयःश्रोतुमिच्छसि युधिष्ठिरउवा० उद्यापनविधिंब्रूहिसर्वदेवदयानिधे येनसंपूर्णतांयातिव्रतमेत-
दनुत्तमं श्रीकृष्णउवाच पूर्णांतिथिमनुप्राप्यवित्तचिंतादिसंयुतः पूर्वेद्युरेकभक्ताशःस्वपन्मांसंस्मरन्हृदि प्रा
तरुत्थायसंस्मृत्यपुण्यश्लोकान्समाहितः निर्वर्त्यावश्यकंकर्मब्राह्मणान्स्वस्तिवाचयेत् गृहमानीयधर्मज्ञंवेदवेदांग
पारगं वृणुयादृत्विजश्चैववस्त्रालंकरणादिभिः पलेनवातदर्धेनतदर्धार्धेनवापुनः शक्त्यावापिनृपश्रेष्ठवित्तशाठ्यवि
वर्जितः सौवर्णींप्रतिमाकार्यापाद्यार्घ्याचमनीयकं पात्रंसंपाद्यविधिवत्पूजोपकरणंतथा गोचर्ममात्रंसंलिप्यमध्येमंड
लमाचरेत् ब्रह्माद्यांदेवतास्तत्रस्थापयित्वाप्रपूजयेत् मंडपंस्त्वयेत्तत्रकदलीस्तंभमंडितं चतुर्द्वारसमोपेतंफलपुष्पा

दिशोभितं वितानंनवभोयादिचित्रैश्चैवशोभनं मंडलेस्थापयेत्कुंभंताम्रंवामृन्मयंशुभं तस्योपरिन्यसेत्पात्रंराजतंवेणवंतु वा वाससाच्छाद्यकौंतेय पूजयेत्तत्रमांबुधः उपचारैःषोडशभिर्मंत्रैरेतैःसमाहितः ध्यात्वाषाद्यामूर्तीह्न्यस्वागतादिभिरादरा त् ध्यात्वाचतुर्भुजंदेवंशंखचक्रगदाधरं पीतांबरयुगोपेतंलक्ष्मीयुक्तंविभूषितं लसत्कौस्तुभशोभाढ्यंमेघश्यामंसुलोचनं ध्यानं आगच्छदेवदेवेशजगद्योनेरमापते शुद्धेस्मिन्नधिष्ठानेसन्निधेहिकृपांकुरु आवाहनं देवदेवजगन्नाथगरु- डासनसंस्थित गृहाणचासनंदिव्यंजगत्त्रातर्नमोस्तुते आसनं नानातीर्थात्हृतंतोयंनिर्मलंपुष्पमिश्रितं पाद्यंगृहाणदेवे शविश्वरूपनमोस्तुते पाद्यं गंगादिसर्वतीर्थेभ्योमयानीतंसुशीतलं गंधपुष्पाक्षतोपेतंगृहाणार्घ्यंनमोस्तुते अर्घ्यं कृष्णावेणीसमुद्भूतंकालिंदीजलसंयुतं गृहाणाचमनंदेवविश्वकायनमोस्तुते आचमनं दधिक्षौद्रंघृतंशुद्धंकपिलायाःसु गंधियत् सुस्वादुमधुरंशौरेमधुपर्कंगृहाणमे मधुपर्कंपुनराचमनं पयोदधिघृतंचैवशर्करामधुसंयुतं पंचामृतेनस्नपनं- लक्ष्मीकांतनमोस्तुते पंचामृतं मंदाकिनीगोतमीचयमुनाचसरस्वती ताभ्यःस्नानार्थमानीतंगृहाणशिशिरंजलं स्नानं शुद्धजांबूनदमयंव्यतडिद्भासुररोचिषी मयोपपादितेतुभ्यंवाससीप्रतिगृह्यतां वस्त्रयुग्मं यज्ञोपवीतं किरीटकुंडलादी निकांचीवलययुग्मकं कौस्तुभंवनमालांचभूषणानितवप्रभो भूषणानि मलयाचलसंभूतंघनसारंमनोहरं हृदयानंद नंचारुचंदनंप्रतिगृह्यतां चंदनं अक्षताश्चसुरश्रेष्ठाःकुंकुमाक्ताःसुशोभनाः अखंडिताश्चदेवेशमयादत्ताहिभक्तितः कुंकुमाक्षतान् मालतीचंपकादीनियूथिकाबकुलानिच तुलसीपत्रमिश्राणिगृहाणसुरसत्तम पुष्पाणि इतिपरिवा रदेवतापूजा अथांगपूजा अघनाशनाय॰ पादौपू॰ वामनाय॰ गुल्फौपू॰ शौरये॰ जंघेपू॰ वैकुंठवासिनेन॰ ऊरूपू॰ पुरुषोत्तमाय॰ मेढ्रंपू॰ वासुदेवाय॰ कटीपू॰ हृषीकेशाय॰ नाभिंपू॰ माधवाय॰ हृदयंपू॰ मधुसूदनाय॰ कंठंपू॰ वरा हाय॰ बाहूपू॰ नृसिंहाय॰ हस्तौपू॰ दैत्यसूदनाय॰ मुखंपू॰ दामोदराय॰ नासिकांपू॰ पुंडरीकाक्षाय॰ नेत्रेपू॰ गरुडध्वजा

य० श्रोत्रेपू० गोविंदाय० ललाटंपूजं० अच्युताय० शिरःपू० कृष्णाय० सर्वांगंपू० देवकीवसुदेवंचरोहिणींसबलांतथा स
त्यकिंचोद्धवाक्रूरावुग्रसेनादियादवान् नंदयशोदातत्कालेप्रसूतागोपगोपिकाः कालिंदींकालियंचैवपूजयेन्नाममंत्रतः
वनस्पतिरसोद्भूतकालागरुसमन्वितं धूपंगृहाणगोविंद गुणसागरगोपते धूपं आज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया
दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह दीपं शाल्योदनपायसंचसिताघृतविमिश्रितं नानापक्वान्नसंयुक्तंनैवेद्यंप्रतिगृह्य
तां नैवेद्यं उत्तरापो० इदंफलमितिफ० पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां नीराजयेच्चततोभक्त्यामंगलसमुदीरय
न् जयमंगलनिर्घोषैर्देवदेवंसमर्चयेत् नीराजनं दत्वापुष्पांजलिंचैवप्रदक्षिणपुरःसरं प्रणमेद्दंडवद्भूमौभक्तिप्रह्वः पुनः
पुनः स्तुत्वानानाविधैःस्तोत्रैःप्रार्थयीतजगत्पतिं नमस्तुभ्यंजगन्नाथदेवकीतनयप्रभो वसुदेवात्मजानंतयशोदानंद
वर्धन गोविंदगोकुलाधारगोपीकांतनमोस्तुते ततस्तुदापयेदर्घ्यमिंदोरुदयतःशुचिः कृष्णायप्रथमंदद्याद्देवकीसहि
तायच नारिकेरेणशुद्धेनदद्यादर्घ्यंविचक्षणः कृष्णायपरयाभक्त्याशंखंकृत्वाविधानतः जातःकंसवधार्थायभूभारोत्तार
णायच गृहाणार्घ्यंमयादत्तंदेवकीसहितोहरे कृष्णार्घ्यमंत्रः शंखंकृत्वाततस्तोयंसपुष्पफलचंदनं जानुभ्यामवनिंग
त्वाचंद्रायार्घ्यंनिवेदयेत् क्षीरोदार्णवसंभूतअत्रिगोत्रसमुद्भव गृहाणार्घ्यंमयादत्तंरोहिण्यासहितःप्रभो ज्योत्स्नापतेनम
स्तुभ्यंनमस्तेज्योतिषांपते नमस्तेरोहिणीकांतगृहाणार्घ्यंनमोस्तुते चंद्रार्घ्यमंत्रः इत्थंसंभाव्यदेवेशंरात्रौजागरणंचरेत्
गीतनृत्यादिनाचैवपुराणश्रवणादिभिः प्रत्यूषेविमलेस्नात्वापूजयित्वाजगद्गुरुं पायसेनतिलाज्यैश्चमूलमंत्रेणमंत्रितः
अष्टोत्तरशतंहुत्वाततः पुरुषसूक्ततः इदंविष्णुरितिप्रोक्ताजुहुयाद्घृताहुतीः होमशेषंसमाप्याथपूर्णाहुतिमतःपरं आचा
र्यंपूजयेद्भक्त्याभूषणाच्छादनादिभिः गामेकांकपिलांदद्याद्व्रतसंपूर्णहेतवे पयस्विनींसुशीलांचसवत्सांसगुणांतथा स्वर्ण
शृंगींरौप्यखुरींकांस्यदोहनिकायुतां रत्नपुच्छांताम्रपृष्ठींकंठेघंटासमन्विताम् वस्त्रच्छन्नांदक्षिणाढ्यामेवंसंपूर्णतांयजेत्

कपिलायाअभावेतुगोरन्यापिप्रदीयते ततोदद्याच्चऋत्विग्भ्योअन्येभ्यश्चैवदापयेत् ब्राह्मणान्भोजयित्वाथभुंजीतसहबंधुभिः
एवंकृतेमहाराजन्व्रतोद्यापनकर्मणि निःपापस्तत्क्षणादेव जायतेविबुधोपमः पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः भु
क्त्वाभोगान्चिरंकालमंतेममपुरंव्रजेत् इतिश्रीभविष्यपुराणेकृष्णयुधिष्ठिरसंवादेजन्माष्ट॰व्रतोद्या॰संपूर्णं अथ
भाद्रशुक्लाष्टम्यांज्येष्ठर्क्षेज्येष्ठाव्रतं इदंचज्येष्ठायोगवशेनपूर्वविद्धायांपरविद्धायांवाकार्यं दिनद्वयेतद्योगेपरेवनोचेत्पू
र्वा ज्येष्ठापूजनंलैंगे कन्यास्थार्केष्टमीशुक्लाज्येष्ठर्क्षेमहतीस्मृता अलक्ष्मीपरिहारायज्येष्ठांतत्रप्रपूजयेत् कन्यार्कयो
गोत्रकेवलस्तावकएव मासस्तु भाद्रपदएवग्राह्यः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयुते यस्मिन्कस्मिन्दि
नेवापिज्येष्ठांदेवींप्रपूजयेत् हेमाद्रौ नवम्यासहकार्यास्यादष्टमीज्ञात्रसंशयः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठर्क्षसंयु
ता रात्रौयस्मिन्दिनेकुर्याज्ज्येष्ठायाःपरिपूजनं यस्मिन्दिनेभवेज्ज्येष्ठामध्यान्हादूर्ध्वमप्यणुः तस्मिन्हविष्यंपूजाचन्यू
नाचेत्पूर्ववासरे पूजादिनात्पूर्वदिनेअनुराधायामावाहनमुत्तरदिनेमूलेचविसर्जयेत् तथाचस्कांदे मैत्रेणावाहयेद्देवीं
ज्येष्ठायांतुप्रपूजयेत् मूलेविसर्जयेद्देवींत्रिदिनंव्रतमुत्तमं अथपूजा तिथ्यादिसंकीर्त्य ममामृतवंध्यादिदोषपरि
हारार्थंपुत्रपौत्रादिवृद्धयेदारिद्र्यनाशार्थंयथामिलितोपचारैःज्येष्ठापूजनंकरिष्ये त्रिलोचनांशुक्लदंतींबिभ्रतीकांचनीं
तनूम् विरक्तारक्तनयनांज्येष्ठांध्यायामिसुंदरीं ध्यानं एह्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठात्वंसर्वदेवा
नामत्समीपगताभव आवाहनं श्वेतसिंहासनस्थांतुश्वेतवस्त्रैरलंकृतां वरदंपुस्तकंपात्रंबिभ्रतींवैनमोनमः आसनं
ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि समुद्रमथनोत्पन्नेपाद्यंगृण्हनमोस्तुते पाद्यं श्रीखंडकर्पूरयुतंतोयंपुष्पेनसं
युतं गृहाणार्घ्यंमयादत्तंज्येष्ठेदेविनमोस्तुते अर्घ्यं ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ज्येष्ठेश्रेष्ठेतपोनिष्ठेब्रह्मि

ष्ठेसत्यवादिनि आचमनं पयोदधिघृतंचैवक्षौद्रशर्करयान्वितं पंचामृतंमयानीतंस्नानंगृण्ह सुरेश्वरि पंचामृतं मंदा
किन्याःसमानीतंहेमांभोरुहवासितं स्नानार्थंतेमयानीतंस्नानंकुरुजगन्मये स्नानं सूक्ष्मतंतुभवेश्वेतेधौतेनिर्मलवारि-
णा वारणेलोकलज्जायावाससीप्रतिगृह्यतां वस्त्रयुग्मं आचमनं हरिद्राकुंकुमंचैवकंठसूत्रंचताडकं सिंदूरंकज्जलं-
चारुषट्सौभाग्यंगृहाणभोः सौभाग्यद्रव्यं श्रीखंडंच० चंदनं अक्षताश्चसुरश्रेष्ठाः०अक्षतान् नूपुरंमेखलांकांचीकं
कणानिसुशोभने नासिकायांमयादत्तामुक्ताकांचनसंयुता अलंकारान् चंपकादिसुगंधीनि० पुष्पाणि वनस्पतिः०
धूपं० आज्यंचेतिदीपं गोधूमापिष्टशाल्यादितंडुलानांचकारयेत् हस्तप्रसृतिमात्रास्तुपूरिकाघृतपाचिताः शाल्योदनंसू
पयुक्तंदधिदुग्धघृतंतथा नानाव्यंजनसंयुक्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यंस० उत्तरापोशनं० करोद्वर्तनं० फलं०तांबूलं०हि
रण्यगर्भेतिदक्षिणा नीराजनं मंत्रपुष्पं प्रदक्षिणा नमस्कारः शार्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरैः अन्यैर-
प्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं पुष्पांजलिः त्वंलक्ष्मीस्त्वंमहादेवीत्वंज्येष्ठेसर्वदामरैः पूजितासिमयादेविवरदाभवमे
सदा इतिप्रार्थना पूजाविधिः अथकथा युधिष्ठिरउवाच० मृतवंध्यातुयानारीकाकवंध्यातथापरा गर्भस्रावीतृतीयाच
नानादोषैस्तुदूषिता निर्धनाश्चनरायेवैदारिद्र्येणहताश्चये कर्मणाकेनमुच्यंतेतन्मेब्रूहिजनार्दन श्रीकृष्णउवाच० मासिभा
द्रपदेशुक्लेपक्षेज्येष्ठायदाभवेत् रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनैः एवंविधिविधानज्ञाएभिर्मंत्रैश्चपूजयेत् ए
ह्येहित्वंमहाभागेसुरासुरनमस्कृते ज्येष्ठासिसर्वदेवानामत्समीपंगताभव श्वेतसिंहासनस्थात्वंश्वेतवस्त्रैरलंकृता व
रदंपुस्तकंपात्रंपाशहस्तेनमोनमः ज्येष्ठेश्रेष्ठेतपोनिष्ठेधर्मिष्ठेसत्यवादिनि समुद्रमथनोत्पन्नेज्येष्ठायैतेनमोनमः शा-
र्ङ्गबाणाब्जखड्गारिप्रासतोमरमुद्गरैः अन्यैरप्यायुधैर्युक्तांज्येष्ठेत्वामर्चयाम्यहं त्वंलक्ष्मीस्त्वंमहादेवीत्वंज्येष्ठेसर्वदामरैः पू
जितासिमयादेविवरदाभवमेसदा प्रार्थना पुत्रदारार्थिहत्यर्थंलक्ष्म्याश्चैवविवृद्धये अलक्ष्म्याश्चविनाशायसर्वकाले

द्विजोत्तम गुरुंसंपूजयेद्भक्त्यावस्त्रैराभरणादिभिः ततोद्वादशवर्षाणि पूजनीयाप्रयत्नतः यावज्जन्मतथापूर्वैर्विधिनांनेनमान
वैः ददातिवित्तंपुत्रांश्च अर्चनीयासदास्त्रिया अनेनविधिनाप्रोक्तां योहिपूजयतेनरः ज्येष्ठांतुपूजयेन्नारीतस्यालक्ष्मीर्विवर्ध
ते वंध्यातुलभतेपुत्रान्दुर्भगाइवतद्भवेत् एवंविधिविधानेनज्येष्ठादेवीसमर्चयेत् विघ्नास्तस्यप्रणश्यंतियथाफलव-
गंतथा तथाग्रान्यंकुरुश्रेष्ठज्येष्ठायाः शोभनंव्रतं नीराजनंकृतेचैवदीपोग्राह्यःस्वभक्तितः नैवेद्यसहितंप्राश्यव्रतीत्वग्रे-
युधिष्ठिर गुरुहस्तात्सदायाह्याद्दीपःप्रज्वलितोमहान् व्रतस्थोभक्तियुक्तश्चशुचिःप्रयतमानसः अनेनविधिनाचैवव्र
तंकार्यंयुधिष्ठिर ज्येष्ठानामपरंदेवीभक्तिमुक्तिप्रदायिनी यस्तुपूजयतेराजन्तस्मैसर्वंप्रयच्छति कृष्णउवाच मासिभा
द्रपदेशुक्लपक्षेज्येष्ठर्क्षसंयुगे तस्मिन्दिनेव्रतीकुर्याज्ज्येष्ठायाःपरिपूजनम् तत्राष्टम्यांयदावारोभानोर्ज्येष्ठर्क्षमेवच प्रति
वर्षंव्रतंयच्चर्वाविहितंकेवलंशुभे प्रातःस्नानंनरःकुर्यात्तस्यादेव्यादिनेशुभे भक्तियुक्तःशुचिःकुर्याज्ज्येष्ठादेव्यास्तुपूजनं
जलाशयात्तुपूर्वेद्युरानयेत्पंचशर्कराः देवीरूपंचतंत्रैवकृत्वावास्थापयेत्ततः गोमयेनोपलिप्तेचहैमींवाकारयेद्बुधः स्थाप
येद्राजतींतार्म्रींलेख्यांवापटकृत्ययोः आवाहयेत्ततोदेवीमथवापुस्तकेशिवा त्रिलोचनांशुक्लदंतांबिभ्रतींराजतींतनूं
विरक्तांरक्तनयनांज्येष्ठांध्यायाभिस्फूदर्शां इतिमंत्रेणतांदेवीमावाह्यस्वकृतीव्रती स्नानंदद्यात्तथायश्चपादयोरुभयोर्द्वि-
ज श्रीखंडकर्पूरयुतंदद्यादर्घ्यंचभक्तितः पंचामृततथास्नानंनिर्जलेनजलेनच वस्त्रंगंधंतथापुष्पंधूपदीपादिकंचयत्
पूजयित्वाचसौभाग्यैर्द्रव्यैर्नानाविधैःशुभैः गोधूमशालितंडुलैर्नानाद्रव्यैश्चनिर्मितं कृत्वाप्रस्तमात्रास्तुपूरिकाघृत
पाचिताः भक्त्यामयासुरेशानियदन्नंदीयतेतव तद्गृहाणमहादेविज्येष्ठेश्रेष्ठेनमोस्तुते निवेदनीयंयत्किंचिद्दद्याद्देव्यै-
प्रयत्नतः ततःस्तुत्वामहादेवींसर्वकामफलप्रदां ज्येष्ठायैतेनमस्तुभ्यंश्रेष्ठायैतेनमोनमः ज्येष्ठेश्रेष्ठतपोनिष्ठेधर्मिष्ठेस
त्यवादिनि ततःक्षमाप्यतांदेवींस्तुवीतस्तवनोत्तमैः ब्राह्मणान्भोजयेत्पश्चात्सुवासिन्यस्तथाबहु दासीदासाश्चसंभो

ज्यादीनांधकपणास्तथा देवींविप्रमनुज्ञाप्यस्वयंभुंजीतवाग्यतः भक्षयित्वातथाचम्यदेवींनत्वापुनःपुनः शयीतब्रह्मचर्ये
णकुर्यात्प्रातर्विसर्जनं एवमेवप्रकुर्याद्विव्रतंतुपरिवत्सरं ज्येष्ठाविसर्जनांतेतुशर्करांवारिणिक्षिपेत् दध्योदनंतथासाकंदे
यंस्वस्यशुभासये ज्येष्ठेदेविनमस्तुभ्यमलक्ष्मीनाशहेतवे पुनरेहिवत्सरांतेममगेहेशुभप्रदे एवंसंप्रार्थ्यतांदेवींगीतवा
द्यपुरःसरैः अपूपवटकान्दद्याद्ब्राह्मणेभ्यस्ततोद्विज कुर्यादेवंप्रयत्नेनसायंवार्थविसर्जयेत् विद्यार्थीमाप्नुयाद्विद्यां
स्त्रीकामःश्रियमेवच लक्ष्मीवान्जायतेमर्त्यःस्त्रीतुसोदेतभर्तारि विनायकेनसहितांदेव्याःकुर्याद्विसर्जनं सौवर्णींराज
तींताम्रींमृन्मयींवापिशक्तितः व्रतंस्वयंचकृतवान्सिद्धचाप्यकृताहेणः देव्यामहत्वंकथितंतवेदंविधिश्चमंत्राश्चैवसंस्तुत
स्तथा मंत्रोपिसायुज्यकरोव्रतस्यतथामयातेकथितंसदेव अथोद्यापनं यस्याःसिंहोरथेयुक्तोव्याघ्रश्चापिमहाबलः ज्येष्ठामह
मिमांदेवींप्रपद्येशरणंशुभां तामग्निवर्णांतपसाज्वलंतीमित्यावाह्य आपोहिष्ठेतितिसृभिः अभिषिंचेत् कृत्वाचाष्टदलं
पद्मंस्थापयेत्तत्रसव्रती नाममंत्रेणकुर्वीतपाद्यमर्घ्यंमथासनं स्नानमाचमनंचैवमधुपर्कंचकंचुकीं वस्त्रगंधाक्षताःपु
ष्पधूपदीपौप्रयत्नतः नैवेद्याचमनीयंचकरोद्वर्तनकंशुभं तांबूलदक्षिणादानंततोनीराजयेच्छुभां स्थापितेग्नौततःप
श्चाद्धोमंसप्ताष्टोत्तरंशतं द्रव्यैर्दधिमधुक्षीरघृतैःकुर्यात्प्रयत्नतः तर्पणंचततःकुर्यादेभिर्मंत्रैर्विचक्षणः ज्येष्ठायै० श्रेष्ठा
यै० सत्यायै० कलिनाशिन्यै० विद्यायै० वैनायक्यै० तपोनिष्ठायै० श्रियै० कृष्णायै० ब्रह्मिष्ठायै० विसृज्यचततोदेवींब्राह्म
णायनिवेदयेत् व्रतांतेप्रतिमांकुर्यात्सौवर्णींपलसंमितां कृष्णवस्त्रेणसंयुक्तामाचार्यायनिवेदयेत् वस्त्राभरणमाल्यादि
लेपनैःपूजयेद्द्विज प्रणिपत्यततःपश्चात्तस्मैसर्वंनिवेदयेत् अनेनविधिनायस्तुब्राह्मणानांचतुष्टयं ब्राह्मणान्भोजयेत्प
श्चात्स्वयंभुंजीतवाग्यतः ब्राह्मणांश्चततोनत्वायाचयेत्सर्वमंगलं एवंसुवासिनीभोज्यापूज्यासर्वसमृद्धये एवंकृतेव्रतेनस
म्यक्सर्वशांतिःप्रजायते धनधान्यसमृद्धिश्चआरोग्यंभवतिध्रुवं इतिश्रीभविष्योत्तरपुराणेज्येष्ठादेवीव्रतोद्यापनंसंपूर्णं

तथैवभाद्रशुक्लाष्टम्यांदूर्वाष्टमीव्रतं सापूर्वाग्राह्या श्रावणीदुर्गनवमीदूर्वाष्टमिहुताशनी पूर्वविद्वातुकर्तव्याशिवरात्रि
र्बलेर्दिनं इतिवृद्धयमवचनात् शुक्लाष्टमीतिथिर्यातुनोत्तरासाविधीयते इतिहेमाद्रिः मुहूर्तेरौहिणेष्टम्यांपूर्वा
वार्यदिवापरा दूर्वाष्टमीतुसाकार्याज्येष्ठामूलंचवर्जयेत् इतिउक्तं तत्पूर्वत्रज्येष्ठामूलयोगेकर्मकालव्याप्त्यभावेचद्व
ष्टव्यं दूर्वाष्टमीसदात्याज्याज्येष्ठामूलर्क्षसंयुता तथाच प्राप्तेभाद्रपदेमासिशुक्लाष्टम्यांतुभारत दूर्वामभ्यर्चयेद्भ
क्त्याज्येष्ठंमूलंचवर्जयेत् ऐंद्रर्क्षेपूजितादूर्वाहन्त्यपत्यानिनान्यथा भर्तुरायुर्हरामूलेतस्मात्तांपरिवर्जयेत् इतिमदनर
त्नेस्कांदे शुक्लेभाद्रपदेमासिदूर्वासंज्ञातथाष्टमी सिंहार्कएवकर्तव्यानकन्यार्कैकदाचन सिंहस्थेसान्तमास्सूर्येत्तूदिते
मुनिसत्तम मदनरत्नेस्कांदोक्तेः अगस्त्यउदितेनातपूजयेदमृतोद्भवाम् वैधव्यंपुत्रशोकंचदशाजन्मानिपंचच य
दातुभाद्रशुक्लाष्टम्यांअगस्त्योदयस्तदातत्पूर्वंकृष्णाष्टम्यांकार्यं शुक्लपक्षाभावेपिपौर्णिमांतमासेनभाद्रपदमात्र
लाभात् यदातुभाद्रपदेधिकस्तदासिंहार्कएवेतिउदाहृतवचनात् अधिमासेतुसंप्राप्तेनभस्यउदयेमुनेः अर्वागेवव्रतंका
र्यंपरतोनतुकुत्रचिदिति निर्णयदीपके स्कांदाच्चाधिकेएवकर्तव्यं इदंस्त्रीणांनित्यं यानपूजयतेदूर्वांमोहादिहयथा
विधि त्रीणिजन्मानिवैधव्यंलभतेनात्रसंशयः तस्मात्सर्वप्रयत्नेनप्रतिवर्षंवधूजनैः ज्येष्ठामूलादिरहितापूजयेच्चाष्टमीं
शुभां कर्तव्याचैकभक्तेनज्येष्ठामूलंयदाभवेत् ज्येष्ठामभ्यर्चयेद्भक्त्यानवंध्यांदिवसंनयेत् इतिभविष्योत्तरेनुकल्पेनानु
ष्ठानेनतुसर्वतोलोपः अथदूर्वाष्टमीव्रतं हेमाद्रौभविष्ये ब्रह्मन्भाद्रपदेमासिशुक्लाष्टम्यामुपोषितः पूजयेच्छंकरं
भक्त्यायोनरःश्रद्धयान्वितः सयातिपरमंस्थानंयत्रदेवस्त्रिलोचनः गणेशंपूजयेद्यस्तुदूर्वयासहितंमुने गणेशःशिवः फ
लानांशकलैर्दिव्यैर्गंधपुष्पैर्विलेपनैः दूर्वांपूजयतेशानंमुच्यतेसर्वपातकैः शुचौदेशेप्रजातायांदूर्वायांब्राह्मणोत्तम स्थाप्य
लिंगंततोगंधैःपुष्पैर्धूपैःसमर्चयेत् खर्जूरैर्नारिकेरैश्चमातुलिंगफलैस्तथा पूजयेच्छंकरंभक्त्यादूर्वायांविधिवद्द्विज दध्य

क्षतैर्द्विजश्रेष्ठ अर्घ्यंदद्यात्त्रिलोचने  दूर्वाशमीभ्यांसंपूज्यमानवःश्रद्धयान्वितः  सर्वैस्तुकृतजन्मस्यात्सर्वदेवैस्तुवंदितः वि
द्यामाप्नोतिविद्यार्थीपुत्रार्थीपुत्रमाप्नुयात्  धर्मानाप्नोतिधर्मार्थीकन्यार्थीलभतेचतां  मनसायद्यदिच्छेततत्तदाप्नोतिमानवः
यएवंपूजयेद्दूर्वांमूर्तेशंमानवःफलैः  सप्तजन्मजपापौघैर्मुच्यतेनात्रसंशयः  कृतोपवासःसप्तम्यामष्टम्यांपूजयेच्छिवं  दूर्वास
मेतंविप्रेंद्रदध्यक्षतफलैःशुभैः  दूर्वामंत्रः  त्वंदूर्वेमृतजन्मासिवंदितासिसुरैरपि  सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव
यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले  तथाविस्तृतसंतानंदेहित्वमजरामरे  तल्लिंगमंत्रैरीशानमर्चयेत्प्रयतःशुचिः  त
तःसंपूजयेद्विप्रान्फलैर्नानाविधैर्द्विज  अनग्निपक्वमश्नीयाद्दन्नंदधिफलंतथा  अक्षारलवणंब्रह्मन्नाश्नीयान्मधुनान्वितं  द
द्यात्फलानिविप्रेषुफलाहारःस्वयंभवेत्  प्रणम्यशिरसादूर्वांशिवंशिवमुपाश्नुते  एवंयःकुरुतेभक्त्यामहादेवस्यपूजनम्
गणत्वंयात्यसौब्रह्मन्मुच्यतेब्रह्महत्यया  एवंपुण्यापापहराअष्टमीदूर्वसंज्ञिता  चतुर्णामपिवर्णानांस्त्रीजनानांविशेष
तः  शुक्लाष्टम्यांतुसंप्राप्तेमासिभाद्रपदेतथा  दूर्वांप्रशस्तास्कंधेताप्युत्तराशाभिगामिनीं  पूजयेद्गृह्यमानीयगंधमाल्यानुले
पनैः  फलैर्मूलैस्तथाचैवधूपदीपैश्चपूजयेत्  अनग्निपक्वंयत्सर्वंनैवेद्यंचकथंचन  भोक्तव्यंचतथाब्रह्मन्नग्निपक्वंविस
र्जयेत्  दूर्वांकुरस्थांसंपूज्यप्रतिमांशंकरस्यच  यौवनंस्थिरमायातियत्रयत्राभिजायते  अष्टम्यांफलपुष्पैश्चखर्जूरैर्नारि-
केरकैः  द्राक्षामोदकपिष्टैश्चदाडिमैर्बदरैस्तथा  नारंगैर्जंबुकैश्चैवतथैवबीजपूरकैः  दध्यक्षतैःस्रजोभिश्चधूपैरेवसदी
पकैः  मंत्रेणानेनराजेंद्रशृणुष्वावहितोनृप  दत्वार्घ्यंपश्चाद्विप्रेभ्यःफलंचविविधंप्रभो  तिलपिष्टकगोधूमधान्यपिष्टानि
पांडव  भोजयित्वास्वकृत्तन्मित्रंस्वयंबंधुजनैस्तथा  ततोभुंजीततच्छेषंस्वयंश्रद्धासमन्वितः  कर्तव्याश्चैकभक्तेनज्येष्ठामूलं
यदाभवेत्  दूर्वामभ्यर्चयेद्भक्त्यानवंध्यंदिवसंनयेत्  पक्षेभाद्रपदस्यैवंशुक्लाष्टम्यांयुधिष्ठिर  दूर्वाष्टमीव्रतंपुण्यंयःकरो-
तीहमानवः  नतस्यक्षयमाप्नोतिसंततिःसप्तपौरुषी  नंदतेवर्धतेनित्यंयथादूर्वातथाकुलं  इतिश्रीभवि० दूर्वाष्ट०संपूर्णं

अथ भाद्रशुक्लाष्टमीमारभ्य षोडशदिनपर्यंतं महालक्ष्मीव्रतं तच्चार्द्धरात्रमतिक्रम्य वर्तिन्यां अष्टम्यां कार्यम् तदुक्तं चंद्रप्रकाशे स्मृत्यंतरे अर्धरात्रमतिक्रम्य वर्तते यात्तरा तिथिः तस्यां ज्येष्ठायुतायां प्रारंभः कार्यः तथाच स्कांदे मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठायुताष्टमी मारभ्य व्रतं तत्र महालक्ष्म्या यतात्मभिः तदभावे केवलायामपि कार्यम् समापनं तु कृष्णाष्टम्यां चंद्रोदयव्यापिन्यां कार्यं चंद्रोदयव्रते चैव तिथिस्तात्कालिकी भवेत् दिनद्वये चंद्रोदयसत्वे च कृष्णपक्षेऽष्टमी चैवेत्यादि वाक्यात् पूर्वैव अपरे दिने चंद्रोदयोत्तरं त्रिमुहूर्ता चेत् परैव तदुक्तं मदनरत्ने पुराणसमुच्चये पूर्वापरविद्धावाग्राह्या चंद्रोदये सदा त्रिमुहूर्ता तु सा पूज्या परतश्चोर्ध्वगामिनी अथ व्रतविधिः हेमाद्रौ स्कांदे अथ पूजनं आलयं ते हृत्कथितं कमले कमलालये विमले कमले त्वस्मिन् स्थितिं त्वं कृपया कुरु आवाहनं कमले पाहि मे देवि स्वर्णसिंहासनं शुभं गृहाणेदं मया दत्तं भक्तियुक्तेन चेतसा आसनं गंगादिसलिलाधारं तीर्थमंत्राभिमंत्रितं दूरयात्राश्रमहरं पाद्यं मे प्रतिगृह्यतां पाद्यं अर्घ्यम् आचम्य जगदाधारे सिद्धिलक्ष्मी जगत्प्रिये चपले देवि तेदत्तं तोयं गृण्ह नमोस्तु ते आचमनं पयोदधिघृतक्षौद्रसितया च समर्पितं स्नानं पंचामृतेनाद्य कुरु देवि दयानिधे पंचामृतं इदं तव महालक्ष्म्याः कर्पूरागरुवासितं तीर्थेभ्यः सुसमानीतं स्नानार्थं प्रतिगृह्यतां स्नानं सूक्ष्मतंतुभवं वस्त्रं निर्मितं विश्वकर्मणा लोकलज्जाहरं देवि गृहाण सुरसत्तमे वस्त्रं कंचुकीं नानासौभाग्यद्रव्यं मलयाचलसंभूतं घनसारमनोहरं शीतलं बहुलामोदं चंदनं प्रतिगृह्यतां चंदनं नीलोत्पलं महामोदं मत्तालिकुलसंकुलं आनंदनंदनोत्पन्नपद्मं गृण्ह नमोस्तु ते पुष्पाणि अथ नामपूजा श्रियै नमः लक्ष्म्यै न० वरदायै० विष्णुपत्न्यै० क्षीरसागरवासिन्यै० हिरण्यरूपायै० सुवर्णमालिन्यै० पद्मवासिन्यै० पद्मप्रियायै० मुक्तालंकारिण्यै० सूर्यायै० चंद्राननायै० विश्वमूर्त्यै० मुक्त्यै० मुक्तिदात्र्यै० ऋद्ध्यै० समृद्ध्यै न० तुष्ट्यै० पुष्ट्यै० धनेश्वर्यै० श्रद्धायै० भोगिन्यै० भोगदायै० धात्र्यै० गंधसंभारसन्नद्धक

स्तूरीमोदसंभवं सुरासुरनरानंदि धूपंदेवि गृहाणमे धूपं मार्तंडमंडलाखंडचंद्रबिंबाग्नितेजसा निधानंदेवि दीपोयंनिर्मि
तस्तवभक्तितः दीपं देवतालयपातालभूतलाधारधान्यजं षोडशाकारसंभारंनैवेद्यंतेनमःसदा नैवेद्यं स्नानादिकंवि
धीयंतेयतःशुद्धिःप्रजायते एतदाचमनीयंचमहालक्ष्मीर्विधीयतां आचमनं करोद्वर्तनं पातालतलसंभूतंचंदनाभो-
जभूषणं नानागुणसमाकीर्णंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां आज्यंचेतिनीराजनं शारदेंदुकलाकां
तिःस्निग्धनेत्राचतुर्भुजा पद्मयुग्माचाभयदाकरव्यग्रकरांबुजा पुष्पांजलिं विष्णोर्वक्षसिपद्मेचशंखेचचक्रेगदावरे लक्ष्मीदे
विवसस्यासित्वंमर्थिनित्यंतथानव प्रार्थना उत्तार्यदोरकंबाहोर्लक्ष्मीपार्श्वेनिवेदयेत् लक्ष्मीदेविगृहाणत्वंदोरकंयन्मयाधृतं कु
र्यांस्तुत्वास्कुवर्णंचदत्वाचार्यायदक्षिणां एवंनिर्वर्त्यविधिवत्पूजनंबटुकस्यच चातुर्वर्ण्यंचसंभोज्यंयथाशक्त्याचदक्षिणा
दीपांश्चषोडशापूपान्गोधूमानांद्विजातये दत्वातत्संख्ययाभक्त्यारात्रौजागरणंचरेत् चंद्रोदयेचसंजातेअर्घ्यंदद्यात्ततोव्रती मं-
त्रेणानेनविप्रेंद्रशंखेनांबुफलान्वितं नमोस्तुतेनिशानाथलक्ष्मीभ्रातर्नमोस्तुते व्रतसंपूर्णतायात्वंगृहाणार्घ्यंनमोस्तुते चंद्रार्घ्यं
प्रातर्विसर्जयेद्देवींमंत्रेणानेनसुव्रत पंकजेदेविसंत्यज्यसमवेश्मनिसंविश यथासापुत्रभृत्याहंसुखीस्यांत्वत्प्रसादतः विस
र्जनं इतिपू० अथकथा स्कंदउवाच सौभाग्यजननंस्त्रीणांदौर्भाग्यपरिहंतनं परमैश्वर्यजननंतद्व्रतंब्रूहिशंकर ईश्वरउ०
साधुसाधुमहाबाहोयत्पृष्टोहंत्वयानघ तत्राहंसंप्रवक्ष्यामिव्रतानामुत्तमंव्रतं येनचीर्णेननरोदुर्गतिंयातिकर्हिचित् सुभगा
दुर्भगावापिस्त्रियोवाविधवागुह अस्तिदेव्याव्रतंपुण्यंमहालक्ष्म्याःषडानन नारीणांचनराणांचसर्वदुःखापहंतथा देवा
सुरमभूद्युद्धंपूर्णमब्दशतंपुरा वृत्रेसुराणामधिपेदेवानांचपुरंदरे तत्रदेवैर्महावीर्यैर्नारायणबलाश्रयात् असुरानिर्जिताःस
र्वेपातालतलमाययुः केचिद्विलंघिताःकेचित्प्रविष्टावरुणालयं गिरिदुर्गंसमाश्रित्यकेचित्तस्थुर्महाबलाः तत्रकोलासुरोना
ममहावीर्योमहाबलः गोमंतदुर्गंसंदुर्गंगिरिमाश्रित्यनिर्भयः याराजकन्यकालोकेरूपवत्यामहागुणाः आनीयगिरिदुर्गस्था

रमयामाससर्वशः रमयित्वापितास्तत्रकामरूपीविहंगमः एतस्मिन्नेवकालेतुआगतोमुनिसत्तमो श्रुतिप्रभावसंपन्नोपुलस्त्योगोत
मस्तथा तीर्थयात्राप्रसंगेनश्रुत्वावाक्यंजनस्यतत् कोलासुरजयमितिकन्याहेतोःशिखिध्वज तावूचतुर्जनंसर्वमगस्त्योस्तिमहा
मुनिः येनतोयनिधिःपीतोविंध्याचलनिवासिना वातापिल्वलनामानौदैत्यौयेनविनाशितौ तंगच्छामोवयंसर्वेकोलासुरवधा
यच इत्यामंत्र्यजनाःसर्वेगत्वाचमभिवाद्यच ऊचुःसर्वंयथावृत्तंकोलासुरविचेष्टितं तच्छ्रुत्वाभगवानाहमेत्रावरुणरम्यधीः
सृष्टिस्थितिविनाशानांकारणंभक्तवत्सलाः रामस्यादौतपस्यंतिब्रह्मविष्णुमहेश्वराः तिस्रःसंध्यामूर्तिमत्यस्तेषांशुश्रूषणेर
ताः प्रविश्यतामहालक्ष्मीःशक्तिरूपेणसंस्थिता सर्वशक्तियुतादेवीलोकानांहितकाम्यया इत्युक्त्वात्वरितंगत्वाकोलासुरवधा
र्थये निवेद्यनिखिलंतेभ्यस्तस्थुःप्रांजलयोजनाः तच्छ्रुत्वानिखिलंतेभ्योब्रह्मविष्णुमहेश्वराः संध्यात्रयंसमाहूयवाचंप्रोचुर्ज
नेश्वराः हनिष्यतिमहालक्ष्मीर्युद्धेकोलासुरंरिपुं भगवत्योमूर्तिमत्योदंडशूलादिभिर्वरैः आयुधैर्विविधैःकृत्वाजयमाप्स्यथ-
संयुगे युष्माकंतुसहायोसौयुष्मत्क्रोधसमुद्भवः भूतनाथोभूतमन्युर्यःसहायोभविष्यति इत्युक्त्वात्वरितंगत्वारुरुधुः
कोलराक्षसं निरुध्यचपुरींदेव्योजगर्जुर्जलदस्वनाः भिंदत्यश्चदिशस्तद्वद्धैर्यंत्यश्चततःक्रुधः कोलासुरोपितच्छ्रुत्वाप्रो
त्पपातमहासनात् रोषेणक्रोधताम्राक्षोमेरोरिवमृगांतकः हस्त्यश्वरथपादातचतुरंगबलान्विता निर्ययौसततनायोधुं कालिका-
याइवाशनिः सकुंडलशिरस्त्राणकवचीधृतबाणधीः बद्धगोधांगुलित्राणःकृद्धोन्तकइवापरः ततोराक्षससैन्यंतद्भूतनाथेनसं-
गतं देवनारीमनोल्लासियुद्धंचक्रेतिभीषणं महारावैर्भीमघोषैर्बाणैःकेंकारानिःस्वनैः गौरवराणांनिनादैश्चलोकःशब्दमयो
भवत् जयभिंधीतिवदतांधावतामितरेतरं बद्धेसमरंघोरंमुष्टामुष्टिकचाकचि उद्धतोराक्षसबलेभूतनाथोमहाबलः ममर्द-
राक्षसानांकंशरवर्षैश्चदारुणैः हतंदृष्ट्वासुरबलंक्रुद्धःकोलासुरोरणे अभिद्रुत्यगदापाणिस्ताडयामासभैरवं ययौमूर्छां
महावीर्यस्तेनाभिहतमस्तकः ततोदेव्योतिवेगेनत्वभिदुद्रुवुरुद्धते त्रिशूलैरभिजघ्नुस्तंपट्टिशैश्चव्यघातयन् मुष्टिभि-

स्ताडयामासनरेवेश्याभिव्यदारयत् पादघातैःसमाजघ्नःसिंहःकरिवरंयथा सकुंडलशिरस्त्राणोदष्टोष्ठोरक्तलोचनः हतभ्रु
कुटिवक्त्रोसौराक्षसस्तांमुहुर्मुहुः गदयाताडयामासशिरःकंठांसकुक्षिषु बभंजुस्तांगदांतांतुहसंत्यस्तामदाकुलाः ततोध
नुर्धरोभूत्वाबाणजालमवाकिरत् तासांशरीरमर्माणिभिंदंश्चबपुरोगमैः ननादबहुवैरासौन्त्दयंश्चाभिनच्छरैः ततःक्रुद्धत
रास्तास्तुपादेनजगृहुर्भृशं आकाशेभ्रामयित्वातंचिक्षिपुर्गगनेक्रुधा सोप्यासुरोपिपतितोयावदुत्थातुमिच्छति तावन्निर्ग-
त्यलक्ष्मीस्तंपादाभ्यामत्यपीडयत् तत्पादपीडितोदैत्योविह्वलन्यनयनेभृशं मुक्तकंठस्वनंकृत्वाततोमोहमुपेयिवान् ततोदेवाः
सगंधर्वामनुष्याऋषयोस्तुवन् देवनाथाश्चदेव्यश्चननृतुःसमुदाकुलाः देवदुंदुभयोनेदुःपुष्पवृष्टिःपपातह दिशःप्रसेदुर्मरुतो
ववुर्मंदरवंजगत् स्फुरत्स्फुरशिरोरत्नापीडितांघ्रिसरोरुह दिव्यादिव्येनयानेनयांतिकोलापुरंप्रति आयांतीपद्मजांवीक्ष्यमुक्तपा
दविश्वरवलः तुष्टावपरयाभक्त्याराजकन्यागणोमुदा राजकन्याऊचुः वंदारुवीरस्फुरद्वृंदकिरीटरत्नरोचिश्छटानिकरकल्मि
तरत्नदीपम् देवित्वदीयचरणंशरणंजनानांसेवामहेसकलमंगलवर्धनाय उत्फुल्लकैरवदलायतलोचनायेगंडोल्लसच्चपल
कुंडलमंडितांये राकाशशिप्रमितिभदाननकोमलांयेतस्यैनमःकमललोचनवल्लभाये सद्भक्तकल्पलतिकांकरिकंठभूषांकेयूर
हेमकटकोज्ज्वलकंकणांकां संसारसागरसुरवेपननौममाद्यैर्हित्वदीयकरयष्टिमनंगमातः हृष्टादेविजनाजयायविविधा
ब्रह्माधिपत्यगताविष्णुर्वक्षसियांचकारतरलांलीलाञ्जमालाभ्रमं केशाग्रमहितत्वदीयचरणद्वंद्वाब्जसेवारतंकारुण्यामृ
तसारपूरितदृशामामेवपाहीश्वरि मल्लिकाफुल्लकुसुमोज्ज्वलमध्यभागधम्मिल्लभारांजनतारकवृंदशोभाम् उत्तप्तहेम-
निकषोज्ज्वलकायकांतिलक्ष्मीस्वयंप्रणमतांश्रियमातनोति इतिस्तुत्वामहालक्ष्मीभक्तानामिष्टदायिनी योगिन्योद्यप्रभविष्य
ध्वमितितासांवरंददौ दृष्ट्वातास्तुमुदादेवीसारूप्यंचप्रदापयन् ताभिर्निषेवितादेवीवरंवर्यंददौमुदा राजकन्यास्ततःस-
र्वामुक्ताःस्वपुरमाययुः ततःप्रभृतिलोकेषुपूज्यास्युःसर्वकामदाः ताश्चतुःषष्टियोगिन्योमहालक्ष्मीपरिग्रहात् नृत्यंतिनि

वंहेस्तत्रगीतवादित्रनिःस्वनैः पुरादेव्यामहालक्ष्म्याकरहाटपुरेनिशि एवंप्रभावासादेवीविष्णुरामाषडानन व्रतस्यास्यवि
धानंचशृणुमत्तोविधानतः मासिभाद्रपदेशुक्लेपक्षेज्येष्ठासुताष्टमी मारभ्यव्रतंतत्रमहालक्ष्म्यायतात्मभिः करिष्यामिव्र
तंदेवित्वद्भक्तस्त्वत्परायणः तदविघ्नेनमेयातुसमाप्तिंत्वत्प्रसादतः इत्युच्चार्यततोबध्नीयादोरकंदक्षिणेकरे षोडशग्रंथि-
सहितंगुणैःषोडशभिर्युतम् ततोन्वहंमहालक्ष्मींपूजयेन्नियतात्मवान् गंधपुष्पैःसनैवेद्यैर्यावत्कृष्णा
ष्टमीदिनम् तस्मिन्दिनेतुसंप्राप्ते कुर्यादुद्यापनंव्रती वस्त्रमंडपिकांकृत्वामाल्याभरणशोभिताम्
त्रिभूमिकांचलश्लक्ष्णांनानादीपैश्चशोभितां चतस्रःप्रतिमाःकृत्वासौवर्णास्तत्स्वरूपिणीः स्नपनंकारयेत्तासांपंचामृतवि
धानतः षोडशैरुपचारैश्चधूपदीपादिभिस्तथा जागरंतत्रकर्तव्यंगीतवादित्रनिःस्वनैः ततोनिशीथेसंप्राप्तेभ्युदितेमृगनदी
धितौ कृत्वातुस्थंडिलेपद्मंषडंगंपूजयेत्ततः दद्यादर्घ्यंचरागेणव्रतांतस्मैसमाहितः क्षीरोदार्णवसंभूतचंद्रलक्ष्मीसहोद
र पीयूषधामन्रोहिण्यासहितोर्घ्यंगृहाणवै क्षीरोदार्णवसंभूतेकमलेकमलालये प्रयच्छसर्वकामान्मेविष्णुवक्षस्थ-
लाशये पुत्रानदेहियशोदेहिदेहिसौभाग्यमेवच कालिकालिमहाकालिविकरालिनमोस्तुते त्रैलोक्यजननित्राहिवरदेभ-
क्तवत्सले भक्तनाथेजगन्नाथेजमदग्निप्रियेनघे रेणुकेत्राहिमांदेविराममातःशिवंकुरु कुरुश्रियंमहालक्ष्मीअप्रियंत्वाशु
नाशय मंत्रैरेतैर्महालक्ष्मीमर्घ्यैश्चाभियोषितः श्रीसूक्तेनतथावन्हौपद्मानिजुहुयाच्छुचिः पायसंचैवबिल्वानितद्दला
भेनयाघृतं ग्रहेभ्यश्चैवहोतव्यंसमिच्चरुतिलादिकं चंदनंतालपत्रंचपुष्पमालादिकंतथा नवेशरावेभक्ष्याणिक्षिप्त्वाब
हुविधानिच प्रत्येकंषोडशैतानिपूगपूर्णानिचैवहि तान्यन्येनसमाच्छाद्यव्रतीदद्यात्समंत्रकं क्षीरोदार्णवसंभूतालक्ष्मीश्चंद्र
सहोदरा व्रतेनानेनसंतुष्टाभवतांविष्णुवल्लभा इंदिराप्रतिगृण्हातिइंदिरावैददातिच इंदिरातारकोभाभ्यामिंदिरायैनमोन-
मः दद्यादुपायनादीनिश्चाभियाणांचयोषितां चतस्रःप्रतिमास्तास्तुब्राह्मणायनिवेदयेत् एवंकृत्वंतुनिर्वर्त्यव्रतीभोजनमा

चरेत् स्कंदउवा॰ केनेदंस्वीकृतंपूर्वंकथमस्मिन्प्रकाशितं ब्रूहिमेतत्त्वतोदेवयद्यहंतववल्लभः शंकरउ॰ आसीद्राजासार्वभौमोमम-
गलार्णइतिश्रुतः कौंडिण्येनगरेरम्येतस्यपद्मावतीप्रिया तमागतःकश्चिदेकःसेवकोब्राह्मणोत्तमः अज्ञातनाम्नस्तस्यासौनाम-
चक्रेनृपस्तदा तवल्लुकइतिख्यातोबभूवद्विजसत्तमः कदाचिन्मृगयासक्तोभूपालोवनमाविशत् तत्रविध्वावराहादीन्मृगान्
हत्वासहस्रशः क्षुत्तृट्परिगतःश्रांतोवृक्षमूलमुपाश्रितः उदकान्वेषणेचारान्प्रेषयामाससर्वशः वनेजलंतुनापश्यन्क्वचि-
च्छ्रांताःप्रयत्नतः तेनत्वांनृपतिंप्रोचुर्नात्राम्भइतिदुःखिताः तवल्लुकोपिवभ्रामविपिनंतदतंद्रितः भ्रममाणस्तदापश्यत्कस्मि-
श्चिद्वनगह्वरे रम्यंसरोवरंदिव्यंकुमुदोत्पलमंडितं तत्रापश्यद्देवकन्यादिव्यरूपमनोरमाः चार्वंगीश्चारुनयनाःपीनोन्नत
पयोधराः हारकंकणकेयूरनूपुरालंकृताःशुभाः पूजयंतीर्महालक्ष्मीव्रतरूपेणचादरात् तवल्लुकोपिपप्रच्छकिमिदंक-
थ्यतामिति स्त्रियऊचुः महालक्ष्मीव्रतमिदंसर्वकामफलप्रदं क्रियतेस्माभिरेकाग्रमनोभिस्तत्तुभक्तितः तवल्लुकोपि
तच्छ्रुत्वाव्रतंजग्राहभक्तिमान् तदनुज्ञांगृहीत्वाचजलमादायसत्वरः आजगामजलंतस्मैदत्वाचाभोजनैःसह जलंपी-
त्वानृपस्तस्यहस्तवान्दोरकंकरे किमिदंदोरकंविद्वन्किंव्रतंकृतवानसि राज्ञाप्टष्टस्तवल्लोपिकथयामासतद्व्रतं तच्छ्रु-
त्वाराजशार्दूलोव्रतंजग्राहभक्तिमान् तवल्लुकेनसहितोराजास्वपुरमाययौ पद्मावत्यागृहंगत्वातयारंतुंगतःसह रममा-
णायसादेवीतेनराज्ञाप्रियेणवै तंदृष्ट्वादोरकंहस्तेकुपितात्यंतकोपना कयात्वंवंचितोब्रूहिकयादत्तःस्वदोरकः ज्वाला-
मालाकुलेवन्हौक्षिप्तमवत्यतिकोपिता हाहाकष्टमिदंपापंकृतंमूढतयात्वया इतिनिर्भर्त्स्यतांराजातत्याजवनगह्वरे सा
चहानियंयोपश्चात्तत्रहानियंयोनृपः महालक्ष्म्यापचारेणसारण्येजलवर्जिते मृगमाणावनेतस्मिन्नकश्चिद्व्रतिमाप्नु-
यात् विचरंतीवनेतत्रऋषेःकस्यचिदाश्रमं ददर्शमृगसंकीर्णंशांतकृष्णमृगान्वितं तत्रापश्यद्वनेरम्येवसिष्ठंमुनिपुंग-
वं ववंदेचरणौतस्यविसंज्ञादुःखकर्शिता चिरंध्यात्वामुनिस्तस्याज्ञातवान्दुःखकारणं महालक्ष्म्यापचारेणज्ञात

विज्ञानचक्षुषा तद्व्रतंकारयामासतस्याद्दुःखोपशांतये तद्दुःखंतत्क्षणादेवविनष्टमभवत्तदा पुनश्चमृगयासक्तोभूपालो
वनमाविशत् कश्चिन्मृगंसमाविध्यबाणेनैकेनधावमान् अन्वगच्छन्मृगपदंतस्याभूच्चयदागमः वरंमुनिंददर्शाग्रेवसि
ष्ठंवीतकल्मषं कृतातिथ्यक्रियोदृष्ट्वाचरंतींबहिरंतिके हावभावकटाक्षैश्चहरंतींहरिणेक्षणां मदांनिर्गत्यनृपतिःप्रोवाच
सस्मितंवचः रंभोरुकासिकल्याणिकिमर्थंचरसेवने किन्नरीमानुषीवालंयक्षिणीचारुहासिनि किमत्रबहुनोक्तेनभजमा
नंभजस्वमां नृपेणतेनभक्त्योक्तासस्मितावाक्यमब्रवीत् पुनर्भजामिचाहंत्वामवेहिमहिषींनव महालक्ष्म्यापचारेणत्वया-
हीनावसाम्यहं मुनींद्रस्याश्रमेरम्येतरुगुल्मोपशोभिते मत्सोपरिकृपाविष्टोमहालक्ष्मीव्रतोत्तमं कारयामासविधिवत्सर्वदवि
घ्नोपशांतये तयोक्तंवचनंश्रुत्वासचोत्फुल्लविलोचनः ऋषेरनुज्ञामादायप्रियामादायसत्वरः हृष्टपुष्टजनैर्जुष्टंपताका
ध्वजशोभितं प्रविवेशतयासार्धंसपौरैरभिवंदितः महालक्ष्मीव्रतंभूयस्तयासहचकारह भुंक्तेहभोगान्विपुलान्पुत्र
पौत्रसमाहृतः भूपालःसार्वभौमोभूत्तवल्लोमात्यतांययौ महालक्ष्म्याःप्रसादेनसन्निधिःसर्वसंपदां एवंप्रभावासादेवी
वराणामिष्टदायिनी सर्वपापहरादेवीसर्वदुःखापहारिणी एवंषोडशवर्षंतुकर्तव्यंव्रतमुत्तमं याकरिष्यतिमेप्रीत्यास्वयं
सिद्धिमुपासते लोकपालाश्चतुर्ष्यंतिदासाइवमनोरथान् नारीवापुरुषःकरिष्यतिमुदाभक्त्याव्रतंयत्नतः सेवंतेहरिरु-
द्रपद्मजस्कराःकुर्वंतितस्याभयं तत्पादंपरिरंजयंतिमनुजामौलिप्रभामंडलैस्तस्मिन्नेवकुटुंबिनीवसतिसालक्ष्मीःस्व
यंविष्णुना स्वभक्त्यावाप्यभक्त्यावाकुर्वंतिव्रतमुत्तमं अंतकालेचतान्विष्णुःसंसारात्परिरक्षति यइदंशृणुयान्नित्यं
श्रावयेद्वासमाहितः नसंत्यजतितंलक्ष्मीरलक्ष्मीर्नैवजायते सर्वपापविनिर्मुक्तःस्वर्गलोकेमहीयते युधिष्ठिरउ० स्व-
स्थानलाभपुत्रायुःसर्वैश्वर्यशुभप्रदं व्रतमेकंसमाचक्ष्वविचार्यपुरुषोत्तम कृष्णउवा० दुर्वारैश्चैवदेत्यैंद्रपरिव्याप्तेत्रिवि
ष्टपे एतदेवकृतस्यादौदेवेंद्रःप्राहनारद तस्यश्रुत्वाततोवाक्यंसमुनिःप्रत्यभाषत नारदउवा० पुरंदरपुरापूर्वंपुरमासीत्स

शोभितं रत्नगर्भाभवद्भूमिर्यत्ररत्नाढ्यभूधराः यत्रांगनाजनापांगभृंगालोचनसायकैः त्रैलोक्यंस्ववशंचक्रेदेवःकुसुम
सायकः चतुर्वर्गोजनिर्यत्रतच्चविश्वस्यभूषणं विश्वकर्मापियद्वीक्ष्यकंपयत्यनिशंशिरः तत्राभवन्महीपालोराजाभू
न्मंगलालयः चिल्लुदेवीप्रियातस्यदुर्भगैकाबभूवह अन्यातुचोलदेवीयामहिषीसायशस्विनी कदाचिन्मंगलोराजाचो
लदेवीसहायवान् प्रासादशिखरारूढःस्थलीमेकामपश्यत तामालोक्यमहीपालःस्मरस्मेरमुखांबुजः चोलदेवीम-
तिप्राहदंतद्योतितदिङ्मुखः चंचलाक्षिनवोद्यानंकार्यनिर्निंदितनंदनं कारयामितपोहिष्टस्तत्रोद्यानमकारयत् संपन्नंतु-
तदुद्यानंनानाद्रुमलतान्वितं नानाफलसमायुक्तंनानापक्षिसमावृतम् तत्रागत्यमहाक्रोडस्तनुन्यस्तनभस्थलः प्राव्रट्
कालघनश्यामचक्षुराक्षिप्तचंचलः दंष्ट्रावक्रस्फुटचंद्रार्कःप्रलयांभोधरध्वनिः उद्यानंभंजयामासनानाद्रुमलतान्वितम्
कांश्चिदुत्पाटयामासपादपान्पांडुनंदन कांश्चिद्दंतप्रहारेणकांश्चिद्दंतप्रघर्षणैः जघानकांश्चित्पुरुषान्रक्षकानंतकोपमः
तद्भुतंकीर्तिविज्ञायसंहृत्योद्यानपालकाः सभयास्तस्यवृत्तांतमूचुश्चनृपतेःपुरः तदाकर्ण्यततोराजाक्रोधारुणितलोचनः व
धायदंष्ट्रिणस्तस्यसंदिदेशाखिलंबलं ततश्चचालभूपालस्त्रिगंडगलितैर्गजैः आप्लावयन्महींसर्वांवाजिवृंदवृतांवरां
चालयन्सकलान्शैलान्स्यंदनौघमरुद्भवैः पदातिभिर्महावीरैःपूरयन्निखिलादिशः ततोगाढंसमावृत्यतदुद्यानंनरेश्व
रः पनिघ्नातमहाध्वानैःपूरयन्निखिलादिशः पथियस्यवराहोयंप्रयात्युपवनांतरं तस्यावश्यंशिरश्छेदंविदधामिरिपोरिव
तस्यभूपस्यतद्वाक्यंसमाकर्ण्यससूकरः जगामास्यैवमार्गेणप्राणिनांचेष्टितंयथा ततःससूकरासक्तःकशयातंप्रताड्यच
क्रीडाकलंकितस्यैंदुमार्गंतस्यैवसोगमत् गत्वाथविपिनंघोरंसिंहशार्दूलसंकुलं तमालतालहिंतालशालार्जुनलतान्वितं
झिल्लीझंकारसंभारवाचाटितदिगंतरं कोलोवेलामवाप्याथसोभवद्राजसंमुखः भल्लेनसोवधीत्कोलंवज्रेणाद्रिंयथाहरिः
अथव्योम्निविमानस्थःस्मरस्कंदरविग्रहः क्रोडरूपंपरित्यज्यसोब्रवीन्मंगलंनृपं गंधर्वउवा० स्वस्तितेस्तुमहीपालत्व

यामुक्तिः कृताभम तमाकर्णयवृत्तांतंयेनाहंजातईदृशः एकदादेवतावृंदैः संवृतः कमलासनः चंचत्पुटादिभिस्तालैःष
ड्जाद्यैः सप्तभिः स्वरैः मंद्रादिभिस्त्रिभिर्मानैर्गीयमानंमयानृप नानास्थानगुणोपेतमश्रौषीद्गीतमुत्तमं गीयमानंश्च्युतः
स्थानात्ततोहंकर्मणामुना शप्तश्चित्ररथस्तेनब्रह्मणासृष्टिकर्मणा ब्रह्मोवाच कोलोभवत्वंमेदन्यामुक्तिस्तेस्तुतदा
भवेत् निर्जिताखिलभूपालोमंगलस्त्वांहनिष्यति तदद्यघटितंसर्वंत्वत्प्रसादान्महीपते महद्व्रताणवरंभूपदेवस्यापिसुदु
र्लभं महालक्ष्मीव्रतंदिव्यंचतुर्वर्गफलप्रदं लभस्वसार्वभौमत्वंगच्छराज्यंनिजंद्रुतं नारदउवा॰ चित्ररथोथगंधर्वउक्त्वे
दंभूपतिंप्रति अंतर्धानंगतस्तुष्टः शरत्कालइवांबुदः अथमंगलभूपालः पार्श्वस्थंद्विजमागतं विलोक्यबटुकंकंचित्कक्षा
निक्षिप्तशंबलं उवाचमधुरांवाचंस्मितपूर्वांशुचिस्मितां देवस्त्वंदानवस्त्वंवागंधर्वोवाथराक्षसः सत्यंवदबटोकस्मात्कि-
मर्थंत्वमिहागतः श्रुत्वैतत्शिष्यभावंत्वंप्राहत्वद्देवसंभवः अहंसार्धंत्वयायातस्तदादिशयथोचितं राजाथतमुवाचेदं
त्वंबटोनूतनाह्वयः अपांस्थानंविलोक्यत्वंतूर्णंतोयंममानय अथविश्रम्यभूपालबटुकोवटपादपे तथाकृत्यतुरंगंचसमारु
ह्यमहामतिः जगामपक्षिघोषेणयत्रास्तेस्कंदरंसरः कमलैकनिवासेनरथ्यागाभरणेनच वनमालालयत्वेनदधन्नारायणीं
तनूं भग्नवायुशतद्योगमक्षारंविषवर्जितं नाशितागस्तितृष्णार्तिप्रसन्नंसागराधिकं पंकेमग्नोथतत्राश्वःपृष्ठादुत्तीर्यतस्य
सः चतुर्दिशांनिरीक्ष्याथतस्यैवसरसस्तटे दिव्यवस्त्रपरीधानंदिव्याभरणभूषितं कथयंतंकथांदिव्यांस्त्रीणांसार्थमपश्य
त उपसृत्याथतंसोथस्ववृत्तांतंनिवेद्यच कृतांजलिरितिप्राहबटुर्मधुरयागिरा बटुरुवाच एतत्किंक्रियतेसार्थत्वया-
भक्तिपरेणवै कोविधिः किंफलंचास्यब्रूहितन्मेयथातथं श्रुत्वाचतमुवाचेदंसार्थः करुणयागिरा सार्थकउवा॰ शृणु
विप्रैकचित्तेनश्रद्धाभक्तिसमन्वितः यामायामप्रकृतिः शक्तिस्त्रैलोक्येप्यभिधीयते व्रतमेतन्महालक्ष्म्यास्तस्याः सर्वफल-
प्रदं आकर्णयविधिंचास्यकथ्यमानंमयाबटो भाद्रमासिसिताष्टम्यामारंभोस्यविधीयते प्रातः षोडशकृत्वस्तुप्रक्षाल्या

ग्रीकरोमुरवं तंतुषोडशसंमिश्रं ग्रंथिषोडशसंयुतं मालतीपुष्पकर्पूरचंदनागरुचर्चितं लक्ष्म्येनमोथमंत्रेणप्रतिग्रंथ्यभि-
मंत्रितं धनंधान्यंधराधर्मंकीर्तिमायुर्यशाःश्रियं तुरगान्दंतिनःपुत्रान्महालक्ष्मीप्रयच्छमे मंत्रेणानेनबध्नाथदोरकंदक्षि
णेकरे कांडानिषोडशादायदूर्वायाश्चाक्षतांस्तथा एकचित्तःकथांश्रुत्वापूजयेत्तेश्चदोरकं ततस्तुप्रातरारभ्ययावत्स्याद
सिताष्टमी तावत्प्रक्षाल्यहस्तौतुपादादीनिकथांतथा शृणुयात्प्रत्यहंविप्रतत्संख्येरक्षितादिभिः अथकृष्णाष्टमींप्राप्य
नक्तकालेजितेंद्रियः स्नातःशुक्लांबरधरोव्रतीपूजागृहंविशेत् तत्रोपविश्यपूर्वास्यश्चारुधौतासनोपरि श्वेतपत्रंलिखेदष्टद
लंकमलमुत्तमं ऐंद्र्यादिशक्तिसंयुक्तंपार्श्वपत्रंसकेसरं कर्णिकायांततोलक्ष्मीकर्पूरक्षोदपांडुरां शुभ्रवस्त्रपरीधानांमुक्ता
भरणभूषितां पंकजासनसंस्थानांस्मेराननसरोरुहां शारदेंदुकलाकांतिस्निग्धनेत्रांचतुर्भुजां पद्मयुग्माभयदां
करव्यग्रकरांबुजां अभितोगजयुग्मेनसिच्यमानांकरांबुना संचिंत्यैवंलिखेद्देवींकर्पूरागरुचंदनैः ततस्त्वावाहनंकुर्या
न्मंत्रेणानेनसुव्रती महालक्ष्मीसमागच्छपद्मनाभपदादिह पंचोपचारपूजेयंत्वदर्थेदेविकल्पिता षोडशाहंतुसंपूर्णंकु
र्यादुद्यापनंव्रती विधिनायेनविप्रेंद्रशृणुश्रद्धासमन्वितः दानव्याधेनुरेकावैस्वर्णशृंगादिसंयुता श्रोत्रियायसुवर्णंचतथा
न्नवसनादिकं यथाशक्त्यासुवर्णंचदत्वापूर्णंभवेद्व्रतं द्विजेभ्यःषोडशेभ्यश्चप्रदद्याद्वसनादिकं सार्यउवाच एतत्ते-
कथितंविप्रव्रतानामुत्तमंव्रतं तद्विधानादनायासाल्लभतेवांछितंफलं कृत्वाव्रतंपरंविप्रत्वंराज्ञानश्चकारय व्रतमेतत्त्वया
विप्रदेयंश्रद्धावतेपरं नास्तिकानांपुरस्तात्तुनप्रकाश्यंकथंचन नमस्कृत्वाथतंसार्यंपंकादुत्थाप्यवाजिनं सरसोप्रस्तथा
दायपद्मिनीपद्मयंभितं आरुह्यतुरगंविप्रोराजांतिकमुपागमत् निवेद्यतद्व्रतंविप्रोराजानमथकारयत् नानाप्रकारसंभृतं
माबलंबदुकस्यच व्रतप्रभावादभवत्सप्तद्वीपकभूभृतांवरः अथारुह्यमहीपालोबहुवर्षाणितंहयं तद्व्रतस्यप्रभावेनतूर्णं
स्वपुरमागतः तमायांतंसमालोक्यराजानंभूपुरंदरं उत्सवंचक्रिरेपौरास्तोर्यादिकपुरःसराः चलत्पताकदोर्मालंलस-

स्कलशमौलिकं पुरंनृत्यदिवाभाति छन्नंघंटोघघर्घरैः अथोत्कलिकयाकाश्चिद्धावंतिस्मवरांगनाः स्वर्णमुक्तालताजाले
श्चतुष्कमिवकुर्वती काचिद्विमुक्तकेशोचपरागान्नयनांजसा काचिन्नितंबभारार्ताकाचित्पीनपयोधरा अथाविशन्मही
पालोबटुनासहितोगृहं पौरनारीजनाक्षिप्तलाजैः स्फुरितविग्रहः अतोन्तर्गृहयानस्माद्बटुबाहुवलंबितः जगाममंगलो
राजाचोलदेवीतुयत्रवै दृष्ट्वातुचोलदेवीसादोरकंराजबाहुके विमृश्यमनसाकुद्धाशंकाचक्रेनृपेत्विमाम् आखेटक
स्यव्याजेनगतोन्यांवल्लभांप्रति सौभाग्यायतयाबद्धोदोरकोदक्षिणेकरे तथैवबटुकश्चायंद्रष्टुंमांप्रेषितोध्रुवं ततोहस्तेवटु
षात्माकोपादाच्छिद्यदोरकं चिक्षेपचमहीपृष्ठेस्वसौभाग्यंस्वकैःसह नबुबोधचतांराजात्रोटयंतींचदोरकं सामंतमंत्रि-
भृत्याद्यैः कुर्वन्वार्तांमनोद्भवां चिल्लदेव्यास्तदाकाचिद्दासीद्रष्टुंसमागता तयादोरकमादायबटुमाश्वच्छ्यतद्भुतं तद्भुतस्य
विधानार्थंस्वस्वामिन्यैनिवेदितं ततोनूतनमाहूयचिल्लदेव्यकरोद्व्रतं अथसंवत्सरेतीतेलक्ष्मीपूजादिनेनृप नोर्यत्रिकस्य-
निःस्वानंचिल्लदेव्यागृहेश्रृणोत् तदाकर्ण्यमहीपालोनूतनंबटुमब्रवीत् अहहाद्यदिनंलक्ष्म्याः सव्रतस्यचदोरकः इतिपृ
ष्टोनृपंप्राह दोरकत्रोटनक्रमं तच्छ्रुत्वामंगलोराजाचोलदेव्यैप्रकुप्यच मयाद्यपूजनंकार्यंचिल्लदेवीगृहंप्रति अथमंग-
लभूपालोबटुबाह्ववलंबितः चचालकमलावास्येचिल्लदेवीगृहंप्रति अत्रांतरेमहालक्ष्मीर्वृद्धारूपंविधायच जिज्ञासा
र्थंगृहंतस्याश्चोलदेव्याः समागता गच्छगच्छाद्यवृद्धेत्वंकिमिहागत्यकरोषिमे तयादुराशयात्यर्थंलक्ष्मीः साप्यवमानिता त
तःक्रुद्धामहालक्ष्मीश्चोलदेवीमभाषत शशापाथमहालक्ष्मीश्चिल्लदेवीनिकेतनं बहुधाचिल्लदेव्यासालक्ष्मीसंमानिता
र्चिता वृद्धारूपंपरित्यज्यप्रत्यक्षासाभवत्तदा पंचोपचारपूजाभिःश्रियंराज्ञीततोर्चयत् अतितुष्टाततोलक्ष्मीश्चिल्ल
देवीमुवाचह लक्ष्मीरुवाच अर्चनात्तेप्रसन्नास्मिचिल्लदेविवरंवृणु वव्रेवरंततोराज्ञीचिल्लदेवीशुभाशया चिल्लदे
व्युवाच येकरिष्यंतितेदेविव्रतमेतत्करेश्वरि तद्वेश्मनत्वयात्याज्यंयावच्चंद्रदिवाकरौ अथारभ्यततोत्येषभूपसंबंधिती-

तथा ख्यातिंयातुक्षितौदेविभक्तिर्भवतुमेत्वयि सद्भावेनकथामेतांयेश्रृण्वंतिपठंतिच तेषांचवांछितंसर्वंत्वयादेयंसदेव
हि तथेत्युक्त्वामहालक्ष्मीस्तत्रैवांतरधीयत अथमंगलभूपालस्तत्रागत्यश्रियोर्चनम् चक्रेपरमयाभक्त्याचिल्लदेव्यास
मन्वितः अथेर्ष्ययादुराचाराचिल्लदेवीगृहंप्रति चोलदेवीसमायाताद्वारस्थैर्वारिताजनैः ततोजगामविपिनंयत्रासीदंगि-
रामुनिः अथालोक्याद्भुताकाराज्ञानदृष्ट्याविचिंत्यतां मुनिस्तुश्रीव्रतंदिव्यंचोलदेवीमकारयत् व्रतेकृतेथसंजाताचो
लदेवीमहायशाः दाक्षिण्यकेलिलीलाभिर्लावण्यैकनिकेतनं ततःकदाचिदागत्यवनमाखेटनंनृपः मुनेर्वेश्मनिराजा-
तांददर्शवामलोचनां अथराजामुनिंप्राहकेयंधन्येतिकथ्यतां तद्वृत्तांतंसमाख्यायराज्ञेतांप्रददौमुनिः अथागत्यनिज
राज्यंचिल्लदेवीसमन्वितं चिल्लदेव्याचसहितोबुभुजेमंगलोनृपः चिल्लदेवीवरंवव्रेचोलदेवीसमागमम् समुद्रस्ययथा
गंगायमुनेसंगमेसदा तथामंगलभूपस्यआलिंग्यवामलोचना परस्पराधिकेतेतुप्रियेमान्येबभूवतुः चिल्लदेव्यास-
मंसोथचोलदेव्यासहाखिलाम् ससद्वीपवतींपृथ्वींबुभुजेमंगलोनृपः व्रतस्यास्यैवसामर्थ्याद्दृढकोशोपनूनः अभून्मंग
लभूपस्यमंत्रीतवयथागुरुः भुक्त्वाथसकलान्भोगान्मंगलोभूभुजांवरः सपुनःस्वर्गमेत्याभून्नक्षत्रंविष्णुदेवतम्
नारदउवा॰ एतत्तेकथितंशक्रव्रतानामुत्तमंव्रतम् यत्कथाश्रवणेनापिलभतेवांछितंफलं प्रयागमिवतीर्थेषुदेवेषु
भगवानिव नदीषुचयथागंगाव्रतेष्वेतत्तथाव्रतं धर्मंचार्थंचकामंचमोक्षंचयदिवांछसि तर्हीदंचव्रतंशक्रकुरुष्वश्रद्धास
मन्वितः धनंधान्यंधरांधर्मंकीर्तिमायुर्यशस्त्रियं तुरंगान्दंतिनःपुत्रान्महालक्ष्मीःप्रयच्छति इतिश्रीभविष्योत्तरपु-
राणेमहालक्ष्मीव्रतोद्यापनंसंपूर्णं अथआश्विनशुक्लाष्टमीमहाष्टमी तत्राष्टम्यांभद्रकालीदक्षयज्ञविनाशिनी प्रा
दुर्भूतामहाघोरायोगिनीकोटिभिर्वृता देवीपुराणे सप्तमीवेधसंयुक्तायैःकृतातुमहाष्टमी पुत्रदाराधनैर्हीनाभ्र
मंतीहपिशाचवत् शरज्जन्माष्टमीपूज्यानवमीसंयुतासदा सप्तमीसंयुतानित्यंशोकसंतापकारिणी जंभेनसप्तमीयुक्ता

पूजितात्वमहाष्टमी इंद्रेणनिहतोजंभस्तस्यांदानवपुंगवः तस्मात्सर्वप्रयत्नेनसप्तमीसहिताष्टमी वर्जनीयाप्रयत्नेनमनु
ष्यैःशुभकांक्षिभिः सप्तमीकलयायत्रपरतश्चाष्टमीतथा तेनशल्यमिदंप्रोक्तंपुत्रपौत्रक्षयप्रदं पुत्रान्हंतिपशून्हंति
राष्ट्रंहंतिसराज्यकं हंतिजानपदांश्चापिसप्तमीसहिताष्टमी शुक्लपक्षेष्टमीचैवशुक्लपक्षेचतुर्दशी पूर्वविद्धानकर्तव्या
कर्तव्यापरसंयुता अत्रत्रिमुहूर्तन्यूनास्त्यपिसप्तमीवर्जनप्रयोजिका नत्रिमुहूर्तैव सप्तमीस्वल्पसंयु
क्तावर्जनीयासदाष्टमी स्तोकापिसातिथिःपुण्यायस्यांसूर्योदयेसति नवमीयुक्तायाअलाभेतुसप्तमीयुतैवकार्या
उपवासंमहाष्टम्यांपुत्रवान्नसमाचरेत् सप्तशत्यास्तुपाठेनतोषयेज्जगदंबिकां अथआश्विनकृष्णाष्टम्याअशोका
ष्टमीव्रतं हेमाद्रौआदित्यपुराणे आश्विनस्यासितेपक्षेपूजनीयाह्यशोकिका गंधमाल्यनमस्कारधूपदीपैश्चसर्व
दा तस्मिन्नहनियाभुंक्तेनक्तमिंदुविवर्जिते भवत्यथविशोकासायत्रयत्राभिजायते पूर्वाष्टमीषुसर्वासुक्रनेचेच्छक्रोति-
वेमुने प्रोष्ठपद्यामतीतायांयास्यात्कृष्णाष्टमीयुता तत्रकार्यंव्रतंत्वेतत्सर्वकामफलप्रदं इतिअशोकाष्टमी अथमार्ग-
शीर्षकृष्णाष्टम्यांकाशीखंडे कालभैरवस्यपूजोक्ता मार्गशीर्षासिताष्टम्यांकालभैरवसन्निधौ उपोष्यजागरंकुर्व
न्सर्वपापैःप्रमुच्यते इतिकाशीखंडात् रुद्रव्रतेषुसर्वेषुकर्तव्यासंमुखीतिथिः इतिब्रह्मवैवर्तोक्त्व दिनद्वयेशतो
रात्रिव्यापिसोऽउत्तरेवभैरवोत्पत्तिः प्रदोषकालव्यापिनीतिकेचित् तत्र शिवरहस्येमध्यान्हेभैरवोत्पत्तेश्चश्रवणात् तत्रै
वनित्ययात्रादिकंकृत्वामध्यान्हेसंस्थितेरवावित्युपक्रम्य ततोग्ररूपानवधीत्ततःश्रीकालभैरवः आविरासीत्तदालो
कान्भीषयन्नखिलान्प्रति कृत्वाचविविधांपूजांमहासंभारविस्तरैः नरोमार्गासिताष्टम्यांवार्षिकंविघ्नमुत्सृजेत्
तीर्थेकालोदकेस्नात्वातर्पणंविधिपूर्वकं विलोक्यकालराजानंनिरयादुद्धरेत्पितॄन् सूतउवाच व्रतानिचप्रवक्ष्या-
मिशृणुध्वंमुनिपुंगवाः तत्रकृष्णाष्टमीपुण्यासर्वपापप्रणाशिनी विष्णुत्वंप्रापवान्विष्णुःरुद्रोशत्वंशचीपतिः कुबे-

रोयक्षराज्यत्वंनियंतृत्वंयमःस्वयम् चंद्रश्चंद्रत्वमापन्नोगणेशत्वंगणाधिपः स्कंदःसेनापतित्वंचतथाचान्येगणेश्वराः कृ-
त्वाचैश्वर्यमापन्नाःसौभाग्यंदेववल्लभाः व्रतस्यास्यप्रभावेनलक्ष्म्याःपतिरभूद्धरिः ययातिःसार्वभौमत्वंतथाचान्येनृपोत्त
माः ऋषयोमुनयःसिद्धगंधर्वाणांचकन्यकाः कृत्वावैपरमांसिद्धिंप्राप्ताश्चमुनिपुंगवाः नंदीश्वरेणयत्प्रोक्तंनारदायमहात्मने
कृष्णाष्टमीव्रतंश्रेष्ठंसर्वकामफलप्रदं मेरोर्यद्दक्षिणंशृंगंस्फुरास्फुरनमस्कृतं तत्रनंदीश्वरंदृष्ट्वासर्वज्ञंशंभुवल्लभं उपास्यमा
नंमुनिभिःस्तूयमानंमरुद्गणैः सर्वानुग्रहकर्तारंस्तुत्वातुविविधैःस्तवैः अब्रवीत्प्रणिपत्याथदंडवन्नारदोमुनिः नारदउ
वा० भगवन्सर्वतत्वज्ञसर्वेषामभयप्रद केनव्रतेनभगवंस्तपोवृद्धिःप्रजायते सौभाग्यंकांतिरैश्वर्यमपत्यंचयशस्तथा शा
श्वतीमुक्तिरंतेचकर्मपाशविमोचनी भगवंस्तद्व्रतंब्रूहिकारुण्याच्छंकरप्रिय नंदिकेश्वरउवा० कृष्णाष्टमीव्रतंश्रेष्ठम
स्तिनारदतच्छृणु गणेशत्वंमयालब्धंयेनपुण्येनभोमुने मासिमार्गशिरेप्राप्तेकृष्णाष्टम्यांजितेंद्रियः अश्वत्थदंतकाष्ठेन
कृत्वावैदंतधावनं स्नानंकृत्वातुविधिवत्तर्पणंचैवनारद आगत्यभवनेचैवपूजयेच्छंकरंप्रभुं गोमूत्रंप्राश्यविधिवदुपवासी
भवेन्निशि अतिरात्रस्ययज्ञस्यफलंचाष्टगुणंभवेत् सर्पिषःप्राशनंपौषेदंतकाष्ठंचतत्स्मृतं पूजयेच्छंभुनामानंभगव
तंमहेश्वरं वाजपेयाष्टकंपुण्यंप्राप्नोतिश्रद्धयान्वितः माघेवटस्यकाष्ठंचगोक्षीरप्राशनंस्मृतं महेश्वरंतुसंपूज्यगोमेधाष्ट
गुणंफलं फाल्गुनेचैवतद्देवोक्तंसर्पिषःप्राशनंचयत् संपूजयेन्महादेवंराजसूयाष्टकंफलं कालुंबोदुंबरंचैवप्राशनेमार्जिता
यवाः पूजयेच्छंभुनामानमश्वमेधंफलंलभेत् शिवंसंपूज्यवैशाखेपीत्वाचैवकुशोदकं नारमेधाष्टकंपुण्यंप्राप्नोत्येवहि-
नारद ज्येष्ठेप्लक्षंभवेत्काष्ठंसंपूज्यपशुपतिंविभुं गवांशृंगोदकंप्राश्यस्वपेद्देवस्यसन्निधौ गवांकोटिप्रदानस्ययत्फलं
तदवाप्नुयात् आषाढेचोग्रनामानमिष्ट्वासंप्राश्यगोमयं सौत्रामणेस्तुयज्ञस्यफलमष्टगुणंभवेत् पालाशंश्रावणेप्रो-
क्तंसर्वंसंपूज्यनारद प्राशयित्वार्कपत्राणिकल्पंशिवपुरेवसेत् मासेभाद्रपदेष्टम्यांत्र्यंबकंसंप्रपूजयेत् प्राशनंबिल्वपत्र

स्यसर्वदीक्षाफलंलभेत् आश्विनेजंबुवृक्षस्यदंतकाष्ठमुदीरितं ईश्वरंपूजयेद्भक्त्याप्राशयेत्तंदुलोदकं पौंडरीकस्ययज्ञस्य-
फलमष्टगुणंभवेत् मासेतुकार्तिकेष्टम्याईशानाख्यंप्रपूजयेत् पंचगव्यंसकृत्पीत्वाअग्निष्टोमफलंलभेत् उद्यापनंचवर्षांतेप्र
कुर्याद्भक्तितत्परः विरच्यलिंगतोभद्रंपूजयेत्सर्वदेवताः वितानंतत्रबध्नीयात्पंचवर्णंसुशोभनं आचार्यंवरयित्वाचऋत्वि-
जोरुद्रसंयुतान् सुवर्णप्रतिमांतत्रवृषभंरजतस्यच कलशेपूजयित्वाचरात्रौजागरमाचरेत् प्रभातेचपुनःपूज्याअग्नि-
स्थापनमाचरेत् हुनेदष्टशतंचैवतिलद्रव्यंघृतप्लुतं त्र्यंबकेनचमंत्रेणगोर्यास्त्वेवपृथक्पृथक् वर्षांतेभोजयेद्विप्रान्शिव
भक्तिसमन्वितान् पायसंघृतसंयुक्तंमधुनाचपरिप्लुतं शक्त्याहिरण्यवासांसिभक्त्यातेभ्योनिवेदयेत् देवायचार्पयेद्ध्व
जंवितानंध्वजचामरं कृष्णांपयस्विनींगांचघंटाकंदुकवाससी सरत्नांतत्रकलशामलंकृत्यचनारद अलंकारंचवस्त्रंचदक्षि
णांचस्वशक्तितः भक्त्याप्रणम्यविधिवदाचार्यायनिवेदयेत् करोत्येवंव्रतंपुण्यंवर्षमेकंनिरंतरं महापातकनिर्मुक्तःसर्वैश्व
र्यसमन्वितः कल्पकोटिशतंसाग्रंशिवलोकेमहीयते कृष्णाष्टमीव्रतंसम्यकृदंवर्षैःकथितंमया यदुक्तंदेवदेवेनदेव्यैविश्वस्र
जापुरा सूतउवा० एवंनंदीश्वराच्छ्रुत्वानारदोमुनिपुंगवः कृष्णाष्टमीव्रतंपुण्यंययौबदरिकाश्रमं व्रतस्यास्यप्रभावंयःपठे
च्छृणुयादपि सयातिपरमंस्थानंयत्रदेवोमहेश्वरः इतिश्रीआदित्यपुराणेकृष्णाष्टमीव्रतंनामएकादशोऽध्यायः इतिका-
लभैरवाष्टमी इत्यष्टमीव्रतानिसमाप्तानि अथनवमीव्रतानिलिख्यंते तत्रचैत्रशुक्लनवम्यांरामनवमीव्रतं इदंच
परविद्धायांमध्याह्नव्यापिन्यांकार्यं तदुक्तंअगस्त्यसंहितायां चैत्रशुक्लातुनवमीपुनर्वसुयुतायदि सैवमध्याह्नयोगे
नमहापुण्यतमाभवेत् दिनद्वयेऋक्षयोगेमध्याह्नव्याप्तावेकदेशव्याप्तौवापरान्यथापूर्वा तदुक्तंतत्रैव नवमीचाष्टमी
विद्धात्याज्याविष्णुपरायणैः उपोषणंनवम्यांवैदशम्यांपारणंभवेत् चैत्रमासेनवम्यांतुजातोरामःस्वयंहरिः पुनर्व-
स्वृक्षसंयुक्तासातिथिःसर्वकामदा श्रीरामनवमीप्रोक्ताकोटिसूर्यग्रहाधिका केवलापिसदोपोष्यानवमीशब्दसंग्रहा

तु तस्मात्सर्वात्मनासर्वैः कार्यंवैनवमीव्रतं अथागस्त्यसंहितायाम् चैत्रेनवम्यांप्राक्पक्षेदिवापुण्येपुनर्वसौ उदयेगुरु
गौरांशेस्वोच्चस्थेग्रहपंचके मेषेपूषणिसंप्राप्तेलग्नेकर्कटकाह्वये आविरासीत्सकलयाकौशल्यायांपरःपुमान् प्रा-
क्पक्षेशुक्लपक्षेउदयेलग्नेगुरुगौरांशेगुरुनवांशे तस्मिन्दिनेतुकर्तव्यमुपवासव्रतंसदा तत्रजागरणंकुर्याद्रघुनाथप
रोभुवि भुविइतिस्वर्गादिव्यावृत्त्यर्थं प्रातर्दशम्यांकृत्वातुसंध्याद्याःकालिकाःक्रियाः संपूज्यविधिवद्रामभक्त्यावित्तानुसा
रतः ब्राह्मणान्भोजयेद्भक्त्यादक्षिणाभिश्चतोषयेत् गोभूतिलहिरण्याद्यैर्वस्त्रालंकारभूषणैः रामभक्तान्प्रयत्ने
नपूजयेत्परयामुदा एवंयःकुरुतेभक्त्याश्रीरामनवमीव्रतं अनेकजन्मसिद्धानिपातकानिबहून्यपि भस्मीकृत्वाव्र
जत्येवतद्विष्णोःपरमंपदं सर्वेषामप्ययंधर्मोभुक्तिमुक्त्येकसाधनः अशुचिर्वापिपापिष्ठःकृत्वेदंव्रतमुत्तमं पूज्यःस्या
त्सर्वभूतानांयथारामस्तथैवसः यस्तुरामनवम्यांवैभुंक्तेसचनराधमः कुंभीपाकेषुघोरेषुपच्यतेनात्रसंशयः अ
कृत्वारामनवमीव्रतंसर्वव्रतोत्तमं व्रतान्यन्यानिकुरुतेनतस्यफलभाग्भवेत् रहस्यानिचपापानिप्रख्यातानिबहू
न्यपि महांतिचप्रणश्यंतिश्रीरामनवमीव्रतात् एकामपिनरोभक्त्याश्रीरामनवमींमुने उपोष्यकृतकृत्यःस्या
त्सर्वपापैःप्रमुच्यते नरोरामनवम्यांतुश्रीरामप्रतिमाप्रदः विधानेनमुनिश्रेष्ठसमुक्तोनात्रसंशयः सुतीक्ष्णउ
वाच श्रीरामप्रतिमादानविधानंवाक्यमुने कथयस्वमुनिश्रेष्ठभक्तस्यममविस्तरात् अगस्त्यउवा० कथयिष्या
मितद्दिव्यंप्रतिमादानमुत्तमं विधानंचापियत्नेनयतस्त्वंवैष्णवोत्तमः अष्टम्यांचैत्रमासेतुशुक्लपक्षेजितेंद्रियः दं
तधावनपूर्वंतुप्रातःस्नायाद्यथाविधि नद्यांतडागेकूपेवाह्रदेप्रस्रवणेपिवा ततःसंध्यादिकाःकार्याःसंस्मरन्राघवं
हृदि गृहमासाद्यविप्रेंद्रकुर्यात्पूजादिकंपरं दांतंकुटुंबिनंविप्रंवेदशास्त्रपरंमुदा श्रीरामपूजानिरतंसुशीलंदंभवर्जि
तं विधिज्ञंराममंत्राणांराममंत्रैकसाधनं आहूयभक्त्यासंपूज्य वृणुयात्प्रार्थयन्निति श्रीरामप्रतिमादानंकरिष्ये

हंद्विजोत्तम भक्त्याचार्योमयप्रीतः श्रीरामोसित्वमेवच इत्युक्त्वापूज्यविप्रेंद्रंस्नापयित्वाततः परं तैलेनाभ्यज्यचस्ना
याच्चिंतयन्राघवंहृदि तैलेनाभ्यज्यस्नापयित्वेत्यन्वयः श्वेतांबरधरःश्वेतगंधमाल्यानिधारयेत् अर्चितोभूषितश्चैवकृ
तमध्याह्निकक्रियः अर्चितःकृतार्चनः आचार्यंभोजयेद्भक्त्याशालिकान्नैःसविस्तरं भुंजीतस्वयमप्येवंत्वहृदिरा
ममनुस्मरन् एकभक्तव्रतीतत्रसहाचार्योजितेंद्रियः शृण्वन्रामकथांदिव्यामहःशेषंनयेन्मुने सायंसंध्यादिकाः
कुर्यात्क्रियारामममनुस्मरन् आचार्यसहितोरात्रावधःशायीजितेंद्रियः वसेत्स्वयनचैकांतेश्रीरामार्पितमानसः त
तःप्रातःसमुत्थायस्नात्वासंध्यांयथाविधि प्रातःसर्वाणिकर्माणिशीघ्रमेवसमापयेत् ततःस्वस्थमनाभूत्वाविद्वद्भिः
सहितोनघ स्वगृहस्योत्तरेदेशेद्वारस्योत्तरमंडपं स्वगृहसमीपे चतुर्द्वारंपताकाढ्यंसवितानंसतोरणं मनो-
हरंमहोत्सेधंपुष्पाद्यैःसमलंकृतं शंखचक्रहनूमद्भिःप्राग्द्वारेसमलंकृतं गरुत्मच्छार्ङ्गबाणैश्चदक्षिणेसमलंकृतं ग
दाखड्गांगदैश्चैवपश्चिमेसम्यग्विभूषितं पद्मस्वस्तिकनीलैश्चकौबेरैःसमलंकृतं मध्येहस्तचतुष्कायवेदिकायुक्तमा
यतं प्रविश्यनृत्यगीतैश्चवाद्यैश्चापिसमन्वितं पुण्याहंवाचयेत्तत्रविद्वद्भिःप्रीतमानसः ततःसंकल्पयेद्देवरामंमेवस्मर
न्मुने अस्यारामनवम्यांचरामाराधनतत्परः उपोष्याष्टस्वयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांचप्र
यत्नतः श्रीरामप्रीतयेदास्येरामभक्तायधीमते प्रीतोरामोहरत्वाशुपापानिसुबहूनिमे अनेकजन्मसिद्धानिअ
भ्यस्तानिमहांतिच विलिखेत्सर्वतोभद्रंवेदिकोपरिसुंदरं मध्येतीर्थोदकैर्युक्तपात्रंसंस्थाप्यचार्चितं सौवर्णराजः
तेताम्रपात्रेषट्कोणमालिखेत् ततःस्वर्णमयींरामप्रतिमांपलमात्रतः निर्मितांद्विभुजांदिव्यांवामांकस्थितजानकीं
बिभ्रतींदक्षिणकरेज्ञानमुद्रांमहामुने वामेनाधःकरेणेशांदेवीमालिंग्यसंस्थितां सिंहासनेराजतेत्रपलद्वयविनिर्मि
ते पंचामृतस्नानपूर्वंसंपूज्यविधिवत्ततः मूलमंत्रेणनियतोन्यासपूर्वमतंद्रितः दिवैवंविधिवत्कृत्वारात्रौजागरणंत

नः दिव्यां रामकथां श्रुत्वा रामभक्तैः समन्वितः नृत्यगीतादिभिश्चैव रामस्तोत्रैरनेकधा रामाष्टकैस्तथा पूजां गंधपुष्पाक्षतादि-
भिः कर्पूरागरुकस्तूरीकल्हाराद्यैरनेकधा पूजयेद्विधिवद्भक्त्यादिवारार्चनं येद्बुधः ततः प्रातः समुत्थाय स्नानसंध्यादि-
काः क्रियाः समाप्य विधिवद्रामं पूजयेद्विधिवन्मुने ततो होमं प्रकुर्वीत मूलमंत्रेण मंत्रवित् पूर्वोक्तपद्मकुंडे वा स्थंडिले-
वा समाहितः लौकिकाग्नौ विधानेन शतमष्टोत्तरं ततः आज्येन पायसेनैव स्मरन्रामममनन्यधीः ततो भक्त्या सुसंतोष्य आचार्य-
पूजयेन्मुने कुंडलाभ्यां सरत्नाभ्यामंगुलीयैरनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विचित्रैः सुमनोहरैः ततो रामं स्मरन्दद्यादेवं मंत्रमुदी-
रयेत् इमां स्वर्णमयीं रामप्रतिमां समलंकृताम् चित्रवस्त्रयुगच्छन्नां रामोऽहं राघवाय ते श्रीरामप्रीतये दास्ये तुष्टो भवतु राघ-
वः इति दत्वा विधानेन दद्यादेव दक्षिणां पुनः अन्येभ्यश्च यथान्यायं गोहिरण्यादि शक्तितः दद्याद्दासोऽथ गंधान्यं यथाविभव-
माहृतः ब्राह्मणैः सह भुंजीत तेभ्यो दद्याच्च दक्षिणाम् ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः तुलापुरुषदानानि फल-
माप्नोति सुव्रतः अनेकजन्मसंसिद्धपापेभ्यो मुच्यते ध्रुवं बहुनाकिमिहोक्तेन मुक्तिस्तस्य करे स्थिता कुरुक्षेत्रे महापुण्ये सू-
र्यपर्वण्यशेषतः तुलापुरुषदानाद्यैः कृतैर्यल्लभ्यते फलं तत्फलं लभते मर्त्यो दानेनानेन सद्व्रती इति रामप्रतिमादानोद्यापन-
विधिः अथ रामपूजा आचम्य प्राणानायम्य मासपक्षाद्युल्लिख्य सकलपापक्षयकामः श्रीरामप्रीतये रामनवमीव्रतमहं
करिष्ये तदंगत्वेन रामपूजां करिष्ये यथा राममंत्रेण षडंगन्यासं कलशार्चनं च करिष्ये फलपुष्पाक्षतासहितं जलपूर्णं ता-
म्रपात्रं गृहीत्वा उपोष्य नवमीं त्वद्य यामेष्वष्टसु राघव तेन प्रीतो भव त्वं मे संसारात्त्राहि मां हरे इति मंत्रेण पात्रस्थं जलं क्षिपेत्
ततः शक्तितः हैमीं रामप्रतिमां कृत्वा अग्न्युत्तारणपूर्वकं कपोलोस्पृश्य मूलमंत्रं प्रणवादिचतुर्थ्यंतं नामरामाय देव तत्संख्याय
स्वाहेति मंत्रं पठन् प्राणप्रतिष्ठां कुर्यात् ततः कोमलाक्षं विशालाक्षमिंद्रनीलसमप्रभं दक्षिणांगे दशरथपुत्रावेक्षणतत्परं
पृष्ठतो लक्ष्मणं देवं सच्छत्रं कनकप्रभं पार्श्वे भरतशत्रुघ्नौ तालवृंतकरावुभौ अग्रे व्यग्रं हनूमंतं रामानुग्रहकांक्षिणं इति ध्या-

येत् अथषोडशोपचारैः पूजयेत् आवाहयामि विश्वेशं जानकीवल्लभं प्रभुं कौसल्यातनयं विष्णुं श्रीरामं प्रकृतेः परं सह-
स्रशीर्षेत्यावाहनं श्रीरामगच्छ भगवन् रघुवीर नृपोत्तम जानकीसह राजेंद्र सुस्थिरो भव सर्वदा रामचंद्र महेष्वास रावणां
तकराघव यावत्पूजां समाप्येहं तावत्त्वं सन्निधौ भव इतिसन्निधापनं रघुनायक राजर्षे नमो राजीवलोचन रघुनंदन मे दे
व श्रीराम अभिमुखो भव इतिसंमुखीकरणं राजाधिराज राजेंद्र रामचंद्र महीपते रत्नसिंहासनं तुभ्यं दास्यामि स्वीकुरु प्रभो
पुरुष एवेदमासनं त्रैलोक्यपावनानंत नमस्ते रघुनायक पाद्यं गृहाण राजर्षे नमो राजीवलोचन एतावानस्येति पाद्यं परिपूर्णा
नंद नमो रामाय वेधसे गृहाणार्घ्यं मया दत्तं कृष्ण विष्णो जनार्दन त्रिपादूर्ध्वम् अर्घ्यं नमः सत्याय शुद्धाय नित्याय ज्ञानरू
पिणे गृहाणाचमनं नाथ सर्वलोकैकनायक तस्माद्विराळाचमनीयं नमः श्रीवासुदेवाय तत्त्वज्ञानस्वरूपिणे मधुपर्कं गृ-
हाणेदं जानकीपतये नमः मधुपर्कं पंचामृतं मयानीतं पयोदधि घृतं मधु शर्करा मधुसंयुक्तं रामत्वं प्रतिगृह्यतां पंचामृतं
शुद्धोदकेन स्नानं पुष्पं धूपं दीपं नैवेद्यं निर्माल्यविसर्जनं ब्रह्मांडोदरमध्यस्थैस्तीर्थैश्च रघुनंदन स्नापयिष्याम्यहं
भक्त्या त्वं गृहाण जनार्दन पुरुषसूक्तेन स्नानं तप्तकांचनसंकाशं पीतांबरमिदं हरे संगृहाण जगन्नाथ रामचंद्र नमोस्तु ते
तं यज्ञमिति वस्त्रं श्रीराम अच्युत यज्ञेश श्रीधरानंत राघव ब्रह्मसूत्रं सोत्तरीयं गृहाण रघुनंदन तस्माद्यज्ञात् इति यज्ञोपवी
तं कुंकुमागरुकस्तूरीकर्पूरं चंदनं तथा तुभ्यं दास्यामि राजेंद्र श्रीराम स्वीकुरु प्रभो तस्माद्यज्ञात्सर्वहुत इति गंधं अक्षताः
परमा दिव्या॰ अलंकारार्थे अक्षतान् तुलसीकुंदमंदारजातीपुन्नागचंपकैः कदंबकरवीरैश्च कुसुमैः शतपत्रकैः नीलां
बुजैर्बिल्वपत्रैरर्चयेद्राघवं विभुम् पूजयिष्याम्यहं भक्त्या संगृहाण जनार्दन तस्मादश्वा इति पुष्पाणि अथांगपूजा श्रीरा
मचंद्राय नमः पादौ पूजयामि राजीवलोचनाय॰ गुल्फौ पू॰ रावणांतकाय॰ जानुनी पू॰ वाचस्पतये॰ ऊरू पू॰ विश्वरूपाय॰
जंघे पूज॰ लक्ष्मणाग्रजाय॰ कटीं पू॰ विश्वमूर्तये॰ मेढ्रं पू॰ विश्वामित्रप्रियाय॰ नाभिं पू॰ परमात्मने नमः॰ हृदयं पू॰ श्रीकंठाय॰

कंठंपू० सर्वास्त्रधारिणे० बाहूपू० रघूद्वहाय० मुखंपू० पद्मनाभाय० जिह्वांपू० दामोदराय० दंतान्पू० सीतापतये० ललाटंपू० ज्ञा
नगम्याय० शिरःपू० सर्वात्मने० सर्वांगंपू० वनस्पतिरसोद्भूतो गंधाढ्यो गंधउत्तमः रामचंद्रमहीपाल धूपोयंप्रतिगृह्यतां यत्पु
रुषेति धूपं ज्योतिषांपतयेतुभ्यंनमोरामायवेधसे गृहाणदीपकंचैवत्रैलोक्यतिमिरापहं ब्राह्मणोस्येतिदीपं इदंदिव्यान्न-
ममृतंरसैःषड्भिःसमन्वितं रामचंद्रेशनैवेद्यंसीतेशप्रतिगृह्यताम् चंद्रमामनसइतिनैवेद्यं ततःआचमनं इदंफलमिति
फलं नागवल्लीदलैर्युक्तंपूगीफलसमन्वितं तांबूलंगृह्यतांरामकर्पूरादिसमन्वितं इतितांबूलं हिरण्यगर्भेतिदक्षिणां मूं
नाभ्याआसीतिप्रदक्षिणां नृत्यैर्गीतैश्चवाद्यैश्चपुराणपठनादिभिः पूजोपचारैरखिलैःसंतुष्टोभवराघव मंगलार्थंमहीपा
लनीराजनमिदंहरे संगृहाणजगन्नाथरामचंद्रनमोस्तुते नीराजनं नमोदेवाधिदेवायरघुनाथायशार्ङ्गिणे चिन्मयायानंतरूपायसीतायाःपत
येनमः सप्तास्यासन्नितिनम० सर्वलोकशरण्यायरामचंद्रायवेधसे ब्रह्मानंदैकरूपायसीतायाःपतयेनमः यज्ञेनय० मंत्रपु० यानिकानिचे
तिप्रदक्षिणां अशोककुसुमैर्युक्तंरामायार्घ्यंनिवेदयेत् दशाननवधार्थायधर्मसंस्थापनायच राक्षसानांवधार्थायदैत्यानांनिधनाय-
च परित्राणायसाधूनांजातोरामःस्वयंहरिः गृहाणार्घ्यंमयादत्तंभ्रातृभिःसहितोनघ इत्यर्घ्यं इतिपूजनं अथ
कथा अगस्त्यउवा० रहस्यंकथयिष्यामिसुतीक्ष्णमुनिसत्तम चैत्रमासेनवम्यांतुशुक्लपक्षेरघूत्तमः प्रादुरासीत्ततो
ब्रह्मन्ब्रह्मानंदैककेवलः तत्रजागरणंकुर्याद्रामस्यपुरतोबुधः प्रतिमायांयथाशक्तिपूजाकार्यायथाविधि प्रातर्दशम्यां
स्नात्वैवकृत्वासंध्यादिकाःक्रियाः संपूज्यविधिवद्रामंभक्तिवित्तानुसारतः ब्राह्मणान्भोजयेत्सम्यक्दक्षिणाभिश्चतो
षयेत् गोभूतिलहिरण्याद्यैर्वस्त्रालंकारभूषणैः रामभक्त्याप्रयत्नेनप्रीणयेत्परयामुदा एवंयःकुरुतेभक्त्याश्रीराम
नवमीव्रतं अनेकजन्मजातानिपापानिसुबहूनिच भस्मीभवंतिपापानियातिविष्णोःपरंपदं सर्वेषामप्ययंधर्मोभु
क्तिमुक्त्येकसाधनः अशुचिर्वापिपापिष्ठःकृत्वेदंव्रतमुत्तमं पूज्यःस्यात्सर्वभूतानांयथारामस्तथैवसः यस्तुरामनव-

स्यांवै पक्षे ऽ सतु नराधमः कुंभीपाकेषु घोरेषु पचत्येव न संशयः अकृत्वा रामनवमीव्रतं सर्वोत्तमं व्रतं व्रतान्यन्यानि कुरुते न तस्य फलभाग्भवेत् महात्यपि प्रणश्यंति पापानि नवमीव्रतात् एकामपि ततो भक्त्या श्रीरामनवमीं व्रती उपोष्य कृतकृत्यः स्यात्सर्व पापैः प्रमुच्यते ततो रामनवम्यां तु श्रीरामप्रतिमापरः विधानेन नरः श्रेष्ठ स मुक्तो नात्र संशयः सुतीक्ष्ण उ० श्रीरामप्रतिमा दानविधानं वा कथं मुने कथयस्व यथा रामभक्तस्य मम विस्तरात् अगस्त्य उवा० कथयिष्यामि ते भक्त्या प्रतिमादानमुत्तमं विधानं वापि यत्नेन यतस्त्वं वैष्णवोत्तमः अष्टम्यां चैत्रमासे तु शुक्लपक्षे जितेंद्रियः दंतधावनपूर्वं तु प्रातः स्नात्वा यथाविधि नद्यां तडागे कूपे वा ह्रदे प्रस्रवणेऽपि वा संध्यादिकाः क्रियाः कुर्यात्संस्मरन् राघवं हृदि गृहमागत्य विप्रेंद्र कुर्यादौपासनादिकं दांतं कुटुंबिनं विप्रं वेदशास्त्रविदां वरं श्रीरामपूजानिरतं सुशीलं दंभवर्जितं सर्वज्ञं राममंत्राणां राममंत्रैकसाधनं आहूय प्र- त्यासंपूज्य प्रणयात्प्रार्थयेद्व्रती श्रीरामप्रतिमादानं करिष्येऽहं द्विजोत्तम तत्राचार्यो भव प्रीतः श्रीरामोऽसि त्वमेव च इत्युक्त्वा भोक्तुं भाद्यानं तस्यार्पयित्वा ततः स्वयं तदैवाभ्यज्य च स्नायाच्चिंतयेद्राघवं हृदि श्वेतांबरधरः देवगंधमाल्यादि धारयेत् अ नितोऽभूषितश्चैव वाग्यतो माध्याह्निकीं क्रियां आचार्यं पूजयेत्पश्चात्सात्त्विकान्नैः सुविस्तरं भुंजीयात्स्वयमप्येवं रामं हृदि नुस्मरन् एकभक्तव्रतं तत्र सहाचार्यो जितेंद्रियः शयीत भूतले सम्यक् श्रीरामार्पितमानसः ततः प्रातः समुत्थाय स्नात्वा स ध्याय यथाविधि प्रातः सर्वाणि कर्माणि शीघ्रमेव समापयेत् ततः स्वस्थमना भूत्वा विद्वद्भिः सहितोऽनघ स्वगृहे चोत्तरे भागे मंडपं श्लक्ष्णमुज्ज्वलं मंडपं च चतुर्द्वारं ध्वजाः कार्याः सुविस्तरैः फलैर्नानाविधैर्युक्तं पुष्पमालासुशोभनं कदलीस्तंभसंयुक्तं च- ज्ञिवैस्तैरलंकृतं सुतोरणैर्मनोरम्यैः पुष्पाद्यैः समलंकृतं शंखचक्रहनूमद्भिः प्राग्द्वारे समलंकृतं गरुत्मच्छार्ङ्गबाणैश्च दक्षिणे तु विभूषितं गदाखड्गांगदैश्चैव पश्चिमे च विभूषितं पद्मस्वस्तिकनीलैश्च कौबेर्यां समलंकृतम् मध्ये तु चतुरस्रां च वे दिकां हस्तमायतां वितानैश्च गीतनृत्यैश्च वाद्यैश्चापि समन्वितं पुण्याहं वाचयित्वा च विद्वद्भिः प्रीतमानसैः ततः संकल्पयेद्देवं राम

मेवमनुस्मरन् अस्यांरामनवम्यांतुरामाराधनतत्परः उपोष्याष्टमयामेषुपूजयित्वायथाविधि इमांस्वर्णमयींरामप्रतिमांतुप्रय-
त्नतः श्रीरामप्रीतयेदास्येरामभक्तायधीमते स्तुतोरामोदहत्याशुपापानिसुबहूनिमे अनेकजन्मलग्नानिअभ्यस्तानिम
हांतिच विलिखेत्सर्वतोभद्रंवेदिकोपरिसुंदरं मध्येतीर्थोदकैर्युक्तंपात्रंसंस्थाप्यचर्चितं सौवर्णेराजतेताम्रेपात्रेषट्कोण
मालिखेत् ततःस्वर्णमयींरामप्रतिमांपलमात्रतः निर्मितांद्विभुजांरम्यांवामांकस्थितजानकीं बिभ्रतींदक्षिणेहस्तेज्ञानमु-
द्रांमहामुने वामेनाधःकरेणैनांदेहमालिंग्यसंस्थितां सिंहासनेराजतेचपलद्वयविनिर्मिते पंचामृतस्नानपूर्वंसंपूज्यवि
धिवत्ततः मूलमंत्रेणनियतोदद्याच्चैवमतंद्रितः एवंसंपूज्यविधिवद्रात्रौजागरणंतथा दिव्यांरामकथांश्रुत्वारामभक्तिसमन्वि
तः गीतनृत्यादिभिश्चैवरामस्तोत्रैरनेकधा रामाष्टकेनसंस्तुत्यगंधपुष्पाक्षतादिभिः कर्पूरागरुकस्तूरीकल्हारार्घ्यैरनेकधा
संपूज्यविधिवद्भक्त्यादिवारात्रिंनयेद्बुधः ततःप्रातःसमुत्थायस्नानसंध्यादिकाःक्रियाः संस्नाप्यविधिवद्रामपूजयेद्विधि
वन्मुने ततोहोमंप्रकुर्वीतमूलमंत्रेणमंत्रवित् पूर्वोक्तकुंडेगृह्योक्तस्थंडिलेवासमाहितः लौकिकाग्नौविधानेनशतमष्टोत्त
रंमुने आज्येनपायसेनैवस्मरन्राममतंद्रितः ततोभक्त्यासदातुष्टंआचार्यंपूजयेन्मुने कुंडलाभ्यांसुवर्णाभ्यामंगुलीयै
रनेकधा गंधपुष्पाक्षतैर्वस्त्रैर्विचित्रैस्तुमनोहरैः ततोरामंस्वयंदद्यादिमंमंत्रमुदीरयेत् इमांस्वर्णमयींरामप्रतिमांसमलंकृ
तां चित्रवस्त्रयुगच्छन्नांरामोहंराघवायते श्रीरामप्रतिमांदास्येप्रीतोभवतुराघवः इतिदत्वाविधानेनदद्यात्तद्दक्षिणांध्रुवं अ
न्येभ्यश्चयथाशक्त्यागोहिरण्यादिभक्तितः दद्याद्दासोधनंधान्यंयथालंकरणानिच अगस्त्यउवा॰ एवंयःकुरुतेरामप्रति
मादानमुत्तमं ब्रह्महत्यादिपापेभ्योमुच्यतेनात्रसंशयः तुलापुरुषदानेनफलमाप्नोतिसुव्रतात् अनेकजन्मसंसिद्धपापे
भ्योमुच्यतेध्रुवं बहुनात्रकिमुक्तेनमुक्तिस्तस्यकरेस्थिता तुलापुरुषदानेनमुनेयल्लभतेफलं तत्फलंलभतेमर्त्योदानेनानेन
सुव्रत सुतीक्ष्णउवा॰ प्रायेणहिनराःसर्वेदरिद्राःकृपणामुने अगस्त्यउवा॰ दरिद्रस्यमहाभागस्वस्यविनाशुसारतः प

लार्धेननतदर्धेनतदर्धार्धेनवापुनः वित्तशाठ्यमकृत्वैवकुर्यादेवंव्रतंमुने यदिघोरतरंदुष्टंपातकंनेहतेक्वचित् अकिंचनोपियत्नेनउ
पोष्यनवमीदिने समाहितोतियत्नेनउपोष्यनवमीदिने एकचित्तोतियत्नेनसर्वपापैःप्रमुच्यते प्राप्तेश्रीरामनवमीदिनेमर्त्योवि
मूढधीः उपोषणंनकुरुतेकुंभीपाकेषुपच्यते यत्किंचिद्रामसुद्दिश्यक्रियतेनेनस्वशक्तितः रौरवेसतुमूढात्मापच्यतेनात्रसंश
यः सुतीक्ष्णउवा० यामाष्टकेतुपूजावैतत्रचोक्तामहामुने मूलमंत्रेणसंयुक्तातांकथांवदसुव्रत अगस्त्यउ० सर्वेषांराममं-
त्राणांमंत्रराजंषडक्षरं इदंतुस्कांदेमोक्षखंडेश्रीरामंप्रतिरुद्रगीतायांरुद्रवाक्यं मुमूर्षोर्मणिकर्ण्यांतेअर्धोदकनिवासिनः अ
हंदिशामितेमंत्रंतारकस्योपदेशतः श्रीरामरामरामेतिएतत्तारकमुच्यते अतस्त्वंजानकीनाथपरंब्रह्माभिधीयते तारकंब्रह्म
चेत्युक्तेनेनपूजाप्रशस्यते पीठांगदेवतानांतुआवृत्तीनांतथैवच आदावेवप्रकुर्वीतदेवस्यगीतमानसः उपचारैःषोडशभिः
पूजाकार्यायथाविधि आवाहनंस्थापनंचसंमुखीकरणंतथा एवंमुद्राप्रार्थनांचपूजामुद्रांप्रयत्नतः शंखपूजांप्रकुर्वीतपूर्वो
क्तविधिनाततः कलशंवामभागेचपूजाद्रव्याणिचादरात् पीठेसंपूज्ययत्नेनआत्मानंमंत्रमुच्चरेत् पात्रासादनमप्येवंकु
र्याद्यामेषर्तादितः पीतांबराणिदेवायप्रार्पयन्नर्चयेत्सुधीः स्वर्णयज्ञोपवीतानिदद्याद्देवायभक्तितः नानारत्नविचित्राणिद
द्यादाभरणानिच हिमांबुघृष्टरुचिरंघनसारंमनोहरं क्रमात्तुमूलमंत्रेणउपचारान्प्रकल्पयेत् कल्हारैःकेतकैर्जात्यैःपु
न्नागाद्यैःप्रपूजयेत् चंपकैःशतपत्रैश्चसुगंधैःसुमनोहरैः पाद्यचंदनधूपैश्चतत्तन्मंत्रैःप्रपूजयेत् भक्ष्यभोज्यादिकंभक्त्यादद्या
द्विधिनार्पयेत् येनसोपस्करंदेवंदत्वापापैःप्रमुच्यते जन्मकोटिकृतैर्घोरनानारूपैश्चदारुणैः विमुक्तःस्यात्क्षणादेवरा
मएवभवेन्मुने श्रद्दधानस्यदानव्यंश्रीरामनवमीव्रतं सर्वलोकहितायेदंपवित्रंपापनाशनं लोहेननिर्मितंवापिशिलया-
दारुणापिवा एकेनैवप्रकारेणयस्मैकस्मैयथवामुने कृतंसर्वप्रयत्नेनयत्किंचिदपिभक्तितः जपेदेकांतमासीनोयावत्सदश
मीदिनं अनेनस्यात्पुनःपूजादशम्यांभोजयेद्द्विजान् भक्त्याभोज्यैर्बहुविधैर्दद्याद्भक्त्याचदक्षिणां कृतकृत्योभवेत्तेनस

श्रीरामः प्रसीदति तूष्णींतिष्ठन्नरोवापिपुनरावृत्तिवर्जितः द्वादशाब्दैःकृतेनापियत्पापंचापिमुच्यते विलयंयाति
तत्सर्वंश्रीरामनवमीव्रतात् जपश्चरामसंत्राणांयोनजानातितस्यवै उपोष्यसंस्मरेद्रामंन्यासपूर्वमतंद्रितः गुरुलब्धो
यंमंत्रस्तुन्यसेन्न्यासपुरःसरः यामेयामेत्वविधिनाकुर्यात्पूजांसमाहितः मुमुक्षुश्चसदाकुर्यात्श्रीरामनवमीव्रतं मु-
च्यतेसर्वपापेभ्योयातिब्रह्मसनातनं इतिश्रीस्कंदपुराणेअगस्त्यसंहितायांअगस्तिसुतीक्ष्णसंवादेरामनवमीव्र० संपूर्ण
अथरामनामव्रतं तत्रैवरामनवमीमारभ्य अथचसर्वकालेपिरामनामजपलेखनंकुर्यात् आचम्यप्राणानायम्यमम
सपक्षाद्युल्लिखसकलपापक्षयकामोवाविष्णुलोकप्राप्तिकामोवाश्रीरामप्रीतयेरामनामजपलेखनंकरिष्ये इतिसंकल्प्य
अथरामनामपूजा नाममंत्रेणषोडशोपचारैःपूजयेत् अथकथोद्यापनंच पार्वत्युवाच धन्यास्म्यनुगृहीतास्मिकृ-
तार्थास्मिजगत्प्रभो विच्छिन्नोमेघसंदेहग्रंथिर्भवदनुग्रहात त्वन्मुखाद्गलितंदेवत्वत्तोमृतरसायनं पिबंत्यामेमनोदेवन
तृप्यतिभवापहम् श्रीरामस्यामृतंनामस्तुतंसंक्षेपतोमया इदानींश्रोतुमिच्छामिविस्तरेणस्फुटाक्षरं श्रीमहादेवउवा-
शृणुदेविप्रवक्ष्यामिगुह्याद्गुह्यतरंमहत् प्राप्नोतिपरमांसिद्धिंदीर्घायुःपुत्रसंपदं रामनामलिखेद्यस्तुलक्षकोटिशतान
वधि एकैकमक्षरंपुंसांमहापातकनाशनं सकामोपिलिखेद्यस्तुनिःकामनतुकिंपुनः इहैवसुखमाप्नोतिअंतेचपरमं
पदं आदावंतेचमध्येचव्रतस्योद्यापनंचरेत् उद्यापनंविनोनैवफलसिद्धिमवाप्नुयात् तस्मात्सर्वप्रयत्नेननाम्नउद्याप
नंकुरु पार्वत्युवाच नतास्मिदेवदेवेशभक्तानुग्रहकारक नाम्नउद्यापनंब्रूहिविस्तरेणममप्रभो श्रीशिवउवाच
शृणुदेविप्रवक्ष्यामिविस्तरेणयथाविधि नाम्नउद्यापनंचात्रमत्तयाभवदनुग्रहात् सौवर्णंसुंदरंकुर्यात्सीतारामंसल-
क्ष्मणं हनूमत्प्रतिमांतत्रचतुर्थांशेनहाटकैः सुवर्णस्यप्रमाणंतुपलाष्टकमुदीरितं अशक्तश्चेत्पलेनैवतदर्धार्धेनवा
पुनः श्रीरामप्रतिमांकृत्वावित्तशाठ्यंनकारयेत् राजतेनासनंकुर्यान्मासैःषोडशसंमितैः पीतवस्त्रेणसंवेष्ट्यस्थापये-

तंडुलोपरि तंडुलानांप्रमाणंतुभवेद्द्रोणचतुष्टयं शस्तोदेशोगृहेतीर्थेमंडपंकारयेत्सुधीः तोरणानिचतुर्द्वारे बंधयेदाम्रपल्लवैः
भूमौगोमयलिप्तायांसर्वतोभद्रसंज्ञकं रचयेत्सप्तधान्येननानारंगैःसुशोभनं कुंभानष्टौचपूर्वादौस्थापयेद्व्रणान्सुमा
नु कुंभमेकंमध्यदेशेस्थापयेत्तंडुलोपरि गंगाजलेनसंपूर्यपंचरत्नैःसपल्लवैः नारीकेलफलान्यष्टौवैकरामायदापयेत् आचा
र्यंवरयेत्तत्रवेदशास्त्रविशारदम् ब्रह्मादिकान्द्विजानांतुवरणंकारयेत्ततः मधुपर्केणसंपूज्यवस्त्रालंकारभूषणैः ऋत्विजःषो
डशानष्टौवरयेद्वेदपारगान् स्नात्वानित्यंविधायादौपूजयेद्गणनायकं पुण्याहंवाचयित्वातुपूजयेद्रामचंद्रकं ततोग्निंचप्रति
ष्ठाप्यस्वशाखोक्तविधानतः विष्णुसूक्तेनहोतव्यंमूलमंत्रेणवापुनः नवग्रहांश्चदिक्पालानत्रानुक्तांश्चहोमयेत् पुरुषसू-
क्तेनहोतव्याःसमिधाज्यचरुस्तिलाः अष्टोत्तरसहस्रंतुराममंत्रेणहोमयेत् होमांतेपूजनंकुर्यात्राममंत्रादिदेवताः पू
जयित्वाततोहुत्वाबलिंपूर्णाहुतिंतथा श्रेयःसंपाद्यदानंचअभिषेकंसमापयेत् रामंनत्वार्चयित्वाचप्रार्थयित्वापुनःपुनः आचार्यं
पूजयेत्पश्चात्सुवर्णवस्त्रधेनुभिः प्रतिमादानमंत्रेणआचार्यायनिवेदयेत् नतोस्मिदेवदेवेशबहुबुद्धिमहात्मभिः यश्चिंत्यते
कर्मपाशात्त्वद्दिनित्यंमुमुक्षुभिः माययागुप्तमस्यात्वंस्रजस्यवसिलुंपसि अतस्त्वत्पादभक्तोस्मित्वद्भक्तिस्तुश्रियोधिका म
क्तिमेवहिवांछंतित्वद्भक्ताःसारवेदिनः अतस्त्वत्पादकमलेभक्तिरेवसदास्तुमे संसारामयतप्तानांभेषज्यंभक्तिरेवते सी-
तासौमित्रिहनुमद्भक्तयुक्तनरेश्वरः दानेनानेनमेरामभुक्तिमुक्तिप्रदोभव प्रतिमादानसिद्ध्यर्थंशक्त्यास्वर्णंतुदापयेत् दानं
यद्दक्षिणाहीनंतत्सर्वंनिष्फलंभवेत् ब्राह्मणान्शतसाहस्रंभोजयेन्मधुसर्पिषा पक्वान्नैःपायसैःस्वाद्यैःलड्डुकैःशर्करान्वितैः
ऋत्विग्भ्योदक्षिणांदद्याद्भूयसींदक्षिणांददेत् तदंतेघृतपात्रंचतिलपात्रंचदापयेत् शय्यांचरथदानानिदशदानानिशंकितः अ
ग्रकेशेत्स्वर्णमेकंदत्वारामेनमेस्तुनः तिलकंकारयेत्पश्चादभिषिंचेत्सपल्लवैः द्विजैस्तुआशिषोदेयानत्वास्तुत्वाविसर्जयेत् उ
मामहेश्वरौपूज्यौभोजयेद्बटुकंतथा कुमारीणांशतंभोज्यंयोगिराजंचभोजयेत् क्षेत्रपालबलिंदत्वाध्यात्वाग्रामंसदाजपेत्

ब्रह्मादिभिस्तु तन्नपुण्यं वक्तुं शक्यं न किंचन अश्वमेधसहस्राणि वाजपेयशतानि च एकेन रामनाम्ना तु तत्फलं लभते नरः नारी
वा पुरुषो वापि शूद्रो वाप्यधमो नरः रामनाम्ना तु मुक्तास्ते सत्यं सत्यं वरानने मूले कल्पद्रुमस्याखिलमणिविलसद्रत्नसिंहासनस्थं
कोदंडधारयंतं ललितकरयुगेनार्पितं लक्ष्मणेन वामांके न्यस्तसीतं भरतधृतमहामौक्तिकच्छत्रकांतं शत्रुघ्नचामराभ्यां विलसित
मनिशं रामचंद्रं भजेहं वंदेत्र्यंमहेशानं चंडकोदंडखंडनं जानकीहृदयानंदवर्धनं रघुनंदनं चरितं रघुनाथस्य शतको-
टिप्रविस्तरं एकैकमक्षरं पुंसां महापातकनाशनं इति श्रीभविष्योत्तरपुराणे उमामहे० रामनामलेखनोद्यापनं संपूर्णम्
अथादुःखनवमीव्रतं भाद्रपदशुक्लनवम्यां मुहूर्तमात्रसत्वेपि परयुतायां अदुःखनवमीव्रतं देशकालौ स्मृत्वा मम इह जन्मनि
जन्मांतरे च भर्त्रा सह सकलपातकादिदुःखनाशार्थं व्रतखंडकल्पोक्तफलावाप्त्यर्थं श्रीगौरीदेवताप्रीत्यर्थं अदुःखनवमीव्रतपू
जनमहं करिष्ये तत्रादौ निर्विघ्नतासिद्ध्यर्थं स्वस्तिपुण्याहवाचनं च करिष्ये इति संकल्प्य गोमयेनोपलिप्तभूमौ वेदिकां
दक्षिणाद्यस्त्रछादितां अपूपपायसान्वितां उपरि मंडपिकायुतां कृत्वा तत्र पीठे आसनादि कलशप्रतिष्ठां कृत्वा अग्न्युत्तारण
पूर्वकं गौरीप्रतिमां संस्थाप्य गणपतिं चतुष्टयं इंद्रादिलोकपालांश्चावाह्य गौरीर्मिमायेतिनमो देव्या इति वा मंत्रेण संपूज्य दे
वपात्रधरां देवीं विभूतिं च त्रिलोचनीं दुग्धान्नदाननिरतां गौरीं तां चिंतयाम्यहं ध्यानं गौरीं दुःखहरां देवीं शिवस्यार्धांगधा
रिणीं कृष्णनीलवस्त्रसंयुक्तामुमामावाहयाम्यहं आवाहनं प्रसन्नवदने मातर्नित्यं देवर्षिसंस्तुते मया भावेन यद्दत्तं पीठं त-
त्प्रतिगृह्यतां आसनं सर्वतीर्थमयं दिव्यं सर्वभूतोपजीवनं मया दत्तं च पानीयं पाद्यार्थं प्रतिगृह्यतां पाद्यं अर्घ्यं गृहाणोत्पर्घ्यं
गंगादिसर्वतीर्थेभ्यो भक्त्यानीतं कृशीतलं गंधपुष्पाक्षतोपेतं गृहाणार्घ्यं नमोस्तु ते अर्घ्यं मातः सर्वाणि तीर्थानि गंगाद्या
श्च तथा नदाः स्नानार्थं तव देवेशि मयानीताः कृशोभनाः स्नानं सर्वभूषाधिके सौम्ये लोकलज्जानिवारणे मयोपपादि
ते तुभ्यं वाससी प्रतिगृह्यतां वस्त्रं श्रीखंडमिति गंधं माल्यादीनीति पुष्पं वनस्पतिरसइति धूपं आज्यं चेति दीपम्

वोषभेकेदारंभूतभावनं गत्वामनःसमाधायकुक्कुटींमनसास्मरत् उत्पत्स्येयसत्कुलेत्वाहं धनाढ्येवेदपारगे इतिमत्वास्वदेहंसाव-
न्हिमध्येन्यपातयत् पुनर्भवेराजपत्नीइतिमत्वाचमर्कटी अकरोत्स्वतनुत्यागंनह्यकेनेवबोधिता कुक्कुटीसामहादेव्याःप्रसादे
ननतथाकुले विप्राणांकन्यकाभूत्वाभर्ताधिमलरत्नदः दिव्यवर्धनशीलासानिरतापतिसेवने इतराराजपत्नीत्वमापासावध
मर्कटी उभेजातिस्मरेजातेमहादेव्याःप्रसादतः अथसाकुक्कुटीपंचपुत्रानजज्ञेपितुःसमान् बभूवधनसंपन्नारूपशीलगु
णान्विता मर्कटीपुत्रशोकार्ताबभूवव्यथिताभृशं पूर्वकर्मस्मरंतीसाकदाचिद्दैवयोगतः अपश्यत्कुक्कुटीपुत्रान्पंचैवचापि
तुःसमान् अमारयत्स्वभृत्यैस्तान्पुत्रान्सामर्कटीतदा तच्छिरांसिगृहीत्वातुकुक्कुटयैवाणकंददौ अदुःखनवमींप्राप्यत्र
तस्थाचबभूवसा गौरीरूपाविजननीजननीभक्तवत्सला शिरांस्यादायसर्वेषांपुत्रकांस्तानजीवयत् तद्वाणकंस्ववर्ण-
स्यशिरोभिःपर्यकल्पयत् कुक्कुटीपूजयांचक्रेगौरींदुःखविनाशिनीं त्वत्तःसदाजीवतात्वमोक्तुंगृहमगात्ततः तदात
द्वाणकंप्रेक्ष्यस्ववर्णप्रेषितापशून् स्वभर्त्रेपुत्रयुक्तायहृष्ट्वावेदयनंदिनी पुनर्वनागतांस्तांस्तुसाददर्शालिपुत्रकान्
दृष्ट्वापुनःपुनःसाथरुरोदभृशदुःखिता आत्मानंनिंदयामासमर्कटीविह्वलासती आगत्यसख्याःसदनमात्मानंसा
न्यवेदयेत् पापिन्यहंदुराचारादुर्भगाश्रुतपूर्वकं बालहत्यात्मकंपापंचरितंनात्रसंशयः इत्याकर्ण्यसखीवाक्यंकुक्कु
टीविस्मिताभवत् अपृच्छत्कारणंक्षिप्रंशोकसागरदायकं इदंशीलंकथंभद्रेकस्माद्दुदसिचात्मवान् विभोगाराज
पत्नींत्वंमान्यासमसखीष्वपि मर्कटीकुक्कुटीवाक्यंश्रुत्वावृत्तंन्यवेदयत् गत्वाचकुक्कुटीपुत्रैःप्रायश्चित्तमकारयत् स्म
रंतीचव्रतंदेव्याःकुरुत्वंचयथाविधि अथदेव्याःप्रसादेनमर्कटीसुपुवेसुतं सुंदरंस्वरनामपृथ्वीभारसहंवरं रा ११०
जपत्नीविप्रपत्नीसुखिन्योसंबभूवतुः इहलोकेदुःखितस्य अदुःखनवमीव्रतं सीतयायत्कृतंचेतहमयंत्याकृतंत्विदम्
अन्याभिर्बहुभिःस्त्रीभिर्व्रतमाचरितंत्विदं याकरोतिव्रतमिदंशृणोतिचकथामिमां सादुःखभाङ्नभवतिसत्यंमत्वं

वदाम्यहं सर्वदुःखहरंलोकेकिमन्यच्छ्रोतुमिच्छथ इतिश्रीस्कं॰अदुःखन॰ब्र॰क॰स॰ अथआश्विनशु॰देवीव्र॰ हेमाद्रौविष्णु
धर्मे अथपूजा विधिनापूजयेत्केनभद्रकालींनराधिप नवम्यामाश्विनेमासिशुक्लपक्षेनरोत्तम पुष्करउवा॰ पूर्वोत्तरेतुदिग्भागेशिवे
वास्तुमनोहरे भद्रकाल्यागृहंकार्यंविचित्रवस्त्रैरलंकृतं भद्रकालीगृहंगत्वातत्रसंपूजयेद्द्विज अष्टादशभुजाकार्याभद्रकालीमनोहरा आ
लीढस्थानसंस्थानाचतुःसिंहरथेस्थिता अक्षमालात्रिशूलंचखड्गंचर्मांकुशास्तथा बाणचापेचकर्तव्येशंखपद्मेतथैवच स्रुक्स्रुवौ
चतथाकार्यौतथावेदिकमंडलू दंडशक्तीचकर्तव्येतथापाशहुताशनौ हस्ताभ्यांभद्रकाल्याश्चभवेत्कांतिकरःपरः एवंसाध्य
महाभागरत्नपात्रधराभवेत् आश्विनेशुक्लपक्षस्यअष्टम्यांप्रयतःशुचिः तत्रचायुधचर्माद्यं छत्रंवस्त्रंचपूजयेत् पु
ष्पैर्मध्यैःफलैर्भक्ष्यैर्भोज्यैश्चसुमनोहरैः बलिभिश्चविचित्रैश्चप्रोक्ष्यादानैस्तथैवच रात्रौजागरणंकुर्यात्तत्रैववसु-
धाधिप उपोषितोद्वितीयेन्हि पूजयेत्तु पुनरेवतां आयुधाद्यंचसकलंपूजयेद्वसुधाधिप एवंसंपूजयेद्देवींवरदां-
भक्तवत्सलां कात्यायनींकामगमांबहुरूपांवरप्रदां पूजितासर्वकामैःसाप्रभुनक्तिवसुधाधिप एवंहिसंपूज्यजगत्प्रधानांयात्वा
नुदेयावसुधाधिपेन प्राप्नोतिसिद्धिंपरमांमहेशाज्जनस्तथान्योपिचवित्तशक्त्या ब्रह्मोवाच शृणुसर्वंप्रवक्ष्यामियथात्वंप
रिपृच्छसि महासिद्धिप्रदंधान्यंसर्वशत्रुनिबर्हणं सर्वलोकोपकारार्थंपूजयेत्सर्ववृत्तिषु ऋत्वर्थंब्राह्मणाद्यैश्चक्षत्रियैर्भू-
मिपालने गोधनार्थैवत्सवैश्यैःशूद्रैःपुत्रसुखार्थिभिः सौभाग्यार्थंतथास्त्रीभिर्धनार्थंधनकांक्षिभिः महाव्रतंमहापुण्य
शक्त्याढ्यैश्चअनुष्ठितं कर्तव्यंदेवराजेंद्रदेव्याभक्तिसमन्वितैः कन्यासंस्थेरवौशुक्लेदेवीमाराध्यनंदिकां नंदिकाप्रतिपत्
अयाचितस्थवैकाशीनक्ताशीत्वथवाव्यदः प्रातस्नायीदिनद्वंद्वत्रिकालंशिवपूजकः शिवश्चशिवाचशिवौ जपेद्धोमेसदाभ-
क्तःकन्यकांभोजयेत्सदा अष्टम्यांनवमेचान्हिदारुजानिशुभानिच एकंवाचित्तभावेनकारयेत्सुसुरोत्तमं तस्मिन्देवीम
कर्तव्याहेमीवाराजतीतुवा मृदाक्षालवणोपेतारवङ्गशूलेचपूजयेत् सर्वोपहारसंपन्नवस्त्ररत्नफलादिभिः कारयेद्रथलोहा

दिपूजांचबलिंदेविकीम् बलिमाग्राहिणोदेवभैरवाद्याविनायकः नत्संबंधिनीबलिंदेविकीम् पुष्पैश्चद्रोणबिल्वाद्यैर्जातीपुन्नागचंप
केः द्रोणः कुरुबकः विचित्रांरचयेत्पूजामष्टम्यामुपवासयेत् गुरूंचशरणंगत्वागृण्हीयान्मन्त्रमुत्तमं दुर्गाग्रतोजपेन्मंत्रंदुर्गोपा
ठेनसंस्तुता तदर्धयामिनीशेषेविजयार्थंनृपोत्तम पंचाब्दंलक्षणोपेतंमहिषाख्यंसुपूजितं विधिवत्कालिकालीतिजप्त्वाख
ड्गेनघातयेत् तस्योत्थंरुधिरंमांसंगृहीत्वापूजनादिषु निर्ऋतायप्रदातव्यंमहाकौशिकमंत्रितं तस्याग्रतोनृपस्नायात्छित्वाच
त्वातुपिष्टजं खड्गेनघातयित्वातुदद्यात्स्कंदविशाखयोः ततोदेवींपुनःप्रीतःक्षीरसर्पिर्जलादिभिः कुंकुमागरुकर्पूरचंदने-
श्चापिधूपयेत् हेमादिपुष्परत्नानिवासांसिभूषणानिच नैवेद्यंपायसंनैवदेयंदेव्याःसुभाविभिः देवीभक्तान्पूजयीत कन्य
काप्रमदादिच द्विजातीनथपाखंडानन्नदानेनतोषयेत् दुर्गाभक्तिपरायेतुमहाव्रतपराश्चये पूजयेत्तान्विशेषेणतद्रूपाश्चार्च
कायतः मातॄणांचैवदेवीनांपूजाकार्यातदानिशि ध्वजछत्रपताकादीनुच्छ्रयेच्चंडिकागृहे रथ्यायांचबलिंक्षेपपटुवाद्यर
वाकुलं कारयेत्तुष्यतेयेनदेवीशास्त्रविधानकैः अश्वमेधमवाप्नोतिभक्तितःसुरसत्तम महानवम्यांपूजेयंसर्वकामप्रदाय-
का सर्वेषुवत्सवर्णेषुतवभक्त्याप्रकीर्तिता कृत्वाप्नोतियशोराज्यंपुत्रायुर्धनसंपदः ब्रह्मोवाच आश्वयुक्शुक्लपक्षस्यनवम्यां
प्रथतात्मवान् भक्त्यासंपूजयेद्देवदेवींसंप्रार्थयेत्ततः महिषघ्निमहामायेचामुंडेमुंडमालिनि द्रव्यमारोग्यविजयंदेहिदेवि
नमोस्तुते भूतप्रेतपिशाचेभ्योरक्षोभ्यश्चमहेश्वरि देवेभ्योमानुषेभ्यश्चभयेभ्योरक्षमांसदा उमेब्रह्माणिकौमारिविश्वरूपे-
प्रसीदमे कुमारींभोजयित्वाचदद्यादाच्छादनादिकं नवसप्ताष्टकंचैवस्वस्वस्यविभवानुसारतः शास्त्रंचयस्ययत्रैव सततन्नेनपू
जयेत् ततःशास्त्रेषुसादेवीनिवसत्येवसंततम् शास्त्रमितिपाठः शास्त्रंततपुस्तकं येमूर्धमूर्धगतसंघहृताभिषे-
कांपंचामृतैर्गिरिसुतामभिषेचयंति तेदिव्यकल्पमनुभूयसुवेषरूपाराज्याभिषेकमतुलंपुनराप्नुवंति दुर्गाभक्तितरंगिण्यां १११
देवीपुराणे सुगंधिपुष्पतोयेनस्नापयित्वानरःशिवां नागलोकंसमासाद्यक्रीडतेपन्नगैःसह द्रोणपुष्पंबिल्वपत्रंकरवीरोत्प

ल्लानिच स्नानकालेप्रयोज्यानिदेव्यैप्रीतिकराणिच भगवत्स्येनरोदत्त्वाविष्णुलोकेमहीयते स्नापयित्वानरोदुर्गांनवम्यांहेमवा
रिणा सौवर्णयानमारूढोवसुभिःसहमोदते रत्नोदकेर्विष्णुलोकंलभतेबांधवैःसह घृतेनस्नापयेद्यस्तुतस्यपुण्यफलं
शृणु दशपूर्वान्दशपरानात्मानंचविशेषतः भवार्णवात्समुद्धृत्यदुर्गालोकेमहीयते क्षीरेणस्नापयेद्यस्तुश्रद्धाभक्ति-
समन्वितः चंडिकांविधिवद्वीरइहलोकेमहीयते स्नापयेद्दधिनावीरदध्नादुर्गांमहीपते राजतेनविमानेनशिवलोके-
महीयते पंचगव्येनयोदुर्गांतथाचकुशवारिणा स्नापयेद्विधिवन्मंत्रैर्ब्रह्मस्नानंहितत्स्मृतं एकाहेपिचयोदुर्गांपंचगव्ये
नचंडिकाम् स्नापयेन्नृपशार्दूलसगच्छेद्विष्णुसन्निधौ चंडीगायत्री नारायण्यैचविद्महेचंडिकायैचधीमहि तन्नो-
चंडिःप्रचोदयात् कात्यायन्यैचविद्महेकन्यकुमारीधीमहि तन्नोदुर्गिःप्रचोदयात् कपिलापंचगव्येनदधिक्षीरयुतेनच
स्नानंशतगुणंप्रोक्तमितरस्मान्नराधिप चंडिकांस्नापयेद्यस्तुनरइक्षुरसेनच गरुडेनसयानेनविष्णुनासहमोदते पि
तॄनुद्दिश्ययोदुर्गांमधुनापयसापिच स्नापयेत्तस्यपितरस्तृप्तावर्षसहस्रकं चतुर्दश्यांनवम्यांवाअष्टम्यांवानराधिप स्ना
पयित्वातीर्थजलेर्वाजपेयफलंलभेत् स्नापयित्वानदीतोयैर्गंधचंदनवारिणा चंद्रांशुनिर्मलःश्रीमान्चंद्रलोकेमहीयते
स्नापयेद्यस्तुवैदेवींनरःकर्पूरवारिणा सगच्छतिपरंस्थानंयत्रसाचंडिकास्थिता चंडिकांस्नापयित्वातुश्रद्धयागरुवारिणा
इहलोकेसमासाद्यक्रीडतेसहकिन्नरैः वाराहतंत्रे षडक्षरेणमंत्रेणपाद्यादीनथषोडश इतरैरुपचारैश्चपूर्वप्रोक्तैश्चभैरव
द्वादशांगेनयार्घेणचंडिकांपूजयेन्नरः दशपद्मसहस्राणिवर्षाणांमोदतेदिवि आपःक्षीरंकुशाग्राणिअक्षतादधितंदुलाः
सहसिद्धार्थकादूर्वाकुंकुमंरोचनंमधु अर्घोयंकुरुशार्दूलद्वादशांगउदाहृतः महासिद्धेवी कुमारीउपक्रम्य अनेनपू
जयेद्यस्तुसयातिपरमांगतिं अष्टांगार्घ्यंसमापूर्यदेव्यामूर्ध्निनिवेदयेत् दशवर्षसहस्राणिदुर्गालोकेमहीयते आपःक्षी
रंकुशाग्राणिदधिसर्पिश्चतंदुलाः तिलाःसिद्धार्थकाश्चैवअष्टांगोर्घःप्रकीर्तितः रक्तबिल्वाक्षतैःपुष्पैर्दधिदूर्वाकुशैस्ति

लैः सामान्यः सर्वदेवानामर्घोयं परिकीर्तितः मृत्पात्रेणनरोदत्वावाजपेयफलंलभेत् ताम्रपात्रार्घ्यदानेनपौंडरीकफलंलभेत् दत्वासौव
र्ण्यपात्रेणलभेद्दृदुसुवर्णकं हेमपात्रेणसर्वाणिईप्सितानिलभेद्भुवि अर्घ्यंदत्वातुरौप्येण आयूराज्यंशुभंलभेत् पलाशपद्मपत्राभ्यांगो
सहस्रफलंलभेत् रौप्यपात्रेणदुर्गायैविष्णुयागफलंलभेत् विलिप्यकृष्णागरुणावाजपेयफलंलभेत् कस्तूरीलेपनंकृत्वाज्योतिष्टोमफलंलभेत्
चंदनागरुकर्पूरैः श्लक्ष्णपिष्टैःसकुंकुमैः दुर्गामालिप्यविधिवत्कल्पकोटिंवसेद्दिवि चंदनमदकर्पूररोचनंचचतुष्टयं ए
तेनलेपयेद्देवींसर्वकामानवाप्नुयात् मल्लिकाउत्पलंपद्मंशमीपुन्नागचंपकं अशोककर्णिकारंचद्रोणपुष्पंविशेषतः करवी
रंशमीपुष्पंकुसुंभंनागकेसरं कुंदश्चयूथिकामल्लीपुन्नागचंपकंनवं जपाचकेतकीमल्लीबृहतीशतपत्रिका तथाकुमुदकल्हार
बिल्वपाटलमालती यावनीबकुलाशोकरक्तनीलोत्पलानिच दमनंमरुबकंचैवशतधापुण्यवृद्धये केतकीजातिमुक्तंश्चबंधू
कंबकुलान्यपि कुमुदंकर्णिकारंचसिंदूराभंसमृद्धये भविष्ये प्रत्येकंमुक्तपुष्पेषुदशनिष्कफलंलभेत् स्रग्बद्धेषुचतेष्वेव
द्विगुणंकांचनस्यतु बिल्वपत्रैरखंडाद्यैःसकृद्देवींप्रपूजयेत् सर्वपापविनिर्मुक्तःशिवलोकेमहीयते मणिमौक्तिकमा-
लांचवितानंचदुकूलकं घंटादिसर्वदादत्वाहेमपुष्पंतुशक्तितः तावद्भिश्चवृताःपुत्रैःपौत्रैश्चैवसमंततः श्रियासहै-
वयुज्यंतेहेमपुष्पैःशिवार्चनात् करवीरस्रजाभिश्च पूजयेद्यस्तुचंडिकां सोग्निष्टोमफलंलब्ध्वासूर्यलोकेमहीयते पू
जयित्वानरोभक्त्याचंडिकांपद्ममालया ज्योतिष्टोमफलंप्राप्यसूर्यलोकेमहीयते शमीपुष्पस्रजाभिश्चआर्यांसंपूज्यय-
त्नतः गोसहस्रफलंप्राप्यविष्णुलोकेमहीयते पूजयित्वाचराजेंद्रश्रद्धयाविधिवन्नृप कुशपुष्पस्रजाभिस्तुपितृलोकम
वाप्नुयात् सुगंधयुतपुष्पैस्तुपूजयेद्यस्तुचंडिकां मालाभिर्मालयावापिसोश्वमेधफलंलभेत् सुवर्णानांसुवर्णस्यशतेदत्ते
फलंलभेत् मालयाबिल्वपत्राणांनवम्यांगुग्गुलेनच नीलोत्पलस्रजाभिश्चपूजयेद्यस्तुचंडिकां वाजपेयफलंप्राप्यरुद्रलोके
महीयते नीलोत्पलसहस्रेणयोवैमालांप्रयच्छति [illegible] सहस्राणिवर्षकोटिशतानिच दुर्गानुचरतांयातोरुद्रलोकेम

हीयते तथा विल्वसाप्रूजयेद्दुर्गांदिव्यपुष्पाधिवा[illegible]लवृतेनसंवीज्यमहासत्रफलंलभेत् भविष्ये सर्वेषामेवधूपानां
दुर्गायांगुग्गुलुःप्रियः मंत्रस्तु धूपोयंदेवदेवेशिघृतगुग्गुलुयोजितः गृहाणवरदेमातर्दुर्गेदेविनमोस्तुते कृष्णागरुंनरोदत्वागो
सहस्रफलंलभेत् माहिषाख्यघृताभ्यक्तंदत्वाबिल्वमथापिवा वाजपेयफलंप्राप्यसूर्यलोकेमहीयते सकृष्णागरुधूपेनमा-
हिषाख्येनमंगला शोधयेत्पापकलिलंयथाग्निरिवकांचनं कृष्णागरुंसकर्पूरंचंदनंसिंहकंतथा तथाशब्दसमुच्चये भ
गवत्यैनरोधूपमिमंदत्वानराधिप इहकामानवाप्यांते दुर्गालोकेमहीयते घृतदीपप्रदानेनचंडिकांपूजयेन्नरः सोश्वमेध-
फलंप्राप्यदुर्गायास्तुनरोभवेत् तैलदीपप्रदानेनपूजयित्वाचचंडिकां वाजपेयफलंप्राप्यमोदतेसहकिन्नरैः अग्निज्योती
रविज्योतिश्चंद्रज्योतिस्तथैवच ज्योतिषामुत्तमोदुर्गेदीपोयंप्रतिगृह्यतां देदीप्यतेसकलकोज्ज्वलपद्मरागरत्नप्रभाभरण
हेममयेविमाने दिव्यांगनापरिवृतेननयनाभिरामप्रज्वाल्यदीपममलंभवनेभवान्याः विशेषतोनवम्यांतुभक्त्याश्रद्धासम
न्वितः यावंतंदीपसंघातंघृतेनापूर्यबोधितं तावत्कल्पसहस्राणिदुर्गालोकेमहीयते दीपप्रदानंयोदद्याद्देवेषुब्राह्मणेषुच
तेनदीपप्रदानेनअक्षय्यांगतिमाप्नुयात् गुडखंडंघृतान्नंचतथाशर्करयापिच घृतेनपरिपक्वान्नंदत्वाचब्रह्मणःपदं स्या
दिनिशेषः शाल्योदनंरसालंचपानंबदरजंतथा यःप्रयच्छतिदुर्गायैसगच्छतिशिवालयं ईषदाम्लदधिशर्करापयःसाधि
तेंदुमरिचंसुगालितं पित्तनाशमरुचिंनिहंतिवैमोदनंचकुरुतेरसालयं गौडमम्लमनम्लंवापानकंसुरभीकृतं नदेवखंड-
मृद्वीकाशर्करासहितंपुनः साम्लंसुतीक्ष्णंसुहितंपानकंस्यान्निरत्ययं श्रद्धयापायसंयुतंशर्करासहितंनरः यःप्रयच्छतिदुर्गा
येतस्यराज्यंकरेस्थितं आमिक्षांपरमान्नंचदधिचापिसशर्करं महादेव्यैनिवेद्येववाजपेयफलंलभेत् दुर्गामुद्दिश्यपानी-
यंकेतकीपुष्पवासितं यःप्रयच्छतिरौद्राणांसगणाधिपतिर्भवेत् आम्रंचनारिकेरंचखर्जूरीबीजपूरकं यःप्रयच्छतिदुर्गा
यैसयातिपरमंपदं भक्ष्यंभोज्यंचखाद्यंचपेयंचोष्यंचपंचमं परमान्नेपिष्टकंचयावकंकृसरंतथा मोदकंपृथुकादीनिदेव्यैप

कानिचोत्सृजेत् दद्यादिन्यर्थः निवेदयेन्महादेव्यैसर्वाणित्वंजनानिच क्षीरादीनिचगव्यानिमाहिषाणिचसर्वशः तांबूला
निचदत्वातुगंधर्वैःसहमोदते तंतुसंतान सन्नद्धंरंजितंरागवस्तुना दुर्गेदेविभजस्वेदंवासस्तेपरिधीयतां वस्त्राणितुविचि
त्राणिसूक्ष्माणिचमृदूनिच यःप्रयच्छतिदुर्गायैसगच्छतिशिवालयं यावंतस्तंतवोवीरतेषुवस्त्रेषुसंस्थिताः तावद्वर्षसह
स्राणिमोदतेचंडिकागृहे अलंकारंतुयोदद्याद्भिन्नायाथसुरायवा सगच्छेद्वारुणंलोकंनानाभूषणभूषितः जातःपृथि-
व्यांकालेनततोद्वीपपतिर्भवेत् विभूषणप्रदानेनराजाभवतिभूतले सुवर्णतिलकंयस्तुभगवत्यैप्रयच्छति सगच्छतिपरं
स्थानंयत्रसापरमाकला सौवर्णंराजतंवापिअक्षिणीयःप्रयच्छति गोसहस्रफलंप्राप्यसूर्यलोकेमहीयते श्रोणिसूत्रप्र
दानेनमहीसागरमेखलां प्रशास्तिनिहतामित्रःमित्रवृन्दैश्चमोदते हेमनूपुरदानेनस्थानंसर्वत्रविंदति देदीप्यंतकन
कदंडविराजितैश्चसच्चामरैः प्रचलकुंडलसुंदरीभिः दिव्यांगनास्तनधिराजितभूषितांगःकृत्वातुचामरयुतांवरवस्त्रपू-
जां गैरीकस्यतुपात्राणिदुर्गायैयःप्रयच्छति तस्यपुण्यफलंप्रोक्तंतारागणपदंदिवि गैरिकंसुवर्णं निष्ककोटिप्रदानाद्धि
रजतस्यततोधिकं हेमपात्राणियद्दत्वापुण्यंस्याद्भृगुदपारगे ताम्रपात्रप्रदानेनदेव्यैशतगुणंभवेत् तस्माच्छतगुणंप्रोक्तंदत्वा
मृन्मयमादरात् मृन्मयंकरकादि उपस्करप्रदानेनप्रियमाप्नोत्यनुत्तमं उपस्करःप्रपूजार्थंधूपदीपादिपात्रकं चंद्रांशुनि
र्मलंस्वच्छंदर्पणंमणिभूषितं पद्मोपशोभितंकृत्वादिव्यमाल्यानुलेपनैः दुर्गायाःपुरतःकृत्वाविष्णोर्वाशंकरस्यवा राजसू
यफलंप्राप्यहंसलोकेमहीयते हंसःसूर्यः दत्वातुयःपरमभक्तियुतोभवान्याघंटावितानमथचामरमातपत्रं केयूरहारमणिकुंड
लभूषितोसौरत्नाधिपोभवतिभूतलचक्रवर्ती शंखकुंदेंदुसंकाशंप्रवालमणिभूषितं हेमदंडमयंछत्रंदुर्गायैयःप्रयच्छति
सछत्रेणविचित्रेणकिंकिणीजालमालिना धार्यमाणेनशिरसिशिवलोकेमहीयते यानंशय्यांमणिंछत्रंपादुकेवाप्युपानहौ ११३
वाहनंगांगृहंवापित्रिदशायैप्रयच्छति वायुलोकंसमासाद्यक्रीडतेवायुनासह आर्यायाश्चामरंदत्वामणिदंडविभूषितम्

सुवर्णरूपंचित्रंवादुर्गालोकेमहीयते मयूरपिच्छव्यजनंनानारत्नविभूषितं भगवत्यैनरोदत्वासलभेच्चसुवर्णकं नालछत्रंमहाबाहो
चित्रकर्मोपशोभितं भगवत्यैनरोदत्वावैष्णवस्यफलंलभेत् वैष्णवोयज्ञः घंटांनिवेदयेद्यस्तुलभतेवांछितंफलं ह्निर्नास्तिदेत्यने
जांसिस्वनेनापूर्ययाजगत् साघंटापातुनोदेविपापेभ्योनःसुतानिव इतिसंपूज्यनिवेदयेत् अनःशकटमानरीतिकोशात्
यःशय्यांतुप्रयच्छेनदेवेषुचगुरुष्वपि ज्ञानवृद्धेषुविप्रेषुदानाननरकंव्रजेत् रत्नोपकरणैर्युक्तांसारदारुमयींशुभां शय्यांनिवेद
येद्यस्तुभगवत्येनराधिप दुकूलवस्त्रतंतूनांपरिसंख्यातुयावती तावद्वर्षसहस्राणिदुर्गालोकेमहीयते पादुकासनदानेनभग
वत्यैकृतेनतु अग्निष्टोमफलंप्राप्यविष्णुलोकेमहीयते योगांपयस्विनींशुभ्रांतरुणींशीलमंडनां भगवत्यैनरोदद्यादश्वमेधफ
लंलभेत् वृषभंपरिपूर्णांगमुदात्तंनंशशिप्रभं यस्तुदद्यादनंताभक्त्याभगवत्यैसछन्नरः यावंतिरोमकूपाणिवृषदेहस्थिता
नितु तावत्कल्पसहस्राणिरुद्रलोकेमहीयते सुविनीतांस्त्रियंदासींभृत्यकंवानराधिप प्रयच्छतिचदुर्गायैराजसूयाश्वमेध
भाक् प्रतिपाद्यतथाभक्त्याध्वजंत्रिदशवेश्मनि निर्दहत्याशुपापानिमहापातकजान्यपि ध्वजंश्वेतपताकादिअथवापंचरं
गिकां किंकिणीजालसंवीतांश्वेतपद्मोपशोभितां दत्वादेव्यैमहाबाहोशक्रलोकेमहीयते ध्वजमालाकुलंयस्तुकुर्याद्वैचं
डिकालयं महाध्वजाष्टकंचापिदिशासुविदिशासुच कल्पानांतुशतंसायंदुर्गालोकेमहीयते यावद्धनुःप्रमाणेनपताका
प्रतिपादिता तावद्वर्षसहस्राणिदुर्गालोकेमहीयते चतुर्हस्तंधनुःप्रभूतबलिदानंचनवम्यांविधिवच्चरेत् कूष्मांडमिक्षुदं
डंचमद्यमांसानिचैवहि एतेबलिसमाःप्रोक्तास्तृप्तौच्छागसमामताः नतत्रदेशेदुर्भिक्षंनचदुःखंप्रवर्तते नाकालेम्रियतेक
श्चित्पूज्यतेयत्रचंडिका शरत्कालेमहाष्टम्यांचंडिकांयःप्रपूजयेत् विमानवरमारुह्यमोदतेब्रह्मणासह अथावरणपूजा
देव्यादक्षिणेसिंहंप्रपूजयेत् पूर्वादिक्रमेणएकादशदेवीर्नाममंत्रेणपूजयेत् ॐ ह्रींजयंत्यैनमः ॐ ह्रींमंगलायैनमः ॐ
ह्रींकाल्यै० ॐ ह्रींभद्रकाल्यै० ॐ ह्रींकपालिन्यै० ५ ॐ ह्रींदुर्गायै० ॐ ह्रींक्षमायै० ॐ ह्रींशिवायै० ॐ ह्रींधात्र्यै० ॐ ह्रींस्व

धायै० ॐ ह्रींस्वाहायै० ११ इतिप्रथमावरणंनामपूजनं अनयारीत्यासर्वत्रादौ ॐकारः ह्रींकारश्चपठनीयः ॐ ह्रीं उग्र
चंडिकायै० १ ॐ ह्रींप्रचंडायै० २ ॐ ह्रींस्वाहायै० ३ ॐ ह्रींभद्रायै० ४ ॐ ह्रींचंडवत्यै० ५ ॐ ह्रींचंडरूपायै० ॐ ह्रींउग्र
दंष्ट्रायै० ७ ॐ ह्रींमहादंष्ट्रायै० ८ ॐ ह्रींदंष्ट्राकरालायै० ॐ ह्रींबहुरूपिण्यै० १० ॐ ह्रींभीमसेनायै० ११ ॐ विशाला
क्ष्यै० श्यामायै० मंगलायै० मंगलदायै० नंदिन्यै० भद्रायै० लक्ष्म्यै० कामदायै० भोगदायै० पृथिव्यै० मेधायै० साध्व्यै० यशो
वत्यै० शोभायै० बहुरूपायै० धृत्यै० आनंदायै० सुनंदायै० नंदायै० विजयायै० मंगलायै० महाधृत्यै० शिवायै० क्षमायै०
सिद्ध्यै० तुष्ट्यै० जयायै० पुष्ट्यै० ऋद्ध्यै० रत्यै० दीप्त्यै० कान्त्यै० पद्मायै० लक्ष्म्यै० ईश्वर्यै० वृद्धिदायै० शक्त्यै० जयवत्यै० ब्राह्म्यै०
५० जयंत्यै० अपराजितायै० अजितायै० मानिन्यै० श्वेतायै० दित्यै० मायायै० मोहिन्यै० रतिप्रियायै० लालसायै० नारायै०
विमलायै० कौमार्यै० शरण्यै० गोरूपिण्यै० कामाक्ष्यै० सत्यै० दुर्गायै० क्रियायै० अरुंधत्यै० घंटायै० करालायै० कपालि
न्यै० रौद्र्यै० कालिकायै० त्रिनेत्रायै० सुरूपायै० बहुरूपायै० रिपुहंत्र्यै० अंबिकायै० चर्चिकायै० देवपूजितायै० वैवस्वत्यै०
कौमार्यै० माहेश्वर्यै० वैष्णव्यै० महालक्ष्म्यै० काल्यै० कौशिक्यै० शिवदूत्यै० चामुंडायै० शिवप्रियायै० मुंडहंत्र्यै० दुर्गपारा
यै० महिषमर्दिन्यै० रव्यात्यै० कृष्णायै० धूम्रायै० अतिसौम्यायै० रौद्रायै० वाराह्यै० १०० रुद्राण्यै० मयूरवाहिन्यै० विं
ध्यवासिन्यै० गंगायै० महाचंडायै० नवचंड्यै० चंडिकायै० १०८ इतिनाममंत्रैः पूजयेत् ततः कालिकालीस्वाहा
हृदयायनमः कालिकालिलोहदंडायैस्वाहा मुखे कालिकालिलोहदंडायैस्वाहा नेत्रे पुरतः अथपंचवक्त्राणि ईशा
नाय० शिरसि कालिकालितत्पुरुषाय० मुखे वज्रेश्वरीघोराय० हृदये० लोहदंडायै० नाभौ वामदेवाय० पादयोः स्वाहा
सद्योजाताय० सर्वांगेषु० अथायुधानि दक्षिणोर्ध्वकरादि त्रिशूलं खड्गं बाणं शक्तिं वामे खेटं पाशं अंकुशं घंटां
ततोवज्रनखदंष्ट्रायुधायमहासिंहासनाय ॐ हुंफट्नमः इतिसिंहं महिषासनाय० नागपाशाय० इतिपूजा वर्षैः

पद्मसहस्रैस्तु यत्पापं समुपार्जितं तत्सर्वं विलयं याति घृताभ्यंगेन वै नृप घृतेन पयसा दध्ना स्नापयेच्चंडिकां नृप निंबपत्रैश्च-
गंधाद्यैर्घर्षयेद्यत्नतस्ततः इति महानवमी दुर्गाव्रतविधिः अथ अक्षय्यनवमीव्रतप्रारंभः वालखिल्या ऊचुः कार्तिके
शुक्लनवमी तत्रा भूद्द्वापरं युगं पूर्वापरा पहृगा ग्राह्या क्रमाद्दानोपवासयोः अत्र कूष्मांडको नाम हतो दैत्यस्तु विष्णुना तद्रो
मभिः समुद्भूता वल्यः कूष्मांडसंभवाः तस्मात्कूष्मांडदानेन फलमाप्नोति निश्चितं कूष्मांडं बहुबीजाढ्यं ब्रह्मणा निर्मितं
पुरा दास्यामि विष्णवे तुभ्यं पितॄणां तारणाय च कूष्मांडं पूजयेच्चैव गंधपुष्पाक्षतादिना पंचरत्नैः समायुक्तं गोघृतेन स
मन्वितं फलान्नदक्षिणायुक्तं ब्राह्मणाय निवेदयेत् देवस्य त्वेति मंत्रेण पितॄणां दत्तमक्षयं अस्यामेव नवम्यां तु कुर्यात्कृष्णेन
यो नरः स्वशाखोक्तेन विधिना तुलस्याः करपीडनं कन्यादानफलं तस्य जायते नात्र संशयः कार्तिके शुक्लनवमीं समवाप्य
जितेंद्रियः हरिं विधाय सौवर्णं तुलस्या सहितं शुभं पूजयेद्विधिवद्भक्त्या व्रतीत्रिदिनत्रयं एवं यथोक्तविधिना कुर्याद्वैवा-
हिकं विधिं ग्राह्यं त्रिरात्रमेवैवं नवम्यामनुरोधतः मध्याह्नव्यापिनी ग्राह्या नवमी पूर्ववेधिता धात्र्यश्वत्थौ च एकत्र रोपयित्वा
समुद्वहेत् न नश्यते तस्य पुण्यं कल्पकोटिशतैरपि अत्रैवोदाहरंतीममितिहासं पुरातनं बभूव विष्णुकांच्यां तु क्षत्रियः क
नकाभिधः धनाढ्यो वैश्यवृत्तिश्च वैष्णवो राजपूजितः बहुकालो गतस्तस्य विना पत्यं मुनीश्वराः ततो नाना व्रतैर्जाता कन्या क
मललोचना सुरूपा लक्षणोपेता नाना गुणसमन्विता पिता तस्या नाम चक्रे किशोरीति च विश्रुतं एकदा तद्गृहे यातो जन्म
पत्रनिरीक्षकः दर्शयित्वा जन्मपत्रं कथं कन्या भवत्वियं ततस्तेन क्षणं ध्यात्वा कनकस्य शुभं वचः यदि त्वं वर्णितं सत्यं चेत्तव
दुःखं भविष्यति यद्यसत्यमहं ब्रूयां मिथ्यात्वं मम जायते तस्मात्सत्यं वदिष्यामि यद्योचितं तथा कुरु अस्याः करग्रहं कुर्या
द्यो सौ वज्रान्मरिष्यति इति तद्वचनं श्रुत्वा कनको दुःखितो भवेत् न चाकारि विवाहोऽस्याः सा च ब्राह्मणपूजने नियुक्तान्यद्गृहे
सा तु नानेयामन्मुखवायतः दृष्ट्वेमां रूपसंपन्नां दुःखं मे बाधयिष्यति स्थित्वान्यस्मिन्गृहे सा तु द्विजातिं च व्यमचीकरत्

कदाचिद्दैवयोगेनतत्रागाद्द्विजपुंगवः यात्रार्थेविष्णुकांच्यास्तुवैशाखेमासिशंकरः कनकोविप्रशक्स्नुषीज्ञात्मत्रैवसमागतः
आगत्यांगणमध्येतुउपविष्टोद्विजोत्तमः किशोर्यागत्यचातिथ्यंशंकरस्यकृतंतदा दृष्ट्वातांतरुणींनम्रांस्फवेषांविनयान्विता
अजातकरपीडांचसर्वांदृष्ट्वाभ्युवाचसः शंकरउवाच चंद्रनेवदर्शाग्रंत्वंकिशोरीनविवाहिता किमत्रकारणंजातंतरुणी
कामरूपिणी इतितद्वचनंश्रुत्वाचंदनासर्वमब्रवीत् तदांक्रपालुनातेनतत्पित्रग्रेनिवेदितं अस्यैमंत्रंप्रयच्छामिश्रीविष्णो
र्द्वादशाक्षरं करोतुवर्षत्रितयंजपमस्यस्फलोचना प्रातःस्नानवर्ताचास्तुतुलसीवनपालिका कार्तिकस्यसितेपक्षेनवम्यां
विष्णुनासह सौवर्णेनतुलस्याश्चविवाहंकारयत्त्वियं तेनव्रतप्रभावेनविधवानभविष्यति तत्पित्रापितथेत्युक्तंप्रायश्चि-
त्तंसदत्तवान् किशोर्यैवैष्णवंधर्मंसमग्रंचादिदेशसः द्विजेनतेनयत्प्रोक्तंकिशोर्यपितथाकरोत् वार्षत्रयंयथाशक्त्या-
किशोर्यातद्व्रतंकृतं चतुर्थेकार्तिकेमासिकिशोरीस्नपनायच प्रातःकालेगताबालातस्मिन्मार्गेसुलोचना क्षत्रियेणाय-
दादृष्टापापमोहंजडात्मकः दृष्ट्वेतस्यास्तुसंलग्नोभावयंस्तामनिंदितां केचित्तांददृशुर्दूरात्केचित्पश्यंतिगुप्ततः स्त्रियोपि
तांप्रपश्यंतिपुरुषाणांतुकाकथा यथार्द्वितीयाचंद्रस्यदर्शनेचोत्सुकाजनाः तथाराज्ञोप्रतीक्ष्यंतितद्वारेसकलाजनाः निमे
षमात्रमकैपादृष्ट्वास्थिरत्वातुबालिका अधिकंकिंवर्णनीयंतत्सौंदर्यं मुनीश्वराः केचिद्वदंतिदेवीयंनागकन्येतिचापरे रु-
द्रसंमोहनार्थायजातासाविश्वमोहिनी सानपश्यतिलोकांश्चनमार्गेनसखीगणं ध्यायंतिहृदयेविष्णुंतुलसींदेवरूपिणीं
तांगृहीतुंमनश्चक्रेविलेपीद्व्यवान्बली नानाभेदाःकृतास्तेननलेभेचांतरंक्वचित् मालाकारगृहंगत्वातस्यैद्रव्यमयच्छत
येनकेनप्रकारेणकिशोर्यासहसंगमः यथास्यात्क्रियतांभद्देदेयमस्माच्चतुर्गुणं प्रतिमासंकिशोर्यादीयमानात्द्रव्यादधिकं
ददामि तयाचबहवोपायाहृष्टास्तद्ग्रहणायच नददर्शततोपायमवदत्साविलेपिनं नदृश्यतेमयोपायस्त्वयायत्प्रोच्य
तेधुना मयातदेवकर्तव्यंद्रव्यग्रहणसिद्धये विलेपीउवाच तवकन्यातुभूत्वाहंनयामिकुसुमानिच अग्रेयद्याविभव-

तुगृह्णाणान्निशनंशतं तथापिचतथेत्युक्तेसतस्यांनिश्चयः कृतः अष्टम्यांसागतातत्रकिशोरीतामुवाचह मालाकारेभ्योनव
मीतुलस्याःपाणिपीडनं निश्चत्यतस्त्वयानेयामुकुंदःपुष्पसंभवाः मालिन्युवा० मत्कन्याचागताग्रामान्नानाकौतुककारिणी
यद्यत्प्रोक्तंत्वया बाले समानेष्यतिसत्वरं तथापिचतथेत्युक्त्वामालिनीस्वगृहंययौ कथितःसर्ववृत्तांतोविलेप्यायैततोभव
त् ग्रामामहेंद्रपदवीत्यवंस्करवमवापसः मालिन्यारंचितारात्रौमुकुंदार्गिवधास्तदा विष्णुकांच्यांनदाराजाजयसेनोबभू
वह तस्यपुत्रोमुकुंदोभूत्सूर्यभक्तिपरायणः किशोर्यास्तुश्रुतातेन वार्तायमतिसुंदरा तदातेनमुकुंदेनसंकल्पःकृतएव-
हि किशोरीयदिभार्यामे भविष्यतिदिवाकर तदान्नमहमश्नामि अन्यथास्यान्मृतिर्मम कृत्वेत्थंसतुसंकल्पमुपवासा
न्प्रचक्रमे सप्तमेहनिसूर्योसौस्वप्नेवचनमब्रवीत् सूर्यउवाच किशोर्याविधवायोगोवर्ततेसोकथंभवेत् सातेपत्नीप्र
दास्यामित्वन्यांपद्मायतेक्षणां मुकुंदउवा० यदिदेवप्रसन्नोसि त्वंविश्वंसृजसिप्रभो बालवैधव्ययोगंच हंतुंत्वंचक्षमो-
ष्यसि इतितस्यवचःश्रुत्वासात्वनावहूलाकृता नमन्यतेमुकुंदोसौ नथेत्युक्त्वागतोरविः तुलसीव्रतमाहात्म्यात्स्वप्नोभू
त्कनकस्यतु इयंकन्यान्वयादेयामुकुंदायमहामते तुलस्युद्वाहमाहात्म्याद्विधवात्वंगमिष्यति रात्रौस्वप्नःकिशोर्या
स्तुतस्यामेवाभ्यजायत आगताकन्यकाकाचिद्द्वाभ्यांसह समन्विता भर्तारंवर्दतिस्वप्नेममप्राताकिशोरिकां तद्व्रतो-
पितथेत्युक्तंप्रदास्येवलिमुत्तमं एतद्व्रतेनपश्चात्तुविवाहोस्याभविष्यति श्रुत्वाबलिप्रदानंसास्वप्नेचिंतातुराभवत्
कुद्वादशाक्षरीविद्याकेदंविष्णुसमर्चनं नरकद्वारमूलं च सहस्त्रानुपशमारणं एवंसातुसमुत्थायस्वप्नोयमितिनिश्चि
तं भावयित्वासमाहूयचंदनावाक्यमब्रवीत् निवेदयइदंस्वप्नंतुकीदृगस्यफलंवद चंदनोवाच फलंतुसम्यक्कृत्या-
णितवानिष्टंविनश्यति विवाहोभविताशीघ्रं तुलसीव्रतकारणात् इत्थंस्वप्नफलंश्रुत्वाततोकुक्कुटशब्दितं श्रुत्वासासह
सोत्थायस्नात्वोद्योगमचीकरत् यावदायातिसास्नानंकृत्वागेहेकिशोरिका तावद्विलेपमालिन्याःपुत्रीभूत्वासमाययौ

कृत्वाकेशांश्चगोपुच्छैः श्मश्रुचोत्पाटितंबलात् अंतरेशाकदंगृह्यनिंबुभ्यांचस्तनोकृतो सर्वालंकारशोभाढ्याकदाक्षयति
चापरान् नज्ञातासातुकेनापिपुमानस्त्रीरूपधारकः ध्यानंधृत्वातयाहस्तोप्रसार्यतेयदातदा दृत्तेविलेपपुष्पाणिविलोक्य-
तिसर्वतः कथमस्यामयस्पर्शोभविष्यतिविचिंतयन् एवंदिनत्रयंतस्यप्रयातंतुमुनीश्वराः तस्मिन्नहनिसंजातोकनकःशो
कपीडितः किंकार्यमधुनास्माभीराजपुत्रोवरिष्यति एवंचिंतयतस्तस्यप्रातःकालोबभूवह राजलोकाःसमायातागृही
त्वावरूत्रवाहनं अभ्यंतरेसमागत्यमंत्रीवचनमब्रवीत् गृहेस्तिनवकन्यैकामुकुंदार्थेप्रदीयतां माविचारोस्तुभवतोनृपा-
ज्ञापरिपाल्यतां कनकेनतथेत्युक्तंममभाग्यमुपस्थितं महाराजकुमारस्यवधूःकन्याभविष्यति ततःप्रोवाचमंत्रीतंह्याद
श्यांलग्नमुत्तमं रात्रौतिष्ठतियुग्मारव्येरविःषष्ठेविधुश्चरवे मवेभौमोगुरुर्धर्मेपंचमेबुधभार्गवौ शनिस्तृतीयोरोराहुर्वि
वाहसमयःसतु उभौसंभृतसंभारावुभावपिधनान्वितौ द्वादश्यामाययौसायंराजपुत्रःससैनिकः अब्रवीत्तत्रकनकं
तेकीराजपुरोहितः तेकिरुवाच अथोनिरोधःक्रियतांकिशोर्याश्चनृपाज्ञया भविष्यतिमहादेवीनोदृश्यापुरुषैःक्व
चित् इतितद्वचनंश्रुत्वापुरुषास्तुनिराकृताः जायारूपोविलेपीतुदेवान्तत्रैवसंस्थितः ततोर्धरात्रवेलायांमुकुंदोभ्यंतरंय
यौ तुलस्यग्रेस्थितावालाकिशोरींसंस्मरन्हरिं ततोघनघटाशब्दस्तुमूलःसमपद्यत महावायुर्ववौतत्रभग्नशांताःसर्वदी
पकाः विद्युल्लताश्चकम्पितान्अंधीभूतोरिवलोजनः भास्वान्तु वाचनोमिथ्यामुकुंदोचिंतयहृदि अन्यैःप्रतर्कितंलोकेवैध
व्यस्यतुकारणं भीतोमुकुंदोत्हृदयेयावद्ध्यायतिभास्करं तस्यांसंधौधृतंतस्याःकरपद्मंविलेपिना तस्याःकरस्यसंस
र्गात्स्वर्गाद्राज्यंपपातह नीतस्तेनविलेपीतुतत्कालेयममंदिरं बाह्यआसीत्कलकलोमुकुंदोयंमृतस्त्विति क्षणादेव-
ततोज्ञातंमालाकारकृतामृता ततस्तयोर्विवाहोभूद्राज्यंपापकिशोरिका किशोर्याश्चससुतन्नाम्नानरस्तुलसीव्रतात्
आदेशात्त्वंसत्यमासीत्ततोदेवोदिवाकरः तुलसीव्रतमाहात्म्यात्कथंनस्युर्मनोरथाः सौभाग्यार्थंधनार्थंचविद्यार्थैरुद्

निवृत्तये संततमर्थं प्रकर्तव्यं तुलस्याः पाणिपीडनं इति श्रीसनत्कुमारसंहितायां कार्तिकशु॰ कृ॰ नवम्यां अक्षय्यनव॰ सं॰ इति
नवमीव्रतानि सं॰ अथ दशमीव्रतानि लिख्यंते अथ ज्येष्ठशु॰ कृ॰ दशम्यां दशहराख्यस्नानदानादिकव्रतं स्कांदे ज्येष्ठस्य-
शु॰ कृ॰ दशमी संवत्सरमुखा स्मृता तस्यां स्नानं प्रकुर्वीत दानं चैव विशेषतः यां कांचित्सरितं प्राप्य प्रदद्याच्चाथ तिलोदकं मुच्यते दश-
भिः पापैर्विष्णुलोकं स गच्छति ज्येष्ठशु॰ कृ॰ दशम्यां तु भवेत्सौम्यदिनं यदि ज्ञेया हस्तर्क्षसंयुक्ता सर्वपापहरा तिथिः दशमीशु॰
कृ॰ पक्षे तु ज्येष्ठमासे बुधेऽहनि अवतीर्णा यतः स्वर्गाद्धस्तर्क्षे च सरिद्वरा हरते दश पापानि तस्माद्दशहरा स्मृता ज्येष्ठमासि सिते
पक्षे दशम्यां बुधहस्तयोः गरानंदेव्यतीपाते कन्याचंद्रे वृषे रवौ दशयोगे नरः स्नात्वा सर्वपापैः प्रमुच्यते तस्यां दशम्यां
मेतच्च स्तोत्रं गंगाजले स्थितः पठेद्यो दशवारं यः सर्वपापैः प्रमुच्यते सोऽपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः इति दशहराविधिः
॥ अथ दशहरास्तोत्रं पठेत् चतुर्भुजां त्रिनेत्रां च सर्वावयवशोभितां रत्नकुंभसिताम्भोजवरदाभयसत्कराम् श्वेतवस्त्रप
रीधानां मुक्तामणिविभूषिताम् एवं ध्यायेत्सुसौम्यां च चंद्रायुतसमप्रभां चामरैर्वीज्यमानां च श्वेतच्छत्रोपशोभिताम्
सुप्रसन्नां च वरदां करुणार्द्रां निरंतराम् सुधाप्लावितभूपृष्ठामार्द्रदिव्यगंधानुलेपनां त्रैलोक्यनिर्मितां गंगां सर्वदेवैरधिष्ठि
ताम् दिव्यरत्नविभूषां च दिव्यमाल्यानुलेपनाम् ध्यात्वा जले यथाप्रोक्तां तथा चार्चा मंत्रपूर्ववत् ॐ नमो भगवति हिलि हिलि-
लि मिलि मिलि गंगे मां पावय पावय स्वाहा अनेन मंत्रेणागमोक्तपंचोपचारपुष्पांजलिं श्रीगंगायै निवेदयेत् माल्यादी-
नि सुगंधानि मालत्यादीनि वै प्रभो मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यतां दशांगं गुग्गुलं धूपं सुगंधिं च मनोहरं गृह्या
णमंगलं दीपं घृतवर्तिसमन्वितं रुद्ररूपे नमस्तेऽस्तु गृहाण वरदा भव परदारपरद्रव्यपरद्रोहपराङ्मुखः गंगा ब्रूते कदा-
गत्य मामयं पावयिष्यति एवं श्रीगंगायाः ध्यानार्चने विधाय पश्चाज्जलमध्ये स्थित्वा ज्येष्ठमासे सिते पक्षे प्रतिप-
दमारभ्य दशमीपर्यंतं प्रतिदिनमेकोत्तरवृद्ध्या सर्वपापक्षयार्थं दशहरास्तोत्रजपमहं करिष्ये ब्रह्मोवाच

ॐ नमः शिवायै गंगायै शिवदायै नमो नमः नमस्ते विष्णुरूपिण्यै ब्रह्ममूर्त्यै नमो नमः नमस्ते ब्रह्मरूपिण्यै शांकर्यै ते नमो-
नमः सर्वदेवस्वरूपिण्यै नमो भेषजमूर्तये सर्वस्य सर्वव्याधीनां भिषक्श्रेष्ठ्यै नमोस्तु ते स्थाणुजंगमसंभूतविषहंत्र्यै नमो
स्तु ते संसारविषनाशिन्यै जीवनायै नमोस्तु ते तापत्रितयसंहंत्र्यै प्राणेश्यै ते नमो नमः शांतिसंतानकारिण्यै नमस्ते-
शुद्धमूर्तये सर्वसंसिद्धिकारिण्यै नमः पापारिमूर्तये भुक्तिमुक्तिप्रदायिन्यै भद्रदायै नमो नमः भोगोपभोगदायिन्यै-
भोगवत्यै नमोस्तु ते मंदाकिन्यै नमस्तेस्तु स्वर्गदायै नमो नमः नमस्त्रैलोक्यभूषायै त्रिवदायै नमो नमः नमस्त्रिशुक्ल-
संस्थायै तेजोवत्यै नमो नमः नंदायै लिंगधारिण्यै सुधाधारात्मने नमः नमस्ते विश्वमुख्यायै नमो देव्यै नमो नमः बृहत्यै ते न-
मस्तेस्तु लोकधात्र्यै नमो नमः नमस्ते विश्वमित्रायै नंदिन्यै ते नमो नमः पृथ्व्यै शिवामृतायै च सुवृषायै नमो नमः परापर-
शताढ्यायै तारायै ते नमो नमः पाशजालनिकृंतिन्यै अभिन्नायै नमो नमः शांतायै च वरिष्ठायै वरदायै नमो नमः उग्रायै सु-
खजग्ध्यै च संजीविन्यै नमोस्तु ते ब्रह्मिष्ठायै ब्रह्मदायै दुरितघ्न्यै नमो नमः प्रणतार्तिप्रभंजिन्यै जगन्मात्रे नमोस्तु ते सर्वापत्
प्रतिपक्षायै मंगलायै नमो नमः शरणागतदीनार्तपरित्राणपरायणे सर्वस्यार्तिहरे देवि नारायणि नमोस्तु ते निर्लेपायै दु-
र्गहंत्र्यै दक्षायै ते नमो नमः परापरपरायै च गंगे निर्वाणदायिनी गंगे मामग्रतो भूया गंगे मे देवि पृष्ठतः गंगे मे पार्श्वयोर्देवि त्व-
यि गंगेस्तु मे स्थितिः आदौ त्वमंते मध्ये च सर्वं त्वं गांगते शिवे त्वमेव मूलप्रकृतिस्त्वं पुमान्पर एव हि गंगे त्वं परमात्मा च शि-
वस्तुभ्यं नमः शिवे य इदं पठते स्तोत्रं भक्त्या नित्यं नरः प्रियः शृणोति श्रद्धयायुक्तः कायवाक्चित्तसंभवैः दशधा संस्थि-
तैर्दोषैः सर्वैरेव प्रमुच्यते रोगस्थो मुच्यते रोगादापद्भ्यश्च प्रमुच्यते द्विषद्भ्यो बंधनाच्चैव भयेभ्यश्च प्रमुच्यते सर्वान्का-
मानवाप्नोति प्रेत्य ब्रह्मणि लीयते इमं स्तवं गृहे यस्तु लेखयित्वा विनिक्षिपेत् नाग्निचोरभयं तत्र पापेभ्योपि भयं नहि ज्ये- ११७
ष्ठे मासि सिते पक्षे दशमी हस्तसंयुता संहरेत्त्रिविधं पापं बुधवारेण संयुता तस्यां दशम्यामेतच्च स्तोत्रं गंगाजले स्थितः

यः पठेद्दशश्लोकांस्तु दरिद्रो वापि चाक्षमः सोऽपि तत्फलमाप्नोति गंगां संपूज्य यत्नतः पूर्वोक्तेन विधानेन यत्फलं संप्रकीर्तितं य-
था गौरी तथा गंगा तस्माद्गौर्यास्तु पूजने विधिश्च विहितः सम्यक् सोऽपि गंगाप्रपूजने यथा शिवस्तथा विष्णुर्यथा लक्ष्मीस्त-
थाउमा लक्ष्मीरूमा तथा गंगा चत्रूरूपं न भिद्यते विष्णुरुद्रांतरं यच्च श्रीगौर्योरंतरं तथा गंगागौर्योरंतरं च यो ब्रूते स च मूढधीः
रौरवादिषु घोरेषु नरकेषु पतत्यधः अदत्तानामुपादानं हिंसा चैवाविधानतः परदारोपसेवा च कायिकं त्रिविधं स्मृतं पारुष्यम-
नृतं चैव पैशून्यं चापि सर्वतः असंबद्धप्रलापश्च वाङ्मयं स्याच्चतुर्विधं परद्रव्येष्वभिध्यानं मनसानिष्टचिंतनं वितथाभिनिवे-
शश्च मानसं त्रिविधं स्मृतं एतानि दशपापानि हर त्वमथ जान्हवि दशपापहरा यस्मात्तस्माद्दशहरा स्मृता एतैर्दशविधैः
पापैः कोटिजन्मसमुद्भवैः मुच्यते नात्र संदेहो ब्रह्मणो वचनं यथा दशात्रिंशत्कुलानां सर्वान्पितॄनथ पितामहान् उद्धर-
त्येव संसारान्मंत्रेणानेन पूजिता ॐ नमो भगवत्यै नारायण्यै दशपापहरायै शिवायै गंगायै विष्णुमुख्यायै क्षयायै रेवत्यै
भागीरथ्यै नमो नमः ज्येष्ठमासि सिते पक्षे दशम्यां बुधहस्तयोः गरानंदे व्यतीपाते कन्याचंद्रे वृषे रवौ दशयोगे नरः स्ना-
त्वा सर्वपापैः प्रमुच्यते सितकनकनिषण्णां शुभ्रवर्णां त्रिनेत्रां करधृतकलशाब्जां सुद्यतां भीत्यभीष्टां विधिहरिहररूपां सेंदु-
कोटीरजुष्टां कलितसितदुकूलां जान्हवीं तां नमामि आदावादिपितामहस्य नियमव्यापारपात्रे जलं पश्चात्पन्नगशायिनो
भगवतः पादोदकं पावनं भूयः शंभुजटाविभूषणमणिर्जन्होर्महर्षेरियं कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते
इति काशीखंडे दश० स्तोत्रं संपू० अथ आषाढशुक्लदशमी मन्वादिः सा पूर्वाण्हव्यापिनी ग्राह्या तत्र शुक्लदशम्यां
आषाढदशमीव्रतं हेमाद्रौ भविष्ये युधिष्ठिर उवा० कथमाशादशम्येषा गोविंद क्रियते कदा दमयंत्या नलस्येव यया
ज्ञातः समागमः कृष्ण उवाच राज्याशया राजपुत्रः कृष्यर्थं च कृषीवलः वाणिज्यार्थं वणिक्पुत्रः पुत्रार्थं गुर्विणी त-
था धर्मकामार्थसंसिद्ध्यै लोकः कन्या वरार्थिनी यष्टुकामो द्विजवरो योगाश्चेयोर्थमेव च चिरप्रवसिते कांते बाले दंत-

निपीडिते एतदन्येषु कर्तव्यमाशाव्रतमिदंतथा यस्माद्यस्यभवेदार्तिः कर्तव्यंतेनतद्व्रतं शुक्लपक्षेदशम्यांतुस्नात्वासंपूज्यदे
वताः नक्तमाशास्तुपूज्यावैपुष्पभक्तकचंदनैः गृहांगणेलेख्यित्वायवैःपिष्टातकेनवा स्त्रीरूपाश्चाधिदेवस्यशस्त्रवाहनचि-
न्हिताः अधिदेवस्यतत्तद्दिक्पालस्यइंद्रादयस्तच्छस्त्रैर्वाहनैश्चचिन्हितालेख्यित्वेत्यर्थः दत्वाघृतात्कंनैवेद्यंपृथक्दीपांश्चदापयेत्
फलानिकामजातानिततःकार्यंनिवेदयेत् ततः आशास्त्वाशाःसदासंतुसिद्ध्यंतांमेमनोरथाः भवतीनांप्रसादेनसदाकल्याणमा-
स्थिताः एवंसंपूज्यविधिवद्दत्वाविप्रायदक्षिणां अनेनक्रमयोगेनमासिमासिसमाचरेत् वर्षमेकंकुरुश्रेष्ठततःपश्चात्समुद्यपेत्
अर्वाक्संवत्सरस्यापिसिद्ध्यर्थंवासमुद्यपेत् सौवर्णाःकारयेदाशारौप्याःपिष्टातकेनवा ज्ञातिबंधुजनैःसार्धंततःसम्यगलंकृतः पू
जाश्चक्रमयोगेनमंत्रैरभिर्गृहाणभो त्वयिसन्निहितःशक्रःसुरासुरनमस्कृतः पूर्वात्वंभुवनस्यास्यऐंद्रीदिग्देवतेनमः अग्नेःप
रिग्रहादाशात्वमाग्नेयीतिपठ्यते तेजोरूपापराशक्तिराग्नेयीवरदाभव धर्मराजसमाश्रित्यलोकान्संयमयस्यमून् तेनसंयमि
नीचासियाम्येसत्कामदाभव खड्गहस्तातिविकृतानिर्ऋतिस्थानमाश्रिता तेननिर्ऋतिनामासित्वमाशापूरयस्वमे त्वयास्तेभु
वनाधारोवरुणोयादसांपतिः कामार्थंममधर्मार्थंवारुणीभवशोभन अधिष्ठितासियस्मात्त्ववायुनाजगदायुना वायव्ये-
त्वमतःशांतिंनित्यंयच्छममालये धनदेनाधिष्ठितात्वंद्रव्यानात्वमिहोत्तरा निरुत्तराभवास्मासुदत्वासद्योमनोरथं ऐशा
निजगदीशेनशंभुनात्वमलंकृता पूरयस्वाशुमेदेविवांछितानिनमोनमः भुजंगाष्टकुलेनत्वंसेवितासियतोह्यधः नागांग
नाभिःसहिताहिताभवममाद्यवै सर्वलोकोपरिगतासर्वदात्वंशिवायत्त सनकाद्यैःपरिवृताब्राह्मिमांपाहिसर्वदा नक्षत्रा
णिचसर्वाणिग्रहास्तारागणास्तथा नक्षत्रमातरोयाश्चभूतप्रेतविनायकाःसर्वेममेष्टसिद्ध्यर्थंभवंतुप्रवणाःसदा एभिर्मंत्रैः
समभ्यर्च्यपुष्पधूपादिनाततः वासोभिरभिषेकाद्यैःफलानिर्विनिवेदयेत् ततोघंटानिनादेनगीतवादित्रमंगलैः नृत्यंतीभि
र्वरस्त्रीभिर्जागरत्याचनिशांनयेत् कुंकुमाक्षततांबूलदानमानादिभिःसुखं प्रभातेवेदविदुषेब्राह्मणायनिवेदयेत् अनेनविधि

नासर्वेंक्षमाप्यप्रतिपत्यच भुंजीतमित्रसहितः सुहृद्बंधुजनेनच एवंयः कुरुतेपार्थदशमीव्रतमादरात् सर्वान्कामानवाप्नो
तिमनोभिलषितान्नरः स्त्रीभिर्विशेषतः कार्यंव्रतमेतद्युधिष्ठिर प्राणिवर्गेयतोनार्यः श्रद्धाकामपरायणाः धन्यंयशस्यमायुष्यं
सर्वकामफलप्रदं कथितंतेमहाराजमयाव्रतमनुत्तमं येमानवामनुजपुंगवकामकामाः संपूजयंतिदशमीषुसदादशाशाः
तेषांविशेषनिहितान्हृदयेपिकामः नाशाः फलंस्यल्पमलंबहुनोदितेन इतिश्रीभविष्योत्तरेआशादशमीव्रतं अथभाद्रशु
कुदशम्यांदशावतारव्रतंभविष्योत्तरे युधिष्ठिरउवाच व्रतंदशावताराख्यंकृष्णब्रूहिसविस्तरं समंत्रंसरहस्यंचसर्वपा
पापशांतिदं कृष्णउवा॰ दशम्यांशुक्लपक्षस्यमासेप्रोष्ठपदेशुचिः स्नात्वाजलाशयेस्वच्छेपितृदेवादितर्पणं कृत्वाकुरुकुल
श्रेष्ठगृहमागत्यमानवः गृहीत्वाधान्यचूर्णस्यस्वहस्तप्रसृतित्रयं क्रमेणपाचयेत्तत्तुपुंसंज्ञंघृतपायसं वर्षेवर्षेदिनेतस्मिन्ने-
ववर्षाणिवैदश प्रथमेपूपकान्वर्षेद्वितीयेघृतपूरिकान् तृतीयेपूपकासारान्चतुर्थेमोदकान्शुभान् सोहालिकान्पंचमे
वैषष्ठेतुखंडवेष्टकान् सप्तमेदुकोकरसानर्कपुष्पान्तथाष्टमे, नवमेकर्णवेष्टांश्चदशमेमंडकान्शुभान् दशात्मनोद
शाहरेद्दशविप्रायदापयेत् क्रमेणभक्षयेद्दत्वायथोक्तविधिनानृप अर्धार्धंविष्णवेदेयमर्धार्धंचद्विजातये ततोपरार्ध
मर्घ्यायाह्नवारम्येजलाशये दशावतारमभ्यर्च्यपुष्पधूपविलेपनैः मंत्रेणानेनमेधावीहरिमच्युतरूपधारिणा मत्स्यंकूर्मंवराहंचना
रसिंहंचवामनं रामंरामंचकृष्णंचबौद्धंचकल्किनंतथैव गतोस्मिशरणंदेवंहरिंनारायणंविभुं प्रपन्नोस्मिजगन्नाथं
समेविष्णुःप्रसीदतु छिनत्तुवैष्णवींमायांभक्त्याप्रीतोजनार्दनः श्वेतद्वीपंनयत्वस्मान्मयात्मासन्निवेशितः अत्रहैमी
महार्हाश्चदशमूर्तीःसुलक्षणाः गंधपुष्पैश्चनैवेद्यैरत्नैर्यद्विधिपूर्वकं एवंयःकुरुतेभक्त्याविधिनानेनसत्व्रत व्रतंदशावता
राख्यंतस्यपुण्यफलंशृणु श्रूयंतेयास्त्विमालोकेपुरुषाणांदशादश नाच्छिन्नत्तिनसंदेहश्चक्रप्रहरणोविभुः संसा
रसागराद्घोरात्समुद्धृत्यजगत्पतिः श्वेतद्वीपंनयत्याशु व्रतेनानेनतोषितः किंतस्यनभवेल्लोकेयस्यतुष्टोजनार्दनः य

दुर्लभंफलंप्राप्तुंमनसोयन्नगोचरं तदप्यप्रार्थितंध्यातोददातिमधुसूदनः सोहंजनार्दनःसाक्षात्कालरूपधरोच्युतः मर्त्य-
लोकेस्वयंप्राप्यभूभारोत्तारणायच यास्त्रीव्रतमिदंपार्थकरिष्यतिमयोदितं साचलक्ष्म्यायुतानित्यंपुत्रभक्तिसमन्वि-
ता मर्त्यलोकेचिरंस्थित्वामर्त्यलोकेमहीयते येपूजयंतिपुरुषाःपुरुषोत्तमस्यमत्स्यादिकांस्तुदशमीषुदशावतारान्
मन्येदशस्वपिदशासुसुखंविहृत्यतेयांतियानमधिरुह्यमुरारिलोकं इतिभ॰ भाद्र॰शुक्लदशम्यांदशावतारव्रतंसंपू॰
अथआश्विनशुक्लदशम्यांविजयाद॰व्रतं साचतारकोदयव्यापिनीग्राह्या तदुक्तंचिंतामणौ आश्विनस्यसितेप-
क्षेदशम्यांतारकोदये सकालोविजयोनामसर्वकामार्थसाधकः रत्नकोशे ईषत्संध्यामतिक्रांतःकिंचिदुद्भिन्नता-
रकः विजयोनामकालोयंसर्वकामार्थसाधकः दिनद्वयेतद्व्याप्तावव्याप्तौवा अपराजितपूजायांपूर्वैव तदुक्तंहेमा-
द्रौस्कांदे दशम्यांतुनरैःसम्यक्पूजनीयापराजिता ईशानींदिशमाश्रित्यअपराण्हेप्रयत्नतः यापूर्णानवमीयुक्तातं
स्यांपूज्यापराजिता क्षेमार्थंविजयार्थंचपूर्वोक्तविधिनानरैः नवमीशेषसंयुक्तदशम्यामपराजिता ददातिविजयंदे-
वीपूजिताजयवर्धिनी आश्विनेशुक्लपक्षेतुदशम्यांपूजयेन्नरः एकादश्यांनकुर्वीतपूजनंचापराजितं आश्विनस्य-
सितेपक्षेदशमीसर्वराशिषु सायंकालेशुभायात्रादिवाचविजयक्षणे एकादशमुहूर्तोयोविजयःसंप्रकीर्तितः तस्मि-
न्सर्वैर्विधातव्यायात्राविजयकांक्षिभिः दिनद्वयेएकादशमुहूर्तव्याप्तावव्याप्तौवाश्रवणयुक्ताग्राह्या तथाच हेमाद्रौ
मदनरत्नेकश्यपः उदयेदशमीकिंचित्संपूर्णैकादशीयदि श्रवणर्क्षंयदाकालेसातिथिर्विजयाभिधा श्रवणर्क्षेतुपूर्णा-
यांकाकुत्स्थःप्रस्थितोयतः उल्लंघयेयुःसीमानंतद्दिनर्क्षेततोनराः अत्रकृत्यंभविष्ये शमीस्कंलक्षणोपेतामीशान्या-
शांप्रतिष्ठितां संप्रार्थ्यतांचसंपूज्यत्वीशानीसंमुखोभवेत् शमीपूजा ध्यानं शमीशमयतेपापंशमीशत्रुविनाशिनी
अर्जुनस्यधनुर्धारीरामस्यप्रियवादिनी शमीशमयतेपापंशमीलोहितकंटका धारिण्यर्जुनबाणानांरामस्यप्रियवादिनी

करिष्यमाणयात्रायांयथाकालंसुखंमया तत्रनिर्विघ्नकर्त्रीत्वंभवश्रीरामपूजिते गृहीत्वासाक्षतामार्द्रांशमीमूलगतांमृदम्
गीतवादित्रनिर्घोषैरानयेत्स्वगृहंप्रति ततोभूषणवस्त्रादिधारयेत्स्वजनैःसह शम्यभावेवनराजपूजाकार्या तत्रमंत्रः आदि
राजमहाराजवनराजवनस्पते इष्टदर्शनमिष्टान्नंशत्रूणांचपराजयः अथापराजितदशम्यांपूर्वोक्तेविजयामुहूर्तेउक्तं
प्रास्थानिकमित्युपक्रम्य अथविजयाख्यानं कृष्णउवाच अलंकृतोभूषितभृत्यवर्गः परिष्कृतोत्तुंगतुरंगनागः वादित्र
नादप्रतिनादिताशाः कृतमंगलाचारपरंपराशीः राजाविनिर्गत्यभवनात्पुरोहितपुरोगमः प्रास्थानिकंविधिंकृत्वाप्रतिष्ठेत्पूर्वतोदि
शि गत्वानगरसीमांतंवास्तुपूजांसमाचरेत् संपूज्यचाष्टदिक्पालान्पूजयेत्पथिदेवताः मंत्रैर्वैदिकपौराणैःपूजयेच्चशमी
तरुं अमंगलानांशमनींसर्वसिद्धिकरींशुभां दुःस्वप्नशमनींधन्यांप्रपद्येहंशमींशुभां ततःकृताशीःपूर्वस्यांदिशिविष्णु-
क्रमान्क्रमेत् शत्रोःप्रतिकृतिंकृत्वाध्यात्वारामंतथार्थदं शरेणस्वर्णपुंखेनविध्येच्छृदयमर्मणि दिशाविजयसंप्राप्त्यर्थंतत-
श्चाःपुरोधसा एवमेवविधिंकृत्वादक्षिणादिभिरर्चयेत् पूज्यान्द्विजांश्चसंपूज्यसांवत्सरपुरोहितौ गजवाजिपदातीनांप्रे
क्षाकौतुकमाचरेत् जयमंगलशब्देनततःस्वभवनंविशेत् नीराजमानःपुण्याभिर्गणिकाभिःसुमंगलं यएवंकुरुतेराजाव-
र्षेवर्षेकृतमंगलं आयुरारोग्यमैश्वर्यंविजयंचसगच्छति नाधयोव्याधयश्चैवनभवंतिपराजयाः श्रियंपुण्यमवाप्नोतिविजयंच
सदाभुवि उक्तंप्रख्यानंव्याख्यास्यामः जनेषुगमिष्यत्सुपार्थिवश्चदुंदुभीन्वीणाश्चोपवादयेत् ततः आश्विनस्यसिते
पक्षेदशम्यांचघटोत्थापनानंतरंसुचारुवेषैःसहसंभारानुपकल्पयित्वाएकादशमुहूर्तेश्रवणयोगेसीमांतेगत्वापश्चाद्गृहे
जनैःसहसुवर्णसहितंग्रामंआविशेत् योपितांकौतुकैश्चप्रज्वालितैर्नीराजनंजनानुलेपनकारयित्वावासोगंधस्रक्पुष्पैश्चपूज
यित्वाहिरण्यरूपमितिमंत्रेणसुवर्णपूजनंकृत्वाआशिषःप्रतिगृह्यलक्ष्मींनमस्कुर्यात् सर्वाभगिनीःवस्त्रालंकारभू-
षणैःपूजयेत् ब्राह्मणान्पूजयेत्तत्रगंधपुष्पैश्चदीपकैः इतिभविष्येविजयादशमीव्रतंसं० इतिदशमीव्रतानिस

मासानि अथएकादशीव्रतानि तत्रएकादश्यामुपवासनिर्णयः निषेधपरिपालनात्मकोव्रतरूपश्च साचद्विधाशुद्धाद्वादशी
मीविद्धाचवेधोपिद्विविधः अरुणोदयेदशमीसंबंधात्सूर्योदयेच तत्रआद्योवैष्णवैस्त्याज्यः तथाचभविष्ये अरुणोदय
कालेतुदशमीयदिदृश्यते साविद्धैकादशीतत्र पापमूलमुपोषणं तथा दशमीशेषसंयुक्तोयदिस्यादरुणोदयः नैवोपो
ष्यंवैष्णवेनतद्दिनेकादशीव्रतं अरुणोदयस्वरूपंतुहेमाद्रौस्मृत्यंतरेदर्शितं निशिप्रांतेतुयामार्धेदेववादित्रनिःस्वने सार
स्वतेअध्ययनेअरुणोदयउच्यते यामार्धमुहूर्तद्वयलक्षणं अतएवसौरधर्मे आदित्योदयवेलायाःप्राङ्मुहूर्तद्वयान्विता सैका
दशीतिसंपूर्णाविद्धान्यापरिकीर्तिता यच्चमाधवीयेस्कांदे उदयात्प्राक्चतस्रस्तुघटिकाअरुणोदयः तदपिद्वात्रिंशत् घ
टिकारात्रिमानपक्षेतुमुहूर्तद्वयस्यतावत्परिमाणत्वसुक्तमितिद्वैतनिर्णयः ब्रह्मवैवर्तेच चतस्रोघटिकाःप्रातररुणोदयनि
श्चयः चतुष्टयविभागोत्रवेधादीनांकिलोदितः अरुणोदयवेधःस्यात्सार्धंतुघटिकात्रयं अतिवेधोद्विघटिकःप्रभासंदर्श-
नाद्रवेः महावेधोपितत्रैवदृश्यतेर्कोनदृश्यते तुरीयस्तत्रविहितोयोगःसूर्योदयेसति अन्यच्च पंचपंचउषःकालःसप्त
चारुणोदयः अष्टपंचभवेत्प्रातःशेषःसूर्योदयःस्मृतः वैष्णवलक्षणंतुस्कांदे परमापदमापन्नोहर्षेवासमुपस्थिते नैकाद
शींत्यजेद्यस्तुतस्यदीक्षास्तुवैष्णवी भविष्ये यथाशुक्लातथाकृष्णायथाकृष्णातथोत्तरा तुल्यंतेमन्यतेयस्तुसहि-
वैष्णवउच्यते अतिवेधादयःसर्वेयेवेधास्तिथिषुस्मृताः सर्वेप्यवधाविज्ञेयावेधःसूर्योदयःस्मृतः तत्रशुद्धाविद्धाएकाद
शीचतुर्धा अधिकाएकादशी अधिकाद्वादशी उभयाधिका अनुभयाधिकाचशुद्धायाएकादश्या
धिक्येपरेद्युरुपवासमाहनारदः संपूर्णैकादशीयत्रद्वादश्यांवृद्धिगामिनी द्वादश्यांलंघनंकार्यंत्रयोदश्यांतुपारणं द्व
न्द्ववसिष्ठः एकादशीयदालुप्तापरतोद्वादशीभवेत् उपोष्याद्वादशीतत्रयदीच्छेच्चपरांगतिं भृगुःसंपूर्णैकादशीयत्र
प्रभातेपुनरेवसा तत्रोपोष्याद्वितीयातुपरतोद्वादशीयदि प्रथमेहनिसंपूर्णाव्याप्याहोरात्रसंयुता द्वादश्यांतु

नदोपोष्याहश्यतेपुनरेवसा पूर्वाकार्यागृहस्थैश्चयतिभिश्चोत्तराविभो मार्कंडेयः संपूर्णैकादशीयत्रपरतःपुनरेवच पूर्वामु
पवसेत्कामीनिष्कामस्तुपरांवसेत् हेमाद्रौ विद्धाप्यविद्धाविज्ञेयापरतोद्वादशीनचेत् अविद्धापिचविद्धास्यात्परतोद्वा
दशीयदि एकादशीविद्धाजनेन्द्रकृष्णयोर्विशेषतः उत्तरांतुयतिःकुर्यात्पूर्वामुपवसेद्गृही सनत्कुमारः नकरोतिहियोमूढएग
कादश्यामुपोषणं सनरोनरकंयातिरौरवंतमसावृते यदीच्छेद्विपुलान्भोगान्भुक्तिंचात्यंतदुर्लभां उपोष्यैकादशींनित्यंप
क्षयोरुभयोरपि माधवेप्युक्तं एकादशीद्वादशीचेत्युभयंवर्धतेयदा तदापूर्वदिनंत्याज्यंस्मार्तैर्ग्राह्यंपरंदिनं त्रयोदश्यांनलं
भ्येनद्वादशीयदिकिंचन उपोष्यैकादशीतत्रदशमीमिश्रितायदीतिस्कांदात् हेमाद्रिमते शुद्धाविद्धाद्वादशीन्यूनसमा
धिके: षट्प्रकारा:पुनस्त्रेधाद्वादश्यूनासमाधिके: इत्येकादशीभेदा:पाद्मे संपूर्णैकादशीत्यक्त्वापरतोद्वादशीयदि उपो
ष्याद्वादशीशुद्धाद्वादश्यामेवपारणम् पारणाहेनलभ्येतद्वादशीकलयापिचेत् तदानंदशमीविद्धाउपोष्यैकादशीतिथिः
बहुवाक्यविरोधेनसंदेहोजायतेयदा द्वादशीतुनदाग्राह्यात्रयोदश्यांतुपारणं इतिमार्कंडेयोक्तेः कात्यायनः अष्टव
र्षाधिकोमर्त्योह्यशीतिन्यूनवत्सरः एकादश्यामुपवसेत्पक्षयोरुभयोरपि भविष्ये ब्रह्मचारीचनारीचशुक्लामेवसदा
गृही सधवायास्तुभर्त्राज्ञयाधिकारः पत्योजीवतियानारीउपोष्यव्रतमाचरेत् आयुष्यंहरतेभर्तुःसानारीनरकंव्रजेत् कौ
र्मेतदुक्तंमदनरत्नेस्मृत्यंतरे शयनीबोधिनीमध्येयाकृष्णैकादशीभवेत् सैवोपोष्यागृहस्थेननान्याकृष्णाकदाचन नान्याकृ
ष्णेतिनिषेधः संक्रांत्यामुपवासंचकृष्णैकादशिवासरे चंद्रसूर्यग्रहेचैवनकुर्यात्पुत्रवान्गृही नारदः आदित्येहनिसंक्रांतौ
ग्रहणेचंद्रसूर्ययोः पारणंचोपवासंचनकुर्यात्पुत्रवान्गृही माधवीयेकात्यायनः अर्कपर्वद्वयेरात्रौचतुर्दश्यष्टमींदिवा
एकादश्यामहोरात्रंभुक्त्वाचांद्रायणंचरेत् अथकाम्यव्रतविधिः कांस्यंमांसंमसूरांश्चचणकान्कोरदूषकान् शाकंमधुप
रान्नंचत्यजेदुपवसन्स्त्रियं शाकंमाषंमसूरांश्चपुनर्भोजनमैथुनं द्यूतमत्यंबुपानंचदशम्यांवैष्णवस्त्यजेत् मदनरत्ने-

नारदीये अक्षारलवणाः सर्वे हविष्यान्ननिषेविणः अवनीतल्पशयनाः प्रियासंगविवर्जिताः हेमाद्रौ देवलः असकृज्ज
लपानाच्च सकृत्तांबूलचर्वणात् उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् अशक्तौ तु मदनरत्ने देवलः अत्यये चांबुपाने च नो
पवासः प्रणश्यति अत्ययकेऽपि विष्णुरहस्ये गात्राभ्यंगं शिरोभ्यंगं तांबूलं चानुलेपनं व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतं
एषु प्रायश्चित्तं स्तेनहिंसकयोः सख्यं कृत्वा स्तैन्यं च हिंसनं प्रायश्चित्तं व्रती कुर्याज्जपेन्नामशतत्रयं मिथ्यावादे दिवास्वापे बहुशोंऽबु
निषेवणे अष्टाक्षरं जपेन्मंत्रं शतमष्टोत्तरं शुचिः ॐ नमो नारायणायेति अष्टाक्षरः हेमाद्रौ वसिष्ठः उपवासे तथा श्राद्धे न कुर्याद्दंत-
धावनं दंतानां काष्ठसंयोगो दहत्यासप्तमं कुलं एकादश्यां श्राद्धप्राप्तौ माधवीये कात्यायनः उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भ
वेत् उपवासं तदा कुर्यादाघ्राय पितृसेवितं मातापित्रोः क्षयप्राप्तौ भवेदेकादशी यदि अभ्यर्च्य पितृदेवांश्च आजिघ्रेत्पितृसेवितं
प्राप्ते हरिदिने सम्यक् विधाय नियमं निशि दशम्यामुपवासं च प्रकुर्याद्वैष्णवव्रतं तत्र एकादश्यां संकल्पः गृहीत्वौदुंबरं पात्रं वारि-
पूर्णमुदङ्मुखः उपवासं तु गृह्णीयाद्यद्वा संकल्पयेद्बुधः औदुंबरताम्रमयं मंत्रः एकादश्यां निराहारः स्थित्वाहमपरेऽहनि
भोक्ष्यामि पुंडरीकाक्ष शरणं मे भवाच्युत शैवादीनां तु हेमाद्रौ सारपुराणे सावित्र्याप्यथवा नाम्ना संकल्पं तु समाचरेत् वाराहे इ
त्युच्चार्य ततो विद्वान् पुष्पांजलिमथार्पयेत् अष्टाक्षरेण मंत्रेण त्रिजप्तेनाभिमंत्रितं उपवासफलप्रेप्सुः पिबेत्पात्रगतं जलं इति कात्या
यनोक्तेः मध्यरात्रे उदये वा दशमीवेधे रात्रौ संकल्प इति माधवः विद्धोपवासेन भस्तु दिनं त्यक्त्वा समाहितः रात्रौ संपूजयेद्विष्णुं सं-
कल्पं च सदाचरेत् देवलः देवस्य पुरतः कुर्याज्जागरं नियतो व्रती अज्ञानतिमिरांधस्य व्रतेनानेन केशव प्रसीद सुमुखो नाथ ज्ञा
नदृष्टिप्रदो भव दिवानिद्रां परान्नं च पुनर्भोजनमैथुनं क्षौरं कांस्यं माषतैलं द्वादश्यामष्ट वर्जयेत् पुनर्भोजनमध्यायो भारआ-
यासमैथुने उपवासफलं हन्युर्दिवानिद्रा च पंचमी स्कांदे असंभाष्यान्हि संभाष्य तुलस्याश्चार्पितं दलं आमलक्याः फलं वापि पा १२१
रणे भक्ष्य शुद्ध्यति भोजनानंतरं विष्णोरर्पितं तुलसीदलं भक्षणात्पापनिर्मुक्तिश्चांद्रायणशताधिका इति विष्णूक्तेः सूतकांतेन

रः स्नात्वापूजयित्वाजनार्दनं दानंदत्वाविधानेनव्रतस्यफलमश्नुते स्त्रीभिस्तुरजोदर्शनेपिकार्यं एकादश्यांनभुंजीतनारीदृष्टेरज
स्यपि इतिमात्स्योक्तेः यदाद्वादश्यांश्रवणर्क्षंतदाशक्त्यामप्येकादशींत्यक्त्वाद्वादशीमुपवसेत् शुक्लावायदिवाकृष्णाद्वादशीश्रव-
णान्विता तयोरेवोपवासश्चत्रयोदश्यांतुपारणं इतिनारदोक्तेः तत्रशुद्धाधिकैकादशीउन्मीलिनी द्वादशीवृद्धौतेनैवत्सा-
व्यंजुली वासरत्रयस्पर्शिनीत्रिस्पर्शा अग्रपर्वणःसंपूर्णाधिकत्वेपक्षवर्धिनी पुष्यर्क्षयुताजया श्रवणयुताविजया पुनर्वसुयु
ताजयंती रोहिणीयुतापापनाशिनी एताअष्टौमहाद्वादश्यः एताःपापक्षयमुक्तिकामउपवसेत् अत्रमूलंहेमाद्र्यादौज्ञेयं द्वादश्याः
प्रथमःपादोहरिवासरसंज्ञितः तमतिक्रम्यकुर्वीतपारणंविष्णुतत्परः अन्यत्र सर्वेषामुपवासानांप्रातरेवहिपारणं इतिएका
दशीनिर्णयः अथशुक्लकृष्णैकादश्युद्यापनं मार्गशीर्षेशुक्लपक्षेकार्तिकेवातथैवच शुभमासेतुकार्यासाशुक्लकृष्णाउभे-
तयोः व्रतविधिः दशम्यामेकभक्तंतुदंतधावनपूर्वकं एकादश्यांशुचिर्भूत्वाआचार्यंवरयेत्ततः तत्रसंकल्पः गणेशास्मर-
णपूर्वकंमासपक्षाद्युल्लिख्यतिथ्यादिसंकीर्त्यमयाचरितस्याचरिष्यमाणस्यवाशुक्लकृष्णैकादशीव्रतस्यसांगतासिद्ध्यर्थंसंपू
र्णफलप्राप्त्यर्थंदेशकालाद्यनुसारतोयथाज्ञानेनशुक्लकृष्णैकादशीव्रतोद्यापनमहंकरिष्ये तदंगत्वेनगणपतिपूजनंपुण्याहवाच
नमाचार्यवरणंचकरिष्ये ततोगणेशंषोडशोपचारैःपूजयेत् ततःकरिष्यमाणशुक्लकृष्णैकादशीव्रतोद्यापनकर्मणःपुण्याहं
भवंतोब्रुवंतु अस्तुपुण्याहं स्वस्तिभवंतोब्रुवंतु आयुष्मतेस्वस्ति ऋद्धिंभवंतोब्रुवंतु कर्मऋध्यतां श्रीरस्त्वितिभवंतोब्रुवं
तु अस्तुश्रीः वर्षशतंपूर्णमस्तु शिवंकर्मास्तु गोत्राभिवृद्धिरस्तु प्रजापतिःप्रीयतां उद्यापनकर्मणिआचार्यंवरयेत् श्रुताध्य
यनसंपन्नौक्रोधलोभविवर्जितौ आचार्यौवरयेत्पश्चाद्ब्रह्मज्ञानसमन्वितौ अस्मिन्कर्मणिआचार्योभव यथाज्ञानेनकर्मकरि
ष्यामि उपोष्यनियतोराजाआचार्यसहितोव्रती कुर्यादाराधनंविष्णोर्यथाशक्त्याजगद्गुरोः देवालयेगवांगोष्ठेशुचौदेशेस्वगृहे
अष्टांगुलोच्छ्रितांवेदींचतुरस्रांप्रकल्पयेत् वितस्तिद्वयविस्तीर्णांतिलैःकृष्णैःप्रपूरयेत् तस्यांषोडशपत्रंचकमलंपरिकल्पयेत्

त् तन्मध्येस्थापयेत्कुंभंनवीनमव्रणंशुभम् कृष्णोस्मिंल्लैस्वसंपूर्णंकृष्णवस्त्रोपशोभितम् अश्वत्थपर्णयुग्मेन-
पंचरत्नैःसमन्वितम् समंतादंतिकंचैवनामसंकर्षणादिभिः उपचारैःषोडशभिःपूजयेत्प्रयतोनरः आग्नेयादिचतु
ष्पत्रेपूजयेद्गणमातृकाः गणेशंमातृकाश्चैववटुंगंक्षेत्राधिपंतथा समाहितमनाःकोणेष्वाग्नेयादिषुविन्यसेत्
शुक्लामेकादशींतद्वन्निलैःशुक्लैश्चपूजयेत् शुक्लवस्त्रेणसंवेष्ट्यपूजयेत्परयामुदा समंतादंतिकेचैव
नामभिःकेशवादिभिः तदग्रेसर्वतोभद्रंलिखेत् देवतासान्निध्यार्थंस्ववर्णमूर्तावग्न्युत्तारणंकरिष्ये. ततो
देवंचसौवर्णंस्नाप्यपंचामृतादिभिः गंधपुष्पाक्षतोपेतमथपुण्यजलैःशुभैः गृहीत्वावाहयेत्कुंभेरमायुक्तंचतुर्भुजं एवंवि
ष्णुमावाहयेत् ॐनमोविष्णवेतुभ्यंभगवन्परमात्मने कृष्णोसिदेवकीपुत्रपरमेश्वरउत्तम अजोनादिश्चविश्वात्मासर्वलो
कपितामहः क्षेत्रज्ञःशाश्वतोविष्णुःश्रीमान्नारायणःपरः त्वमेवपुरुषःसत्योतींद्रियोसिजगत्पते यत्तेतेजःपरंसूक्ष्मंतेने
मांवेदिकांविश ॐभूःपुरुषंआवाहयामि ॐभुवःपुरुषं० ॐस्वःपुरुषं० ॐभूर्भुवःस्वःपुरुषं० विष्णोइहागच्छइहतिष्ठ
पूजांगृहाणसुप्रसन्नोवरदोभव रुक्मिणींसहजांबवतींसत्यभामांश्रियंचपूर्वपश्चिमदलाभ्यंतरेषुषोडशस्त्रीसहस्राणिक
ल्पयेत् शंखंचक्रंगदांपद्ममीशानादिषुकल्पयेत् तद्बहिःपूर्वपत्रादिष्वष्टपत्रेष्वनुक्रमात् विमलोत्कर्षिणीज्ञाना ३क्रियाध
योगा ५तथैवच प्रह्वी ६सत्या ७ तथाज्ञाना ८नुग्रहापद्ममध्यगा देवस्याग्रेनतःकृत्वावेदिकायांखगेश्वरं एवमावाह्य लोक
पालानवस्थाप्यदिक्षुपूर्वादिषुक्रमात् देवान्तदस्त्रैर्वास्थापयेत् अतोदेवाइत्यादिषोडशमंत्रैःषोडशोपचारैःपूजयेत् त
तःपूर्वादिद्वादशपद्मपत्रेषुकेशवादीनावाह्य अतोदेवा १इदंविष्णु २विष्णोःकर्माणिपश्यत ३त्रीणिपदा ४तद्विष्णोः ५
स्तद्विप्रासोविचक्रमे ६७विष्णोर्नुकं ८मतद्विष्णु ९ननेविष्णो १०प्रविष्णवे ११तदस्य १२इरावती १३नावा १४वषट्ते १५
नुक्रमेणाह प्रदद्यादासनंपाद्यमर्घ्यमाचमनीयकं स्नानंवस्त्रंचोपवीतंगंधपुष्पाणिवैततः धूपंदीपंचनैवेद्यंनीराजनप्रदक्षि

यो केशवाय०१ नारायणाय०२ माधवाय०३ गोविंदाय०४ विष्णवे०५ मधुसूदनाय०६ त्रिविक्रमाय०७ वामनाय०८ श्रीधराय०९
हृषीकेशाय०१०पद्मनाभाय०११ दामोदराय०१२ एताः शुक्लैकादश्यांमंडलदेवता एवमेवकृष्णैकादशीमंडले संकर्षणाय०
संकर्षणंआ० वासुदेवं० प्रद्युम्नं० अनिरुद्धं० पुरुषोत्तमं० अधोक्षजं० नारसिंहं० अच्युतं० जनार्दनं० उपेंद्रं० हरिं० श्री
कृष्णं०१२ इतिकृष्णैकादश्याः उभयेकादश्यांयदाएकआचार्यः तदाद्वादशपद्मदलेषुपूर्वादिक्रमेण एकत्रदेवतास्थाप्य
पूजयेत् स्तवनंविष्णुसूक्तैश्चपरिचर्यांचनामभिः नमोंतैर्वैष्णवैर्मंत्रैस्तन्मूर्तौपूजयेत्सुधीः ततोदेवाद्योभूमौसर्वतोभद्र
मंडले ब्रह्माद्यादेवताःसर्वाःपूजनीयात्वनुक्रमात् उपचारादिकंकुर्यान्नैवेद्यार्थेविसर्जनं गीतवाद्यैस्तथानृत्यैरितिह्यसेसमनोर
मैः पुराणैःसत्कथाभिश्चरात्रिंशेषंनयेत्सुधीः प्रभातेविमलेस्नात्वाकृत्वाशौचादिकाःक्रियाः चतुर्विंशतिसंख्याकान्विप्रानाग
मदर्शिनः आकारयेत्ततःपश्चात्पूजयेच्चसमागतान् आचार्येणसमंकुर्यादुपचारादिकंततः होमसंख्यानुसारेणस्थंडिलं
कारयेत्ततः उल्लेखनादिकंकृत्वाप्रणीतास्थापनंततः अस्मिन्शुक्लकृष्णैकादशीव्रतोद्यापनहोमंकर्तुंस्थंडिलादिकर्मकरि
ष्ये अग्निध्यानांतंकृत्वाततोन्वाधानं क्रियमाणे शुक्लकृष्णैकादशीव्रतोद्यापनहोमेदेवतापरिग्रहार्थमन्वाधानंकरिष्ये च
क्षुषीआज्येनेत्यंतमुक्त्वा अत्रप्रधानं अग्निं इंद्रं प्रजापतिं विश्वान्देवान् ब्रह्माणं पुरुषं नारायणं प्रत्यृचं आज्येन वासुदे
वंबलदेवं श्रीविष्णुंसप्तवारं अग्निंवायुंसूर्यं प्रजापतिं एताःप्रधानदेवताः पायसद्रव्येण केशवादिद्वादशदेवताः आज्यमिश्रि
तपायसद्रव्येण विष्णुं अष्टोत्तरशताहुत्यावापायसद्रव्येण ब्रह्मादिदेवताश्चएकैकयाज्याहुत्या शेषेणस्विष्टकृतमित्यादि
प्रणीताप्रणयनांतंकृत्वा अन्वाधानसमिद्भिर्जुहुयात् पायसंश्रपयित्वाचरोःश्रपणमुद्धरेत् पवित्रेतेइतिमंत्रंजपन्श्रपण
मुद्धरेत् पायसादुद्धृतंकिंचित्प्रापणंतत्प्रकीर्तितं अन्वाधानादिकंकुर्यादाज्यभागांतमेवच आज्यसंस्कारादिकंआ-
ज्यभागांतंकृत्वा इदमुपकल्पितंहवनीयद्रव्यंयथादेवतमस्तु अनादेशाहुतीःपंचहोतव्याःसर्पिषाततः पौरुषेणाथसूक्तेनप्रत्यृ

चंजुहुयाद्धूतं पायसंसघृतंचैवहुनेदष्टोत्तरंशतं घृताक्ततिलपालाशसमिद्भिर्जुहुयात्पृथक् अष्टोत्तराहुतीनांचविष्णुमंत्रेणकारये
त् इदंविष्णुर्विचक्रमेतिसूक्तेनजुहुयात्तिलसर्पिषा वासुदेवायस्वाहा बलदेवायस्वाहा श्रियैस्वाहा विष्णवे० विष्णोर्नुकंमंक् नद-
स्यभिय॰ प्रतद्विष्णु॰ परोमात्रया॰ इदंविष्णुर्वि॰ त्रीणिपदाऋक् व्याहृतिभिश्चैतिजुहुयात् केशवादिद्वादशनामभिःपाय
संहुत्वा विष्णुंअष्टोत्तरशतंपायसेनजुहुयात् कृष्णैकादश्यांएवंसंकर्षणादिद्वादशनामभिरेव शुक्लकृष्णैकादश्योःएका
चार्यएकस्थंडिलपक्षेचतुर्विंशतिनामभिर्हुत्वामुख्यदेवानांअष्टोत्तरशतंहुत्वाब्रह्मादिदेवताः एकैकयाज्याहुत्याहुनेत् न
नःप्रापणार्थंभगवत्प्रार्थना त्वामेकमाद्यंपुरुषंपुराणंनारायणंविश्वसृजंयजामः मयेकभागोर्विहितोविधेयोगृहाणहव्यंज
गतामधीश इतिप्रापणंनिवेद्यउपतिष्ठेत चतुरोवा प्रदक्षिणमग्निंवेदिकांचपरिक्रम्य पिंधिविश्वाइतिजानुनीनिपात्य ध्रुव
सूक्तंजपेत् पुरुषसूक्तंवा अष्टोपद्मानिमांतदिक्षुंएतैर्मंत्रैर्जपन् कृष्णायवासुदेवायहरयेपरमात्मने शरण्यायाप्रमेयाय
गोविंदायनमोनमः नमःस्थूलायसूक्ष्मायव्यापकायाव्ययायच अनंतायजगद्धात्रेब्रह्मणेनंतमूर्तये अथतंनिवेदितंप्राप
णंमूर्ध्निकृत्वाघोषयेत् केवैष्णवाःकेवैष्णवाइतिउच्चैर्वदेत् वयंवैष्णवाः वयंवैष्णवाःइतिप्रवदेत् तेभ्यःसमानेभ्योहविर्देयं द्वादशा
क्षरमंत्रेण ॐनमोभगवतेवासुदेवायेति इदमहममृतंप्राश्यामिइतिप्राश्य आचम्य गृहमागत्य सिद्धयेस्वाहेतिजुहु-
यात् यतइंद्रभयामहइत्यात्मानमभिमंत्र्य सर्वप्रायश्चित्तादिसमापयेत् स्विष्टकृदादिहोमशेषंसमाप्य उत्तरपूजांकृत्वा
विष्णुसूक्तानिजप्त्वा अतोदेवाइति॰ ॐभूःपुरुषं उद्वासयामिक्रमेणउद्वासयेत् ततोहोमावसानेचगामरोगांपयस्विनीं स
वत्सांकृष्णवर्णांचसवस्त्रांकांस्यदोहिनीं दद्याद्व्रतसमाप्त्यर्थमाचार्यायसदक्षिणां भूषणानिविचित्राणिवासांसिविविधा-
नि च चतुर्विंशतिसंख्यानिपक्वान्नानिचदापयेत् आचार्यायप्रदेयानिदक्षिणांभूयसींतदा यदीच्छेदात्मनःश्रेयोव्रतस्यो 
द्यापनंचरेत विप्रान्द्वादशसंख्याकान्नामभिःपृथगर्चयेत् उपवीतानितेभ्योवेदद्यात्कुंभान्सदक्षिणान्॰पक्वान्नफलसं-

युक्तान्वस्त्रयुक्तांस्तुदापयेत् भोजयित्वाततोविप्रान्पक्वान्नेनचभक्तितः अन्यानपियथाशक्तिब्राह्मणान्भोजयेद्व्रती व्रतं
ममास्तुसंपूर्णमित्युक्तैःपूजितैर्द्विजैः अस्तुसंपूर्णमित्युक्त्वा आचार्यसहितोव्रती जप्त्वावैष्णवसूक्तानिप्रणम्यचपुनःपुनः
ॐ भूः पुरुषंउद्वासयामि इतिक्रमेणोद्वासयेत् इदंविष्णुरितिपीठंआचार्यतुभ्यमहंसंप्रददे देवस्यत्वेतिमंत्रेणप्रतिगृ
ह्यतांप्रतिगृह्णामि अस्यमयाकृतस्यशुक्लकृष्णैकादशीव्रतोद्यापनकर्मणःसांगतासिद्ध्यर्थंचतुर्विंशतिब्राह्मणान्भोज-
यिष्ये नमम ततोबंधुजनैःसार्धंशिष्टैरिष्टैश्चभोजयेत् इत्याहभगवान्बौधायनः इतिबौधायनोक्तशुक्लकृष्णैकादशी
व्रतोद्यापनंसंपूर्णं अथपूजाविधिःप्रोक्तः एकादश्यांशुभेपक्षेनिराहारःसमाहितः नानापुष्पैर्मुनिश्रेष्ठविचित्रंमंडपंशु
भं स्नात्वासम्यग्विधानेनसोपवासोजितेंद्रियः संपूज्यविधिवद्विष्णुंश्रद्धयासुसमाहितः गंधपुष्पैस्तथाधूपैर्दीपैर्नैवे-
द्यकैःपरैः उपचारैर्बहुविधैर्जपहोमैःप्रदक्षिणैः स्तोत्रैर्नानाविधैर्दिव्यैर्गीतवाद्यैर्मनोहरैः दंडवत्प्रणिपातैश्चजयशब्दैस्त
थोत्तमैः एवंसंपूज्यविधिवद्रात्रौकृत्वाप्रजागरं याति विष्णोःपरंस्थानंनरोनास्त्यत्रसंशयः पंचामृतेनसंस्नाप्यएकादश्यांजना
र्दनं द्वादश्यांपयसास्नाप्यहरिसारूप्यमश्नुते इतिपूजाविधिः अथशुक्लकृष्णैकादश्युद्यापनविधिः अर्जुनउवा॰ कीदृग्व्रत
विसर्गोत्रविधानंचात्रकीदृशं संपूर्णंहिभवेद्येनतन्मेवदकृपानिधे श्रीकृष्णउवा॰ शृणुपांडवयत्नेनप्रवक्ष्यामितदव्ययं
शक्तःस्वर्णसहस्रंतुअशक्तःकाकिणीतथा ददातिप्रत्युद्यापार्थसमंस्यादुभयोरपि शक्तश्चेद्विगुणंदद्याद्यथोक्तोमध्यमोविधिः
उक्तार्धमप्यशक्तस्यदानपूर्णफलप्रदं तद्रूपविधिमप्येकंकथयामितवाग्रतः यानिकष्टेनचीर्णानिव्रतानिकुरुसत्तम विफला-
न्येवसर्वाणिउद्यापनविधिंचरेत् प्रबोधसमयेपार्थकुर्यादुद्यापनक्रियां मार्गशीर्षेविशेषेणउद्यापनविधिंचरेत् दशम्यां
दिनशेषेणरात्रौगुरुगृहंव्रजेत् एकादशीदिनेप्रातर्गुरुमभ्यर्च्यशक्तितः गृहीत्वाचरणौमूर्ध्नातदर्थंचविचक्षणः पुण्यदेशोद्भवं
विप्रंशांतंसर्वगुणान्वितं सदाचाररतंपार्थवेदवेदांगपारगं अस्मदीयंव्रतंविप्रविष्णुवासरसंभवं संपूर्णंतुभवेद्येनतत्कुरुष्वद्विजोत्त

म नस्याग्रेनियमःकार्योदंतधावनपूर्वकः एकादश्यांनिराहारःस्थित्वाचैवपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत एवं
प्रभातसमयेशुचिर्भूत्वासमाहितः पाखंडिनांचसर्वेषांपतितानांचसंगमं कामंदुरोदरंपार्थदूरतःपरिवर्जयेत् स्नानंकृत्वा
मंत्रपूर्वंनद्यादौविमलेजले तर्पयित्वापितृन्देवान्पूजयेन्मधुसूदनं उपलिप्यशुचौदेशेकीटकेशास्थिवर्जिते वर्णैश्चसर्वतोभद्रं
नीलपीतसितासितैः मंडलंचोद्धरेद्भूपसर्वकर्मसुपूजितं अष्टांगुलोच्छ्रितांवेदींचतुरस्रांप्रकल्पयेत् वितस्तिद्वयविस्तीर्णामक्षतैःपरि
पूरितां तस्यांषोडशपत्रंचकमलंपरिकल्पयेत् तन्मध्येस्थापयेत्कुंभंनवीनंसुस्थिरंशुभं अथवातंडुलानांचअष्टपत्रांबुजंचरेत् वारिपू-
र्णंघटंताम्रपात्रंरौप्यसमुद्भवं जातरूपमयंदेवंलक्ष्म्यायुक्तंजनार्दनं पल्लवैश्चसमायुक्तंसहिरण्यंसवाससं अक्षमालासमायुक्तंशंखचक्र
गदाधरं ॐभूःपुरुषंआवाह॰ ॐभुवःपुरुषंआ॰ ॐस्वःपुरुषंआ॰ ॐभूर्भुवःस्वःपुरुषंआ॰ रुक्मिणीजांबवती सत्यभामा शतोत्तरषोड
शसहस्रैःस्त्रियाचसहतस्येकल्पयेत ब्रह्मादिदेवताःसर्वाःपूजनीयाअनुक्रमात् शक्त्याशुक्लवर्णपुष्पैश्चपूजनंपुष्टिवर्धनं अन्यैश्चैवतुद्र
वैःपुष्पैरर्चयेद्विधिवन्नरः नैवेद्यांश्चचतुर्विंशान्ययदद्यादनुक्रमात् भक्त्याचतुर्विंशतिषुतिथिष्वपिनरंतप इच्छयावातथादद्याद्यदेवोद्या
पनंभवेत् मोदकान्गुडकांश्चूर्णान्घृतपूरकमंडकान् सोहालिकादिकंसारःसर्वाःसक्तवएवच वटकान्पायसंदुग्धंशालिदध्योदनंतथा
इंडिकान्पूरिकान्पार्थअपूपान्गुडमोदकान् तिलपिष्टकपोवेष्टंशालिपिष्टंसशर्करं रंभाफलंचसघृतंसुक्ष्मचूर्णगुडौदनं एवंक्रमेण
नैवेद्यंदद्याच्चरमेहनि दामोदरायपादौतुजानुनीमाधवायच गुह्यंवैकामपतयेकट्यांवामनमूर्तये पद्मनाभायनाभिंतुउदरंविश्व-
मूर्तये हृदयंज्ञानगम्यायकंठंश्रीकंठसंगिने सहस्रबाहवेबाहूचक्षुषीयोगयोगिने ललाटमुरुगायेतिनासांनाकस्करेश्वरं श्रवणौश्च
णेशायशिरवायांसर्वकामदं सहस्रशीर्षायशिरःसर्वांगसर्वरूपिणे शुभेननारिकेरेणबीजपूरेणवापुनः दद्याद्ध्यालजगन्नाथंद
द्यादर्घ्यंविधानतः साक्षतंचसपुष्पंचसजलंचंदनान्वितं रात्रौजागरणंकुर्याद्गीतशास्त्रविनोदतः इष्टंदत्तंधरादानंपिंडोदत्तोगयाशिरे
कृतंदानंकुरुक्षेत्रेयेःकृतंजागरंहरेः नृत्यगीतंप्रकुर्वंतिवीणावाद्यंतथैवच येपठंतिपुराणानितेनराःकृष्णवल्लभाः शास्त्रैर्वाप्यथवाभक्त्या

गः निर्वाप्यथवाशुचिः कृत्वाजागरणंविष्णोर्मुच्यतेपापकोटिभिः मुक्तोवाप्यथवामुक्तोजागरेसमुपस्थितः मुच्यतेसर्वपापे
भ्योविष्णुलोकंसगच्छति यावत्पदानिस्वगृहात्केशवायतनंप्रति अश्वमेधसमानिस्युर्जागरार्थंप्रयच्छतः पादयोःपांसुकणिकाध
रण्यांनिपतंतियाः तावद्वर्षसहस्राणिजागरःवसतेदिवि बहून्यपिचपापानिकृतंजागरणंहरेः निर्दहेन्मेरुतुल्यानियुगकोटिशतान्य
पि मनसासंस्मरेद्देवंतांरात्रिमतिवाह्यच प्रभातेविमलेस्नात्वाविप्रानाकारयेत्सुधीः चतुर्विंशतिसंख्याकान्विप्रानागमदर्शकान् स
र्वंकुर्याद्विधानेनजपहोमार्चनादिकं स्वगृह्योक्तेनविधिनाकृत्वाग्निस्थापनंततः उल्लेखनादिकंकुर्यात्प्रणीतास्थापनादिकं तत्राग्नौच
चरुंकृत्वाचरोःप्रापणमुद्धरेत् पवित्रंतेविततमितिमंत्रंपठेत् अन्वाधानादिकंकुर्यादाज्यभागांतमाचरेत् तिलाज्यपायसान्नैश्चस
मिद्भिर्जुहुयात्पृथक् शतमष्टोत्तरंहोमःसर्वत्रापिप्रशस्यते इदंविष्णुर्द्विजातीनांहोममंत्रःप्रकीर्तितः शूद्राणांचैवसर्वेषांमंत्रमष्टा
क्षरंविदुः विविधैरपिवस्त्रैश्चभाजनैरासनैःसह छत्रोपानद्गोभिश्चदद्यात्सार्थंपृथक्पृथक् द्वादशैवायथाशक्त्यावावस्त्रालंकारभू
षणैः पूजयेत्पुष्पमालाभिःसपत्नीकान्द्विजोत्तमान् कुंभाद्वादशदातव्याःपक्वान्नजलपूरिताः भोजयित्वाततोविप्रान्भक्तितोवि
सर्जयेद्बुधः एकाहकपिलादेयासर्वकामफलप्रदा यथास्वर्गश्चमोक्षश्चइहसंपूर्णताव्रते नमस्तेकपिलेदेविसंसारार्णवतारिणि मयाद
त्ताद्विजेंद्रायप्रीयतांमेजनार्दनः सपत्नीकोगुरुःपूज्योमंडलेहरिसन्निधौ भूषणाच्छादितैर्भोज्यैःप्रणामैःपरितोषयेत् समाप्यैवं
व्रतंधर्मंदद्यात्सर्वंधनंजय इत्थंचान्यद्यथाशक्त्यावित्तशाठ्यविवर्जितः जलदानंविशेषेणभूमिदानमतःपरं प्रार्थयेत्कुरुसाधीशं
ततोभक्त्याकृतांजलिः मयाद्यास्मिन्व्रतेदेवयदपूर्णंकृतंविभो सर्वंभवतुसंपूर्णंत्वत्प्रसादाज्जनार्दन त्वयिभक्तिःसदेवास्तुममदामो
दरप्रभो पुण्येबुद्धिःसदासेवासर्वधर्मफलंचमे जपच्छिद्रंतपश्छिद्रंयच्छिद्रंव्रतकर्मणि सर्वंसंपूर्णतांयातुत्वत्प्रसादादिमापते प्रद
क्षिणंततःकृत्वादंडवत्प्रणिपत्यच मंडलंमूर्तिसंयुक्तंसोपहारंसदक्षिणं प्रीयतांविष्णुरित्युक्त्वाआचार्यायनिवेदयेत् सर्वंविसर्ज
येत्पश्चात्संतोष्यपरिभोज्यच तदाज्ञयाततःकुर्यात्पारणंबंधुभिःसह एकादशीव्रतंचैवंयथाविधिकृतंपुरा योवनाश्वेनभूपेनकथि

नंपुरतस्तव धनंजयतवभीत्याभनयानुग्रहकारणात् यःकरोतिनरोभक्त्याव्रतमेतद्व्यापहं सयातिवैष्णवंस्थानंदाहमलयवर्जितं उ-
क्तमुद्यापनंचैवमुभयोःकुरुसत्तम किमन्यैर्बहुभिर्वाक्यैःप्रशंसांपरमांभुवि एकादश्याःपरनरंत्रैलोक्येनहिविद्यते अन्नदानंतुगो-
दानंभूमिदानमथापिवा गोरोमबीजमूलानांसमसंख्यायुगानिहि दानाद्वैविष्णुभवनेएकादश्यावसंतिहि येपिश्रृण्वंतिसततंक-
थ्यमानांकथामिमां तेपिपापविनिर्मुक्ताःस्वर्गंयांतिनसंशयः इत्याकर्ण्यार्जुनोवाक्यंकृष्णस्यपरमाद्भुतं आनंदंपरमंप्रापसौख्यंचापि-
निरंतरं इतिसाधारणएकादशीव्रतोद्यापनंसंपू॰ अथगोपद्मव्रतोद्यापनविधिः तत्रपूजाविधिः चतुर्भुजंमहाकायंजांबूनद
समप्रभं शंखचक्रगदापद्मरमागरुडशोभितं सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः एवंविधंहरिंध्यात्वाततोयजनमारभेत् ध्या
नं आवाहयामिदेवेशभक्तानामभयप्रद संस्निग्धंवरदंशांतंमनसावाहयाम्यहं आवाहयामि सुवर्णमणिभिर्दिव्यैःरचितेदेव
निर्मिते दिव्यसिंहासनेस्निग्धेप्रविशत्वंसुराधिप आसनं गंगोदकंसुश्रेष्ठसुवर्णकलशस्थितं गंधपुष्पाक्षतैर्युक्तंगृहाणरमया
सह पाद्यंसम॰ अष्टगंधसमायुक्तंस्वर्णपात्रेस्थितंजलं अर्घ्यंगृहाणभोदेवभक्तानामभयप्रद अर्घ्यं देवदेवनमस्तुभ्यंपुराणपुरु
षोत्तम मयादत्तमिदंतोयंगृह्यताचमनीयकं आचमनं पयोदधिघृतैःस्नानंमधुशर्करयायुतैः मध्येमध्येचपूजाचकर्तव्याव्रतिभिः
सदा पंचामृतस्ना॰ नदीनांचैवसरसांमयानीतंजलंशुभं अनेनस्नानंकुरुभोमंत्रैर्वारुणसंभवैः स्नानं वस्त्रयुग्मंसमानीतंपट्टसू
त्रेणनिर्मितं सूक्ष्मकार्पासतंतूनांसुवर्णेनविराजितं वस्त्रं नारायणनमस्तेस्तुत्राहिमांभवसागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषो
त्तम यज्ञोप॰ केयूरमुकुटैश्चैवनूपुरैरंगुलीयकैः पूजितोसिमयत्नेनरत्नैराभरणैर्विभो आभरणानि चंदनंमलयोद्भूतंकस्तूर्यगरुसं
युतं कर्पूरेणचसंमिश्रंस्वीकुरुष्वानुलेपनं चंदनं शतपत्रैःकर्णिकारैश्चपंकेर्मल्लिकादिभिः पुष्पैर्नानाविधैश्चैवपूजयामिसुरेश्वर पु
ष्पाणि दशांगोगुग्गुलोद्भूतःसुगंधिश्चमनोहरः आघ्रेयोदेवदेवेशधूपोयंप्रतिगृह्यतां धूपंस॰ एकार्तिकंस्फुरच्छ्रेष्ठगोघृतेनसुवर्तिना १२५
संयुक्तंतेजसाकृष्णगृहाणादित्यदीपित दीपं अन्नंचपायसंभक्ष्यंसिताज्यसमन्वितं दधिक्षीरघृतैर्युक्तंगृहाणसुरपूजित नैवेद्यं

नागवल्लीदलयुक्तपूगीफलसमन्वितं कर्पूरखदिरैर्युक्तं ताम्बूलं प्रतिगृह्यतां ताम्बूलं ॥ ...
तेजोराशिमयं दत्तं लोकानंदकरं प्रभो नीराजनं अंजलिस्थानि पुष्पाणि अर्पयामि जगत्पते गृहाण सुमुखो भूत्वा जगदानंददायक पुष्पांज
लिं यानि कानीति प्रद० नमस्ते देवदेवेश नमस्ते गरुडध्वज नमस्ते विष्णवे तुभ्यं व्रतस्य फलदायक नमस्का० मंत्रहीनं क्रियाहीनमिति
प्रार्थना सांगतासि० वायनप्रदानं करिष्ये परमान्नमिदं दिव्यं कांस्यपात्रेण संयुतं वायनं द्विजवर्याय सहिरण्यं ददाम्यहं इति पूजास०
अथ कथा व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषं पराशरात्मजं वंदे शुकतातं तपोनिधिं सूत उवाच द्वापरे द्वारवत्यां च नारदः कृष्ण
दर्शनात् उत्साहेनाभ्यगात्तत्र ददर्श यदुनंदनं पूजितश्चैव कृष्णेन विष्टरादिभिरादरात् ततः प्रोवाच तं विष्णुर्नारदं लोकपूजितं श्रीकृ
ष्ण उवा० शृणु लोकज्ञ देवर्षे भुवने विचरन्सदा लोकान्तरे यच्चरितं यद्विशेषं वदस्व मे नारद उवा० भगवन्देवदेवेश भक्तोस्मि नवचांकितं
तत्राश्चर्यमिदं वक्ष्ये धर्मस्य सदसि स्थितं तत्र सर्वे समासीनाः शक्राद्याश्च चतुर्दश आद्याश्चैकादश रुद्रा आदित्या द्वादश स्मृताः वसवोष्टौ
तथा नागा यक्षराक्षसपन्नगाः ते सर्वे यममाहुश्च स्थितं सिंहासने शुभे मानुष्यं दुंदुभेश्चर्माच्छादनार्थं वदस्व नः यम उवा० चातु
र्मास्यव्रतं चैकं संक्रांतिव्रतमेव च न कुर्वंति च या नार्यस्तासां मांसाच्छादनं त्वचा कुर्वंतु दुंदुभेश्चास्य विचार्यं च महाभटाः ते तस्य वचनं श्रु-
त्वा भयाः प्रविविशुः प्रभुं स्वामिन्निदं महाश्चर्यं मनस्त्वां प्रवदामि च तच्छ्रुत्वा चरितं कृष्णः प्राह लोकान्पुरस्थितान् तथा कुर्वंतु लोकाश्च ना
र्यः पुर्यां न संति हि तच्छ्रुत्वा चरितं कृष्णा नारीभिर्नगरेषु च कृष्णाज्ञया कृष्णदूताः प्रोचुस्ते सर्वे योषितः पुरःसराः प्रश्रृण्वंतु नगरस्थाश्च
योषितः अन्यच्च यत्र कुत्रापि ऊचुस्ता यदुनंदनं त्वत्सोदरीं विना स्वामिन्नान्या नार्योत्र संति हि तच्छ्रुत्वा भयसंत्रस्तः सोदरीं मत्सभा
कृष्ण उवा० शृणु भद्रे किं करोषीह आगता यमसेवकाः व्रतं त्वया कृतं भद्रे पुरा पुण्योद्भवं शुभं सुभद्रोवा० सर्वव्रतानि हे कृष्ण कृतान्यद्य न
संशयः नो चेत्त्वत्सोदरी नस्यां योषिच्चाप्यर्जुनस्य च नस्यां माता चाभिमन्योर्वै यमदूताः कथं विभो कृष्ण उवा० कुरु त्वं भगिनी मेद्य व्रत
मेकं शुभप्रदं गोपद्ममिति विख्यातं व्रतं लोकेषु विश्रुतं सूतेन कथितं पूर्वमृषीणां हितकाम्यया नैमिषे हि महावत्सा मर्षीसिद्धाश्रमम

नुत्तमं तथास्सूतोऽगमद्द्रष्टुं मुनीनां यज्ञमुत्तमं तदृष्ट्वा मुनयः सर्वे हर्षेणाश्रु मुहुर्मुहुः अर्चितोऽश्च ततः सर्वै रर्घ्यादिभिर्यथाविधि अभ्यर्च्य तं
मुनिभिर्विप्रा ऊचुस्ते प्रीतिपूर्वकम् ऋषय ऊचुः भवांल्लोकस्य धर्मज्ञो भक्तानां ज्ञानसाधनः समर्थः सर्वमुक्तीनां सर्वसौभाग्यकार-
कं कृपया मुनिशार्दूल कथयस्वोत्तमव्रतं सूत उवाच श्रृणुध्वमृषयः सर्वे व्रतानामुत्तमं व्रतं गोपद्ममिति विख्यातं सर्वपापहरं परं
सर्वदुःखोपशमनं सर्वसंपत्प्रदायकं यमस्य दंडनं यस्माद्धरीकृतमनुत्तमं सुवासिन्यास्तु सौभाग्यपुत्रपौत्रप्रवर्धनं ऋषय ऊचुः
कस्मिन्मासि कथं कृत्वा किंफलं कस्य पूजनं केन चीर्णं पुरा सौधीन तत्सर्वं कथयस्व नः सूत उवाच आषाढशुक्लपक्षस्य एकादश्यां विशे
षतः तदारभ्य कार्तिकस्य द्वादश्यंतं व्रतं चरेत् गोष्ठे च शुद्धगोस्थाने गोमयेनोपलिप्य च त्रयस्त्रिंशच्च पद्मानि कारयेद्व्रीहिपिष्टकैः
शोभयेत् पंचरंगैश्च गंधपुष्पैः प्रपूजयेत् तत्संख्यया च कर्तव्या नमस्कारप्रदक्षिणाः तत्संख्यया त्वपूपांश्च ब्राह्मणाय निवेदयेत्
वायनं द्विजवर्याय प्रथमे वत्सरे शुभं द्वितीये वत्सरे दद्यात्पायसं वै विनिर्मितं तृतीये मंडकान्दद्याच्चतुर्थे पूर्णमिश्रितान् पंचमे घारि
कादद्यात् पूर्णे उद्यापनं चरेत् एकादश्यामुपवसेद्दंतधावनपूर्वकं मंडपं कारयेत्तत्र कदलीस्तंभमंडितं नानापुष्पैश्च शोभाढ्य
मरवरं तत्र कारयेत् तन्मध्ये सर्वतोभद्रं पंचरंगैः समन्वितं पुण्याहं वाचयित्वा तु प्रतिमायां यजेद्धरिं कर्षमात्रसुवर्णेन तदर्धा
र्धेन वा पुनः आचार्यं वरयित्वा च कलशं स्थापयेत्ततः लक्ष्मीनारायणस्याप्य सौवर्णं प्रकल्पितं ब्रह्माद्यावाहनं तत्र पूजयेच्च पदी
पकैः द्वादशैव तु नामानि प्रत्येकं पूजयेद्व्रती रात्रौ जागरणं कृत्वा गीतवाद्यादिमंगलैः ततः प्रभाते उत्थाय स्नात्वा होमं तु कारयेत् सति
लाज्यसमिद्द्रव्यं हुनेद्द्वादशनामभिः पायसं च शतं चाष्टौ हुत्वा पूर्णाहुतिं चरेत् वत्सेन सहितां धेनुमाचार्याय निवेदयेत् विप्रान्पंच
सपत्नीकान्भोजयेत् षड्रसैर्व्रती भुंजीत बंधुभिः सार्धमेकाग्रहृतमानसः अन्यानपि यथाशक्त्या ब्राह्मणान्परिभोजयेत् कृ
त्वा चेदं व्रतं पुण्यं सर्वान्कामानवाप्नुयात् अंते स्वर्गपदं गच्छेत् सर्वपापविवर्जितः कृष्णस्य वचनं श्रुत्वा सुभद्रा तत्तथाकरोत् प
श्चाद्व्रतमेतस्या रात्रौ यामचतुष्टये गोपद्मानि च संपूज्य प्रातर्हुत्वा हुताशनं एवं व्रते कृते पश्चात्सर्वयां यमभटा विशन्न यमभयाऊ

सुभद्रेनवदेहस्य च सौर्येचागताववयं कस्मद्देवा॰ गोष्ठेपद्मानिचान्यत्रसर्वपश्यंतुहेभटाः अन्योन्यवादसमयेविष्णुदूताःस-
मागताः तान्दृष्ट्वाताडयामासुर्व्रतस्यास्यप्रभावतः पलायितामहाभीताःस्मरंतोयमशासनं तान्दृष्ट्वारक्तदिग्धांगान्य
मोभयसमन्वितः कस्येदंकृत्यमितिचज्ञात्वातींद्रियदर्शनात् उवाचदूताःशृणुतयत्रसंपूज्यतेहरिः नगंतव्यंभवद्भिश्चसत्यं
सत्यंवदाम्यहं भामवनोदेववशाद्विविशाध्वंमहाभटाः इत्युक्त्वाधर्मराजोसौशालायांचविवेशह तेनैवऋषिणांमध्येकथितं-
व्रतमीदृशं दमयंत्यातथाबाल्येराज्यभ्रंशात्कृतंव्रतं व्रतस्यास्यप्रभावेनराज्यसौभाग्यसंपदः पुत्रपौत्रादिसौभाग्यंभुक्त्वा
मोक्षमवाप्नुयात् ऋषयऊचुः त्वत्प्रसादात्कृतार्थाभोगच्छामःस्वाश्रमालयम् प्रणम्यमुनिभिःसाकंस्तूतस्थानंहितोभव
त् मुनिभिःसर्वलोकेषुकथितंव्रतमुत्तमं नातःपरतरंपुण्यंत्रिषुलोकेषुविश्रुतं इतिश्रीभ॰गोपद्मव्रतोद्यापनंसंपूर्णं अथपुरु
षोत्तममासस्यैकादशी युधिष्ठिरउवा॰ भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतं सर्वपापहरंचैवफलंमुक्तिप्रदायकं पुरु
षोत्तमस्यमासस्यकथांब्रूहिजनार्दन कोविधिःकिंफलंतस्यकोदेवस्तत्रपूज्यते अधिमासेतुसंप्राप्तेव्रतंब्रूहिजनार्दन कस्य
दानस्यकिंपुण्यंकिंकर्तव्यंनृभिःप्रभो कथंस्नानंचकिंजाप्यंकथंपूजाविधिःस्मृतः किंभोज्यमुत्तमंचान्नंसारोवैपुरुषोत्तमे
श्रीकृष्णउवाच कथयिष्यामिराजेंद्रभवतःस्नेहकारणात् अधिमासेतुसंप्राप्तेभवेदेकादशीतुया कमलानामनामेति
तिथीनामुत्तमातिथिः तस्याश्चैवप्रभावेनकमलाभिमुखीभवेत् ब्राह्मेमुहूर्तेचोत्थायस्मृत्वातंपुरुषोत्तमं स्नात्वाचैवविधानेन
व्रतीनियममाचरेत् गृहेत्वेकगुणंजाप्यंनद्यांदशगुणंस्मृतं गवांगोष्ठेशतगुणमग्न्यागारेदशाधिकं शिवक्षेत्रेषुतीर्थेषुदेव-
तानांचसन्निधौ सहस्रशतकोटीनामनंतंविष्णुसन्निधौ अवन्त्यामभवद्विप्रःशिवधर्मेतिनामतः तस्यात्मजेषुपंचसुकनि
ष्ठोदुष्टकर्मकृत् तदापित्रापरित्यक्तःस्वयंत्यक्तःस्वजनबांधवैः स्वकर्मणःप्रभावेनगतोदूरतरंवनम् एकदादैवयोगेनतीर्थरा-
जंसमागमत् क्षुत्क्षामोदीनवदनस्त्रिवेण्यांस्नानमाचरत् ऋषीणामाश्रमंतत्रविचिन्वन्क्षुधयार्दितः हरिमित्रमुनेस्त

ब्रत्वाश्रमवददशोहं पुरुषोत्तममासे तुष्टव्रुयाकमलास्तुता एकादशीपुण्यनमाभुक्तिमुक्तिप्रदायिनी पुरुषोत्तममासस्यकृ
नानांचसमागमे यत्राश्रमेकथयतांकथांकल्मषनाशिनीं जपन्प्रेमेणतांस्तुत्वाकमलांपापहारिणीं व्रतंकृतंचतेनैःसार्द्धंस्थित्वाश्र
न्यालयेतदा निशीथेसमनुप्रासेकमलात्रसमागता वरंददामिभोविप्रकमलायाःप्रभावतः विप्रउवा० कात्वंकस्यासिरंभो
रुप्रसन्नाचकथंमम ऐंद्रीत्वमिंद्रदेवस्यभवानीशंकरस्यच वधूर्वाचंद्रसूर्यस्यगंधर्वीकिन्नरीतथा त्वत्सदृशीनदृष्टाचनश्रु-
ताचशुभानने लक्ष्मीरुवाच प्रसन्नासांप्रतंजाता वैकुंठादहमागता प्रेरिताहरिदेवेनएकादश्याःप्रभावतः पुरुषोत्तम
मासस्यकृष्णापक्षेतुयाभवेत् कमलानामसाप्रोक्ताकमलादातुमागता पुरुषोत्तममासस्ययापक्षेप्रथमाभवेत् तस्याव्रतेत्व
याचीर्णंप्रयागेमुनिसन्निधौ व्रतस्यास्यप्रभावेनवशागाहंनसंशयः तववशेभविष्यंतिमानवाद्विजसत्तम लभंतेमत्प्रसादंतु
सत्यंतेव्याहृतंमया विप्रउवाच प्रसन्नायदिमेपद्मेव्रतंविस्तरतोवद यत्कथासुप्रवर्ततेराजानोयेजगद्धिताः लक्ष्मीरुवा०
श्रोतृणांपरमंश्राव्यंपवित्राणामनुत्तमं दुःस्वप्ननाशनंपुण्यंश्रोतव्यंयत्नतस्ततः उत्तमश्रद्धयायुक्तःश्लोकंश्लोकार्द्धमेवच
पठित्वामुच्यतेसद्योमहापातककोटिभिः मासानांपरमोमासःपक्षिणांगरुडोयथा नदीनांचयथागंगातिथीनांद्वादशीति-
थिः तमर्चयंतिविबुधानारायणमनामयं येयजंतिसदाभक्त्यानारायणमनामयं तानर्चयंतिसततंब्रह्माद्यादेवतागणाः नाराय
णपरायेचहरिकीर्तनतत्पराः हरिभक्तानरायेचकृतार्थास्तेकलौयुगे शुक्लेवायदिवाकृष्णेभवेदेकादशीद्वय गृहस्थानांचपूर्वा
तुयतीनामुत्तरास्मृता एकादशीद्वादशीचरात्रिशेषेत्रयोदशी व्रतेकृतुशतंपुण्यंत्रयोदश्यांतुपारणे एकादश्यांनिराहारः
स्थित्वाहमपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत अमुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः भक्तिभावेनतुष्टात्मा
चोपवासंसमर्पयेत् देवदेवस्यपुरतोजागरंनियतोव्रती गीतैर्वाद्यैश्चनृत्यैश्चपुराणपठनादिभिः ततःप्रातःसमुत्थायद्वा
दशीदिवसेव्रती स्नात्वाविष्णुंसमभ्यर्च्यविधिवत्प्रयतेंद्रियः पंचामृतेनसंस्नाप्यएकादश्यांजनार्दनं द्वादश्यांचपयःस्ना

नहरेः सारूप्यमश्नुते अज्ञानतिमिरान्धस्य व्रतेनानेन केशव प्रसीद सुमुखो नाथ ज्ञानदृष्टिप्रदो भव एवं विज्ञाप्य द[illegible]
च चक्रिणं ब्राह्मणान् भोजयेत् पश्चात्तेभ्यो दद्याच्च दक्षिणां ततः सबंधुभिः सार्धं नारायणपरायणः कृत्वा पञ्चमहायज्ञान् स्व
यं भुंजीत वाग्यतः एवं यः प्रयतः कुर्यात्पुण्यमेकादशीव्रतं स याति विष्णुभवनं पुनरावृत्तिदुर्लभम् इत्युक्त्वा कमला तस्मै प्रस
न्नाऽस्य वंशजान् सोऽपि विप्रो धनी भूत्वा पितुर्गेहं समाविशत् एवं यः कुरुते राजन् कमलाव्रतमुत्तमं शृणुयाद्वासरे विष्णोः सर्वपापैः प्र
मुच्यते इति श्रीब्रह्मांडपु० पुरुषोत्तममासे कमलानामैकाद० माहात्म्यं सं० अथ कार्तिकशुक्लैकादश्यां प्रबोधविधिः हेमा
द्रौ ब्राह्मे एकादश्यां तु शुक्लायां कार्तिके मासि केशवं प्रसुप्तं बोधयेद्रात्रौ श्रद्धाभक्तिसमन्वितः नृत्यैर्गीतैस्तथा वेदैर्ऋग्यजुः
साममंगलैः वीणापणवशब्दैश्च पुराणश्रवणेन च वासुदेवकथाभिश्च स्तोत्रैरन्यैश्च वैष्णवैः सुभाषितैरिंद्रजालैर्भूरिशोभाभि
रेव च पुष्पैर्धूपैश्च नैवेद्यैर्दीपमालासुशोभनैः होमैर्भक्ष्यैश्च पूपैश्च फलैः शर्करपायसैः इक्षुविकारैर्मधुरैर्द्राक्षाद्यैः सहदाडिमैः कु
ठेरकस्य मंजर्या मालत्या कमलेन च कुठेरकः पर्णशारः कृष्णतुलसीनि किंचित् द्वताभ्यां श्वेतरक्ताभ्यां चंदनाभ्यां च सर्वदा कुंकुमार-
क्तकाभ्यां च रक्तसूत्रैः सकंकणैः तथा नानाविधैः पुष्पैर्द्रव्यैर्वीर क्रियात्ततः क्रयमाणः क्रयो वीर कृपं विहितं मूल्यं दत्वा तस्यां रा
त्र्यां व्यतीतायां द्वादश्यामरुणोदये आदौ घृतेनेक्षुरसेन मधुना स्नापयेत्ततः दध्ना क्षीरेण च तथा पंचगव्येन पूजयेत् उद्वर्तयेन्मासचू
र्णशर्करामलकैस्तथा सर्षपांश्च प्रियंगूंश्च मातुलिंगरसैस्तथा सर्वौषधीः सर्वगंधान् सर्वबीजानि कांचन मंगलानि यथाकामं रत्नानि च
कुशोदकं एवं संशोध्य देवेशं दद्याद्गोरोचनं शुभं ततस्तु कलशान् स्थाप्य यथायामांस्त्वलंकृतान् जातीपल्लवसंयुक्तान् सफला
न् सकांचनान् पुण्याहवेदशब्देन वीणावेणुरवेण च एवं संस्नाप्य गोविंदं स्त्वनुलिप्तं स्वलंकृतं सुवाससं तु संपूज्य सुमनो-
भिः सकुंकुमैः धूपैर्दीपैर्मनोज्ञैश्च पायसेन च भूरिणा हविष्यैश्चान्नदानैश्च होमैः पुष्पैः सदक्षिणैः वासोभिर्भूषणैरन्यैर्गो
भिरश्वैर्मनोजवैः ब्राह्मणाः पूजनीयाश्च विष्णोरीश्वराश्च मूर्तयः यत्तु शिष्टामृतं पश्चाद्भोक्तव्यं ब्राह्मणैः सह इति उद्यापनउत्स-

वविधिः अथकार्तिकशुक्लैकादश्यांभीष्मपंचकव्रतं हेमाद्रौनारदीये नारदउवा॰ यदेतदचलंपुण्यंव्रतानामुत्तमंव्रतं कर्तव्यंकार्तिकेमासि प्रयत्नाद्भीष्मपंचकं विज्ञानंतस्यविस्पष्टंफलंचापितनोवद कथयस्वप्रसादेनमुनीनांहितकाम्यया ब्रह्मोवा॰ प्रवक्ष्यामिमहापुण्यंव्रतंकलिविदांवर भीष्मेणोक्त्वसंप्राप्तंव्रतंपंचदिनात्मकं सकाशाद्वासुदेवस्यतेनेनोक्तंभीष्मपंचकं व्रतस्यास्यगुणान्वक्तुंकःशक्तःकेशवादृते व्रतंचैतन्महापुण्यंमहापातकनाशनं अतोवरंप्रयत्नेनकर्तव्यंभीष्मपंचकं वालखिल्याऊचुः कार्तिकस्यासितेपक्षेस्नात्वासम्यग्यतव्रतः एकादश्यांतुगृह्णीयाद्व्रतंपंचदिनात्मकं शरपंजरसुप्तेनभीष्मेणतुमहात्मना राजधर्मादानधर्मामोक्षधर्मास्ततःपरं कथिताःपांडुदायादैःकृष्णेनापि श्रुतास्तदा ततःप्रीतेनमनसावासुदेवेनभाषितं धन्यधन्योसिभीष्मत्वंधर्माःसंश्राविताःस्त्वया एकादश्यांकार्तिकस्ययाचितंचजलंत्वया अर्जुनेनसमानीतंगांगंबाणस्यवेगतः तुष्टानितवगात्राणितस्माद्यदिनावधि पूर्णांतंसर्वलोकास्त्वांतर्पयंत्वर्घ्यदानतः तस्मात्सर्वप्रयत्नेनममसंतुष्टिकारकं एतद्व्रतंप्रकुर्वंतुभीष्मपंचकसंज्ञितं कार्तिकस्यव्रतंकृत्वानकुर्याद्भीष्मपंचकं समग्रंकार्तिकव्रतंवृथातस्यभविष्यति अशक्तश्चेन्नरोभूयादसमर्थश्चकार्तिके भीष्मस्यपंचकंकृत्वाकार्तिकस्यफलंलभेत् सत्यव्रतायशुचयेगांगेयायमहात्मने भीष्मायैतद्दाम्यर्घ्यमाजन्मब्रह्मचारिणे सव्येनानेनमंत्रेणतर्पणंसार्ववर्णिकं व्रतांगत्वात्पूर्णिमायांप्रदेयःपापपूरुषः अपुत्रेणप्रकर्तव्यंसर्वथाभीष्मपंचकं यःपुत्रार्थंव्रतंकुर्यात्सस्त्रीकोपिभीष्मपंचकं प्रदत्वापापपुरुषंवर्षमध्येसुतंलभेत् अवश्यमेवकर्तव्यंतस्माद्भीष्मस्यपंचकं विष्णुप्रीतिकरंप्रोक्तंमयाभीष्मस्यपंचकं अत्रैवह्निप्रकर्तव्यःप्रबोधस्तुहरेःस्वग हतःशंखासुरोदैत्योनभसःशुक्लपक्षके एकादश्यांततोविष्णुःस्वप्तुर्मास्यंप्रसुप्तवान् क्षीरोदधौजाग्रतोसावेकादश्यांतुकार्तिके अतःप्रबोधनंकार्यमेकादश्यांतुवैष्णवैः उत्तिष्ठोत्तिष्ठगोविंद उत्तिष्ठगरुडध्वज उत्तिष्ठकमलाकांत त्रैलोक्येमंगलंकुरु उत्तिष्ठमुनिनोधारत्रैलोक्येमंगलंकुरु उत्तिष्ठधरणीधारवराहादिकधारक कूर्मरूपधरोत्तिष्ठत्रैलोक्येमंगलंकुरु उत्तिष्ठोत्तिष्ठवाराहदंष्ट्रोद्धृतवसुंधर हिरण्याक्षप्राणघातिन्त्रैलोक्येमंगलंकुरु हिरण्यकशिपुघ्नत्वंप्रह्लादानंददायक लक्ष्मीपतेसमुत्तिष्ठत्रैलोक्ये॰ उत्तिष्ठबलिदर्पघ्नदेवेंद्रपददायक उत्तिष्ठादितिपुत्रत्वंत्रै॰ उत्तिष्ठहेहयाधीशसमस्तकुलनाशन रेणुकात्मजसमुत्तिष्ठत्रै॰ उत्तिष्ठरक्षोदलन अ-

योध्यास्वर्गदायक समुद्रसेतुकर्तस्त्वंत्रै॰ उत्तिष्ठकंसहरणमदघूर्णितलोचन उत्तिष्ठहलपाणेस्त्वंत्रै॰ उत्तिष्ठत्वंगयावासिं
स्त्यक्तलौकिकदृत्तक उत्तिष्ठपद्मासनगेत्रै॰ उत्तिष्ठम्लेच्छनिवहखड्गसंहारकारक अश्ववाहयुगांतेत्वंत्रै॰ उत्तिष्ठोत्तिष्ठ
गोविंदउत्तिष्ठगरुडध्वज उत्तिष्ठकमलाकांतत्रैलोक्यमंगलंकुरु इत्युक्त्वाशंखभेर्यादिमातःकालेतुवादयेत् वीणा
वेणुमृदंगादिगीतनृत्यादिकारयेत् उत्थापयित्वादेवेशंपूजानस्याविधायच सायंकालेप्रकर्तव्यस्तुलस्युद्वाहजोविधिः अ
वश्यमेवकर्तव्यःप्रतिवर्षंतुवैष्णवैः विधिंतस्यप्रवक्ष्यामियथासांगाक्रियाभवेत् विष्णोस्तुप्रतिमांकुर्यात्पलस्यस्वर्णजांशु
भां तदर्धार्धंतदर्धार्धंयथाशक्त्याप्रकल्पयेत् प्राणप्रतिष्ठांकृत्वाचतुलसीविष्णुरूपयोः ततउत्थापयेद्देवंपूर्वोक्तैश्वस्तवादि-
भिः उपचारैःषोडशभिःपुरुषसूक्तेनपूजयेत् देशकालौततःस्मृत्वागणेशंतत्रपूजयेत् पुण्याहंवाचयित्वाथनांदीश्रा
द्धंसमाचरेत् वेदवाद्यादिनिर्घोषैर्विष्णुमूर्तिंसमानयेत् तुलस्यानिकटेसांतुस्थाप्याचांतरितांपटैः आगच्छभगवन्देव
अर्चयिष्यामिकेशव तुभ्यंददामितुलसींसर्वकामप्रदोभव दद्यात्त्रिवारमर्घ्यंचपाद्यंविष्टरमेवच ततश्चाचमनीयंचत्रिरु
क्त्वाचप्रदापयेत् ततोदधिघृतंक्षौद्रंकांस्यपात्रपुटीकृतं मधुपर्कंगृहाणत्वंवासुदेवनमोस्तुते ततोयेस्वकुलाचाराःकर्तव्या
विष्णुतुष्टये हरिद्रालेपनाभ्यंगःकार्यःसर्वंविधायच गोधूलिसमयेपूज्यौतुलसीकेशवौपुनः पृथक्पृथक्ततःकार्यःस्व
सुरवंमंगलंपठेत् ईषदृष्टेभास्करेतुसंकल्पंतुसमर्पयेत् स्वगोत्रप्रवरानुक्त्वानथात्रिपुरुषादिकं अनादिमध्यनिधनत्रैलो
क्यप्रतिपालक इमांगृहाणतुलसींविवाहविधिनेश्वर पार्वतीबीजसंभूतांवृंदाभस्मनिसंस्थितां अनादिमध्यनिधनांवल्ल
भांचददाम्यहं पयोघटैश्चसेवाभिःकन्यावद्वर्धितामया त्वत्प्रियांतुलसींतुभ्यंदास्यामित्वंगृहाणभोः एवंदत्वातुतुलसीं
पश्चात्तौपूजयेत्ततः रात्रौजागरणंकुर्याद्विवाहोत्सवपूर्वकं प्रतिवर्षमिदंकुर्यात्कार्तिकव्रतसिद्धये इतिसनत्कुमार-
संहितायांकार्तिकशुक्लैकादश्यांद्वाद॰वातुल॰विवा॰विधिः वालखिल्याऊचुः ततःप्रभातसमयेतुलसींविष्णुमर्चयेत्

वन्हिसंस्थापनंकृत्वाद्वादशाक्षरविद्यया पायसाज्यक्षौद्रतिलैर्हुनेदष्टोत्तरंशतं ततःस्विष्टकृतंहुत्वादद्यात्पूर्णाहुतिंततः आ
चार्यंचसमभ्यर्च्यहोमशेषंसमापयेत् चतुरोवार्षिकान्मासान्नियमंयस्ययत्कृतं कथयित्वाद्विजेभ्यस्तत्तथान्यत्परिपूज
येत् इदंव्रतंमयादेवकृतंप्रीत्यैतवप्रभो न्यूनंसंपूर्णतांयातुत्वत्प्रसादाज्जनार्दन रेवतीतुर्यचरणेद्वादशीसंयुतेनरः नकुर्या
त्पारणंकुर्वन्व्रतंनिष्फलतांव्रजेत् ततोयेषांपदार्थानांवर्जनंतुकृतंभवेत् चातुर्मास्येथवाचोर्जेब्राह्मणेभ्यःसमर्पयेत् ततःस
र्वंसमश्नीयात्यद्यद्युक्तंव्रतेस्थितः दंपतीभ्यांसहैवात्रभोक्तव्यंवाद्विजैःसह ततोभुक्त्वोत्तरंयानिगलितानिदलानिच तुलस्या
स्तानिभुक्त्वातुसर्वपापैःप्रमुच्यते भोजनानंतरंविष्णोरर्पितंतुलसीदलं भक्षणात्पापनिर्मुक्तिश्चांद्रायणशताधिका इ
क्षुखंडंतथाधात्रीफलंपूगीफलंतथा भुक्त्वातुभोजनस्यांतेतत्त्वोच्छिष्टंविनश्यति एषुत्रिषुनभुक्तंचेदेकैकमर्पयेत्ततु ज्ञेय
उच्छिष्टआवर्षंनरोसौनात्रसंशयः ततःसायंपुनःपूज्योइक्षुवंशैश्चमंडितो तुलसीवासुदेवौचकृतकृत्योभवेन्नरः ततोविस
र्जनंकुर्याद्दत्वादेयादिकंहरेः वैकुंठंगच्छभगवन्तुलस्यासहितःप्रभो मत्कृतंपूजनंगृह्यसंतुष्टोभवसर्वदा गच्छगच्छसु
रश्रेष्ठस्वस्थानंपरमेश्वर यत्रब्रह्मादयोदेवास्तत्रगच्छजनार्दन एवंविसर्ज्यदेवेशमाचार्यायप्रदापयेत् मूर्त्यादिकंसर्वमेवकृत
कृत्योभवेन्नरः प्रतिवर्षंकरोत्येवंतुलस्युद्वहनंशुभं इहलोकेपरत्रापिविपुलंसद्यशोलभेत् प्रतिवर्षंतुयःकुर्यात्तुलसीक
रपीडनं भक्तिमान्धनधान्यैश्चयुक्तोभवतिनिश्चितं इतिश्रीसन०संहितायांकार्तिकशुक्लैकादशीव्रतसं० अथमा
र्गशीर्षकृष्णैकादशी अर्जुनउवाच ॐनमोनारायणायाव्यक्तायात्मस्वरूपिणे सृष्टिस्थित्यंतकर्त्रेचकेशवायन
मोस्तुते त्वमेवजगतांनाथअंतर्यामीत्वमेवच शास्त्राणांचकवीशश्चवक्तात्वंचजगत्पते एकादशीकथंस्वामिन्नुत्पन्नाइति
गीयते एतंहिसंशयंमेद्यच्छेत्तुमर्हसित्वंप्रभो ब्रूहिस्निग्धस्यशिष्यस्यगुरवोगुह्यमप्युत मयोपरिकृपांकृत्वाइदानींवक्तु
मर्हसि मार्गशीर्षेकृष्णपक्षेकिंनामैकादशीभवेत् किन्नामकोविधिस्तस्याःकोदेवस्तत्रपूज्यते कृताकेनपुरादेवएतद्विस्तर

तोवद श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिकथांपातकनाशिनीं एकादशीतयाराजन्लोकानांहितकाम्यया मार्गशी
र्षेकृष्णपक्षेचोत्पत्तिर्नामनामतः तस्यामुपोषणेनैवधार्मिकोजायतेनरः धर्माद्भवतिसत्यंचैवलक्ष्मीःसत्यानुसारिणी पुरावैमुर
नाशायउत्पन्नाममवल्लभा येकुर्वंतिनराराजन्तेषांसौख्यंभवेद्ध्रुवं तथापापानिनश्यंतिनोहयांतियमालयं अर्जुनउवाच
उत्पन्नासाकथंदेवकथंपुण्याधिकाशुभा कथंदेवपवित्रावैकथंचदेवताप्रिया श्रीकृष्णउवाच पुराकृतयुगेपार्थमुरुनाम
तिदानवः अत्यद्भुतोमहारौद्रःसर्वलोकभयंकरः इंद्रउच्छेदितस्तेनह्याद्योदेवःपुरंदरः आदित्याश्चाश्विनोब्रह्मावासुराश्चस्तथै
वच नवप्रतिष्ठितंतेनएवमादिधनंजय देवतानिर्जितास्तेनअत्युग्रेणतुपांडव स्वर्गान्निराकृतादेवाविचरंतिमहीतले सा
शंकाभयभीतास्तेगताःसर्वेमहेश्वरं इंद्रेणकथितंसर्वमीश्वरस्यापिचायतः स्वर्गलोकंपरित्यज्यविचरंतिमहीतले मर्त्येषु-
संस्थितादेवानशोभंतेमहेश्वर उपायंब्रूहिमेदेवअमराणांतुकागतिः शिवउवाच गच्छगच्छसुरश्रेष्ठयत्रास्तिगरुडध्वजः
शरणागतदीनार्तपरित्राणपरायणः ईश्वरस्यवचःश्रुत्वादेवराजोमहामतिः त्रिदशैःसहितःसर्वैर्गतस्तत्रधनंजय अप्सरो
गणगंधर्वैःसिद्धविद्याधरोरगैः यत्रैवसजगन्नाथःसुप्तोस्तिचजनार्दनः कृतांजलिपुटोभूत्वाइंद्रस्तोत्रमुदीरयत् ॐनमो
देवदेवेशदेवानामपिवंदित दैत्यारिपुंडरीकाक्षत्राहिमांमधुसूदन नमस्तेस्थितनाशायनमस्तेस्तुजगत्पते नमोदैत्यविनाशा
यत्राहिमांमधुसूदन सुराःसर्वेसमायुक्ताभयभीताःसमागताः शरणंत्वांजगन्नाथपाहिमांभयविह्वलं त्राहिमांदेवदे
वेशत्राहिमांत्वंजनार्दन त्राहिमांत्वंसुरानंददानवानांविनाशक त्वंगतिस्त्वंमतिर्देवत्वंकर्तात्वंपरायणः त्वंमातासर्वगोसि-
त्वंत्वमेवहिजगत्पिता अत्युग्रेणतुदैत्येननिर्जितास्त्रिदशाःप्रभो स्वर्गंत्यक्त्वाजगन्नाथविचरंतिमहीतले इंद्रस्यवचनंश्रु
त्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच कीदृशोवाभवद्दैत्यःकिन्नामाकीदृशंबलं किंस्थानंतस्यदुष्टस्यकिंवीर्यंकःपरा
क्रमः इंद्रउवाच बभूवपूर्वंदेवेशासुरोब्रह्मसमुद्भवः तालजंघेतिनाम्नाचअत्युग्रोतिमहाबलः तस्यपुत्रोतिविख्या

तोसुरनामेतिदानवः उल्कटश्चमहावीर्योब्रह्मलब्धवरोमहान् पुरींचंद्रवतींनामतत्रस्थानेवसत्यसौ निर्जितादेवताःसर्वाःस्वर्गो
च्चैवनिराकृताः इंद्रोन्यश्चकृतस्तेन अन्योदेवोहुताशनः चंद्रसूर्यौकृतौचान्यौयमोवरुणएवच सर्वमात्मीकृतंतेनसत्यंसत्यं
जनार्दन तस्यतद्वचनंश्रुत्वाकोपाविष्टोजगत्पतिः हनिष्येदानवंदुष्टमित्याहभगवान्हरिः त्रिदशैःसहितस्तत्रगतश्चंद्रवतीं
पुरीं दृष्ट्वादेवान्संयुयुधेदानवोबलदर्पहा असंख्यातैश्चशस्त्रास्त्रैर्दिव्यप्रहरणायुधः हन्यमानास्तुतेदेवा असुरैश्चपुनःपु
नः त्रस्तादेवास्ततःसर्वेगताःसर्वेदिशोदश हरिर्निराश्रयतत्रस्थितस्तिष्ठतिष्ठाब्रवीद्वचः सर्वेनिराश्रयभावाच्च असुरंमधुसूद
नः रेदानवदुराचारममबाहुंनिराश्रयच चक्रेणैवसमायातंसक्रोधोरुकंपेनचः ततस्तेसंमुखाःसर्वेविष्णुनादानवाहताः
हतोबाणैःपुनर्दिव्यैर्बभूवासौनिर्विह्वलः चक्रमुक्तंतुकृष्णेनदैत्यसैन्येचपांडव तेनैवछिन्नशिरसोबहवोनिधनंगताः ए
कोगोदानवस्तत्रयुध्यमानोमुहुर्मुहुः नष्टाःसर्वेसुरास्तेननिर्जितोमधुसूदनः निर्जितेनचदैत्येनबाहुयुद्धंचयाचितम् बाहु
युद्धंकृतंतेनदिव्यंवर्षसहस्रकं विष्णुश्चिंतांप्रपन्नश्चनष्टाःसर्वेदिवौकसः विष्णुःपराजितस्तेनगतोबदरिकाश्रमं गुहांसिंह
वतींनामतत्रसुप्तोजनार्दनः दानवःपृष्ठतोलग्नःप्रविष्टस्तांगुहोत्तमां सुप्तंतत्रमांदृष्ट्वादानवेनसमाधिनं हनिष्यामिनसंदेहो
असुराणांभयंकरः इत्येवमुक्तेवचनेदैत्येनामित्रकर्षिणा निर्गताकन्यकाचैकाजनार्दनशरीरतः रूपेणातिस्वरूपाढ्यादिव्य
प्रहरणायुधा विष्णुतेजःसमुद्भूतामहाबलपराक्रमा मोहितोदानवस्तत्रमुरनामेतिपांडव साकन्यायुयुधेतेनसर्वयुद्धवि-
शारदा निहतोदानवस्तत्रतयादेवःप्रबुद्धवान् पतितंदानवंदृष्ट्वाततोविस्मयमागतः केनेत्थंनिहतोरौद्रोममशत्रुर्भयंकरः
नंदेवोनचगंधर्वोनसमोस्यास्तिभूतले एवंपार्थनदाजानोविस्मितोमधुसूदनः अकस्मादेवसोवाचवाचादिव्याशरीरिणी
एकादश्युवाच मयाचनिहतोदुष्टोदेवासुरभयंकरः जितायेनसुराःसर्वेस्वर्गाच्चैवनिराकृताः तस्यास्तद्वचनंश्रु- १२
त्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच उपकारस्त्वयाभद्रेममकारुण्यभावतः दानवोनिहतोदुष्टःसुराणांचभयंकरः

सोहंविनिर्जितोयेनकंसोयेननिपातितः विष्णोस्तद्वचनंश्रुत्वादेवीवचनमब्रवीत् एकादश्युवाच्यहंविष्णोसर्वशत्रुविनाशिनी म
याचनिहतोदैत्यःसुराणांत्रासकारकः इत्येतद्वचनंश्रुत्वादेवदेवोजनार्दनः प्राहतुष्टोस्मिभद्रंतेवरंवरयवांछितं निहतेदा
नवेंद्रेचसंतुष्टास्तत्रदेवताः हृष्टपुष्टास्ततोगत्वाआनंदंचसमागताः आनंदस्त्रिषुलोकेषुमुनयोमुदमागताः ब्रूहित्वंवच
नंभद्रेयत्तेमनसिवर्तते ददामिवचनसंदेहःसुराणामपिदुर्लभं एकादश्युवाच यदितुष्टोसिमेदेवसत्यमुक्तंजनार्दन य
दिसत्यंजगन्नाथस्तिस्रोवाचोददस्वमे श्रीभगवानु० सत्यमेतन्मयाप्रोक्तमवश्यंनवसंशयः तिस्रोवाचोमयादत्तास्त
ववाक्यंभवेदिति एकादश्युवा० त्रैलोक्येषुचदेवेशमन्वंतरयुगेष्वपि अहंचत्वत्प्रियानित्यंयथास्यांतत्कुरुमेवरं सर्वतिथि
प्रधानाचसर्वविघ्नविनाशिनी सर्वपापापहंत्रीचआयुर्बलविवर्धिनी येउपोष्यंतिमांमर्त्यामहाभक्त्याजनार्दनं सर्वसिद्धिर्भ
वेत्तेषांयदितुष्टोसिमाधव श्रीकृष्णउ० यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति धर्मार्थकाममोक्षंचयस्त्वामेवंकरिष्यति
ममभक्ताश्चयेलोकायेचभक्तास्तवापिच चतुर्युगेषुविख्यातास्त्रिषुलोकेषुवैपरं त्वांचभक्त्यामहंमन्येएकादशिव्रतेस्थिताः
ममपूजांकरिष्यंतिएकादश्यांनसंशयः सर्वंनिश्चितमात्मचमत्प्रसादाद्भविष्यसि एवमुक्त्वाततःसातुतत्रैवांतरधीयत सु
राकेकटकेदेशेकर्णाकनगरेषुच कर्णसेनेतिराजर्षिर्न्यवसद्भुविमनुप्रजः ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैश्चैवानुमोदितः
नदुर्भिक्षंनदारिद्र्यंतस्मिन्राज्ञिस्थितेप्रभो अकालवृष्टिर्नोव्याधिर्नैवनस्करतापिच संपत्संततिहीनश्चकोपितत्रनविद्य
ते पुत्रदुःखंपिताक्वापिनपश्यतिचकुत्रचित् एतादृशेमहाराजेप्रशासतिप्रजाःप्रभो धनहीनोद्विजःकोपिस्कन्दुकाख्योविप
द्गतः कुटुंबभरणासक्तःकृच्छ्रात्तमनुवर्तते भर्तुःशुश्रूषणेसक्तासदाचारगृहेस्थिता सुदामानामविप्रर्षेर्भार्यासाध्वीच
सत्तमा रहःपृच्छतिभर्तारंम्लाननावदनेनका स्वामिन्पापकृतेपूर्वंधर्महीनस्तुजायते धर्महीनेधनंनास्तिधर्महीनेक्रिया
नहि तस्मात्केनाप्युपायेनधर्मस्यजननंकुरु एतस्मिन्नंतरेराजन्देवर्षिःसमुपागतः दंपतीचोत्थितौतत्रमधुपर्कंगृहाण

मो आसनेनतिष्ठभोस्वामिन् अर्घ्यंगृण्हनमोस्तुते अद्यमेसफलंजन्मअद्यमेसफलाःक्रियाः अद्यमेसफलंसर्वंभवतोदर्शनेनच अस्मिन्पुरेतुयेस्वामिन्सर्वेतेस्फारिवनोजनाः अहंतुधनहीनत्वान्महादुःखेनपीडितः कथयस्वप्रसादेनधनाढ्यःस्यामहंकथं धनहीनस्यलोकेस्मिन्वृथाजन्ममनोरथाः एवंश्रुत्वातुराजेंद्रवचनंनारदोब्रवीत् नारदउवा॰ मार्गशीर्षसितेपक्षेउत्पन्निर्नामनामतः तस्यास्तुपोषणेनैवधनाढ्योजायतेध्रुवं तथापापानिनश्यंतिएतत्सत्यंवदामिते सर्वसौख्यकरंनृणांहरिवासरमुत्तमं गतेतुनारदेपश्चाद्व्रतंकृत्वाप्रयत्नतः तस्याव्रतप्रभावेनसुप्रसन्नोजनार्दनः स्वयमेवाश्रितालक्ष्मीर्यत्रासीद्द्विजमंदिरं भोगान्सर्वविपुलान्भुक्त्वागतोवैकुंठसन्निधौ एतस्मात्कारणाद्राजन्कर्तव्यंहरिवासरं अंतरेनैवकर्तव्यंप्रशस्तव्रतकारिभिः तिथिरेकाभवेत्सर्वापक्षयोरुभयोरपि उदयेकादशीस्वल्पाअंतरेचत्रयोदशी मध्येचद्वादशीपूर्णाधिस्पृष्टासाहरिप्रिया एकाउपोषितावैवसहस्रैकादशीफलं सहस्रगुणितंदानमेकादश्यांतुपारणे अष्टम्येकादशीषष्ठीतृतीयाचचतुर्दशी पूर्वविद्धानकर्तव्याकर्तव्यापरसंयुता एकामुपोषयेत्तांतुद्वादशींविष्णुवल्लभां दशमीवेधसंयुक्ताहंतिपुण्यंपुराकृतं एकादशीअहोरात्रंप्रभातेघटिकाभवेत् सातिथिःपरिहर्तव्याउपोष्याद्वादशीयुता एवंविधामयाप्रोक्तापक्षयोरुभयोरपि एकादश्यामकुर्वीतउपवासंनसंशयः सयातिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालोकेविष्णुभक्तिपरायणाः एकादश्याश्चमाहात्म्यंपर्वकालेतुयःपठेत् गोसहस्रफलंतस्यपुण्यंभवतिभारत दिवावायदिवारात्रौयःशृणोतीहभक्तितः कुलकोटिसमायुक्तोविष्णुलोकेवसेद्ध्रुवं एकादश्याश्चमाहात्म्यंपठ्यमानंशृणोतियः ब्रह्महत्यादिपापानि-नश्यंतेनात्रसंशयः एकादशीसमानास्तिसर्वपातकनाशिनी इतिश्रीभ॰मार्गशी॰कृ॰उत्पन्निर्नामैका॰संपूर्णं अथमार्ग॰शु॰एकै॰ वैतरणीव्रतंहेमाद्रौभविष्ये कृष्णाउ॰ शरतल्पगतंभीष्मंपर्यपृच्छद्युधिष्ठिरः व्रतेनयेनपुण्येनयमलोकोनदृश्यते नारीवापुरुषोवापियमलोकंनपश्यति तत्समाचक्ष्वधर्मज्ञपितामहकृपांकुरु भीष्मउवाच एकादशींवैतरणींनाम्नकृत्वा-

चविमुच्यते यमलोकंनपश्येच्चशोकंचैवनविंदति युधिष्ठिरउवाच केनस्नानविधानेनकर्तव्यासामहाफला पितामहसमाख्या-

हितद्विधानंममप्रभो भीष्मउवाच एकादशींतिथिंकृत्वामार्गशीर्षगतांशुभां नामासाद्यनरःसम्यक्गृण्हीयान्नियमंशुचिः

एकादशीतिथिःकृष्णानाम्नावैतरणीशुभा साव्रतेनत्वयाकार्यावर्षंनक्तोपवासिना मध्यान्हेतुनरःस्नात्वानित्यानिर्वर्त्यसत्क्रियाः

रात्रौसुरभिमानीयकृष्णामर्चेद्यथाविधि साप्यूर्ध्वाभिमुखीकार्याकृष्णागौःकिलभूतले अग्रपादात्समारभ्यपश्चात्पादद्वयावधि

गोपुच्छंतुसमासाद्यकुर्याद्व्यापनृतर्पणं ततःपूजाप्रकर्तव्याशास्त्रदृष्टविधानतः गांचैवंश्रद्धयायुक्तश्चंदनेनानुलेपितां — —

गंधतोयेनचरणौशृंगेप्रक्षाल्यशक्तितः ततोनुपूजयेद्भक्त्यापुष्पैर्गंधादिवासितैः मंत्रैःपुराणसंप्रोक्तैर्यथास्थानंयथाविधि

ततोगोरग्रपादाभ्यांगौरास्यायनमोस्तुते गोश्रृंगाभ्यांनसंपूज्यगोस्कंधाभ्यांतथैवच गोःपुच्छायनमस्तेस्तुगोःपुच्छात्पादयो

स्तथा गोःसर्वांगेषुसंपूज्यस्थानेस्थानेषुदेवताः स्थानेष्वेतेषुगंधांश्चप्रक्षिपेच्छुद्धमानसः पश्चात्प्रदापयेद्रूपंगोर्दीपःप्रतिगृ-

ह्यतां असिपत्रादिकंघोरंनदींवैतरणींतथा प्रसादात्तेतरिष्यामिगोमातस्तेनमोनमः यज्ञसाधनभूतायाविश्वस्याघौघनाशि

नी विश्वरूपधरोदेवःप्रीयतामनयागवा सुरवेनतीर्यतेयस्मान्नदींवैतरणींध्रुवम् तस्मादेकादशींकृत्वानाम्नावैतरणींनरः

हेमश्रृंगींरौप्यखुरींसघंटाभरणांबरां ताम्रपृष्ठींकांस्यदोग्ध्रींसुवर्णांनरदक्षिणां सवत्सांद्विजमुख्यायपूजयित्वासमर्पयेत्

आनंदकृत्सर्वलोकेदेवानांचसदाप्रिया गौस्त्वंपाहिजगन्नाथदीपोयंप्रतिगृह्यतां आच्छादनंगवेदद्यात्सम्यक्शुद्धंसुनिर्म-

लं सुरभिर्वस्त्रदानेनप्रीयतांपरमेश्वरी मार्गशीर्षादिकेभक्त्यावर्षमेकंतुपूजयेत् मासिमासिप्रकुर्वीतमासद्वादशकव्रतं

उद्यापनंततःकुर्यात्पूर्णेसंवत्सरेतदा युधिष्ठिरउवाच मार्गशीर्षसितेपक्षेउद्यापनविधिंवद कृष्णउवाच यइच्छे

त्सफलंजन्मजीवितंचसुजीवितं विनाशंसर्वपापानांसकुर्याद्वादशीमिमां युधिष्ठिरकिमिष्टैर्नाशोष्टैरन्यैरनुष्ठितैः दुस्तरी

तरदुर्गाणितोषयस्वचकेशवं मार्गशीर्षेसितेपक्षेद्वादश्यांकारयेदिदं यदावाभक्तिरुत्पन्नादेवदेवजनार्दन एकादश्यां

निराहारोमासिमासम्यर्चयेद्धरिं द्वादश्यांद्वादशैतानिनामानिपरिकीर्तयेत् केशवंमार्गशीर्षेचपौषेनारायणंविदुः माधवं
माघमासेतुगोविंदमथफाल्गुने चैत्रेविष्णुंतथाविंद्याद्वैशाखेमधुसूदनं त्रिविक्रमंतथाज्येष्ठेआषाढेवामनंविदुः श्राव-
णेश्रीधरंविद्याद्धृषीकेशंतुभाद्रके आश्विनेपद्मनाभंचऊर्जेदामोदरंविदुः कृष्णोनंतोच्युतश्चक्रीवैकुंठोथजनार्दनः उपें
द्रोयज्ञपुरुषोवासुदेवस्तथाहरिः योगीशःपुंडरीकाक्षोमासनामान्यनुक्रमात् एतानिमासनामानियः पठेत्पुरुषःसदा अ
पिदुर्गतिकास्तस्यपितरःस्वर्गमाप्नुयुः तिलपात्रद्वादशकंयोदद्यात्प्रत्यहंद्विजे एवंद्वादशभिर्मासैर्व्रतंपारंगमिष्यति व्रतांते
ब्राह्मणान्शांतान्माससंख्यान्निमंत्रयेत् द्वादशाश्वत्थपत्रेषुस्थापयेच्छुक्लतंडुलैः ॐतस्मैनमआयातुइतिआवाहयेत्पृ
थक् संस्थाप्याग्निंततःप्राच्यांध्यायेद्वआत्मसंमुखान् आसनंपाद्यमर्घ्यंचगंधपुष्पादिनातथा धूपदीपांश्चवासांसिहोमशेषंस-
मापयेत् दत्वाचाचमनंपश्चाद्धोमशेषंनिवेदयेत् अष्टाष्टसमिधोहोमेहुत्वाष्टाष्टघृताहुतीः यवस्याहुतिमेकैकामष्टाष्टौच्चति-
लाहुतीः अग्निप्रतिष्ठितंहोमंदेवेभ्यश्चनिवेदयेत् पूर्णाहुतौभवेन्मंत्रस्तद्विष्णोःपरमंपदं एवंकृतेतुहोमांतेगाःकृष्णाद्वाद
शाष्टवा षट्चतस्रोपिवादद्यात्एकांवापिपयस्विनीं शय्यासतूलिकाकार्यादंपत्योःपरिधानकं सवत्साकृष्णवर्णातुधेनुर्दे
यापयस्विनी सौवर्णींस्करभिंकृत्वास्थापयेत्तूलिकोपरि सुरभिंपूजयेन्मंत्रैःपूर्वोक्तैर्भक्तिसंयुतः ततस्तुगुरवेदद्यात्सर्वंत-
त्क्षमापयेत् कृष्णभक्तायशांतायविधिज्ञायमहात्मने तेप्रीयतामितिप्रोक्तादेवाद्वादशमासिकान् मामेवसुद्धरस्वेतिगवांवा
च्यःपरिग्रहः मासिमासिभवेत्तेषुतिलपात्रेषुतैर्घटैः तस्मिन्कालेप्रदातव्याघटास्तेमासनामभिः समाप्यतुव्रतंपुण्यंतस्मा
दर्घ्यंप्रदापयेत् उद्धरेयत्पितृगणान्दशपूर्वान्दशापरान् आत्मानमेकविंशंच्चकृष्णैकादश्युपोषणात् भारोलोहस्यदा
तव्यःकार्पासोद्रोणसंयुतः वैतरण्यांसमाप्यर्थंब्राह्मणायकुटुंबिने नारीवापुरुषोवापिव्रतस्यास्यप्रभावतः राज्यंबहुदिनंभु
क्त्वास्वर्गलोकेमहीयते इतिश्रीभविष्योत्तरपुराणेमार्गशीर्षकृष्णैकादश्यांवैतरणीव्रतोद्यापनंसंपूर्णम् इतिए॰व्र॰समाप्तंनि

१३२

श्रीगणेशायनमः अथकथा सूतउवाच एवंप्रोत्यापुराविप्राः श्रीकृष्णनपरंव्रत कोथततनप्रयत्नेनयः कुर्याद्
विमानवः १ भुक्त्वाभोगाननेकांस्तुविष्णुलोकंप्रयातिसः पार्थउवाच उपवासस्यनक्तस्यतथैवायाचितस्यभो २ किं
पुण्यंकिंविधानंहिब्रूहिसर्वंजनार्दन श्रीकृष्णउवा० हेमंतेचैवसंप्राप्तेमासिमार्गशिरेशुभे शुक्लपक्षेतथापार्थएकाद-
श्यासुपोष्यच दशम्यांचैवयत्किंचिन्नकुर्यात्स्कंददंव्रतं ४ नक्तंचतद्दिनेकृत्वादशम्यांदंतधावनं दिवसस्याष्टमेभागेमंदीभूते-
दिवाकरे तन्नक्तंविजानीयान्ननक्तंनिशिभोजनं ५ ततः प्रभातसमयेसंकल्प्यनियमांश्चरेत् मध्यान्हेचतथापार्थशुचिःस्ना
नःसमाहितः ६ नद्यांतडागेवाप्यांवाकुर्यात्स्नानमध्यमंत्वधः क्रमाज्ज्ञेयंतथाकूपेतदभावेप्रशस्यते ७ अश्वक्रांतेरथक्रांतेविष्णु
क्रांतेवसुंधरे मृत्तिकेहरमेपापंयन्मयापूर्वसंचितं० त्वयाहतेनपापेनगच्छामिपरमांगतिं अनेनमृत्तिकास्नानंविदध्यात्तुव्रती
नरः ९ नालपेत्पतितैश्चौरैस्तथापारवंडिभिःसह मिथ्यापवादिनोदेववेदब्राह्मणनिंदकान् १० अन्यांश्चैवदुराचारानगम्यागा
मिनस्तथा परद्रव्यापहर्तॄंश्चदेवद्रव्यापहारिणः ११ नसंभाषेतदृष्ट्वापिभास्करंचावलोकयेत् ततोगोविंदमभ्यर्च्यनैवेद्यादिभि
रादरात् १२ दीपंदद्याद्गृहेचैवभक्तियुक्तेनचेतसा तद्दिनेवर्जयेत्पार्थनिंदांमैथुनमेवच १३ गीतशास्त्रविनोदेनदिवारात्रीनयेद्व्र
ती रात्रौजागरणंकृत्वाभक्तियुक्तेनचेतसा १४ विप्रेभ्योदक्षिणांदत्वाप्रणिपत्यक्षमापयेत् यथाशुक्लातथाकृष्णामान्याविधर्मतत्परैः
१५ एकादश्योर्द्वयोराजन्विभेदंनैवकारयेत् एवंहिकुरुतेयस्तुशृणुतस्यापियत्फलम् १६ शंखोद्धारेनरःस्नात्वादृष्ट्वादेवंगदाध
रम् एकादश्युपवासस्यकलांनार्हतिषोडशीं १७ व्यतीपातेचदानस्यलक्षमेकंफलंस्मृतम् संक्रांतिषुचतुर्लक्षंयोददातिधनंजय
१८ कुरुक्षेत्रेचयत्पुण्यंग्रहणेचंद्रसूर्ययोः तत्सर्वंलभतेयस्तुह्येकादश्यासुपोषितः १९ अश्वमेधस्ययज्ञस्यकरणाद्यत्फलंलभेत् ॥
ततः शतगुणंपुण्यमेकादश्युपवासतः २० तपस्विनोगृहेनित्यंलक्षंयस्यचभुंजते षष्टिवर्षसहस्राणितस्यपुण्यंचयद्भवेत् २१ ए
कादश्युपवासेनफलंप्राप्नोतिमानवः गोसहस्रेणचयत्पुण्यंदत्तेवेदांगपारगे २२ तस्मात्पुण्यंदशगुणमेकादश्युपवासिना नित्यं-

वभुंजेतयस्यदशस्यैवद्विजोत्तमाः २३ भवेत्तद्दशगुणंभोजनेब्रह्मचारिणः एतत्सहस्रंभूदानेकन्यादानेतुनंतस्मृतम् २४ तस्माद्दश
गुणंप्रोक्तंविद्यादानंतथैवच विद्याद्दशगुणंत्वान्नंयोददातिबुभुक्षिते २५ अन्नदानसमंदानंनभूतंनभविष्यति तृप्तिमायांतिकौंतेय-
स्वर्गस्थाःपितृदेवताः २६ एकादश्यावृतस्यापिपुण्यसंख्यानविद्यते एतत्पुण्यप्रभावंचयत्सुरैरपिदुर्लभम् २७ नक्तस्यार्द्धफलंत
स्यएकभक्तस्यसत्तम एकभक्तंचनक्तंचउपवासस्तथैवच २८ एतेष्वन्यतमंवापिव्रतंकुर्याद्धरेर्दिने तावद्गर्जंतितीर्थानिदानानिनि
यमायमाः २९ एकादशीनसंप्राप्तायावत्तावन्मखाअपि तस्मादेकादशीसर्वैरुपोष्याभवभीरुभिः ३० नत्रखेनपिबेत्तोयंनहन्या-
न्मत्स्यसूकरान् एकादश्यांनभुंजीतयन्मांत्वंपृच्छसेर्जुन ३१ एतत्तेकथितंसर्वंव्रतानामुत्तमंव्रतं एकादशीसमंनास्तिक्रतुंयज्ञस
हस्रकं ३२ अर्जुनउ० उक्तात्वयाकथंदेवपुण्येयंसर्वतस्तिथिः सर्वेभ्योपिपवित्रेयमुक्तात्वेकादशीतिथिः श्रीकृष्णउ०
पुराकृतयुगेपार्थमरुनाम्नाहिदानवः अत्यद्भुतोमहारौद्रःसर्वदेवभयंकरः ३४ इंद्रोविनिर्जितस्तेनअत्युग्रेणचपांडव इंद्रेणक-
थितःसर्ववृत्तांतःशंकरायवै ३५ सर्वलोकपरिभ्रष्टाविचरामोमहीतले उपायंब्रूहिमेदेवअमराणांतुकागतिः ३६ ईश्वरउ०
देवराजसुरश्रेष्ठयत्रास्तिगरुडध्वजः शरण्यश्चजगन्नाथःपरित्राणपरायणः ३७ तत्रगच्छामहेसर्वेसनःकार्यंविधास्यति ई
शस्यवचनंश्रुत्वादेवराजोमहामनाः ३८ पुरस्कृत्यमहादेवंसगणंसमरुद्गणं यत्रदेवोजगन्नाथःप्रसुप्तोहिजनार्दनः ३९ जल
मध्येप्रसुप्तंतुदृष्ट्वादेवंजगत्पतिं कृतांजलिपुटोभूत्वारुद्रःस्तोत्रमुदीरयत् ४० ॐ नमोदेवदेवायदेवदेवैःसुवंदित दैत्यारे
पुंडरीकाक्षत्राहिनोमधुसूदन ४१ दैत्यभीताइमेदेवामयासहसमागताः शरणंत्वांजगन्नाथत्वंकर्तात्वंचकारकः ४२ त्वं
मातासर्वलोकानांत्वमेवजगतःपिता त्वंस्थितिस्त्वंतथोत्पत्तिस्त्वंचसंहारकारकः ४३ सहायस्त्वंचदेवानांत्वंचशांतिकरःप्रभो
त्वंधरात्वमाकाशःसर्वविश्वोपकारकः ४४ भवस्त्वंचस्वयंब्रह्मात्रैलोक्यप्रतिपालकः त्वंरविस्त्वंशशांकश्चत्वंचदेवोहुता १३३
शनः हव्यंहोमोहुतस्त्वंचमंत्रतंत्रर्त्विजोजपः यजमानश्चयज्ञस्त्वंफलभोक्तात्वमीश्वरः ४६ नत्वयारहितंकिंचित्त्रैलोक्येसचरा

चेरे भगवन्देवदेवेशशरणागतवत्सल ४७ त्राहित्राहिमहायोगिन्भीतानांशरणंभव दानवैर्निर्जितादेवाः स्वर्गभ्रष्टाःकृताविभो ४८
स्थानभ्रष्टाजगन्नाथविचरंतिमहीतले रुद्रस्यवचनंश्रुत्वाविष्णुर्वचनमब्रवीत् ४९ श्रीभगवानुवा० कोसौदैत्योमहामायोदे
वायेनविनिर्जिताः किंस्थानंतस्यकिंनामकिंबलंकस्तदाश्रयः एतत्सर्वंसमाचक्ष्वमघवन्निर्भयोभव इंद्रउवाच भगवन्देव
देवेशाभक्तानुग्रहकारक ५१ दैत्यःपूर्वंमहानासीन्नाडीजंघइतिस्मृतः ब्रह्मवंशसमुद्भूतोमहोग्रःसुरसूदनः ५२ तस्यपुत्रोति
विख्यातोमरुनामामहासुरः तस्यचंद्रवतीनामनगरीत्वगरीयसी ५३ तस्यांवसन्सदुष्टात्माविश्वंनिर्जित्यवीर्यवान् सुरान्स्ववशमानि
न्येनिराकृत्यत्रिविष्टपात् ५४ इंद्राग्नियमवाय्वीशसोमनिर्ऋतिपाशिनां पदेषुस्वयमेवासीत्सूर्योभूत्वातपत्यपि ५५ पर्जन्यःस्वयमेवासी
द्देवसर्वाश्चदेवताः जहितंदानवंविष्णोसुराणांजयमावह ५६ तस्यतद्वचनंश्रुत्वाकोपाविष्टोजनार्दनः उवाचशत्रुंदेवेंद्र हनिष्यतंमहाब
लं ५७ मयानुसहिताःसर्वेचंद्रवत्यांमहाबलाः इत्युक्त्वाप्रययुःसर्वेपुरस्कृत्यहरिंसुराः ५८ दृष्ट्वादेवैस्तुदैत्येंद्रोगर्जमानस्तुदानवैः अ
संख्यातसहस्रैस्तुदिव्यप्रहरणायुधैः ५९ हन्यमानास्तदादेवाअसुरैर्बाहुशालिभिः संग्रामंतेसमुत्सृज्यपलायंतेदिशोदश ६० त
तोदृष्ट्वाहृषीकेशंसंग्रामेसमुपस्थितम् अन्वधावन्नभिक्रुद्धाविविधायुधपाणयः ६१ अथतान्मद्गुनान्दृष्ट्वाशंखचक्रगदाधरः वि
व्याधसर्वगात्रेषुशरैराशीविषोपमैः ६२ तेनाहतास्तेशतशोदानवानिधनंगताः एकांगोदानवःस्थित्वायुध्यमानोमुहुर्मुहुः ६३ तस्या
परिहृषीकेशोयद्यदायुधमुत्सृजत् पुष्पवत्तंसमभ्येतिकुंठितंतस्यतेजसा ६४ शस्त्रास्त्रैर्विध्यमानोपियदाजेतुंनशक्यते युयोधत्त
नदाक्रुद्धोबाहुभिःपरिघोपमैः ६५ बाहुयुद्धंकृतंतेनदिव्यवर्षसहस्रकं तेनश्रांतःसभगवान्गतोबदरिकाश्रमं ६६ तत्रहैमवतीना
म्नीगुहापरमशोभना तांप्रविश्यमहायोगीशयनार्थंजगत्पतिः ६७ योजनद्वादशायामाएकद्वाराधनंजय अहंतत्रप्रसुप्तोस्मिभ
यभीतोनसंशयः ६८ महायुद्धेनतेनैवश्रांतोहंपांडुनंदन दानवःपृष्ठतोलग्नःप्रविवेशसतांगुहां ६९ प्रसुप्तंमांतदादृष्ट्वाचिंतयद्दान-
वोत्तदिदं हरिमेनंहनिष्येहंदानवानांक्षयावहं ७० एवंकृतदुर्मतेस्तस्यव्यवसायंव्यवस्यत समुद्भूताममांगेभ्यःकन्यैकाचमहाप्रभा

७१ दिव्यप्रहरणादेवीयुद्धायसमुपस्थिता ईक्षितादानवेंद्रेणमरुणापांडुनंदन ७२ युद्धंसमाहितंतेनस्त्रियानम्रयाचितं तेनायु·
ध्यतसानित्यंतांदृष्ट्वाविस्मयंगतः ७३ केनेयंनिर्मितारौद्रा अत्युग्राशनिपातिनी इत्युक्त्वादानवेंद्रोसौयुयुधेकन्ययातया ७४ तत
स्तयामहादेव्यात्वरयादानवोबली छित्वासर्वाणिशस्त्राणिक्षणेनविरथः कृतः ७५ बाहुप्रहरणोपेतोधावमानोमहाबलान् तलेनाहृ
त्यहृदयेतयादेव्यानिपातितः ७६ पुनरुत्थायसोधावत्कन्याहननकांक्षया दानवंपुनरायांतंरोषेणाहत्यतच्छिरः ७७ क्षणान्नि
पातयामासभूमौतच्चसमुज्वलत् दैत्यःकृत्तशिराःसोथययौवैवस्वतालयम् ७८ शेषाभयार्दितादीनाःपातालंविविशुर्द्विषः
ततःसमुत्थितोदेवःपुरोदृष्ट्वास्फुरंहतं ७९ कन्यांपुरस्थितांचापिकृतांजलिपुटाननां विस्मयोत्फुल्लनयनःप्रोवाचजगतांपतिः ८०
केनायंनिहतःसंख्येदानवोदुष्टमानसः येनदेवाःसगंधर्वाःसेंद्राश्चसमरुद्गणाः सनागाःसहलोकेशालीलयैवविनिर्जिताः येनाहं
निर्जितोभृत्वाभीतःस्कंधोगुहामिमां ८२ केनकारुण्यभावेनरक्षितोहंपलायितः कन्योवाच मयाविनिहतोदैत्यस्त्वदंशोद्भूत
यामप्रभो ८३ दृष्ट्वास्कंधहरेत्वांतुयतोहंतुंसमुद्यतः त्रैलोक्यकंटकस्यास्यव्यवसायंप्रबुध्यच ८४ हतोमयादुरात्मासौदेवतानिर्भयाःकृ
ताः तवैवाहंमहाशक्तिःसर्वशत्रुभयंकरी त्रैलोक्यरक्षणार्थायहतोलोकभयंकरः निहतंदानवंदृष्ट्वाकिमाश्चर्यंवदप्रभो ८६
श्रीभगवानुवाच निहतेदानवेंद्रेस्मिन्संतुष्टोहंतवानघे हृष्टाःपुष्टाश्चवैदेवाआनंदःसमजायत ८७ आनंदस्त्रिषुलो
केषुदेवानांयस्त्वयाकृतः प्रसन्नोस्म्यनघेतुभ्यंवरंवरयसुव्रते ८८ ददामितंनसंदेहोयत्सुरैरपिदुर्लभं कन्योवाच यदितुष्टोसि
मेदेवयदिदेयोवरोमम ८९ तारयेहंमहापापादुपवासपरंनरं उपवासस्ययत्पुण्यंतस्यार्द्धंनक्तभोजने ९० तदर्द्धंचभवेत्तस्यए
कभुक्तंकरोतियः यःकरोतिव्रतंभक्त्यादिनेमप्रजितेंद्रियः ९१ सगत्वावैष्णवंस्थानंकल्पकोटिशतानिच भुंजानोविविधान्-
भोगानुपवासीजितेंद्रियः ९२ भगवंस्त्वत्प्रसादेनभवत्वेषवरोमम उपवासंचनक्तंचएकभक्तंकरोतियः तस्यधर्मंचवित्तंच
मोक्षंदेहिजनार्दन ९३ श्रीभगवानुवा० यत्त्वंवदसिकल्याणितत्सर्वंचभविष्यति ममभक्ताश्चयेलोकास्तवभक्ताश्चयेनराः ९४

ष्णुलोकेषुविख्याताः प्राप्स्यन्तिममसन्निधि एकादश्यांसमुत्पन्नामम भक्तिःपरायणः ९५ अतएकादशीत्येवंतवनामभविष्य
ति दग्ध्वापापानिसर्वाणिदास्यामिपदमव्ययं ९६ तृतीयाचाष्टमीचैवनवमीचचतुर्दशी एकादशीविशेषेणतिथयोमेमहाप्रियाः ९७
सर्वतीर्थाधिकंपुण्यंसर्वदानाधिकंफलं सर्वव्रताधिकंचैवसत्यंसत्यंवदामिते ९८ एवंदत्वावरंतस्यास्तत्रैवांतरधीयत हृष्टातुष्टा
तुसाजातानन्दाएकादशीतिथिः ९९ इमामेकादशींपार्थकरिष्यंतिनरास्तुये तेषांशत्रुंहनिष्यामिदास्यामिपरमांगतिम् १०० अन्ये
पियेकरिष्यंतिएकादश्यामहाव्रतं हरामितेषांविघ्नांश्चसर्वसिद्धिंददामिच १ एवमुक्तासमुत्पन्नैरेकादश्याःस्वयंस्तत इयमेका
दशीनित्यासर्वपापक्षयंकरी २ एकैवचमहापुण्यासर्वपापनिषूदनी उदितासर्वलोकेषुसर्वसिद्धिकरीतिथिः ३ शुक्लावाप्यथवा
कृष्णाइतिभेदंनकारयेत् कर्तव्येउभयेपार्थनतुल्याद्वादशीतिथिः ४ अंतरंनैवकर्तव्यंसमस्तैर्व्रतकारिभिः तिथिरेकाभवेत्सर्वापक्ष
योरुभयोरपि ५ एकादशीतुसंपूर्णाप्रभातेघटिकायदि सातिथिःपरिहर्तव्याउपोष्याद्वादशीतदा ६ एवंविधामयाप्रोक्तापक्ष
योरुभयोरपि उपवासंप्रकुर्वंतिएकादश्यांनराश्चये ७ तेयांतिपरमंस्थानंयत्रास्तेगरुडध्वजः धन्यास्तेमानवालोकेविष्णुभक्ति
परायणाः ८ एकादश्यास्तुमाहात्म्यंसर्वलोकेषुयःपठेत् अश्वमेधस्ययत्पुण्यंतदाप्नोतिनसंशयः ९ एकादश्यांनिराहारःस्थि
त्वाचाहंपरेहनि भोक्ष्यामिपुंडरीकाक्षशरणंमेभवाच्युत १० इत्युच्चार्यततोविद्वान्पुष्पांजलिमथार्पयेत् अष्टाक्षरेणमंत्रेण
भिर्जप्तेनाभिमंत्रितं ११ उपवासफलप्रेप्सुःपिबेत्पात्रगतंजलं दिवानिद्रांपरान्नंचपुनर्भोजनमैथुने १२ क्षौद्रंकांस्यामिषंतै
लंद्वादश्यामष्टवर्जयेत् असंभाष्यांहिसंभाष्यभक्षयेत्तुलसीदलं १३ आमलक्याःफलंवापिपारणेभक्षयेत्सुधीः आमध्याह्ना
च्चराजेद्द्वादश्यामरुणोदये १४ स्नानार्चनक्रियाकार्यादानहोमादिसंयुताः संकटेविषमेप्राप्तेद्वादश्यांपारणंकथम् १५ अ
द्भिस्तुपारणंकुर्यात्पुनर्भुक्तंनदोषकृत् यःशृणोतिदिवारात्रौनरोविष्णुपरायणः १६ तद्वक्त्रमुखनिष्पन्नांकथांविष्णोःसुमंग
लां कल्पकोटिसमायुक्तोविष्णुलोकेमहीयते १७ एकादश्याश्चमाहात्म्यंपादमेकंशृणोतियः ब्रह्महत्यादिकंपापंनश्यतेनात्र-

संशयः १८ विष्णुधर्मसमंनास्तिव्रतंनामसनातनं इतिश्रीभविष्योत्तरपुराणेश्रीकृष्णार्जु० दे मार्गशीर्षकृ० माहा० संपूर्णम्
अथमार्गशीर्षशुक्लैकादशीकथा युधिष्ठिरउवाच वंदेविष्णुंप्रभुंसाक्षाल्लोकत्रयसुखप्रदम् विश्वेशंविश्वकर्तारंपुराणंपु-
रुषोत्तमं १ पृच्छामिदेवदेवेशसंशयोस्तिमहान्मम लोकानांतुहितार्थायपापानांचक्षयायच २ मार्गशीर्षेसितेपक्षेकिन्नामै
कादशीभवेत् कःदृशश्चविधिस्तस्याःकोदेवस्तत्रपूज्यते ३ एतदाचक्ष्वमेस्वामिन्विस्तरेणयथातथं श्रीकृष्णउवा० सम्यक्
पृष्टंत्वयाराजन्साधुतेविपुलंयशः ४ कथयिष्यामिराजेंद्रहरिवासरमुत्तमं उत्पन्नासासितेपक्षेद्वादशीममवल्लभा ५ मार्गशी-
र्षेसमुत्पन्नाममदेहान्नराधिप मुरस्यचवधार्थायप्रख्याताममवल्लभा ६ कथितासामयातेवल्लदग्रेराजसत्तम पूर्वमेकाद
शीराजन्त्रैलोक्येसचराचरे ७ मार्गशीर्षेसितेपक्षेचोत्पत्तिरितिनामतः अतःपरंप्रवक्ष्यामिमार्गशीर्षसितांतथा ८ तस्याःश्र
वणमात्रेणवाजपेयफलंलभेत् मोक्षानाम्नीतिविख्यातासर्वपापहरापरा ९ देवंदामोदरंतस्यांपूजयेच्चप्रयत्नतः तत्रापिपूजनंचै
वगीतनृत्यैःसुमंगलैः १० शृणुराजेंद्रवक्ष्यामिकथांपौराणिकींशुभां अधोगतिंगतायेवैपितृमातृसुतादयः ११ अस्याःपुण्य
प्रभावेनस्वर्गंयांतिनसंशयः एतस्मात्कारणाद्राजन्महिमानंशृणुष्वतम् १२ पुरावैनगरेरम्येगोकुलेन्यवसन्नृपः वैखानसे
तिराजर्षिःपुत्रवत्पालयन्प्रजाः १३ द्विजांश्चन्यवसंस्तत्रचतुर्वेदपरायणान् एवंसराज्यंकुर्वाणोरात्रौतुस्वप्नमध्यतः १४ ददर्शजन
कंस्वंतुअधोयोनिगतंनृपः एवंदृष्ट्वातुतंतत्रविस्मयोत्फुल्ललोचनः कथयामासवृत्तांतंद्विजाग्रेस्वप्नसंभवं राजोवा० मयातुस्वपितादृ
ष्टोनरकेपतितोद्विजाः तारयस्वेतिमांतातअधोयोनिगतंसुत १६ इतिब्रुवाणःसतदामयादृष्टःपितास्वयम् तदाप्रभृतिभोविप्रानाहं
शर्मलभाम्यहो १७ एतद्राज्यंममम हदसह्यंसुखंतथा अश्वागजारथाश्चैवनभांतिरोचंतिसर्वथा १८ नशोकोपिसुखायेति
नकिंचित्सुखदंमम नदारानसुतामह्यंरोचंतिद्विजसत्तमाः १९ किंकरोमिक्वगच्छामिशरीरंमेतुदह्यते दानंव्रतंतपोयोगोयेनैव
ममपूर्वजाः २० मोक्षमायांतिविप्रेंद्रास्तदेवकथयंतुमे किंतेनजीवतालोकेसुपुत्रेणबलीयसा २१ पितातुयस्यनरकेतस्यज

न्मनिरर्थकं ब्राह्मणाऊचुः पर्वतस्यमुनेरत्रआश्रमोनिकटेनृप २२ गत्वातंराजशार्दूलभूतंभव्यंविजाननः तेषांश्रुत्वाततोवाक्यंवै
खानोराजसत्तमः २३ जगामतत्रयत्रासावाश्रमेपर्वतोमुनिः ब्राह्मणैर्वेष्टितःशांतैःप्रजाभिश्चसमंततः २४ आश्रमोविपुलस्तस्य
मुनिभिःसन्निषेवितः ऋग्वेदिभिर्यजुर्भिश्चसामाथर्वणकोविदैः २५ वेष्टितोमुनिभिस्तत्रद्वितीयइवपद्मजः दृष्ट्वातंमुनिशार्दूलं
राजावैखानसस्तदा २६ जगामचाविनम्रोभूत्वादंडवन्नृपणनामच पप्रच्छकुशलंतस्यसप्तस्वंगेषुसोमुनिः २७ राज्येनिःकंटकत्वं
चराज्यंसौख्यसमन्वितं राजोवाच प्रसादात्कुशलंविप्रअंगेषुममसप्तसु २८ विभवेषुनुकूलेषुकश्चिद्विघ्नउपस्थितः एतंमेसं
शयंब्रह्मन्प्रष्टुंत्वांचसमागतः २९ एवंश्रुत्वानृपवचःपर्वतोमुनिसत्तमः ध्यानास्तिमितनेत्रोसौभूतंभव्यंविचिंतयन् ३० मुहूर्तमेकं
ध्यात्वाचप्रत्युवाचनृपोत्तमं मुनिरुवाच जानेहंतवपितुःपापंविकर्मणः ३१ पूर्वजन्मनितेनपत्नीसपत्नीकृतद्वेषतः का
मासक्तेनचैकस्यऋतुभंगःकृतस्त्रियः ३२ आहिदेहीतिजल्पन्त्याकृतुदानंनराधिप तेनैवेतद्धिपत्नीतुनदत्तोऋतुरागहात् ३३ कर्मणा
तेनसततंनरकेपातितोव्ययम् राजोवाच केनैवव्रतदानेनमोक्षस्तस्यभवेन्मुने ३४ निरयात्पापसंयुक्तात्तन्ममाचक्ष्वपृच्छतः
मुनिरुवाच मार्गशीर्षसितेपक्षेमोक्षानाम्नीहरेस्तिथिः सर्वैस्तुतद्व्रतंकृत्वापित्रेपुण्यंप्रदीयताम् तस्याःपुण्यप्रभावेनमोक्षस्तस्य
भविष्यति ३५ मुनेर्वाक्यंततःश्रुत्वानृपःस्वगृहमागतः आग्रहायणिकोत्कृष्टात्प्रासोभरतसत्तम ३७ अंतःपुरचरैःसर्वैःपुत्रदा
रैस्तथानृपः व्रतंकृत्वाविधानेनपुण्यंदत्वानृपायतत् ३८ तस्मिन्दत्तेतदापुण्येपुष्पवृष्टिरभूद्दिवः वैखानसपितातेनगतःस्वर्गं
स्तुतोगणैः ३९ राजानमंतरिक्षाच्चशश्वद्गिरमभाषत स्वस्त्यस्तुतेपुत्रसंदेत्युक्त्वासत्रिदिवंगतः ४० एवंयःकुरुतेराजन्मोक्षामे
कादशीमिमाम् तस्यपापंक्षयंयातिमृतोमोक्षमवाप्नुयात् ४१ नान्यापरतराकाचिन्मोक्षदाविमलाशुभा पुण्यसंख्यांतुराजेंद्र
नजानेहंतुपैःकृता ४२ पठनाच्छ्रवणात्तस्यावाजपेयफलंलभेत् चिंतामणिसमाह्येषास्वर्गमोक्षप्रदायिनी ४३ इतिश्रीब्रह्मां
डपुराणेमार्गशीर्षशुक्लैकादश्यामोक्षानाम्न्यामाहात्म्यंसमा० अथपौषकृष्णैकादशीकथा युधिष्ठिरउवा० पौषस्यकृष्ण

पक्षेतुद्वादशीयाभवेत्प्रभो किंनामकोविधिस्तस्याः कोदेवस्तत्रपूज्यते १ एतदाचक्ष्वमेस्वामिन्विस्तरेणजनार्दन श्रीकृष्णउ
कथयिष्यामिराजेंद्र भवतःस्नेहकारणात् २ नथातुष्टिर्नमेराजन्क्रतुभिश्चाप्तदक्षिणैः यथातुष्टिर्भवेन्मह्यमेकादश्याव्रतेनवै ३ त
स्मात्सर्वप्रयत्नेनकर्तव्योहरिवासरः पौषस्यकृष्णपक्षेतुद्वादशीयाभवेन्नृप ४ तस्याश्चैवचमाहात्म्यंशृणुष्वैकाग्रमानसः गदितायाः
श्चैवराजन्एकादश्याभवंतिह ५ तासामपिहिसर्वासांविकल्पंनैवकारयेत् तथापद्येकादश्याश्चशृणुराजन्कथानकं ६ अतः
परंप्रवक्ष्यामिपौषस्यैकादशींनव लोकानांचहितार्थायकथयिष्येविधिंनव ७ पौषस्यकृष्णपक्षेयासफलानामनामतः नारायणो
धिदेवोस्याः पूजयेत्तंप्रयत्नतः ८ पूर्वेणविधिनाराजन्कर्तव्यैकादशीजनैः नागानांचयथाशेषः पक्षिणांगरुडोयथा ९ यथाश्वमेधोयज्ञा
नांनदीनांजाह्नवीयथा व्रतानांचतथाराजन्प्रवरैकादशीतिथिः १० तेजनाभरतश्रेष्ठममपूज्याश्चसर्वशः हरिवासरसंसक्तावर्त्तंते
येजनाभृशं ११ सफलानामयाप्रोक्तातस्याःपूजाविधिंशृणु फलैर्मांपूजयेत्तत्रकालदेशोद्भवैः शुभैः १२ नारिकेरफलैः शुद्धै
स्तथावैबीजपूरकैः जंबीरैर्दाडिमैश्चैवतथापूगीफलैरपि १३ लवंगैर्विविधैश्चान्यैस्तथाचाम्रफलादिभिः पूजयेद्देवदेवेशंधूप
दीपैर्यथाक्रमं १४ सफलायांदीपदानंविशेषेणप्रकीर्तितं रात्रौजागरणंतत्रकर्तव्यंचप्रयत्नतः १५ यावदुन्मीलयेन्नेत्रेतावज्जागर्ति
योनिशि एकाग्रमानसोभूत्वातस्यपुण्यंशृणुष्वतत् १६ तत्समोनास्तिवैयज्ञस्तीर्थंनतत्सदृशंनहि तत्समंनव्रतंकिंचिदिहलोके
नराधिप १७ पंचवर्षसहस्राणितपस्तप्त्वाचयत्फलम् तत्फलंसमवाप्नोतिसफलायाव्रतेनवै १८ श्रूयतांराजशार्दूलसफलायाः
कथानकं चंपावतीतिविख्यातापुरीमाहिष्मतस्यच १९ माहिष्मतस्यराजर्षेश्चत्वारश्चाभवन्सुताः तेषांमध्येतुयःश्रेष्ठःसम
हापापसंयुतः २० परदाराभिगामीचवेश्यासंगरतःसदा पितुर्द्रव्यंसपापिष्ठोगमयामाससर्वशः २१ असद्वृत्तिरतोनित्यंदेवता
द्विजनिंदकः वैष्णवानांचदेवानांनित्यंनिंदारतःसदा २२ ईदृग्विधंतदादृष्ट्वापुत्रंमाहिष्मतोनृपः लुंपकोनामनाम्नेतिकृतवानत्यम
र्षितः २३ राज्यान्निष्काशितस्तेनपित्राचैवापिबंधुभिः परिवारजनैःसर्वैस्त्यक्तोराज्ञोभयादिति २४ लुंपकोपितदात्यक्तश्चिंतया

मासत्येकलः मयात्रकिंप्रकर्तव्यंत्यक्तःपित्राचबांधवैः २५ इतिचिंतापरोभूत्वामतिंपापेनदाकरोत् मयात्रुगमनंकार्यंवनेत्यक्त्वाप्तु
रंपितुः २६ तस्माद्वनात्पितुःसर्वंव्यापायिष्येपुरंनिशि दिवावनेचरिष्यामिराज्ञावापिपितुःपुरम् २७ इत्येवंसमतिंकृत्वालुंपको
देवपातितः निर्जगामपुरात्तस्माद्गतोसौगहनंवनं २८ जीवघातकरोनित्यंनित्यंस्तेयपरायणः सर्वंचनगरंतेनमुषितंपापकर्म
णा २९ गृहीतश्चपरित्यक्तोराज्ञोमाहप्सोतर्भयात् जन्मांतरीयपापेनराज्यभ्रष्टःसपापकृत् ३० आमिषाभिरतोनित्यंनित्यंवैफ
लभक्षकः आश्रमस्तस्यदुष्टस्यवासुदेवस्यसंमतः ३१ अश्वत्थोवर्ततेतत्रजीर्णोबहुलवार्षिकः देवत्वंतस्यवृक्षस्यवर्ततेतत्रनेमह
त् ३२ तत्रैववनेवसंश्चासौलुंपकःपापबुद्धिमान् एवंकालक्रमेणैववसतस्तत्रस्यपापिनः ३३ दुष्कर्मनिरतस्यास्यकुर्वतःकर्मनिं
दितं पौषस्यकृष्णपक्षेतुपूर्वाण्हेसफलादिने ३४ दशमीदिवसेराजन्निशायांशीतपीडितः लुंपकोवस्त्रहीनोवैनिश्चेष्टात्यभवत्त
दा ३५ पीड्यमानस्तुशीतेनअश्वत्थस्यसमीपगः नानिद्रानस्करंचतस्यगतप्राणइवाभवत् ३६ पीडयन्दशनैर्दंतानेवंचगामितानि
शा भानूदयेपितस्यायनसंज्ञासमजायत ३७ लुंपकोगतसंज्ञस्तुसफलादिवसेतदा मध्यान्हसमयेप्राप्तेसंज्ञांलेभेसलुंपकः ३८
प्राप्तसंज्ञोमुहूर्तेनचोत्थितोसौतदासनात् प्रस्खलंश्चपदन्यासैःपंगुवच्चलितोमुहुः ३९ वनमध्येगतस्तत्रक्षुत्तृषापीडितोभवत्
नशक्तोजीवघातस्यलुंपकस्यदुरात्मनः ४० फलानिभूमौपतितान्याजहारसलुंपकः यावत्सचागतस्तत्रतावदस्तमगाद्रविः
४१ किंभविष्यतितातेतिविललापातिदुःखितः फलानितानिसर्वाणिवृक्षमूलेन्यवेदयत् ४२ प्रभुर्वाचफलैरेभिःप्रीयतांभगवा
न्हरिः उपविष्टोलुंपकस्त्वनिद्रांलेभेनवैनिशि ४३ तेनजागरणंजातंभगवान्मधुसूदनः फलानांपूजनंमेनेसफलायास्तथाव्रतं
४४ कृतमेवंलुंपकेनत्वकस्माद्व्रतमुत्तमं तेनव्रतप्रभावेनप्राप्तंराज्यमकंटकम् ४५ पुण्यांकुरोदयाद्राजन्यथाप्राप्तंतथाशृणु
रवेरुदयवेलायांदिव्योश्वश्चाजगामह ४६ दिव्यवस्तुपरीवारोलुंपकस्यसमीपतः तस्थौसतुरगोराजन्वाग्बभूवाशरीरिणी ४७
प्राप्नुहित्वंनृपसुतस्वराज्यंहतकंटकं वासुदेवप्रसादेनसफलायाःप्रभावतः ४८ पितुःसमीपंगच्छत्वंभुंक्ष्वराज्यमकंटकम् ॥

तथेत्युक्त्वा लुंभकोऽसौ तत्र दिव्यरूपधरोऽभवत् ४९ कृष्णे मतिश्च तस्यासीत्परमो वैष्णवस्तथा दिव्याभरणशोभाढ्यस्तातेनन्वास्थितो गृहे ५०
वैष्णवाय ततो दत्तं पित्रा राज्यमकंटकं कृतं राज्यं तु तेनैव वर्षाणि सुबहून्यपि ५१ हरिवासरसंलीनो विष्णुभक्तिरतः सदा मनो
ज्ञास्तस्य पुत्राः स्युर्दाराः कृष्णप्रसादतः ५२ ततः स वार्धके राज्ये नाथं पुत्रं निवेशयन् वनं गतः संयतात्मा विष्णुभक्तिपरायणः ५३
साधयित्वा तथात्मानं विष्णुलोकं जगाम ह गतः कृष्णस्य सान्निध्यं यं गत्वा न शोचति एवं ये वै प्रकुर्वन्ति सफलैकादशीव्रतम्
इह लोके यशः प्राप्य मोक्षं यास्यन्त्यसंशयः ५५ धन्यास्ते मानवा लोके सफलाव्रतकारिणः अस्मिन्जन्मनि ते मोक्षं लभंते नात्र
संशयः ५६ सफलायाश्च माहात्म्यश्रवणाद्द्विजसत्तम राजसूयफलं प्राप्य वसेत्स्वर्गे च मानवः ५७ इति श्रीपौषकृष्णैकादश्याः
सफलानाम्न्या माहात्म्यं संपूर्णम् अथ पौषशुक्लैकादशीकथा युधिष्ठिर उवाच कथिता वै त्वया कृष्ण सफलैकादशी शुभा
कथयस्व प्रसादेन शुक्लापौषस्य या भवेत् १ किं नाम को विधिस्तस्याः को देवस्तत्र पूज्यते कस्मै तुष्टो हृषीकेश त्वमेव पुरुषोत्तम २
श्रीकृष्ण उवाच शृणु राजन्प्रवक्ष्यामि शुक्ला पौषस्य या भवेत् तस्या विधिं महाराज लोकानां च हिताय वै ३ पूर्वेण विधिना रा
जन्कर्तव्येषा प्रयत्नतः पुत्रदेति च नाम्ना सा सर्वपापहरा परा ४ नारायणोऽधिदैवोऽस्याः कामदः सिद्धिदायकः नातः परतरा काचि
त्त्रैलोक्ये सचराचरे ५ शृणु राजन्प्रवक्ष्यामि कथां पापहरां परां पुरी भद्रावती नाम्नी राजा तत्र सुकेतुमान् ६ तस्य राज्ञोऽथ राज्ञी
च शैब्या नाम्नीति विश्रुता पुत्रहीनेन राज्ञा तु कालो नीतो मनोरथैः ७ नैवात्मजं नृपो लेभे वंशकर्तारमेव च तेनैव राज्ञा धर्मेण चिं
तितं बहुकालतः ८ किं करोमि क्व गच्छामि सुतप्राप्तिः कथं भवेत् न राष्ट्रे न पुरे सौख्यं लेभे राजा सुकेतुमान् शैब्यया कांतया सा
र्द्धं प्रत्यहं दुःखितोऽभवत् ९ तावुभौ दंपती नित्यं चिंताशोकपरायणौ पितरस्तु जलं दत्तं कवोष्णमुपभुंजते १० राज्ञः पश्चान्न पश्या
मो योऽस्मान्संतर्पयिष्यति इत्येवं संस्मरंतोऽस्य पितरो दुःखिनोऽभवन् ११ ते बांधवा न मित्राणि नामात्याः सुहृदस्तथा १२ राज्यं तेन तस्य नृपस्य न गजाश्वपदातयः नैराश्यं भूपतेस्तस्य मनस्येव समजायत १३ नरस्य पु- १३७

त्रहीनस्यनास्तिवैजन्मनःफलं अपुत्रस्यगृहंशून्यंत्वदयंदुःखितंसदा १४ पितृदेवमनुष्याणांनानृणत्वंसुतंविना तस्मा
त्सर्वप्रयत्नेनसुतमुत्पादयेन्नरः १५ इहलोकेयशस्तेषांपरलोकेशुभागतिः येषांतुकर्मकर्तॄणांपुण्यंजन्मशतोद्भवम् १६ आ
युरारोग्यसंपत्तिस्तेषांगेहेप्रवर्तते पुत्राःपौत्राश्चलोकाश्चभवेयुःपुण्यकर्मणां १७ पुण्यंविनानचप्राप्तिर्विष्णुभक्तिंविनातथा पु
त्राणांसंपदोवापिविद्यायाश्चेतिमेमतिः १८ एवंचिंतयमानोसौराजाशर्मनलब्धवान् प्रत्यूषेचिंतयन्राजानिशीथेचिंतयंस्तथा १९
ततश्चात्मविनाशंवैविचार्याथसुकेतुमान् आत्मघातेदुर्गतिंचचिंतयित्वानदानृपः २० दृष्ट्वात्मदेहंप्रक्षीणमपुत्रत्वंतथैवच
पुनर्विचार्यात्मबुद्ध्यात्वात्मनोहितकारणं २१ अश्वारूढस्ततोराजाजगामगहनंवनं पुरोहितादयःसर्वेनजानंतिगतंनृपं
२२ गंभीरेविपिनेराजामृगपक्षिनिषेविते विचचारतदातस्मिन्वनवृक्षान्विलोकयन् २३ वटानश्वत्थबिल्वांश्चखर्जूरान्पन
सांस्तथा बकुलांश्चसदापर्णान्तिंदुकांस्तिलकानपि २४ शालांस्तालांस्तमालांश्चददर्शसरलान्नृपः इंगुदीककुभांश्चैव
श्लेष्मातकविभीतकान् २५ शल्लकीकरमर्दांश्चपाटलान्खदिरानपि शाकांश्चैवपलाशांश्चशोभितान्ददृशेपुनः २६ मृ
गव्याघ्रवराहांश्चसिंहान्शाखामृगानपि ददर्शभुजगान्राजावल्मीकादिभिनिःसृतान् २७ तथावनगजान्मत्तान्कल
भैःसहसंगतान् यूथपांश्चचतुर्दंतान्करिणीगणमध्यगान् २८ तान्दृष्ट्वाचिंतयामासत्वात्मनःसगजान्नृपः तेषांसवि-
चरन्मध्येराजाशोकमवापह ३० महदाश्चर्यसंयुक्तंददर्शविपिनंनृपः क्वचिच्छिवारुतंशृण्वन्नुलूकविरुतंतथा ३१ तांस्तान्प-
क्षिगणान्पश्यन्बभ्रामवनमध्यगः एवंददर्शगहनंनृपोमध्यंगतेरवौ ३२ क्षुत्तृड्भ्यांपीडितोराजाइतश्चेतश्चधावति चिंत
यामासनृपतिःसंशुष्कगलकंधरः ३३ मयातुकिंकृतंकर्मप्राप्तंदुःखंयदीदृशं मयावैतोषितादेवायज्ञेपूजाभिरेवच ३४
तथैवब्राह्मणादानैस्तोषितामिष्टभोजनैः प्रजाश्चैवयथाकालंपुत्रवत्परिपालिताः ३५ कस्माद्दुःखंमयाप्राप्तमीदृशंदारुणंम
हत् इतिचिंतापरोराजाजगामाथाग्रतोवनं ३६ सुकृतस्यप्रभावेनसरोदृष्टंमनोरमं मानसंस्पर्धमानंचपद्मिनीपरिशोभितं ३७

कारंडवैश्चक्रवाकैराजहंसैश्चनादितं मकरैर्बहुभिर्युक्तमन्यैर्जलचरैर्युतं ३८ समीपेसरसस्तत्रमुनीनामाश्रयान्बहून् ददर्शराजा
लक्ष्मीवान्निमित्तैः शुभशंसिभिः ३९ सव्यात्परतरंचक्षुःप्रास्फुरच्चतथाकरः स्फुरितैस्तस्यराज्ञश्चशंसितंशुभलक्षण ४० त
स्यतीरेमुनीन्द्दष्ट्वाकुर्वाणान्निगमंजपं अवतीर्यहयात्तस्मान्मुनीनामग्रतःस्थितः ४१ पृथक्पृथक्ववंदेसमुनींस्तान्शंसितव्र
तान् कृतांजलिपुटोभूत्वादंडवच्चप्रणम्यसः ४२ हर्षेणमहताविष्टोबभूवनृपसत्तमः तमूचुस्तेपिमुनयः प्रसन्नास्मोवयंतव ४३
कथयस्वाद्यवैराजन्यत्तेमनसिवर्तते राजोवा० केयूयमुग्रतपसः किमाख्याभवतामपि ४४ किमर्थमागतायूयंवदंतुममतत्वतः
मुनयऊचुः विश्वेदेवावयंराजन्स्नानार्थमिहचागताः ४५ माघोनिकटआयात एतस्मात्पंचमेहनि अद्यत्वेकादशीराजन्पुत्र-
दानामनामतः ४६ पुत्रंददात्यसौशुक्लापुत्रदापुत्रमिच्छतां राजोवाच एषवैसंशयोमत्यंसुतस्योत्पादनेमहान् ४७ यदितु
ष्टाभवंतोमेपुत्रोवैदीयतांतदा मुनयऊचुः अस्मिन्नेवदिनेराजन्पुत्रदानामवर्तते ४८ एकादशीतिविख्यातािक्रियतांव्रतमुत्तमं
आशीर्वादेनचास्माकंकेशवस्यप्रसादतः ४९ अवश्यंतववराजेंद्रपुत्रप्राप्तिर्भविष्यति इत्येववचनात्तेषांकृतंराज्ञाव्रतंशुभम् ५०
द्वादश्यांपारणंकृत्वामुनीन्नत्वापुनःपुनः आजगामगृहंराजाराज्ञीगर्भंसमादधौ ५१ मुनीनांवचनेनैवपुत्रदायाःप्रसादतः
पुत्रोजातस्तथाकालेतेजस्वीपुण्यकर्मकृत् ५२ पितरंतोषयामासप्रजापालोबभूवसः एतस्मात्कारणाद्राजन्कर्तव्यंपुत्रदा
व्रतम् ५३ लोकानांचहितार्थायतवाग्रेकथितंमया एतद्व्रतंतुयेमर्त्याः कुर्वंतिपुत्रधाभिधं ५४ तेपांचैवभवेत्पुत्रोह्यवश्यंमोक्ष-
भागिनां पठनाच्छ्रवणाद्राजन्नश्वमेधफलंलभेत् ५५ इतिश्रीभ० पोषशु० पुत्रदानाम्न्यामा० सं० अथमाघकृष्णैकाद
शीकथा दाल्भ्यउवाच मर्त्यलोकेतुसंप्राप्ताःपापंकुर्वंतिजंतवः ब्रह्महत्यादिपापैश्चत्वन्यैश्चविविधैर्युताः १ परद्रव्यापहारा
श्चपरव्यसनमोहिताः कथंनायांतिनरकान्ब्रह्मंस्तद्ब्रूहितत्त्वतः २ अनायासेनभगवन्दानेनाल्पेनकेनचित् पापंप्रशममायातिये
नतद्वक्तुमर्हसि ३ गभस्तिरुवाच साधुसाधुमहाभागगुह्यमेतदुदाहृतं यन्नकस्यचिदाख्यातंब्रह्मविष्ण्वींद्रदेवतैः ४

तदहंकथयिष्यामिलयापृष्टोद्विजोत्तम ततोमाघेतिसंप्राप्तेशुचिःस्नातोजितेंद्रियः ५ कामक्रोधाभिमानेर्ष्यालोभपैशून्यवर्जितः
देवदेवंचसंस्मृत्यपादौप्रक्षाल्यवारिणा ६ भूमावपतितंग्राह्यंगोमयंतत्रमानवः तिलान्प्रक्षिप्यकार्पासंपिंडकांश्चैवकारयेत् ७
अष्टोत्तरशतंचैवनात्रकार्याविचारणा ततोमाघेचसंप्राप्तेह्यार्द्रांचैवभवेद्यदि ८ मूलेवाकृष्णपक्षस्येकादश्यांनियमंततः गृण्हीयात्
पुण्यफलदंविधानंतत्रमेशृणु देवदेवंसमभ्यर्च्यसुस्नातःप्रयतःशुचिः कृष्णनामानिसंकीर्त्यक्षुतजृंभास्खसर्वदा १० रात्रौजाग
रणंकुर्याद्रात्रौहोमंचकारयेत् अर्चयेद्देवदेवेशंशंखचक्रगदाधरं ११ चंदनागरुकर्पूरैर्नैवेद्यंकृसरंतथा संस्मृत्यनाम्नाचततः
कृष्णाख्येनपुनःपुनः १२ कूष्मांडैर्नारिकेरैश्चअथवाबीजपूरकैः सर्वाभावेपिविप्रेंद्रशस्तपूगीफलंतथा १३ अर्घ्यंदत्वाविधानेनपूज
यित्वाजनार्दनं कृष्णकृष्णकृपालुस्त्वमगतीनांगतिप्रद १४ संसारार्णवमग्नानांप्रसीदपरमेश्वर नमस्तेपुंडरीकाक्षनमस्तेविश्वभावन १५
सुब्रह्मण्यनमस्तेस्तुमहापुरुषपूर्वज गृहाणार्घ्यमयादत्तंलक्ष्म्यासहजगत्पते १६ ततस्तुपूजयेद्विप्रमुदकुंभंप्रदापयेत् छत्रोपानह
वस्त्रैश्चकृष्णोमेप्रीयतामिति १७ कृष्णाधेनुःप्रदातव्यायथाशक्त्याद्विजोत्तम तिलपात्रंद्विजश्रेष्ठदद्यात्तत्रविचक्षणः १८ स्नानप्रा
शनयोःशस्ताःश्वेताःकृष्णास्तिलामुने तान्प्रदद्यात्प्रयत्नेनयथाशक्त्याद्विजोत्तम १९ तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते ति
लस्नायीतिलोद्वर्तीतिलहोमीतिलोदकी २० तिलभुक्तिलदाताचषट्तिलाःपापनाशकाः नारदउवाच कृष्णकृष्णमहाबाहोनम-
स्तेभक्तभावन २१ षट्तिलैकादशीभूतंकीदृशंफलमश्नुते सोपाख्यानंममब्रूहियदितुष्टोसियादव २२ श्रीकृष्णउवाच श्र
णुब्रह्मन्यथावृत्तंदृष्टंतत्कथयामिते मृत्युलोकेपुराह्यासीद्ब्राह्मणीतत्रनारद २३ व्रतचर्यारतानित्यंदेवपूजारतासदा मासोप-
वासनिरताममभक्ताचसर्वदा २४ कृष्णोपवाससंयुक्ताममपूजापरायणा शरीरंक्लेशितंनित्यमुपवासैर्द्विजोत्तम २५ दीनानां
ब्राह्मणानांचकुमारीणांचभक्तितः गृहादिकंप्रयच्छंतीसर्वकालंमहामतिः २६ अतिकृच्छ्ररतासातुसर्वकालेषुवैद्विज शुद्ध
मस्याःशरीरंहिव्रतैःकृच्छ्रैर्नसंशयः २७ अर्थिनंवैष्णवंलोकंकायक्लेशेनवैतथा नदत्तमन्नदानंहियेनतृप्तिःपराभवेत् २८

एतज्ज्ञातंमयाब्रह्मन्मृत्युलोकमुपागतः कापिलंरूपमास्थायभिक्षापात्रेणयाचिना २९ ब्राह्मण्युवाच कस्मात्त्वमागतोब्रह्मन्
वदयस्मात्समागतः पुनरेवमयाप्रोक्तंदेहिभिक्षांचसुंदरि ३० तयाकोपेनमहतामृत्पिंडस्ताम्रभाजने क्षिप्तोयावत्तयादेव्या
पुनःस्वर्गंगतोद्विज ३१ ततःकालेनमहताताप‍सीसुमहाव्रता कदाचित्स्वर्गमायातात्रतचर्याप्रभावतः ३२ मृत्पिंडस्यप्र-
भावेनगृहंप्रासंमनोरमं संजातंचैवविप्रर्षेधान्यकोशविवर्जितं ३३ गृहंयावन्निरीक्षेतनकिंचित्तत्रपश्यति तावद्गृहाद्विनिष्क्रांताम
र्तिचागताद्विज ३४ क्रोधेनमहताविष्टाइदंवचनमब्रवीत् मयाव्रतैश्चकृच्छ्रैश्चत्वह्युपवासैरनेकशः पूजयाराधितोदेवःसर्वलो
कस्यभावनः नधनंदृश्यतेकिंचिद्गृहेममजनार्दन ३६ ततश्चोक्तामयासातुगृहंगच्छयथागतं आगमिष्यंतिसुतरांकौतूहलसम
न्विताः ३७ देवपत्न्यस्त्वद्द्रष्टुंविस्मयेनसमन्विताः द्वारंनोद्घाटनीयंहिषट्तिलापुण्यवाचनात् ३८ एवमुक्तागतासातुयदावैमा
नुषीतदा अत्रांतरेसमायातादेवपत्न्यश्चनारद ३९ ताभिश्चकथितंतत्रत्वांद्रष्टुंहिसमागताः द्वारमुद्घाटयत्वंचपश्यामस्त्वांशुभा
नने ४० मानुष्युवाच यदिद्रष्टुंमयाकार्यंसत्यंवाच्यंविशेषतः षट्तिलाव्रतंपुण्यंद्वारोद्घाटनकारणात् ४१ एकापितत्रनवद
त्षट्तिलाव्रतनाशनः अन्ययाकथितंतत्रद्रष्टव्यामानुषीमया ४२ ततोद्वारंसमुद्घाट्यदृष्टाताभिश्चमानुषी नदेवीनचगंधर्वी
नासुरीनचपन्नगी ४३ दृष्टापूर्वंतयानारीईदृशीसाद्विजर्षभ रूपकांतिसमायुक्ताक्षणेनसमपद्यत ४४ धनधान्यंस्वर्णवस्त्रा
दिसुवर्णरौप्यमेवच सर्वंभवनसंपन्नंषट्तिलायाःप्रसादतः ४५ अतितृष्णानकर्तव्यावित्तशाठ्यंविवर्जयेत् आत्मवित्ता
नुसारेणतिलान्वस्त्रादिदापयेत् ४६ लभंतेचैवआरोग्यंततोजन्मनिजन्मनि दारिद्र्यंनचकष्टंवैनचदौर्भाग्यमेवच ४७ नभवे
द्वैद्विजश्रेष्ठषट्तिलायामुपोषणात् अनेनविधिनाराजन्तिलदानान्नसंशयः ४८ मुच्यतेपातकैःसर्वैर्नात्रकार्याविचारणा दानं
चविधिनासम्यक्सर्वपापप्रणाशनं ४९ नानर्थःकश्चिन्नायासःशरीरेमुनिसत्तम ५० इतिश्रीभविष्योत्तरपुराणेमाघकृष्णै
कादशीषट्तिलानाम्नीमाहात्म्यंसंपूर्णम् अथमाघशुक्लैकादशीकथा युधिष्ठिरउवाच साधुकृष्णत्वयाप्रोक्ताआदि

देवजगसते स्वेदजाअंडजाश्चैवउद्भिज्जाश्चजरायुजाः १ तेषांकर्ताविकर्तानांचपालकःक्षयकारकः माघस्यकृष्णपक्षेतुषट्तिलाक
थितालया २ शुक्लेचैकादशीयाचकथयस्वप्रसादतः किंनामकोविधिस्तस्याः कोदेवस्तत्रपूज्यते ३ श्रीकृष्णउवाच कथ
यिष्यामिराजेंद्रशुक्लेमाघस्ययाभवेत् जयानाम्नीतिविख्यातासर्वपापहरापरा ४ पवित्रापापहंत्रीचपिशाचत्वविनाशिनी नै
वतस्याव्रतेचीर्णेप्रेतत्वंजायतेनृणाम् ५ नातःपरतराकाचित्पापघ्नीमोक्षदायिनी एतस्मात्कारणाद्राजन्कर्तव्यंप्रयत्नतः ६ श्रू
यतांराजशार्दूलकथापौराणिकीशुभा पंकजेचपुराणेस्यामहिमाकथितोमया ७ एकदानागलोकेवैइंद्रोराज्यंचकारह देवास्त
त्रसौख्येननिवसंतिमनोरमे ८ पीयूषपाननिरताप्सरोगणसेविताः नंदनंतुवनंतत्रपारिजातोपशोभितम् ९ रमयंतिरमंत्य
प्सरोभिर्दिवौकसः एकदारममाणोसौदेवेंद्रःस्वेच्छयानृप १० नर्तयामासहर्षात्सपंचाशत्कोटिनायिकाः गंधर्वास्तत्रगाय
तिगंधर्वःपुष्पदंतकः ११ चित्रसेनश्चतत्रैवचित्रसेनस्तुतातथा मालिनीतिचनाम्नातुचित्रसेनस्यकामिनी १२ मालिन्यांतुसमु
त्पन्नःपुष्पवानितिनामतः पुष्पदंतस्यपुत्रोवैमाल्यवान्नामनामतः १३ गंधर्वीपुष्पवत्यास्यामाल्यवत्यतिमोहिता कामस्यचशरै
स्तीक्ष्णैर्विद्धांगीसावभूवह १४ तयाभावकटाक्षैश्चमाल्यवांस्तुवशीकृतः लावण्यरूपसंपन्नातस्यारूपंनृपशृणु १५ बाहूतस्या
स्तुकामेनकंठपाशीकृताविव चंद्रवद्वदनंतस्यानयनेश्रवणायते १६ कर्णौतुशोभितौतस्याःकुंडलाभ्यांनृपोत्तम कंबुग्रीवायुतातन्वे
वदिव्याभरणभूषिता १७ पीनोन्नतौकुचौतस्यामुष्टिमात्रंचमध्यमं नितंबौविपुलौतस्याविस्तीर्णंजघनस्थलम् १८ चरणौशोभ
मानौतौरक्तोत्पलसमद्युती ईदृश्यापुष्पवत्याचमाल्यवानतिमोहितः १९ शक्रस्यपरितोषायनृत्यार्थंतौसमागतौ गायमानौनतौतत्र
त्वप्सरोगणसंगतौ २० नशुद्धगानंगायेतांचित्तभ्रमसमन्वितौ बद्धदृष्टीतथान्योन्यंकामबाणवशंगतौ २१ ज्ञात्वाखेरवर्षभस्तत्र
संगतमानसंतयोः तालकालक्रियामानलोपाद्गीतावभंजनात् २२ चिंतयित्वातुमघवानवज्ञानंतथात्मनः कुपितश्चतयोरित्थं
शापंदास्यन्निदंजगौ २३ धिग्वांपापरतौमूढावाज्ञाभंगकरौमम युवांपिशाचौभवतांदंपतीरूपधारिणौ २४ मृत्युलोकमनुप्राप्तौ

भुंजानौकर्मणः फलम् एवंमघवनाशासावुभौदुःखितमानसौ २५ हिमवंतंगिरिंप्राप्ताविंद्रशापविमोहितौ उभौपिशाचतांप्राप्तौ
दारुणंदुःखमेवच २६ संतप्यमानसौतत्रमहाकृच्छ्रगतावुभौ गंधंरसंचस्पर्शंचनजानंतौविमोहितौ २७ पीड्यमानौतुदाहेन
देहपातकरेणच तौननिद्रांसुखंप्राप्तौकर्मणातेनपीडितौ २८ परस्परं वादमानौचेरतुर्गिरिगह्वरं पीड्यमानौतुशीतेनतुषारप्रभवे
नतौ २९ दंतघर्षंप्रकुर्वाणौरोमांचितवपुर्धरौ ऊचेपिशाचः शीतार्तःस्वपत्नींतुपिशाचिकां ३० किमावाभ्यांकृतंपापमत्यंतदुः
खदायकम् येनप्राप्तंपिशाचत्वंस्वेनदुष्कृतकर्मणा ३१ नरकंदारुणंमत्वापिशाचत्वंचगर्हितं तस्मात्सर्वप्रयत्नेनपापंनैवसमा-
चरेत् ३२ इतिचिंतापरौतत्रत्यास्तांदुःखेनकर्शितौ दैवयोगात्तयोःप्राप्तामाघस्यैकादशीसिता ३३ जयानाम्नीतिविख्यातातिथीनामुत्तमातिथिः तस्मिन्दिनेतुसंप्राप्तेतावाहारविवर्जितौ ३४ आस्तांनितत्रनृपतेजलपानविवर्जितौ नकृतोजीवघातश्चनपत्रफ
लभक्षणम् ३५ अश्वत्थस्यसमीपेतुपतितौदुःखसंयुतौ रविरस्तंगतोराजन्तथैवस्थितयोस्तयोः ३६ प्राप्ताचैवनिशाघोरा-
दारुणाशीतधारिणी वेपमानौतुतौतत्रहिमेनचजडीकृतौ ३७ परस्परेणसंलग्नौगात्रयोर्भुजयोरपि ननिद्रांनरतिंतत्रनचसौख्य
मविंदताम् ३८ एवंतौराजशार्दूलशापेनेंद्रस्यपीडितौ इत्थंतयोर्दुःखितयोर्निर्जगामतदानिशा ३९ जयायास्तुव्रतेचीर्णेरात्रौ-
जागरणेकृते तयोर्व्रतप्रभावेनयथाभ्यासीत्तथाशृणु ४० द्वादशीदिवसेप्राप्तेताभ्यांचीर्णेजयाव्रते विष्णोःप्रभावान्नृपतेपिशा-
चत्वंतयोर्गतं ४१ पुष्पवतीमाल्यवांश्चपूर्वरूपौबभूवतुः पुरातनस्नेहयुतौपूर्वालंकारसंयुतौ ४२ विमानमधिरूढौतावप्सरा
गणसेवितौ स्तूयमानौतुगंधर्वैस्तुंबरुप्रमुखैस्तथा ४३ हावभावसमायुक्तौगतौनाकेमनोरमे देवेंद्रस्याग्रतोगत्वाप्रणामंच
क्रतुर्मुदा ४५ तथाविधौतुतौदृष्ट्वामघवान्विस्मितोऽब्रवीत् इंद्रउवाच वदतंकेनपुण्येनपिशाचत्वंविनिर्गतम् ४५ मम
शापवशंप्राप्तौकेनदेवेनमोचितौ माल्यवानुवाच वासुदेवप्रसादेनजयायाःकृतव्रतेनच ४६ पिशाचत्वंगतंस्वामिन्सत्यं
भक्तिप्रभावतः इतिश्रुत्वावचस्तस्यप्रत्युवाचसुरेश्वरः ४७ पवित्रौपावनौजातौवंदनीयौममापिच हरिवासरकर्तारौविष्णुभ

क्तिपरायणौ ४८ हरिभक्तिरतायेचशिवभक्तिरतास्तथा अस्माकमपितेमर्त्याः पूज्यावंद्यानसंशयः ४९ विहरस्वयथा-
सौरव्यंपुष्पवत्यासुरालये एतस्मात्कारणाद्राजन् कर्तव्योहरिवासरः ५० जयाव्रतंतुराजेंद्र ब्रह्महत्यापहारकं सर्वदानानि
दत्तानियज्ञास्तेनकृतानृप ५१ सर्वतीर्थेषुसुस्नातः कृतंयेनजयाव्रतम् यःकरोतिनरोभक्त्याश्रद्धायुक्तोजयाव्रतं ५२ कल्प-
कोटिशतंयावद्वैकुंठेमोदतेध्रुवं पठनाच्छ्रवणाद्राजन्नग्निष्टोमफलंलभेत् ५३ इतिश्रीभविष्योत्तरपुराणेमाघशुक्लैका-
दशीजयानाम्न्यामाहात्म्यंसंपूर्णम् अथफाल्गुनकृष्णैकादशीकथा युधिष्ठिरउवाच फाल्गुनस्यासितेपक्षेकिं
नाम्न्येकादशीभवेत् वासुदेवप्रसादेनकथयस्वममाग्रतः १ श्रीकृष्णउवाच कथयिष्यामिराजेंद्रकृष्णायाफाल्गुनीभवेत् वि
जयेतिचसाप्रोक्तादातृर्णांजयदासदा २ तस्याश्चव्रतमाहात्म्यंसर्वपापहरंपरं नारदःपरिपप्रच्छब्रह्माणंकमलासनम् ३
फाल्गुनस्यासितेपक्षेविजयानामयातिथिः तस्याव्रतंसुरश्रेष्ठकथयस्वप्रसादतः ४ इतिपृष्टोनारदेनप्रत्युवाचपितामहः
ब्रह्मोवाच शृणुनारदवक्ष्यामिकथांपापहरांपरां ५ यन्नकस्यचिदाख्यातंमयैतद्विजयाव्रतं पुरातनंव्रतंह्येतत्पवित्रंपा
पनाशनम् ६ जयंददातिविजयानृर्णांचैवनसंशयः रामस्तपोवनंयातोवर्षाण्येवचतुर्दश ७ न्यवसत्पंचवट्यांतुससीतश्च
सलक्ष्मणः तत्रैववसतस्तस्यराघवस्यमहात्मनः ८ रावणेनहृताभार्यासीतानाम्नीतपस्विनी तेनदुःखेनरामोसौमोह
मभ्यागतस्तदा ९ भ्रमन्जटायुषंतत्रददर्शविगतायुषम् कबंधोनिहतःपश्चाद्भ्रमतारण्यमध्यतः १० राज्ञेविज्ञाप्यतत्सर्वंसो
पिमृत्युवशंगतः सुग्रीवेणसमंसख्यमजायन्नमजायत ११ वानराणामनीकानिरामार्थंसंगतानिवै ततोहनूमतादृष्टालंको-
द्यानेतुजानकी १२ रामसंज्ञापनंतस्यैदत्तंकर्ममहत्कृतं समेत्यरामेणपुनःसर्वंतत्रनिवेदितं १३ अथश्रुत्वारामचंद्रोवाक्यं
चैवहनूमतः सुग्रीवानुमतेनैवप्रस्थानंसमरोचयत् १४ सगत्वावानरैःसार्द्धंतीरंनदनदीपतेः दृष्ट्वाब्धिंदुस्तरंरामोविस्मितो-
भूत्कपिप्रियः १५ प्रोत्फुल्ललोचनोभूत्वालक्ष्मणोवाक्यमब्रवीत् सौमित्रेकेनपुण्येननीर्यतेवरुणालयः १६ अगाधसलि-

लःपूर्णोनकैर्भा…िःसमाकुलः उपायंनैवपश्यामियेनैवस्कन्नरोभवेत् १७ लक्ष्मणउवाच आदिदेवस्त्वमेवासिपुराणपुरुषो
नम बकदाल्भ्योमुनिश्चात्रवर्ततेनेदीयसध्वनः १८ अस्मात्स्थानाद्योजनार्धमाश्रमस्तस्यराघव अनेनदृष्टाब्रह्माणोबहवोरघु-
नंदन १९ तंगच्छगत्वाराजेंद्रपुराणमृषिपुंगवम् इतिवाक्यंततःश्रुत्वालक्ष्मणस्यातिशोभनं २० जगामराघवोद्रष्टुंबकदाल्भ्यंमहा
मुनिं प्रणनाममुनिंमूर्ध्नारामोविष्णुमिवामरः २१ मुनिर्ज्ञात्वाततोरामंपुराणपुरुषोत्तमं केनापिकारणेनैवप्रविष्टंमानुषींतनुं २२
उवाचसऋषिस्तत्रकुतोरामतवागमः रामउवाच त्वत्प्रसादादहोविप्रवरुणालयसन्निधिम् २३ आगतोस्मिससैन्योत्र
लंकांजेतुंसराक्षसां भवतश्चानुकूल्येनतीर्यतेब्धिर्यथामया २४ तमुपायंवदमुनेप्रसादंकुरुसुव्रत एतस्मात्कारणाद्देवद्रष्टुंत्वा
महमागतः २५ मुनिरुवाच कथयिष्याम्यहंरामव्रतानामुत्तमंव्रतं कृतेनयेनसहसाविजयस्तेभविष्यति २६ लंकांजित्वा
राक्षसांस्त्वंदीर्घांकीर्तिमवाप्स्यसि एकाग्रमानसोभूत्वाव्रतमेतत्समाचर २७ फाल्गुनस्यासितेपक्षेविजयैकादशीभवेत् तस्यात्र
तिष्ठतेरामविजयस्तेभविष्यति २८ निःसंशयंसमुद्रंचतरिष्यसिसवानरः विधिस्तुश्रूयतांरामव्रतस्यास्यफलप्रदः २९ दशमीदि
वसेप्राप्तेकुंभमेकंचकारयेत् हैमंवाराजतंवापिताम्रंवाप्यथमृन्मयं ३० स्थापयेच्छोभितंकुंभंजलपूर्णंसपल्लवम् तस्योपरि-
न्यसेद्देवंहैमंनारायणंप्रभुं ३१ एकादशीदिनेप्राप्तेप्रातःस्नानंसमाचरेत् निश्चलंस्थापयेत्कुंभंगंधमाल्यानुलेपनैः ३२ दाडि
मैर्नारिकेरैश्चपूजयेच्चविशेषतः सप्तधान्यान्यधस्तत्रयवानुपरिविन्यसेत् ३३ गंधैर्धूपैस्तथादीपैर्नैवेद्यैर्विविधैरपि कुंभाग्रे
तद्दिनंरामनीयतेभक्तिभावतः ३४ रात्रौजागरणंतत्रतस्याग्रेकारयेद्बुधः द्वादशीदिवसेप्राप्तेमार्तंडस्योदयंप्रति ३५ नीत्वा
कुंभंजलोद्देशेनद्यांप्रस्रवणेतथा तडागेस्थापयित्वावापूजयित्वायथाविधि ३६ दद्यात्सदैवतंकुंभंब्राह्मणेवेदपारगे कुंभेन-
सहराजेंद्रमहादानानिदापयेत् ३७ अनेनविधिनारामयूथपैःसहसंगतः कुरुव्रतंप्रयत्नेनविजयस्तेभविष्यति ३८ इ
तिश्रुत्वावचोरामोयथोक्तमकरोत्तदा कृतेव्रतेसविजयीबभूवरघुनंदनः ३९ अनेनविधिनाराजन्येकुर्वंतिनराभुवि इहलो

केजयस्तेषांपरलोकेतथाक्षयः ४० एतस्मात्कारणात्पुत्रकर्तव्यंविजयाव्रतम् विजयायाश्चमाहात्म्यंसर्वकिल्बिषनाशनं
४१ पठनाच्छ्रवणात्तस्यवाजपेयफलंलभेत् ४२ इतिश्रीस्कंदपुराणेफाल्गुनकृष्णैकादशीविजयानाम्नीमाहात्म्यं-
संपूर्णम् अथफाल्गुनशुक्लैकादशीकथा मांधातोवाच वदब्रह्मन्महाभागयेनश्रेयोभवेन्मम ईदृग्ब्रूहिब्रह्मयो
नेयद्यनुग्रहतामयि १ सरहस्यंसेतिहासंव्रतानामुत्तमंव्रतं वसिष्ठउवाच कथयाम्यधुनातुभ्यंसर्वव्रतफलप्रदं २ आ
मलक्याव्रतंराजन्महापातकनाशनं मोक्षदंसर्वलोकानांगोसहस्रफलप्रदं ३ अत्रैवोदाहरंतीममितिहासंपुरातनं य
थाशुक्तिमनुप्राप्तोव्याधोहिंसासमन्वितः ४ वैदिशंनगरंनामहृष्टपुष्टजनाकुलम् ब्राह्मणैःक्षत्रियैर्वैश्यैः शूद्रैश्चसमलंकृ
तम् ५ रुचिरंनृपशार्दूलब्रह्मघोषनिनादितं ननास्तिकोदुष्कृतिकस्तस्मिन्पुरवरेसदा ६ तत्रसोमान्वयेराजाविख्यातः
शशबिंदुकः राजाचैत्ररथोनामधर्मात्मासत्यसंगरः ७ नागायुतबलःश्रीमांछस्त्रशास्त्रार्थपारगः तस्मिन्शासतिधर्म
ज्ञेधर्मात्मनिधरांप्रभो ८ कृपणोनैवकुत्रापिदृश्यतेनैवनिर्धनः सुकालःक्षेममारोग्यंतस्मिन्राज्यंप्रशासति ९ विष्णुभक्ति
रतालोकास्तस्मिन्पुरवरेसदा हरिपूजारताश्चैवराजाचापिविशेषतः १० नशुक्लांनैवकृष्णांवद्वादशींभुंजतेजनाः सर्व
धर्मान्परित्यज्यहरिभक्तिपरायणाः ११ एवंसंवत्सराजग्मुर्बह्वोराजसत्तम जनस्यसौख्ययुक्तस्यहरिभक्तिरतस्यच १२
अथकालेनसंप्राप्ताद्वादशीपुण्यसंयुता फाल्गुनस्यासितेपक्षेनाम्नाह्यामलकीस्मृता १३ तामवाप्यजनाःसर्वेबालकाःस्थ
विरानृप नियमंचोपवासंचसर्वेचक्रुर्नराधिप १४ महाफलंव्रतंज्ञात्वास्नानंकृत्वानदीजले तत्रदेवालयेराजालोकयुक्तोम
हाप्रभुः १५ पूर्णकुंभमवस्थाप्यछत्रोपानहसंयुतं पंचरत्नसमायुक्तंदिव्यगंधादिवासितं १६ दीपमालान्वितंचैवजामद
ग्न्यसमन्वितं पूजयामासरव्ययाधात्रींचमुनिभिर्जनाः १७ जामदग्न्यनमस्तेस्तुरेणुकानंदवर्धन आमलकीकृतच्छायभुक्ति
मुक्तिवरप्रद १८ धात्रिधातृसमुद्भूतेसर्वपातकनाशिनि आमलकिनमस्तुभ्यंगृहाणार्घ्योदकंमम १९ धात्रिब्रह्मस्वरू

पासित्वंतुरामेणपूजिता भदक्षिणाविधानेनसर्वपापहराभव २० तत्रजागरणंचक्रुर्जनाःसर्वेस्वभक्तितः एवस्मिन्नेवकालेतु
व्याधस्तत्रसमागतः २१ क्षुधाश्रमपरिव्याप्तोमहाभारेणपीडितः कुटुंबार्थंजीववघातीसर्वधर्मबहिष्कृतः २२ जागरंतत्रसो
पश्यदामलक्यांक्षुधातुरः दीपमालाकुलंदृष्ट्वातत्रैवनिषसादसः २३ किमेतदितिसंचिंत्यप्राप्तोविस्मयतांभृशं ददर्शकुंभं
तत्रस्थंदेवंदामोदरंतथा २४ ददर्शामलकीवृक्षंतत्रस्थांश्चैवदीपकान् वैष्णवंचतथाख्यानंसकथावपठतान्नृणाम् २५ एकादश्या
श्चमाहात्म्यंसकथावक्षुधितोपिसन् जाग्रतस्तस्यसारात्रिर्गताविस्मितचेतसः २६ ततःप्रभातसमयेविविशुर्नगरंजनाः
व्याधोपिगृहमागत्यबुभुजेप्रीतमानसः २७ ततःकालेनमहताव्याधःपंचत्वमागतः एकादश्याःप्रभावेनरात्रौजागरणेनच
२८ राज्यंप्रपेदेसुमहच्चतुरंगबलान्वितं जयंतीनामनगरीतत्रराजाविदूरथः २९ तस्मात्सतनयोजज्ञेनाम्नावसुरथोबली
चतुरंगबलोपेतोधनधान्यसमन्वितः ३० दशायुतानिग्रामाणांबुभुजेभयवर्जितः तेजसादित्यसदृशःकांत्याचंद्रसमप्रभः
३१ पराक्रमेविष्णुसमःक्षमयापृथिवीसमः धार्मिकःसत्यवादीचविष्णुभक्तिपरायणः ३२ ब्रह्मज्ञःकर्मशीलश्चप्रजापालनतत्प
रः यजतेविविधान्यज्ञान्सराजापरदर्पहा ३३ दानानिविविधान्येवप्रददातिचसर्वदा एकदामृगयांयातोदैवान्मार्गपरिच्युतः
३४ नादर्शनैवविदिशंवेत्तितत्रमहीपतिः उपधायचदोर्मूलमेकाकीगहनेवने ३५ श्रांतश्चक्षुधितोत्यंतंसंविवेशमहीपतिः
अत्रांतरेम्लेच्छगणःपर्वतांतरवासभाक् ३६ आययौतत्रयत्रास्तेराजापरबलार्दनः कृतवैरास्तुतेराज्ञासर्वेदैवोपताडिताः ३७
परिवार्यततस्तस्थूराजानंभूरिदक्षिणं हन्यतांहन्यतांचायंपूर्ववैरविरुद्धधीः ३८ अनेननिहताःपूर्वंपितरोभ्रातरःसुताः पौ
त्राश्चभागिनेयाश्चमातुलाश्चनिपातिताः ३९ निष्काशिताश्चस्वस्थानाद्भ्रमिताश्चदिशोदश एतावदुक्त्वातेसर्वेतत्रैनंहंतुमुद्यताः
४० पाशैश्चपट्टिशैःखड्गैर्बाणैर्धनुषिसंस्थितैः सर्वतोरिगणास्तेचराजानंहंतुमुद्यताः ४१ सर्वाणिशस्त्राणिसमाद्रवंतितेनवैशरी
रेप्रविशंतितस्य तेचापिसर्वेहतशस्त्रसंघाम्लेच्छाबभूवुर्गतदेहजीवाः ४२ यदापिचलितुंतत्रनशेकुस्तेऽरयोभृशम् श्रा

स्त्राणिकुंठितानिजग्मुः सर्वेषांहतचेतसां ४३ दीनावभूवुस्तेसर्वे येतंहंतुंसमागताः एतस्मिन्नेवकालेतुतस्यराज्ञः शरीरतः ४४
निःसृतात्प्रमदाश्रेष्ठा कासर्वावयवशोभना दिव्यगंधसमायुक्तादिव्याभरणभूषिता ४५ दिव्यमाल्यांबरधराभृकुटीकुटिलान
ना स्फुलिंगाभ्यांचनेत्राभ्यांपावकंवमतीबहु ४६ चक्रोद्यतकराचैवकालरात्रिरिवापरा अभ्यधावतसंक्रुद्धान्म्लेच्छानत्यंतदु
ःखितान् ४७ निहताश्चनदाम्लेच्छास्तेविक्रमेरतास्तथा ततोराजाविबुद्धःसन्ददर्शमहदद्भुतं ४८ हतान्म्लेच्छगणान्दृष्ट्वाराजा
हर्षमवापसः इहकेनहताम्लेच्छाअत्यंतवैरिणोमम ४९ केनचेदंमहत्कर्मकृतमस्मद्धिताधिना एतस्मिन्नेवकालेतुवागुवा
चाशरीरिणी ५० तंस्थितंनृपतिंदृष्ट्वाविस्मयाविष्टमानसम् शरणंकेशवादन्योनास्तिकोपिद्वितीयकः ५१ वनात्तस्मात्स
कुशलीसमायातोपिभूमिभुक् राज्यंचकारधर्मात्माधरायांदेवदेववत् ५२ वसिष्ठउवाच तस्मादामलकींराजन्येकुर्वंति
नरोत्तमाः तेयांतिवैष्णवंलोकंनात्रकार्याविचारणा ५३ इतिश्रीब्र० फाल्गु० शु० माहात्म्यंसंपूर्णम् अथचैत्रकृष्णैका
दशीकथा युधिष्ठिरउ० फाल्गुनस्यासितेपक्षेश्रुतासामलकीमया चैत्रस्यकृष्णपक्षेतुकिंनामेकादशीभवेत् १ श्रीकृष्णउ०
शृणुराजेंद्रवक्ष्यामिअज्ञानपापनाशनं यल्लोमशोब्रवीत्पृष्टोमांधात्राचक्रवर्तिना २ मांधातोवाच भगवन्श्रोतुमिच्छामिलोका
नांहितकाम्यया चैत्रमास्यसितेपक्षेकिंनामेकादशीभवेत् ३ कोविधिःकिंफलंतस्याःकथयस्वप्रसादतः लोमशउवाच
श्रूयतांराजशार्दूलकामदासिद्धिदातथा कथांविचित्रांशुभदांपापहांधर्मदायिनीम् ४ पुराचैत्ररथोद्देशेअप्सरोगणसेवि
ते वसंतसमयेप्राप्तेपुष्पैराकुलितेवने ५ गंधर्वकन्यास्तत्रैवरमंतिसहकिंनरैः पाकशासनमुख्याश्चक्रीडंतेच
दिवौकसः ६ नापरंसुंदरंकिंचिद्वनाच्चैत्ररथाद्वनम् तस्मिन्वनेतुमुनयस्तपंतिबहुलंतपः ७ सहदेवैस्तुमघवारमतेमधुमा
धवौ एकोमुनिवरस्तत्रमेधावीनामनामतः ८ अप्सरास्तंमुनिवरंमोहनायोपचक्रमे मंजुघोषेतिविख्यातातावंतस्यविचिन्वती ९ क्रोश
मात्रेस्थितातस्यभयादाश्रमसन्निधौ गायंतीमधुरंसाधुपीडयंतीविपंचिकां १० गायंतींतामथालोक्यपुष्पचंदनवेष्टितां कामोपिविज

याकांक्षीशिवभक्तंमुनीश्वरं ११ तस्याःशरीरसंसर्गंशिवैवैरमनुस्मरन् तुल्यस्तुवैधनुःकोटीगुणंकृत्वाकटाक्षकम् १२ मार्ग
णोनयनेकृत्वापक्ष्मयुक्तौयथाक्रमं कुचौकृत्वापटकुटौविजयायोपसंस्थितः १३ मंजुघोषाभवत्तत्रकामस्यैववरूथिनी मे
धाविनंमुनिंदृष्ट्वासापिकामेनपीडिता १४ यौवनोद्भिन्नदेहोसौमेधाव्यतिविराजते सितोपवीतसहितोदंडीस्मरइवापरः १५ मे
धावीवसतिस्मासौच्यवनस्याश्रमेशुभे मंजुघोषास्थितातत्रदृष्ट्वातंमुनिपुंगवं १६ मदनस्यवशंप्राप्तामंदंमंदमगायत रणद्व
लयसंयुक्तासिंजन्नूपुरमेखला १७ गायंतींभावसंयुक्तांविलोक्यमुनिपुंगवः मदनेनससैन्येननीतोमोहवशोबलात् १८ मंजु
घोषासमागम्यमुनिंदृष्ट्वातथाविधं हावभावकटाक्षैस्तुमोहयामासचांगना १९ अधःसंस्थाप्यवीणांसासस्वजेतंमुनीश्वरं
वल्लीवाकुलितावृक्षंवातवेगेनवेपिता २० सोपिरेमेतयासार्धंमेधावीमुनिपुंगवः तस्मिन्नेववनोद्देशेदृष्ट्वातद्देहमुत्तमं २१
शिवतत्त्वंगतंतस्यकामतत्त्ववशंगतः ननिशांनदिनंसोपिसमनुजानातिकामुकः २२ बहुलश्चगतःकालोमुनेराचारलोपकः
मंजुघोषादेवलोकंगमनायोपचक्रमे २३ गच्छंतींप्रत्युवाचाथरमंतंमुनिपुंगवः आदेशोदीयतांब्रह्मन्स्वधामगमनायमे २४
मेधाव्युवा॰ अयैवत्वंसमायाताप्रदोषादौवरानने यावत्प्रभातसंध्यास्यात्तावत्तिष्ठममांतिके २५ इतिश्रुत्वामुनेर्वाक्यंभयभी
ताबभूवसा पुनर्वैरमयामासतंमुनिंऋषिसत्तमं २६ मुनिशापभयाद्भीताबहुलान्परिवत्सरान् वर्षाणांपंचपंचाशन्नवमा
सान्दिनत्रयं २७ सारेमेमुनिनानेननिशार्द्धमिवचाभवत् साचतंप्रत्युवाचाथतस्मिन्कालेगतंमुनिम् २८ आदेशोदीयतांब्रह्म
न्गंतव्यंस्वगृहेमम मेधाव्युवाच प्रातःकालोधुनैवास्तेश्रूयतांवचनंमम कुर्वेसंध्यादिनयावत्तावत्त्वंवैस्थिराभव २९
इतिवाक्यंमुनेःश्रुत्वाभयेनचसमाकुला स्मितंकृत्वातुसाकिंचित्प्रत्युवाचसुविस्मिता ३० अप्सराउवा॰ कियत्प्रमाणा
विप्रेंद्रनवसंध्यागतानया मयिप्रसादंकृत्वातुगतःकालोविचार्यताम् ३१ इतितस्यावचःश्रुत्वाविस्मयोत्फुल्ललोचनः सध्यात्वा
त्वदिविप्रेंद्रःप्रमाणमकरोत्तदा ३२ समाश्चसप्तपंचाशत्गतामममनयासह नेत्राभ्यांविस्फुलिंगान्ससुमुंचमानोतिकोपनः ३३

कालरूपांचतांदृष्ट्वातपसःक्षयकारिणीं दुःखार्जितंममतपोनीतंतदनयाक्षयं ३४ सकंपोष्ठोमुनिस्तत्रभत्स्र्यअचाकुलेंद्रियः सा
तांशशापमेधावीत्वंपिशाचीभवेतिच ३५ धिक्त्वांपापेदुराचारेकुलटेपातकप्रिये तस्यशापेनसादग्धाक्षिनयावनतास्थिता ३६
उवाचवचनंसुभ्रूःप्रसादंवांछतीमुनिं प्रसादंकुरुविप्रेंद्रशापस्यानुग्रहंकुरु ३७ सतांसंगोहिफलतिवचोभिःसप्तमेपदे त्वया
सहममब्रह्मन्गताःसुबहवःसमाः ३८ एतस्मात्कारणात्स्वामिन्प्रसादंकुरुसुव्रत मुनिरुवाच शृणुमेवचनंभद्रेशा
पानुग्रहकारकं किंकरोमित्वयापापेक्षयंनीतंमहत्तपः ३९ चैत्रस्यकृष्णपक्षेयाभवेदेकादशीशुभा पापमोचनिका-
नामसर्वपापक्षयंकरी ४० तस्याव्रतेकृतेसुभ्रुःपिशाचत्वंप्रयास्यति इत्युक्त्वातांसमेधावीजगामपितुराश्रमम् ४१ त
मागतंसमालोक्यवचनंप्रत्युवाचह किमेतद्विहितंपुत्रत्वयापुण्यक्षयःकृतः ४२ मेधाव्युवा० पापंकृतंमहत्तातरमितावाप्सरामया
प्रायश्चित्तंब्रूहितातयेनपापक्षयोभवेत् ४३ च्यवनउ० चैत्रस्यचासितेपक्षेनाम्नावैपापमोचनी अस्याव्रतेकृतेपुत्रपापराशिः
क्षयंव्रजेत् ४४ इतिश्रुत्वापितुर्वाक्यंकृतंतेनव्रतोत्तमं गतंपापंक्षयंतस्यपुण्ययुक्तोबभूवसः ४५ साप्येवंमंजुघोषाचकृत्वात
द्व्रतमुत्तमम् पिशाचत्वविनिर्मुक्तापापमोचनिकाव्रतात् ४६ दिव्यरूपधरासापिगतानाकंवराप्सराः लोमशउवा० इत्थंप्र-
नप्रभावंहिपापमोचनिकाव्रतम् ४७ पापमोचनिकांराजन्येकुर्वंतिचमानवाः तेषांपापंचयत्किंचित्तत्सर्वंक्षयतांव्रजेत् ४८
पठनाच्छ्रवणाद्राजन्गोसहस्रफलप्रदा ब्रह्महाहेमहारीचसुरापोगुरुतल्पगः ४९ व्रतस्यचास्यकरणात्पापमुक्ताभवंतिते
बहुमुक्तिप्रदंह्येतत्करणाद्व्रतमुत्तमम् ५० इतिश्रीभ० चैत्रकृष्णैका० पापमोचनीमाहा० संपूर्णं अथचैत्रशुक्लैकादशीकथा
सूतउवा० देवकीनंदनंकृष्णंवसुदेवात्मजंहरिम् नमस्कृत्वाप्रवक्ष्यामिमहापातकहानितु १ युधिष्ठिरायकृष्णेनकथितानिम
हात्मना एकादशीमहात्म्यानिनानापापहराणिच २ अष्टादशपुराणेभ्योविविच्यसुमहात्मना चतुर्विंशतिसंख्यानिनाना-
ख्यानैर्युतानिच ३ तानिवक्ष्यामिभोविप्राःशृणुध्वंसुसमाहिताः युधिष्ठिरउ० वासुदेवनमस्तुभ्यंकथयस्वममाग्रतः ४

चैत्रस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् श्रीकृष्णउ॰ शृणुष्वैकमनाराजन्कथामेतांपुरातनीं ५ वसिष्ठोयामकथयत्पुरागृदिलीपाय
पृच्छते दिलीपउवा॰ भगवन्श्रोतुमिच्छामिकथयस्वप्रसादतः ६ चैत्रेमासि सितेपक्षेकिंनामैकादशीभवेत् वसिष्ठउवा॰
साधुपृष्टंनृपश्रेष्ठकथयामितवाग्रतः चैत्रस्यशुक्लपक्षेतुकामदानामनामतः ७ एकादशीपुण्यतमापापेंधनदवानला शृणुराज
न्कथामेतांपापघ्नींपुण्यदायिनीं ८ पुराभोगिपुरेरम्येहेमरत्नविभूषिते पुंडरीकमुखानागानिवसंतिमदोत्कटाः ९ तस्मिन्पुरेपुं
डरीकोराजाराज्यंकरोतिच गंधर्वैःकिन्नरैश्चैवत्वप्सरोभिःससेव्यते १० वराप्सरास्तुललितागंधर्वोललितस्तथा उभौरागेण-
संयुक्तौदंपतीकामपीडितौ ११ रेमातेस्वगृहेरम्येधनधान्ययुतेसदा ललितायास्तुहृदयेपतिर्वसतिसर्वदा १२ हृदयेतस्यल
लितानित्यंवसतिभामिनी एकदापुंडरीकाद्याःक्रीडंतिसदसिस्थिताः १३ गीतमानंप्रकुरुतेललितोदयितांविना पदबंधेस्खल
ज्जिह्वोबभूवललितांस्मरन् १४ मनोभावंविदित्वास्यकर्कटोनागसत्तमः पदबंधच्युतिंतस्यपुंडरीकेन्यवेदयत् १५ श
शापललितंतत्रमदनातुरचेतसम् राक्षसोभवदुर्बुद्धेक्रव्यादःपुरुषादकः १६ यतःपत्नीवशोजातोगायमानोममाग्रतः वच
नात्तस्यराजेंद्ररक्षोरूपोबभूवह १७ रौद्राननोविरूपाक्षोदृष्टमात्रोभयंकरः बहुयोजनविस्तीर्णोमुखंकंदरसन्निभं १८
चंद्रसूर्यनिभेनेत्रेग्रीवापर्वतसन्निभा नासारंध्रेतुविवरेअधरौयोजनार्धकौ १९ शरीरंतस्यराजेंद्रउच्छ्रितंयोजनाष्टकम् ईदृशो
राक्षसःसोभूद्भुंजानःकर्मणःफलं २० ललितातमथालोक्यस्वपतिंविकृताकृतिं चिंतयामाससमनसादुःखेनमहतार्दिता २१ किं
करोमिक्वगच्छामिपतिःपापेनपीडितः इतिसंस्मृत्यमनसानशर्मलभतेतुसा २२ चचारपतिनासार्द्धंललितागहनेवने बभ्रामवि
पिनेदुर्गेकामरूपःसराक्षसः २३ निर्घृणःपापनिरतोविरूपःपुरुषादकः नसुखंलभतेरात्रौनदिवापापपीडितः २४ ललितादुः
खितानीवपतिंदृष्ट्वातथाविधं भ्रमंतीतेनसार्धंसारुदंतीगहनेवने २५ कदाचिदगमद्विंध्यशिखरेबहुकौतुके ऋष्यशृंगमुने
स्तत्रदृष्ट्वाश्रमपदंशुभं २६ शीघ्रंजगामललिताविनयावनतास्थिता प्रत्युवाचमुनिर्दृष्ट्वाकात्वंकस्यसुताशुभे २७ किमर्थं

१४४

हिस [illegible] त्वंवदममाग्रतः ललितोवाच वीरधन्वेतिगंधर्वः सुतानस्यमहात्मनः २८ ललितानामसांविद्धि पत्यर्थीमिहचागता
भर्तामेशापदोषेणराक्षसोभून्महामुने २९ रौद्ररूपोदुराचारस्तंदस्वानास्तिमेसुखं सांप्रतंशाधिमांब्रह्मन्प्रायश्चित्तंवदप्रभो ३०
येनपुण्येनविप्रेंद्रराक्षसत्वाद्विमुच्यते ऋषिरुवाच चैत्रमासस्यरंभोरु शुक्लपक्षस्यसांप्रतं ३१ कामदेकादशीनाम्नायाः
कृताकामदानृणां कुरुष्वतद्व्रतंभद्रेविधिपूर्वंमयोदितं ३२ तस्यव्रतस्ययत्पुण्यंतत्स्वभर्त्रेप्रदीयतां दत्तेपुण्येक्षणात्तस्यशापदो
षःप्रशाम्यति ३३ इतिश्रुत्वामुनेर्वाक्यंललिताहर्षितामवत् उपोष्यैकादशींराजन्द्वादशीदिवसेतदा ३४ विप्रस्यैवसमीप
तुवासुदेवाग्रतःस्थिता वाक्यमूचेचललितास्वपत्युस्तारणायवै ३५ मयातुयद्व्रतंचीर्णंकामदायामुपोषणं तस्यपुण्यप्रभावेन
गच्छत्वस्यपिशाचता ३६ ललितावचनादेववर्तमानोपितत्क्षणे गतपापःसललितोदिव्यदेहोबभूवह ३७ राक्षसत्वंगतंत
स्यमासोगंधर्वतांपुनः हेमरत्नसमाकीर्णोरेमेललितयासह ३८ तौविमानसमारूढौपूर्वरूपाधिकावुभौ दंपतीचापिशोभे
तांकामदायाःप्रभावतः ३९ इतिज्ञात्वानृपश्रेष्ठकर्तव्येषाप्रयत्नतः लोकानांचहितार्थायतवाग्रेकथितामया ४० ब्रह्महत्यादि
पापघ्नीपिशाचत्वविनाशिनी नातःपरतराकाचित्त्रैलोक्येसचराचरे ४१ पठनाच्छ्रवणाद्वापिवाजपेयफलंलभेत् ४२ इतिश्रीवरा
हपुराणेचैत्रशु० कामदानामैका० माहा० संपूर्णं अथवैशाखकृष्णैकादशीकथा युधिष्ठिरउ० वैशाखस्यासितपक्षेकिं
नामैकादशीभवेत् महिमानंकथयमेवासुदेवनमोस्तुते १ श्रीकृष्णउवाच सौभाग्यदायिनीराजन्निहलोकेपरत्रच वै
शाखकृष्णपक्षेतुनाम्नाचैववरूथिनी २ वरूथिन्यांव्रतेनैवसौख्यंभवतिसर्वदा पापहानिश्चभवतिसौभाग्यप्राप्तिरेवच ३ दुर्भ
गापिकरोत्येनांस्त्रीसौभाग्यमवाप्नुयात् लोकानांचैवसर्वेषांभुक्तिमुक्तिप्रदायिनी ४ सर्वपापहरानृणांगर्भवासनिकृंतनी वरू
थिन्यांव्रतेनैवमांधातास्वर्गतिंगतः ५ धुंधुमारादयश्चान्येराजानोबहवस्तथा ब्रह्मकपालनिर्मुक्तोबभूवभगवान्भवः ६ दशवर्ष
सहस्राणितपस्तप्यतियोनरः तत्तुल्यंफलमाप्नोतिवरूथिन्याव्रतादपि ७ अन्नदानंस्तुकुरुतेवरूथिन्यांव्रतंनरः वांछितंलभते

सोपिइहलोकेपरत्रच ८ पवित्रापावनीह्येषामहापातकनाशिनी भुक्तिमुक्तिप्रदाह्येषाकर्तृणांनृपसत्तम ९ अश्वदानान्नृपश्रेष्ठगजं
दानंविशेषतः गजदानाद्भूमिदानंतिलदानंततोधिकं १० ततःसुवर्णदानंतुअन्नदानंततोधिकं अन्नदानात्परंदानंनभूतंनभ
विष्यति ११ पितृदेवमनुष्याणांतृप्तिरन्नेनजायते तत्समंकविभिःप्रोक्तंकन्यादानंनृपोत्तम १२ धेनुदानंचतत्तुल्यमित्याहभ
गवान्स्वयं प्रोक्तेभ्यःसर्वदानेभ्योविद्यादानंविशिष्यते १३ तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीं कन्यावित्तेनजीवंतियेन
राःपापमोहिताः १४ तेनरानरकंयांतियावदाभूतसंप्लवम् तस्मात्सर्वप्रयत्नेननग्राह्यंकन्यकाधनम् १५ यश्चगृण्हातिलोभे
नकन्यांक्रीत्वाचतद्धनम् सोन्यजन्मनिराजेंद्रओतुर्भवतिनिश्चितं १६ कन्यांवित्तेनयोदद्याद्यथाशक्तिस्वलंकृताम् तत्पुण्य
संख्यांकर्तुंहिचित्रगुप्तोप्यशक्तः १७ तत्फलंसमवाप्नोतिनरःकृत्वावरूथिनीं कांस्यंमांसंमसूरान्नंचणकान्कोद्रवांस्तथा १८
शाकंमधुपरान्नंचपुनर्भोजनमैथुने वैष्णवोव्रतकर्ताचदशम्यांदशवर्जयेत् १९ द्यूतक्रीडांचनिद्रांचतांबूलंदंतधावनम् परा
पवादंपैशून्यंपतितैःसहभाषणं २० क्रोधंचैवानृतंवाक्यमेकादश्यांविवर्जयेत् कांस्यंमांसंमसूरांश्चक्षौद्रंवितथभाषणं
२१ व्यायामंचप्रवासंचपुनर्भोजनमैथुने क्षौद्रंतैलंपरान्नंचद्वादश्यांपरिवर्जयेत् २२ अनेनविधिनाराजन्विहितायैर्वरूथिनी
सर्वपापक्षयंकृत्वादद्यात्प्रांतेक्षयांगतिं २३ रात्रौजागरणंकृत्वापूजितोयैर्जनार्दनः सर्वपापविनिर्मुक्तास्तेयांतिपरमांगतिं
२४ तस्मात्सर्वप्रयत्नेनकर्तव्यापापभीरुभिः क्षपारितनयाद्भीतैर्नरदेववरूथिनी २५ पठनाच्छ्रवणाद्राजन्गोसहस्रफलंलभेत्
सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते २६ इतिश्रीभविष्यो॰ वै॰ कृ॰ वरूथिनीना॰ मा॰ संपूर्णम् अथवैशाखशुक्लैकादशी
कथा युधिष्ठिरउवा॰ वैशाखशुक्लपक्षेतुकिंनामैकादशीभवेत् किंफलंकोविधिस्तस्याःकथयस्वजनार्दन १ श्रीकृष्णउ
वाच कथयामिकथामेतांशृणुत्वंधर्मनंदन वसिष्ठोयामकथयत्पुरारामायपृच्छते २ रामउवाच भगवन्श्रोतु
मिच्छामिव्रतानामुत्तमंव्रतम् सर्वपापक्षयकरंसर्वदुःखनिकृंतनम् ३ मयादुःखानिभुक्तानिसीताविरहजानिवै

ततोहंभयभीतोस्मिपृच्छामित्वांमहामुने ४ वसिष्ठउवा० साधुपृष्टंत्वयारामनैवेषा नैष्ठिकीमतिः त्वन्नामग्रहणेनैवपूतोभवति
मानवः तथापिकथयिष्यामिलोकानांहितकाम्यया पवित्रंपावनानांचव्रतानामुत्तमंव्रतं ६ वैशाखस्यसितेपक्षेद्वादशीरामया-
भवेत् मोहिनीनामसाप्रोक्तासर्वपापहरापरा ७ मोहजालात्प्रमुच्येतपातकानांसमूहतः अस्याव्रतप्रभावेनसत्यंसत्यंवदाम्य
हं ८ अतस्तुकारणाद्रामकर्तव्येषाभवादृशैः पातकानांक्षयकरीमहादुःखविनाशिनी ९ शृणुष्वैकमनारामकथांपुण्यप्रदांश्रु
भाम् अस्याःश्रवणमात्रेणमहापापंप्रणश्यति १० सरस्वत्यास्तटेरम्येपुरीभद्रावतीशुभा द्युतिमान्नामनृपतिस्तत्रराज्यंकरो-
तिवै ११ सोमवंशोद्भवोराजाधृतिमान्सत्यसंगरः तत्रवैश्योनिवसतिधनधान्यसमृद्धिमान् १२ धनपालइतिख्यातःपुण्यकर्मप्र
वर्तकः प्रपासत्राद्यायतननडागारामकारकः १३ विष्णुभक्तिरतःशांतस्तस्यासन्पंचपुत्रकाः सुमनाद्युतिमांश्चैवमेधावीसु-
कृतीतथा १४ पंचमोधृष्टबुद्धिश्चमहापापरतःसदा वारस्त्रीसंगनिरतोविटगोष्ठीविशारदः १५ द्यूतादिव्यसनासक्तःपरस्त्री
रतिलालसः नदेवान्नातिथीन्वृद्धान्नपितॄंश्चैवद्विजानपि १६ अन्यायकर्तादुष्टात्मापितुर्द्रव्यक्षयंकरः अभक्ष्यभक्षकःपापःसु
रापानरतःसदा १७ वेश्याकंठक्षिप्तबाहुर्भ्रमद्दृष्टश्चतुष्पथे पित्रानिष्कासितोगेहात्परित्यक्तश्चबांधवैः १८ स्वदेहभूषणा
न्यवक्षयंनीतानितेनवै गणिकाभिःपरित्यक्तोनिंदितश्चधनक्षयात् १९ ततश्चिंतापरोजातोवस्त्रहीनःक्षुधार्दितः किंक-
रोमिक्वगच्छामिकेनोपायेनजीव्यते २० तस्करत्वंसमारब्धंतत्रैवनगरेपुनः गृहीतोराजपुरुषैर्मुक्तश्चपितृगौरवात् २१ पुनर्ब
द्धःपुनर्मुक्तःपुनर्मुक्तःससंभ्रमैः धृष्टबुद्धिर्दुराचारोनिबद्धोनिगडैर्दृढैः २२ कशाघातैस्ताडितश्चपीडितश्चपुनःपुनः न
स्थातव्यंहिमंदात्मन्त्वयामद्देशगोचरे २३ एवमुक्तस्ततोराज्ञामोचितोदृढबंधनात् निर्जगामभयात्तस्यगतोसौगहनंवनम्
२४ क्षुत्तृषापीडितश्चायमितश्चेतश्चधावति सिंहवन्निजघानासौमृगसूकरचित्तलान् २५ आमिषाहारनिरतोवनेनिष्ठतिसर्व
दा करेशरासनंकृत्वानिषंगंपृष्ठसंगतं २६ अरण्यचारिणोहंतिपक्षिणश्चचतुष्पदान् चकोरांश्चमयूरांश्चकंकांस्तित्तिरमूषकान्

२७ एतानन्यानुहंतिनित्यंधृष्टधीर्निर्गतघृणः पूर्वजन्मकृतैःपापैर्निमग्नः पापकर्दमे २८ दुःखशोकसमाविष्टश्चिंतयन्सोप्यहर्नि
शं कौंडिन्यस्याश्रमपदंप्राप्तःपुण्यवशात्क्वचित् २९ माधवेमासिजान्हव्यांकृतस्नानंतपोधनं आससाद्धृष्टबुद्धिःशोकभारेणपीडि
तः ३० तद्वस्त्रबिंदुस्पर्शेनगतपाप्माहताशुभः कौंडिन्यस्याग्रतःस्थित्वाप्रत्युवाचकृतांजलिः ३१ धृष्टबुद्धिरुवाच प्रायश्चि
त्तंवदब्रह्मन्विनायत्नेनयद्भवेत् आजन्मकृतपापस्यनास्तिवित्तंममाधुना ३२ ऋषिरुवाच शृणुष्वेकमनाभूत्वायेनपापक्षयस्तव
वैशाखस्यसितेपक्षेमोहिनीनामनामतः ३३ एकादशीव्रतंतस्याःकुरुमद्वाक्यनोदितः मेरुतुल्यानिपापानिक्षयंनयतिदेहिनां ३४
बहुजन्मार्जितान्येषामोहिनीसमुपोषिता इतिवाक्यंमुनेःश्रुत्वाधृष्टबुद्धिर्हसन्हृदि ३५ व्रतंचकारविधिवत्कौंडिन्यस्योपदे
शतः कृतेव्रतेनृपश्रेष्ठहतपापोबभूवसः ३६ दिव्यदेहस्ततोभूत्वागरुडोपरिसंस्थितः जगामवैष्णवंलोकंसर्वोपद्रववर्जितं ३७
इतीदृशंरामचंद्रतमोमोहनिकृंतनं नातःपरतरंकिंचित्त्रैलोक्येसचराचरे ३८ यज्ञादितीर्थदानानिकलांनार्हंतिषोडशीं पठनाच्छ्रव
णाद्राजन्गोसहस्रफलंलभेत् ३९ इतिश्रीकूर्मपुराणेवैशाखशुक्लमोहिनीनामैकादशीमाहात्म्यंसंपूर्णम् अथज्येष्ठकृ
ष्णैकादशीकथा युधिष्ठिरउवाच ज्येष्ठस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् श्रोतुमिच्छामिमाहात्म्यंतद्वदस्वजनार्दन १
श्रीकृष्णउवाच साधुपृष्टंत्वयाराजंल्लोकानांहितकाम्यया बहुपुण्यप्रदाह्येषामहापातकनाशिनी २ अपरानामराजेंद्र अपार-
फलदायिनी लोकेप्रसिद्धतांयातिअपरांयस्तुसेवते ३ ब्रह्महत्याभिभूतोपिगोत्रहाभ्रूणहातथा परापवादवादीचपरस्त्रीरसिको
पिच ४ अपरासेवनाद्राजन्विपाप्माभवतिध्रुवं कूटसाक्ष्यंमानकूटंतुलाकूटंकरोतियः ५ कूटवेदंपठेद्विप्रःकूटशास्त्रंकरोतिच
ज्योतिषीकूटगणकःकूटायुर्वेदकोभिषक् ६ कूटसाक्षिसमाह्येतेविज्ञेयानरकौकसः अपरासेवनाद्राजन्पापमुक्ताभवंतिते ७
क्षत्रियःक्षात्रधर्मयस्त्यक्त्वायुद्धात्पलायते सयातिनरकंघोरंस्वीयधर्मबहिष्कृतः ८ अपरासेवनाद्राजन्पापंत्यक्त्वादिवंव्रजेत् वि
द्यामधीत्ययःशिष्योगुरुनिंदांकरोतिच ९ महापातकयुक्तोपिनिरयंयातिदारुणं अपरासेवनात्सोपिसद्गतिंप्राप्नुयान्नरः १०

महिमानंचापरायाः श्रृणुराजन्वदाम्यहं पुष्करत्रितयेस्नात्वाकार्तिक्यांयत्फलंलभेत् गंयायांपिंडदानेनपितृणांतृप्तिदोयश सिंहस्थि
तेदेवगुरौगोतमीस्नानकोनरः १२ यत्फलंसमवाप्नोतिकुंभेकेदारदर्शनात् बदर्याश्रमयात्रायांतत्तीर्थसेवनादपि १३ यत्फलंसमवा
प्नोतिकुरुक्षेत्ररविग्रहे गजाश्वहेमदानानियज्ञेकृत्वासुवर्णदः १४ यत्फलंसमवाप्नोति अपरायाव्रतान्नरः अर्धप्रसूतांगांदत्वासु
वर्णंवसुधांतथा १५ नरस्तत्फलमाप्नोति अपराव्रतसेवनात् पापद्रुमकुठारोयंपापेंधनदवानलः १६ पापांधकारसूर्योयंपापसारंगके
सरी बुद्बुदाइवतोयेषुपुत्तिकाइवजंतुषु १७ जायंतेमरणायैवएकादश्याव्रतंविना अपरांसमुपोष्यैवपूजयित्वात्रिविक्रमं १८ सर्व
पापविनिर्मुक्तोविष्णुलोकंव्रजेन्नरः लोकानांचहितार्थायतवाग्रेकथितंमया १९ पठनाच्छ्रवणाद्राजन्सर्वपापैःप्रमुच्यते २० इति
श्रीब्रह्मांडपुराणेज्येष्ठकृष्णैकादशीअपरानाम्नीमाहात्म्यंसंपूर्णम् ७ अथज्येष्ठशुक्लैकादशीकथा भीमसेनउवाच पिता
महमहाबुद्धेश्रृणुमेपरमंवचः युधिष्ठिरश्चकुंतीचतथाद्रुपदनंदिनी १ अर्जुनोनकुलश्चैवसहदेवस्तथैवच एकादश्यांनभुंजंतिक
दाचिदपिसुव्रत २ तेमांब्रुवंतिवैनित्यंमाभुंक्ष्वत्वंवृकोदर अहंतानब्रुवंतानबुभुक्षादुःसहामम ३ दानंदास्यामिविधिवत्पूजयिष्या
मिकेशवं विनोपवासंलभ्येत कथमेकादशीव्रतं ४ भीमसेनवचःश्रुत्वाव्यासोवचनमब्रवीत् व्यासउवाच यदिस्वर्गोत्यभी
ष्टस्तेनरकोदुष्टएवच ५ एकादश्यांनभोक्तव्यंपक्षयोरुभयोरपि भीमसेनउवा० पितामहमहाबुद्धेकथयामितवाग्रतः ६
एकभुक्तेनशक्तोहमुपवासःकुतोमुने वृकनामातुयोवन्हिःससदाजठरेमम ७ अतीवार्थंयदाश्नामितदासमुपशाम्यति एकं
शक्तोस्म्यहंकर्तुंचोपवासमहामुने ८ येनैवप्राप्यतेस्वर्गस्तत्करोमियथातथम् नदेकंवदनिश्चित्ययेनश्रेयोहमाप्नुयाम् ९ व्या
सउवाच श्रुतामेमानवाधर्मावैदकाश्चश्रुतास्त्वया कलौयुगेनशक्यंतेतेवैकर्तुंनराधिप १० स्वल्पोपायंचाल्पधनमल्पक्लेशं
महाफलं पुराणानांचसर्वेषांसारभूतंवदामिते ११ एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांनभुंक्तेयो नयातिनर
कंतुसः व्यासस्यवचनंश्रुत्वाकंपितोश्वत्थपत्रवत् भीमसेनोमहाबाहुर्भीतोवाक्यमभाषत १२ भीमसेनउवाच पितामह

नशक्तोहमुपवासेकरोमिकिं ततोबहुफलंब्रूहिव्रतमेकंममप्रभो १४ व्यासउवा० वृषस्थेमिथुनस्थेवाशुक्लाह्येकादशीभवेत्
ज्येष्ठमासेप्रयत्नेनसोपोष्याजलवर्जिता १५ स्नानेचाचमनेचैववर्जयित्वोदकंबुधः माषमात्रसुवर्णस्ययत्रमज्जतिवैमणिः १६
एतदाचमनंप्रोक्तंपवित्रंकायशोधनम् गोकर्णकृतहस्तेनमाषमात्रंजलंपिबेत् १७ तन्न्यूनमधिकंपीत्वासुरापानसमंभवेत् उपयु-
ञ्जीतनैवान्यंव्रतभंगोन्यथाभवेत् १८ उदयादुदयंयावद्वर्जयित्वातथोदकं अप्रयत्नादवाप्नोतिद्वादशद्वादशीफलम् १९ प्रभातेवि
मलेजातेद्वादश्यांस्नानमाचरेत् जलंसुवर्णंदत्वाचद्विजातिभ्योयथाविधि २० भुंजीतकृतकृत्यस्तुब्राह्मणैःसहितोवशी एवंकृ
तेतुयत्पुण्यंभीमसेनशृणुष्वतत् २१ संवत्सरस्ययामध्येएकादश्योभवंतिवै तासांफलमवाप्नोतिअत्रमेनास्तिसंशयः २२ इति
मांकेशवःप्राहशंखचक्रगदाधरः सर्वधर्मान्परित्यज्यमामेकंशरणंव्रज २३ एकादश्यांनिराहारान्नरःपापात्प्रमुच्यते द्रव्यशु-
द्धिःकलौनास्तिसंस्कारःस्मार्तएवच २४ वैदिकस्यकुतस्त्वास्तेप्राप्तेदुष्टेकलौयुगे किंतुतेबहुनोक्तेनवायुपुत्र पुनःपुनः २५
एकादश्यांनभुंजीतपक्षयोरुभयोरपि एकादश्यांसितेपक्षेज्येष्ठस्योदकवर्जनम् २६ उपोष्यफलमाप्नोतितच्छृणुष्ववृकोदर
सर्वतीर्थेषुयत्पुण्यंसर्वदानेषुयत्फलं २७ तत्फलंसमवाप्नोतिइमांकृत्वावृकोदर संवत्सरेणयाश्चस्युःशुक्लाःकृष्णावृकोदर २८
उपोषितास्ताःसर्वास्युरेकादश्योनसंशयः धनधान्यवहाःपुत्रारोग्यफलप्रदाः २९ उपोषितानरव्याघ्रइतिसत्यंवदामिते
यमदूतामहाकायाःकरालाःकृष्णपिंगलाः ३० दंडपाशधरारौद्रानोपसर्पंतितंनरम् पीतांबरधराःसौम्याश्चक्रहस्तामनोजवाः
३१ अंतकालेनयंत्येवमानवंवैष्णवींपुरीम् तस्मात्सर्वप्रयत्नेनसोपोष्योदकवर्जिता ३२ जलधेनुंतथादत्वासर्वपापैःप्रमु-
च्यते इतिश्रुत्वातदाचक्रुःपांडवाजनमेजय ३३ तथात्वमपिभूपालसोपवासार्चनंहरेः कुरुत्वंचप्रयत्नेनसर्वपापप्रशान्त-
ये ३४ करिष्याम्यद्यदेवेशजलवर्जमुपोषणं भोक्ष्येपरेह्निदेवेशत्वयिसन्तुष्टेवासरात् ३५ इत्युच्चार्यततोमंत्रमुपवासपरो
भवेत् सर्वपापविनाशायश्रद्धादमसमन्वितः ३६ मेरुमंदरमानंतुस्त्रियोवापुरुषस्यवा सर्वंतद्भस्मतांयातिएकादश्याःप्रभावतः

सकांचनःप्रदातव्योघटोवस्त्रेणसंयुतः तोयस्यनियमंतस्यांकुरुतेवैसपुण्यभाक् ३८ पलकोटिसुवर्णस्ययामेयामेऽश्नुतेफलम्
स्नानंदानंजपंहोमंयदस्यांकुरुतेनरः ३९ तत्सर्वंचाक्षयंप्रोक्तमेतत्कृष्णस्यभाषितं किंवापरेणधर्मेणनिर्जलैकादशींनृप ४० उ
पोष्यविधिवद्विष्णोःपदमाप्नुयात् सुवर्णमन्नंवासांसियदस्यांसंप्रदीयते ४१ तस्यैवचकुरुश्रेष्ठसर्वंचाप्यक्षयंभवेत् ए
कादशीदिनेयोन्नंभुंक्तेपापंभुनक्तिसः ४२ इ॰,लोकेसचांडालोमृतःप्राप्नोतिदुर्गतिं येप्रदास्यंतिदानानिद्वादशींसमुपोष्यच ४३
ज्येष्ठमासेसितेपक्षेप्राप्स्यंतिपरमंपदं ब्रह्महामद्यपस्तेनोगुरुद्वेषीसदानृती ४४ मुच्यंतेपातकैःसर्वैर्द्वादशीयैरुपोषिता विशे
षंशृणुकौंतेयनिर्जलैकादशीदिने ४५ यत्कर्तव्यंनरैःस्त्रीभिःश्रद्धादमसमन्वितैः जलशायीतुसंपूज्योदेयाधेनुश्चतन्मयी ४६
प्रत्यक्षवानृपश्रेष्ठघृतधेनुमथापिवा दक्षिणाभिश्चश्रेष्ठाभिर्मिष्टान्नैश्चपृथग्विधैः ४७ तोषणीयाःप्रयत्नेनद्विजाधर्मभृतांवर
तुष्टाभवंतिवैविप्रास्तैस्तुष्टैर्मोक्षदोहरिः ४८ आत्मद्रोहःकृतस्तैस्तुयैरेषासमुपोषिता पापात्मानोदुराचारादुष्टास्तेनात्रसंश
यः ४९ कुलानांचशतंसाग्रमनाचाररतंसदा आत्मनासहसन्नीतंवासुदेवस्यमंदिरं ५० शांतैर्दानपरैश्चैवअर्चद्भिश्चतथाह
रिं कुर्वद्भिर्जागरंरात्रौयैर्नरैःसमुपोषिता ५१ अन्नंपानंतथागावोवस्त्रंशय्यासनंशुभं कमंडलुस्तथाछत्रंदातव्यंनिर्जलादिने
५२ उपानहौचयोदद्यात्पात्रभूतेद्विजोत्तमे ससौवर्णेनयानेनस्वर्गलोकेव्रजेद्ध्रुवं ५३ यश्चेमांशृणुयाद्भक्त्यायश्चापिपरिकीर्तये
त् उभौतौस्वर्गतौस्यातांनात्रकार्याविचारणा ५४ यत्फलंतुसिनीवाल्यांराहुग्रस्तेदिवाकरे कृत्वाश्राद्धंलभेन्मर्त्यस्तदस्याःश्र
वणादपि ५५ नियमंचप्रकुर्वीतदंतधावनपूर्वकं एकादश्यांनिराहारोवर्जयिष्यामिवैजलं ५६ केशवप्रीणनार्थायअन्यदाचम
नादृते द्वादश्यांदेवदेवेशःपूजनीयस्त्रिविक्रमः ५७ गंधपुष्पैस्तथादीपैर्वासोभिःप्रीणयेद्धरिम् पूजयित्वाविधानेनमंत्रमेनमुदी
रयेत् ५८ देवदेवहृषीकेशसंसारार्णवतारक उदकुंभप्रदानेननयमांपरमांगतिम् ५९ ततःकुंभाःप्रदातव्याब्राह्मणेभ्यःस्वश
क्तितः सान्नावस्त्रयुताःपीमछत्रोपानत्फलान्विताः ६० दानान्यन्यानिदेयानिजलधेनुर्विशेषतः भोजयित्वाततोविप्रान्स्वयंभुं

मौनवाग्यतः ६१ एवंयःकुरुतेपूर्णांद्वादशींपापनाशिनीं सर्वपापविनिर्मुक्तः पदंगच्छत्यनामयं ६२ ततःप्रभृतिभीमेनकृतास्त्येका
दशीशुभा पांडवद्वादशीनाम्नालोकेख्यातावभूवह ६३ इतिश्रीब्रह्मवैवर्तपुराणेज्येष्ठशु॰निर्जलैकादशीमा॰संपूर्णम् ७
अथाषाढकृष्णैकादशीकथा युधिष्ठिरउ॰ ज्येष्ठशुक्लेनिर्जलायामाहात्म्यंवैश्रुतंमया आषाढकृष्णपक्षेतुकिंनामैकादशी
भवेत् १ कथयस्वप्रसादेनममाग्रेमधुसूदन श्रीकृष्णउवाच व्रतानामुत्तमंराजन्कथयामितवाग्रतः सर्वपापक्षयकरंभुक्तिमु
क्तिप्रदायकं आषाढस्यासितेपक्षेयोगिनीनामनामतः ३ एकादशीनृपश्रेष्ठमहापातकनाशिनी संसारार्णवमग्नानांपोतरूपास
नातनी ४ जगत्त्रयेसारभूतायोगिनीतिनराधिप कथयामिकथांतस्याःपौराणींपापहारिणीं ५ अलकाधिपतिर्नाम्नाकुबेरःशि
वपूजकः तस्यासीत्पुष्पबटुकोहेममालीतिनामतः ६ तस्यपत्नीसुरूपाचविशालाक्षीतिनामतः सतस्यांस्नेहसंयुक्तःकामपा
शवशंगतः ७ मानसात्पुष्पनिचयमानीयस्वगृहेस्थितः पत्नीप्रेमसमायुक्तोनकुबेरालयंगतः ८ कुबेरोदेवसदनेकरोतिशिवपू-
जनम् मध्याह्नसमयेराजन्पुष्पाणिप्रसमीक्षते ९ हेममालीस्वभवनेरमतेकांतयासह यक्षराट्प्रत्युवाचाथकालातिक्रम-
कोपितः १० कस्मान्नायातिभोयक्षाहेममालीदुरात्मवान् निश्चयःक्रियतामस्यप्रत्युवाचपुनःपुनः ११ यक्षाऊचुः वनिताका-
मुकोगेहेरमतेस्वेच्छयानृप तेषांवाक्यंसमाकर्ण्यकुबेरःकोपपूरितः १२ आह्वयामासतंपूर्णंबटुकंहेममालिनं ज्ञात्वाकालात्ययं
सोपिभयव्याकुललोचनः १३ आजगामनमस्कृत्यकुबेरस्याग्रतःस्थितः तंदृष्ट्वाधनदःक्रुद्धःकोपसंरक्तलोचनः १४प्रत्युवा-
चरुषाविष्टःकोपात्प्रस्फुरिताधरः धनदउवाच रेपापदुष्टदुर्वृत्तकृतवान्देवहेलनम् १५ अतोभवश्वित्रयुक्तोवियुक्तःकांतया-
सदा अस्मात्स्थानादपध्वस्तोगच्छस्थानमथाधमम् १६ इत्युक्तेवचनेतेनतस्मात्स्थानात्पपातसः महादुःखाभिभूतश्चकु
ष्ठपीडितविग्रहः १७ नवैतोयंनभक्ष्यंचवनेरौद्रेलभत्यसौ नसुखंदिवसेतस्यननिद्रांलभतेनिशि १८ छायायांपीडितनतुर्निदा १४८
घेत्यंतपीडितः शिवपूजाप्रभावेनस्मृतिस्तस्यनलुप्यते १९ पातकेनाभिभूतोपिपूर्वकर्मस्मरत्यसौ भ्रममाणस्ततोगच्छद्धिमा

द्विंपर्वतोत्तमम् २० तत्रापश्यन्मुनिवरंमार्कंडेयंतपोनिधिं यस्यायुर्विद्यतेराजन्ब्रह्मणोदिनसप्तकं २१ .मंसगतस्तस्यऋ
षेर्ब्रह्मसदःसमम् ववंदेचरणोतस्यदूरतःपापकर्मकृत् २२ मार्कंडेयोमुनिवरोदृष्ट्वातंकुष्ठिनंतदा परोपकरणार्थायसमाहूयेद
मब्रवीत् २३ मार्कंडेयउवाच कस्मात्कुष्ठाभिभूतस्त्वंकुतोनिंद्यतरोह्यसि इत्युक्तःप्रत्युवाचाथमार्कंडेयंनधीमता २४
हेममाल्युवाच यक्षराजस्यानुचरोहेममालीतिनामतः मानसात्पुष्पनिचयमानीयप्रत्यहंमुने २५ शिवपूजनवेलायांकुबेरायस
मर्पये एकस्मिन्दिवसेकाललोपश्चाविहितोमया २६ पत्नीसौख्यप्रसक्तेनकामव्याकुलचेतसा ततःक्रुद्धेनशप्तोहंराजराजेनवैमु
ने २७ कुष्ठाभिभूतःसंजातोविप्रयुक्तःकांतयासह अधुनातवसान्निध्यंप्राप्तोस्मिशुभकर्मणा २८ सतांस्वभावतश्चित्तंपरोप
करणक्षमम् इतिज्ञात्वामुनिश्रेष्ठशाधिमांचकृतैनसम् २९ मार्कंडेयउवाच त्वयासत्यमिहप्रोक्तंनासत्यंभाषितंयतः अ
तोव्रतोपदेशंतेकरिष्यामिशुभप्रदं ३० आषाढकृष्णपक्षेत्वंयोगिनीव्रतमाचर अस्यव्रतस्यपुण्येनकुष्ठंत्वंमुच्यसेध्रुवम् ३१ इ
तिवाक्यंमुनेःश्रुत्वादंडवत्पतितोभुवि उत्थापितश्चमुनिनाबभूवातीवहर्षितः ३२ मार्कंडेयोपदेशेनकृतंतेनव्रतोत्तमम् तद्व्रतस्य
प्रभावेनदेवरूपोबभूवसः ३३ संयोगंकांतयालेभेबुभुजेसौख्यमुत्तमम् ईदृग्विधंनृपश्रेष्ठकथितंयोगिनीव्रतम् ३४ अष्टाशीति
सहस्राणिद्विजान्भोजयतेतुयः तत्फलंसमवाप्नोतियोगिनीव्रतकृन्नरः ३५ महापापप्रशमनीमहापुण्यफलप्रदा शुभेयंकृष्णै-
कादशीचकथितायोगिनीनृप ३६ इतिश्रीब्रह्मवैवर्तेआषाढकृष्णैकाद० योगिनीना०म् अथ आषाढशुक्लैकादशीकथा
युधिष्ठिरउवाच आषाढस्यसितेपक्षेकिंनामैकादशीभवेत् कोदेवःकोविधिस्तस्याएतदाख्याहिकेशव १ श्रीकृष्णउवा०
कथयामिमहीपालकथामाश्चर्यकारिणीम् कथयामासयांब्रह्मानारदायमहात्मने २ नारदउवाच कथयस्वप्रसादेनविष्णो
राराधनायमे आषाढशुक्लपक्षेतुकिंनामैकादशीभवेत् ३ ब्रह्मोवाच वैष्णवोसिमुनिश्रेष्ठसाधुपृष्टंकलिप्रिय नातःपर-
तरंलोकेपवित्रंहरिवासरात् ४ कर्तव्यंतुप्रयत्नेनसर्वपापापनुत्तये तस्मात्तेहंप्रवक्ष्यामिशुक्लएकादशीव्रतं ५ एकादश्याव्रतंपुण्यं

पापघ्नंसर्वकामदम् नकृतंयैर्नरैर्लोकेतेनरानिरयेषिणः ६ पद्मानामेतिविख्याताशक्लेकादशीसिता हृषीकेशप्रीतयेतुक
र्तव्यंव्रतमुत्तमम् ७ कथयामितवाग्रेहंकथांपौराणिकींशुभाम् यस्याःश्रवणमात्रेणमहापापंप्रणश्यति ८ मांधातानामराज
र्षिर्विवस्वद्वंशसंभवः बभूवचक्रवर्तीससत्यसंधःप्रतापवान् ९ धर्मतःपालयामासप्रजाःपुत्रानिवौरसान् नतस्यराज्येदुर्भि
क्षंनाधयोव्याधयस्तथा १० निरातंकाःप्रजास्तस्यधनधान्यसमन्विताः नान्यायोपार्जितंद्रव्यंकोशेतस्यमहीपतेः ११ तस्यैवं
कुर्वतोराज्यंबहुवर्षगणोगतः अथोकदाचित्संप्राप्तेविपाकेपापकर्मणः १२ वर्षत्रयंतद्विषयेनववर्षबलाहकः तेनोद्विग्नाःप्रजा
स्तत्रबभूवुःक्षुधयार्दिताः १३ स्वाहास्वधावषट्कारवेदाध्ययनवर्जिताः बभूवुर्विषयास्तस्यसस्याभावेनपीडिताः १४ अ
थप्रजाःसमागत्यराजानमिदमब्रुवन् श्रूयतांवचनंराजन्प्रजानांहितकारकम् १५ आपोनाराइतिप्रोक्ताःपुराणेषुमनीषिभिः
अयनंताभगवतस्तेननारायणःस्मृतः १६ पर्जन्यरूपीभगवान्विष्णुःसर्वगतःसदा सएवकुरुतेवृष्टिंवृष्टेरन्नंततःप्रजाः १७
तदभावेननृपतेक्षयंगच्छंतिवैप्रजाः तथाकुरुनृपश्रेष्ठयोगक्षेमोयथाभवेत् राजोवाच सत्यमुक्तंचभवतानमिथ्याभिहि
तंवचः अन्नंब्रह्ममयंप्रोक्तमन्नेसर्वंप्रतिष्ठितं १९ अन्नाद्भवंतिभूतानिजगदन्नेनवर्धते इत्येवंश्रूयतेलोकेपुराणेबहुविस्तरे
२० नृपाणामपचारेणप्रजानांपीडनंभवेत् नाहंपश्याम्यात्मकृतंदोषंबुद्ध्याविचारयन् २१ तथापिप्रयतिष्यामिप्रजानांहितका
म्यया इतिकृत्वामतिंराजापरिमेयबलान्वितः २२ नमस्कृत्यविधातारंजगामगहनंवनं चचारमुनिमुख्यानामाश्रमांस्तपसेधि
तान् २३ ददर्शाथब्रह्मसुतमृषिमंगिरसंनृपः तेजसाद्योतितदिशंद्वितीयमिवपद्मजं २४ तंदृष्ट्वाहर्षितोराजाअवतीर्यचवाह
नात् नमश्चक्रेस्यचरणौकृतांजलिपुटोवशी २५ मुनिस्तमभिनंद्याथस्वस्तिवाचनपूर्वकं पप्रच्छकुशलंराज्येसप्तस्वंगेषुभू
पतेः २६ निवेदयित्वाकुशलंपप्रच्छानामयंनृपः ततश्चमुनिनाराजापृष्टागमनकारणः २७ अब्रवीन्मुनिशार्दूलस्वस्यागमनका
रणम् राजोवाच भगवन्धर्मविधिनाममपालयतोमहीम् २८ अनावृष्टिःसंप्रवृत्तानाहंवेद्म्यत्रकारणम् संशयच्छेदनार्थी

त्यागतोहतवांतिकम् २९ योगक्षेमविधानेनप्र...नाकुरुनिर्वृतिं ऋषिरुवाच एतत्कृतयुगंराजन्युगानामुत्तमंस्मृतं
अत्रब्रह्मोत्तरालोकाधर्मश्चात्रचतुष्पदः ३० अस्मिन्युगेतपोयुक्ताब्राह्मणानेतरेजनाः विषयेतववराजेंद्र १ प्लो पतनस्यति ३१
अकार्यकरणात्तस्यनवर्षतिबलाहकः कुरुतस्यवधेयत्नंयेनदोषःप्रशाम्यति ३२ राजोवाच नाहमेनंवधिष्यामितपस्यंतम
नागसं धर्मोपदेशंकथयत्पुपसर्गविनाशनम् ३३ ऋषिरुवाच यद्येवंताहिंनृपतेकुरुष्वेकादशीव्रतम् शुचिमा-
सेसितेपक्षेपद्मानामेतिविश्रुता ३४ तस्याव्रतप्रभावेनसुवृष्टिर्भविताध्रुवम् सर्वसिद्धिप्रदाह्येषासर्वोपद्रवनाशिनी ३५
अस्याव्रतंकुरुनृपसप्रजःसपरिच्छदः इतिवाक्यंमुनेःश्रुत्वाराजास्वगृहमागतः ३६ आषाढमासेसंप्राप्तेपद्माव्रतमथाक
रोत् प्रजाभिःसहसर्वाभिश्चातुर्वर्ण्यसमन्वितः ३७ एवंकृतेव्रतेराजन्प्रववर्षबलाहकः जलेनप्लाविताभूमिरभवत्सस्य
मालिनी ३८ हृषीकेशप्रसादेनजनाःसौख्यंप्रपेदिरे एतस्मात्कारणादेवकर्तव्यंव्रतमुत्तमम् ३९ भुक्तिमुक्तिप्रदंचैव
लोकानांसुखदायकं पठनाच्छ्रवणादस्याःसर्वपापैःप्रमुच्यते ४० इयमेकादशीराजन्शयनीत्यभिधीयते विष्णोःप्रसाद-
सिद्ध्यर्थमस्यांचशयनव्रतम् ४१ कर्तव्यंराजशार्दूलजनैर्मोक्षेप्सुभिःसदा चातुर्मास्यव्रतारंभोप्यस्यामेवविधीयते ४२
युधिष्ठिरउवाच कथंकृष्णप्रकर्तव्यंश्रीविष्णोःशयनव्रतम् तद्ब्रूहिकृपयादेवचातुर्मास्यव्रतानिच ४३ श्रीकृष्णउ०
शृणुपार्थप्रवक्ष्यामिगोविंदशयनव्रतम् चातुर्मास्येचयान्युक्तान्यासंस्तानिव्रतानिच ४४ कर्कराशिगतेसूर्येशुक्लेतु
पक्षके एकादश्यांजगन्नाथंस्वापयेन्मधुसूदनं ४५ तुलाराशिस्थितेतस्मिन्पुनरुत्थापयेद्धरिम् अधिमासेपिपतितेएषएवं
विधिःक्रमात् ४६ नान्यथास्वापयेद्देवंनचैवोत्थापयेद्धरिम् आषाढस्यसितेपक्षेएकादश्यामुपोषितः ४७ चातुर्मास्यव्र-
तानांतुकुर्वीतपरिकल्पनम् एवंचप्रतिमांविष्णोःस्थापयित्वायुधिष्ठिर ४८ स्नापयेत्प्रतिमांविष्णोःशंखचक्रगदाधराम् पी-
तांबरधरांसौम्यांपर्यंकेवसितेशुभे ४९ सितवस्त्रसमाच्छन्नेसोपधानेयुधिष्ठिर इतिहासपुराणज्ञोब्राह्मणोवेदपारगः ५०

स्नापयित्वादधिक्षीरघृतक्षौद्रसितादिभिः समालिप्यशुभैर्गंधैर्धूपैर्दीपैश्चभूरिशः पूजयेत्कुसुमैःशस्तैर्मंत्रेणानेनपांडव
५१ शायितस्त्वंहृषीकेशपूजयित्वाश्रियासह प्रसादंकुरुदेवेशलक्ष्म्यासहजनार्दन ५२ सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम्
५१ शायितस्त्वंहृषीकेशपूजयित्वाश्रियासह प्रसादंकुरुदेवेशलक्ष्म्यासहजनार्दन ५२ सुप्तेत्वयिजगन्नाथजगत्सुप्तंभवेदिदम्
चरम् एवंतांप्रतिमांविष्णोःस्थापयित्वायुधिष्ठिर ५३ तस्याएवाग्रतःस्थित्वागृण्हीयान्नियमान्नरः चत्वारोवार्षिकान्मासा
न्देवस्योत्थापनावधि ५४ प्रातःसंध्यादिकंसर्वंनित्यकर्मसमाप्यच गृहीष्येनियमान्शुद्धान्निर्विघ्नंकुरुमेप्रभो ५५ इतिसं
प्रार्थ्यदेवेशंप्रह्वःसंशुद्धमानसः स्त्रीवानरोवाभक्तोधर्मार्थंचधृतव्रतः ५६ गृण्हीयान्नियमानेतान्दंतधावनपूर्वकम् व्रत-
प्रारंभकालास्तुप्रोक्ताःपंचैवविष्णुना ५७ उपक्रमंचतुर्मासव्रतानांचनरःशुचिः एकादशीद्वादशीचपौर्णिमाचतथाष्टमी ५८ क
र्कटेचैवसंक्रांतिस्तासुकुर्याद्यथाविधि चतुर्धागृहीत्वैवचीर्णंचातुर्मास्यव्रतंनरः ५९ कार्तिकेशुक्लपक्षेतुद्वादश्यांतत्समापयेत् तेषांफ
लानिवक्ष्यामिकर्तृणांतेपृथक्पृथक् ६० आषाढेशुक्लपक्षेतुएकादश्यामुपोषितः चातुर्मास्यव्रतंकुर्याद्यत्किंचिदवनीपते ६१
नान्यथाचाब्दकंपापंविनिहंतिप्रयत्नतः नैवोद्यापनमोदंयच्चशुक्रगुर्वोर्नवार्धकं ६२ खंडत्वेचिंतयेदादौचातुर्मास्यविधौनरः खं
डांगव्यापीसार्तंडोयद्यखंडाभवेत्तिथिः ६३ अशक्तिर्वाशक्तिर्वापियदिस्त्रीयदिवापुमान् व्रतमेकंनरःकृत्वामुच्यतेसर्वपातकैः
असंक्रांततथामासेदैवेपित्र्येचकर्मणि मलरूपमशौचंचवर्जयेन्मतिमान्नरः ६५ प्रतिवर्षंतुयःकुर्याद्व्रतंवैसंस्मरन्हरिम् देहांते
तिप्रदीप्तेनविमानेनार्कतेजसा ६६ मोदतेविष्णुलोकेसौयावदाभूतसंप्लवं देवतायतनेनित्यंमार्जनंजलसेचनं ६७ प्रलेपनंगो-
मयेनरंगवल्यादिकंतथा यःकरोतिनरःश्रेष्ठचातुर्मास्यमतंद्रितः ६८ सप्ताप्तोचयथाशक्त्याकृत्वाब्राह्मणभोजनं सप्तजन्म
सुविप्रेंद्रःसत्यधर्मपरोभवेत् ६९ दध्नाक्षीरेणचाज्येनक्षौद्रेणासितयातथा स्नापयेद्वाविधिवद्देवंचातुर्मास्येजनाधिप ७० स
यातिविष्णुसारूप्यंसुखमक्षय्यमश्नुते नृपेणभूमिर्दातव्यायथाशक्त्याचकांचनम् ७१ विप्रायदेवमुद्दिश्यसफलंचसदक्षि
णं अक्षय्याल्लभतेभोगान्स्वर्गेइंद्रइवापरः ७२ लोकंचसमवाप्नोतिविष्णोरत्रनसंशयः देवायहेमपद्मंतुदद्यान्नैवेद्यसंयुतम् ७३

गंधपुष्पाक्षताद्यैर्योदेवब्राह्मणयोरपि पूजांयः कुरुतेनित्यंचातुर्मास्येव्रतीनरः ७४ अक्षय्यंस्वर्गमाप्नोतिपुरंदरपुरंव्रजेत् य-
स्तुवैचतुरोमासानतुलस्याहारमर्चयेत् ७५ तुलसींकांचनींकृत्वाब्राह्मणायनिवेदयेत् कांचनेनविमानेनवैष्णवींसगतिंगच्छतेग-
तिं ७६ देवायगुग्गुलंयोवैदीपंचार्पयतेनरः सभोगीजायतेश्रीमान्तथासौभाग्यवानपि ७७ समासेधूपिकांदद्याद्दीपि-
कांचमहामते प्रदक्षिणांतुयः कुर्यान्नमस्कारंविशेषतः ७८ अश्वत्थस्याथवाविष्णोःकार्तिक्यामवधिर्भवेत् पादंपादांत-
रन्यस्यकरौकृत्वाचसंस्तुतौ ७९ स्तुतिंवाचित्तहृदिज्ञानंचतुरंगामदक्षिणा संध्यादीपप्रदोयस्तुप्रांगणेद्विजदेवयोः ८० समासे
दीपिकांदद्याद्वस्त्रंचैकंचकांचनं वायुमालभतेयस्तुतेजस्वीसभवेदिह ८१ वैमानिकोपिवेहवैगंधर्वाप्सरसेवितः विष्णु-
पादोदकंयस्तुपिबेच्छ्रद्धासमन्वितः ८२ विष्णोर्लोकमवाप्नोतिनचास्मिन्जायतेनरः शतमष्टोत्तरंयस्तुगायत्रीजपमाचरेत्
त्रिकालंवैष्णवेहस्यैसनपापेनलिप्यते अक्षसूत्रंपुस्तकंचधत्तेपद्मंकमंडलुं ८४ चतुर्वक्त्रातुगायत्रीश्रोत्रियाणांगृहेस्थिता
सर्वलोकमयीदेवीगायत्रीयात्रयीमयी ८५ नित्याशास्त्रसमाख्यानालोकान्यात्तुप्रबोधयेत् व्यासस्तुष्यतितस्याशुसविष्णुलो-
कंसगच्छति ८६ अध्यापनेशास्त्रपुस्तकंदानमेवच सर्वविद्यासमंशांतकरणंलिखनाक्षरम् पुस्तकंसंप्रयच्छामिप्रीता-
भवतुभारती ८७ पुराणंश्रृणुयान्नित्यंधर्मशास्त्रमथापिवा पुण्यवान्धनवान्भोगीसत्यशौचपरायणः ८८ ज्ञानवान्लो-
कविख्यातोबहुशिष्यःसुधार्मिकः कांचनेनयुतंवस्त्रंपुस्तकंचनिवेदयेत् ८९ नाममंत्रव्रतपरःशंभोर्वाकेशवस्यवा समासे
प्रतिमांदद्यात्तस्यदेवस्यकांचनीं ९० पंचवक्त्रोवृषारूढःप्रतिवक्त्रंत्रिलोचनः कपालशूलखट्वांगीचंद्रमौलिःसदाशिवः ९१
त्वयासु राणाममृतंविहायहालाहलंसंहृतमेवयस्मात् तथासुराणांत्रिपुरंचदग्धमेकेपुणालोकहितार्थमाश ९२ तद्रूपदा-
नादहुपुण्यवांश्चदोषैर्विमुक्तश्चगुणालयोहम् तथाकुरुत्वांशरणंप्रपद्येममप्रभोदेववरप्रसीद ९३ कृतनित्यक्रियोभूत्वासू-
र्यायार्घ्यंनिवेदयेत् सूर्यमंडलमध्यस्थंदेवंध्यात्वाजनार्दनम् ९४ समासेकांचनंदद्याद्रक्तवस्त्रंचगांतथा आरोग्यंपूर्णमायुश्च

कीर्तिलक्ष्मींबलंलभेत् ९५ तिलहोमंतुयः कुर्याच्चातुर्मास्येदिनेदिने भक्त्याव्याहृतिभिर्मन्त्रैर्गायत्र्यावाव्रतान्वितः ९६ अष्टोत्तर
शतंचाथअष्टाविंशतिरेववा तिलपात्रंसमाप्तौतुदद्याद्विप्रायधीमते ९७ वाङ्मनःकायजनितैःपापैर्मुच्येतसंचितैः नरोगैर-
भिभूयेतलभेत्संततिमुत्तमाम् ९८ देवदेवजगन्नाथवांछितार्थफलप्रद तिलपात्रंप्रदास्यामितेनपापंव्यपोहतु ९९ अन्न
होमंतुयः कुर्याच्चातुर्मास्यमतंद्रितः समाप्तौघृतकुंभंतुवस्त्रकांचनसंयुतम् १०० आरोग्यंकांतिमतुलांपुत्रसौभाग्यसंपदः
शत्रुक्षयंचलभतेब्रह्मणाप्रतिमोभवेत् १०१ अश्वत्थसेवांयःकुर्यात्सर्वपापैःप्रमुच्यते विष्णुभक्तोभवेत्पश्चाद्देवेवस्त्रंप्रदाप
येत् २ सकांचनंब्राह्मणायनेवरोगान्सविंदते तुलसींधारयेद्यस्तुविष्णुप्रीतिकरांशुभाम् ३ विष्णुलोकमवाप्नोतिसर्व-
पापैःप्रमुच्यते ब्राह्मणान्भोजयेत्पश्चाद्विष्णुमुद्दिश्यपांडव १०४ यस्तुस्पृशेत्तृषीकेशंदूर्वाममृतसंभवाम् सदाप्रातर्वहेन्मूर्ध्नि
शुभ्रात्मानचक्रतुद्वये १०५ मंत्रेणानेनराजेंद्रलक्ष्मीनाथस्यतुष्टये त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः १०६ सौभाग्यंसंत
तिंदत्वासद्यःकार्यकरीभव व्रतांतेचकुरुश्रेष्ठदूर्वांस्वर्णविनिर्मिताम् १०७ साग्रसर्वदलोपेतांसवस्त्रांद्विजपुंगवे प्रदद्याद्द-
क्षिणासार्द्धंमंत्रेणानेनसुव्रत १०८ यथाशाखाप्रशाखाभिर्विस्तृतासिमहीतले तथाममापिसंतानंदेहित्वमजरामरम् १०९
एवंव्रतंयःकुर्वीतचातुर्मास्यमतंद्रितः नचदुःखभयंतस्यनचरोगभयंभवेत् ११० नाशुभंप्राप्नुयाज्जातुपापेभ्यःप्रविमुच्य
ते भुक्त्वातुसकलान्भोगान्स्वर्गलोकेमहीयते १११ गीतंतुदेवदेवस्यकेशवस्यशिवस्यवा करोतिनित्यमाप्नोतिनिरोजा
गरणेफलं १२ व्रतांतेचव्रतीदद्याद्घंटांदेवायसुस्वराम् गुरोरवज्ञयायच्चानध्यायेध्ययनंकृतं १३ सरस्वतीजगन्नाथज-
गज्जाड्यापहारिणी साक्षाद्ब्रह्मकलत्रंचविष्णुरुद्रादिभिःस्तुता १४ तन्ममाध्ययनोत्पन्नंजाड्यंहरवरानने घंटादानेनतु-
ष्टात्वंब्रह्माणीलोकपालिनी १५ विप्रपादविनिर्मुक्तंतोयंयःप्रत्यहंपिबेत् चातुर्मास्येनरोभक्त्याप्रद्रूपंब्राह्मणंस्मरन् १६
मनोवाक्कायजनितैर्मुक्तोभवतिकिल्बिषैः व्याधिभिर्नाभिभूयेतश्रीरायुस्तस्यवर्धते १७ समाप्तौगोयुगंदद्याद्गामेकांवा-

पयस्विनीम् तत्राप्यशक्तोराजेंद्रदद्याद्दासीयुगंव्रती १८ ब्राह्मणंवंदतेयस्तुसर्वदेवमयंस्मृतम् कृतकृत्योभवेत्सद्यः सर्वपापैः
प्रमुच्यते १९ अक्षय्यंसुखमाप्नोतिपितृभक्तिपरोनरः समासेभोजयेद्विप्रानायुर्वित्तंचवर्द्धते २० सध्याप्राणनरः कृत्वासमाप्तौ
घृतकुंभदः वस्त्रयुग्मंतिलान्घंटांब्राह्मणायनिवेदयेत् २१ सारस्वतंयातितत्वंविद्यावांस्तुभवेद्दिने संस्पर्शेनकपिलांयोवैनित्यं
भक्तिसमन्वितः २२ तामेवालंकृतांदद्यात्सर्वांभूमिमथापिवा सार्वभौमोभवेद्राजादीर्घायुश्चप्रतापवान् २३ दानशीलः सदारं
भः सर्वकंटकवर्जितः रूपवान्भाग्यसंपन्नोलभतेसुखमक्षयम् २४ सवत्सेदिव्रवत्स्वर्गेवत्सरान्रोमसंमितान् नमस्करो
तियः सूर्यंगणेशंवापिनित्यशः २५ आयुरारोग्यमैश्वर्यंलभतेकांतिमुत्तमाम् विघ्नराजप्रसादेनप्राप्नुयादीप्सितंफलम् २६
सर्वत्रविजयंचैवनात्रकार्याविचारणा रविःकार्यःसुवर्णस्यसिंदूरारुणसन्निभः २७ निवेदयेद्ब्राह्मणायसर्वकामार्थसिद्धये
उरसाशिरसादृष्ट्यामनसावचसातथा पद्भ्यांकराभ्यांजानुभ्यांप्रणामोष्टांगउच्यते अष्टांगसहितेनापिनमस्कारेणयोर्चयेत् २९
सयातिगतिमवाप्नोतिनतांक्रतुशतैरपि यस्तुरौप्यंशिवप्रीत्यैदद्यादूर्जाक्रतुद्वये ३० ताम्रंवाभक्त्याहृदद्यात्स्वशक्त्याशिवतुष्टये
सुरूपांल्लभतेपुत्रान्रुद्रभक्तिपरायणान् ३१ समासेमधुपूर्णंतुपात्रंराजन्नमुत्तमम् प्रदद्यात्ताम्रदानेतुताम्रपात्रंगुडान्वितं ३२
ताम्रंपुष्टिकरंदेवदेवप्रीतिकरंशुभं सर्वरक्षाकरंनित्यमतःशांतिंप्रयच्छमे ३३ यस्तुसुप्तेहृषीकेशेस्वर्णदानंस्वशक्तितः व
स्त्रयुग्मंतिलैःसार्द्धंदत्वापापैःप्रमुच्यते ३४ इहभुक्त्वामहाभोगानंतेशिवपुरंव्रजेत् सुवर्णरजतंताम्रंनित्यदानंचधान्य
कम् ३५ नित्यश्राद्धंदेवपूजांसर्वमेतत्सदक्षिणं वस्त्रदानंतुयःकुर्याच्चातुर्मास्येद्विजातये ३६ अभ्यर्च्यगंधपुष्पाद्यैःसविष्णुः
प्रीयतामिति शय्यांदद्यात्समासेतुवासःकांचनपट्टिकां ३७ अक्षय्यंसुखमाप्नोतिधनंचधनदोपमम् योगोपीचंदनंदद्यान्नि
त्यंवर्षासुमानवः ३८ श्रीपतिस्तस्यसंतुष्टोभुक्तिंमुक्तिंददातिच यद्देवांगसंलग्नंकुंकुमादिविलेपनम् ३९ जलक्रीडासुगोपीनां
द्वारवत्यांमृदान्वितम् गोपीचंदनमित्युक्तंमुनींद्रैःकिल्बिषापहं ४० तस्माद्देवप्रयत्नेनविष्णुर्दिशतिवांछितं समासावपतद्द्या

तुलापरिमितंशुभं ४१ तदर्धंवातदर्धंवासवस्त्रंचसदक्षिणं यस्तुसंभेत्हृषीकेशोमत्यहंतुव्रतान्वितः दद्याद्दक्षिणयासार्द्धंश-
र्करामपिवागुडम् अमृतस्यकलाप्रोक्ताइक्षुसारजशर्करा ४३ तस्यादानेनसंतुष्टोभानुर्दिशतिवांछितम् एवंव्रतेतुसंपूर्णेकुर्या
दुद्यापनंबुधः ४४ कारयेत्ताम्रपात्राणिप्रत्येकंतुपलाष्टकं वित्तशाठ्यमकुर्वाणोयद्वापलचतुष्टयम् ४५ अष्टौचत्वार्यथैकंवाप्रत्ये
कंचसशर्करम् दक्षिणाफलवस्त्रेणप्रत्येकंवेष्टितानिच ४६ सहधान्यानिविप्रेभ्यःश्रद्धयाप्रतिपादयेत् ताम्रपात्रंसवस्त्रंच
शर्कराहेमसंयुतं ४७ सूर्यप्रीतिकरंयस्माद्रोगघ्नंपापनाशनं पुष्टिदंकीर्तिदंनृणांनित्यंसंतानकारकम् ४८ सर्वकामप्रदंस्वर्ग्य
मायुर्वर्धनमुत्तमम् तस्मादस्यप्रदानेनकीर्तिरस्तुसदामम ४९ एवंव्रतंतुयःकुर्यात्तस्यपुण्यफलंशृणु गंधर्वविद्यासंपन्नःस
र्वयोषित्प्रियोभवेत् ५० राजापिलभतेराज्यंपुत्रार्थीलभतेसुतान् अर्थार्थीप्राप्नुयादर्थंनिष्कामोमोक्षमाप्नुयात् ५१ य
स्तुवैचतुरोमासान्शाकमूलफलादिकम् नित्यंददातिविप्रेभ्यःशान्त्यायत्सभवेद्द्विजः ५२ व्रतांतेवस्त्रयुग्मंचशक्त्यादद्या-
त्सदक्षिणम् सुखीभूत्वाचिरंकालंराजयोगीभवेन्नरः ५३ सर्वदेवप्रियंयस्माच्छाकंतृप्तिकरंनृणाम् देवर्षिप्रीतिदंकंदमू-
लपत्रसपुष्पकं ५४ ददामितेननंदंत्वाद्याःसदाकुर्वंतुमंगलम् यस्तुसुप्तेत्हृषीकेशेप्रत्यहंतुऋतुद्वये ५५ दद्यात्कटुत्रयंमर्त्योगृहप
र्याप्समाद्दरान् ब्राह्मणायसुशीलायदिनेशप्रीतयेनघ ५६ दक्षिणासहितंविप्रेमंत्रेणाननेनसुव्रत कटुत्रयमिदंयस्माद्रोगघ्नंसर्व
देहिनां ५७ तस्मादस्यप्रदानेनप्रीतोभवतुभास्करः एवंकृत्वाव्रतंसम्यक्कुर्यादुद्यापनंबुधः ५८ कृत्वास्वर्णमयींशुंठींमरीचींमा
गधीमपि सवस्त्रांदक्षिणायुक्तांदद्याद्विप्रायधीमते ५९ एवंव्रतंयःकुरुतेसजीवेच्छरदांशतं भानुमान्दीपितात्मानंतेस्वर्गंव्रजे
दिति ६० मुक्ताफलानियोनित्यंदद्याद्विप्रायसन्मतिः अन्नवान्कीर्तिमान्श्रीमान्जायतेवसुधाधिप ६१ चातुर्मास्येप्रत्यहं-
तुक्षीरकुंभंप्रदापयेत् वेष्टयित्वासुवस्त्रेणफलैर्दक्षिणयासह ६२ सुवासिनीःश्रियंमत्वागंधपुष्पैरथार्चयेत् तांबूलंफलमे-
कंवादद्यात्स्त्रीपतयेपुनः ६३ समासोयोषितंविप्रंसूक्ष्मवस्त्रविभूषणैः मिथुनंपूजयित्वातुजातीपुष्पैःसुशोभनैः ६४ पुमां

स्तु स्त्रियमाप्नोतिनारी भर्तारमाप्नुयात् पुमांस्तु श्रियमाप्नोतिकमलामिवमाधवः ६५ तांबूलदानंयः कुर्याद्दुर्जयेद्वाजितेंद्रियः
रक्तवस्त्रद्वयंदद्यात्करकंचसदक्षिणं ६६ महालावण्यमाप्नोतिसर्वरोगविवर्जितः मेधावीसुभगःप्राज्ञोरक्तकंठश्चजायते ६७
गंधर्वत्वमवाप्नोतिस्वर्गलोकंचगच्छति तांबूलंश्रीकरंभद्रंब्रह्मविष्णुशिवात्मकं ६८ अस्यप्रदानाद्ब्रह्माद्यायाः श्रियंददतुपुष्क-
लाम् पूगेब्रह्माहरिःपत्रेचूर्णेसाक्षान्महेश्वरः ६९ एतेषांसंप्रदानेनसंतुमेभाग्यसंपदः पूरितंपूगचूर्णेननागवल्लीदलान्वितं
७० सचूर्णंखादिरंचैवपत्रीफलसमन्वितम् एलालवंगसंमिश्रंगंधर्वाप्सरसांप्रियम् ७१ कनकत्वंनिरातंकंत्वप्रसादात्कुरुष्वमाम्
चातुर्मास्यव्रतोपेतः सुवासिन्यैद्विजायच ७२ नारीवापुरुषोवापिहरिद्रांसंप्रयच्छति लक्ष्मीमुद्दिश्यगौरींवाताम्रपात्रंदक्षिणान्वि
तं ७३ प्रदद्यात्कुंकुमसंयुक्तंदेवीमेप्रीयतामिति भर्त्रासहसुखंभुंक्तेनारीनार्यातथापुमान् ७४ सौभाग्यमक्षयंधान्यंधनपुत्रस-
मुन्नतिं संप्राप्यरूपलावण्यंदेवीरूपमहीयते ७५ उमामहेशमुद्दिश्यचातुर्मास्येदिनेदिने संपूज्यविप्रमिथुनंतस्मैविभापशक्ति
तः ७६ दद्यात्सदक्षिणंहेमउमेशःप्रीयतामिति उमेशप्रतिमांहैमींदद्यादुद्यापनेबुधः ७७ पंचोपचारैःसंपूज्यधेन्वाचवृषभेण
च भोजयेद्विप्रमिथुनंतस्यपुण्यफलंशृणु ७८ सौभाग्यंपूर्णमायुष्यंसंपत्तिश्चानपायिनी संपत्तिरक्षयाकीर्तिर्जायतेव्रतसंभवात्
७९ इहभुक्त्वाखिलान्कामानंतेशिवपुरंव्रजेत् तत्रस्थित्वाचिरंकालमुपभुज्यसुखंमहत् ८० पुण्यशेषादिहागत्यजायतेधर
णीपतिः फलदानंतुयःकुर्याच्चातुर्मास्यमतंद्रितः ८१ समाप्तौकलधौतानितानिदद्याद्द्विजातये सर्वान्मनोरथान्प्राप्यसंततिंचा
नपायिनीम् ८२ फलदानस्यमाहात्म्यान्मोदतेनंदनेवने पुष्पदानव्रतेचापिस्वर्णपुष्पाणिदापयेत् ८३ ससौभाग्यंपरंप्राप्यगंधर्व
पदमाप्नुयात् वासुदेवंप्रसुप्तेचचातुर्मास्यमतंद्रितः ८४ नित्यंवामनमुद्दिश्यदध्यन्नंस्वादुषड्रसैः भोजयेदथवादद्यादेकादश्यां
नभोजयेत् ८५ दानमेवप्रकुर्वीतग्रहणादौतथैवच अशक्तोनित्यदानंतुकुर्यात्पंचसुपर्वसु ८६ भूताष्टम्याममायांचपूर्णिमायां
तथापिच प्रत्यर्कवारमथवाप्यनिभार्गववासरम् ८७ पक्षद्वयेपिद्वादश्यामवश्यंदानमेवच एवंकृत्वासमाप्नोतुयथाशक्तिमहीं

ददेत् ८८ अशक्तोभूमिदानेतुधेनुंदद्यादलंकृताम् तत्राप्यशक्तोवासश्चसरुक्मंपादुकेतथा ८९ छत्रोपानद्दयंस्वर्णंदानंसर्वंप्रशस्य
ते द्विजानांभोजनंचैववस्त्राणियस्ययथाक्रमम् भूम्यादिमुनिशार्दूलवैश्यस्यवसुधांविना ९० ब्राह्मणस्यापिशक्तस्यशूद्रस्यापि
तथामतम् कुबेरेणपुराचीर्णंशंकरस्योपदेशतः ९१ जन्हुनागौतमेनापिशक्रेणापिकृतंपुरा अक्षय्यमन्नमाप्नोतिपुत्रपौत्रादिसं
पदम् ९२ दृढांगःपूर्णमायुष्यंलभतेवैरिनाशनम् सुस्थिरांविष्णुभक्तिंचनयातिहरिमंदिरम् ९३ आरोग्यंसौख्यमतुलंरूपसं
पत्तिमेवच अवंध्याकर्तृकंचेदमनंतफलदायकम् ९४ नित्यंपयस्विनींदद्यात्सालंकारांकृष्णावहां दत्वातुदक्षिणांशक्त्यासस-
र्वज्ञानवान्भवेत् ९५ नपरंभ्यतांयातिब्रह्मलोकंचगच्छति अक्षय्यंस्वर्गमाप्नोतिपितृभिःसहितोनरः ९६ वार्षिकांश्चतुरो
मासान्प्राजापत्यंचरेन्नरः समाप्तेगोयुगंदद्यात्कृत्वाब्राह्मणभोजनं ९७ सर्वपापविशुद्धात्मायातिब्रह्मसनातनं एकांतरोप
वासैस्तुसौराण्यष्टौप्रदापयेत् ९८ वस्त्रकांचनयुक्तानिशय्ययासहभामिनी अनडुद्वयसंयुक्तंलांगलंकर्षणक्षमम् ९९ सर्वोप-
स्करसंयुक्तंदद्यादभीप्सयताहरिः शाकमूलफलैर्वापिचातुर्मास्यंनयेन्नरः २०० समाप्तेगोप्रदानेनसगच्छेद्विष्णुमंदिरं पयोव्रतीतथा
प्नोतिब्रह्मलोकंसनातनम् १ ब्रतांतेचतथादद्याद्गामेकांचपयस्विनीं रंभायाश्चपलाशेषुयोभुंक्तेचक्रतुद्वये २ वस्त्रयुग्मंचकां
स्यंचशक्त्यादद्यात्सरवीभवेत् कांस्येब्रह्माशिवोलक्ष्मीःकांस्यमेवविभावसुः ३ कांस्यंविष्णुमयंयस्माद्दतःशांतिप्रयच्छमे
नित्यंपलाशभोजीचतैलाभ्यंगविवर्जितः ४ सदहत्यतिपापानितूलराशिमिवानलः ब्रह्म[illegible]बालघातकस्थयः ५
असत्यवादिनोयेचस्त्रीघातीव्रतघातकः अगम्यागामिनश्चैवविधवागामिनस्तथा ६ चांडालीगामिनश्चैवविप्रस्त्रीगामिनस्तथा
तेसर्वेपापनिर्मुक्ताव्रतेनानेनकेशव ७ समाप्तेकांस्यपात्रंतुचतुःषष्टिपलैर्युतम् सवत्सांगांचयोदद्यात्सालंकारांपयस्विनीं ८ अलं
कृतायविदुषेस्ववस्त्रायस्ववैष्णवे भूमौविलिप्ययोभुंक्तेदेवंनारायणंस्मरन् ९ दद्याद्भूमिंयथाशक्तिकृष्यांबहुजलांनिके आरोग्य
पुत्रसंपन्नोराजाभवतिधार्मिकः १० शत्रोर्भयंनलभतेविष्णुलोकंसगच्छति अयाचितेत्वनड्वाहंसहिरण्यंसचंदनं ११ षड्रसंभो

जनंदद्यात्सयातिपरमांगतिं यस्तुसुप्तेहृषीकेशेनक्तंचकुरुतेव्रतम् १२ ब्राह्मणान्भोजयेत्पश्चाच्छिवलोकेमहीयते एकभुक्तेन
रःकृत्वामिताशीचद्दढव्रतः १३ योवर्जयेच्चतुरोमासान्वासकेदेवसनाकभाक् समाप्तौभोजयोद्विप्रान्शान्तपादद्याच्चदक्षिणाम् १४
यस्तुसुप्तेहृषीकेशेक्षितिशायीभवेन्नरः शय्यांसोपस्करांदद्याच्छिवलोकेमहीयते १५ पादाभ्यंगनरोयस्तुवर्जयेच्चकृतुद्वये
पादाभ्यंगंनरःकुर्याद्ब्राह्मणानांचभोजनं १६ दक्षिणांचयथाशक्त्यासगच्छेद्विष्णुमंदिरम् आषाढादिचतुर्मासान्वर्जयेन्नरस्व
कृंतनं १७ आरोग्यपुत्रसंपन्नोराजाभवतिधार्मिकः पायसंलवणंचैवमधुसर्पिःफलानिच १८ चातुर्मास्यवर्जयेत्तनिमोरीशाक
रुतुद्वये कार्तिक्यांचपुनस्तानिब्राह्मणायनिवेदयेत् १९ सरुद्रलोकमाप्नोतिरुद्रव्रतनिषेवणात् यवान्नंभक्षयेद्यस्तुअथवा
शालयःशुभाः २० पुत्रपौत्रादिभिःसार्द्धंशिवलोकेमहीयते तैलाभ्यंगपरित्यागीविष्णुभक्तःसदाव्रती २१ वर्षासुविष्णुम-
भ्यर्च्यवैष्णवींलभतेगतिं समाप्तौकांस्यपात्रंचसुवर्णनसमन्वितं २२ तैलेनपूरितंकृत्वाब्राह्मणायनिवेदयेत् वार्षिकांश्चतु
रोमासान्शाकादिपरिवर्जयेत् २३ विष्णुलोकमवाप्नोतिपितॄनृप्तिःप्रजायते व्रतांतेहरिमुद्दिश्ययपात्रंराजतमेवहि २४ वस्त्रेणवे
ष्टयद्वंधपत्रपुष्पैःसमर्चयेत मूलपत्रकरीराग्रफलकांडादिरूढकाः २५ त्वक्पुष्पंकवचंचेतिशाकमष्टविधंस्मृतम् समभ्यर्च्ययथा
शक्त्याब्राह्मणान्वेदपारगान् २६ दद्याद्दक्षिणयासार्धंव्रतसंपूर्णहेतवे शिवसायुज्यमाप्नोतिप्रसादाच्छूलपाणिनः २७ अपूपव
र्जनंकृत्वाभोजनव्रतमाचरेत् कार्तिकेस्वर्णगोधूमान्पश्चाद्दत्वाश्वमेधकृत् २८ गोधूमाःसर्वजंतूनांबलपुष्टिविवर्धनाः सुरभ्याश्च
हव्यकव्येषुतस्मान्मेददतःश्रियम् २९ आषाढादिचतुर्मासान्वृंताकंवर्जयेन्नरः कारवल्लीफलंवापिआलाबुंपटोलंतथा ३० यद्यत्
फलंप्रियंचास्तिवर्जयेत्तत्रतन्नफलम् चातुर्मास्येतनोद्भेनैरोप्यान्येतानिकारयेत् ३१ मध्येविद्रुममुक्तानिन्यसेत्पित्वातुशक्तितः
दद्याद्दक्षिणयासार्द्धंब्राह्मणायातिभक्तितः ३२ अभीष्टंदेवमुद्दिश्यदेवोमेप्रीयतामिति सदीर्घमायुरारोग्यंपुत्रपौत्रान्सरूपता
म् ३३ अक्षय्यांसंततिंकीर्तिंलब्ध्वास्वर्गेमहीयते फलत्यागीभवेद्यस्तुविष्णुलोकेसपूज्यते ३४ समाप्तौकलधौतानितानिदद्या

द्विजातंय श्रावणेवर्जयेच्छाकंदधिभाद्रपदेतथा ३५ दुग्धमाश्वयुजेमासिकार्तिकेद्विदलंत्यजेत् चत्वार्येतानिनित्यानिचतुरा
श्रमवर्तिनाम् ३६ प्रथमेमासिकर्तव्यंनित्यंशाकव्रतंनरैः द्वितीयेमासिकर्तव्यंदधिव्रतमनुत्तमम् ३७ पयोव्रतंतृतीयेतुचतुर्थेद्वि
दलंतथा कूष्मांडंराजमाषांश्चमूलकं गृंजनंतथा ३८ कबमर्दंचेक्षुदंडंचातुर्मास्येत्यजेन्नरः मसूरंबहुबीजंचवृंताकंचैववर्
जयेत् ३९ नित्यान्येतानिविप्रेंद्रव्रतान्याहुर्मनीषिणः शिंशिपाहुदुंबरींधात्रीमलाबुंचिंचिणींत्यजेत् ४० जीर्णधात्रीफलंग्राह्यं
जीर्णाग्राह्याचचिंचिणी वार्षिकांश्चतुरोमासानभक्तेनैवजनार्दने ४१ मंचस्थद्वादिशयनंवर्जयेद्भक्तिमान्नरः अनृतौवर्जयेद्भा
र्यांभक्तोगच्छन्नदुष्यति ४२ मधुवल्लींचशिग्रुंचचातुर्मास्येत्यजेन्नरः वृंताकंचकलिंगंचबिल्वोदुंबरभिःसदाः ४३ उदरेयस्य
जीर्यंतेतस्यदूरतरोहरिः उपवासस्तथानक्तमेकभक्तमयाचितम् ४४ अशक्तस्तुयथाकुर्यात्सायंप्रातररवंडितं स्नानपूजादि
संयुक्तःसनरोहरिलोकभाक् ४५ गीतवाद्यकरोविष्णोर्गांधर्वंलोकमाप्नुयात् मधुस्वरश्चभवेद्राजापुरुषोगुडवर्जनात् ४६
लभेच्चसंततिंदीर्घांपुत्रपौत्रादिवर्धिनीम् तैलस्यवर्जनाद्राजन्सुंदरांगःप्रजायते ४७ कौसुंभतैलसंत्यागाच्छत्रुनाशमवाप्नु
यात् मधूकतैलत्यागाच्चसुसौभाग्यफलंलभेत् ४८ पुष्पादिभोगत्यागेनस्वर्गेविद्याधरोभवेत् योगाभ्यासीभवेद्यस्तुस
ब्रह्मपदवीमियात् ४९ कटुतिक्तंचमधुरकषायलवणान्रसान् वर्जयेत्सचवैरूप्यंदौर्गंध्यंनाप्नुयात्सदा ५० तांबूलवर्जनाद्रोगी
सद्योमुक्तामयोभवेत् पादाभ्यंगपरित्यागाच्छिरोभ्यंगस्यपार्थिव ५१ दीप्तिमान्दीप्तकरणोयक्षद्रव्यपतिर्भवेत् दधिदुग्ध
परित्यागीगोलोकंलभतेनरः ५२ इहलोकमवाप्नोतिस्थालीपाकविवर्जनात् एकांतरोपवासेनब्रह्मलोकेमहीयते ५३ च
तुरोवार्षिकान्मासान्नखरोमाणिधारयेत् फलस्त्यागीभवेद्राजन्सनरोनात्रसंशयः ५४ नमोनारायणायेतिजपित्वानंत
कंफलम् विष्णुपादांबुजस्पर्शात्कृतकृत्योभवेन्नरः ५५ लक्षप्रदक्षिणायस्तुकरोतिहरिमव्ययम् हंसयुक्तविमानेन
सयातिवैष्णवींपुरीम् ५६ त्रिरात्रभोजनत्यागान्मोदतेदिविदेववत् परान्नवर्जनाद्राजन्देवोवैमानुषोभवेत्‌· ५७ प्राजापत्यं

चरेद्योवैचातुर्मास्यव्रतंनरः मुच्यतेपातकैः सर्वैस्त्रिविधैर्नात्रसंशयः ५८ नसकृच्छ्रानिकृच्छ्राण्यायः क्षिपेच्छयनंहरेः सयातिपरमं-
स्थानंपुनरावृत्तिवर्जितम् ५९ चांद्रायणेनयोराजन्क्षिपेन्मासचतुष्टयम् दिव्यदेहोभवेत्सोथशिवलोकंचगच्छति ६० चातु-
र्मास्येनरोयोवैत्यजेदन्नादिभक्षणम् सगच्छेद्धरिसायुज्यंनभूयस्तुभजायते ६१ भिक्षाभोजीनरोयोहिसभवेद्वेदपारगः
पयोव्रतेनयोराजन्क्षिपेन्मासचतुष्टयम् ६२ तस्यवंशसमुच्छेदःकदाचिन्नोपपद्यते पंचगव्याशनःपार्थचांद्रायणफलंलभेत्
६३ दिनत्रयंजलत्यागान्नरोगैरभिभूयते एवमादिव्रतैःपार्थतुष्टिमायातिकेशवः ६४ सूतउवाच शृणुध्वंऋषयःसर्वेश्रावणे
व्रतमुत्तमं सर्वदुःखोपशमनंसर्वसंपत्प्रदायकं ६५ यमस्यदंडनंयस्मात्द्रोहकृतमनुत्तमम् सुवासिनीनांसौभाग्यपुत्रपौत्रप्रव
र्धनम् ६६ ऋषयऊचुः कस्मिन्मासिकथंकृत्वाकिंफलंकस्यपूजनं कोविधिःकेचनियमास्तत्सर्वंकथयस्वनः ६७ सूतउ०
श्रावणेशुक्लपक्षस्यप्रतिपद्यांविशेषतः तदारभ्यचदर्शांतमाचरेद्व्रतमुत्तमम् ६८ युधिष्ठिरउ० यत्कृत्वामुच्यतेजंतुर्महापातक
पंचकात् तत्सर्वंब्रूहिगोविंदयदितुष्टोसिकेशव ६९ श्रीकृष्णउवाच श्रावणस्यविधिंवक्ष्येसम्यक्शृणुयुधिष्ठिर यच्छ्रुत्वा-
सादरंभूयोननरोजायतेभुवि ७० पुण्यमासेसितेपक्षेप्रतिपद्यारभेद्व्रतम् एतेष्वन्यतमंपक्षंसमारभ्यव्रतंचरेत् ७१ नभमासे
प्रियंदेवमर्कंगणपतिंशिवां उमापतिंचसहितंमाधवंपूजयेन्नरः ७२ पंचामृतैर्गंधपुष्पैर्नैवेद्यैर्धूपदीपकैः नपुष्पैःपूजयेद्यस्तु
माधवंचशिवापतिं ७३ कुलनाशोभवेत्तस्यपुण्यंतस्यविनश्यति श्रावणेपूजयेद्देवंबिल्वपत्रैश्चपुष्पकैः ७४ कुलकोटिसमायुक्तोसौ
दत्तेविष्णुमंदिरे मौल्यादानायपुष्पार्थंस्त्रीशूद्रादीन्नृपोत्तम ७५ ब्राह्मणैःकारयेत्पूजांमासमेकंनिरंतरम् माधवंतुलसीपत्रैःक
र्कटस्थेदिवाकरे ७६ सकृदभ्यर्च्यदेवेशंनपुनर्जायतेभुवि यःकुर्यात्तुलसीहीनांश्रावणेसिद्धगेरवौ ७७ कुलानांचशतंतस्य
नरकेपातयत्यसौ योर्चयेद्बिल्वपत्रेणशिवंगणपतिंशिवाम् ७८ कुलकोटिसमायुक्तोशिवलोकेमहीयते पितॄन्गुरूनसमुद्दिश्य
तुलसींविष्णवेर्पिता ७९ ब्रह्महत्याकोटिशतमगम्यानांसहस्रकम् यःपूजयतिदेवेशंकमलैःकमलेक्षणम् ८० तस्यपुण्यफलं

वक्तुंकःशक्तोदिविवाभुवि श्रावणेमासियोदद्याज्जातीपुष्पमुमापतिम् ८१ जन्मकोटिसहस्रेषुनदरिद्रोभवेन्नरः वैधव्यंनैवमाप्नोतिना
रीजन्मशतेष्वपि ८२ नारीवापुरुषोवापिनभःपुष्पंसुगंधिच दत्वाचैकंमहाविष्णोर्ब्रह्महत्यांव्यपोहति ८३ दशांगंगुग्गुलंधूपं
समर्पयतिविष्णवे नतस्यसंततेर्हानिर्नपापीजायतेकुले ८४ घंटानादंतुयःकुर्यात्पूजाकालेमहात्मनः स्तूयमानोमुनिग
णैर्विष्णुलोकेमहीयते ८५ घंटानादविहीनंतुयःकुर्याद्देवतार्चनं सभुंक्तानरकान्घोरान्समूकोबधिरोभवेत् ८६ दीपदा
नंतुयःकुर्याद्देवायपरमात्मने अज्ञानांधतमोभित्वासाक्षात्पश्यतितंहरिं ८७ दीपायतैलवर्तिंवापात्रंवायोददातिच स्त्री
नरास्यपुनःकर्मलेशमात्रंनविद्यते ८८ तैलपात्रंतथावर्तिंनददातिस्वशक्तितः अभावेसर्वथाकुर्यात्सरदीपप्रबोधनम् ८९
भूत्वापश्चाद्द्विजकुलेजन्मसोपिमहायशाः कर्पूरस्यार्तिकंभक्त्याविष्णोर्यस्तुनिवेदयेत् ९० ब्रह्मलोकंसमासाद्यभुक्त्वाभोगा
न्मनोरथान् नभेमासिशिवंविष्णुंकुर्याद्यःप्रदक्षिणं ९१ पदेपदेश्वमेधस्यफलंप्राप्नोतिनित्यशः एवंसंपूज्यदेवेशंकथां-
श्रुत्वाहरेरिमाम् ९२ एवंस्नात्वामासमेकमर्चयेन्माधवंशिवं इमाःकथास्तथाश्रुत्वानगर्भेवसतिध्रुवं ९३ युधिष्ठिरउवाच
तववागमृतंपीत्वातृप्तिर्नासीन्ममात्मनः विनाजडमतिंलोकेश्रवणात्कोनुतृप्यति ९४ भूयःश्रावणमाहात्म्यंनात
विस्तरतोवद श्रीभगवानुवा० शृणुराजेंद्रवक्ष्यामिनभोमाहात्म्यमुत्तमं ९५ यत्ज्ञात्वाजायतेश्रद्धामनसोमहदंह
सः श्रावणेतुसरेवतिप्तनयःस्नायादुष्णवारिणा ९६ वह्निराशौमहाघोरपतत्याशुनसंशयः श्रावणेमाधवंदेवंपंचामृतैस्ना
पयेद्यदि ९७ स्नापयेत्पंचगव्येनसकोटिकुलमुद्धरेत् रुद्रसूक्तेनदेवेशंस्नापयेन्माधवंशिवं ९८ कल्पकोटिसहस्राणि
मोदतेशिवमंदिरे श्रावणेमासिराजेंद्रयःकुर्यान्नक्तभोजनं ९९ अश्वमेधफलंप्राप्यशिवलोकंचगच्छति यःकुर्याच्छ्रावणे
मासिमुनिपत्रेषुभोजनं १०० ब्रह्मलोकंसमासाद्यमोदतेब्रह्मवर्चसा शिवंविष्णुंसमुद्दिश्यब्राह्मणान्भोजयेद्यदि १ श्रा १५५
वणेशुक्लद्वादश्यांमुच्यतेचऋणत्रयात् श्रावणेमासिकर्तव्यंफलराशिविमोक्षणम् २ तस्यवैसंततेर्हानिराकल्पंनैवजायते

योदद्याच्छ्रावणेमासिमातुलिंगंद्विजातये ३ तस्यपुत्रोभवेद्राजन्सर्वपापैःप्रमुच्यते श्रावणेतुव्यतीपातेब्राह्मणान्भोजयेद्यदि ४
पायसेनघृताक्तेनवंध्यापुत्रमवाप्नुयात् येचविष्णुकथासक्तायेचतद्यजनाशयाः ५ गायत्रीजपनिरतानतेयांतियमालयम् स
हस्रनामपठनेनिरतास्तोत्रपाठकाः ६ गीतापाठेचनिरतास्तेनयांतियमालयम् गोदानस्यप्रदातारःशिवयात्रापरायणाः ७ गो
पीचंदनलिप्तांगानतेयांतियमालयम् येषांगृहेअग्निहोत्रंपुस्तकंभागवतस्यच ८ गीतायाःपुस्तकंवापिनतेयांतियमालयम् रुद्रा
क्षंचप्रवालंचहेममुक्तागलेस्थिताः ९ धारयन्खड्गपात्रंचनतेयांतियमालयम् श्रावणेमासिकर्तव्यंसोमवारव्रतंशुभम् १० नक्त
व्रतंप्रदोषंचकर्तव्यंविधिपूर्वकं इत्यादिष्टाभगवताऋषयःशंसितव्रताः ११ सदाविष्णुकथासक्तचेतसाभावितात्मना कर्मलोप
पूरणंतिकृत्वाकृत्वाप्यहर्निशम् १२ स्नात्वाविष्णुकथांश्रुत्वातथासंपूज्यमाधवम् सर्वबंधादिनिर्मुक्तोविष्णोःसायुज्यमाप्नुयात् १३
आदावंतेतथामध्येयथाशक्तियथारुचि उद्यापनंविनाराजन्फलंनैवभवेत्क्वचित् १४ तस्मात्सर्वप्रयत्नेनउद्यापनविधिंचरेत्
पंचाशद्वाशतंवापिब्राह्मणान्भोजयेत्ततः १५ एतच्छास्त्रप्रवक्तारंयथाविभवमर्चयेत् अपूजयित्वावक्तारंयःशृणोतिकथामि
माम् १६ इक्षुयंत्रेचिरंस्थित्वाभुविव्यालोहिजायते नशृणोतिकथांयस्तुवाच्यमानांद्विजोवरः १७ अरण्येनिर्जलेदेशेभ
वतिब्रह्मराक्षसः धर्मशास्त्रप्रवक्तारंशांतंदांतंजितेंद्रियम् १८ मिष्टान्नैर्भोजयेद्यस्तुसर्वपापैःप्रमुच्यते अनेनविधिनाय
स्तुचातुर्मास्यव्रतंचरेत् १९ तस्यपुण्यफलंवक्तुंविष्णुर्ब्रह्माशिवोयमः नेंद्रोनसूर्योवरुणोमन्वाद्याःकिमुतापरे २० व्रतैरने
कैर्नियमैःपांडवश्रेष्ठभावनः कल्पस्थायीविष्णुलोकेवसतेनात्रसंशयः २१ ततोविवाहयेद्देवंशंखचक्रगदाधरम् कार्तिकेशु
क्लपक्षस्यत्वेकादश्यांपृथासुत २२ उत्तिष्ठोत्तिष्ठदेवेशयोगनिद्रांविहायच लक्ष्मींविसृज्यलोकेत्वमलक्ष्मींनुदकेशव २३
शृणोतिध्यातियस्तोतिजुहोत्याख्यातियोनरः हरेर्भक्तिकरःपार्थसगच्छेद्वैष्णवंपदम् २४ दुग्धाब्धिवीचिशयनेभगवाननं
तोयस्मिन्दिनेस्वपितिचाथविबुध्यतेच तस्मिन्ननन्यमनसामुपवासभाजांपुंसांददातिचगतिंगरुडासनोसौ २५ इतिश्री

भविष्योत्तरपु॰ विष्णोः शयन्येकादशीचा॰ मा॰ श्रावणकृ॰ सं॰ अथश्रावणकृष्णेकादशीकथा युधिष्ठिरउ॰ आषाढस्यशुक्ले
पक्षेतुयद्देवशयनव्रतम् तन्मयाश्रुतपूर्वंहिपुराणेबहुविस्तरं १ श्रावणेकृष्णपक्षेतुकिंनामैकादशीभवेत् एतत्कथयगोविंद
वासुदेवनमोस्तुते २ श्रीकृष्णउ॰ शृणुराजन्प्रवक्ष्यामिव्रतंपापप्रणाशनं नारदायपुराराजन्पृच्छतेचपितामहः ३ परंयदुक्तवा-
न्तानन्तदहंतेवदामिच नारदउवाच भगवन्श्रोतुमिच्छामित्वत्तोहंकमलासन ४ श्रावणस्यासितेपक्षेकिंनामैकादशीभवेत् कोदे-
वः कोविधिस्तस्याः किंपुण्यंकथयप्रभो ५ ब्रह्मोवाच शृणुनारदतेवच्मिलोकानांहितकाम्यया श्रावणेकादशीकृष्णाकामिकेति
चनामतः ६ तस्याः श्रवणमात्रेणवाजपेयफलंलभेत् तस्यांयःपूजयेद्देवंशंखचक्रगदाधरम् ७ श्रीधराख्यंहरिंविष्णुंमाधवंमधुसूदनं
यजेतध्यायतेयोवैतस्यपुण्यफलंशृणु ८ नगंगायांनकाश्यांवैनैमिषेनचपुष्करे नतत्फलंसमवाप्नोतियत्फलंविष्णुपूजनात् ९ केदारे
चकुरुक्षेत्रेराहुग्रस्तेदिवाकरे नतत्फलमवाप्नोतियत्फलंकृष्णपूजनात् १० ससागरवनोपेतांयोददातिवसुंधरां गोदावर्यांगुरौसिंहे
व्यतीपातेचगंडके ११ नतत्फलमवाप्नोतियत्फलंकृष्णपूजनात् कामिकाव्रतकारीचतुल्यंसोफलसंमोस्मृतो १२ प्रसूयमानांयोधेनुं
दद्यात्सोपस्करांनरः नतत्फलंसमवाप्नोतिकामिकाव्रतकारकः १३ श्रावणेश्रीधरंदेवंपूजयेद्योनरोत्तमः तेनेवपूजितादेवागं-
धर्वोरगपन्नगाः १४ तस्मात्सर्वप्रयत्नेनकामिकादिवसेहरिः पूजनीयोयथाशक्त्यामनुष्यैःपापभीरुभिः १५ संसारार्णवम
ग्नायेपापपंकसमाकुलाः तेषामुद्धरणार्थायकामिकाव्रतमुत्तमम् १६ नातःपरतराकाचित्पवित्रापापनाशिनी गर्वनारदजा
नीहिस्वयमाहपुराहरिः १७ अध्यात्मविद्यानिरतैर्यत्फलंप्राप्यतेनरैः ततोबहुतरंविद्धिकामिकाव्रतसेवनात् १८ रात्रौजा
गरणंकुर्यात्कामिकाव्रतकृन्नरः नपश्यतियमंरौद्रंनैवपश्यतिदुर्गतिं १९ नपश्यतिकुयोनिंचकामिकाव्रतसेवनात् कामिका
याव्रतेनैवकैवल्यंयोगिनोगताः २० सर्वैःसर्वप्रयत्नेनकर्तव्यानियतात्मभिः तुलसीप्रभवैःपत्रैर्योनरःपूजयेद्धरिम् २१ 
नवैसलिप्यतेपापैःपद्मपत्रमिवांभसा स्वर्णभारमेकंतुरजतंचचतुर्गुणम् नतत्फलंसमवाप्नोतितुलसीदलपूजनात् २२

रत्नमौक्तिकवैडूर्यप्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूजनाद्यथा २३ तुलसीमंजरीभिस्तुपूजितोयेनकेशवः आ
जन्मकृतपापस्यतेनसंमार्जिताऽलिपिः २४ यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनीरोगाणामभिवंदितानिरसनीसिक्तांतकत्रा
सिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपितान्यस्तातच्चरणेविमुक्तिफलदातस्यैतुलस्यैनमः २५ दीपंददातियोमर्त्योदिवा
रात्रौहरेर्दिने तस्यपुण्यस्यसंख्यानंचित्रगुप्तोपिवेत्तिन २६ कृष्णाग्रेदीपकोयस्यज्वलेदेकादशीदिने पितरस्तस्यतृप्यंतिअमृतेनदि
विस्थिताः २७ घृतेनदीपंप्रज्वाल्यतिलतैलेनवापुनः प्रयातिसूर्यलोकेसौदीपकोटिशतैर्वृतः २८ अयंतवाग्रेकथितःकामिकाम
हिमामया अतोनरैःप्रकर्तव्यासर्वपापकहारिणी २९ ब्रह्महत्यापहरिणीभ्रूणहत्याविनाशिनी त्रिदिवस्थानदात्रीचमहापुण्यफलप्रदा
३० श्रुत्वामाहात्म्यमेतस्यानरःश्रद्धासमन्वितः विष्णुलोकमवाप्नोतिसर्वपापैःप्रमुच्यते ३१ इतिश्रीब्र० वैव० श्रा० कृ० कामिकाना०
माहात्म्यंसंपूर्णं अथश्रावणशुक्लैकादशीकथा युधिष्ठिरउवाच श्रावणस्यसितेपक्षेकिंनामैकादशीभवेत् कथयस्वप्रसादेन
ममाग्रेमधुसूदन १ श्रीकृष्णउवाच शृणुष्वावहितोराजन्कथांपापहरांपराम् यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् २ द्वापर
स्ययुगस्यादौपुरामाहिष्मतीपुरे राजामहीजिदाख्यातोराज्यंपालयतिस्वयं ३ पुत्रहीनस्यनस्यैवनतद्राज्यंसुखप्रदं अपुत्रस्यसुखंना
स्तिइहलोकेपरत्रच ४ यततोस्यसुतप्राप्तौकालोबहुतरोगतः नप्राप्तश्चसुतोराज्ञासर्वसौख्यप्रदोनृणां ५ दृष्ट्वात्मानंप्रवयसंराजा-
चिंतापरोभवत् सदोगतःप्रजामध्येइदंवचनमब्रवीत् ६ इहजन्मनिभोलोकानमयापातकंकृतं अन्यायोपार्जितंवित्तंक्षिप्तंकोशेमया
नहि ७ ब्रह्मस्वंदेवद्रविणंनगृहीतंमयाक्वचित् न्यासापहारोनकृतःपरस्यबहुपापदः ८ कृतवत्पालितालोकाधर्मेणविजितामही दु
ष्टेषुपातितोदंडोबंधुपुत्रोपमेष्वपि ९ शिष्टाःसुपूजितालोकाद्वेष्याश्चापिमहाजनाः १० इत्येवंव्रजतोमार्गेधर्मयुक्तेद्विजोत्तमाः क
स्मान्ममगृहेपुत्रोनजातस्तद्विचार्यताम् ११ इतिवाक्यंद्विजाःश्रुत्वासप्रजाःसपुरोहिताः मंत्रयित्वानृपहितंजग्मुस्तेगहनंवनम् १२
इतस्ततश्चपश्यंतआश्रमानृषिसेवितान्नृपतेर्हितमिच्छंतोददृशुर्मुनिसत्तमं १३ तप्यमानंतपोघोरंचिदानंदंनिरामयं निराहारंजि

तात्मानंजितक्रोधंसनातनं १४ लोमशंधर्मतत्त्वज्ञंसर्वशास्त्रविशारदं दीर्घायुषंमहात्मानमनेकब्रह्मसंमितं १५ कल्पेगतेयस्यचैक
मेकंलोमविशीर्यते अतोलोमशनामानंत्रिकालज्ञंमहामुनिं १६ तंदृष्ट्वाहर्षिताःसर्वेआजग्मुस्तस्यसन्निधौ यथान्यायंयथार्हं
तेनमश्चक्रुर्यथोदितम् १७ विनयावनताःसर्वेऊचुश्चैवपरस्परं अस्मद्भाग्यवशादेवप्राप्तोयंमुनिसत्तमः १८ तांस्तथाप्रणता
न्दृष्ट्वाब्रुवाचमुनिसत्तमः लोमशउ० किमर्थमिहसंप्राप्ताःकथयध्वंस्वकारणम् १९ मद्दर्शनाल्हादगिरःस्तुवंतइहमांकि
मु असंशयंकरिष्यामिभवतांयद्धितंभवेत् २० परोपकृतयेजन्ममादृशानांनसंशयः जनाऊचुः श्रूयतामभिधास्यामोव
यमागमकारणम् २१ संशयच्छेदनार्थायत्तवसन्निधिमागताः पद्मयोनेःपरतरस्त्वत्तःश्रेष्ठोनविद्यते २२ अतःकार्यवशात्प्राप्ताः
समीपंभवतोवयम् महीजिन्नामराजासौपुत्रहीनोस्तिसांप्रतं २३ वयंतस्यप्रजाब्रह्मन्पुत्रवत्तेनपालिताः तंपुत्ररहितंदृष्ट्वा
तस्यदुःखेनदुःखिताः २४ तपःकर्तुमिहायातामतिंकृत्वातुनैष्ठिकीम् तस्यभाग्यवशाद्दृष्टस्त्वमस्माभिर्द्विजोत्तम २५ म
हतांदर्शनेनैवकार्यसिद्धिर्भवेन्नृणाम् उपदेशंवदमुनेराज्ञःपुत्रोयथाभवेत् २६ इतितेषांवचःश्रुत्वामुहूर्तंध्यानमास्थितः प्र
त्युवाचमुनिर्ज्ञात्वातस्यजन्मपुरातनम् २७ लोमशउवाच पूर्वजन्मनिवैश्योयंधनहीनोनृशंसकृत् वाणिज्यकर्मणिरतोग्रा
माद्ग्रामांतरंभ्रमन् २८ ज्येष्ठमासिसितेपक्षेदशमीदिवसेतथा मध्यान्हेद्युमणौप्राप्तेग्रामसीम्निजलाशये २९ कूपिकां-
सजलांदृष्ट्वाजलपानेमनोदधौ सद्यःसूतासवत्साचधेनुस्तत्रसमागता ३० तृषार्तातपनिदाघार्तातस्यानीरंपपौतुसा पिबंतीं
वारयित्वातामसौतोयंस्वयंपपौ ३१ कर्मणस्तस्यपाकेनसपुत्ररहितोनृपः पूर्वजन्मकृतात्पुण्यात्प्राप्तंराज्यमकंटकं ३२
जनाऊचुः पुण्यात्पापंक्षयंयातिपुराणेश्रूयतेमुने पुण्योपदेशंकथययेनपापक्षयोभवेत् ३३ यथाभवत्प्रसादेनपुत्रो
स्यभवितानघ लोमशउवाच श्रावणेशुक्लपक्षेतुपुत्रदानामविश्रुता एकादशीतिथिश्चास्तिकुरुध्वंतद्व्रतंजनाः ३४ य
थाविधियथान्यायंयथोक्तंजागरान्वितम् तस्याःपुण्यंस्फुविमलंददंतुनृपतेर्जनाः ३५ एवंकृतेसतिनियतंराज्ञःपुत्रोभविष्यति श्रु

स्वैतल्लोमशक्वस्तंप्रणम्यद्विजोत्तमं ३६ प्रजग्मुःस्वगृहान्सर्वेहर्षोत्फुल्लविलोचनाः श्रावणंतुसमासाद्यस्मृत्वालोमशभाषितम् ३७ राज्ञास
हव्रतंचक्रुःसर्वेश्रद्धासमन्विताः द्वादशीदिवसेपुण्यंददुर्नृपतयेजनाः ३८ दत्तेपुण्येयथाराज्ञीगर्भमाधत्तशोभन मासप्रसवकालेसा
सुषुवेपुत्रमूर्जितम् ३९ एवमेषानृपश्रेष्ठपुत्रदानामविश्रुता कर्तव्यासुखमिच्छद्भिरिहलोकेपरत्रच ४० श्रुत्वामाहात्म्यमेतस्याःसर्वपा
पैःप्रमुच्यते इहपुत्रसुखंप्राप्यपरत्रस्वर्गतिर्भवेत् ४१ इतिश्रीभविष्योत्तरपु० श्रावणशु० पुत्रदानाम्न्यामा० संपूर्णम् अथभा-
द्रपदकृष्णैकादशीकथा युधिष्ठिरउवाच भाद्रस्यकृष्णपक्षेतुकिंनामैकादशीभवेत् एतदिच्छाम्यहंश्रोतुंकथयस्वजनार्दन १
श्रीकृष्णउवा० शृणुष्वैकमनाराजन्कथयिष्यामिविस्तरात् अजेतिनामतःप्रोक्तासर्वपापप्रणाशिनी २ पूजयित्वाहृषीकेशंव्रतंतस्याः
करोतियः पापानितस्यनश्यंतिव्रतस्यश्रवणादपि ३ नातःपरतराराजन्लोकद्वयहितावहा सत्यमुक्तंमयाह्येतन्नासत्यंभाषितंम
म ४ हरिश्चंद्रइतिख्यातोबभूवनृपतिःपुरा चक्रवर्तीसत्यसंधःसमस्तायाभुवःपतिः ५ कस्यापिकर्मणोयोगाद्राज्यभ्रष्टोबभूवसः
विक्रीत्वावनितांपुत्रंसचकारात्मविक्रयं ६ पुल्कसस्यचदासत्वंगतोराजासपुण्यकृत् सत्यमालंब्यराजेंद्रमृतचैलापहारकः ७ सोभ
वन्नृपतिश्रेष्ठोनसत्याच्चलितस्तथा एवंगतस्यनृपतेर्बहवोवत्सरागताः ८ ततश्चिंतापरोराजाबभूवात्यंतदुःखितः किंकरोमिक्कग
च्छामिनिष्कृतिर्मेकथंभवेत् ९ इतिचिंतयतस्तस्यमग्नस्यवृजिनार्णवे आजगाममुनिःकश्चिज्ज्ञात्वाराजानमातुरं १० परोपकरणा
र्थायनिर्मितोब्रह्मणाद्विजः सतंदृष्ट्वाद्विजवरंननामनृपसत्तमः ११ कृतांजलिपुटोभूत्वागौतमस्याग्रतःस्थितः कथयामाससवृत्तां
तमात्मनोदुःखसंयुतम् १२ श्रुत्वानृपतिवाक्यानिगौतमोविस्मयान्वितः उपदेशंनृपतयेव्रतस्यास्यमुनिर्ददौ १३ मासिभाद्रपदे
राजन्कृष्णपक्षेतुशोभना एकादशीसमायाताअजानाम्न्यतिपुण्यदा १४ तस्याःकुरुव्रतंराजन्पापनाशोभविष्यति तवभाग्य
वशादेषासप्तमेन्हिसमागता १५ उपवासपरोभूत्वारात्रौजागरणंकुरु एवंतस्याव्रतेचीर्णेसर्वपापक्षयोभवेत् १६ तवपुण्यप्रभावे
नचागतोहंनृपोत्तम इत्येवंकथयित्वातुमुनिरंतरधीयत १७ मुनिवाक्यंनृपःश्रुत्वाचकारव्रतमुत्तमं कृतेतस्मिन्व्रतेराज्ञःपापस्या-

तोभवत्तत्क्षणात् १८ श्रूयतांराजशार्दूलप्रभावोस्यव्रतस्यच यद्दुःखंबहुभिर्वर्षैर्भोक्तव्यंतत्क्षयोभवेत् १९ निस्तीर्णदुःखोराजासी
द्व्रतस्यास्यप्रभावतः पत्न्यासहसमायोगंपुत्रजीवनमापसः २० देवदुंदुभयोनेदुःपुष्पवर्षमभूद्दिवः एकादश्याःप्रभावेनप्रापराज्य
मकंटकं २१ स्वर्गलेभेहरिश्चंद्रःसपुरःसपरिच्छदः ईदृग्विधंव्रतंराजन्येकुर्वंतिद्विजोत्तमाः २२ सर्वपापविनिर्मुक्तास्त्रिदिवंया
न्तिध्रुवम् पठनाच्छ्रवणाद्राजन्नश्वमेधफलंलभेत २३ इतिश्रीब्र० भाद्रपदकृष्णाअजानाम्न्येकादशीमाहात्म्यसंपूर्णं अ
थभाद्रपदशुक्लैकादशीकथाप्रारभ्यते युधिष्ठिरउवाच नभस्यस्यसितपक्षेतुकिंनामैकादशीभवेत् कोदेवःकोविधिस्तस्याःकिं
पुण्यंचवदस्वनः श्रीकृष्णउवाच कथयामिमहापुण्यांस्वर्गमोक्षप्रदायिनीम् वामनैकादशींराजन्सर्वपापहरांपरां २ इमामेवज
यंत्याख्यांप्राहुरेकादशींनृप यस्याःश्रवणमात्रेणसर्वपापक्षयोभवेत् ३ वाजपेयफलंप्रोक्तंनातःपरतरंनृणाम् पापिनांपापना-
शायजयंतीव्रतमुत्तमं ४ नातःपरतराराजन्नेवमोक्षप्रदायिनी एतस्मात्कारणाद्राजन्कर्तव्यागतिमिच्छता ५ वैष्णवैर्ममभक्तैस्तु
मनुजैर्मत्परायणैः नभस्येवामनोयैस्तुपूजितस्तैर्जगत्त्रयं ६ पूजितंनात्रसंदेहस्तेयांतिहरिसन्निधिं वामनःपूजितोयेनकम
लेःकमलेक्षणः ७ नभस्यसितपक्षेतुजयंत्येकादशीदिने तेनार्चितंजगत्सर्वंत्रयोदेवाःसनातनाः ८ एतस्मात्कारणाद्राजन्क
र्तव्योहरिवासरः अस्मिन्कृतेनकर्तव्यंकिंचिदस्तिजगत्त्रये ९ अस्यांप्रसुप्तोभगवानेत्यंगपरिवर्तनं तस्मादेतांजनाःसर्वेवदंतिप
रिवर्तिनीम् १० युधिष्ठिरउ० संशयोस्तिमहान्मह्यंश्रूयतांचजनार्दन कथंसुप्तोसिदेवेशकथंवास्यंगवर्तनम् ११ किमर्थंदेवदेवेश
बलिर्बद्धस्त्वयासुरः संतुष्टाःपृथिवीदेवाःकिमकुर्वन्जनार्दन १२ कोविधिःकिंव्रतंचैवचातुर्मास्यमुपासतां त्वयिसुप्तेजगन्नाथकिं
कुर्वंतिजनाःप्रभो १३ एतद्विस्तरतोब्रूहिसंशयंहरमेप्रभो श्रीकृष्णउवा० श्रूयतांराजशार्दूलकथांपापहरांपरां १४ बलिर्वैदान
वःपूर्वमासीत्त्रेतायुगेनृप अपूजयच्चमांनित्यंमद्भक्तोमत्परायणः १५ जपैस्तुविविधैःसूक्तैर्यजंतेमांसनित्यशः द्विजानांपूज-
कोनित्यंयज्ञकर्मकृतागयः १६ परंत्विंद्रकृतद्वेषाद्देवलोकमजीजयत् सहत्तमिहलोकेवैजितंतेनमहात्मना १७ त्रिलोक्यंचततः

सर्वेदेवाः संहत्यमंत्रयन् सर्वैर्मिलित्वागतव्यंदेवंविज्ञापितुंप्रभुम् १८ ततश्चदेवाऋषिभिःसाकमिंद्रोगतःप्रभुम् शिरसात्वयनोगतः
स्तुतइंद्रेणसूक्तिभिः गुरुणादैवतैःसार्द्धंबहुधापूजितोत्यहम् ततोवामनरूपेणत्ववतारःश्चपंचम २० अत्युग्ररूपेणतदासर्वब्र
ह्मांडरूपिणा बालकेनजितःसोवैसत्यमालंब्यतस्थिवान् २१ युधिष्ठिरउवाच त्वयावामनरूपेणसोसुरश्चजितःकथम् एतत्
कथयदेवेशमह्यंभक्तायविस्तरात् २२ श्रीकृष्णउवाच मयालोकेनसबलिःप्रार्थितोबटुरूपिणा पदत्रयमितांभूमिंदेहिमेप्र
वनत्रयम् २३ दत्तंभवतिनेराजन्नात्रकार्याविचारणा इत्युक्तश्चमयाराजादत्तवांस्त्रिपदांभुवं २४ संकल्पमात्रा
द्ववृधेदेहस्त्रैविक्रमःपरं भूर्लोकेतुकृतोपादोभुवर्लोकेतुजानुनी २५ स्वर्लोकेतुकटिन्यस्यमहर्लोकेतथोदरम् जनलोकेतुहृ-
दयंतपोलोकेचकंठकम् २६ सत्यलोकेमुखंस्थाप्यउत्तमांगंततोर्ध्वतः चंद्रसूर्यग्रहाश्चैवभगणोयोगसंयुतः २७ सेंद्राश्चैवतदा-
देवानागाःशेषादयःपरे स्तुवंतोवेदसंभूतैःसूक्तैश्चविविधैस्तुमाम् २८ करेगृहीत्वातुबलिमब्रुवंवचनंतदा एकेनपूरिताप्थ्वीद्वि
तीयेनत्रिविष्टपं २९ तृतीयस्यतुपादस्यस्थानंदेहिममानघ एवमुक्तेमयासोपिमस्तकंदत्तवान्बलिः ३० ततोनेमस्तकेत्वेकंपद
न्यस्तंमयानदा क्षिप्तोरसातलेराजन्दानवोममपूजकः ३१ विनयावनतंदृष्ट्वाप्रसन्नोस्मिजनार्दनः बलेवसाम्यहंनित्यंसन्निधौतवमान
द ३२ इत्यवोचंमहाभागंबलिंवैरोचनिंतदा नभस्यशुक्लपक्षेतुपरिवर्तिनिवासरे ३३ ममैकातन्मूर्तिश्चबलिमाश्रित्यतिष्ठति द्वि
तीयाशेषपृष्ठेवैक्षीराब्धौसागरोत्तमे ३४ सुप्यतेचहृषीकेशोयावच्चायातिकार्तिकी तावद्भवतिनत्पुण्यंसर्वपुण्योत्तमोत्तमं ३५ एत
स्मात्कारणाद्राजन्कर्तव्यैषाप्रयत्नतः एकादशीमहापुण्यापवित्रापापहारिणी ३६ अस्यांप्रसुप्तोभगवानत्यंगपरिवर्तनम् ए
तस्यांपूजयेद्देवंत्रैलोक्यस्यपितामहं ३७ दधिदानंप्रकर्तव्यंरौप्यतंदुलसंयुतं रात्रौजागरणंकृत्वामुक्तोभवतिमानवः ३८ एवंयःकु
रुतेराजन्नेकादश्यांव्रतंशुभं सर्वपापहरंचैवभुक्तिमुक्तिप्रदायकं ३९ सदेवलोकंसंप्राप्यभ्राजतेचंद्रमायथा शृणुयाच्चैवयोम-
र्त्यःकथांपापहरांपरां ४० अश्वमेधसहस्रस्यफलमाप्नोतिमानवः ४१ इतिश्रीस्कंदपु० भाद्रपदशुक्लपरिवर्तिनीनामेकाद०संपू०

अथआश्विनकृष्णैकादशीकथा युधिष्ठिरउवाच कथयस्वप्रसादेनममाग्रेमधुसूदन आश्विनेकृष्णपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच आश्विनस्यासितेपक्षेइंदिरानामनामतः तस्याव्रतप्रभावेनमहापापंप्रणश्यति २ अधोयोनिगतानांचपितॄणांगतिदा
यिनी शृणुष्वावहितोराजन्कथांपापहरांपराम् ३ यस्याःश्रवणमात्रेणवाजपेयफलंलभेत् पुराकृतयुगेराजाबभूवरिपुसूदनः ४
इंद्रसेनइतिख्यातःपुरींमाहिष्मतींप्रति सराज्यंपालयामासधर्मेणयशसान्वितः ५ पुत्रपौत्रसमायुक्तोधनधान्यसमन्वितः माहि-
ष्मत्यधिपोराजाविष्णुभक्तिपरायणः ६ जपन्गोविंदनामानिमुक्तिदानिनराधिपः कालंनयतिविधिवदध्यात्मस्यविचिंतकः ७ ए
कस्मिन्दिवसेराज्ञिसुखासीनेसदोगते अवतीर्यागमद्धीमान्नंबरान्नारदोमुनिः ८ तमागतमभिप्रेक्ष्यप्रत्युत्थायकृतांजलिः पू
जयित्वार्घविधिनाचासनेसंन्यवेशयत् ९ सुखोपविष्टःसमुनिःप्रत्युवाचनृपोत्तमं कुशलंतवराजेंद्रसप्तस्वंगेषुवर्तते १० धर्मेमतिर्व
र्ततेतेविष्णुभक्तिरतस्तथा इतिवाक्यंतुदेवर्षेःश्रुत्वाराजानमब्रवीत् ११ राजोवाच त्वत्प्रसादान्मुनिश्रेष्ठसर्वत्रकुशलंमम अद्यक्र
तुक्रियाःसर्वाःसफलास्तवदर्शनात् प्रसादंकुरुविप्रर्षेब्रूह्यागमनकारणम् इतिराज्ञोवचःश्रुत्वादेवर्षिर्वाक्यमब्रवीत् १३ नारदउवाच
श्रूयतांराजशार्दूलमद्वचोविस्मयप्रदम् ब्रह्मलोकादहंप्राप्तोयमलोकंनृपोत्तम १४ शमनेनार्चितोभक्त्याउपविष्टोवरासने धर्मशी
लःसत्यवांस्तुभास्करिंसमुपासते १५ बहुपुण्यप्रकर्ताचव्रतवैकल्यदोषतः सभायांश्राद्धदेवस्यमयादृष्टःपितातव १६ कथितस्तेनसं
देशस्तंनिबोधजनेश्वर इंद्रसेनइतिख्यातोराजामाहिष्मतीप्रभुः १७ तस्याग्रेकथयब्रह्मन्स्थितंमांयमसन्निधौ केनापिचांतरायेण
पूर्वजन्मोद्भवेनवै १८ स्वर्गंप्रेषयमांपुत्रइंदिराव्रतदानतः इत्युक्तोहंसमायातःसमीपंतवपार्थिव १९ पितुःस्वर्गतयेराजन्निंदिरा-
व्रतमाचर तेनव्रतप्रभावेनस्वर्गंयास्यतितेपिता २० राजोवाच कथयस्वप्रसादेनभगवन्निंदिराव्रतम् विधिनाकेनकर्तव्यंकस्मि
न्पक्षेतिथौतथा २१ नारदउवाच शृणुराजन्हितंवच्मिव्रतस्यास्यविधिंशुभम् आश्विनस्यासितेपक्षेदशमीदिवसेशुभे २२ प्रातः
स्नानंप्रकुर्वीतश्रद्धायुक्तेनचेतसा ततोमध्यान्हसमयेस्नानंकृत्वाबहिर्जले २३ पितॄणांप्रीतयेश्राद्धंकुर्याच्छ्रद्धा[illegible] तः एकभुक्तिंत

तः कृत्वारात्रौ भूमौशयीतच २४ प्रभातेविमलेजातेप्राप्तेचैकादशीदिने मुखप्रक्षालनंकुर्यादंतधावनपूर्वकं २५ उपवासस्यनियमंगृण्ही
याद्भक्तिभावतः अद्यस्थित्वानिराहारःसर्वभोगविवर्जितः २६ श्वोभोक्ष्येपुंडरीकाक्षशरणंमेभवाच्युत इत्येवंनियमंकृत्वामध्यान्हस
मयेतथा २७ शालग्रामशिलाग्रेतुश्राद्धंकृत्वायथाविधि भोजयित्वाद्विजान्शक्त्यान्दक्षिणाभिःसुपूजितान् २८ पितृशेषंसमाघ्रायग
वेदद्याद्विचक्षणः पूजयित्वाहृषीकेशंधूपगंधादिभिस्तथा २९ रात्रौजागरणंकुर्यात्केशवस्यसमीपतः ततःप्रभातसमयेसंप्राप्तेद्वाद
शीदिने ३० अर्चयित्वाहरिंभक्त्याभोजयित्वाद्विजानथ बंधुदौहित्रपुत्राद्यैःस्वयंभुंजीतवाग्यतः ३१ अनेनविधिनाराजन्कुरुव्रतमतं
द्रितः विष्णुलोकंप्रयास्यंतिपितरस्तवभूपते ३२ इत्युक्त्वानृपतिंराजन्मुनिरंतरधीयत यथोक्तविधिनाराजाचकारव्रतमुत्तमम् ३३
अंतःपुरेणसहितःपुत्रभृत्यसमन्वितः कृतेव्रतेतुकौंतेयपुष्पवृष्टिरभूद्दिवः ३४ तत्पितागरुडारूढोजगामहरिमंदिरम् इंद्रसेनोपिरा
जर्षिःकृत्वाराज्यमकंटकं ३५ राज्येनिवेश्यतनयंजगामत्रिदिवंस्वयम् इंदिराव्रतमाहात्म्यंतवाग्रेकथितंमया ३६ पठनाच्छ्रवणा
च्चास्यसर्वपापैःप्रमुच्यते भुक्त्वेहनिखिलान्भोगान्विष्णुलोकेवसेच्चिरम् ३७ इतिश्रीब्र० आश्वि० कृ० इंदिरामा० संपूर्णम्
अथआश्विनशुक्लैकादशीकथा युधिष्ठिरउ० कथयस्वप्रसादेनभगवन्मधुसूदन इषस्यशुक्लपक्षेतुकिंनामैकादशीभवेत् १
श्रीकृष्णउवाच शृणुराजेंद्रवक्ष्यामिमाहात्म्यंपापनाशनं शुक्लपक्षेचाश्वयुजिभवेदेकादशीतुया २ पाशांकुशेतिविख्यातासर
र्वपापहरापरा पद्मनाभाभिधानंतुपूजयेत्तत्रमानवः ३ सर्वाभीष्टफलप्राप्त्यैस्वर्गमोक्षप्रदंनृणां तपस्तप्त्वानरस्तीव्रंचिरंसुनि
यतेंद्रियः ४ यत्फलंसमवाप्नोतितन्नत्वागरुडध्वजं कृत्वापिबहुशःपापंनरोमोहसमन्वितः ५ नयातिनरकंघोरंनत्वापापह
रंहरिं पृथिव्यांयानितीर्थानिपुण्यान्यायतनानिच ६ तानिसर्वाण्यवाप्नोतिविष्णोर्नामानुकीर्तनात् देवंशार्ङ्गधरंविष्णुंयेप्रप
न्नाजनार्दनम् ७ नतेषांयमलोकस्तुनृणांवैजायतेक्वचित् उपोष्यैकादशीमेकांप्रसंगेनापिमानवाः ८ नयांतियातनांयामींपाप
कृत्वातुदारुणम् वैष्णवःपुरुषोभूत्वाशिवनिंदांकरोतियः ९ यानिंदेद्वैष्णवंलोकंसयातिनरकंध्रुवम् अश्वमेधसहस्राणिराजसू

यशतानिच १० एकादश्युपवासस्यकलांनार्हंतिषोडशीं एकादशीसमंपुण्यंकिंचिल्लोकेनविद्यते ११ नेदृशंपावनंकिंचित्त्रिषुलोकेषुवि
द्यते यादृशंपद्मनाभस्यदिनंपातकहानिदम् १२ तावत्पापानितिष्ठंतिदेहेस्मिन्मनुजाधिप यावन्नोपोष्यतेजंतुःपद्मनाभदिनंशु-
भम् १३ व्याजेनापिकृताराजन्नदर्शयतिभास्करिं स्वर्गमोक्षप्रदाह्येषाशरीरारोग्यदायिनी १४ सुकलत्रप्रदाह्येषाधनपुत्रप्रदा
यिनी नगंगानगयाराजन्नकाशीनचपुष्करं १५ नचापिकौरवंक्षेत्रंपुण्यंभूपहरेर्दिनात् रात्रौजागरणंकृत्वासमुपोष्यहरेर्दिनं १६
अनायासेनभूपालप्राप्यतेवैष्णवंपदं दशवैमातृकेपक्षेदशराजेंद्रपैतृके १७ भार्यायादशपक्षेतुपुरुषानुद्धरेन्नरः चतुर्भुजादिव्यरू
पानागारिकृतकेतनाः १८ स्रग्विणःपीतवस्त्राश्चप्रयांतिहरिमंदिरं बालत्वेयौवनत्वेनवृद्धत्वेनृपोत्तम १९ उपोष्यद्वादशीनू
नंनैतिपापोपिदुर्गतिम् पाशांकुशामुपोष्यैवआश्विनस्यासितेतरे २० सर्वपापविनिर्मुक्तोहरिलोकंसगच्छति दत्वाहेमतिलान्भू
मिंगामन्नमुदकंतथा २१ उपानच्छत्रकादीनपश्यतियमंनरः यस्यपुण्यविहीनानिदिनान्यायांतिनिच २२ सलोहकारभस्त्रेवश्व
सन्नपिमृतोहिवै नवंध्यंदिवसंकुर्याद्दरिद्रोपिनृपोत्तम २३ समाचरन्यथाशक्तिस्नानदानादिकाःक्रियाः तडागारामसौधानिसत्राणिपु
ण्यकर्मणां २४ कर्तारोनैवपश्यंतिधीरास्तेयमयातनाम् दीर्घायुषोधनाढ्याश्चकुलीनारोगवर्जिताः २५ दृश्यंतेमानवालोके-
पुण्यकर्तारईदृशाः किमत्रबहुनोक्तेनयांत्यधर्मेणदुर्गतिं २६ आरोहंतिदिवंधर्मैर्नात्रकार्याविचारणा इतितेकथितंराजन्यत् -
पृष्टोहंत्वयानघ २७ पाशांकुशायामाहात्म्यंकिमन्यच्छ्रोतुमिच्छसि २८ इतिश्रीब्र० आश्वि० शु० पाशांकु० ना० माहा० संपूर्ण

अथकार्तिककृष्णैकादशीकथा युधिष्ठिरउवाच कथयस्वप्रसादेनममस्नेहाज्जनार्दन कार्तिकस्यासितेपक्षेकिंनामैका
दशीभवेत् १ श्रीकृष्णउवा० श्रूयतांराजशार्दूलकथयामितवाग्रतः कार्तिकेकृष्णपक्षेतुरमानाम्नीसुशोभना २ एका
दशीसमाख्यातामहापापहरापरा अस्याःप्रसंगतोराजन्माहात्म्यंप्रवदामिते ३ मुचुकुंदइतिख्यातोबभूवनृपतिःपुरा दे
वेंद्रेणसमंयस्यमित्रत्वमभवन्नृप ४ यमेनवरुणेनैवकुबेरेणसमंतथा बिभीषणेनएतस्यसखित्वमभवत्सह ५ विष्णुभ-

न्कः सत्यसंधोबभूवनृपतिःसदा तस्यैवंशासतोराजन्राज्यंनिहतकंटकं ६ बभूवदुहितागेहे चंद्रभागासारद्वरा ३. मनायचसादत्ताचंद्रसेनसुतायवै ७ सकदाचित्समायातःश्वशुरस्यगृहेनृप एकादशीव्रतमिदंसमायातंसुपुण्यदं ८ समायातेव्रतदिनेचंद्रभागात्वचिंतय
त् किंभविष्यतिदेवेशममभर्तापिदुर्बलः ९ क्षुधांनसहतेसोढुंपितांचैवोग्रशासनः पटहस्ताड्यतेयस्यसंप्राप्तेदशमीदिने १०
नभोक्तव्यंनभोक्तव्यंनभोक्तव्यंहरेर्दिने श्रुत्वापटहनिर्घोषंशोभनस्त्वब्रवीत्प्रियां ११ किंकर्तव्यंमयाकांतेदेहिशिक्षांसुशोभने
कृतेनयेनमेसम्यक्जीवितंनविनश्यति १२ चंद्रभागोवाच मत्पितुर्वेश्मनिविभोभोक्तव्यंनापिकेनचित् गजैरश्वैस्तथाचोष्ट्र-
न्यैःपशुभिरेवच १३ तृणमन्नंतथावारिनभोक्तव्यंहरेर्दिने मानवैश्चकुतःकांतभुज्यतेहरिवासरे १४ यदित्वंभोक्ष्यसेकांततताोगे
हात्प्रयास्यतां एवंविचार्यमनसासुदृढंमानसंकुरु १५. शोभनउवाच सत्यमेतत्त्वयैवोक्तंकरिष्येहमुपोषणम् दैवेनापिविहितं
यद्वैतत्तथैवभविष्यति १६ इतिदिष्टमतिंकृत्वाचकारव्रतमुत्तमं क्षुत्तृषापीडिततनुःसबभूवातिदुःखितः १७ इतिचिंतयतस्तस्यआ
दित्योस्तमगाद्गिरिं वैष्णवानांनराणांसानिशाहर्षविवर्द्धिनी १८ हरिपूजारतानांचजागरासक्तचेतसाम् बभूवनृपशार्दूलशोभनस्या
तिदुःसहा १९ रवेरुदयवेलायांशोभनःपंचतांगतः दाहयामासराजातंराजयोग्यैश्चदारुभिः २० चंद्रभागात्वात्मदेहंददाहपितृवा
रिता कृत्वौर्ध्वदैहिकंतस्यतस्थौजनकवेश्मनि २१ शोभनेननृपश्रेष्ठरमाव्रतप्रभावतः प्राप्तंदेवपुरंरम्यंमंदराचलसानुनि २२ अनु
त्तममनाधृष्यमसंख्येयगुणान्वितं हेमस्तंभमयैःसौधैरत्नवैडूर्यमंडितैः २३ स्फाटिकैर्विविधाकारैर्विचित्रैरुपशोभितम् सिंहास
नसमारूढःसुश्वेतच्छत्रचामरः २४ किरीटकुंडलयुतोहारकेयूरभूषितः स्तूयमानश्चगंधर्वैरप्सरोगणसेवितः २५ शोभनःशोभ
तेतत्रदेवराडपरोयथा सोमशर्मेतिविख्यातोमुचुकुंदपुरेवसन् २६ तीर्थयात्राप्रसंगेनभ्रमन्विप्रोददर्शतं नृपजामातरंज्ञात्वात
त्समीपंजगामसः आसनादुत्थितःशीघ्रंनमश्चक्रेद्विजोत्तमं २७ चकारकुशलप्रश्नंश्वशुरस्यनृपस्यच २८ कांतायाश्चंद्रभागायास्तथैवनगरस्यच सोम
शर्मोवाच कुशलंवर्ततेराजन्श्वशुरस्यगृहेतव चंद्रभागाकुशलिनीसर्वत्रकुशलंपुरे २९ स्ववृत्तंकथ्यतांराजन्नाश्चर्यंपरमंमम पुरंविचित्रंरुचिरं

दृष्टंकेनचित्क्वचित् ३० एवदाचस्वरूपेणकुतःप्रासमिदंत्वया शोभनउ० कार्तिकस्यासितपक्षेनाम्नाचैकादशीरमा ३१ तामुपोष्यमयाप्राप्तंद्विजेंद्रपु
रमध्रुवं ध्रुवंभवतियेनैवतत्कुरुष्वद्विजोत्तम ३२ द्विजेंद्रउ० कथमध्रुवमेतद्धिकथंहिभवतिध्रुवं तत्त्वंकथयराजेंद्र नतत्करिष्यामिनान्यथा ३३
शोभनउ० मयैतत्कथितंविप्रश्रद्धाहीनंव्रतोत्तमं तेनाहमध्रुवंमन्ये ध्रुवंभवतितच्छृणु ३४ मुचुकुंदस्यदुहिताचंद्रभागासुशोभना
तस्यैकथयवृत्तांतंध्रुवमेतद्भविष्यति ३५ तच्छ्रुत्वाथद्विजवरस्तस्यैसर्वंन्यवेदयत् श्रुत्वाथसाद्विजवचोविस्मयोत्फुल्ललोचना ३६ प्र
त्यक्षमथवास्वप्नमस्त्वयैतत्कथ्यतेद्विज सोमशर्मोवा० प्रत्यक्षंपुत्रितेकांतोमयादृष्टोमहावने ३७ देवतुल्यमनाधृष्यंदृष्टंतस्यपुरं
मया अध्रुवंतेनतत्प्रोक्तंध्रुवंभवतितत्कुरु ३८ चंद्रभागोवाच तत्रमांनयविप्रर्षेपतिदर्शनलालसाम् आत्मनोव्रतपुण्येनकरि
ष्यामिपरंध्रुवं आवयोर्द्विजसंयोगोयथाभवतितत्कुरु प्राप्यतेहिमहत्पुण्यंकृत्वायोगंवियुक्तयोः ४० इतिश्रुत्वासहतया-
सोमशर्माजगामह आश्रमंवामदेवस्यमंदराचलसन्निधौ ४१ वामदेवोऽश्रृणोत्सर्ववृत्तांतंकथितंतयोः अभ्यषिंचच्चंद्रभागांवेद-
मंत्रैरथोर्जितं ४२ ऋषिमंत्रप्रभावेनविष्णुवासरसेवनात् दिव्यदेहाबभूवासौदिव्यांगतिमवापह ४३ पत्युःसमीपमगमत्प्र
हर्षोत्फुल्ललोचना सहर्षःशोभनोतीवदृष्ट्वाकांतांसमागताम् ४४ समाहूयस्वकेवामेपार्श्वेतांसंन्यवेशयत् साचोवाचप्रियंह
र्षाच्चंद्रभागाशृणुष्वच ४५ शृणुकांतहितंवाक्यंयत्पुण्यंविद्यतेमयि अष्टवर्षाधिकाजातायदाहंपितृवेश्मनि ४६ मयाततःप्र
भृतिचकृतमेकादशीव्रतं यथोक्तविधिसंयुक्तंश्रद्धायुक्तेनचेतसा ४७ तेनपुण्यप्रभावेनभविष्यतिपरंध्रुवम् सर्वकामसमृद्धं
चयावदाभूतसंप्लवं ४८ एवंसानृपशार्दूलरमतेपतिनासह दिव्यभोगादिव्यरूपादिव्याभरणभूषिता ४९ शोभनोपितया
सार्द्धंरमतेदिव्यविग्रहः रमाव्रतप्रभावेनमंदराचलसानुनि ५० चिंतामणिसमाह्येषाकामधेनुसमाथवा रमाभिधानानृपतेतवा
ग्रेकथितामया ५१ ईदृशंचव्रतंराजन्येकुर्वंतिनरोत्तमाः ब्रह्महत्यादिपापानिनाशंयांतिनसंशयः ५२ एकादशीव्रतानांचपक्षयोरुभ
योरपि यथाशुक्लातथाकृष्णातिथिर्भेदंनकारयेत् ५३ सर्वैवैकादशीनृणांभुक्तिमुक्तिप्रदायिनी धेनुःकृष्णातथाश्वेताउभयोःस

दृश्यंपयः ५४ नथैवतुल्यफलदंस्मृतमेकादशीव्रतं एकादशीव्रतानांचमाहात्म्यंशृणुयान्नरः सर्वपापविनिर्मुक्तोविष्णुलोकेमहीयते ५५
इतिश्रीब्रह्मवैवर्तेम० का० कृ० रमाना० संपूर्णम् अथकार्तिकशुक्लैकादशीकथा ब्रह्मोवाच प्रबोधिन्याश्चमाहात्म्यंपापघ्नं
पुण्यवर्धनं मुक्तिप्रदंसुबुद्धीनांशृणुत्वमुनिसत्तम १ तावद्गर्जंतितीर्थानिगंगाभागीरथीक्षितौ यावन्नायातिपापघ्नीकार्तिकेहरिबोधि
नी २ तावद्गर्जंतितीर्थानिसमुद्रादिसरांसिच यावत्प्रबोधिनीविष्णोस्तिथिर्नायातिकार्तिकी ३ अश्वमेधसहस्राणिराजसूयशतानि
च एकेनैवोपवासेनप्रबोधिन्यालभेन्नरः ४ नारदउवाच एकभुक्तेनकिंपुण्यंकिंपुण्यंनक्तभोजने उपवासेनकिंपुण्यंतन्मेब्रू
हिपितामह ५ ब्रह्मोवाच एकभुक्तेनजन्मोत्थंनक्तेनद्विजनुर्भवं सप्तजन्मभवंपापमुपवासेननश्यति ६ यद्दुर्लभंयदप्राप्यंत्रैलो
क्येनतुगोचरं यदप्यप्रार्थितंपुत्रददातिहरिबोधिनी ७ मेरुमंदरमात्राणिपापान्युग्राणियानितु एकेनैवोपवासेनदहतेपापहारिणी
८ पूर्वजन्मसहस्रेस्तुयद्दुष्कर्मउपार्जितं जागरेणप्रबोधिन्यांदहतेतूलराशिवत् ९ उपवासंप्रबोधिन्यांयःकरोतिस्वभावतः वि
धिवन्मुनिशार्दूलयथोक्तंलभतेफलं १० यथोक्तंसकृतंयस्तुविधिवत्कुरुतेनरः स्वल्पंमुनिवरश्रेष्ठमेरुतुल्यंभवेत्फलम् ११ वि
धिहीनंतुयःकुर्यात्सकृतंमेरुमात्रकं अणुमात्रंनचाप्नोतिफलधर्मस्यनारद १२ संध्याहीनेव्रतभ्रष्टेनास्तिकेहेतुकेशठे नैतेषांति
ष्ठतेदेहेधर्मशास्त्रविदूषके १३ परदाररतेमूर्खेकृतघ्नेवंचकेनथा धर्मोनतिष्ठतेदेहेएतेषामपिदीहिनां १४ ब्राह्मणोवापिशूद्रोवा
सेवतेपरयोषितम् ब्राह्मणींचविशेषेणचांडालसदृशावुभौ १५ सभर्तृकांवाविधवांब्राह्मणोब्राह्मणींयाति सेवतेमुनिशार्दूलसा
न्वयोयातिसंक्षयं १६ परदाराभिगमनंकुरुतेयोद्विजाधमः संततिर्नभवेत्तस्यफलंजन्मार्जितंनहि १७ गुरुणासहविप्रेश्चयोहं
कारेणवर्तते सकृतान्नश्यतेशीघ्रंधनंनाप्नोतिसंततिम् १८ आचारभ्रष्टदेहानांवृषलीगामिनांसुत यस्तुतैःसेव्यमानोपिधर्मस्ते-
षांपराङ्मुखः १९ पापिनस्तेनरालोकेसंगतिंपतितैःसह येकुर्वंतिनृपश्रेष्ठतेगच्छंतियमालयम् २० धर्मोनष्टोनृणांयेषांस्वागतास
नभोजनैः तेषांवैनश्यतेस्वर्गःकीर्तिरायुःप्रजासुखं २१ साधूनामपमानंतुयेकुर्वंतिनराधमाः त्रिवर्गफलहीनास्तेदह्यंतेनरकाग्नि

ना २२ कृत्वावमानंसाधूनांयेलक्ष्यंतिनराधमाः वारयंतिनयेमूढास्तेपश्यंतिकुलक्षयं २३ आचारभ्रष्टदेहस्यहेतुकस्यशठस्यच ददतो
जुह्वतोवापिपर्णनिस्तस्यनविद्यते २४ तस्मान्नलानरैःकिंचिदशक्यंलोकगर्हितम् सदाचारवताभाव्यंयथाधर्मोननश्यति २५ येध्यायंति
मनोवृत्त्याकरिष्यामःप्रबोधिनीं तेषांविलीयतेपापंपूर्वजन्मशतोद्भवं २६ समतीतंभविष्यंचवर्तमानंकुलायुतं विष्णुलोकंनयत्या-
शुप्रबोधिन्यांतुजागरे २७ वसंतिपितरोत्दृष्टाविष्णुलोकेत्वलंकृताः विमुक्तानारकैर्दुःखैःपूर्वकर्मसमुद्भवैः २८ कृत्वातुपातकं
घोरंब्रह्महत्यादिकंनरः कृत्वातुजागरंविष्णोर्धौतपापोभवेन्मुने २९ दुःप्राप्यंयत्फलंविप्रैरश्वमेधादिभिर्मखैः प्राप्यतेतत्सुखेनैव
प्रबोधिन्यांतुजागरे ३० आप्लुत्यसर्वतीर्थेषुदत्वागाःकांचनंमहीं नतत्फलमवाप्नोतियत्कृत्वाजागरंहरेः ३१ जातःसएकसुकृतीकु
लंतेनैवपावितं कार्तिकेमुनिशार्दूलकृतायेनप्रबोधिनी ३२ यथाध्रुवंनृणांमृत्युर्धननाशस्तथाध्रुवं इतिज्ञात्वामुनिश्रेष्ठकर्तव्यंवैष्णवं-
दिनं ३३ यानिकानिचतीर्थानित्रैलोक्येसंभवंतिच तानितस्यगृहेसम्यक्कुयःकरोतिप्रबोधिनीं ३४ सर्वकृत्यंपरित्यज्यतुष्ट्यर्थंचक्रपा
णिनः उपोष्यैकादशीरस्यांकार्तिकेहरिबोधिनीं ३५ सज्ञानीसचयोगीचसतपस्वीजितेंद्रियः भोगोमोक्षश्चतस्यास्तियस्तूपास्तेहरि
बोधिनीम् ३६ विष्णुप्रियतरात्वेषाधर्मसारस्यदायिनी सकृदेनामुपोष्यैवमुक्तिभाक्चभवेन्नरः ३७ प्रबोधिनीमुपोषित्वानगर्भंविश
तेनरः सर्वधर्मान्परित्यज्यतस्मात्कुर्वीतनारद ३८ कर्मणामनसावाचापापंयत्समुपार्जितं तत्क्षालयतिगोविंदःप्रबोधिन्यांतुजा-
गरे ३९ स्नानंदानंजपोहोमःसमुद्दिश्यजनार्दनं नरैर्यत्क्रियतेवत्सप्रबोधिन्यांतदक्षयं ४० येचैर्यंतिनरास्तस्यांभक्त्यादेवंचमाधवम्
समुपोष्यप्रमुच्यंतेपापैस्तेशतजन्मजैः ४१ महाव्रतमिदंपुत्रमहापापौघनाशनं प्रबोधवास[illegible] ४२ व्रते-
नानेनदेवेशंपरितोष्यजनार्दनं विराजयन्दिशःसर्वाःप्रयातिभवनंहरेः ४३ कर्तव्येषाप्रय[illegible]त्यवायदिवाबहु ४५ शुक्लकमा[illegible]शीद्विपदां
श्रेष्ठकार्तिकेतुप्रबोधिनी ४४ बाल्येयच्चार्जितंवत्सयौवनेवार्धकेतथा शतजन्मकृतंपापं[illegible]ग्यासर्वपापहरापरा तामुपोष्यहरेर्भक्त्याप्रेष्ठ
स्वगुत्थमपिनारद तत्क्षालयतिगोविंदोत्थस्यामभ्यर्च्यशक्तितः ४६ धनधान्यवहापु

र्लभंनभवेत्क्कचित् ४७ चंद्रसूर्योपरागेचयत्फलंपरिकीर्तितं तत्सहस्रगुणंप्रोक्तंप्रबोधिन्यांतुजागरे स्नानंदानंजपोहोमःस्वाध्यायो
भ्यर्चनंहरेः तत्सर्वंकोटिगुणितंप्रबोधिन्यांतुयत्कृतं ४९ जन्मप्रभृतियत्पुण्यंनरेणार्जितंभवेत् वृथाभवतितत्सर्वमकृत्वा-
कार्तिकव्रतं ५० अकृत्वानियमंविष्णोः कार्तिकंयःक्षिपेन्नरः जन्मार्जितस्यपुण्यस्यफलंनाप्नोतिनारद ५१ तस्मात्सर्वप्रयत्नेनदेव
देवोजनार्दनः उपासनीयोविप्रेंद्रसर्वकामफलप्रदः ५२ परान्नंवर्जयेद्यस्तुकार्तिकेविष्णुतत्परः परान्नवर्जनाद्वत्सचांद्रायणफलंल
भेत् ५३ नित्यंशास्त्रविनोदेनकार्तिकंयःक्षिपेन्नरः निर्दहेत्सर्वपापानियज्ञायुतफलंलभेत् ५४ नतथातुष्यतेयज्ञैर्नदानैर्वागजा-
दिभिः यथाशास्त्रकथालापैःकार्तिकेमधुसूदनः ५५ येकुर्वंतिकथांविष्णोर्येशृण्वंतिसमाहिताः श्लोकार्द्धंश्लोकमेकंवाकार्तिकेगो
शतंफलं ५६ सर्वधर्मान्परित्यज्यकार्तिकेकेशवाग्रतः शास्त्रावधारणंकार्यंश्रोतव्यंचमहामुने ५७ श्रेयसांलोभबुद्ध्यावायःकरोति
हरेःकथां कार्तिकेमुनिशार्दूलकुलानांतारयेच्छतं ५८ नियमेननरोयस्तुशृणुतेवैष्णवींकथां कार्तिकेतुविशेषेणगोसहस्रफलं
लभेत् ५९ प्रबोधवासरेविष्णोःकुरुतेयोहरेःकथां ससद्वीपवतीदानेतत्फलंलभतेमुने ६० श्रुत्वाविष्णुकथांदिव्यांयेर्चयंतिक-
थाविदं स्वशक्त्यामुनिशार्दूलतेषांलोकाःसनातनाः ६१ ब्रह्मणोवचनंश्रुत्वानारदःपुनरब्रवीत् नारदउवाच विधानंब्रूहिमेस्वा
मिन्नेकादश्याःसुरोत्तम ६२ चीर्णेनयेनभगवन्यादृशंफलमाप्नुयात् नारदस्यवचःश्रुत्वाब्रह्मावचनमब्रवीत् ६३ ब्राह्मेमुहूर्तेचो
त्थायत्वेकादश्यांद्विजोत्तम स्नानंचैवप्रकर्तव्यंदंतधावनपूर्वकं ६४ नद्यांतडागकूपेवावाप्यांगेहेतथैवच केशवंचैवसंपूज्यःक
थायाःश्रवणंतथा ६५ नियमार्थंमहाभागइमंमंत्रमुदीरयेत् एकादश्यांनिराहारःस्थित्वाहनिपरेत्वहं ६६ भोक्ष्यामिपुंडरीकाक्ष
शरणंमेभवाच्युत असुंमंत्रंसमुच्चार्यदेवदेवस्यचक्रिणः ६७ भक्तिभावेनतुष्टात्माह्युपवासंसमर्पयेत् रात्रौजागरणंकुर्याद्देवदेव-
स्यसन्निधौ ६८ गीतंनृत्यंचवाद्यंचतथाकृष्णकथांमुने यःकरोतिसपुण्यात्मात्रैलोक्योपरिसंस्थितः ६९ बहुपुष्पैर्बहुफलैःकर्पूराग
रुकुंकुमैः हरेःपूजाविधातव्याकार्तिक्यांबोधवासरे ७० वित्तशाठ्यंनकर्तव्यंसंप्राप्तेहरिवासरे यस्मात्पुण्यमसंख्यातंप्राप्यतेसु

निसत्तम ७१ फलैर्नानाविधैर्दिव्यैः प्रबोधिन्यांतुजागरे शंखेनतोयंसमादायत्वर्घोदेयोजनार्दने ७२ यत्फलंसर्वतीर्थेषुसर्वदानेषुय
त्फलं तत्फलंकोटिगुणितंदत्वार्घंबोधवासरे ७३ अगस्त्यकुसुमैर्देवंपूजयेद्योजनार्दनं देवेंद्रोपिमुनिश्रेष्ठकरोतिकरसंपुटम्
नतत्करोतिविप्रेंद्रतपसातोषितोहरिः यत्करोतिहृषीकेशोमुनिपुष्पैरलंकृतः ७५ बिल्वपत्रैश्चयेकृष्णंकार्तिकेकलिवर्धन पू
जयंतिमहाभक्त्यामुक्तिस्तेषांमयोदिता ७६ तुलसीदलपुष्पैश्चपूजयंतिजनार्दनम् कार्तिकेसकलंवत्सपापजन्मायुतंदहेत् ७७
दृष्टास्पृष्टाथवाध्यानाकीर्तितानमितास्तुता रोपितासंचितानित्यंपूजितातुलसीशुभा ७८ नवधातुलसीभक्तिंयेकुर्वंतिदिनेदिने
युगकोटिसहस्राणितेवसंतिहरेर्गृहे ७९ रोपितातुलसीयावत्कुरुतेमूलविस्तरं तावद्युगसहस्राणितनोतिसुकृतंमुने ८० यावच्छा
खाप्रशाखाभिर्बीजपुष्पदलैर्मुने रोपितातुलसीपुंभिर्वर्ततेवसुधातले ८१ कुलेतेषांतुयेजातायेभविष्यंतियेगताः आकल्पयु
गसाहस्रंतेषांवासोहरेर्गृहे ८२ कदंबकुसुमैर्देवंयेर्चयंतिजनार्दनं तेषांयमालयंनैवप्रसादाच्चक्रपाणिनः ८३ दृष्ट्वाकदंबकुसु
मंप्रीतोभवतिकेशवः किंपुनःपूजितोविप्रसर्वकामप्रदोहरिः ८४ यःपुनःपाटलापुष्पैर्वसंतेगरुडध्वजम् अर्चयेत्परयाभक्त्या
मुक्तिभागीभवेद्धिसः ८५ बकुलाशोककुसुमैर्येर्चयंतिजगत्पतिं विशोकास्तेभविष्यंतियावच्चंद्रोदिवाकरः ८६ येर्चयंतिजगन्ना
थंकरवीरैःसितासितैः चतुर्युगानिविप्रेंद्रप्रीतोभवतिकेशवः ८७ मंजरीसहकारस्यकेशवोपरियेनराः यच्छंतितेमहाभागागो
कोटिफलभागिनः ८८ दूर्वांकुरैर्हरेर्यस्तुपूजाकालेप्रयच्छति पूजाफलंशतगुणंसम्यगाप्नोतिमानवः ८९ शमीपत्रैश्चयेदेवं
पूजयंतिसुखप्रदं यममार्गोमहाघोरोनिस्तीर्णस्तैस्तुनारद ९० वर्षाकालेतुदेवेशंकुसुमैश्चंपकोद्भवैः येर्चयंतिनतेमर्त्याःसं
सरेयुःपुनर्भवे ९१ कुंभीपुष्पंतुविप्रर्षेयेयच्छंतिजनार्दनं सुवर्णपलमात्रेतलभतेवैफलंध्रुवं ९२ सुवर्णकेतकीपुष्पंयोददाति
जनार्दने कोटिजन्मार्जितंपापंदहतेगरुडध्वजः ९३ कुंकुमारुणवर्णांचगंधाढ्यांशतपत्रिकां योददातिजगन्नाथेश्वेतद्वीपाल
येवसेत् ९४ एवंसंपूज्यरात्रौचकेशवंभुक्तिमुक्तिदं प्रातरुत्थायचव्रजन्नूगत्वातुसजनःनदीं ९५ तत्रस्नात्वाजपित्वाभक्त्या

णिहृकाःक्रियाः गृहेगत्वाचसंपूज्यःकेशवोविधिवन्नरैः ९६ व्रतस्यपूरणार्थायब्राह्मणान्भोजयत्सुधीः क्षमापयच्चशिरसाभक्ति
युक्तेनचेतसा ९७ गुरुपूजाततःकार्याभोजनाच्छादनादिभिः दक्षिणागोश्चदातव्यातुष्ट्यर्थंचक्रपाणिनः ९८ भूयसींचैवसं
देयाब्राह्मणेभ्यःप्रयत्नतः नियमश्चैवसंत्याज्योब्राह्मणायेप्रयत्नतः ९९ कथयित्वाद्विजेभ्यश्चदद्याच्छक्त्याचदक्षिणां न
क्तभोजीनरोराजन्ब्राह्मणान्भोजयेच्छुभान् १०० अयाचितेबलीवर्दसहिरण्यंप्रदापयेत् अमांसाशीनरोयस्तुप्रदद्देद्गांसदक्षि
णां १ धात्रीस्नायीनरोदद्याद्दधिमाक्षिकमेवच फलानांनियमेराजन्फलदानंसमाचरेत् २ तैलस्थानेघृतंदेयंघृतस्थानेपयः
स्मृतं धान्यानांनियमेराजन्देयंतेशालितंडुलाः ३ दद्याद्भूशायनेशय्यांसतूलांसपरिच्छदां पत्रभोजीनरोराजन्भाजनंघृतसं-
युतं ४ मौनेघंटांतिलांश्चैवसहिरण्यंप्रदापयेत् दंपत्योर्भोजनंदेयंनिःस्नेहंसर्पिसंस्कृतं ५ धारणेचस्वकेशानामादर्शंदापयेद्बुधः
उपानहौप्रदातव्यौउपानत्परिवर्जनात् ६ लवणस्यचसंत्यागेशर्करांचप्रदापयेत् नित्यंदीपप्रदोयस्तुविष्णोर्वाविबुधालये ७ सदीपं
सघृतंताम्रंकांचनंवादशाधुतम् प्रदद्याद्विष्णुभक्तायसंपूर्णव्रतहेतवे ८ एकांतरोपवासेतुकुंभानष्टौप्रदापयेत् सवस्त्रान्कांचनं
पेतान्सर्वान्सालंकृतान्शुभान् ९ सर्वेषामप्यलाभेतुयथोक्तकरणंविना द्विजवाक्यंस्मृतंराजन्संपूर्णव्रतसिद्धिदं १० नत्वा
विसर्जयेद्विप्रान्ततोभुंजीतचस्वयं यत्त्यक्तंचतुरोमासान्समाप्तितस्यचाचरेत् ११ एवंयआचरेत्पार्थसोनंतफलमाप्नुया
त् अवसानेतुराजेंद्रवासुदेवपुरंव्रजेत् १२ यश्चाविघ्नंसमाप्यैवंचातुर्मास्यव्रतंनृप सभवेत्कृतकृत्यस्तुनपुनर्मानुषोभवेत् १३
एतत्कृत्वामहीपालपरिपूर्णव्रतंभवेत् व्रतवैकल्यमासाद्यत्वंधःकुष्ठीप्रजायते १४ एतत्तेसर्वमाख्यातंयत्पृष्टोहमिहत्वया
पठनाच्छ्रवणाद्वापिलभेद्गोदानजंफलं ११५ इतिश्रीस्कंदपुराणेकार्तिकशु०प्रबोधिनीमा०संपूर्णं युधिष्ठिरउवाच
मलिम्लुचस्यमासस्यकावाएकादशीभवेत् किंनामकोविधिस्तस्याःकथयस्वजनार्दन १ श्रीकृष्णउवा० मलमासस्ययापु-
ण्यामोक्तानाम्नाचपद्मिनी सोपोषिताप्रयत्नेनपद्मनाभपुरंनयेत् २ मलमासेमहापुण्याकीर्तिताकल्मषापहा तस्याःफलंक-

थयितुंनशक्तश्चतुराननः ३ नारदायपुराप्रोक्तंविधिनाव्रतमुत्तमं पद्मिन्याःपापराशिघ्नंभुक्तिमुक्तिफलप्रदं ४ सत्वावाक्यंमुरारेस्तु-
प्रेमवाच्चातिमुदान्वितः युधिष्ठिरोजगन्नाथंविधिंपप्रच्छधर्मवित् ५ श्रुत्वाराज्ञस्तुवचनंप्रोत्फुल्लांबुजेक्षणः शृणुराजन्प्रव-
क्ष्यामिमुनीनामप्यगोचरं ६ दशमीदिवसेप्राप्तेव्रतारंभोविधीयते कांस्यंमांसंमसूरांश्चचणकान्कोद्रवांस्तथा। ७ शाकंमधुपरा
न्नंचदशम्यांदशवर्जयेत् हविष्यान्नंचभुंजीतअक्षारलवणंतथा ८ भूमिशायीब्रह्मचारीभवेच्चदशमीदिने एकादशीदिनेप्राप्ते
प्रातरुत्थायसादरं ९ विधायचमलोत्सर्गंनकुर्याद्दंतधावनम् गंडूषान्द्वादशान्कृत्वाशुचिर्भूत्वासमाहितः सूर्योदयेशुभेतीर्थे-
स्नानार्थंप्रव्रजेत्सुधीः गोमयंमृत्तिकांगृह्यतिलान्दर्भान्शुचिस्थलात् ११ चूर्णैरामलकीभूतैर्विधिनास्नानमाचरेत् उद्धृता
सिवराहेणकृष्णेनशतबाहुना १२ मृत्तिकेब्रह्मदत्तासिकाश्यपेनाभिमंत्रिता त्वंमेकुरुपवित्रांगंत्वग्ज्ञानेत्रशिरोरुहे १३ हरिपूजनयो-
ग्यंमांमृत्तिकेकुरुतेनमः सर्वौषधिसमुत्पन्नंगवोदरमधिष्ठितं १४ पवित्रंकरणंभूमेर्मांपावयतुगोमयं ब्राह्मणैश्चवनसंभूताधात्री
भुवनपावनी १५ संस्पर्शपावयांगंमेनिर्मलंकुरुतेनमः देवदेवजगन्नाथशंखचक्रगदाधर १६ देहिविष्णोममानुज्ञांनवतीर्थावगा
हने वारुणांश्चजपेन्मंत्रांस्नानंकुर्याद्विधानतः १७ गंगादितीर्थंसंस्मृत्ययत्रकुत्रजलाशये पश्चात्संमार्जयेद्गात्रंविधिनानृपसत्त
म १८ मुखेपृष्ठेचहृदयेबाह्वोःशिरसिचाप्यधः परिधायसुखंवासोशुक्लंशुचित्यखंडितं ततःकुर्याद्धरेःपूजांमहापापविन-
श्यति १९ संध्यामुपास्यविधिनातर्पयित्वापितॄनृषीन् हरेर्मंदिरमागम्यपूजयेत्कमलापतिं २० स्वर्णमाषकृतंदेवंराधिका-
सहितंहरिं पार्वत्यासहितंदेवंपूजयेद्विधिपूर्वकं २१ कुंभोपरिन्यसेद्देवंताम्रपात्रेथमृन्मये दिव्यवस्त्रसमायुक्तेदिव्यगंधानुवा
सिते २२ तस्योपरिन्यसेत्पात्रंताम्रंरोप्यंहिरण्मयं तस्मिन्संस्थापयेद्देवंविधिनापूजयेत्ततः २३ संस्नाप्यसलिलैःश्रेष्ठैर्गंधधूपादि
वासितैः चंदनागरुकर्पूरैःपूजयेद्देवमीश्वरं २४ नानाकुसुमकस्तूरीकुंकुमेनसितांबुजैः तत्कालजातैःकुसुमैःपूजयेत्परमेश्व
रं २५ नैवेद्यैर्विविधैःशक्त्यानयानीराजनादिभिः धूपैर्दीपैःसकर्पूरैःपूजयेत्केशवंशिवं २६ नृत्यंगीतंतदग्रेतुकुर्याद्भक्त्यापुरःस

रम् नालपेत्पतितान्पापान्तस्मिन्नहनिनस्पृशेत् २७ नानृतंहिवदेद्वाक्यंसत्यपूतंवचोवदेत् रजस्वलांनपश्येत्ननिंदेद्ब्राह्मणंगुरुं २८ पु
राणंपुरतोविष्णोःशृणुयात्सहवैष्णवैः निर्जलासामकर्तव्यायावच्छक्त्यामलिम्लुचे २९ जलपानंमथवाकुर्याद्दुग्धाहारेणनान्यथा रात्रौजागर
णंकुर्याद्गीतवादित्रसंयुतं ३० प्रथमेप्रहरेपूजानारिकेलार्घमुत्तमं द्वितीयेश्रीफलैश्चैवतृतीयेबीजपूरकैः ३१ चतुर्थेपूजयेत्तु पू —
गैर्नारिंगैश्चविशेषतः प्रथमेप्रहरेपुण्यमग्निष्टोमस्यजायते ३२ द्वितीयेवाजपेयस्यतृतीयेहयमेधजम् चतुर्थेराजसूयस्यजाग्रतो-
जायतेफलम् ३३ नातःपरतरंपुण्यंनातःपरतरामखाः नातःपरतराविद्यानातःपरतरंतपः ३४ पृथिव्यांयानितीर्थानिपुण्यान्यायत-
नानिच तत्स्नानानिचदृष्टानियेनाकारिहरेर्व्रतम् ३५ एवंजागरणंकुर्याद्यावत्सूर्योदयोभवेत् सूर्योदयेशुभेतीर्थेगत्वास्नानंसमाच
रेत् ३६ स्नात्वैवागत्यभवनेपूजयेद्देवमीश्वरम् पूर्वोदितेनविधिनाभोजयेद्ब्राह्मणान्शुभान् ३७ कुंभादिकंचयत्सर्वमतिमांकेशव
स्यच पूजयित्वाविधानेनब्राह्मणायसमर्पयेत् ३८ एवंविधंव्रतंयोवैकुरुतेभुविमानवः सफलंजायतेतस्यव्रतंमुक्तिफलप्रदं ३९ एतत्ते
सर्वमाख्यातंयत्पृष्टोहंत्वयानृप मलिम्लुचस्यमासस्यशुक्लायाविधिमुत्तमं ४० पद्मिन्याःप्रीतियुक्तोयःकुरुतेव्रतमुत्तमं व्रतानिते
नचीर्णानिसर्वाणिनृपनंदन ४१ कृष्णायामलमासस्यविधिस्तस्यापिनादृशः परमासानुविज्ञेयासर्वपापक्षयंकरी ४२ अत्रतेक-
थयिष्यामिकथामेकांमनोरमाम् नारदायपुलस्त्येनविस्तरेणनिवेदिताम् ४३ कार्तवीर्येणकारायांनिक्षिप्तंवीक्ष्यरावणम् विमोचि
तःपुलस्त्येनयाचयित्वामहीपतिम् ४४ तदाश्चर्यंतदाश्रुत्वानारदोदिव्यदर्शनः पप्रच्छचयथाभक्त्यापुलस्त्यंमुनिपुंगवं ४५ दशानने
नविजिताःसर्वेदेवाःसवासवाः कार्तवीर्येणविजितःकथंरणविशारदः ४६ नारदस्यवचःश्रुत्वापुलस्त्योमुनिरब्रवीत् शृणुवत्सप्रव
क्ष्यामिकार्तवीर्यसमुद्भवं ४७ पुरात्रेतायुगेराजन्माहिष्मत्यांमहत्तरः हैहयानांकुलेजातःकृतवीर्योमहीपतिः ४८ सहस्रंप्रमदास्त
स्यनृपस्यप्राणवल्लभाः नतासांतनयंकंचिल्लेभेराज्यधुरंधरं ४९ यजन्देवान्पितृन्सिद्धान्प्रचिकित्सान्महत्तरान् तेषांवाक्याद्व्रतं-
कुर्वन्नलब्धस्तनयस्तदा ५० सुतंविनातदाराज्यंनसुखायमहीपतेः क्षुधितस्ययथाभोगानभवंतिसुखप्रदाः ५१ विचार्यचित्तेनृप-

निस्तपस्त्वंसुमनोदधे तपसैवसदासिद्धिर्जायतेमनसेप्सिता ५२ इत्युक्त्वासोसभार्यश्चचीरवासाजटाधरः तपस्तप्तुंगतःसद्योगृहेन्यस्य
स्वमंत्रिणम् ५३ निर्गतंनृपतिंवीक्ष्य पद्मिनीप्रमदोत्तमा हरिश्चंद्रस्यतनयाइक्ष्वाकुकुलसंभवा ५४ पतिव्रताप्रियंदृक्षातपस्तप्तुंस्व
तोद्यमं भूषणानिपरित्यज्यचीरमेकंसमाश्रयत् ५५ जगामपतिनासार्द्धंपर्वतेगंधमादने गत्वातत्रतपस्तेपेवर्षाणामयुतंनृपः५६
नत्वेभेननयंराज्यंध्यायन्देवंगदाधरं अस्थिस्नायुमयंकांतंदृष्ट्वासाप्रमदोत्तमा ५७ अनुसूयांमहासाध्वींपप्रच्छविनयान्विता भर्तुः
प्रतपतःसाध्विवर्षाणामयुतंगतम् ५८ तथापिनप्रसन्नोभूत्केशवःकष्टनाशनः व्रतंममहाभागेकथयस्वयथातथम् ५९ येनप्र-
सन्नोभगवान्प्रमभक्त्याप्रजायते येनमेजायतेपुत्रश्चक्रवर्तीमहत्तरः ६० श्रुत्वातस्यास्तुवचनंपतिव्रतपरायणा यंप्रव्रजंतंनृपतिंस्व
यंप्रव्राजदीक्षितम् ६१ तदाप्रोवाचसंतुष्टापद्मिनींपद्मलोचनाम् स्नात्वामलिम्लुचेसुभ्रुमासद्वादशसंमितं ६२ त्रिंशद्दिनैश्चप्र
वर्तिमासःपूर्णःशुभानने तन्मध्येद्वादशीयुग्मंपद्मिनीपरमातथा ६३ उपोष्यतत्प्रकर्तव्यंविधिनाजागरैःसमं शीघ्रंप्रसन्नोभ-
गवान्भविष्यतिसुतप्रदः ६४ इत्युक्त्वाकथयत्सर्वंमयापूर्वोदितंनृप विधिंव्रतस्यविधिवत्प्रसन्नाकर्दमांगजा ६५ श्रुत्वाव्रतवि
धिंसर्वंयथोक्तमनुसूयया चक्रेराज्ञीचतत्सर्वंपुत्रप्राप्तिमभीप्सती ६६ एकादश्यांनिराहारासदाजाताचनिर्मला जागरेणयुतारात्रौ
गीतनृत्यसमन्विता ६७ पूर्णेव्रतेचवैशीघ्रंप्रसन्नःकेशवःस्वयं बभाषेगरुडारूढोवरंवरयशोभने ६८ श्रुत्वावाक्यंजगद्धातुःस्तु-
त्वाप्रीत्यासुविस्मिता ययाचेद्यवरंब्रूहिममभर्तुर्महत्तरं ६९ पद्मिन्यास्तद्वचःश्रुत्वाकृष्णःप्रीतः[illegible]म् त्वयाहंतोषितोभद्रे
प्रत्युवाचजनार्दनः ७० मलिम्लुचश्चमासोसौनान्योमेप्रीतिदायकः तन्मध्येकादशीरम्याममप्री[illegible]ना ७१ सात्वयोपोषिता
सुभ्रुयथोक्तविधिनाशुभे तेनत्वयाप्रसन्नोहंतुष्टोस्मिसुभगानने ७२ नवभर्तुःप्रदास्यामिवरंकांक्षया [illegible]मतिंप्राहवि-
ष्णुर्विश्वार्तिनाशनः ७३ वरंवरयराजेंद्र यत्तेमनसिकांक्षितं संतोषितोहंप्रियतानवसिद्धिर्सिः जेतुंशक्योजग[illegible]स्कैमेःपूजयेशःप्रसन्ना
नृपसत्तमः वेप्रसुतंमहाबाहुंसर्वलोकनमस्कृतं ७५ नदेवैर्मानुषैर्नागैर्दैत्यदानवराक्षसैः [illegible]न्नाथांकुर्याउत्तिसूदन७६

इत्युक्तोबाढमित्युक्त्वातत्रैवांतरधीयत नृपोपिसुप्रसन्नात्मात्दृष्टःपुष्टःप्रियायुतः ७७ समायात्स्वपुरंरम्यंनरनारीमनोरमम् सपद्मि-
न्यांसुतंलेभेकार्तवीर्यंमहाबलं ७८ नतेनसदृशःकश्चित्त्रिषुलोकेषुमानवः तस्मात्पराजितःसंख्येरावणोदशकंधरः ७९ न
तंजेतुंसमर्थोस्तित्रिषुलोकेषुकश्चन विनानारायणंदेवंचक्रपाणिंगदाधरम् ८० नत्वयाविस्मयःकार्योरावणस्यपराजये मलि-
म्लुचप्रसादेनपद्मिन्याश्चाप्युपोषणात् ८१ दत्तोदेवाधिदेवेनकार्तवीर्योमहाबलः इत्युक्त्वाप्रययौविप्रःप्रसन्नेनांतरात्मना ८२ श्रीकृष्ण
उवाच एतत्तेसर्वमाख्यातंयत्पृष्टोहंत्वयानघ मलिम्लुचस्यमासस्यशुक्लायाःसंभवोमहान् ८३ येकरिष्यंतिमनुजास्तेयास्यंतिह-
रेःपदं त्वमेवंकुरुराजेंद्रयदिचेष्टमभीप्ससि ८४ केशवस्यवचःश्रुत्वाधर्मराजोतिहर्षितः चक्रेव्रतंविधानेनबंधुभिःपरिवारितः ८५
सूतउ० एतत्तेसर्वमाख्यातंयत्पृष्टोहंपुराद्विज पुण्यंपवित्रंपरमंकिंभूयःश्रोतुमिच्छसि ८६ एवंविधंयेपिव्रतंमनुष्याभक्त्याकरि
ष्यंतिमलिम्लुचस्य उपोषितायैस्तुसुखप्रदात्रीयाशुक्लपक्षेभुविनेतिधन्याः ८७ श्रोष्यंतियेतस्यविधिंसमग्रंतेप्यंशभाजोमनुजाः
प्रशस्ताः येवैपठिष्यंतिकथांसमग्रांतेवैगमिष्यंतिहरेर्निवासं ८८ इतिअधिकशुक्लैकादशीसमाप्ता अथअधिककृष्णएकाद
शीकथा युधिष्ठिरउवाच मलिम्लुचस्यमासस्यकृष्णाकाकथ्यतेविभो किंनामकोविधिस्तस्याःकथयस्वजगत्पते १ श्रीकृ
ष्णउवाच परमेतिसमाख्यातापवित्रापापहारका भुक्तिमुक्तिप्रदानृणांस्त्रीणांचापियुधिष्ठिर २ पूर्वोक्तविधिनाकार्यायाकृ-
ष्णैकादशीजनैः पूजयेत्परयाभक्त्यानाम्नादेवंनरोत्तमं ३ अत्रेतकथयिष्यामिकथामेतांमनोरमां कांपिल्यनगरेजातांमुनीना
मग्रतःश्रुताम् ४ आसीद्द्विजवरःकश्चित्सुमेधानामधार्मिकः तस्यपत्नीपवित्राख्यापातिव्रत्यपरायणा ५ कर्मणाकेनचिद्विप्रोध
नधान्यविवर्जितः नकापिलभतेभिक्षांयाचन्नपिपरान्बहून् ६ नभोज्यंलभतेनाहद्भुवस्त्रंनैवमंडनं रूपयौवनमाधुर्यैर्नारीशु
श्रूषतेपतिं ७ अतिथिंपूजयेत्क्वापितदासाक्षुधितागृहे निष्ठत्येवविशालाक्षीचाम्लानमुखपंकजा ८ विलोक्यभार्यांसुदतींकर्ष
तींस्वकलेवरम् नभर्तारंक्वचिच्चैवनास्त्यन्नमितिभाषते ९ विचार्यब्राह्मणश्चित्तेभार्यायाःप्रेमबंधनम् निंदन्भाग्यंस्वकंविप्रःप्रोचे

वाक्यंप्रियंवदाम् १० कांतेकरोमिकिंकार्यंनमयालभ्यतेधनं याचयामिनरान्भव्यान्नयच्छंतिचमेधनं ११ किंकरोमिक्वगच्छामि-
त्वंमेकथयशोभने विनाधनेनसुश्रोणिगृहकार्यंनसिद्ध्यति १२ देह्याज्ञांपरदेशायगच्छामिधनलब्धये यस्मिन्देशेचयत्प्राप्यंप्रा
प्यंतत्रैवलभ्यते १३ उद्यमेनविनासिद्धिःकर्मणांनोपलभ्यते तस्माद्बुधाःप्रशंसंतिसर्वथैवशुभोद्यमं १४ श्रुत्वाकांतस्यवचनं-
साश्रुनेत्राविचक्षणा प्रोवाचप्रांजलिर्भूत्वाविनयानतकंधरा १५ त्वत्तोनास्तिस्रुविज्ञातात्वयाज्ञप्ताब्रवीम्यहं हितैषिणोनरा-
ब्रूयुःशश्वत्साध्वसाध्वपि १६ पूर्वदत्तंहिलभ्येतयत्रकुत्रमहीतले विनादानंनलभ्येतमेरौकनकपर्वते १७ पूर्वदत्ताहियावि
द्यापूर्वदत्तंहियद्धनं पूर्वदत्ताहियाभूमिरिहजन्मनिलभ्यते १८ पश्चाद्याहिरिवतंप्रालेनतत्रैवहिलभ्यते विनादत्तेनकिंक्वापि
लभ्यतेनैवकिंचन १९ पूर्वजन्मनिविप्रेंद्रनमयानत्वयाक्वचित् सत्पात्राणांकरेदत्तंस्वल्पंभूर्यपिसद्धनं २० इहदेशेपरेवापि-
दत्तंसर्वत्रलभ्यते अन्नमात्रंतुविश्वेशोविनादत्तेनयच्छति २१ तस्माद्दैवविभाग्यस्यातव्यंभवतामया भवद्भिनानतिष्ठामिक्ष
णमात्रंमहामुने २२ नमातानपिताभ्रातानश्वश्रूःश्वशुरोजनः नसन्तुकुर्वंतितांकेपिस्वजनाश्चापरेकुतः २३ भर्तृहीनांविभिं
दंतिदुर्भगेतिवदंतितां तस्माद्रस्थिरोभूत्वाविहरस्वयथासुखं २४ भवतोभाग्ययोगेनप्राप्तिश्चात्रभविष्यति श्रुत्वातस्या-
स्तुवचनंस्थितस्तत्रविचक्षणः २५ तावत्तत्रसमायातःकौंडिन्योमुनिसत्तमः दृष्ट्वासमागतंहृष्टःसमेधाद्विजसत्तमः २६ स
भार्यःसहसोत्थायननामशिरसासकृत् धन्योस्म्यनुगृहीतोस्मिसफलंजीवितंमम २७ यद्दृष्टोसिमहद्भाग्यादित्युक्त्वासुनीश्व-
रं दत्वासुविष्टरंतस्मैपूजयामासतंद्विजं २८ भोजयित्वाविधानेनपप्रच्छप्रमदोत्तमा विद्वन्केनप्रकारेणदारिद्र्यस्यक्षयोभवे
त् २९ विनादत्तंकथंलभ्येद्धनंविद्यांकुटुंबिनीम् मांमेभर्तापरित्यज्यगंतुकामोद्यवर्तते ३० अन्यदेशोपप्रान्तोन्यान्याचितुंप
रपत्तने रक्षितोस्तिमयाविद्वन्हेतुवाक्यैर्महत्तरैः ३१ नादत्तंलभ्यतेकिंचिदित्युक्त्वासा[illegible] सिंहराशिःपाशाभि[illegible] त्वमेत्रैव
समागतः ३२ त्वत्प्रसादाद्दरिद्रंमेशीघ्रंनश्यत्यसंशयं केनोपायेनविप्रेंद्रदरिद्रंनश्यत[illegible]चानेनेः [illegible] तथा [illegible]तीर्थंत
।।गरहितायांपारणंकुर्यात्

पादिकम् श्रुत्वातस्याःसुशीलायाभाषितंमुनिपुंगवः ३४ प्रोवाचप्रवरंचित्तेविचार्यंप्रहरेत् आषाढभाद्रकार्तिकेशक्रद्वृगनामुक्त
मव्रतम् ३५ सर्वपापौघशमनंदुःखदारिद्र्यनाशनं परमानामविख्याताविष्णोरास्तिथिष्णात्यपादेप्रतिबोधमेर्नत श्रुतेकृष्णाप्र-
क्तिमुक्तिफलप्रदा तस्याम्रुपोषणंकृत्वाधनधान्ययुताभवेत् विधिनाजागरैःसाकंगीतवादित्रसंयुत ३७ धनंनृपेपुराचीर्ण-
व्रतमेतत्कशोभनं नदात्कष्टेनरुद्रेणधनानामधिपःकृतः ३८ हरिश्चंद्रेणचकृतंपुराकृतास्कतेनवं पुनःप्राप्ताप्रियानेनराज्यंनि-
हतकंटकं ३९ तस्मात्कुरुविशालाक्षिव्रतमेतत्कशोभनं विधिनाविधियुक्तेनसमंजागरणेनच ४० इत्युक्त्वानद्विप्रिंसर्वक-
थयामासवाडवः प्रीत्यापरमसंतुष्टस्ततोभक्त्याप्रसादतः ४१ पुनःप्रोवाचतंविप्रंपंचरात्रव्रतंशकृभम् यस्यानुष्ठानमात्रेणभुक्ति-
र्मुक्तिश्चप्राप्यते ४२ परमादिवसेप्रातःकृत्वापूर्वाह्णिकंविधिं कुर्यात्कृनियमान्शक्त्यापंचरात्रव्रतादरात् ४३ प्रातःस्नात्वानिराहा
रोयस्तिष्ठेद्दिनपंचकं सगच्छेद्वैष्णवंस्थानंपितृमातृप्रियायुतः ४४ एकाशनस्तुयोभूयाद्दिनानांपंचकंनरः सर्वपापविनिर्मुक्तः
स्वर्गलोकमहीयते ४५ स्नात्वायोभोजयेद्विप्रंदिनानांपंचकंनरः भोजितंतेननविधिनासदेवासुरमानुषं ४६ पूर्णकुंभंसतोयेन योदद्याद्वि
द्विजातये दत्तंतेनैवसकलंब्रह्मांडंसचराचरं ४७ तिलपात्रंतुयोदद्याद्ब्राह्मणायविपश्चिते तिलसंख्यावसेत्स्वर्गेसनरोनाकमंडले ४८
घृतपात्रंतुयोदद्यात्स्नात्वापंचदिनंनरः सभुक्त्वाविपुलान्भोगान्सूर्यलोकेमहीयते ४९ ब्रह्मचर्येणयस्तिष्ठेद्दिनानांपंचकंनरः
सस्वर्गेभुंजतेभोगान्स्ववेश्याभिःसमंमुदा ५० एवंविधंव्रतंसाध्विकुरुत्वपतिनाशुभे धनधान्ययुताभूत्वास्वर्गयास्यसिसुव्रते
५१ इत्युक्त्वासाव्रतंचक्रेकौंडिन्येनयथोदितं भर्त्रासमंभावयुतास्नात्वामासिमलिम्लुचे ५२ पंचरात्रव्रतंपूर्णेपरायाःप्रियसंयुता सा
पश्यद्राजभवनादायांतंनृपनंदनं ५३ दत्वानवीनंभुवनंदिव्यवस्तुसमन्वितम् वासयामासविधिनाविधिनाप्रेरितःस्वयं ५४ द
त्वाग्रामंवृत्तिकरंब्राह्मणायसुमेधसे प्रसन्नस्तपसा राजानंस्तुत्वास्वगृहंययो ५५ मलिम्लुचस्यमासस्यपरायाःपरमादरा-
त् कृष्णाप्युपोषणात्सद्यः पंचरात्रव्रतेनच ५६ सर्वपापविनिर्मुक्तःसर्वसौख्यसमन्वितः भुक्त्वाभोगान्प्रियासार्धमंतेविष्णुपुरंय

यो ५७ येकरिष्यंतिमनुजाःपरापावनमुत्तमं पंचरात्रभवंपुण्यंमयावक्तुंनशक्यते ५८ पुष्कराद्यानितीर्थानिगंगाद्याःसरितस्तथा धे
नुमुख्यानिदानानितेनचीर्णानिसर्वथा ५९ गयाश्राद्धंकृतंतेनपितरःपरितोषिताः व्रतानितेनचीर्णानिव्रतखंडोदितानिवै ६० द्वि
पदांब्राह्मणःश्रेष्ठोगौर्वरिष्ठाचतुष्पदाम् देवानांवासवःश्रेष्ठस्तथामासोमलिम्लुचः ६१ मलिम्लुचेपंचरात्रंमहापापहरंस्मृतं पंच
रात्रेचपरमापद्मिनीपापशोषणी ६२ साप्यशक्तैःप्रकर्तव्या यथाशक्त्याविचक्षणैः मानुषंजनुरासाद्यनस्नातोयैर्मलिम्लुचः ६३
तेजन्मघातिनोनूनंनोपोष्यंतिहरेर्दिनं चतुराशीतिलक्षाणिभ्रमंतेयोनिसंकटे ६४ प्राप्यतेमानुषंजन्मदुर्लभंपुण्यसंचयैः तस्मा
त्कार्यंप्रयत्नेन परमायाव्रतंशुभं ६५ श्रीकृष्णउ० एतत्तेसर्वमाख्यातंयत्पृष्टोहंत्वयानघ मलिम्लुचस्यमासस्यपरमायाःस्व
मुद्भवम् ६६ तत्सर्वंतेसमाख्यातंकुरुघावहितोनृप ६७ श्रुत्वेतद्यदुपतिनोदितंमहात्म्यंतच्चक्रेव्रतमनुजेःप्रियासमेतः भुक्त्वा
सोदिविभुविदुर्लभांश्चभोगान्नीतोसौस्फुरवरमंदिरंकृतघ्नः ६८ येप्येवंभुविमनुजामलिम्लुचस्यसुस्नाताःशुभविधिनाव्रतंच
रंति तेभुक्त्वादिविविभवंसुरेंद्रतुल्यंगच्छेयुस्त्रिभुवनवंदितस्यगेहं ६९ इतिअधिकमासकृष्णैकादशीपरमानाम्नीमाहात्म्यं
संपूर्णम् ७० ७० अथद्वादशीव्रतानिलिख्यंते तत्रचैत्रशुक्लद्वादश्यांदमनोत्सवः द्वादश्यांचैत्रमासस्यशु-
क्लायांदमनोत्सवः बौधायनादिभिःप्रोक्तःकर्तव्यःप्रतिवत्सरम् १ रामार्चनचंद्रिकायाम् ऊर्जेव्रतंमधौदोलांश्रावणेतं
तुपूजनं चैत्रेचदमनारोपमकुर्वाणोव्रजत्यधः २ इदंशुक्रकास्त्यादावपिकार्यं उपाकर्मोत्सर्जनंचपवित्रंदमनार्पणम् ईशानस्य
बलिर्विष्णोःशयनंपरिवर्तनं ३ कुर्याच्छुक्रेगुरौमूढेहृद्गार्ग्येणउच्यते इतिचैत्रशुक्लद्वादशी वैशाखशुक्लद्वादश्यांयोगवि
शेषोहेमाद्रौ पंचाननस्थोगुरुभूमिपुत्रौमेषेरविःस्याद्यदिशुक्लपक्षे पाशाभिधानाकरभेणयुक्तातिथि[illegible]इतीहयोगः
अत्रस्नानादिकंकुर्याद्दानंवस्त्रहिरण्यकैः नरःपापात्प्रमुच्येतमाधवस्यतुपूजनात् [illegible]चाननःसिंहराशिःपाशाभि[illegible]धानाम-
तिथिर्द्वादशीकरभोहस्तः इतिवैशाखद्वादशी आषाढशुक्लद्वादश्यांअनूराधायो[illegible]गरहितायांपारणंकुर्यात् तथा[illegible]हेमाद्रौ

१६७

भविष्ये आभाकासितपक्षेषुमैत्रश्रवणरेवती संगमेनहिभोक्तव्यंद्वादशद्वादशींहरेत् आषाढभाद्रकार्तिकेशुक्लद्वादशीषुअ
नूराधाश्रवणरेवतीयोगेपारणंनकुर्यात् अत्रविष्णुधर्मे मैत्राद्यपादेस्वपितीहविष्णुःपौष्णांत्यपादेप्रतिबोधमेति श्रुतेश्चमध्येपरि
वर्तमेतिसुप्तिप्रबोधपरिवर्तनमेववर्ज्यं इतिआषाढशुक्लद्वादशी अथश्रावणशुक्लद्वादश्यांदधिव्रतं तक्रादीनांननिषेधः तत्रद
ध्यव्यवहारात् तत्रैवद्वादश्यांविष्णोःपवित्रारोपणमुक्तम् हेमाद्रौविष्णुरहस्ये श्रावणस्यसितेपक्षेकर्कटस्थेदिवाकरे द्वा
दश्यांवासुदेवायपवित्रारोपणंस्मृतं द्वादश्यांश्रावणेवापि पंचम्यामथवाद्विज अनुकूलेषुकर्तव्यंपंचदश्यामथापिवा पवित्रा
रोपणंविप्रश्चाच्छ्रावणेनभवेद्यदि कार्तिक्यवधिशुक्लास्तेकर्तव्यमितिनारदः हेमरौप्यताम्रक्षौमैःसूत्रैःकौशेयपद्मजैः कुशैः
काशैश्चकार्पासैर्ब्राह्मण्याकर्तितैःशुभैः कृत्वात्रिगुणितंसूत्रंत्रिगुणीकृत्यशोधयेत् तत्रोत्तमंपवित्रंतुषष्ठ्यासहशतैस्त्रिभिः
सप्तत्यासहितंद्वाभ्यांशताभ्यांमध्यमंस्मृतं साशीतिनाशतेनैवकनिष्ठंतत्समाचरेत् साधारणपवित्राणित्रिभिःसूत्रैःसमाचरेत्
उत्तमंतुशतग्रंथिपंचाशद्ग्रंथिमध्यमं कनिष्ठंतुपवित्रंस्यात्षट्त्रिंशद्ग्रंथिशोभितं षट्त्रिंशच्चतुर्विंशत्द्वात्रिंशादिनकेचन
चतुर्विंशद्द्वादशाष्टावित्येकेमुनयोविदुः शिवपवित्रंतुतत्रैव एकादशभिर्वासूत्रैस्त्रिंशतावाष्टयुक्तया पंचाशतावाकर्तव्यंतु-
ल्यग्रंथ्यंतरालकं द्वादशांगुलनामानिव्यासादष्टांगुलानिच लिंगविस्तारनामानिचतुरंगुलकानिच नकरोतिविधानेनपवित्रारोपणं
तुयः तस्यसांवत्सरीपूजानिष्फलामुनिसत्तम तस्माद्भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः वर्षेवर्षेप्रकर्तव्यंपवित्रारोपणंहरेः इति
श्रीभविष्योत्तरपुराणेश्रावणशुक्लद्वादश्यांविष्णुपवित्रारोपणविधिः अथभाद्रशुक्लद्वादश्यांश्रवणद्वादशीयोगेव्रतंकार्यं त
त्रावमात्स्ये द्वादशीश्रवणस्पृष्टास्पृशेदेकादशींयदि सएववैष्णवोयोगोविष्णुशृंखलसंज्ञितः तस्मिन्नुपोष्यविधिवन्नरःसं-
क्षीणकल्मषः प्राप्नोत्यनुत्तमांसिद्धिंपुनरावृत्तिदुर्लभां विष्णुधर्मे एकादशीद्वादशीचवैष्णव्यर्क्षमपियत्रच तद्विष्णुशृंखल-
लंनामविष्णुसायुज्यकृद्भवेत् एकादशीतिलंभेणद्वादश्यामुपवासकृत् संस्पृश्येकादशींराजन्द्वादशींयदिसंस्पृशेत् श्रवणं-

ज्योतिषांश्चेष्टब्रह्महत्यांव्यपोहति भाद्रशुक्लद्वादश्यांश्रवणयोगरहितायांपारणंकुर्यात् आभाकासितपक्षेषुइतिदिवोदा-
सोदाहृतवचनात् उपोष्यैकादशींमोहात्पारणंश्रवणेयदि करोतिहंतियत्पुण्यंद्वादशद्वादशीभवम् विशेषेणमहीपालश्रवणं
वर्धतेयदि तिथिक्षयेनभोक्तव्यंद्वादशींलंघयेन्नहि इहचश्रवणर्क्षंत्रेधाविभज्यमध्यविंशतिघटिकायोगंत्यक्त्वापारणंकार्यं-
तदुक्तंविष्णुधर्मे श्रुतेश्चमध्येसुप्तिप्रबोधपरिवर्तनमेववर्ज्यंकेचित्तु चतुर्धाविभज्यमध्यपादद्वयमित्याहुः अत्रैवविष्णुपरि
वर्तनोत्सवंकुर्यात् अत्रैवशक्रोत्थापनमुक्तमपरार्केगर्गेण द्वादश्यांतुसितपक्षेमासिप्रोष्ठपदेतथा शक्रमुत्थापयेद्राजाविश्व-
श्रवणवासरे इयमेवश्रवणद्वादशीनाम्ना तत्रैकादश्यांद्वादशीश्रवणयोगेसैवोपोष्या विष्णुशृंखलविशेषयोगात् एकाद-
श्यांश्रवणयोगाभावेपितद्दिनावच्छेदेनश्रवणस्पृष्टद्वादशीयोगादेवविष्णुशृंखलमिति हेमाद्रेर्मतं निर्णयामृतेतु श्रवणद्वा
दशीयोगएव विष्णुशृंखलंनान्यथेति यथानिशीथानंतरंसूर्योदयावधिकलामात्रमपिश्रवणर्क्षंतदापिपूर्वैव दिवोदासी-
येतुरात्रेः प्रथमयामेश्रवणयोगेपूर्वा अन्यथोत्तरेत्युक्तं इयंचबुधवारेऽतिप्रशस्ता यदातुएकादशीश्रवणयुतानद्वाद-
शीतदाएकादश्यामेवव्रतम् अशक्तस्तु एकादश्यांगौणोपवासंकृत्वाद्वादशीमुपवसेत् इदंव्रतंकाम्यमितिगौडाः नि
त्यमितिदाक्षिणात्याः पारणंतुउभयांते अन्यतरांतेवाकुर्यात् भाद्रपदेश्रवणैकादश्यांमध्याह्नेवामनावतारः श्रवणयुक्त-
शुक्लैकादश्यलाभेतुदशमीविद्धापिश्रवणयुताग्राह्या तथाचमदनरत्नेवह्निपुराणे दशम्येकादशीयत्रसानोपोष्याभवेत्ति
थिः श्रवणेनतुसंयुक्तासोपोष्यासर्वकामदा अस्यांद्वादश्यांदुग्धव्रतसंकल्पः दुग्धव्रतेतुपायसादिकंवर्ज्यं दधिघृतादय-
स्तुविकाराग्राह्याएव नन्वेवंसंधिन्यादिक्षीरनिषेधेपिदध्यादिग्राह्यंस्यादितिचेन्न तत्रवाचनिकनिषेधसत्वात् तदाह अपरार्के-
शंखः क्षीराणियान्यभक्ष्याणितद्विकाराशनेबुधः सप्तरात्रंव्रतंकुर्यात्प्रयत्नेनसमाहितः व्रतंगोमूत्रपानकं अथव्रतविधिः १६९
कृष्णउवाच विधानंशृणुराजेंद्र यथादृष्टंमनीषिभिः यथोक्तंनियमंकुर्यादेकादश्यामुपोषितः दंतान्संशोध्ययत्नेनवाग्यतो-

नियतेंद्रियः श्रवणद्वादशीयोगेसमुपोष्यजनार्दनं अर्जयित्वाविधानेनत्रयोदश्यांपरेऽहनि नदीनांसंगमेस्नायादर्चयेदत्रवामनम्
सौवर्णंवस्त्रसंयुक्तंद्वादशांगुलमुच्छ्रिताम् पीतवस्त्रैःशुभैर्वर्ष्यमृत्पात्रमव्रणंनवं हिरण्मयेनपात्रेण अर्घ्यपात्रंप्रकल्पयेत् द
ध्यक्षतफलैश्चैवसहिरण्यसचंदनम् नमस्तेपद्मनाभायनमस्तेजलशायिने तुभ्यमर्घ्यंप्रयच्छामिबालवामनरूपिणे नमःशार्ङ्ग
सीरबाणपाणयेवामनायच यज्ञभुक्फलदात्रेचवामनायनमोनमः देवेश्वरायदेवायदेवसंभूतिकारिणे प्रभवेसर्वदेवानांवा
मनायनमोनमः मत्स्यकूर्मवराहाख्यानारसिंहस्वरूपिणे रामचंद्रायरामायवामनायनमोनमः श्रीधरायनमस्तेस्तुनमस्तेगरुडध्व
ज चतुर्बाहोनमस्तेस्तुनमस्तेधरणीधर एवंसंस्तूयविधिवन्नरःमस्कंदलामभिः रात्रौजागरणंकुर्यात्पुरतोजलशायिनः धृत्वा
बालमयंरूपंदेवाक्रीडत्ययोनिधौ ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीमानवःश्रीशःसोत्रायातुजगत्पतिः एवंसं-
स्तूयतंभक्त्याद्वादश्यामुदयेरवेः शृंगारसहितंतंचब्राह्मणायनिवेदयेत् वामनःप्रतिगृण्हातिवामनोहंददामिते वामनंसर्वतो
भद्रंद्विजायप्रतिपादये जलधेनुंतथादद्याच्छत्रंचैवतुपादुके सहिरण्यानिवस्त्राणिवृषधेनुंतथानृप यत्किंचिद्दीयतेतत्रतद्दानं
प्राप्यतेध्रुवं श्रवणद्वादशीयोगेसंपूज्यगरुडध्वजं दत्वादानंद्विजातिभ्योवियोगेपारणंततः सिंहस्थितेतुमार्तंडेश्रवणस्थे
निशाकरे युधिष्ठिरउवाच उपवासासमर्थानांकिंस्यादेकमुपोषितम् महाफलंमहादेवतन्ममाचक्ष्वपृच्छतः श्रीकृष्णउ०
याराजञ्छ्रवणोपेताद्वादशीमहतीतुया तस्यामुपोषितःस्नातःपूजयित्वाजनार्दनं प्राप्नोत्ययत्नाद्धर्मज्ञद्वादशद्वादशीफलम्
दध्योदनयुतंतस्यांजलपूर्णंतथाघटम् वस्त्रसंवेष्टितंदत्वाछत्रोपानहमेवच नदुर्गतिमवाप्नोतिगतिमग्र्यांचविंदति अक्षय्यंस्थान
माप्नोतिनात्रकार्याविचारणा श्रवणद्वादशीयोगेबुधवारोप्रभवेद्यदि अत्यंतमहतीनामद्वादशीसाप्रकीर्तिता स्नानंजाप्यंतथादा
नंहोमःश्राद्धंसुरार्चनं सर्वमक्षय्यमाप्नोतितस्यांभृगुकुलोद्वह तस्मिन्दिनेतथास्नानोयत्रक्वचनसंगमे सगंगास्नानजंराज
न्फलंप्राप्नोत्यसंशयं श्रवणेसंगमाःसर्वेपरंतुष्टिप्रदाःसदा विशेषाद्द्वादशीयुक्ताबुधयुक्ताविशेषतः तथैवद्वादशीप्रोक्ताबु

ध श्रवणसंयुता शुक्लाश्रवणसंयुक्तासंगमेविजयास्मृता वारिकुंभप्रदायास्यांदध्योदनसमायुतं प्रेतयोनोनजायेतपूजयि-
त्वात्रवामनं वंशःसमुद्धृतस्तेनमुक्तःपितृऋणादसौ नभस्येसंगमेस्नात्वावामनोयेनपूजितः सयातिपरमंस्थानंविष्णुसा
युज्यमाप्नुयात् युधिष्ठिरउवाच उपवासासमर्थानांनदेवपुरुषोत्तम एकायाद्वादशीपुण्यातांवदस्वममानघ श्रीकृ०
मासेभाद्रपदेशुक्लाद्वादशीश्रवणान्विता सर्वकामप्रदापुण्याउपवासमहाफला संगमेसरितांस्नात्वाद्वादश्यांसमुपोषितः स
मग्रंसमवाप्नोतिद्वादशद्वादशीफलम् त्वंमवतीर्थराजोसित्वंमवसरितांपतिः संगमस्त्वंप्रसन्नोमेप्रसादंकुरुसंगम स्नात्वैनुद्वा
दशीज्ञेयातस्यांभाद्रपदेशुभा दशम्येकादशीयत्रसानोपोष्याभवेत्तिथिः श्रवणेनतुसंयुक्तासाशुभासर्वकामदा पारणंतिथि
वृद्धौतुद्वादश्यामुडुसंक्षयात् वृद्धौकुर्यात्त्रयोदश्यांतत्रदोषोनविद्यते इत्येषाकथितारारजन्द्वादश्यांश्रवणेनया कर्तव्यासा
प्रयत्नेनइहामुत्रफलप्रदा द्वादश्यामुपवासोत्रत्रयोदश्यांतुपारणं निषिद्धमपिकर्तव्यमित्याज्ञापारमेश्वरी बुधश्रवणसंयुक्तासै
वचेद्द्वादशीभवेत् अतीवमहतीतस्यांसर्वंकृतमिहाक्षयं द्वादशीश्रवणोपेतायदाभवतिभारत संगमेसरितांस्नात्वागंगादि-
स्नानजंफलम् सोपवासःसमाप्नोतिनात्रकार्याविचारणा जलपूर्णंतदाकुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंसोपवी
तंसवस्त्रकं तस्योपरिस्थापयित्वालक्ष्म्यासहजनार्दनम् यथाशक्त्यास्वर्णमयंशंखशार्ङ्गविभूषितं स्थापयित्वाविधानेनसि
तचंदनचर्चितं सितवस्त्रयुगच्छन्नंछत्रोपानद्युगान्वितं ॐ नमोवासुदेवायशिरःसंपूजयेत्ततः श्रीधरायमुखंतद्वत्कंठंकृष्णायवैन
मः नमःश्रीपतयेनेत्रेभुजौसर्वास्त्रधारिणे व्यापकायनमःकुक्षीकेशवायोदरंनमः त्रैलोक्यजनकायेतिमेढ्रंसंपूजयेद्धरेः सर्वा
धिपतयेजंघेपादौसर्वात्मनेनमः अनेनविधिनाराजन्पुष्पधूपैःसमर्चयेत् ततस्तस्याग्रतोदेयंनैवेद्यंघृतपाचितं द्वादशब्राह्मणा
न्कुंभान्शक्त्यादद्याच्चदक्षिणाम् एवंसंपूज्यगोविंदंजागरंतत्रकारयेत् प्रभातेविमलेस्नात्वासंपूज्यगरुडध्वजं पुष्पधूपादिने
वेद्यैःफलैर्वस्त्रैःसुशोभनैः पुष्पांजलिंततोदत्वामंत्रमेतमुदीरयेत् नमोनमस्तेगोविंदबुधश्रवणसंज्ञक अघौघसंक्षयंकृत्वास

वैसांख्यमदोभव अनंतरंब्राह्मणेतुवेदवेदांगपारगे पुराणज्ञविशेषेणविधिवत्संप्रदापयेत् श्रीगं [illegible] श्रीमन्नित्यंजना
र्दनः अनेनैवविधानेनदद्यात्स्त्रीवानरोत्तमः सर्वंनिवर्तयेत्सम्यगेकभक्तिरतोपिसन् श्रीकृष्णउ० ॐ [illegible] रंतीममितिहा-
संपुरातनं महत्यरण्येयद्वृत्तंभूमिपालशृणुष्वतत् देशोदाशार्णकोनामतस्यभागेतुपश्चिमे अस्तिराजन्मरुद्देशःसर्वसत्वभ-
यंकरः सुतप्तवालुकाभूमिर्यत्रदुष्टमहोरगाः अल्पच्छायाद्रुमास्तत्रमृतप्राणिसमाकुलाः शमीखदिरपालाशकरीरैश्वस-
पीलुभिः यत्रभीमगणावृक्षामर्कटैःपरिवेष्टिताः दग्धप्राणिगणाकीर्णायत्रभूर्दृश्यतेक्वचित् अर्कप्रतापैःसंनष्टपरुषाणि
स्तृणामही ज्वलिताग्निसमंचैवयत्किंचित्तत्रदृश्यते तथापिलोकाजीवंतिसर्वेकर्मनिबंधनात् नोदकंनोतृषार्त्तानाराजंस्तत्रब-
लाहकाः कदाचिदपिदृश्यंतेप्लवमानाविहंगमाः तैःकांतारगतैःकैश्चित्तृषितैःशिशुभिःसमं सैकतेष्ववनश्यंतिजलैःसैकतसे
तुवत् तस्मिंस्तथाविधेदेशेकश्चिद्दैववशाद्वणिक् हरिदत्तइतिख्यातोवणिक्धर्मोपजीवकः निजसार्थपरिभ्रष्टःप्रविष्टोमरुजां
गले दृष्टवान्मलिनान्रूक्षान्निर्मांसान्भीमदर्शनान् भ्रमभ्रांतहृदयःक्षुत्तृषाश्रमकर्शितः क्वयामःक्वजनःक्वाहंक्व-
यास्यामिकिमाचरे अथप्रेतान्ददर्शासौक्षुत्तृषाव्याकुलेंद्रियः क्षतक्षामान्लंबवृषणान्निर्मांसान्दृश्यकीकसान् स्नायुब
द्धास्थिचरणान्धावमानानितस्ततः वणिक्सोपितदाश्चर्यंदृष्ट्वाभयमुपागतः भीतभीतस्तुतैःसार्द्धंजगामपथिवंचयन् ततोग
त्वापिशाचास्तेन्यग्रोधंमहदाश्रयं शीतच्छायंसुविस्तीर्णंतत्रतेसमुपाविशन् निविष्टेषुततस्तेषुएकदेशस्थितोवणिक् प्रेतस्कं-
धसमारूढमेकंविकृतदर्शनं ददर्शबहुभिःप्रेतैःसमंतात्परिवारितं आगच्छन्शवभक्षीसस्तुतिशब्दःपुरःसरम् प्रेतस्कंधान्म
हींगत्वातस्यांतिकमुपागतं सोपिवाचावणिक्श्रेष्ठमिदंवचनमब्रवीत् अस्मिन्घोरतरेदेशेप्रवेशोभवतःकथम् तमुवाचवणिक्
धीमान्सार्थभ्रष्टस्तदावशः प्रवेशोदैवयोगेनकष्टकर्मकृतेनतु तृष्णामेबाधतेत्यर्थंक्षुत्तृषोचभृशंतथा प्राणाःकंठमनुप्राप्ता-
वचनंनवदनीवमे अथोपायंनपश्यामिजीवेयंयेनकेनचित् श्रीकृष्णउ० इत्येवमुक्तःप्रेतस्तुवणिजंवाक्यमब्रवीत् पुन्नागमि

ममाश्रित्य नतोऽस्त्वमुहूर्तेकं कृतातिथ्योयथापश्चाद्दृष्टिष्यसि यथासुखं एवमुक्तस्तया तेऽकं वणिक्तृषयार्दितः मध्यान्हसम
येमासेननस्तंदेशमागतः पुन्नागवृक्षाच्छीतोदावारिधानीमनोरमा दध्योदनसमायुक्तेनवर्धमानेनसंयुता अवतार्यततःसोग्रेददा-
वतिथयेतदा दध्योदनंचतोयंचक्षुत्तृड्भ्यांपीडितायवै दध्योदनेनतोयेनपरांतृप्तिमुपागतः वितृष्णोविज्वरश्चापिक्षणेनचब
भूवह ततस्तुप्रेतसंघस्य तस्माद्वार्गकमाहृदो दध्योदनात्सपानीयात्प्रेतास्तृप्तिंपरांगताः अतिथिंतर्पयित्वाचप्रेतलोकंचसर्वशः
ततःस्वयंचबुभुजेभुक्तशेषंयथासुखं ततोभुक्तवतस्त्वन्नंपानीयंचस्वयंपपौ प्रेताधिपंततस्तुष्टोवणिग्वचनमब्रवीत् वणि
गुवाच आश्चर्यमेतत्परमंवनेऽस्मिन्प्रतिभातिमे अन्नपानस्यसंप्राप्तिःपरमस्यकुतस्तव स्तोकेनचतथान्नेनविमार्षिकबहून्वने
तृप्तिंगताःकथंत्वेतेनिर्मांसाःभीमकुक्षयः अपरंचकथंत्वेहमवाप्तावाप्तिरीक्षयं हिमाचलंचकस्मात्वंसंप्राप्तोनिर्जलेवने तृषश्वा-
सिकथंग्रासमात्रेणैवशक्यंमब्रवीः पिशाचपतिरुवाच शृणुभद्र प्रवक्ष्यामिदुष्कृतंकर्मचात्मनः शाकलेनगरेरम्येअहमासंस्त
दुर्मतिः वणिगासंपुराकालेततोभद्रमवापह शाकलेनगरेरम्येनास्तिकस्यदुरात्मनः धनलोभात्तथानप्रकदाचित्समेदीरिता नद
त्ताभिक्षवेभिक्षातृषितेतुकदाचन प्रतिवेश्यस्तुनत्रासीद्ब्राह्मणोगुणवान्मम श्रवणद्वादशीयोगमासिभाद्रपदेतथा सकदा-
चिन्मयासार्द्धंतापीनामनदीययौ तस्यास्तुसंगमःपुण्योयत्रासीच्चंद्रभागया चंद्रभागासोमसुतातापीचैवार्कनंदिनी तयोः
शीतोष्णसलिलेसंगमेसुमनोहरे तत्तीर्थवरमासाद्यप्रतिवेश्यःसमेद्विजः श्रवणद्वादशीयोगेस्नातश्चैवोपवाससंकृत् चंद्रभा
गस्यतोयस्यवारिकुंभंनवंदृढं दध्योदनयुतैःसार्द्धंसंपूर्णवर्धमानकैः छत्रोपानद्युगंवस्त्रंप्रतिमांविधिवद्वरैः प्रददौविप्रमुख्या
यरहस्यज्ञोमहामुनिः वित्तसंरक्षणार्थायतस्यापिचततोमया सोपवासेनदत्तोवैवारिधानीसुशोभना चंद्रभागस्यविप्रायद-
ध्योदनयुतातदा एतत्कृत्वागृहंप्राप्तस्ततःकालेनकेनचित् पंचत्वमहमासाद्यनास्तिक्यात्प्रेततांगतः अस्यामटव्यांघोरायांत-
थात्वंकुशलंतदा पुरोहितोमयादृष्टःस्नात्वागृहमुपागतः शिक्यहस्तःसकलशोद्वादश्यांसमुपोषितः तेनापिकथितानत्रश्रव

णद्वादशीशुभा सविनयंसोपदेशंव्रतंकृत्वामयानघ नस्थैयंकर्मणः पुष्टिर्यैयंदृष्टात्वयानघ यदन्नंचमयादत्तंसजलंघटकांच
नं तत्तन्मांभाजतेनित्यंपिशाचत्वेपिनित्यशः सेयंमध्यान्हसमयेदिवसेदिवसेमम उपतिष्ठतिवैश्ये हयथादृष्टंत्वयानघ उपवा
सफलेनैवजातिस्मरणमेवच दधिभक्तप्रसादेनजलान्नंचाक्षयंमम ब्रह्मस्वहारिणस्त्वेतपापाःप्रेतत्वमागताः परदाररताःकेचित्
स्वामिद्रोहरताःपरे मित्रद्रोहरताःकेचिद्देशेस्मिंस्तुसुदारुणे ममैतेभृत्यतांप्राप्ताअन्नदानादिकेनच अक्षय्योभगवान्विष्णुःपर
मात्मासनातनः यद्दीयतेतमुद्दिश्यअक्षय्यंतत्प्रकीर्तितं तेनाक्षय्येनचान्नेनतृप्ताएतेपुनःपुनः प्रेतभावाच्चदौर्बल्यंनमुंचंतिक
दाचन अहंचपूजयिष्यात्वामतिथिंसमुपस्थितं प्रेतभावाद्विनिर्मुक्तोयास्यामिपरमांगतिं मयाविहीनाःकिंत्वेतेवनेस्मिन्भृ
शदारुणे पीडामनुभवंस्येतेदारुणांकर्मयोनिजां एतेषांतुमहाभागममानुग्रहकाम्यया अनेकनामगोत्राणिगृण्हीष्वत्वं-
खिलंमम अस्तिकस्यागताचैवतत्त्वसंपुटिकाशुभा हिमवंतमथासाद्यतत्रत्वंलप्स्यसेनिधिं गयाशीर्षततोगत्वाश्राद्धंकुरुम
हामते एकमेकमथोद्दिश्यप्रेतेप्रेतेयथाक्रमं एवंसंभाष्यमाणस्तेनसजांबूनदप्रभः समारुह्यविमानंसस्वर्गलोकमितोगतः
स्वर्गतेप्रेतनाथेवैप्रभावात्सवणिक्क्रमात् नामगोत्राणिसंगृह्यप्रयातःसहिमालयम् तत्रप्राप्यनिधिंगत्वाविनिक्षिप्यस्वकेगृहे
धनभारमुपादायगयाशीर्षवटंययौ प्रेतानांक्रमशस्तत्रचक्रेश्राद्धंदिनेदिने यस्ययस्ययथाश्राद्धंसकरोतिदिनेवणिक् सोपि
तस्यतदास्वप्नेदर्शयत्यात्मनस्तनुम् ब्रवीतिचमहाभागप्रसादेनतवानघ प्रेतभावमिमंत्यक्त्वाप्राप्तोस्मिपरमांगतिं ततस्तुतेवि
मानस्थाऊचुस्ववणिजंतथा त्वयाहिनोरिताःसर्वेकिल्बिषाद्वणिजोत्तम प्रयामःस्वर्गतिंसर्वेइदानींत्वत्प्रसादतः साधुसंगो
नहिवृथाकदाचिदपिजायते एवमुक्त्वागताःसर्वेविमानैःसूर्यसन्निभैः दिव्यरूपधराःसर्वेद्योतयंतोदिशोदश हरिदत्तश्च-
तान्सर्वान्समुद्दिश्यजगामह स्वदेशस्थंचनगरंस्वगृहंचविवेशह सकृत्वाधनलोभेनप्रेतानांसद्गतिंवणिक् जगामस्वगृहंतत्र
मासिभाद्रेयुधिष्ठिर श्रवणद्वादशीयोगेपूजयित्वाजनार्दनं दानंदत्वाचविप्रेभ्यःसोपवासोजितेंद्रियः संगमेचमहानद्योःप्रति-

सर्षमनंदिन: चकारविधिवद्धानंततोहृष्टतमागतः अक्षापपरम् आनंदुर्लभंसर्वमानवैः यत्रकामफलावृक्षानद्य:पायसकर्दमाः शी
तलामलपानीयाःपुष्करिण्योमनोरमाः तद्देशमासाद्यवणिक्कुमहात्माप्रतमजांबूनदभूषितांगः कल्पंसमग्रंस्करस्कंदरीभिःस्व
र्गेसरेमेमुदितःसदैव बुधश्रवणसंयुक्ताद्वादशीसर्वकामदा दानंदध्योदनंशास्तमुपवासःपुरोविधिः सगरेणककुत्स्थेनधुं
धुमारेणगाधिना एतैश्चान्यैश्वराजेंद्रकामदाद्वादशीकृता याद्वादशीबुधयुताश्रवणेनसार्द्धंसावैजयेतिकथितामुनिभिर्न
भस्य तामादरेणसमुपोष्यनरोहिसम्यक्प्राप्नोतिसिद्धिमणिमादिगुणोपपन्नां इति हेमाद्रौभविष्योत्तरेश्रवणद्वादशीव्रतं
अस्यामेववामनजयंतीव्रतं हेमाद्रौभविष्ये श्रीकृष्णउवाच द्वादश्यास्तेविधिःप्रोक्तः श्रवणेनयुधिष्ठिर सर्वपापप्र-
शमनःसर्वसौख्यप्रदायकः एकादशीयदासास्याच्छ्रवणेनसमन्विता विजयासातिथिःप्रोक्ताव्रतिनामभयप्रदा पुरादेवगणैः
सर्वैःसमेत्यचयुधिष्ठिर वरदःप्रार्थितोविष्णुरिंद्राग्न्यनिलसंयुतैः बलवानजितोदैत्योबलिर्नाममहाबलः तेनदेवगणाःसर्वे
पातितानिजमंदिरं स्वर्गतिःसर्वदेवानांशीघ्रंकष्टात्समुद्धर दैत्यंजहिमहाबाहोबलिंबलवतांवर श्रुत्वाविष्णुस्तदावाक्यंदेवानां
करुणोदयं उवाचवाक्यंवाक्यज्ञोदेवानांहितकाम्यया विष्णुरुवाच जानेवैरोचनेःपुत्रंबलिंत्रैलोक्यशांकिनं तपसाभावितात्मानंशांतंदांतंजितेंद्रियं मद्भक्तं
मद्गतप्राणंसत्यसंधंमहाबलं प्रजापतिसमंस्वात्मप्रजानांप्रियकारणं नगुणास्तस्यशक्यंतेवक्तुंकेनापिभूतले अवश्यंतप
सोपेतैर्भोक्तव्यंतपसःफलम् तपसोंतस्तुबहुनाकालेनास्यभविष्यति यदाचविजयंदैत्यंज्ञास्यकालेनकेनचित् समाहृत्यास्मि
यंतस्यप्रदास्येदिवौकसाम् अदितिर्मेप्रयत्नोहिपुत्रार्थेपुत्रगृधिनी तस्यामनीषितंदेवकार्यंविष्णुरचिंतयत् सचिंतयित्वा
स्वर्चिरंदेव्यागर्भावधारणं अदितिंवरयामासवांछितंतेभविष्यति अथकालेबहुतिथेगतेसागुर्विणीभवत् सपुत्रेन[illegible]
पुत्रंसावामनंहरिम् ह्रस्वपादंह्रस्वकायंमहाशिरसमर्भकम् पाणिपादोदरकृशंह्रस्वजंघोरुकेसरम् दृष्ट्वातुवामनंजात
मदितिर्मोदमापवे भयंबभूवदैत्यानांदेवानांतोषआगमत् जातकादीन्शुभकरान्संस्कारान्स्वयमेवहि चकारक-

श्यपोधीमान् प्रजापतिसमन्वितः आबद्धमेखलोदंडीजटीयज्ञोपवीतवान् कुशाञ्चर्माजिनधरः कमंडलुविभूषितः बलेर्बलवतोयज्ञं
जगामबहुविस्तरं दृष्ट्वादैत्यबलंसर्ववामनस्तुजगादह अर्थीन्द्व्यहंयज्ञपतेर्दीयतांममभेदिनी पदत्रयप्रमाणाहिपठनार्थंमठोमम
दत्तादत्तानवनथाबलिःप्राहद्विजोत्तमं ततोवधितुमारब्धोवामनोनंतविक्रमः पादोभूमौप्रतिष्ठाप्यशिरसावृत्यरोदसी नाप्या
स्वर्गादिकांलोकानूललाटेब्रह्मणःपदम् नतृतीयंपदंलेभेकिंददेममनद्दद तद्दृष्ट्वामहदाश्चर्यंसिद्धादेववर्षयस्तथा साधुसाध्वि
तिदेवेशंप्रशशंसमुदान्विताः ततोदैत्यगणान्सर्वान्जित्वात्रिभुवनंवशी बलिंप्राहचभोगच्छपातालंसबलानुगः तत्रत्वमीप्सि
तान्भोगानूभुक्त्वामद्बाहुपालितः अस्येंद्रस्यावसानेतुत्वमेवेंद्रोभविष्यसि एवमुक्तोबलिःप्रायान्नमस्कृत्यसुरोत्तमम् विस
र्जचबलिंदेवोलोकपालान्नुवाचह स्वानिधिष्ण्यानिगच्छध्वंनिष्ठध्वंविगतज्वराः देवनोक्तागतादेवाःप्रहृष्टाःपूज्यवामनं देवःकृत्वा
जगत्कार्यंतत्रैवांतरधीयत एतत्सर्वसमभवदेकादश्यांनराधिप तेनेशोदेवदेवस्यसर्वथाविजयातिथिः मासिभाद्रपदेशुक्लेद्वाद
शीश्रवणान्विता विजयाप्रोच्यतेसद्भिःकोटिकोटिगुणोत्तरा एकादश्यांसोपवासोरात्रौसंपूजयेद्धरिं रौप्येस्वर्णपात्रेवादारुवं
शमयेपिवा सौवर्णवामनंकुर्यात्स्ववित्तस्यानुसारतः शिखाकमंडलुधरंछत्रयज्ञोपवीतकं एवंलक्षणसंपन्नंवामनंपूजयेद्धरिम्
आच्छाद्यपात्रंवासोभिरहतैःफलसंयुतैः मार्गेणचर्मणाकुर्याद्भक्त्यावाशक्त्यपेक्षया तिलोदकेनसंपूर्णप्रस्थेनकुडवेनच अला
भयवगोधूमैःफलैःशुक्लतिलैर्भवेत् अतसीपुष्पसंकाशंतिलकृष्णाजिनोपरि पुष्पैर्गंधैःफलैर्धूपैःकालोत्थैरर्चयेद्धरिम् नाना
विधैश्चनैवेद्यैर्भक्ष्यभोज्यैर्गुडोदनैः स्ववित्तानुसारेणसहिरण्यंचकारयेत् एभिर्मंत्रपदैस्तत्रपूजयेद्गरुडध्वजं उपहारैर्नरश्रेष्ठ
शुचिर्भूत्वासमाहितः धृत्वाबालमयंदेवंदेवदेवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतैरधिष्ठितं मायावीलामनःश्रीशोसमायातु-
जगत्पतिः युधिष्ठिरउवाच उपवासासमर्थानांयाचेयंपुरुषोत्तमं एकांचद्वादशींपुण्यांवदस्ववदतांवर श्रीकृष्णउवाच मा
सिभाद्रपदेशुक्लेद्वादशीश्रवणान्विता सर्वकामप्रदापार्थउपोष्यानियमात्सदा सरितांसंगमेस्नात्वाद्वादशींसमुपोषयेत् स्नानंदा

नंजपोहोमः स्वाध्यायः पितृतर्पणं नस्यांयत्क्रियतेपार्थनदनंतफलंलभेत् युधिष्ठिरउवा॰ त्वत्प्रसादाच्छ्रुतंकृष्णमयातुवामन
व्रतं इदानींब्रूहिमेकृष्णव्रतोद्यापनमुत्तमं श्रीकृष्णउवाच शृणुपांडववक्ष्यामिव्रतोद्यापनमुत्तमं कृतेनसफलंपार्थव्रतंभवति
निश्चितं आदौमध्येतथाचांतेव्रतस्योद्यापनंभवेत् ममइहजन्मनिजन्मांतरेचकृतदोषभयश्चित्तार्थपुत्रपौत्राद्यभिवृध्यर्थंवाम
नजयंतीव्रतमहंकरिष्येव्रतस्यसंपूर्णतासिद्ध्यर्थंउद्यापनंचकरिष्ये इतिसंकल्प्य श्रवणद्वादशीव्रतांगत्वेनपुरुषसूक्तेनषोड
शोपचारैः वामनपूजनंचकरिष्ये द्वादशीश्रवणोपेतायदाभवतिभारत सरितांसंगमेस्नात्वाहृदेवापियथाक्रमात् पितृदेवा-
र्चनंकृत्वाध्यायेच्चपरमेश्वरं जलेनपूरयेत्कुंभंस्थापयित्वाविचक्षणः पंचरत्नसमोपेतंतिलोपरिसुपूजितं तस्मिन्सूत्रघटि
तेस्थापयित्वाचवामनं सौवर्णंचयथाशक्त्याशंखशार्ङ्गविभूषितं शुभगंवस्त्रसंयुक्तंद्वादशांगुलमुच्छ्रितं पीतवस्त्रैः शुभैर्वे-
ष्ट्यअजिनंचकमंडलुं अतसीपुष्पसंकाशंतिलकृष्णाजिनोपरि स्थापयित्वाविधानेनचंदनेनानुलेपयेत् धृत्वाबालमयंरूपंदेव-
देवस्यचक्रिणः ब्रह्मांडमुदरेयस्यमहद्भूतेरधिष्ठितं मायावीवामनःश्रीशोसमायातुजगत्पतिः आवाहनं अजपायमहेशायज
लजास्यायशंसिने नमस्तेकेशवानंतवासुदेवनमोस्तुते ध्यानं कमंडलुशिखाधारीकुब्जरूपोसिवामन छत्रदंडधरोदेवपा
द्यंगृण्हनमोस्तुते पाद्यं सहस्रशीर्षात्वंदेवश्रवणर्क्षसमन्वितः अर्घ्यंगृहाणदेवेशरमयासहितोहरे अर्घ्यं कमंडलुस्थि
तंचारुगंगोदकमपूरितं देवेशाचमनार्थंचतोयंमेप्रतिगृह्यतां आचमनीयं गंगासरस्वतीरेवापयोष्णीनर्मदाजलैः स्नापितो-
सिमयादेवतथाशांतिंप्रयच्छमे स्नानं अतसीपुष्पसंकाशंतिलकृष्णाजिनोपरि कुरुक्षेत्रेप्रतिष्ठाप्यवामनंस्थापयाम्यहं आस-
प्रसीददेवदेवेशनमस्तेस्वस्तिवामन नमस्तेब्रह्मरूपायपीतनिर्मलवाससे वस्त्रं श्रीखंडंचंदनंदिव्यंगंधाढ्यंसुमनोहरं विले
पनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां चंदनं मल्लिकाशतपत्रंचजातिपुष्पसुगंधकं चंपकेजलजेयुक्तंपुष्पंगृण्हनमोस्तुते पुष्पं न
मः कमलकिंजल्कपीतनिर्मलवाससे महाहवरिपुस्कंधधृतचक्रायचक्रिणे पूजामंत्रः मत्स्यंकूर्मंवराहंचनारसिंहंचवामनं

रामंरामंरामकृष्णंबोद्धंकल्किंहिनेनमः पादार्घेकैकमत्स्यांगंपूजयेच्छीर्षमंततः पादौमत्स्यायचनमोनमः कूर्मायजानुनी वराहाय
नमोगुह्यंनृसिंहायेनिनामतः उरस्तेवामनायेतिभुजौरामायवैनमः कर्णौरामायचनमः कृष्णायचनमोमुखं बौद्धायचनमोनेत्रेक
ल्किनेचनमःशिरः इत्यंगपूजा धूपोयंदेवदेवेशशंखचक्रगदाधर अच्युतानंतगोविंदवासुदेवनमोस्तुते धूपं त्वमेवपृथि
वीज्योतिर्वायुराकाशमेवच त्वमेवज्योतिषांज्योतिर्दीपोयंप्रतिगृह्यतां दीपं अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितं मयानिवे
दितंदेवप्रसीदपरमेश्वर अग्निर्यमोवैश्रवणःपापंमेहंतुचाव्ययः नैवेद्यं आचमनं करोद्वर्तनं फलं तांबूलं दक्षिणां नीराज
नं मंत्रपुष्पांजलिं प्रदक्षिणां नमस्कारान् प्रार्थना जगदादिर्जगद्रूपअनादिर्जगदंतकृत् जलाशयोजगद्योनिःप्रीयतांमेजनार्द
नः अनेककर्मनिर्बंधध्वंसिनंजलशायिनं नतोस्मिमथुरावासंमाधवंमधुसूदनं नमोवामनरूपायनमस्तेस्तुत्रिविक्रम नमस्तेब
लिबंधायवासुदेवनमोस्तुते इत्युक्त्वाथगुरुंनत्वापूजयित्वाजनार्दनं भूमौजपेज्जितक्रोधःशब्दादिविषयस्तथा उद्यापनंततःकु
र्याद्द्वादशैर्वत्सरैस्तदा सौवर्णींराजतींताम्रींमूर्तिंकृत्वाचतुर्भुजां द्वादश्यास्तुदिनेप्राप्तेगुरुमभ्यर्च्यशक्तितः सदाचाररतंपार्थवे
दवेदांगपारगं अस्मदीयंव्रतंविप्रविष्णुवासरसंभवं संपूर्णंतुभवेद्येननन्नकुरुषड्द्विजोत्तम तस्याग्रेनियमःकार्योदंतधावनपूर्वकं
स्नानंकृत्वामंत्रपूर्वंनद्यादौविमलेजले तर्पयित्वापितृन्देवान्पूजयेन्मधुसूदनं एवंसंपूज्यविधिवद्रात्रौजागरणंचरेत् ततःप्रभा
तसमये स्नात्वाचार्यादिभिःसह वामनं पूजयेत्भागवत् होमंकुर्याद्विधानतः मंत्रेणेदंविष्णुरितिसमिदाज्यतिलोदनैः प्रतिद्रव्यंस
हस्रंवाशतमष्टोत्तरंहुनेत् ब्राह्मणान्भोजयित्वातुद्वादशाष्टव्रतीनृप प्रतिमांचतथाधेनुमाचार्यायनिवेदयेत् एवंकृतेतुरा-
जेंद्रगाःकृष्णाद्वादशाष्टवा षट्चतस्रोथवादद्याएकांवापिपयस्विनीं वामनःप्रतिगृह्णातिवामनोवैददातिच वामनस्तारकोभाभ्यां
वामनायनमोनमः एवंदत्वाततःप्रातर्भोजनंषड्रसान्वितं पूर्वंदद्याद्ब्राह्मणेभ्यःपश्चाद्भुंजीतवाग्यतः प्रत्येकंब्राह्मणान्कुंभान्
दक्षिणावस्त्रचंदनं भूयोयथेच्छयाराजन्सर्वत्रैषविधिःस्मृतः एवंव्रतेकृतेब्रह्मन्यत्पुण्यंतन्निबोधमे यावत्कल्पशतंपूर्णं

मेकसप्ततिसंख्यया प्राप्यविष्णुपुरंभोगान्भुंजेतकालमक्षयं इहागत्यभवेद्राजन्राजभिश्चसुसेवितः अथशिक्यदानसंक॰ कृत
श्रवणद्वादशीव्रतांगत्वेनविहितंश्रीवामनप्रीत्यर्थंइदंदध्योदनसहितंशिक्यदानंकरिष्ये ब्राह्मणपूजनं वायनमंत्रः दध्योदनयुतंशि-
क्यंवारिधानीयुतंविभो छत्रोपानहसंयुक्तंब्राह्मणायददाम्यहं इदंदध्योदनसहितंशिक्यअमुकशर्मणेब्राह्मणायतुभ्यमहंसंप्रददे इति
वायनं इतिश्रीभवि॰वामनद्वा॰व्रतोद्यापनंसंपूर्णं अथपौषकृष्णद्वादश्यांसुरूपद्वादशीव्रतं गुर्जरदेशेप्रसिद्धं उमोवाच भ
गवन्प्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो कथितव्यंप्रसादेनयद्यस्तिमयिसौहृदं व्रतेनकेनचीर्णेनवैरूप्यंप्रणश्यति सौभाग्यंचैव
मतुलंप्राप्यतेकस्यपूजनात् तन्मेकथयदेवेशपरमाभीष्टदायक ईश्वरउ॰ श्रूयतांपरमंगुह्यंव्रतंपापहरंशुभं सुरूपाद्वादशीनाम
महापातकनाशिनी सुरूपदायिनीचैवमहापातकनाशिनी कुलवृद्धिकरीचैवसर्वसौख्यप्रदायिनी तच्छृणुष्वप्रयत्नेनकथ्यमानं
मयानघे पुरावैद्वापरस्यांतेविष्णुर्दैत्यनिषूदनः अवतीर्णोमर्त्यलोकेवसुदेवकुलेकिल तेनोढारुक्मिणीनामभीष्मकस्यसुतापुरा
अत्यंतरूपसुभगापतिव्रतपरायणा नहितस्याविनाकृष्णःस्तोकमप्यहतेसुखं श्वश्रूःश्वशुरयोःपादौववंदेसापुनःपुनः केनापि
कर्मदोषेणकुपिताविष्णुमातरः नप्रसादयतिक्षिप्रमितिज्ञात्वातुदेवकी कृष्णंप्रोवाचकुपितायदिनजननीत्यहं ततस्त्वयाहिवैवा
त्याकुलरूपगुणाधिका मद्वाक्यमन्यथाकर्तुंनार्हसित्वंकुलोद्वह कृष्णउवाच मायांतुरुक्मिणींत्यक्त्वाउद्वहेहंकथंशुभे यः
परित्यज्यतेभार्यामविक्लवशरीरिणीं संप्राप्नोतिहिमंदत्वंदौर्भाग्यंसमपौरुषं विरूपत्वमवाप्नोतिनसुखंविंदतेक्वचित् व्या
धिर्वाजायतेलोकेनिंदनीयःसदैहिनां इत्यहंदेविजानामिकथंकुर्यांवचस्तव देवक्युवा॰ सर्वेषामेवदेवानांतीर्थादीनामपिप्र
वं मातागुरुतरापुत्रकस्तस्यावचनंत्यजेत् ममवाक्यस्यकरणान्नकथंपापिष्ठताभवेत् जननीपूज्यतेतेनभार्याचयदुनंदन कृ
ष्णउवाच परित्यजामिनोभीरुंप्रियांप्राणधनेश्वरीं इतितूष्णींपराभूतांमातरंप्रेक्ष्यकेशवः चिंतयामासपरमंकंसोपायमपरं
दिति एतस्मिन्नेवकालेतुनारदोभगवानृषिः अभ्युज्जगामसहसाविष्णुंसंप्रेक्ष्यविस्मितं पूजितःपरयाभक्त्याअर्घ्यंजग्राह॰

नारदः उपविश्येयथान्यायंपर्यपृच्छदनामयं नारदउ॰ किंत्वंखेदंकरोषीत्थंकथमुद्वेगकारणं किंनसिध्यतितेभीष्टंत्यजोद्वेगंयदू
त्तम कृष्णउवा॰ मात्रानियुक्तोदेवर्षेपरिणेतुंद्विजोत्तम कन्यामुद्वाहयिष्यामिसुरूपांकस्यचित्प्रभो नारदउ॰ श्रूयतामभिधा-
स्यामिपूर्ववृत्तांतमादरात् लक्ष्मीयुक्तःपुरानाथःक्रीडमानोहिनंदने तत्रागमत्सभगवान्दुर्वासाऋषिसत्तमः अभ्युत्थानादि
विधिनासत्कृतंज्ञानमूर्तिना प्रेक्ष्यबीभत्सरूपंतंदेव्याहास्यंकृतंतदा सकोपेनमहातेजावैश्वानरसमप्रभः शशापलक्ष्मींदुर्वासा
मुनिःक्रोधेनसंयुतः हसितोहंत्वयामुग्धेआत्मनोरूपमीक्ष्यच विरूपाभवदुर्वृत्तेकिंनज्ञातोस्म्यहंत्वया इत्युक्त्वातदादेव्यायथाश-
क्त्याप्रसादितः प्रसन्नोजगदेवाक्यंमच्छापोनान्यथाभवेत् जन्मांतरेणास्यफलंकरिष्यतिविरूपिता सेयंमर्त्येवतीर्णाहिगोपक-
स्यगृहेशुभा सत्यभामाविरूपाक्षीविरूपदशनातथा कर्णनासादिविकृतासंजातातत्प्रभावतः पाणिपादकटिग्रीवंसर्ववैरूप्य
लक्षणं तत्रगच्छमहाप्राज्ञसतेकन्यांप्रदास्यति कृष्णउ॰ विरूपवदनांब्रह्मन्कथंद्रक्ष्यामिनित्यशः कांगतिंवैगमिष्यामितांविवा
ह्यकुरूपिणीं नारदउ॰ रुक्मिण्यास्तुप्रसादेनशापान्मुच्येततत्क्षणात् उत्तमंप्राप्स्यतेरूपंसौभाग्यंपरमंसुखं देवक्याश्चप्र
सादेनधर्मकामार्थसिद्धये एवंभविष्यतितववसंबंधोविहितःसुरैः त्वयाचनान्यथाकार्यंगुरूणांवचनंमहत् मातागुरुतराभूमेरिति
वेदेषुगीयते ईश्वरउवा॰ एवमुक्त्वामहादेविनारदस्त्रिदिवंगतः कृष्णोपिमातरंप्राहवैवात्वयाहिविधीयते विवाहितात्वसातेनवै
देनविधिनाततः आनीयस्वगृहंमातुर्दर्शयामासतांवधूम् पश्ययाद्येवमयाभामापरिणीताशुभविना निवृत्तिंपरमांगच्छप्रसा-
दस्सुखीभव इत्युक्त्वावीक्ष्यतांकृष्णःप्रणिपत्यचमातरं बभूवकृतकार्याणांकृतकृत्योमहाबलः तांदृष्ट्वादेवमाताचबभौदुःखा
धिकाभृशं ईदृक्विरूपांविकृतांकथंभर्तास्मिगोपितां चिंतामवापमहती मतीवोद्विग्नमानसा कस्यापिनाक्वचक्षेयाविरूपंतं
च्छरीरजं अथकस्मिन्सुकालेतुरुक्मिणीतत्रभावतः नमस्कृत्यततःश्वश्रूंसंस्पृष्टंगोमयंतदा उवाचप्रस्तुतंवाक्यंभक्तियुक्तशुभा
यहं अंबाहंद्रष्टुमिच्छामिसपत्नींकृष्णवल्लभां नांदर्शयितुमेशीघ्रंप्रसादंकुरुधीयतां देव्युवाच श्वश्रूर्त्वहंतेसुभगेममापवच

नंकुरु पूर्वमाचरितंस्कभ्रूः सुरूपाद्वादशीव्रतं संप्रयच्छसिचेत्तस्येदर्शनंतेभविष्यति रुक्मिण्युवाच कष्टेनक्रियतेधर्मोव्रतंचापि-
सुदुष्करं कथंनस्येप्रयच्छामिफलंदेवैःसुदुर्लभं देवक्युवाच अर्धंप्रदीयतामस्येनदर्थमथवापुनः पंचमांशमथोषष्ठंषोडशांशं
मथापिवा रुक्मिण्युवा॰ सुरूपाद्वादशीपुण्यंतिलार्द्धमपिनोत्सहे किंपुनःषोडशांशंतुसपत्न्यांदुःखचेतसि एवमुक्त्वाजगामा-
शुमंदिरंस्वंशुभेक्षणा पुनःपप्रच्छकृष्णंसाप्रणिपातेनवैरुषा देवपृच्छामितेसर्वंननुतुष्टोसिमेप्रभो कथंपश्यामितामद्यनवो
ढांकृष्णवल्लभां श्रीकृष्णउवा॰ दर्शयिष्येद्यहंसुभ्रूर्विरूपांनांसुमध्यमे विरूपश्रवणाक्षींतांकुरूपांविकृताननां अहष्टैवेचित्र्यहृ-
तंरूपाद्यत्रनसंशयः इत्युक्त्वारुक्मिणींकृष्णःसत्यभामांतदाब्रवीत् प्रार्थयार्थप्रियांसुभ्रूंसुरूपाद्वादशीव्रतं तिलादप्रिहिषष्ठांशं
देहिमेसेवकास्म्यहं सागतानत्सकाशंतुपिधायद्वारमादरात् उवाचरुक्मिणींसातुसत्यभामाशुचिव्रता एकामप्याहुतिंदेविदेहिभी
ष्मकनंदिनि अर्धाहुतिर्वामेदेयायद्यस्तिमयिसौहृदं रुक्मिण्युवा॰ कोयंमतिभ्रमस्तेवैस्वरूपाद्वादशीप्रति तिलाहुतिंप्रयच्छा-
मिउद्घाटयकपाटकं इत्युक्त्वातरितंस्मात्साद्त्वात्येकांतिलाहुतिं तस्यांचैवप्रदत्तायांरूपेणसाधिकाभवत् तांदृष्ट्वाविस्मयपरांप-
प्रच्छदयितांहरेः कथ्यतांममकाहित्वंकिमर्थमिहचागता सत्यभामोवा॰ नवाहंभगिनीभद्रेकृष्णेनोढास्मिधार्मिके सत्यभामेति
मेनामनमामिचरणौतव इतिश्रुत्वातुवचनंविस्मयोत्फुल्ललोचना नोवाचकिलचार्वंगीत्यत्यर्थंविस्मिताभवत् एतस्मिन्नेवकाले
तुवाग्उवाचाशरीरिणी नवदानप्रभावेनसत्यासीत्त्वस्वरूपिणी स्वरूपाद्वादशीपुण्यंदेवानामपिदुर्लभं देव्युवाच कर्मणाके-
नकर्तव्याकिमाचारंवदस्वमे नियमंहोमदानंचप्रसादंमेविधीयतां ईश्वरउ॰ पौषेकृष्णेतुसंप्राप्तेपुष्यर्क्षंयदाभवेत तस्यांरा
त्रौसंयतात्माध्यात्वाविष्णुंसनातनं श्वेतागौरेकवर्णावानस्याग्राह्यंतुगोमयं अंतरिक्षात्तुपतितंशुचिर्मौनसमस्थित [illegible]
नीनांतुशतमष्टोत्तरंतिलैः प्रतीक्षेद्वादशींकृष्णासुपवासपरायणः स्नात्वानद्यांतडागेवाविष्णुमेवाथचिंतयेत् सौवर्णंतुहरिंकृत्वा
रौप्यंवाभक्तिशक्तितः तिलपात्रोपरिस्थंचततोविष्णुंप्रपूजयेत् इतिसंपूज्यविधिवत्पुष्पधूपैःसदीपकैः नैवेद्यंतिलमिश्रंतुफल

निर्विविधान्निव नमः परमशांतायविरूपाक्षनमोस्तुते सर्वसंकटनाशायगृहाणार्घ्यंनमोस्तुते एवंसंपूज्यदेवेशंकुर्याद्धोमंसमाहितः
आवाह्यदेवंलक्ष्मीशंहोमयेद्धोमयाहुती: शतमष्टाधिकंचैवतिलान्व्याहृतिसंयुतान् सहस्रशीर्षेतिमंत्रेणहृदिध्यात्वाजनार्दनं ल
क्ष्मीयुक्तंचमेधाभंशंखचक्रगदाधरं होमांतेकारयेच्छ्राद्धंवैष्णवंद्विजसत्तमैः दत्वाचभोजनंतेभ्योघृतकुंभंसदक्षिणं कथाश्रवण
संयुक्तंजागृयात्तुततोनिशां तंकुंभंवैष्णवींमूर्तिं ...भनिपादयेत् मंत्रहीनंविहीनंचसर्वंतत्रक्षमापयेत् ईश्वरउवाच एवंयः
कुरुतेदेविसुरूपाद्वादशीव्रतं नरोवायदिवानारीतच्चपुण्यंशृणुष्वमे दौर्भाग्यंनश्यतेतस्यअपिजन्मांतरार्जितं अपिवृधूमस्यसंप
र्कोजायतेकारणांतरात् तस्यापिनश्यतेदुःखंवैरूप्यंजन्म... पनि पतिनानवियोगस्यान्नेष्टैःसहवियोगता जायतेगोत्रवृद्धिश्च
कीर्तिमान्जायतेभुवि जातिस्मरणमाप्नोति पदंनिर्वाणमाप्नुयात् पठ्यमानमिदंभक्त्यायःशृणोतिसमाहितः पुण्यमाप्नोतिसत
तंस्वर्गलोकेमहीयते इतिश्रीभवि॰ सुरूपाद्वादशीव्रतोद्यापनंसंपूर्णं इतिद्वादशीव्रतानिसमाप्तानि अथत्रयोदशीव्रतानि-
लिख्यंते आषाढशुक्लत्रयोदश्यांजयापार्वतीव्रतं भविष्योत्तरपुराणे श्रीलक्ष्मीरुवाच देवदेवजगन्नाथभुक्तिमुक्तिप्रदायक
कथयस्वप्रसादेनलोकानांहितकाम्यया नारीणांतुव्रतंदेवअवैधव्यकरंशुभं येनचीर्णेननारीणामखंडफलदंभवेत् श्रीभगवा
नुवाच सत्यमुक्तंत्वयादेविनत्वमिथ्यात्वयोदितं तद्व्रतंकथयिष्यामिनाख्यातंकस्यचित्पुरा अकथ्यंपरमंगुह्यंपवित्रंपापनाशनं
येनचीर्णेननारीणामवैधव्यंप्रजायते आषाढेचप्रकर्तव्याशुक्लपक्षेत्रयोदशी गृण्हीयान्नियमंतत्रदंतधावनपूर्वकं तत्रमंत्रः आ
युर्बलंयशोवर्चःप्रजाःपशुवसूनिच ब्रह्मप्रज्ञांचमेधांचत्वंनोदेहिवनस्पते नियमात्फलमाप्नोतिनिष्फलंनियमंविना एतत्सर्वंमय
त्वेनव्रतंनियमपूर्वकं एकभुक्तंव्रतंचैवकरिष्येहंमुदाधुना स्वादहीनेनधान्येनममपापंव्यपोहतु उमामहेश्वरौकार्यौसुवर्णरजता
दिभिः अथवामृन्मयौकार्यौवृषस्कंधोपरिस्थितौ गोष्ठेदेवालयेवापितथाब्राह्मणवेश्मनि स्थापयेद्वेदमंत्रेणप्रतिष्ठांतत्रकारयेत्
तद्दिनेदंतकाष्ठंहियोथिकंचवरानने स्नानप्रभृतिततःकृत्वाततःपूजांप्रकल्पयेत् सप्तर्षिभिःसमंतत्रपूजांकृत्वापृथक्पृथक् कुं

कुमागरुकस्तूरीसिंदूरैरष्टगंधकैः चंपकैः शतपत्रैश्च यूथिकादिकृतूद्भवैः ग्रीवासूत्रेण दूर्वाभिः पूजयित्वा विधानतः अर्घ्येण वारिश
द्धेन उत्तरीययुगेन च श्रीफलद्राक्षदाडिंबैः ऋतुजातफलेन च आद्यो देवि च शर्वाणि शंकरस्य सदा प्रिये अर्घ्यं गृहाण देवेशि मम मोपरि
कृपां कुरु इति पूजा प्रकर्तव्या कथां शृणुयाद्विजानमात् श्रीमहालक्ष्मीरुवाच अच्युताय नमस्तुभ्यं पुरुषार्थादिरूपिणे व्रतानाध्यक्ष महा
माज्ञ त्वं वृद्धिक्षयकारक कथयस्व प्रसादेन व्रतानामुत्तमं व्रतं केन चादौ पुरा चीर्णं मर्त्यलोके च कारकः एतत्सर्वं प्रयत्नेन ब्रूहि मे जग
दीश्वर श्रीभगवानुवा॰ अथातः संप्रवक्ष्यामि पार्वत्याश्च कथामिमां यां श्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः आसीत्पुरा कृ
तयुगे कौंडिन्ये नगरे वरे ब्राह्मणो वेदतत्त्वज्ञः सत्यशौचपरायणः गुणवान् शीलसंपन्नो वामनो नामनामतः तस्य भार्या प्रिया सत्या
रूपलक्षणसंयुता धनाढ्यो वेदविदुषो गृहे वै सर्वसंपदः पूर्वकर्मविपाकेन संतानरहितो भवत् अपुत्रस्य गृहं शून्यं श्मशानसदृशो
पमं दंपतीनं दुःखेन क्षीणो जातो शरीरतः एकदा शक्रकाले तु नारदो गृहमागतः अर्घ्यपाद्यादिकं दत्वा कथां चक्रे मुनासह वाम
नउवाच नारद त्वमृषिश्रेष्ठ सर्वज्ञानपरायणः कथयस्व प्रसादेन कथं दुःखं प्रशाम्यति दानेन केन देवर्षे व्रतेन नियमेन च तीर्थे
न च मुनिश्रेष्ठ संतानं मे कथं भवेत् नारदउवा॰ शृणु विप्र प्रवक्ष्यामि संतानं ते भविष्यति वनस्य दक्षिणे पार्श्वे बिल्वयूथसुमध्यतः
भवानीसहितः शूली लिंगरूपेण तिष्ठति सपर्यां कुरु यत्नेन तुष्टो दास्यति संततिम् अपूज्यं लिंगमभ्यर्च्य संततिश्च प्रजायते अना
थं प्रेतसंस्कारी कोटियज्ञफलं लभेत् इत्युक्त्वा नारदः स्वर्गं गतो वै मुनिपुंगवः वनमध्ये गतौ द्वौ तु दंपती पुत्रकांक्षिणौ बिल्वमध्ये न
तौ दृष्ट्वा शिवलिंगं पुरातनं बिल्वपत्रैश्च जीर्णैश्च पिहितं सर्वतस्ततः विहाय बिल्वपत्राणि सममार्जोपलेपनं पंचामृतेन प्रक्षाल्य
ह्मणोत्तमः कुसुमं गृह्यते यावत्तावद्दृष्टः सपन्नगैः पतितस्तद्वने घोरे सिंहव्याघ्रसमाकुले [illegible]
केनापि कारणेनैव कथं नायाति मे पतिः रुदंती शोकसंयुक्ता वनमध्ये गता सती आगता यत्र तत्रास्ते भर्ता च पतितो भुवि भर्तारं पति

तंहृष्ट्वातदामोहमुपागमत् ततःपश्चाच्चेतनायुक्तासास्मरद्धनदेवतां पार्वतीतुसमायातायत्रतिष्ठतिब्राह्मणी आक्रंदमानांतांदृष्ट्वापा-
र्वतीवरदाभवत् सुधासुभगहस्तेनविप्रवक्त्रेविमुंचति उत्थितोब्राह्मणस्तत्रनिशीथेनिद्रितोयथा तावेवचरणौगृह्यदंपतीविनया
न्वितौ पार्वत्याःपूजनंभक्त्याचक्रतुस्तौमुदान्वितौ पार्वत्युवाच त्वत्पूजनादहंभीतावरंवरयसुव्रत ब्राह्मण्युवा० त्वत्प्रसादेनरु
द्राणिमयालब्धंचवांछितं संतानंचैवमेनास्तिएतद्दुःखंचमेहृदि पार्वत्युवा० व्रतंकुरुविधानेनममनाम्नाचविश्रुतं जयाममव्रतं
नामत्रैलोक्येपावनंपरं जयापार्वतीव्रतंनामआषाढेचारुलोचने स्वादहीनेनधान्येनत्याज्यंलवणमुत्तमं दृढव्रतंचकर्तव्यंप्रोक्त-
व्यंदिनपंचकं त्रयोदश्यांव्रतारंभस्तृतीयायांसमापनं शुक्लपक्षेव्रतारंभःकृष्णपक्षेसमापनं पंचाब्दंगोधुमान्नेनव्रतंकार्यंप्रयत्न
तः पंचाब्दंहियवैश्चैवव्रतंतुलवणंविना पंचाब्दंतंडुलैःकार्यंइक्षुरसविवर्जितं मुद्गैःकार्यंपंचवर्षमेवंहायनविंशतिः विंशत्यब्दे-
समाप्तेतुव्रतोद्यापनमाचरेत् दंपत्योःपरिधानंहिदद्याद्भूषणपूर्वकं भोजनंचसुवासिन्यैतृतीयायांयथोदितं विंशतिंप्रथमेवर्षेवि
त्तशाठ्यमतःपरं पंचकेपंचकेकार्यंपरिधानेश्चभोजनैः नानारसैःसमायुक्तंघृतखंडसमन्वितं सभर्तृकाश्चदातव्यंभोज्यंसौभा
ग्यहेतवे कुंकुमंकज्जलंदेयमब्देअब्देस्वशक्तितः रात्रौजागरणंकुर्यादखंडफलदंभवेत् अनेनविधिनायस्तुकुरुतेव्रतमुत्तमं रा
त्रौजागरणंकार्यंव्रतसंपूर्णहेतवे व्रतेनतुविनानारीविधवाजन्मजन्मनि शोचतीदुःखसंयुक्तानचसौभाग्यभाग्भवेत् नारीणां
तुव्रतैर्दानैर्यदिभक्त्याततःपरं सौभाग्यमतुलंयातिपतिसंतोषदाननः एवमुक्त्वाव्रतमिदंतत्रैवांतरधीयत पश्चाद्गृहंसमागत्यदं
पतीचमुदान्वितौ पूर्वोक्तेनविधानेनप्राप्तसुखसुखंतयोः दंपतिभ्यांविशेषेणअवैधव्यपरंसुखं भुक्त्वाचविविधान्भोगानंतमा
शिवालयं एवंयाकुरुतेनारीनचभर्त्रावियुज्यते कुलत्रयंसमुद्धृत्यनीयतेशिवमंदिरं सान्निध्यसुखमाप्नोतिशिवलोकेमहीयते
श्रुत्वाविधानेनसर्वपापात्प्रमुच्यते इतिश्रीभवि० जयापार्वतीव्रतोद्यापनंसंपूर्णम् इतिगुर्जरदेशेगुर्जराचारप्रामं अथ
भाद्रपदशुक्लत्रयोदश्यांगोत्रिरात्रव्रतंहेमाद्रौभाविष्योत्तरे युधिष्ठिरउ० भगवंस्त्वत्प्रसादेनबहूनिसुकृतानिमे श्रुतानिबहुपुण्या

निकृतानिमधुसूदन सर्वपापहराणिस्युः सर्वकामप्रदानिच सांप्रतंश्रोतुमिच्छामिव्रतानामुत्तमंव्रतं किंचिद्योगव्रतंब्रूहियदितुष्टोसिमा
धव यत्कृत्वासर्वपापेभ्योनरोनारीप्रमुच्यते श्रीकृष्णउ॰ कथयामिनृपश्रेष्ठव्रतानामुत्तमंव्रतं यन्नकस्यचिदाख्यातंतच्छृणुष्वनृपोत्त
म यान्यान्कामाच्वांछयतिलभेत्तांस्तांस्तथैवच तत्क्षणादेवमुच्यंतेनरानार्यश्चसर्वशः प्रभोर्भगवतोराजन्कामधेनोःप्रसाद
तः सौभाग्यसंततिंलक्ष्मींप्राप्नोतिसुखमुत्तमं युधिष्ठिरउवा॰ यदितुष्टोसिभगवन्व्रतस्यास्यविधिंप्रभो ब्रूहिमेदेवदेवेशाकु
रोमित्वत्प्रसादतः केमंत्राःकेनमस्कारादेवतार्थेप्रकीर्तिताः किंदानमत्रमर्घ्यंचकथयस्वसुरोत्तम श्रीकृष्णउ॰ नारदेनपुरारा-
जन्यदुक्तंसगरादिषु स्मारितंतत्वयाराजन्शृणुष्वैकमनाव्रतं मासिभाद्रपदेशुक्लेत्रयोदश्यांसमारभेत् त्रयोदश्यांप्रभातेतुस्
नात्वायशुचिर्भवेत् गृण्हीयान्नियमंपूर्वं दंतधावनपूर्वकं आचम्योदकमादायइमंमंत्रमुदीरयेत् गोत्रिरात्रव्रतस्यास्योपवासक
रणंमम शरणंभवदेवित्वंनमस्तेधेनुरूपिणि प्रसीदतुमहादेवोलक्ष्मीनारायणःप्रभुः लक्ष्मीनारायणंदेवंसौवर्णंवास्वशक्तितः पं
चामृतेनगव्येनस्नापयेत्कमलापतिं स्थापयेत्सर्वतोभद्रेमंडलेष्टदलेपिवा गंधपुष्पैःसनैवेद्यैस्तुतिगीतादिनर्तनैः नारिकेलार्घ्यदा
नेनप्रीणयेद्गांहरिंतथा लक्ष्मीकांतजगन्नाथगोत्रिरात्रव्रतंमम परिपूर्णंकुरुष्वेदंगृहाणार्घ्यंनमोस्तुते आर्तिक्यंचततःकुर्याद्भ-
क्त्याकृष्णस्यतुष्टिदं नवकुंभंजलभृतंहविष्यान्नेनपूरितं कृत्वादिनत्रयंपार्थप्रीतयेविनिवेदयेत् धेनुपूजांततःकुर्याज्जलधारांप्र
दक्षिणां पुरादत्वातुमुकुटंकुंडलंकुंकुमंतथा अन्नाच्छादनगंधादिदिव्यपुष्पैःसदीपकैः अहोरात्रप्रमंकिंचित्घृतदीपंदिनत्रयं
अर्घ्यदानंततःकुर्यान्नारीकेलादिभिःफलैः अर्घ्यमंत्रः पंचगावःसमुत्पन्नामथ्यमानेमहोदधौ तासांमध्येतुयानंदातस्यैधेन्वै
नमोनमः प्रदक्षिणीकृतायेनधेनुर्मार्गानुसारिणी प्रदक्षिणीकृतातेनसप्तद्वीपावसुंधरा गावोममाग्रतःसंतु गावोमेसंतु पृष्ठतः
गावोमेहृदयेसंतुगवांमध्येवसाम्यहं आरार्तिकंसनैवेद्यंगीतवाद्यमहोत्सवैः कुंकुमंकलशंसूत्रंधेन्वैदद्याद्विचक्षणः एवंसंपूज्यतांधेनुंसम्यग्
भक्त्यादिनत्रयं यवांश्चयवसंचैवचास्यैतत्पाययेदपः गोमयादागतैर्धान्यैःकुर्यात्तैरेवपारणं धेन्वैप्रजागरंकुर्यात्सर्वपापप्रणाशनं त्रिविधान्मुच्यतेपापा

त्महरार्धेनपांडव तस्योत्तरान्कृतान्पापात्महरार्धेनमुच्यते चत्वारिवेणुपात्राणिकारयित्वाप्रपूरयेत् नारिकेलाम्रकदलद्राक्षाखर्जू
रदाडिमैः शुभैर्विरूढैःसिंदूरैर्वस्त्रकुंकुमकज्जलैः प्रथमेबीजपूरार्घ्यंद्वितीयेदाडिमंशुभं तृतीयेनारिकेलंचचतुर्थेदानृत्यं दिनत्रयं प्रा
कारास्तुत्रयःकार्याहविष्यान्नेनपूरिताः लक्ष्मीनारायणंदेवंब्राह्मणंभार्ययासह पूजयेत्कुसुमैर्वस्त्रैर्हेमसूत्रैर्युधिष्ठिर दंपत्योर्भोजनं
देयंधेनुभक्त्यादिनत्रयं पारणेगौरिणींविप्रानिःस्वान्बंधूंश्चभोजयेत् गुरुरूपायतांधेनुंद्विजायप्रतिपादयेत् सकुंकुमांसवत्सांच
घंटामुकुटभूषितां गीतवादित्रनृत्यादिशांतिपाठपुरःसरं यायाद्विप्रगृहंयावत्प्राप्तयेतत्फलस्यवै एवंयाकुरुतेपार्थगोत्रिरात्रव्रतो
त्तमं दुर्लभंतुसदास्त्रीणांनराणांनृपसत्तम अश्वमेधसहस्राणिवाजपेयशतानिच कृत्वायत्फलमाप्नोतिगोत्रिरात्रव्रतेकृते प्रभासे
चकुरुक्षेत्रेचंद्रसूर्यग्रहेतथा हेमभारशतंदद्यात्फलंतत्समाप्नुयान्नृप धेनुदानंततःपश्चात्सवत्सांसर्वकामदं सागरांबरसंयुक्तादत्ता
तेनवसुंधरा एवंयाकुरुतेपार्थत्रिरात्रव्रतमुत्तमं भवांतरकृतात्पापात्त्रिविधान्मुच्यतेनरः यावत्काचिन्नपश्यतभर्तृदुःखंनराधिप पु
त्रपौत्रसुखंतस्याभविष्यतिनसंशयः जन्मांतरेप्यसौनारीवैधव्यंनैवपश्यति वैधव्यंचमहद्दुःखंनभवेत्तुभवांतरे अपुत्रालभतेपुत्रान्
धनहीनाधनंलभेत् कायेनमनसाचैववकर्मणायदुपार्जितं तत्सर्वंविलयंयातिगोत्रिरात्रव्रतेनवै इहभोगान्सुविपुलान्भुक्त्वायुःपूर्णमेवच
व्रतस्यास्यप्रभावेनगोलोकेचमहीयते कीर्तिदंधनदंचैवसौभाग्यकरणंनृप आयुरारोग्यकरणंसर्वपापप्रणाशनं एतस्मात्कारणाद्रा
जन्सभार्यस्त्वंकुरुव्रतं राज्यंवायदिसत्कीर्तिंनित्यंप्राप्तुमिहेच्छसि तच्छ्रुत्वापांडवश्रेष्ठोव्रतंचक्रेसमाहितः व्रतस्यास्यप्रभावेनलब्धंरा
ज्यमकंटकं इतिहे॰भवि॰गोत्रिरात्रव्रतंसं॰ अथआश्विनशुक्लत्रयोदश्यांगुर्जरत्राचारप्राप्तंगोत्रिरात्रव्रतं युधिष्ठिरउ॰ येनलक्ष्मीच
सकलानराणांभवनेभवेत् संततिर्वर्धतेस्त्रीणांतद्व्रतंवदमेप्रभो श्रीकृष्णउ॰ शृणुराजन्प्रवक्ष्यामिव्रतानामुत्तमव्रतं येनवैक्रियमा
णेनसर्वपापक्षयोभवेत् गोत्रिरात्रमितिख्यातंनृस्त्रीणांफलदायकं वांछितंजायतेतेषांयेषांचेतसिवर्तते युधिष्ठिरउ॰ कीदृशंतद्व्र
तंदेवविधानंतत्रकीदृशं कथमेषासमुत्पन्नाकस्मिन्कालेतुकेशव श्रीकृष्णउवाच पुराकृतयुगेपार्थभद्रनामबभूवह वैवस्वत

कुलेजातोबभूवपृथिवीपतिः तदन्वयेदिलीपश्चप्रसूतःपतिरुत्तमः नृपाःसर्वेवशंतस्यसंजाताःकरदायकाः नित्यंधर्मपरोराजापु-
जनीयोमनीषिभिः नजायतेस्मसंतानंतस्यनीतिमतःसदा वांछयंस्तनयंराजासर्वकोसलपालकः पुत्रार्थंचसपत्नीकोवसिष्ठस्या
श्रमंययौ पश्यन्हिपथिकल्याणंसारसैस्तोरणंकृतं विविधानिअरण्यानिमार्गेषुफलितानिवै राजामहिष्यासहितोगजारूढःसु
वाहनः संध्यायांयोगिनस्तस्यमहर्षेःप्रापदाश्रमं सारथिंचसमादिश्यवाजीन्विश्रामयेत्यथ रथादुत्तीर्यदंपत्यावाश्रमंजग्मतुर्मु
नेः स्थितंकर्मणिसंध्यायांदिलीपोदहशेगुरुं अरुंधत्यासहासीनंसावित्र्येवपितामहं तौप्रणम्यगुरुंतत्रमुनिपत्नींविशेषतः स्थि
तौतस्यसमीपेतुप्रीतावानंदपूरितौ दिलीपंचतथात्यर्थंधर्मज्ञंलोकपालकं पप्रच्छकुशलंराज्येवसुधायाश्चवैमुनिः दिलीपउवा॰
कुशलंमेसदादेवस्थितेत्वयिगुरोसति सुराणांचमनुष्याणांविपत्तौरक्षिताभवान् विषयेममकांनायामपत्यंकिंनजायते किंतुका-
र्यंधरित्र्यामेनिराशाःपितरोगताः तथाकुरुमुनिश्रेष्ठपुत्रोभवतिमेयथा राज्ञांविपदिप्राप्तायांतदापत्यसुखंमुने वदेतिकथितंराज्ञा
मुनयेवैयुधिष्ठिर तदामुनिःक्षणंतस्थौध्यानस्तिमितलोचनः कारणंसंततराज्ञोमुनिर्दृष्ट्वासमाधिना पश्चान्निवेदितंतस्मैदिलीपा
यप्रयत्नतः वसिष्ठउ॰ पूर्वंत्वंत्रारिमाराध्यवसुधांगच्छतात्वया कल्पमूलेचतिष्ठंतीकामधेनुर्नवंदिता जातस्तस्यास्तदाकोपोदत्त-
स्तेशापईदृशः नवंदिताहंभवतासांप्रतंयदिभूमिप भविष्यतिनतेपुत्रस्तच्छापोनश्रुतस्त्वया नपूजयेद्यःपूज्यांन्नावंद्यानायोनवं
द्यते नजायतेतुकल्याणंपातकैरेवलिप्यते दिलीपउवाच कृतोमयापराधोयंकरोमिकिमहंमुने संततिर्जायतेयेनतद्व्रतंवदमेप्रभो
वसिष्ठउवा॰ अन्यैर्नानाविधैःपुण्यैस्तपोभिर्नृपदुःसहैः नजायतेतुसंतानंगोत्रिरात्रव्रतंविना सपत्नीकःसवत्सांमेधेनुंराजन्प्र
लप्रदां आराधयैकाग्रमनागोत्रिरात्रव्रतंकुरु यावदित्थंदिलीपस्यमुनिनाकथितंव्रतं तावच्चनंदिनीधेनुर्वनादायत्ततःशुभा कुंभाभ्र
ग्रीवलंबासुतसुखफलदानंदिनीलोकमातादेवानांवरदाशुभोदधिभवाकामप्रदापाटला गीर्वाणाःसकलाःस्तुतावपुषिवैतिष्ठंति-
यस्याश्चते संपूर्णाःशशिनःकलाश्चदधतीश्रेयस्करीपौर्णिमा भाद्रेमासिसमायातेशुक्लपक्षेतुपार्थिव प्रातःकुर्यात्त्रयोदश्यां

नियमंतुसुभक्तितः समुपोष्यगोत्रिरात्रंभक्त्याकृत्वाव्रतंनव भोक्ष्येहनिचतुर्थे ऽहंसौभाग्यंदेहिगोर्मम इतिनियममंत्रः ततोगावंसमभ्यर्च्यमं
डलेगंधदीपकैः तगरैःशतपत्रैश्चचंपकाद्यैःशुभाननां गावोमेअग्रतःसंतुगावोमेसंतुपृष्ठतः गावोमेहृदयेसंतुगवांमध्येवसाम्यहं पंचगावःसमुत्पन्नामथ्यमा
नेमहोदधौ तासांमध्येतुयानंदातस्यैधेन्वैनमोनमः इतिपूजामंत्रः फलैर्नानाविधैःपुष्पैर्गंधैर्दीपस्वशक्तितः पूजनीयाप्रयत्नेन
दद्यादर्घ्यंविधानतः नारीकेलंसकूष्मांडंमातुलिंगंचदाडिमं हरिद्राद्यान्नवनैवेद्यंकारयेद्यवसंयुतं गोत्रिरात्रव्रतार्थायसफलंचकरोधृ
तं सर्वकामप्रदेदेविगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यमंत्रः वस्त्रयुग्मंविधानेनदद्याद्वासांसिदक्षिणां सपत्नीकायगुरवेस्वशक्त्याचव्रतीनरः
दिनानित्रीणिभिस्त्रीणिश्रोतव्याचकथाशुभा जितक्रोधैस्ततःसर्वैस्त्रीभिर्वापुरुषैरपि एवंसंपूज्यविधिवल्लक्ष्मीयुक्तंतुकेशवं चतुर्थेदिवसे
प्रातस्ततोधेनुंविसर्जयेत् ततोधेनुंसवत्सांतुमंत्रेणानेनपार्थिव दद्याद्विप्रायविदुषेधर्मिणेशास्त्रज्ञानिने परिपूर्णंव्रतंकृत्वादत्वाकामानभी
प्सितान् विप्रायत्वंमयादत्तामातर्गच्छयथासुखं दानमंत्रः सर्वदानानिदेयानिस्वशक्त्यानतिभिर्नरैः विविधेभ्योद्विजेभ्यश्चदक्षिणांच
स्वशक्तितः वित्तशाठ्यंनकृत्वातुदापयेच्चततोनरः गृहंयावद्व्रजेत्पृष्ठगोनृत्यपुरःसरं गोपालानांचपाथेयंदद्याद्धेनुतुष्टये यवाद्या
श्चारितानित्यंफलैर्नानाविधैःसह युक्तावैकामधेन्वाचसंयुक्तागोमयेनतु पारणंतैःप्रकर्तव्यंसर्वैरिष्टजनैःसह सपत्नीकायगुर
वेदद्याच्चान्नंसदक्षिणं श्रीकृष्णउ० भाद्रेमासिसितपक्षेत्रयोदश्यांनराधिप एवमाराध्यतांधेनुंदिलीपोभक्तितत्परः ततःप्र
जानामधिपःप्रभातेसुरभिंमुनेः सुपूजितांविधानेनमुमोचत्वरितंशुचिः संध्यायाःप्रभृतिस्थित्वाआययौपुनराश्रमे अर्चांसुदक्षि
णाकर्तुंगृहीत्वाविधिवद्बलिं ययौधेनोःसमीपंतुबलिंदत्वादिनत्रयं अनुयातस्ततोधेनोर्वनंगत्वाततःपरं जयशब्दंप्रवदतःपक्षिणः
सुंदराननान् दृष्ट्वाचवनदेवीभिर्गीयमानंतथायशः श्रुत्वाचततोराजाभृशंमनसिहर्षितः चिरंशुभेवनेव्यक्तेभूमिपेपरिभ्रमितेसति
धेनुश्चशुशुभेराज्ञाराजाधेन्वाबभौपुनः नहिनेचमुनेर्धेनूराज्ञोभावंचपश्यती विवेशगह्वरंतत्रपार्वत्याश्चपितुर्नृप कृत्रिमश्चकृतः
सिंहोमुनिधेन्वाभयंकरः सिंहश्चदृष्टोराज्ञाधेनुंकर्षन्बलेनवै दृष्ट्वाराजाचतांधेनुंक्रंदमानांस्वरोल्बणैः ततोधनुर्धरःसोपितंमो

कुसुमपत्रकमे वध्यसिंहवधार्थायराजाबाणंकरेदधौ उत्पन्नस्तुतदाशोक: कोपयुक्तोबभूवसः धनुष्यारोपयनूबाणंचित्रन्यस्तइवस्थितः
हस्तस्यनिश्चलत्वेनक्रोधस्तस्यव्यवर्धत विस्मयं प्रापयनुसिंहोराजानंवैयुधिष्ठिर मानवस्यगिरामाहदुष्टत्वेनगर्विस्थितः सिंहउवा०
बाणःमयुक्तोभवतावृथामयिभविष्यति ततःकष्टेनमहताश्रमंमाकुरुसर्वथा मामारुतस्यवेगोपि पर्वतान्मूलनेक्षमः ज्ञायतेनमहारा
जगवांककुदिवैस्थितः महेश्वरस्यमांराजन्नाम्नाकुंभोदरेणतु सेवकानांचसर्वेषांमुख्यंजानीहिभूमिप विलोकयेमंपुरतोदेवदारुम
हाद्रुमं सिक्तःस्नेहेनभूपालशिवयात्वसुतःकृतः कदाचिदागतोहस्ती भग्नस्तेनमहाद्रुमः तस्यसंरक्षणार्थायनियुक्तोहंशिवेनतु
कृत्वाशिवेनसिंहत्वमुक्तोहंतीव्रभोजने तर्हीयंरवलुगौराजन्भक्ष्यामेसमुपागता त्यक्त्वालज्जांनिवर्तस्वभक्तोसिगुरवेभवान् आपत्का
लउदंवृत्तंनस्यान्त्वत्स्वभृतोयदि दोषोनजायतेतस्य यशोराजन्नगच्छति श्रुत्वागिरंचसिंहस्यराजाचैनमुवाचह ईश्वरेणसमोनान्यो
यदिसिंहोभवानपि समीपाच्चकथंयातिममधेनुर्गुरोरियं प्रसीदभक्ष्मेदेहंधेनुंमुंचसवत्सकां भविष्यतिजननन्याश्चवत्सोमार्गेवि-
लोकयन् सिंहेनतुदिलीपश्चकथितोवैतदापुनः देहांतेस्वदृष्टानिभयंकाराणिकुर्वता स्तोकेनहेतुनापार्थकीर्तिछत्रंचसत्कृतं
सर्वस्यजगतोराज्यंवपुरेतंनवंवयः त्यक्तुमिच्छसिवाराजन्मूर्खस्त्वमीदृशःकथं ददासिचकथंप्राणानूप्रजापालनतत्परः —
जीवन्नकिंमहाराजमुनेःकोपमपास्यसि ततोरक्षयदेहंत्वंराज्यंत्वंकुरुभूमिप यावच्चोवाचसिंहोसौनगेनानुगतांगिरं दिलीपोपित
दापार्थवाणीमिताम्रुवाचह धेन्वानिरीक्षितश्चैवभूमिपोदीनयागिरा किंनोराज्येनमेसिंहविषयेजीवनेनवा यशोगतंचमेसर्वंयदि
धेनुंग्रसिष्यसि एवमुक्त्वाततश्चाग्रेसिंहस्यपतितस्तदा यावदस्यंचपतितोमांसस्यपिंडवन्नृपः तावत्सिंहोरवंकृत्वाधावतश्चभयं
करः दृष्ट्वासिंहनिपातंचचंचलोनबभूवह तावत्तस्योपरिष्टाच्चपुष्पवृष्टिःपपातवै उत्तिष्ठवत्सभूपालवाचमित्थंनिशाम्यसः उत्थित
स्तुपुनश्चाग्रेगांददर्शनवैहरिं सेवयाचगुरोःपार्थभक्त्याचापिविशेषतः मीताकामदुघातस्यवरंवरयसव्रत योजयित्वाकरौराज्ञा
ग्रयान्वेतनयस्ततः वंशकर्तामहाप्राज्ञोशिवभक्तोनिरंतरं गौरुवाच गोभिरायव्रतंराजन्यद्भक्त्याभवताकृतम् ॥

भविष्यतिस्वतेदक्षः पुत्रःपौरुषविग्रहः अन्येपियेकरिष्यंतिगोत्रिरात्रव्रतंमम तेषांकामंचदास्यामिमनसीप्टंनसंशयः इत्युक्त्वाचलि-
ताधेनुर्वसिष्ठस्याश्रमंप्रति बलिंसंगृह्यविधिवद्ययावाशक्रदक्षिणा पूजांकृत्वाविधानेनराजपत्नीविशेषतः प्रदक्षिणात्रयंकृत्वा-
चलितोवैयुधिष्ठिर आश्रमंचततोगत्वादिलीपोसौपुनस्तदा गुरोरग्रेचतत्सर्ववृत्तांतमवदत्पुनः नंदिनीचतदापार्थदंपतीतोस्तको
मलौ पारणंचततःकृत्वाप्रस्थितोनगरंप्रति हुताशंचनमस्कृत्यहोतारंगांतथैवच आगतश्चततोराजाअयोध्यानगरंपुनः दिलीप-
श्चमहाराजःप्रजापालनतत्परः दिनैःकतिपयैरेवगोत्रिरात्रप्रभावतः राज्यंचकुर्वतस्तस्यसुषुवेमहिषीतदा प्रभातेसुमुहूर्तेचतु
त्सन्नोरघुवंशजः रम्यंजातंतदासर्वसंजातानिर्मलादिशः आददेब्राह्मणेभ्यश्चगावोवैवस्त्रसंयुताः मृदंगस्यस्वनैर्दिव्यैरम्यंजातंपुरं
महत् प्रजाःसर्वास्तदापार्थवदंतिस्मपुनःपुनः गोत्रिरात्रप्रभावाच्चराज्ञःपुत्रोबभूवह पुरंदरस्यजेताचमहाधर्मपरायणः दिशांजे
ताचयज्ञस्यकर्तासोपियुधिष्ठिर तदाप्रभृतिलोकेस्मिन्लोकाःकुर्वंतितद्व्रतं देवैःसर्वैःकृतंतत्रसर्वकामार्थसिद्धये सर्वाभिर्देवपत्नी
भिःकृतंचव्रतमुत्तमं गोत्रिरात्रव्रतंपुण्यंविधानेनफलप्रदं कुरुष्वत्वंमहाराजभक्त्याचापियुधिष्ठिर साक्षादनंतरंमातुःकृत्वामनसिव
र्तते भाद्रपदेसवत्सांतुभक्त्यात्वाराधयस्वगां एवंयःकुरुतेभक्त्यागोत्रिरात्रव्रतंपुनः सिद्ध्यंतिसर्वकार्याणिसुखंचैवप्रवर्धते कर्तव्यं
पुत्रकामेनगोत्रिरात्रव्रतंशुभं तपोभिर्दुष्करैःकिंचिद्यज्ञैस्तीर्थगयादिभिः नभवेच्चफलंराजन्भवेत्तच्चविधानतः कुर्वंतियेव्रतमिदंज
गतिप्रसिद्धंपापापहंसकलचिंतितकामदंच आरुह्यतेवतुविमानमनुत्तमंचस्वर्गंप्रयांतियमतोहिभयंविहाय इतिगोत्रिरात्रव्रतं
अथउद्यापनं युधिष्ठिरउवाच कथयस्वमहापुण्यंगोत्रिरात्रव्रतस्यवै उद्यापनविधिंकृष्णयेनचीर्णेनतत्फलं श्रीकृष्णउवा०
वर्षेचतुर्थेसंप्राप्तेगोत्रिरात्रव्रतस्यवै उद्यापनविधिंवक्ष्येसर्वेषांव्रतसिद्धये तृतीयेदिवसेस्नात्वायान्मध्यान्हेविधिपूर्वकं देवान्पितॄन्
समभ्यर्च्यशक्रेचस्वगृहेव्रती रात्रौचसर्वतोभद्रंगोरीतिलकमेवच पूरयेत्पंचभिर्वर्णैःशोभमानंप्रवद्यथा तास्मिस्यकलशंकृत्वापू-
र्णपात्रसमन्वितं माषेणचसुवर्णेनलक्ष्मीनारायणंप्रभुं नूतनंवस्त्रयुग्मंतुसूक्ष्मंतत्रप्रकल्पयेत् वंशपात्राणिकुर्वीतसौभाग्यद्रव्यसं

युनैः विरूढकस्मपक्कान्नैर्नारिकेलादिभिःफलैः विलेपनैश्चपुष्पैश्चधूपैर्दीपैस्तथोत्तमैः पंचामृतैश्चनैवेद्यैःपूजयेद्विधिपूर्वकं लक्ष्मी
नारायणंदेवंगांसवत्सांविशेषतः रात्रौजागरणंकृत्वागीतवादित्रनिस्वनैः ततःप्रभातसमयेहोमंकुर्याच्चवैष्णवैः आचार्यंवरयेत्तत्र-
वेदवेदांगपारगं तदाज्ञयाचकर्तव्यंसाधुकर्मप्रयत्नतः त्रिंशद्गावःप्रदातव्याएकावापिसवत्सका बहुदोग्ध्रीसुशीलाचतरुणीचसुशो
भना दंपतीपरिधानंचवस्त्रैराभरणैःशुभैः शय्यांसोपस्करांदद्यात्पानपात्रंकमंडलुं ताम्रंघृतपात्रंचतिलपात्रंसदक्षिणं दा
नानिचसुवर्णानांभोज्यागव्येनवैद्विजाः एवंधेनुंचविधायदत्वाचप्रदक्षिणंव्रजेत् पदेपदेऽश्वमेधस्यफलंप्राप्नोत्यसंशयं अथान्यानि
चदानानिदद्याद्विप्रेभ्यएवच भूयसींदक्षिणांदद्याद्व्रतसंपूर्णहेतवे गोपालेभ्यश्चपाथेयंशष्कुल्यादिचकंबलं सर्वंक्षमापयित्वा
तुपारणंचततश्चरेत् अनाथेव्याधियुक्तेष्वसीदद्भिश्चकुटुंबकैः गवाभक्षितमन्नंचदुग्धेनपरिपाचितं तेनान्नेनप्रकर्तव्यंदेहस्यप
रिपालनं भक्तिभावैर्द्विजानुज्ञांगृह्णीयुर्व्रतिनःसदा तयातत्पूर्णतामेतिनान्यथापिकदाचन एवमुद्यापनंकार्यंव्रतस्यफलमिच्छ
ता नारीवापुरुषोवापिपुत्रवान्जायतेध्रुवं इहलोकेसुखंभुक्त्वाअंतेगोलोकमाप्नुयात् श्रीकृष्णउवा० एतत्तेकथितंराजन्-
व्रतस्योद्यापनंशुभं श्रोष्यंतियेपठंतीतितेषांसर्वेमनोरथाः येकरिष्यंत्यसंदेहंतेषांलोकाश्चशाश्वताः इतिश्रीभविष्योत्तरपु०
गोत्रिरात्रव्रतंसं० अथचैत्रशुक्लत्रयोदश्यांअशोकत्रिरात्रव्रतंभविष्ये साचपूर्वाग्राह्या तत्रत्रयोदशीतिथिः पूर्वासितेति
दीपिकोक्तेः श्रीकृष्णउवा० शृणुराजन्पुरावृत्तमयोध्यायांव्रतंशुभं वसिष्ठेनमुनींद्रेणसीतायैयन्निवेदितं विधायरावणवधं
यदारामःपुरेऽभ्यगात् तदादेवीप्रणम्याथवसिष्ठंवाक्यमब्रवीत् सीतोवाच भगवन्दंडकारण्याद्रावणेनहृतापुरा तपस्या-
मितदाकिंचिदात्मीयंविकलेंद्रिया लंकायांप्रापितातेनराक्षसेनहृतात्वहं अशोकवृक्षंप्रणतामहाचिंतापरायणा उक्तंत्रिजटया
तत्रवाक्यंहेत्वर्थसंयुतं अशोकस्यव्रतंकृत्वाविशोकात्वंभविष्यसि तथेत्युक्तंमयाब्रह्मन्यथोक्तंत्रिजटावचः ततःप्रभृत्यहंशा-
श्वदशोकव्रतपारगा तेनव्रतप्रभावेनहनूमान्पवनात्मजः शतयोजनविस्तीर्णंतीर्त्वासागरमद्भुतं मयादृष्टःकपिश्रेष्ठःसाभि

ज्ञातोमहाबलः पुनश्चकुशलीजातोदग्ध्वालंकांमहाबलः ततोमेप्रत्ययोजातोव्रतस्यास्यमहानरोः व्रतराजप्रभावेनरामःप्रीतोमहाह
रिः ततःकैश्चिदहोरात्रैर्भर्त्तामेराघवोबली निहत्यरावणंसंख्येमांविशुद्धांगृहीतवान् तदहंभगवन्विप्रपृच्छामित्वांदृढव्रतं अशोक
स्यप्रभावंमेवक्तुमर्हस्यशेषतः व्रतस्यतस्यपुण्यंतुपुराणोक्तंमहीतले अथवासुरलोकेषुसुरनारीनिषेवितं वासिष्ठउवाच एवम
तज्जनकजेयथावक्ष्यसिसुव्रते अशोकस्यप्रभावेनरामोदृष्टःपुनस्त्वया शृणुचात्रमहाख्यानंनंदनेदिव्यकानने बृहस्पति
मुखाल्लब्धंयज्जातंपरमाद्भुतं वृत्रासुरमहायुद्धेदेवेंद्रश्चमहासुरं निहत्यसर्वधर्माणांस्थापनंचचकारह ब्रह्महत्यामवाप्याथदे
वेंद्रोनष्टचेतनः त्रैलोक्यराज्यंत्यक्त्वासरमज्जारिभयार्दितः एतस्मिन्नंतरेदेवनहुषोनृपसत्तमः त्रैलोक्यराज्यंसकलंतहारबल
दर्पितः ततःशचीप्रव्यथिताहृतंराज्यमवेक्ष्यसा नंदनांतसमासाद्यतपस्तेपेसुदुष्करं तांश्रुत्वाधर्मनिरतांबृहस्पतिरुदारधीः आ
गत्यनंदनेदेवींवाक्यमाहमहातपाः बृहस्पतिरुवाच किमर्थंतप्यतेदेवितपःपरमदुष्करं त्वयाकिंप्रार्थ्यतेतेनतपसाब्रूहिका
रणं शच्युवाच हृताहिभर्त्तादेवेंद्रहृतराज्यंहृतांद्विषं क्वापिप्रनष्टंतंविप्रनजानेहंप्रियंपतिं एतस्मात्कारणाद्ब्रह्मन्नुग्रंतपउग्रंसमा
श्रितं यथापुनर्निजंराज्यंदेवेंद्रःप्राप्नुयादिति कतिघ्नतिमुनेब्रूहिसुराट्शत्रुतापनः प्रसीदकुरुमेदेवसंयोगंतेनचाप्नुयां वाचस्पतिरु०
शृणुपौलोमिदेवेंद्रोयथानष्टोभयातुरः मानसंप्रसिसंप्राप्तंपंकजांतरमाश्रितः वृत्रहत्याप्रभावेनउद्वेगंगुरुमाश्रितः अभिभूतमिवाप
श्यंस्ततोस्पर्शानिलपंगतः कामंतपःप्रसंगेनसर्वंप्राप्स्यसिसुव्रते बहुकालंस्थितंयस्मात्तपसालभ्यतेफलं स्त्रीणांपुष्टिकरंत्वेकंव्रतंप्रो
क्तंस्वयंभुवा सावित्र्याःपृच्छमानायास्तत्त्वंकर्तुमिहार्हसि अशोकव्रतमित्येकंनाम्नाख्यातंत्रिविष्टपे येनचीर्णेनवैसद्योनारीदुः
खंनसंस्मरेत् हरःस्वयंवसन्साक्षाद्वृक्षराजेषुनंदने अस्मिंस्तुष्टेहरस्तुष्टइतिजानामिनिश्चितं शच्युवाच पुन्नागंनागबकुलंच
पकाद्यान्महीरुहान् परित्यज्यकथंचान्यान्हरोस्मिन्कृतसन्निधिः वाचस्पतिरुवाच निर्मायवृक्षप्रवरंप्रणम्यप्रकृत्यार्चयित्वा
विधिमस्यविप्र पप्रच्छदेवीपुनराहविप्रोदेविशृणुध्वंविधिमस्यसर्वं वाचस्पतिरुवा० आरभ्यतद्व्रतंकार्यंत्रिरात्रंसमुपोषणं त्रि

रात्रंदेविविख्यातमशोकतरुमूलके कार्यंनारीभिरमलंमनोवाक्कायकर्मभिः ततःमदक्षिणादेयाअष्टोत्तरशतैःफलैः नारिकेरैश्चखर्जूरै
गौरस्त्रीभिर्दिनेदिने मंत्रेणानेनमनसाध्यात्वानित्यंसदाशिवं अशोकशोकापनुदसर्वकामफलप्रद व्रतेनानेनचीर्णेनयथोक्तफलदोभ
व ततस्तुतीयेदिवसेसम्यगभ्यर्च्यभामिनि महादेवंवस्त्रयुतंवंशपात्राणिकारयेत् अनेनैवविधानेनयाकुर्याद्व्रतमुत्तमं वैधव्यंनाप्नुया
न्नारीपुत्रसौख्ययुताभवेत् वसिष्ठउवाच बृहस्पतिमुखाच्छ्रुत्वाशचीचक्रेव्रतंशुभं शास्त्रोक्तविधिनासीतेभक्त्यादेवःसमागतः
वृत्रहत्याविनिर्मुक्तोनात्रकार्याविचारणा तथात्वमपिवांछार्थंव्रतमेतत्समाचर तथासाध्विसुपुष्टश्रीप्राधान्यंजायतेक्षितौ व्रतएवंकृ-
तेलोकेख्यातादेविभविष्यसि श्रीकृष्णउवाच व्रतमेतदशोकस्यअयोध्यायांचकारसा सीताव्रतेकृतेतस्मिन्दुःखहीनाबभूवह
युधिष्ठिरउवाच अशोकस्यसमाख्याताप्रजादेवविधानतः कादेवतातत्रपूज्यानारीणांव्रतसिद्धये श्रीकृष्णउवा॰ अशोकवृक्षे
तिष्ठंतिसर्वेदेवायुधिष्ठिर पल्लवेषुचशाखासुशिवाद्याःसर्वदेवताः अशोकसन्निधौरामःपूजनीयःसलक्ष्मणः सीतयासहितोरा
जन्विष्णोरंशोयतोमतः पृथङ्मंत्रैःपृथग्वस्त्रैरशोकाख्यायथाक्रमं पूजाचभरतश्रेष्ठपुराणोक्तविधानतः अशोकवृक्षनिहिताः
शिवाद्यायेसुरोत्तमाः अशोकपूजनेनाशुतुष्टास्तेमेभवंत्विह गौर्यालक्ष्म्यातथेंद्राण्याअरुंधत्याचसीतया त्वंसमाराधितःपूर्वमशोकफल-
दोभव अशोकवाटिकामध्येसीताभूत्वत्प्रसादतः अशोकशार्वसफलंगृहाणार्घ्यंकृतंमया रावणस्यवधार्थायउत्पन्नस्त्वंमहीतले वि
ष्णोरंशोसिदेवेशगृहाणार्घ्यंनमोस्तुते दशावतारग्रहणंकरोषित्वंप्रभावतः गृहाणार्घ्यंमयादत्तंसीतालक्ष्मणसंयुत तातभक्त्यासुरवं
वीरवनंयोनुययौतदा तंलक्ष्मीवर्धनंगौरंलक्ष्मणंपूजयाम्यहं अवनीतलसंभूतेसीतेसर्वांगसुंदरि गृहाणार्घ्यंमयादत्तंप्रजाजनकनं
दिनि लक्ष्मीस्त्वंसर्वदेवस्यविष्णोरसिमहीतले अवतीर्णामयादत्तंगृहाणार्घ्यंनमोस्तुते एवंसंपूज्यविधिनासर्वशोकविनाशनम्
सर्वपापप्रशमनंसर्वकीर्तिविवर्द्धनं अपुत्रयापुरापार्थपार्वत्यामंदराचले अशोकःशोकशमनःपुत्रत्वेपरिकल्पितः जातकर्मादिकंतस्य
त्वशोकस्यमहातरोः कारितंविधिवत्तस्यतेनवृक्षोनगोत्तमः यात्रतंकुरुतेनारीपुराणोक्तविधानतः अशोकस्यप्रसादेनसर्वान्कामा

नवाप्नुयात् अवैधव्ययुतासानुलक्ष्मीसान्निध्यमाप्नुयात् सर्वोपहारान्राजेंद्रब्राह्मणायनिवेदयेत् कथामपिसमाकर्ण्ययः कुर्याद्द्विजतर्पणं व्रतस्यफलमाप्नोतिसुव्रतोपिनसंशयः युधिष्ठिरउवा० विशेषंब्रूहिमेदेवत्वशोकतरुपूजने येनार्चितेननंगोन्नृष्ण्याप्राप्यतेसकलंफलम् श्रीकृष्णउवाच कथयामिकथांराजन्याभिर्व्रतमिदंकृतं मनुष्यदेवगंधर्वनारीभिः पुत्रवृद्धये अनुसूययाभिपत्न्याचारुंधत्यातथैवच देवक्यासीतयाचैन्द्याद्रौपद्यासत्यभामया दमयंत्याचसावित्र्याकृतंतद्व्रतमुत्तमं सर्वाभिः पूजितोवृक्षोयथावच्छृणुपार्थिव अशोकंराजतंचैवसौवर्णंचतथाशिवं तथैवकारयेत्सीनांसौवर्णारामलक्ष्मणौ पूजयेद्विविधैर्मंत्रैः पूर्वोक्तैर्नृपसत्तम अशोकंपूजयेद्वृक्षंप्ररूढंशुभपल्लवैः विरूढैः सप्तधान्यैश्चगुणकैर्मोदकैः शुभैः कालोद्भवैः शुभैर्दिव्यैर्नारिकेलैः सदाडिमैः पुष्पादिनातथाधूपैः पूजयेत्तरुमुत्तमं अशोकंपांडवश्रेष्ठशोकोनश्यतितत्क्षणात् पितृमातृपतीनांचश्वशुराणांतथैवच अशोकत्वंशोकहरोभवसर्वत्रनः कुले अशोककलिकाश्चाष्टौयेपिबंतिचहस्तभे चैत्रशुक्लत्रयोदश्यांनतेशोकमवाप्नुयुः त्वामशोकहराभीष्टमधुमाससमुद्भवं पिबामिशोकसंतप्तोमामशोकं[illegible]कुरु हस्तर्क्षेचबुधोपेतचैत्रशुक्लत्रयोदशी मातस्तुविधिवत्स्नात्वावाजपेयफलंलभेत् ॥छ॥ इति श्री भविष्योत्तरपुराणे चैत्रशुक्लत्रयोदश्यांअशोक० संपूर्णम् अथ चैत्रकृष्णत्रयोदश्यांमहावारुणीसंज्ञकोयोगः ॥ ॥छ॥ तदुक्तंवाचस्पतिनिबंधे ॥छ॥ शनिवारसमायुक्तासामहावारुणीस्मृता मधौकृष्णत्रयोदश्यांशनौ — शतभिषायदि गंगायांयदिलभ्येतकोटिसूर्यग्रहाधिका शुभयोगसमायुक्ताशनौशतभिषायदि महायोगेतिविख्यातात्रिकोटिकुलमुद्धरेत् अथस्कंदपुराणेशनिप्रदोषव्रतं सूतउवाच शनौशुक्लत्रयोदश्यांकार्तिकेश्रावणेथवा जयापूर्वापरायाद्याव्यामावेद्रजनीमुखं लोमशउवाच पुराहृत्रादिभिर्दैत्यैर्वर्तमानेमहाहवे हतःशक्रेणनमुचिरपांफेनेनवैबली दैत्यान्पलायितान्दृष्ट्वाहन्यमानान्सुरैर्भृशं वृत्रःकोपपराविष्टोदेवान्योद्धुमथाययौ कालाग्निरूपसदृशंरूपंकृत्वामहाजवं व्यवर्धतमहातेजारोदसीपूरयन्निव तंदृष्ट्वाभयवित्रस्तादेवाःशक्रपुरोगमाः कर्तव्यंनाध्यपश्यंततदागुरुरुवाचह गुरुरुवाच तपसास्वमहोग्रेणव्रतेननियमे

नव अजेयोयंमहातेजाहूत्र:शत्रुविनाशनः आराधयन्तोदेवंपूज्यंशंकरमव्ययं व्रतेनविधियुक्तेनत्वंजेष्यथमाचिरं देवाऊचुः गुरो-
केनविधानेनकीदृशेनव्रतेनच आराधनीयोगौरीशोत्यस्माभिर्जयकांक्षुकैः तद्वदस्वसुराचार्यत्वंहिनःपरमागतिः गुरुरुवाच का
र्तिकादिषुमासेषुमंदवारेत्रयोदशी विशेषाच्छुक्लपक्षेतुसर्वकामकरीशुभा तस्यांप्रदोषसमयेलिंगरूपीसदाशिवः पूजनीयोहि
देवेंद्रः सर्वकामसमृद्धये स्नात्वामध्यान्हसमयेतिलामलकसंयुतं शिवस्यचार्चनंकुर्याद्गंधपुष्पफलादिभिः पश्चात्प्रदोषसमयेस्थाव
रंलिंगमर्चयेत् स्वयंभुस्थापितंचापिपौरुषंयमपौरुषं जनेवाविजनेवापिअरण्येवातपोवने ग्रामाद्बहिःस्थितंलिंगंग्राम्याच्छतगुणंस्मृ
तं बाह्याच्छतगुणंपुण्यमरण्येत्वप्रपूजने वन्याच्छतगुणंपुण्यंलिंगंवैपर्वतेस्थितं पर्वताच्चायुतंपुण्यंतपोवनसमाश्रितं काश्यादिसं
स्थितंलिंगंपूजितंस्यादनंतकं एवंविशेषलिंगानांनानास्थानांनिपुणेभृशं ज्ञात्वाचशिवपूजायाविधिंशंभुंप्रपूजयेत् कूपवापीतडागेषु
देवखातनदीषुच क्रमाच्छतगुणंपुण्यंगंगायांस्यादनंतकं पंचपिंडाननुद्धृत्यसुस्नायात्परवारिणि ततःप्रदोषसमयेस्नात्वामौन-
समाचरेत् प्रदीपानांसहस्रेणदीपनीयःसदाशिवः अशक्तोवायथवादेवोद्वात्रिंशद्दीपमालया घृतेनदीपयेद्दीपान्शिवस्यपरितुष्टये
तथाफलैश्चधूपैश्चनैवेद्यैर्विविधैरपि उपचारैःषोडशभिर्लिंगरूपीसदाशिवः पूज्यःप्रदोषसमयेनृभिःसर्वार्थसिद्धये नाम्नांश-
तेनरुद्रोसौस्तोतव्यश्चस्तुतिप्रियः नमोरुद्रायभीमायनीलकंठायवेधसे कपर्दिनेसुरेशायव्योमकेशायवैनमः वृषध्वजायसो-
मायसोमनाथायवैनमः दिगंबरायभर्गायउमाकांतकपर्दिने तपोमयायव्यासायशिपिविष्टायवैनमः व्यालप्रियायव्यालायव्यालानां
पतयेनमः महीधरायव्याघ्रायपशूनांपतयेनमः त्रिपुरांतकायसिंहायशार्दूलायऋषायच मितायमितनाथायसिद्धायपरमेष्ठिने का
मांतकायबुद्धायबुद्धीनांपतयेनमः कपोतायविशिष्टायशिष्टायपरमात्मने वेदगीतायगुप्तायवेदगुह्यायवैनमः दीर्घायदीर्घरू
पायदीर्घार्थायमृडायच नमोजगत्प्रतिष्ठायव्योमरूपायवैनमः गर्वहृत्सुमहादैत्यअंधकासुरभेदिने नीललोहितशुक्लाय
चंडमुंडप्रियायच भक्तिप्रियायदेवायज्ञानज्ञाताव्ययायच महेशायनमस्तुभ्यंमहादेवहरायच त्रिनेत्रायत्रिवेदायवेदांगायनमोनमः

अर्थायअर्थरूपायपरमार्थायवैनमः विश्वरूपायविश्वायविश्वनाथायवैनमः शंकरायचकालायकालावयवरूपिणे अरूपायविरूपाय
सूक्ष्मसूक्ष्मायवैनमः श्मशानवासिनेतुभ्यंनमस्तेकृत्तिवाससे शशांकशेखरायैवरुद्रभूमिश्रयायच दुर्गायदुर्गपारायदुर्गावयवसा
क्षिणे लिंगरूपायलिंगायलिंगानांपतयेनमः नमःप्रभावरूपायप्रणवार्थायवैनमः नमोनमःकारणकारणायमृत्युंजयायात्मभ
वस्वरूपिणे त्रियंबकायासितकंठभर्गगौरीपतेमंगलहेतवेनमः नाम्नांशतंमहेशस्यउच्चार्यव्रतिनासदा प्रदक्षिणानमस्काराएत
त्संख्याःप्रयत्नतः कार्याःप्रदोषसमयेतुष्ट्यर्थंशंकरस्यच एतद्व्रतंमयादिष्टंतवशक्रमहामते शीघ्रंकुरुमहाभागपश्चाद्युद्धंकुरुप्रभो
शंभोःप्रसादात्सर्वंतेभविष्यतिजयादिकं शक्रउवाच वृत्रःकदामहेशानंसमाराधयदादरात् कथंचसवरंप्राप्तःपुराकस्त्वाप्रवद्गु
ज गुरुरुवाच वृत्रोप्यहंमहातेजास्तपस्वीतपसापुरा शिवंप्रसादयामासपर्वतेगंधमादने नाम्नाचित्ररथोराजावनंचित्ररथस्य
तत् एतज्जानीहिभोइंद्रतवपुर्याःसमीपतः यस्मिन्वनेमहाभागवसंतिचमहर्षयः तस्माच्चैत्ररथंनामवनंपरममंगलं तस्यदत्तंशि
वेनैवयानंचपरमाद्भुतं कामदंकिंकिणीयुक्तंसिद्धचारणसंयुतं गंधर्वैरप्सरोयक्षैःकिंनरैरुपशोभितं ततस्तेनैवयानेनपृथिवींपर्य-
टन्पुरा तथागिरीन्समुद्रांश्चद्वीपांश्चविविधांस्तथा एकदापर्यटन्राजानाम्नाचित्ररथोमहान् कैलासमागतस्तत्रददर्शपरमाद्भु
तं तदासभांमहेशस्यगणैश्चैवविराजितां अर्धांगलग्नयादेव्याशोभितंचमहेश्वरं निरीक्ष्यदेव्यासहितंसदाशिवंकर्पूरगौरंवरमंबुजे
क्षणं कपर्दिनंचंद्रकलाविभूषितंगंगाधरंदेववरंसभायां प्रहस्यराजाचतयागिरीशंन्यायान्वितंवाक्यमिदंबभाषे वयंचशंभोवि
षयान्विताश्चमर्त्योदयःस्त्रीविजितास्तथान्ये नलोकमध्येचमयाविलोकिताश्चालिंग्यकांतांसदसिप्रविष्टाः एवंवाक्यंनिशम्या
थगिरीशःप्रहसन्निव उवाचन्याययुक्तंसर्वेषामपिश्रृण्वतां शिवउवाच ममलोकापवादश्चसर्वेषांनभवेद्यथा भक्षितंका
लकूटंमेसर्वेषामपिदुर्जयं लोकातीतंचमेहृत्तंतथाप्युपहसत्यसौ ततश्चित्ररथंदेवीगिरिजावाक्यमब्रवीत् कथंदुरात्मनानेनशं
करश्चोपहासितः मयासहैवमंदात्मन्नीक्ष्यसेकर्मणःफलं साधूनांसमचित्तानामुपहासंकरोतियः देवोवाप्यथवामर्त्यःसविज्ञे

योधमाधमः एतेमुनींद्राश्चमहानुभावास्तथाहिएतेऋषयोवेदगर्भाः तथैवसर्वेसनकादयोह्यमीअज्ञाननाशाच्छिवमर्चयंति
रेमूढसर्वेषुजनेषभिज्ञस्त्वमेववेत्तेकोसिपरोनकश्चन तस्मादतिश्रेष्ठतरंनरंत्वांसंशिक्षयेनैवकुर्याद्यथालं अस्मात्पतविमा
नात्त्वंदैत्योभूत्वास्तदुर्मते ममशापेनदग्धस्त्वंगच्छाद्यचमहीतलं एवंशप्तस्तदादेव्याभवान्याराजसत्तमः राजाचित्ररथः
सद्यःपपातसहसादिवः आसुरींयोनिमापन्नोवृत्रोनाम्नाभवत्तदा तपसापरमेणैवत्वष्ट्रासंयोजितःक्रमात् तपसाब्रह्मच
र्येणाशंभोराराधनेनच व्रतेनानेनत्वबलीजंतुशाक्योनकेनचित् आसुरेणहिभावेनव्यंगंचक्रेव्रतंयतः तेनच्छिद्रेणचैवासौपश्चा
ज्जेयोभविष्यति तस्मात्त्वमपिदेवेंद्रकृत्वाचेदंव्रतंशुभं हनिष्यसिमहाबाहोवृत्रंनास्त्यत्रसंशयः गुरोस्तद्वचनंश्रुत्वाद्युवाचा-
थशतक्रतुः उद्यापनविधिंब्रूहिप्रदोषस्यचमेधुना गुरुरुवाच कार्तिकेश्रावणेमासेमंदवारेत्रयोदशी संपूर्णातुभवेद्या
सासमयव्रतसिद्धये वृषभोराजतःकार्योपृष्ठेतस्यसुपीठकं तस्योपरिन्यसेद्देवमुमाक्रांतंत्रिलोचनं पंचवक्त्रंदशभुजमर्धांगे
गिरिजांसतीं सौवर्णीप्रतिमांकृत्वाताम्रकुंभंजलैर्युतं पंचरत्नफलोपेतंपंचपल्लवशोभितं चंदनेनसुगंधेनामिश्रितंशोभितंत-
था रौप्यपात्रंततःकृत्वाकुंभस्योपरिविन्यसेत् अशक्तोमृन्मयंकुंभंवंशपात्रमथापिवा पर्णशरावंसंस्थाप्यसौवर्णीप्रतिमांतथा श
क्त्याकृतांप्रतिष्ठाप्यवस्त्रमाल्यविभूषणैः पूजयित्वाविधानेनरात्रौजागरणंचरेत् पुष्पमंडपिकामादौकृत्वाश्रद्धासमन्वितः वि
तानमंडपंकुर्यान्नानावर्णैःसमन्वितं ततःप्रभातसमयेनद्यादौविमलेजले स्नात्वापुनःसमभ्यर्च्यजुहुयात्पायसेनच उभयास
हितंरुद्रंपृथगष्टोत्तरंहुनेत् गौरीर्मिमायमंत्रेणत्र्यंबकेणचशंकरं आचार्यंचसपत्नीकंवस्त्रालंकारचंदनैः तोषयित्वाशक्तितो
तंगांदद्याच्चपयस्विनीं ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिःप्रतोषयेत् दीनानाथांश्चसंतर्प्यत्वाच्छिद्रंवाचयेत्ततः लब्ध्वानु-
ज्ञांब्राह्मणेभ्योबंधुभिःसहितःशुचिः हृदिस्मरन्शिवंभक्त्याभुंजीतनियमेनच अनेनैवविधानेनकुर्यादुद्यापनंव्रती एवंयः १८२
कुरुतेभक्त्याप्रदोषव्रतमुत्तमं शनिवारेणसंयुक्तंसोद्यापनविधिंनरः आयुरारोग्यमैश्वर्यंपुत्रपौत्रसमन्वितः शत्रून्विजयतेनित्यं

प्रसादाच्छंकरस्यच तस्मात्त्वमपि देवेंद्र पूजयस्वसदाशिवं एवंप्रदोषविधिना युद्धे वृत्रं विजेष्यसि एवंनिशम्यगुरुणाकथितंत-
दानीमिंद्रोयमेनविधिनागिरिशंप्रपूज्य लोकंत्रसंतमिवदैत्यपतिंप्रवृद्धं तंतत्क्षणादगमयत्क्षयमीशतुष्ट्या ईश्वरउवाच त्रयोद
श्यांतथारात्रौसोपहारंत्रिलोचनं पश्यतिप्रथमेयामेमुच्यतेसर्वपातकैः देव्युवाच देवकेनविधानेनप्रदोषव्रतमुत्तमं विधातव्यंनरैः
स्त्रीभिःसंतानफलसिद्धये ईश्वरउवाच यदात्रयोदशीकृष्णामंदवारेणसंयुता आरब्धव्यंव्रतंतत्रसंतानफलसि[illegible]ये ऋणवि
मोचनार्थायभौमवारेणसंयुता एकवत्सरपर्यंतंप्रतिपक्षेत्रयोदशी प्रदोषेशिवमभ्यर्च्यनक्तंभोक्ष्यामिशंकर तत्रचोक्तेनमंत्रेणव्रत
संकल्पमाचरेत् स्नात्वातुलोहितेभानौनद्यादौनियमीव्रती शिवालयेततोगत्वाप्रदोषेशिवमर्चयेत् पूजामंत्रः ॐ भवायनमः
महादेवाय॰ रुद्राय॰ नीलकंठाय॰ शशिमौलिने॰ उग्राय॰ उमाकांताय॰ ईशानाय॰ विश्वेश्वराय॰ त्र्यंबकाय॰ त्रिपुरुषाय॰ त्रिपुरांत
काय॰ त्रिकालाग्निकालाय॰ कालाग्निरुद्राय॰ नीलकंठाय॰ सर्वेश्वराय॰ १६ पंचामृतेनस्नपनमेभिर्मंत्रैःप्रपूजयेत् दधिभक्तेननैवे
द्यंपक्वान्नैर्घृतसंयुतं दत्वासुसुरभवासंचतांबूलंक्रमुकादिकं समर्प्याष्टदिशास्तत्रदीपानाज्यसमन्वितान् यथाभवान्समस्तानांभ-
क्तानांपापमोचनः तथाव्रतेनसंतुष्टःपुत्रंदेहिसलक्षणं ऋणरोगादिदारिद्र्यपापक्षुद्रापमृत्यवः भयशोकमनस्तापानश्यंतुममसर्वदा
पृथिव्यांयानितीर्थानिसागरांतानियानिच अंडमाश्रित्यतिष्ठंतिप्रदोषेगोवृषस्यतु स्पृष्ट्वातुवृषणौतस्यशृंगमध्येविलोक्यच पुच्छं
चककुदंचैवसर्वपापैःप्रमुच्यते निवेद्यकर्मजातंचदद्याद्वित्तानुसारतः दक्षिणांब्राह्मणेभ्यश्चततोमौनंविसर्जयेत् मंदवारप्रदोषो-
यंशुक्लेकृष्णेत्रयोदशी यश्चतुर्विंशतिंकुर्याद्यथोक्तफलमाप्नुयात् अथपूजनं आवाहयेत्प्रथमतोमंत्रेणानेनसुव्रत एह्येहित्व
मुमाकांतस्थानेचात्रस्थिरोभव यावद्व्रतंसमाप्येत कृपयादीनवत्सल आवाहनं आसनेस्मिन्नुमाकांतसुखस्पर्शेसुनिर्मले उ
पविश्यमृडेदानींसर्वशांतिप्रदोभव आसनं पाद्यंचतेमयादत्तंपुष्पगंधसमन्वितं गृहाणदेवदेवशप्रसादंनोहिभक्तितः अर्घ्यं शी
तलंनिर्मलंतोयंकर्पूरेणसुवासितं आचम्यतांसुरश्रेष्ठमयादत्तंहिभक्तित आचमनीयं पंचामृतेनस्नपनंतत्तन्मंत्रैश्चकारयेत् गोक्षी-

गंधामनूंदेवेशगोक्षीरेणमयाकृतं स्नपनंदेवदेवेशगृहाणपरमेश्वर दुग्धस्नानं दध्नाचैवमयादेवस्नपनंक्रियतेतव गृहाणभक्त्यादत्तंमे प्रसन्नोभवाव्यय दधि० सर्पिषादेवदेवेशस्नपनंक्रियतेमया उमाकांतगृहाणेदंश्रद्धयासुरसत्तम घृतस्ना० इदंमधुमयादत्तंतवतुष्ट्यर्थमेवच गृहाणशंभोत्वंभक्त्याममशांतिप्रदोभव मधुस्नानं सितयादेवदेवेशस्नपनंक्रियतेमया गृहाणशंभोमेभक्त्यासुप्रसन्नोभवप्रभो शर्करास्ना० कावेरीनर्मदावेणीतुंगभद्रासरस्वती गंगाचयमुनाचैवताभ्यःस्नानार्थमाहृतं गृहाणत्वमुमाकांतस्नानायश्रद्धयाजलं स्नानं एतद्वासोमयादत्तंसोत्तरीयंसुशोभनं गृहाणत्वंसुरश्रेष्ठममवासःप्रदोभव वस्त्रं यज्ञोपवीतंसौवर्णमयादत्तंचशंकर गृहाणपरयातुष्ट्यातुष्टिदोभवसर्वदा . उपवीतं सुगंधचंदनंदिव्यंमयादत्तंतवप्रभो भक्त्यापरमयाशंभोसुप्रभगंकुरुमेप्रभो चंद० मालतीचंपकादीनिकुमुदान्युत्पलानिच बिल्वपत्राणिपूजार्थंस्वीकुरुत्वमुमापते पुष्पं धूपंविशिष्टंपरमंसर्वौषधिविजृंभितं गृहाणपरमेशानममोपरिदयांकुरु धूपं० दीपंचपरमंशंभोघृतवर्तिषुयोजितं दत्तंगृहाणदेवेशममज्ञानप्रदोभव दीपं शाल्योदनघृतापूपपायसादिसमन्वितं नैवेद्यंविविधंदत्तंभक्त्यामेप्रतिगृह्यतां नैवेद्यं नैवेद्यमध्येपानीयंमयादत्तंहिभक्तितः स्वीकुरुष्वमहादेवप्रसन्नोभवसर्वदा मध्येपानीयं उत्तरापोशनार्थंवाआनीतंजलमुत्तमं गृहाणत्वमुमाकांतसर्वदुःखनिवारक उत्तरापोश० कर्पूरैलालवंगादिपूगीफलसमन्वितं तांबूलंकल्पितंभक्त्यागृहाणगिरिजाप्रिय तांबूलं इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि फलं हिरण्यगर्भगर्भस्थंहेमबीजंविभावसोः दक्षिणाकांचनीदेवस्थापितामेनवार्पितः दक्षिणां० दीपावलीमयादत्तासुवर्तिघृतसंयुता पंचार्तिक्यप्रदानेनममतेजःप्रदोभव पंचार्तिक्यं यानिकानिचपापानिजन्मांतरकृतानिच तानितानिविनश्यंतिप्रदक्षिणपदेपदे प्रदक्षिणां मृत्युंजयायरुद्रायनीलकंठायशंभवे अमृतेशायशर्वायमहादेवायतेनमः नमस्कारं सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजातिकरवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिः त्वांपूजयामि जगदीश्वरमेप्रसीद मंत्रपुष्पं निपत्यदंडवद्भूमौप्रणम्यचपुनःपुनः क्षमापयित्वादेवेशंरात्रौजागरणंचरेत् गीतवादित्रनृत्या

द्येगृहेवादेवतालये एवंपूजाप्रकर्तव्याशंकरस्यचतुर्दिवा इच्छितंचनराणांतुददातिभगवान्हरः इतिश्रीस्कंदपुराणेशानिप्र०ब्र०कथोद्या० पूजासमाप्ता अथप्रदोषव्रतं सूतउवाच कान्चिच्चविप्रवनितासपुत्रादुःखकर्शिता शांडिल्यस्यमुखाच्छ्रुत्वाप्रदोषेशिवपूजनं इ त्युक्तामुनिनासाध्वीसाविप्रवनितापुनः तंप्रणम्याथपप्रच्छशिवपूजाविधिंक्रमात् शांडिल्यउवाच पक्षद्वयत्रयोदश्यांनिराहारो भवेद्दिवा घटित्रयादस्तमयात्पूर्वंस्नानंसमाचरेत् शुक्लांबरधरोभूत्वावाग्यतोनियमान्वितः कृतसंध्याजपविधिःशिवपूजांसमारभे त् देवस्यपुरतःसम्यगुपलिप्यनवांभसा विधायमंडपंरम्यंधौतवस्त्रादिभिर्नवं वितानाद्यैरलंकृत्यफलपुष्पनवांकुरैः विचित्रंपद्ममु ल्लिख्यवर्णपंचकसंयुतं तत्रोपविश्यतुशुभेस्तूपविष्टःस्थिरासने सम्यक्संपादिताशेषपूजोपकरणःशुचिः आगमोक्तेनमंत्रेणपी ठमामंत्रयेत्सुधीः ततःकृत्वात्मशुद्धिंचभूतशुद्ध्यादिकंक्रमात् प्राणायामत्रयंकुर्याद्बीजमंत्रैःसबिंदुकैः मातृकान्यस्यविधिवत्ध्या त्वातांदेवतांपरां वामभागेगुरुंनत्वादक्षिणेगणपंयजेत् अंसोरुयुग्मेधर्मादीन्यस्यनाभौचपार्श्वयोः अधर्मादीननंतादीन्हृदिपी ठमनुन्यसेत् आधारशक्तिमारभ्यज्ञानात्मानमनुक्रमात् उक्तक्रमेणविन्यस्यहृदयेसाधुभाविते नवशक्तिमयेरम्येध्यायेद्देवमुमाप तिं चंद्रकोटिप्रतीकाशंत्रिनेत्रंचंद्रभूषणं आपिंगलजटाजूटंरत्नमौलिविराजितं नीलग्रीवमुदारांगंनानाहारोपशोभितं वरदाभयह स्तंचहरिणंचपरश्वधं दधानंनागवलयंकेयूरांगदभूषणं व्याघ्रचर्मपरीधानंरत्नसिंहासनेस्थितं ध्यात्वातद्वामभागेचगिरिजांभक्त वत्सलाम् भास्वज्जपाप्रसूनाभामुद्यार्कसमप्रभां विद्युत्कंजनिभांतन्वींमनोनयननंदिनीं बालेंदुशेखरांस्निग्धांनीलाकुंचितकुंतलां भृंगसंघातरुचिरनीलालकविराजितां मणिकुंडलविद्योतमुखमंडलविभ्रमाम् नवकुंकुमपंकाभांकपोलतलदर्पणां मधुरस्मितवि भ्राजदरुणाधरपल्लवाम् कंबुकंठींशिवामुग्रकुचपंकजकुड्मलां पाशांकुशाभयाभीष्टविलसत्तींचतुर्भुजां अनेकरत्नविलसत्कं कणांगदभूषितां वलित्रयेणविलसद्धेमकांचीगुणान्विताम् रक्तमाल्यांबरधरांदिव्यचंदनचर्चितां दिक्पालवनितामौलिसन्नतांघ्रि सरोरुहां रत्नसिंहासनारूढांसर्पराजपरिच्छदां एवंध्यात्वामहादेवंदेवींचगिरिजांशुभां न्यासक्रमेणसंपूज्यदेवंगंधादिभिःक्रमात्

पंचभिर्ब्रह्मभिः कुर्यात्प्रोक्तः स्थानेषुवात्त्वहृदि पृथक्पुष्पांजलिंदेहे मूलेनत्वहृदिद्वयं पुनःस्वयंशिवोभूत्वामूलमंत्रेणसाधकः ततःसं
पूजयेद्देवंबाह्यपीठेपुनःक्रमात् २५ संकल्पंप्रवदेत्तत्रपूजारंभेसमाहितः कृतांजलिपुटोभूत्वाचिंतयेद्धृदिशंकरं ऋणपातकदौर्भा-
ग्यदारिद्र्यविनिवृत्तये अशेषाघविनाशायप्रसीदममशंकर दुःखशोकाग्निसंतप्तंसंसारभयपीडितं बहुरोगाकुलंदीनंत्राहिमांवृषवा
हन आगच्छदेवदेवेशमहादेवाभयंकर गृहाणसहपार्वत्यात्वंचपूजांमयाहृतां इतिसंकल्प्यविधिवद्बाह्यपूजांसमाचरेत् गुरुंगणपतिं-
चैवयजेत्सव्यापसव्ययोः क्षेत्रेशमीशकोणेतुयजेद्वास्तोष्पतिंक्रमात् वाग्देवींचयजेत्तत्रततःकात्यायनींयजेत् धर्मज्ञानंसवैराग्यमैश्व
र्यंचनमोंतकैः स्वरैरीशादिकोणेषुपीठपादावनुक्रमात् आभ्यांबिंदुविसर्गाभ्यामधर्मादीन्प्रपूजयेत् गात्ररूपांश्चतुर्दिक्षुमध्येनंतं-
सतारकं सत्वादिभिर्गुणांस्तत्तद्रूपान्पीठेषुविन्यसेत् अतऊर्ध्वंछेदमायालक्ष्म्यैदेव्याशिवेनच तदंतेचांबुजंभूयःसकलमंडलोत्तमं
यत्रकेसरकिंजल्कव्याप्तंतत्राक्षरैःक्रमात् आत्मत्रयमथाभ्यर्च्यमध्येमंडपमादरात् वामांज्येष्ठांचगौरींचभवार्थेदिक्षुपूजयेत् वा
माद्यानवशक्तीश्चनवस्वरयुताजपेत् हृदिबीजत्रयाद्यैश्चपीठमंत्रेणचार्चयेत् आवृत्तिःप्रथमांगैस्तुपंचभिर्मूर्तिपंक्तिभिः त्रिंशद्भिर्मू
र्तिभिश्चान्यैर्निधिद्वयसमन्वितैः अनंताद्यैःपराद्यान्यामातृभिश्चवृषादिभिः सिद्धिभिश्चाणिमाद्याभिरिंद्राद्यैश्चतदायुधैः वृषभक्षे-
त्रचंडेशदुर्गाश्चस्कंदनंदिनौ गणेशसेन्यपौचैवस्वस्वलक्षणलक्षितौ ४० अणिमामहिमाचैवगरिमालघिमातथा ईशित्वंचवशित्वं
चप्राप्तिःप्राकाम्यमेवच अष्टैश्वर्याणिचोक्तानितेजोरूपाणिकेवलं पंचभिर्ब्रह्मभिःपूर्वंहृल्लेखाद्यादिभिःक्रमात् अंगैरुमाद्यैरिं
द्राद्यैःपूर्वोक्तैर्मुनिभिःस्तुतैः उमांचंडेश्वरादींश्चपूजयेदुत्तरादितः एवमावरणैर्युक्तंतेजोरूपंसदाशिवं उमयासहितंदेवमुपचारैः
प्रपूजयेत् सुप्रतिष्ठितशंखस्यतीर्थैःपंचामृतैरपि अभिषिच्यमहादेवंरुद्रसूक्तैःसमाहितः कल्पयेद्देवदेवेमंत्रैरासनाद्युपचार
कान् आसनंकल्पयेद्धैमंदिव्यवस्त्रसमन्वितं अर्घ्यमष्टगुणोपेतंपाद्यंशुद्धोदकेनच तेनैवाचमनंदद्यान्मधुपर्कंमधूत्तमं पुनरा
चमनंदत्वास्नानमंत्रैःप्रकल्पयेत् वसंतेचोपवीतंचभूषणानिनिवेदयेत् गंधमष्टांगसंयुक्तंसुधूपंचनिवेदयेत् ततश्चबिल्वमंदार-

कल्हारसरसीरुहं धत्तूरंकर्णिकारंस्वद्रोणपुष्पंचमल्लिकां अपामार्गंचतुलसीमाधवीचंपकादिकं बृहतीकरवीराणियथालब्धानिभामिनि
निवेदयेत्सुगंधीनिमाल्यानिविविधानिच धूपंकालागरूत्पन्नंदीपंचविमलंशुभं अथपायसंनैवेद्यंसघृतंसोपदंशकं मोदकापूपसंयु
क्तंशर्करागुडसंयुतं मधुरान्नंदधियुतंजलपानसमन्वितं तेनैवहविषावह्नौजुहुयान्मंत्रभाविते आगमोक्तेनविधिनागुरुवाक्यनियं-
त्रितः नैवेद्यंशंभवेभूयोदत्वातांबूलमुत्तमम् फलंनीराजनंदिव्यंछत्रंदर्पणमुत्तमम् समर्पयित्वावि-
धिवन्मंत्रैर्वैदिकतांत्रिकैः यद्यशक्तःस्वयंनिस्वोयथाविभवमर्चयेत् भक्त्यादत्तेनगौरीशःपुष्पमात्रेणतुष्यति अथांगभूतान्सक
लान्गणेशादीन्प्रपूजयेत् स्तवैर्नानाविधैःस्तुत्वासाष्टांगप्रणमेद्बुधः ततःप्रदक्षिणीकृत्य वृषचंडेश्वरादिकान् पूजांसमर्प्यविधिव
त्प्रार्थयेद्गिरिजापतिं जयदेवजगन्नाथजयशंकरशाश्वत जयसर्वसुराध्यक्षजयसर्वसुरार्चित जयसर्वगुणातीतजयसर्ववरप्र
द ६० जयनित्यनिराधारजयविश्वंभराव्यय जयविश्वैकवंद्येशजयनागेंद्रभूषण जयगौरीपतेशंभोजयनित्यनिरंजन जयनाथ-
कृपासिंधोजयभक्तार्तिभंजन जयदुस्तारसंसारसागरोत्तारणप्रभो प्रसीदममहादेवसंसारार्तस्यखिद्यतः सर्वपापक्षयंकृत्वारक्षमांपर
मेश्वर महादारिद्र्यमग्नस्यमहापापहतस्यच महाशोकनिविष्टस्यमहारोगातुरस्यच ऋणभारपरीतस्यदह्यमानस्यकर्मभिः ग्रहैः
प्रपीड्यमानस्यप्रसीदममशंकर दरिद्रःप्रार्थयेद्देवंपूजांतेगिरिजापतिं अभाग्योवापिराजावाप्रार्थयेद्देवमीश्वरं दीर्घमायुःसदा-
रोग्यंकोशवृद्धिर्बलोन्नतिः ममास्तुनित्यमानंदःप्रसादात्तवशंकर शत्रवःसंक्षयंयांतुप्रसीदंतुममप्रजाः नश्यंतुदस्यवोराज्येजनाः
संतुनिरापदः दुर्भिक्षमरिसंतापाःशमंयांतुमहीतले सर्वसस्यसमृद्धिश्चभूयात्सुखमयादिशः एवमाराधयेद्देवंप्रदोषेगिरिजापतिं
ब्राह्मणान्भोजयेत्पश्चाद्दक्षिणाभिश्चपूजयेत् सर्वपापक्षयकरीसर्वदारिद्र्यनाशिनी शिवपूजेयमाख्यातासर्वाभीष्टफलप्रदा म
हापातकसंघातमधिकंचोपपातकं शिवद्रव्यापहरणात्सर्वमन्यद्विनाशयेत् ब्रह्महत्यादिपापानांपुराणेषुस्मृतिष्वपि प्रायश्चित्ता
निदृष्टानिनशिवद्रव्यहारिणां बहुनात्रकिमुक्तेनश्लोकार्द्धेनब्रवीम्यहं ब्रह्महत्याशतंवापिशिवपूजाविनाशयेत् मयाकथितमेत

तेप्रदोषेशिवपूजनं रहस्यंसर्वजंतूनामत्रास्त्येवनसंशयः एताभ्यामपिपुत्राभ्यांशिवपूजाविधीयतां अतःसंवत्सरादेवपरांसिद्धिमवा
प्स्यथ इतिशांडिल्यवचनमाकर्ण्यद्विजभामिनी ताभ्यांतुसहबालाभ्यांप्रणनामसुनेःपदे स्त्र्युवाच अहमद्यकृतार्थास्मित
वदर्शनमात्रतः एतौकुमारौभगवन्त्वामेवशरणंप्रभो एषमेतनयोब्रह्मन्शुचिव्रतइतीरितः ८० एषराजसुतोनाम्नाधर्मगु
प्तःकृतोमया एतावहंचभगवन्भवच्चरणकिंकराः समुद्धरास्मिन्पतितान्घोरेदारिद्र्यसागरे इतिप्रपन्नांशरणंद्विजांगनांत-
स्याथवाक्यैरमृतोपमानैः उपादिदेशापितयोःकुमारयोर्मुनिःशिवाराधनमंत्रविद्यां अथोपदिष्टौमुनिनाकुमारौब्राह्मणीचसा
तंप्रणम्यसमामंत्र्यजग्मुस्तेशिवमंदिरम् ततःप्रभृतितौबालौमुनिवर्योपदेशतः प्रदोषेपार्वतीशस्यपूजांचक्रतुरंजसा एवंपू
जयतोर्देवंद्विजराजकुमारयोः सुखेनैवव्यतीयायतयोर्मासचतुष्टयं कदाचिद्राजपुत्रेणविनासौद्विजनंदनः स्नातुंगतोनदीतीरे
चचारबहुलीलया तत्रनिर्झरनिष्पातनिर्भिन्नेवप्रकर्दमे निधानकलशंस्थूलंप्रस्फुरंतंददर्शह तंदृष्ट्वासहसागत्यहर्षकौतुक-
विह्वलः देवोपपन्नंमन्वानोगृहीत्वाशिरसादधौ ससंभ्रमंसमानीयनिधानकलशंबलात् निधायभवनस्यांतर्मातरंसमभाषत
मातर्मातरिमंपश्यप्रसादंगिरिजापतेः निधानकुंभरूपेणदर्शितंकरुणात्मना अथसाविस्मितासाध्वीसमाहूयनृपात्मजं स्वपुत्रंप्र
तिनंद्याह्मानयंतीशिवार्चनं शृणुतांमेवचःपुत्रौनिधानकलशीमिमां समंविभज्यगृण्हीतांममशासनगौरवात् इतिमातृवचःश्रुत्वा
तुतोषद्विजनंदनः प्रत्याहराजपुत्रस्तांविश्रब्धःशंकरार्चने मातस्तवसुतस्यैवसुकृतेनसमागतम् नाहंगृहीतुमिच्छामिविभक्तंधनसंच
यं आत्मनःसुकृताल्लब्धंस्वयमेवभुनक्त्वसौ सएवभगवानीशःकरिष्यतिकृपांमयि एवमभ्यर्चतोःशंभुंभूयोपिपरमामुदा सव
त्सरोव्यतीयायतस्मिन्नेवगृहेतयोः अथैकदाराजसूनुःसहतेनद्विजन्मना वसंतसमयेप्राप्तेविजहारवनांतरे अथदूरंगतौक्वापिवने
द्विजनृपात्मजौ गंधर्वकन्याःक्रीडंतीःशतशस्तावपश्यतां ताःसर्वाश्चारुसर्वांगीर्विहरंतीर्मनोहरं दृष्ट्वाद्विजात्मजोदूरादुवाचनृपनं
दनं इतःपरंनगंतव्यंविहरंत्यग्रतःस्त्रियः स्त्रीसंनिधानंविबुधास्त्यजंतिविमलाशयाः एताःकैतवधारिण्योधनयौवनदुर्मदाः मोहयं

स्योजनंदृक्षावाचानुनयकाविदाः अतःपास्त्यजनृस्त्रीणांसन्निधिसहभाषणं निजधर्मरतोविद्वान्ब्रह्मचारीविशेषतः अतोहंनोत्सहेगंतुंभि-
ज्ञास्थानंमृगीदृशां इत्युक्त्वाद्विजपुत्रस्तुनिवृत्तोदूरतःस्थितः अथासौराजपुत्रस्तुकौतुकाविष्टमानसः तासांविहारपदवीमेकएवाभ्ययौ
ययौ तत्रगंधर्वकन्यानांमध्येत्वेकावरांगना दृष्ट्वायांतंराजपुत्रंचिंतयामासचेतसा अहोकोयमुदारांगोयुवासर्वांगसुंदरः मत्तमातं-
गगमनोलावण्यामृतवारिधिः लीलालोलविशालाक्षोमधुरस्मितपेशलः मदनोपमरूपश्रीःसुकुमारांगलक्षणः इत्याश्चर्ययुताबा-
लादूराद्दृष्ट्वानृपात्मजं सर्वाःसखीःसमालोक्यवचनंचेदमब्रवीत् इतोप्यदूरेहेसख्योवनमस्त्येकमुत्तमं विचित्रचंपकाशोकपुन्नाग
बकुलैर्युतं तत्रगत्वातरूंसर्वंप्रसिच्यकुसुमोत्करं भवंत्यःपुनरायांतुतावन्निष्ठाम्यहंत्विह इत्यादिष्टःसखीवर्गोजगामापिवनांतरम्
सापिगंधर्वजातस्थौन्यस्तदृष्टिर्नृपात्मजे तांसमालोक्यतन्वंगींनवयौवनशालिनीं बालांस्वरूपसंपत्त्यापरिभूतत्रिलोत्तमां राजपुत्रः
समागम्यकौतुकोत्फुल्ललोचनः अवापदैवयोगेनमदनस्यशरव्यथां गंधर्वतनयासापिप्राप्तायनृपसूनवे उत्थायतरसातस्मैप्रददौ
पल्लवासनं कृतोपचारमासीनंतमासाद्यसुमध्यमा पप्रच्छतद्रूपगुणैर्ध्वस्तवीर्याकुलेंद्रिया कस्त्वंकमलपत्राक्षकस्माद्देशादिहागतः
कस्यपुत्रइतिप्रेम्णापृष्टःसर्वंन्यवेदयत् विदर्भराजतनयंविध्वस्तपितृमातृकं शत्रुभिश्च्युतस्थानमात्मानंपरयागिरा सर्वंभावेन-
भूयस्तांपप्रच्छनृपनंदनः कात्वंवामोरुकिंचात्रकार्यंतेकस्यचात्मजा किमिवध्यायसित्वंहृदिकिंवावक्तुमिहेच्छसि इत्युक्त्वासापुनः
प्राहशृणुराजेंद्रसत्तम आस्तेविद्रविकोनामगंधर्वाणांकुलाग्रणीः तस्याहमस्मितनयानाम्नाचांशुमतीशुभा त्वामायांतंविलोक्याहं
त्वत्संभाषणलालसा त्यक्त्वासखीजनंसर्वमेकैवास्मिमहामते सर्वसंगीतविद्यासुनमत्तोन्यास्तिकाचन ममगानेनतुष्यंतिसर्वाप्स-
रसस्त्रियः साहंसर्वकलाभिज्ञाज्ञातसर्वजनेंगिना त्वयाहमासितंविद्धिमयितेसंगतंमनः तथाममापितेसौख्यंदैवेनप्रतिपा-
दितं आवयोःस्नेहभेदोत्रनाभिभूयादितःपरं इतिसंभाष्यतेनांशुःप्रेम्णागंधर्वकन्यका मुक्ताहारंददौतस्मैस्वकुचांतरभूषणं
तमादायाद्भुतंहारंसतस्याःपरमाकुलः गूढहर्षपरासक्तामिदमाहनृपात्मजः सत्यमुक्तंत्वयाभीरुतथाप्येकंवदाम्यहं त्यक्तराज्य

स्थानिःस्वस्यकथंममभवसिप्रिया यात्वंपितृमतीबालाविलंघ्यपितृशासनं स्वच्छंदाचरणंकर्तुंमूढेत्वंकथमर्हसि इतितस्यवचःश्रुत्वातं
मत्याहशुचिस्मिता अस्तुनामतथैवाहंकरिष्येपश्यकौतुकं गच्छस्वभवनंकांतपरश्वःप्रातरेवतु आगच्छपुनरत्रैवकार्यमस्तिचनोमृ
धा इत्युक्त्वातंनृपंकांतंसासंगतसखीजना अपक्रामततत्रार्वेगीसचापिनृपनंदनः ससमभ्येत्यहर्षेणद्विजपुत्रस्यसन्निधिं सर्वमाख्या
यत्तेनैवसार्द्धंस्वभवनंययौ तांचविभ्रमसतींभूयोहर्षयित्वानृपात्मजः परश्वोद्विजपुत्रेणसार्धंतस्मिन्वनेययौ सतयापूर्वनिर्दिष्टंस्थानं
प्राप्यनृपात्मजः गंधर्वराजमद्राक्षीद्दुहित्राचसमन्वितं सगंधर्वपतिःप्राप्तावभिनंद्यकुमारकौ उपवेश्यासनेरम्येराजपुत्रमभाषत
गंधर्वउवाच राजेंद्रपुत्रपूर्वेद्युःकैलासंगतवानहं तत्रापश्यंमहादेवंपार्वत्यासहितंविभुं आहूयमांसदेवेशःसर्वेषांत्रिदिवौकसां
सन्निधावाहभगवान्करुणामृतवारिधिः धर्मगुप्ताह्वयःकश्चिद्राजपुत्रोस्तिभूतले अकिंचनोभ्रष्टराज्योहतबंधुश्चशत्रुभिः सबा
लोगुरुवाक्येनमदर्चायांरतःसदा अद्यतत्पितरःसर्वेमांप्राप्तास्तत्प्रभावतः तस्यत्वमपिसाहाय्यंकुरुगंधर्वसत्तम यथासनिज-
राज्यस्थोहतशत्रुर्भविष्यति इत्याज्ञप्तोहमीशेनसंप्राप्यनिजमंदिरं अनयाचदुहित्राचबहुशोभ्यर्थितस्तथा ज्ञात्वेमंसकलंशंभो
र्नियोगंकरुणात्मनः आदायेमांदुहितरंप्राप्तोस्मीदंवनांतरं अतएनांप्रयच्छामिकन्यामंशुमतींतव हत्वाशत्रून्स्वराष्ट्रेत्वांस्थापया
मिशिवाज्ञया तस्मिन्पुरेत्वमनयाभुक्त्वाभोगान्यथोचितान् दशवर्षसहस्रांतेगंतासिगिरिशालयं तत्रापिममकन्येयंत्वामेवप्र-
तिपत्स्यते अनेनैवस्वदेहेनदिव्येनशिवसन्निधौ इतिगंधर्वराजस्तमाभाष्यनृपनंदनं तस्मिन्वनेस्वदुहितुःपाणिग्राहमकारयत्
पारिबर्हमदात्तस्मैरत्नभारान्महोज्ज्वलान् चूडामणिंचंद्रनिभंमुक्ताहारांश्चभास्वरान् दिव्यालंकारवासांसि [illegible]
न् गजानामयुतंभूयोनियुतंनीलवाजिनां स्यंदनानांसहस्राणिसौवर्णानिमहांतिच पुनरेकंरथंदिव्यंधनुश्चक्रायुधोपमं मंत्रा
स्त्राणांसहस्राणितूणीचाक्षय्यसायकौ अभेद्यांसर्वजंतूनांशक्तिंचरिपुमर्दिनीं दुहितुःपरिचर्यार्थंदासीनांत्वसहस्रकं ददौप्री
तमनास्तस्मैधनानिविविधानिच गंधर्वसैन्यमत्युग्रंचतुरंगसमन्वितं पुनश्चतत्सहायार्थंगंधर्वाधिपतिर्ददौ इत्थंराजेंद्रतनयःसंप्रा

र्थयम्भुनामा अभीष्टजायासहितोमुमुदेनिजसंपदा कारयित्वास्वदुहितुर्विवाहंसमयोचितं ययौविमानमारुह्यगंधर्वाधिपतिर्दिवं ध
र्मगुमः कृतोद्वाहः सहगंधर्वसेनया निःशेषितारातिबलः प्रविवेशनिजंपुरं ततोभिषिक्तः सचिवैर्ब्राह्मणैश्चमहात्मभिः रत्नसिंहासनारू
ढश्चक्रेराज्यमकंटकं यावित्प्रवनितापूर्वंतमपुष्णात्स्वपुत्रवत् सेवमानाभक्तस्यसस्मातात्द्विजनंदनः गंधर्वतनयाजायाविदर्भाधिप
येश्वरः आराध्यदेवंगिरिशंधर्मगुप्तोनृपोभवत् एवमन्येसमाराध्यप्रदोषेगिरिजापतिं लभंतेभीप्सितान्कामान्देहांतेतुपरांगतिं
सूतउवाच एतन्महाव्रतंपुण्यंप्रदोषेशंकरार्चनं धर्मार्थकाममोक्षाणांयदेतत्साधनंपरं यएतच्छृणुयान्नित्यमाख्यानंपरमाद्भु
तं प्रदोषेशिवपूजांतेकथयेद्वासमाहितः नभवेत्तस्यदारिद्र्यंजन्मांतरशतेष्वपि ज्ञानैश्वर्यसमायुक्तः सोंतेशिवपुरंव्रजेत् यत्प्राप्यदुर्ल
भमिदंमनुजाःशरीरंकुर्वंत्यहोत्रपरमेश्वरपादपूजां धन्यास्तएवनिजपुण्यजितत्रिलोकास्तेषांपदांबुजरजोभुवनंपुनाति १६५ ॥
अथोद्यापनंशनिप्रदोषव्रत तिथ्यादीनांतुसंकल्प्यपुण्यवाचनपूर्वकं अब्दमेकंव्रतंकृत्वाततोद्यापनमाचरेत उमयासहितंरुद्रंसुव
र्णेनचकारयेत् रौप्येणवृषभंकृत्वाकलशोपरिपूजयेत् ब्रह्माद्यावाहयेत्तत्रलिंगतोभद्रमंडले स्वशाखोक्तेनविधिनाहूतेनतुघृतांनलो
दनम् त्र्यंबकशिवंशिवांसंत्रैरष्टोत्तरशतद्वयम ॥ ७ ॥ ७ ॥ ७ ॥ इतिश्रीस्कंदपुराणेसोद्यापनप
क्षप्रदोषः समाप्तः ॥ ७ ॥ ७ ॥ ॥ ७ ॥ अथमार्गशीर्षशुक्लत्रयोदश्यामनंगत्रयोदशीव्रतं श्रीकृष्णउवाच
शृणुपार्थव्रतंश्रेष्ठंनाम्नानंगत्रयोदशी याशिवायपुराप्रोक्ताप्रसन्नेनंदुमौलिना गौर्युवाच पुरासौभाग्यकरणाख्यातानंगत्र
योदशी [illegible] महादेवममापिकथयप्रभो कस्मिन्मासेप्रकर्तव्यंसंपूर्णंचकथंभवेत् पूज्यानिकानिनामानिविधिनाकेनवैन्रूप
दुर्भगानांचनारीणांसौभाग्यकरणंप्रभो वंध्यानांपुत्रजननंधनधान्यविवर्द्धनं एतद्व्रतंमहादेव [illegible] ईश्वरउवाच
कथयामिनसंदेहोमहापुण्यंमहाफलं चीर्णेनयेनदेवेशिसर्वंसंपद्यतेसुखं स्त्रीभिश्चैवविधानव्यंकर्तव्यंचप्रयत्नतः हेमंतेद्विक
तोमासेमासिमार्गशिरेशुभे शुक्लपक्षेत्रयोदश्यामुपवासंतुकारयेत् मल्लिकादंतकाष्ठंचपूजांचमरुवेणतु नारंगेणार्घ्यदानंचनैवे

द्येफेणिकास्तथा गंधपुष्पैस्तथाधूपैरर्चयेच्चयथाविधि अक्षतैश्चफलैश्चैवएकाग्रहृदयस्थितः सम्यक्जितेंद्रियोभूत्वाअनंगंह्यदिक
ल्पयेत् पश्चात्प्रदक्षिणांकृत्वा अर्घ्यंचैवनिवेदयेत् नमस्कुर्यादनंगंचमंत्रेणानेनभामिनि नमोस्त्वनंगदेवायसर्वसंगनिवासिने हृद्यु
पस्थायनित्यायसूक्ष्मायपरमेष्ठिने स्वर्गेचैवतुपातालेमर्त्यलोकेतथैवच सर्वव्यापिन्ननंगत्वंगृहाणार्घ्यंनमोस्तुते इत्यर्घ्यं पूजयेत्स्व
स्थचित्तेनप्राशयेन्मधुवंनिशि रंभातुल्याभवेन्नारीसौभाग्यमतुलंभवेत् नश्यंतिसर्वपापानित्वन्यजन्मकृतानिच लावण्यमतुलंचैवरू
पैश्वर्यसमन्वितं अश्वमेधस्ययज्ञस्यफलंप्राप्नोतिमानवः पौषेशुक्लत्रयोदश्यामौदुंबरंदंतधावनं जातिपुष्पैःपूजनंस्याद्धाडिमेनार्घ्य
मेवच अशोकवर्तिकाःस्निग्धानैवेद्यंचप्रकल्पयेत् उपोष्यपूजयेद्देवंभक्त्यानाद्येश्वरंप्रिये नाद्येश्वरायसर्वायईश्वरायनमोनमः
नमस्ते भुवनेशायगृहाणार्घ्यंनमोनमः इत्यर्घ्यं व्रतस्थःस्वस्थचित्तेनचंदनंप्राशयेन्निशि सर्वपापविशुद्धात्मासौभाग्यमतुलंभवेत्
माघेशुक्लत्रयोदश्यामुपवासंचकारयेत् विष्णुक्रांतेनकाष्ठेनदंतान्संशोधयेच्छुचिः कुंदपुष्पैःसमभ्यर्च्यअर्घ्यंजंबीरपूरकं नैवेद्यं
शर्करांदद्याद्देवायोगेश्वरस्तथा योगेश्वरायदेवाययोगजंबूनिवासिने गृहाणार्घ्यंमयादत्तंयोगेश्वरनमोस्तुते इत्यर्घ्यं मौक्तिकं
प्राशयेद्रात्रौवाजपेयफलंलभेत् फाल्गुनस्यसितेपक्षेत्रयोदश्यांशुचिस्मिता वदर्यादंतकाष्ठंचजपापुष्पैस्तुपूजयेत् अपूपैस्तुच
नैवेद्यंवीरेशंनामपूजनं वीरेश्वरवीरभद्रउमाकांतसुरेश्वर सपूगंचगृहाणार्घ्यंमयादत्तंमहेश्वर सीतातुल्याभवेन्नारीकंकोलंप्राश
येन्निशि चैत्रशुक्लत्रयोदश्यांमल्लिकादंतधावनं दमनेनार्चयेद्देवंजंबीरार्घ्यंप्रकल्पयेत् नैवेद्यंशष्कुलीभक्त्याविश्वरूपंतुपूजयेत्
नमस्तेविश्वरूपायस्वरूपायमहात्मने गृहाणार्घ्यंमयादत्तंविश्वरूपनमोस्तुते इत्यर्घ्यं उमातुल्याभवेन्नारीकर्पूरंप्राशयेन्निशि
वैशाखशुक्लपक्षेतुअपामार्गेणपूर्ववत् पूजाचमल्लिकापुष्पैःखर्जूरार्घ्यंतुदापयेत् नैवेद्यंवटकंदद्यान्महारूपंतुपूजयेत् महारू
पनमस्तेस्तुसर्वविज्ञानरूपिणे गृहाणार्घ्यंमयादत्तंमहारूपनमोस्तुते इदमर्घ्यं ततःशुद्धमनाभूत्वाजातीतोयंपिबेन्निशि —
ज्येष्ठेशुक्लत्रयोदश्यांनिर्गुंडीदंतधावनं पूजाबकुलपुष्पैश्चश्रीफलेनार्घ्यकल्पना नैवेद्येमंडकान्दद्याल्लवंगंप्राशयेन्निशि मद्युम्नं

पूजयेद्देवं सर्वपापप्रणाशनं नमस्तेपशुपतयेप्रद्युम्नभुवनेश्वर गृहाणार्घ्यंमयादत्तंप्रद्युम्न परमेश्वर इत्यर्घ्यम् सुवर्णश
तद्दानस्यफलमष्टगुणंभवेत् शुचिशुक्लत्रयोदश्यांनारिंगदंतधावनं कदंबैःपूजयेद्देवंनारिकेलार्घ्यदानतः नैवेद्यंदधिभक्तंच पूज
येच्चउमापतिं स्वस्थेनमनसानत्रबिल्वतोयंपिबेन्निशि उमापतेमहाबाहोकामदेवस्यनायक गृहाणार्घ्यंचंद्रमौले उमाकांतनमोस्तुते
इत्यर्घ्यं वाजपेयस्ययज्ञस्यफलंप्राप्नोतिमानवः श्रावणस्यसितेपक्षेत्रयोदश्यांशुभव्रतः करंजदंतकाष्ठंचपद्मपुष्पैस्तुपूजयेत्
मातुलिंगंचार्घ्यदानेदद्यात्प्रह्वेनचेतसा नैवेद्यंपायसंदद्याच्छूलपाणिंतुपूजयेत् प्राशयेदगरुंचैवरात्रौजागरणंचरेत् नमस्तेगिरि-
जानाथनमस्तेभक्तिभावन गृहाणार्घ्यंमयादत्तंशूलपाणेनमोस्तुते इत्यर्घ्यं सौत्रामणेश्चयज्ञस्यफलमष्टगुणंभवेत् भाद्रेशु
क्लत्रयोदश्यांकंकोलंदंतधावनं अर्चयेच्चंपकैःपुष्पैर्नैवेद्यंघृतपूरिकाः अर्घ्यंनिंबफलंदद्यात्सद्योजातंतुपूजयेत् ततःस्वस्थमनाभूत्वा
केशरंप्राशयेन्निशि त्रिदशेशायदेवायसद्योजातायवैनमः गृहाणार्घ्यंमयादत्तंसद्योजातनमोस्तुते इत्यर्घ्यं दशानामश्वमे-
धानांफलमाप्नोतिमानवः आश्विनेचत्रयोदश्यांकंकतीदंतधावनं अर्चयन्करवीरैस्तुअर्घ्यंकर्कोटिकाफलं त्रिदशाधिपतिःपूज्यो
नैवेद्यंशुभमंडकान् प्राशयेत्कांचनंतोयंनिशिदेवंप्रपूज्यच त्रिदशाधिपदेवेशउमाकांतमहेश्वर त्रिधारूपमयस्त्वंहिप्रार्घोयंप्र-
तिगृह्यतां इत्यर्घ्यं चातुर्मास्यस्ययज्ञस्यफलंदशगुणंभवेत् कार्तिकेचत्रयोदश्यांकदंबदंतधावनं रक्तोत्पलैःपूजनंचकूष्मांडार्घ्यं
प्रदापयेत् नैवेद्येपूरिकादद्यात्पूजयेज्जगदीश्वरं प्राशयेन्मौक्तिकजलंनिशिचैवंसमाहितः नमस्तेजगदीशायतापिनेशूलपाणये
गृहाणार्घ्यंमहेशानजगदीशनमोस्तुते इत्यर्घ्यं पूजांतेजागरंकुर्याद्गीतवाद्यमहोत्सवैः अर्धनारीश्वरंकुर्यात्सौवर्णंस्वयमेवच व
स्त्रयुग्मेनसंवेष्ट्यशय्यायांविनिवेशयेत् एवंकृत्वातुदेवेशंशोभांतत्रतुकारयेत् श्वेतपुष्पैस्तुसंपूज्यश्वेतचंदनचर्चितं धूपैर्दीपैश्च
नैवेद्यैःसवत्सांगांपयस्विनीं श्वेतवस्त्रपरीधानांघंटाभरणभूषितां सूक्ष्मवस्त्रयुगलमाचार्यायनिवेदयेत् तथैवदक्षिणांद
द्यादासनंचैवपादुके छत्रंचमुद्रिकांचैवकंकणंभूषणंशुभं शय्यांदिव्यांप्रदेयांतुतूलाच्छादनसंयुतां गृहोपस्करसंयुक्तांप्र

क्तिसंयुक्तेनमनसा तत्रोपवेश्यचाचार्यमुपवासव्रतीततः पादौमूर्ध्निसमारोप्यप्रणिपत्यवचोवदेत् भगवंस्त्वत्प्रसादेनव्रतसंपूर्णतामम
एवमस्त्वितिसब्रूयात्तत्तुष्टास्तुशंकरः ईश्वरउवा० एवंकृत्वाप्रयत्नेनदंपतीचैवपूजयेत् तयोश्चभोजनंदद्याद्दंपत्याःपारितोषकं
अनेनविधिनातुष्याम्यहंयुक्तस्त्वयानघ तेभ्योदत्तंचयत्किंचिदक्षयंनात्रसंशयः आचार्यमग्रतःकृत्वातस्यादेशंतुकारयेत् नत्वा-
चार्यसमर्तार्थंनत्वाचार्यसमंतपः तस्याहंकायमास्थायसर्वसिद्धिंनयन्ध्रुवं तेनैवाचार्यदानेनसर्वंभवतिचाक्षयं एतद्व्रतंममश्रेष्ठं
गुह्याद्गुह्यतरंपरं राज्यमर्थान्सुतान्सिद्धिमवैधव्यंप्रयच्छति रूपंधनंधान्यमायुरारोग्यंचप्रदापयेत् इष्टलाभंचसौभाग्यंवर्धयिष्ये
वरानने त्रयोदशीव्रतान्नाम्निसौभाग्यकरणंपरं इतिभविष्योत्तरेअनंगत्रयोदशीव्रतंसंपूर्णं इतित्रयोदशीव्रतादिसमाप्तानि
अथचतुर्दशीव्रतानिलिख्यंते तत्रचैत्रशुक्लचतुर्दशीपूर्वायाह्या निशिभ्रमंतिभूतानिशक्तयःशूलभृद्यतः अतस्तत्रचतुर्द-
श्यांसत्यांतत्पूजनंभवेत् मधोःश्रावणमासस्यशुक्लायांतुचतुर्दशी साराभिव्यापिनीग्राह्यानान्याशुक्लाकदाचन चैत्रकृष्णच
तुर्दश्यांविशेषःस्मर्यते पृथ्वीचंद्रोदयेपुलस्त्यः चैत्रकृष्णचतुर्दश्यांपःस्नायाच्छिवसन्निधौ नप्रेतत्वमवाप्नोतिगंगायांतुविशे
षतः इयंचपूर्वायाह्या इतिचैत्रशुक्लकृष्णचतुर्दशी अथवैशाखशुक्लचतुर्दश्यांनृसिंहचतुर्दशीव्रतं तच्चप्रदोषव्यापिन्या-
कार्यं तदुक्तंनृसिंहपुराणेहेमाद्रौ वैशाखेशुक्लपक्षेतुचतुर्दश्यांनिशामुखे मज्जन्मसंभवपुण्यंव्रतंपापप्रणाशनं वर्षेवर्षे
चकर्तव्यंममसंतुष्टिकारणमिति स्कांदेपि वैशाखस्यचतुर्दश्यांसोमवारेनिलक्षत्रे अवतारोनृसिंहस्य [illegible]
स्वाती दिनद्वयेतद्व्याप्त्यभावव्याप्तौ अंशतः समव्याप्तौचपरा विषमव्याप्तौत्वधिकव्याप्तिमतीति दिनद्वयेप्यव्याप्तौपूर्वा पूर्वदिनेसा
णकालव्याप्तेःसत्वात्परदिनेचतदभावात् अस्यांचसंकल्परूपव्रतोपक्रमोमध्याह्नएवकर्तव्यः स्वातीनक्षत्रयोगेचशनिवारमहद्व्र
तं सिद्धियोगस्यसंयोगेवणिजेकरणेतथा पुंसांसौभाग्ययोगेनलभ्यतेदैवयोगतः एभिर्योगैर्विनापिस्यान्मद्दिनंपापनाशनं स १८८
र्वेषामेववर्णानामधिकारोस्तिमद्व्रते तथा अनंगेनसमायुक्तानसोपोष्याचतुर्दशी धनापत्यैर्वियुज्येततस्मात्तांपरिवर्जयेत् इ

नितंथैवनिषेधात् षिज्ञायमहिंनंयस्तुलंघयेत्पापकृन्नरः सयातिनरकंघोरंयावच्चंद्रदिवाकरौ ततोमध्यान्हवेलायांनद्यादौस्नानमाचरेत् परि
धायततोवस्त्रंव्रतकर्मसमारभेत् इतिव्रतविधिः अथकथा सूतउवाच हिरण्यकशिपुंहत्वादेवदेवंजगद्गुरुं सुखासीनंचनृ
हरिंशांतकायंरमार्पितं प्रह्लादोज्ञानिनांश्रेष्ठः पालयन्राज्यमुत्तमं एकाकीचतदुत्संगेप्रियंवचनमब्रवीत् प्रह्लादउवाच नमस्तेभग
वन्विष्णोनृसिंहरूपिणेनमः त्वद्भक्तोहंसुरेशेशेकंत्वांपृच्छामितत्त्वतः स्वामिंस्त्वयिममाभिन्नाभक्तिर्जातात्वनेकधा कथंचतेप्रियो-
जातः कारणंमेवदप्रभो नृसिंहउवाच कथयामिमहाप्राज्ञशृणुष्वैकाग्रमानसः भक्तेर्यत्कारणंवत्सप्रियत्वस्यचकारणं पुराका
लेत्वमभूर्विप्रः किंचित्त्वंनाप्यधीतवान् नाम्नासंवासुदेवोहिवेश्यासंसक्तमानसः तस्मिन्जातुनचैवत्वंचकर्थैकव्रतंकियत् कृतवान्मद्व्रतं
चैकंवेश्यासंगतिलालसः मद्व्रतस्यप्रभावेनभक्तिर्जातातवानघ प्रह्लादउवाच श्रीनृसिंहोच्यतांनावत्कस्यपुत्रस्यकिंव्रतं वेश्यायां
वर्तमानेनकथंतच्चकृतंमया येनत्वत्प्रीतिमापन्नोवक्तुमर्हसिसांप्रतं नृसिंहउवाच पुरावंतीपुरेत्यासीद्ब्राह्मणोवेदपारगः तस्यनाम
सुशर्मेतिबहुलोकेषुविश्रुतं नित्यहोमक्रियांचैवविदधातिद्विजोत्तमः ब्रह्मक्रियासुनियतः सर्वासुकिलतत्परः अग्निष्टोमादिभिर्यज्ञै
रिष्टाः सर्वेसुरोत्तमाः तस्यभार्यासुशीलाभूद्विख्याताभुवनत्रये पतिव्रतासदाचारापतिभक्तिपरायणा जज्ञिरेस्यांसुताः पंचतस्माद्द्वि
जवरात्तथा सदाचारेषुविद्वांसः पितृभक्तिपरायणाः तेषांमध्येकनिष्ठस्त्वंवेश्यासंगतितत्परः तथापिविद्यमानेनसुरापानंसुपा
नकं सौवर्णंचाप्यपहृतंचौरैः सार्द्धंत्वयाबहु विलासिन्यासमंचैवत्वयाचीर्णमघंबहु एकदातद्गृहेचासीन्महान्कलिस्त्वयासह ते
नकलहप्रभावेनव्रतमेतत्त्वयाकृतं अज्ञानान्मद्व्रतंजातंव्रतानामुत्तमंहितत् तस्यांविहारायोगेनरात्रौजागरणंकृतं वेश्यायावत्तुभं
किंचित्प्रजातंनत्वयासह रात्रौजागरणंचीर्णंत्यक्तंभोज्यमनेकधा व्रतेनानेनचीर्णेनमोदंतेदिविदेवताः सृष्ट्यर्थेचपुराब्रह्माच
क्रेस्येतदनुत्तमं मद्व्रतस्यप्रभावेननिर्मितंसचराचरं ईश्वरेणपुराचीर्णंवधार्थेत्रिपुरस्यच महाप्राज्ञेनविहितंव्रतमेतन्महाफलं
एतद्व्रतप्रभावेनसर्वेसिद्धिमुपागताः वेश्यापिमत्प्रियाजातात्रैलोक्येसुखचारिणी ईदृशंमद्व्रतंवत्सत्रैलोक्येषुसुविश्रुतं कलहेन

विलासिन्याव्रतमेतदुपस्थितम् प्रह्लादेनेनभक्तिर्मेयिजानात्यनुत्तमा धूर्तेयात्वविलासिन्याज्ञात्वाव्रतमिदंमहत् कलहस्वच्छतोयेनमद्भुते-
यतकृतंभवेत् सावेश्यानुवराजानाभुक्त्वाभोगाननेकशः मुक्ताकर्मविलीनानुत्वंमहाद्विशास्त्रमी कार्यार्थंचभवानास्तेमच्छरीरस्पृथ
क्तया विधायसर्वकार्याणिशीघ्रंचैवगमिष्यसि यइदंव्रतमावश्यंप्रकरिष्यंतिमानवाः नतेषांपुनरावृत्तिरतःकल्पशतेरपि अपुत्रोल
भतेपुत्रंधनकामोधनंतथा ज्ञानीत्वममभक्तश्चदिव्यंसौख्यंलभेन्नरः स्त्रियोवापुरुषाश्चापिकुर्वंतिव्रतमुत्तमं तेभ्योददाम्यहंसौख्यं
भुक्तिमुक्तिसमन्वितं बहुनोक्तेनकिंवत्सव्रतस्यफलमुत्तमं प्रह्लादउवाच व्रतस्यास्यफलंसाधुत्वयिमेभक्तिकारणात् स्वामिन्-
जातंविशेषेणत्वत्तःपापनिकृंतनं अधुनाश्रोतुमिच्छामिव्रतस्यास्यविधिंपरं कस्मिन्मासेभवेदेतत्कस्मिन्वातिथिवासरे एतद्विस्त
रतोदेववक्तुमर्हसिसांप्रतं विधिनायेनवैस्वामिन्समग्रफलभुग्भवेत् ममोपरिकृपांकृत्वाब्रूहित्वंसकलंप्रभो नृसिंहउवाच साधु
साधुमहाभागव्रतस्यास्यविधिंपरं सर्वंकथयतोमेद्यत्वमेकाग्रमनाःशृणु वैशाखशुक्लपक्षेतुचतुर्दश्यांसमाचरेत् मज्जन्मसंभ
वंपुण्यंव्रतंपापप्रणाशनं वर्षेवर्षेतुकर्तव्यंममसंतुष्टिकारकम् महापुण्यमिदंश्रेष्ठंमानुषैर्भवभीरुभिः तेनैवक्रियमाणेनसह-
स्रद्वादशीफलं जायतेमद्व्रताद्धिमानुषाणांमहात्मनां स्वातीनक्षत्रयोगेचशनिवासरसंयुते सिद्धियोगस्ययोगेचवणिजेकरणेत
था पुण्यसौभाग्ययोगेनलभ्यतेदैवयोगतः सर्वैरेतैस्तुसंयुक्तंहत्याकोटिविनाशनं केवलेपिचकर्तव्यंमद्दिनेव्रतमुत्तमं अन्यथानरकंया-
तियावच्चंद्रदिवाकरौ यथायथाप्रवृत्तिःस्यात्पातकस्यकलौयुगे तथातथाप्रणश्यंतिसर्वेधर्मानसंशयः एतद्व्रतप्रभावेनमद्भक्तिः
स्याद्दुरात्मनां विचार्येत्थंप्रकर्तव्यंमाधवमासितद्व्रतं निश्चयश्चप्रकर्तव्योदंतधावनपूर्वकं श्रीनृसिंहदयांकृत्वामहाविष्णोममोपरि
अद्याहंतेविधास्यामिव्रतंनिर्विघ्नतांनय इतिनियममंत्रः व्रतस्थेननकर्तव्यासंगतिःपापिभिःसह मिथ्यालापोनकर्तव्यःस
मग्रफलकांक्षिभिः स्त्रीभिर्दुष्टैश्चआलापान्व्रतस्थोनैवकारयेत् स्मर्तव्यंचमहारूपंमद्दिनेसकलंशुभे ततोमध्यान्हवेलायांन
द्यादौविमलेजले गृहेवादेवखातेवातडागेविमलेजले वैदिकेनचमंत्रेणस्नानंकुर्याद्विचक्षणः मृत्तिकागोमयेनैवतथाधात्रीफलेनच

तिलैश्चसर्वपापघ्नैः स्नानंकार्यंमहात्मभिः परिधायशुचिर्वासोनित्यकर्मसमाचरेत् ततोगृहंसमागत्यस्मरन्मांभक्तियोगतः गोमयेनप्रलिप्या
थकुर्यादष्टदलंशुभं कलशंतत्रसंस्थाप्यताम्रंरत्नसमन्वितं तस्योपरिन्यसेत्पात्रंवंशजंव्रीहिपूरितं हैमीनत्रचमन्मूर्तिःस्थाप्यालक्ष्म्यास्तथै
वच पलेनवातदर्धेनतदर्धार्धेनवापुनः यथाशक्त्यथवाकार्यावित्तशाठ्यविवर्जितैः पंचामृतेनसंस्नाप्यपूजनंतुसमाचरेत् ततोब्राह्म-
णमाहूयतमाचार्यमलोलुपं सदाचारसमायुक्तंशांतंदांतंजितेंद्रियं तेनैवकारयेत्पूजांदृष्टाशास्त्रानुसारतः आचार्यवचनाद्धीमा
न्पूजांकुर्याद्यथाविधि मंडपंकारयेत्तत्रपुष्पस्तबकशोभितं ऋतुकालोद्भवैःपुष्पैःपूजयेत्स्वस्थमानसः उपचारैःषोडशभिर्मंत्रैर्वैदो
द्भवैस्तथा ततःपौराणिकैर्मंत्रैःपूजनीयोयथाविधि चंदनंशीतलंदिव्यंकस्तूरीकुंकुमंतथा ददामितवतुष्ट्यर्थंनृसिंहपरमेश्वर चंदनं
कालोद्भवानिपुष्पाणितुलस्यादीनिवैप्रभो सम्यक्गृहाणदेवेशलक्ष्म्यासहनमोस्तुते पुष्पाणि कृष्णागरुमयंधूपंश्रीनृसिंहजगत्पते
तवतुष्ट्यैप्रदास्यामिसर्वदेवनमोस्तुते धूपं सर्वतेजोद्भवंतेजस्तस्माद्दीपंददामिते श्रीनृसिंहमहाबाहोतिमिरंमेविनाशय दीपं नैवेद्यंगृ
ह्यतांदेवभक्ष्यभोज्यसमन्वितं ददामितेरमाकांतसर्वपापक्षयंकुरु नैवेद्यं पीतांबरमहाबाहोप्रह्लादभयनाशन तथाकृतेनार्चनेन
यथोक्तफलदोभव इतिप्रार्थना रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनैः पुराणश्रवणाद्यैश्चश्रोतव्याश्चकथाःशुभाः ततःप्रभा
तसमयेस्नानंकृत्वाजितेंद्रियः पूर्वोक्तेनविधानेनपूजयेन्मांप्रयत्नतः वैष्णवान्प्रजपेन्मंत्रान्मदग्रेस्वस्थमानसः ततोदानानिदेया
निवक्ष्यमाणानियानिच पात्रेभ्यस्तुद्विजेभ्योहिलोकदर्पजिगीषया सिंहःस्वर्णमयोदेवोममसंतोषकारकः गोभूतिलहिरण्यानि
देयानिचफलेप्सुभिः शय्यासतूलिकादेयासप्तधान्यसमन्विता अन्यानिचयथाशक्त्यादेयानिममतुष्टये वित्तशाठ्यंनकुर्वीतयथो-
क्तफलकांक्षया ब्राह्मणान्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणां निर्धनेनापिकर्तव्यंदेयंशक्त्यनुसारतः सर्वेषामेववर्णानामधिकारो-
स्तिमद्व्रते मद्भक्तैस्तुविशेषेणकर्तव्यंमत्परायणैः तद्दर्शनभवेद्दुःखंनदोषामत्प्रसादतः मांसमुद्धरदेवेशदु स्तराद्भवसागरात्
पातकार्णवमग्नस्यव्याधिदुःखांबुवासिभिः जीवैस्तुपरिभूतस्यमोहदुःखगतस्यमे करावलंबनंदेहिशेषशायिन्जगत्पते श्रीनृ-

सिंहरमाकांत भक्तानां भयनाशन क्षीरांबुनिधिवासिन त्वं चक्रपाणे जनार्दन व्रतेनानेन देवेश भुक्तिमुक्तिप्रदो भव एवं प्राार्थ्य ततो देवं विसृ- ज्य च यथाविधि उपहारादिकं सर्वमाचार्याय निवेदयेत् दक्षिणाभिस्तु संतोष्य ब्राह्मणांस्तु विसर्जयेत् मध्याह्ने तु स्वयं यन्ते भुंजीत स- ह बंधुभिः य इदं शृणुयाद्भक्त्या व्रतं पापप्रणाशनं यस्य स्मरणमात्रेण ब्रह्महत्यां व्यपोहति पवित्रं परमं गुह्यं कीर्तयेद्यस्तु मानवः सर्वा- न्कामानवाप्नोति व्रतस्यास्य फलं लभेत् इति हेमाद्रौ ब्रह्मपुराणे नृसिंह च० व्रतकथा समाप्ता अथ अनंतचतुर्दशीव्रतं सा परा कार्या पूजनकालव्यापित्वात् तथा च अनंतं पूजयेद्यस्तु प्रातः काले समाहितः अनंतां लभते सिद्धिं च चक्रपाणेः प्रसादतः इति ब्रह्मपुराणे तदभावे पूर्वा उम यदिने सूर्योदयव्यापित्वेपि पूर्णा युक्तत्वेपि परैव ग्राह्या भाद्रे सिते चतुर्दश्यामनंतं पूजयेत्सुधीः ह्रासेन सर्वकर्मा णि प्रातरेव हि पूजनं शुक्ला भाद्रपदस्यापि अनंताख्या चतुर्दशी उदयव्यापिनी ग्राह्या यदि केकापि या भवेत् इति हेमाद्रिः तस्मा त्परैवेति सर्वसंमतं अथ अनंतपूजाविधिः प्रातर्नद्यादिके स्नात्वा नित्यकर्म समाप्य च अनंतं हृदये कृत्वा शुचिस्तत्र समाहितः अव्रणं कलशं चैव वस्त्रयुग्मेन वेष्टितं मुष्टिमात्रेण दर्भैस्तु फणिराजं च कारयेत् स्थापयेत्कलशस्याग्रे जगदाधारमव्ययं आराधयेदनं तं तस्मिन्कुंभे विशेषतः गोचर्ममात्रमालिप्य गोमयेन विचक्षणः तन्मध्ये स्थंडिलं कृत्वा पद्ममष्टदलं लिखेत् तस्योपरि न्यसेत्कुंभं चूतपल्लव संयुतं प्राणायामं ततः कृत्वा तिथ्यादि परिकल्पयेत् मम सकुटुंबस्य क्षेमस्थैर्य आयुरारोग्य चतुर्विध पुरुषार्थसिध्यर्थं मम आचरितस्य- आचरीष्यमाणस्य व्रतस्य संपूर्णफलप्राप्त्यर्थं श्रीमदनंतपूजनमहं करिष्ये तथा चासनादि कलशाराधनं करिष्ये कलशस्य० सर्वे समु० सितासिते० कलशे वरुणं संपूज्य ततो शंखं घंटां च पूजयेत् श्रीमदनंतव्रतांगत्वेन श्रीयमुनापूजां करिष्ये तद्यथा लोकपालस्तुतां दे वीमिंद्रनीलसमुद्भवाम् यमुने त्वामहं ध्याये सर्वकामार्थसिद्धये ध्यानं सरस्वति नमस्तुभ्यं सर्वकामप्रदायिनि आगच्छ देवि यमुने व्रतसं पूर्णहेतवे इमं मे गंगे इत्यावाह्य सिंहासने समारूढे देवशक्तिसमन्विते सर्वलक्षणसंपूर्णे यमुनायै नमोस्तु ते आसनं रुद्रपादे नम स्तुभ्यं सर्वलोकहिते प्रिये सर्वपापप्रशमनि तरंगिण्यै नमोस्तु ते पाद्यं गरुड़पादे नमस्तुभ्यं शंकरप्रियभामिनि सर्वकामप्रदे देवि य

मुनेनेनमोनमः अर्घ्यं विष्णुपादोद्भवेदेविसर्वाभरणभूषिते कृष्णामूर्तेर्महादेविकृष्णावेण्यैनमोनमः आचमनं सर्वपापहरेदेविविश्वस्यप्रियद
र्शिनि सौभाग्यंयमुनेदेहियमुनायैनमोस्तुते मधुपर्कं नंदिपादमहादेविशंकरार्धशरीरिणि सर्वलोकहितेदेविभीमरथ्यैनमोस्तुते पंचा
मृतस्नानं सिंहपादान्तमेदेविनारसिंहसमप्रभे सर्वलक्षणसंपूर्णेभवनाशिनितेनमः शुद्धोदकस्नानं विष्णुपादाब्जसंभूतगंगात्रि
पथगामिनि सर्वपापहरेदेविभागीरथ्यैनमोस्तुते श्वेतवस्त्रं त्र्यंबकस्यजटाजूटेगोतमस्याघनाशिनि समधासागरंयानिगोदावरिन
मोस्तुते कंचुकीं माणिक्यमुक्तावलिकौस्तुभाश्चगोमेदवैडूर्यसुपुष्परागैः वज्रेश्चनीलेश्चसुशोभितानिगृहाणसर्वाभरणानिदेवि
आभरणानि चंदनागरुकस्तूरीरोचनंकुंकुमंतथा कर्पूरेणसमायुक्तंगंधंदद्मिचभक्तितः गंधं श्वेतांश्चचंद्रवर्णाभान्हरिद्रारागरंजि
तान् अक्षतांश्चसुरश्रेष्ठेददामियमुनेशुभे अक्षतान् मंदारमालतीजातीकेतकीपाटलैःशुभैः पूजयामिचदेवेशियमुनेभक्तवत्सले
पुष्पाणि अथांगपूजा चंचलायै॰ पादौपू॰ चपलायै॰ जानुनीपू॰ भक्तवत्सलायै॰ कटीपू॰ हरायै॰ नाभिंपू॰ मन्मथवासिन्यै॰ गुह्यंपू॰ अ
ज्ञानवासिन्यै॰ हृदयंपू॰ भद्रायै॰ स्तनौपू॰ अघहंत्र्यै॰ भुजौपू॰ रक्तकंठ्यै॰ कंठंपू॰ भवहंत्र्यै॰ मुखंपू॰ गौर्यै॰ नेत्रे॰ भागीरथ्यै॰ ललाटंपू॰
यमुनायै॰ शिरःपू॰ सरस्वत्यै॰ सर्वांगंपू॰ अथनामपूजा यमुनायै॰ सितायै॰ कमलायै॰ उत्पलायै॰ अभीष्टप्रदायै॰ धात्र्यै॰ हरिहररूपिण्यै॰
गंगायै॰ नर्मदायै॰ गौर्यै॰ भागीरथ्यै॰ तुंगायै॰ भद्रायै॰ कृष्णावेण्यै॰ भवनाशिन्यै॰ सरस्वत्यै॰ कावेर्यै॰ सिंधवे॰ गोतम्यै॰ गोमत्यै॰ गायत्र्यै॰ ग
रुडध्वजायै॰ गिरिजायै॰ चंद्रचूडायै॰ सर्वैश्वर्यै॰ महालक्ष्म्यै॰ सर्वपापहरेदेविसर्वोपद्रवनाशिनि सर्वसंपत्प्रदेदेवियमुनायैनमोस्तुते
इतिनामपूजा दशांगगुग्गुलोद्भूतश्चंदनागरुसंयुतः कपिलाघृतसंयुक्तोधूपोयंप्रतिगृह्यतां धूपं घृतवर्तिसमायुक्तंवह्निनायोजितं
मया गृहाणदीपकंदेविसर्वैश्वर्यप्रदायिनि दीपं शर्कराघृतसंयुक्तंदधिक्षीरंचसर्पिषा पक्वमन्नंमयादत्तंनैवेद्यंप्रतिगृह्यतां नैवेद्यं
पानीयंपावनंश्रेष्ठंगंगादिसरिदुद्भवं हस्तप्रक्षालनंदेविगृहाणमुखशोधनं हस्तप्र॰ मुखप्र॰ कर्पूरेणसमायुक्तंयमुनेचारुचंदनं समर्पि
तंमयातुभ्यंकरोद्वर्तनकंकुरु करोद्वर्तनं॰ इदंफलमितिफलं पूगीफलमितितांबूलं॰ हिरण्यगर्भेतिदक्षिणां॰ त्रैलोक्यपावनेगंगेत्र्यं

धकारविनाशिनि पंचार्तिक्यंगृहाणेदंविश्वप्रीत्येनमोस्तुते आर्तिक्यं केतकीजातिकुसुमैर्मल्लिकामालतीभवैः पुष्पांजलिर्मयादत्तो तवप्रीत्यैनमोस्तुते पुष्पांजलिं यानिकानिचेतिमद॰ अन्यथाशरणंनास्तीति नमस्कारं सुरासुरेंद्रादिकिरीटमौक्तिकैर्युक्तंसदायत्तव पादपंकजं परावरंपातुवरंसुमंगलंनमामिभक्त्यानवकामसिद्धये भवानिचमहालक्ष्मीसर्वकामप्रदायिनि व्रतंसंपूर्णतांयातियमुना येनमोस्तुते इतिप्रार्थनां इतियमुनापूजासमाप्ता अथानंतपूजा ततस्तुमूलमंत्रेणनमस्कृत्यजनार्दनं नवाम्रपल्लवाभासंपिं गप्भ्रुविलोचनं पीतांबरधरंदेवंशंखचक्रगदाधरं अलंकृतंसमुद्रस्थंविश्वरूपंविचिंतये ध्यायामि आगच्छानंतदेवेशतेजोराशे- जगत्पते इमांमयाकृतांपूजांगृहाणपुरुषोत्तम सहस्रशीर्षेत्यावाहनं विष्टरंदेहिगोविंदगोवर्धनधरप्रभो अनंतदीयतेयन्मेरत्न- सिंहासनेविश पुरुषएवेदमित्यासनं यथात्वंसर्वदेवानामिंद्रादीनांचरक्षसि तथामांपालयानंतत्वदंघ्रिशरणागतं एतावानस्येति पाद्यं अनंतानंतदेवेशअनंतफलदायक अनंतानंतरूपोसिगृहाणार्घ्यंनमोस्तुते त्रिपादूर्ध्व॰ इत्यर्घ्यं गंगोदकंसमानीतंहेमकुंभेनयो जितं आचम्यतांहृषीकेशप्रसीदपुरुषोत्तम तस्माद्विराळित्याचमनीयं अनंतगुणरूपायविश्वरूपधरायच नमोमहात्म्यदेवाय- अनंतायनमोनमः यत्पुरुषेणेतिस्नानं ततःपंचामृतस्नानं सुरभेस्तुसमुत्पन्नंदेवानामपिदुर्लभं पयोददामिदेवेशस्नानार्थंप्र- तिगृह्यतां आप्यायस्वेतिपयःस्ना॰ चंद्रमंडलसंकाशंसर्वदेवप्रियंहियत् ददामिदधिदेवेशस्नानार्थंप्रतिगृह्यतां दधिक्राव्णोअकारिषमितिद- धिस्नानं आज्यंसुराणामाहारआज्यंयज्ञेप्रतिष्ठितं आज्यंपवित्रंपरमंस्नानार्थंप्रतिगृह्यतां घृतंमिमिक्षेघृतमस्येतिघृतस्नानं सर्वौ षधिसमुत्पन्नंपीयूषसदृशंमधु स्नानार्थंनमयादत्तंगृहाणपरमेश्वर मधुवातेतिमधु इक्षुदंडात्समुद्भूतांशर्करांमधुरांशुभां स्नानाय तेमयादत्तांगृहाणपरमेश्वर स्वादुःपवस्वेतिशर्करास्नानं शुद्धोदकस्नानं नाममंत्रैःपूजयेत् पुरुषसूक्तेनअभिषेकः तप्तकांचनवर्णाभं- १९१
कौशेयंचसुनिर्मितं वस्त्रंगृहाणदेवेशलक्ष्मीयुक्तनमोस्तुते तंयज्ञमितिवस्त्रं वस्त्रानंतरंआचमनीयं दामोदरनमस्तेस्तुत्राहिमांभव सागरात् ब्रह्मसूत्रंसोत्तरीयंगृहाणपुरुषोत्तम यज्ञोपवीतंपरमंपवित्रं॰ तस्माद्यज्ञात्सर्वहुतइति उपवीतानंतरंआचमनीयं श्रीखंडंचंदनं

दिव्यं॰ तस्माद्यज्ञात्सर्वहुतऋच॰ इतिचंदनं अक्षताश्चसुरश्रेष्ठा॰ अलंकारार्थेअक्षतान् माल्यादीनिसुगंधीनि॰ तस्मादश्वेतिपुष्पं॰
अथग्रंथिपूजा श्रियैन॰ मोहिन्यै॰ पद्मिन्यै॰ महाबला॰ अजायै॰ मंगलायै॰ वरदायै॰ शुभायै॰ जयायै॰ विजयायै॰ जयंत्यै॰ पापनाशि
न्यै॰ विश्वरूपायै॰ सर्वमंगलायै॰ इतिग्रंथिपूजा अथांगपूजा मत्स्याय॰ पादौपू॰ कूर्माय॰ गुल्फौपू॰ वराहाय॰ जानुनीपू॰ नारसिं
हाय॰ ऊरूपू॰ वामनाय॰ कटीपू॰ रामाय॰ उदरंपू॰ श्रीरामाय॰ हृदयंपू॰ कृष्णाय॰ मुखंपू॰ सहस्रशिरसेनमः शिरःपू॰ श्रीमदनंता
य॰ सर्वांगं॰ अथावरणपूजा अनंतस्यदक्षिणपार्श्वेरमायै॰ वामपार्श्वेभूम्यै॰ इतिप्रथमावरणं आवरणदेवतामावाह्य हस्तेमक्षा
त्यगंधपुष्पंतर्जनीमध्यमांगुष्ठैर्धृत्वामध्येशंखोदकंगृहीत्वामंत्रांतेशंखोदकंभूमौनिक्षिप्यपुष्पंदेवोपरिनिक्षिपेत्. दयाब्धेत्राहिसंसा
रसर्पान्मांशरणागतं भक्त्यासमर्पयेतुभ्यंप्रथमावरणार्चनं इतिमंत्रमुच्चार्यजलंत्यक्त्वापुष्पंदेवोपरिन्यसेत इतिपूर्वादिक्रमेण द्यू
द्योल्काय॰ महोल्काय॰ शतोल्काय॰ सहस्रोल्काय॰ दयाब्धेत्राहिसं॰ द्वितीयावरणं २ तथैव वासुदेवाय॰ संकर्षणाय॰ प्रद्युम्नाय॰ अ
निरुद्धाय॰ दयाब्धेत्राहिसं॰ तृतीयावरणं ३ प्राच्यां केशवाय॰ नारायणाय॰ माधवाय॰ गोविंदाय॰ विष्णवे॰ मधुसूदनाय॰ त्रिविक्र
माय॰ वामनाय॰ श्रीधराय॰ हृषीकेशाय॰ पद्मनाभाय॰ दामोदराय॰ दयाब्धेत्राहिसं॰ चतुर्थावरणं॰ ४ पूर्वादिक्रमेण मत्स्याय॰ कू
र्माय॰ वराहाय॰ नारसिंहाय॰ वामनाय॰ रामाय॰ श्रीरामाय॰ कृष्णाय॰ बौद्धाय॰ कल्किने॰ अनंताय॰ विश्वरूपिणेन॰ दयाब्धे॰ पं
चमावर॰ ५ पूर्वादिक्रमेण अनंताय॰ दक्षिणस्यां॰ ब्रह्मणे॰ पश्चिमायां॰ वायवे॰ उत्तरायां॰ ईशानाय॰ आग्नेय्यां॰ वारुण्यै॰ नैर्ऋ
त्यां॰ गायत्र्यै॰ वायव्यां॰ भारत्यै॰ ईशान्यां गिरिजायै॰ अग्रे गरुडाय॰ वामे सुपुण्याय॰ दक्षि॰ दयाब्धेत्राहि॰ षष्ठावरणं ६
पूर्वादिक्रमेण इंद्राय॰ अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ दयाब्धेत्राहिसं॰ सप्तमावरणं ७ आग्ने
य्यां शेषाय॰ नैर्ऋत्यां॰ विष्णवेन॰ वायव्यां॰ विधये॰ ईशान्यां॰ प्रजापतये॰ दयाब्धेत्रा॰ अष्टमावरणं॰ ८ आग्नेय्यां॰ गणपतये॰ नैर्ऋ
त्यांसप्तमातृभ्यो॰ वायव्यां॰ दुर्गायै॰ ईशान्यां॰ क्षेत्राधिपतये॰ दयाब्धे॰ नवमावरणं ९ मध्ये ब्रह्मणेन॰ भास्कराय॰ शेषाय॰ सर्वव्या-

पिने॰ ईश्वराय॰ विश्वरूपाय॰ महाकामाय॰ सृष्टिकर्त्रे॰ कृष्णाय॰ हरये॰ शिवाय॰ स्थितिकारकाय॰ अंतकाय॰ दयाब्धे॰ दशमावरणं १०॰ शौरये॰ वैकुंठाय॰ महाबलाय॰ पुरुषोत्तमाय॰ अजाय॰ पद्मनाभाय॰ मंगलाय॰ हृषीकेशाय॰ वरदाय॰ माधवाय॰ मधुसूदनाय॰ अच्युताय॰ अनंताय॰ गोविंदाय॰ विजयाय॰ अपराजिताय॰ कृष्णाय॰ दयाब्धेत्राहि संसार॰ एकादशाव॰ ११ अनंताय॰ कपिलाय॰ शेषाय॰ संकर्षणाय॰ हलायुधाय॰ नारकाय॰ सीरपाणये॰ बलभद्राय॰ दयाब्धेत्राहि सं॰ द्वादशावरणं १२ क्षीराब्धिशायिने॰ अच्युताय॰ भूम्याधाराय॰ लोकनाथाय॰ फणामणिविभूषणाय॰ सहस्रमूर्ध्ने॰ सहस्रार्चिषे॰ दयाब्धेत्रा॰ त्रयोदशावरणं १३ केशवादिचतुर्विंशतिनामभिः दयाब्धेत्रा॰ इतिचतुर्दशावरणं १४ अथपत्रपूजा कृष्णाय॰ पलाशप॰ विष्णवे॰ औदुंबरप॰ हरये॰ अश्वत्थप॰ शंभवे॰ भृंगराजप॰ ब्रह्मणे॰ जटाधारप॰ भास्कराय॰ अशोकपत्रं॰ शेषाय॰ कपित्थप॰ सर्वव्यापिने॰ वटपत्रं॰ ईश्वराय॰ आम्रप॰ विश्वरूपिणे॰ कदलीप॰ महाकायाय॰ अपामार्गप॰ सृष्टिकर्त्रे॰ करवीरप॰ स्थितिकर्त्रे॰ पुन्नागपत्रं अनंताय॰ नागवल्लीपत्रं॰ १४ अथपुष्पपूजा ॐ अनंताय॰ पद्मपुष्पं॰ विष्णवे॰ जातीपुष्पं॰ केशवाय॰ चंपकपु॰ अव्ययाय॰ कल्हारपुष्पं॰ सहस्रजिते॰ केतकीपुष्पं॰ अनंतरूपिणे॰ बकुलपु॰ इष्टाय॰ शतपु॰ विशिष्टाय॰ पुन्नागपु॰ शिष्टेष्टाय॰ करवीरपु॰ शिखंडिने॰ धत्तूरपु॰ नहुषाय॰ कुंदपुष्पं॰ विश्वबाहवे॰ मल्लिकापु॰ महीधराय॰ मालतीपुष्पं॰ अच्युताय॰ कर्णिकापु॰१४ अथाष्टोत्तरशतनामभिः पू॰ अनंताय॰ अच्युताय॰ अद्भुतकर्मणे॰ अमितविक्रमाय॰ अपराजिताय॰ अखंडाय॰ अग्निनेत्राय॰ अग्निवपुषे॰ अहश्याय॰ अमितप्रभा॰१० अनुकूलाय॰ अनाशिने॰ अनघाय॰ असुनिलयाय॰ अहरहाय॰ अष्टमूर्तये॰ अनिरुद्धाय॰ अनिर्विष्टाय॰ अचंचलाय॰ अत्यादिकाय॰ २० अनन्तरूपाय॰ अखिलधराय॰ अव्यक्ताय॰ अनुरूपाय॰ अभयंकराय॰ अक्षताय॰ अनपूपे॰ अयोनिजाय॰ अरविंदाक्षाय॰ अरातिवर्जिताय॰ अधोक्षजाय॰ ३१ अदितिपुत्राय॰ अंबिकापतिपूर्वजाय॰ अपस्मारनाशिने॰ अव्ययाय॰ अनादिने॰ अप्रमेयाय॰ अघशमने॰ अमरारिघ्नाय॰ अनीश्वराय॰ अजाय॰ ४१ अघोराय॰ अनादिनिधनाय॰ अमरप्रभवे॰ अग्राह्याय॰ अक्रूराय॰ अनुत्तमाय॰ अरूपाय॰ अन्हेनमः अमो

पाधिपतये॰ अजाय॰ ८१ अक्षमाय॰ अमृताय॰ अघोरवीर्याय॰ अव्यंगाय॰ अविग्राय॰ अतींद्रियाय॰ अमिततेजसे॰ अमितये॰ अष्टमूर्तये॰ अनिलाय॰ अवशाय॰ अणोरणीयसेन॰ अशोकाय॰ अरविंदाय॰ अधिष्ठाने॰ अमितनयनाय॰ अरण्यवासिने॰ अप्रमत्ताय॰ अनंतरूपाय॰ अनलाय॰ अनिमिषाय॰ अरूपरूपाय॰ अग्रगण्याय॰ अप्रमिताय॰ अंतकाय॰ अचिंत्याय॰ अपांनिधये॰ अंतकसूदनाय॰ अमरप्रियाय॰ अष्टसिद्धिप्रदाय॰ ९१ अरविंदप्रियाय॰ अरविंदोद्भवाय॰ अनयाय॰ अर्थाय॰ अक्षोभ्याय॰ अर्चिष्मतेन॰ अनेकमूर्तये॰ अनंतब्रह्मांडपतये॰ अनंतशयनाय॰ अमराधिपतये॰ अनाधाराय॰ अनंतनाम्ने॰ अनंतश्रिये॰ अक्षराय॰ अमाय॰ आश्रमस्थाय॰ आश्रमातीताय॰ अन्नादाय॰ आत्मयोनये॰ अवनीपतये॰ अवनीधराय॰ अनादिने॰ आदित्याय॰ अमृताय॰ अपवर्गप्रदाय॰ अनंताय॰ १०८ इत्यष्टोत्तरशतनामपूजा दशांगंगुग्गुलोद्भूतंचंदनागरुसंयुतं सर्वेषामुत्तमंधूपंगृहाणस्मरपूजितयत्पुरुषमितिधूपं साज्यंचवर्तिसंयुक्तंवह्निनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह ब्राह्मणोस्येतिदीपं अन्नंचतुर्विधंस्वादुपयोदधिघृतंतथा नानाव्यंजनशोभाढ्यंनैवेद्यंप्रतिगृह्यतां चंद्रमामनसइतिनैवेद्यं नैवेद्यमध्येपानीयं उत्तरापोशनार्थंतदमितोयंसुवासितं गृहाणसुमुखोभूत्वाअनंतायनमोनमः उत्तरापोशनं मुखप्रक्षालनं हस्तप्रक्षालनं करोद्वर्तनकंदेवमयादत्तंहिभक्तितः चारुचंद्रप्रभंदिव्यंगृहाणजगदीश्वर करोद्वर्तनं इदंफलंमयादेवस्थापितंपुरतस्तव तेनमेसफलावाप्तिर्भवेज्जन्मनिजन्मनि नारिकेलफलं पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतं कर्पूरेणसमायुक्तंतांबूलंप्रतिगृह्यतां तांबूलं हिरण्यगर्भेतिदक्षिणां॰ यानिकानीनि नाभ्याआसीतिप्रदक्षिणा नमस्तेभगवन्भूयोनमस्तेधरणीधर नमस्तेसर्वनागेंद्रनमस्तेमधुसूदन सप्तास्येनेतिनमस्कारं नमस्तेदेवदेवेशनमस्तेगरुडध्वज नमस्तेकमलाकांतअनंतायनमोनमः यज्ञेनयज्ञमितिमंत्रपुष्पं॰ अथदोरकप्रार्थना अनंतायनमस्तुभ्यंसहस्रशिरसेनमः नमोस्तुपद्मनाभायनागानांपतयेनमः अनंतःकामदःश्रीमाननंतोमेप्रयच्छतु अनंतदोररूपेणपुत्रपौत्राननुमवर्द्धतु इतिदोरकप्रा॰ अथदोरकबंधनमंत्रः अनंतसंसारमहासमुद्र

मग्रंसमभ्युद्धरवासुदेव अनंतरूपेविनियोजयस्वत्वनंतसूत्रायनमोनमस्ते इतिबध्वा अथजीर्णदोरकविसर्जनमंत्रः नमःसर्वहितार्थो
यजगदानंदकारक जीर्णदोरमसुंदेवविसृज्येहंत्वदाज्ञया इतिविसृजेत् अथवायनमंत्रः गृहाणेदंद्विजश्रेष्ठवायनंदक्षिणायुतं त्व
त्प्रसादादहंदेवमुच्येयंकर्मबंधनात् प्रतिगृण्हद्विजश्रेष्ठ अनंतफलदायक पक्वान्नफलसंयुक्तंदक्षिणाघृतसंयुतं अथजीर्णदोरक
दानमंत्रः अनंतःप्रतिगृण्हाति अनंतोवैददातिच अनंतस्तारकोभाभ्यां अनंतायनमोनमः इतिदद्यात् ततःयथाशक्तिब्राह्म-
णान्भोजयेत् अनेनकृतपूजनेनतेनश्रीमदनंतःप्रीयतां इतिपूजाविधिः अथकथा सूतउवाच पुरातुजान्हवीतीरेधर्मोभी
मपराक्रमः जरासंधवधार्थायराजसूयमुपाक्रमत् कृष्णेनसहधर्मोसौभीमार्जुनसमन्वितः यज्ञशालामकुर्वीतमहेंद्रालयसन्निभां
यज्ञार्थान्भूपतीन्सर्वान्समानीयप्रयत्नतः गांधारीतनयोराजाएकदानृपनंदनः दुर्योधनइतिख्यातः समागत्यमखालयं दृष्ट्वा
दुर्योधनस्तत्रभागणंजलसन्निभं ऊर्ध्वंकृत्वानुवस्त्राणितत्रगच्छन्शनैःशनैः स्मितवक्त्राश्चताःसर्वाद्रौपद्यादिवरांगनाः दुर्योधन-
स्ततोगच्छन्जलमध्येपपातह पुनःसर्वेनृपाश्चैवऋषयश्चतपोधनाः उपहासंचचक्रुस्ताद्रौपद्यादिस्मृलोचनाः महाराजाधिरा-
जासौमहाक्रोधपरायणः विनिर्गत्यस्वकेराष्ट्रेमातुलेनाहृतोनृपः तस्मिन्कालेतुशकुनिःप्रोवाचमधुरंवचः मुंचराजन्महारो
षंपुरतःकार्यगौरवात् गंतुमुत्तिष्ठराजेंद्रसत्रात्स्वसदनंप्रति तथेत्युक्त्वामहाराजःसमागत्यमखालयात् विनिर्गच्छन्नृपाःसर्वेस्व
स्वायज्ञंस्वराष्ट्रकं राजभिःससमागत्यदुर्योधनगजाह्वयम् आनीयपांडुपुत्राणांधर्मभीमार्जुनान्वरान् द्यूतारंभंचाकुरुत-
स्वराज्यंप्राप्नुयात्ततः द्यूतेनवजिताःसर्वेपांडवावीतकल्मषाः ततोरण्यांतरंगत्वावर्ततेवनचारिणः ततो[illegible]
भिःसहपांडवः सूतउवाच अरण्येवर्तमानास्तेपांडवादुःखकर्शिताः कृष्णंदृष्ट्वामहात्मानंप्रणिपत्ययथाक्रमम् युधिष्ठि
रउवाच अहंदुःखीहसंजातोभ्रातृभिःपरिवारितः कथंमुक्तिर्भवेदस्माकमनंताद्दुःखसागरात् कंदेवंपूजयिष्यामिराज्यंप्रा
स्याम्यनुत्तमं अथवाकिंव्रतंकृत्वात्वत्प्रसादाद्भवेद्धितं श्रीकृष्णउवाच अनंतव्रतमस्त्येकंतिथावस्यामनुत्तमं सर्वपापहरंनृ-

णार्थ्यांचैवयुधिष्ठिर शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेभवेत् तस्यानुष्ठानमात्रेणसर्वंपापंव्यपोहति युधिष्ठिरउ० कृष्णकोयमनंतेति
प्रोच्यतेयस्त्वयाविभो किंशेषनागआहोस्विदनंतस्तक्षकःस्मृतः परमात्माथवानंतउताहोब्रह्मगीयते कएषोनंतसंज्ञोवैतथ्यंमेब्रूहि
केशव कृष्णउवा० अनंतइत्यहंपार्थममरूपंनिबोधतत् आदित्यादिग्रहात्मासौयःकालइतिपठ्यते कलाकाष्ठमुहूर्तादिदिवारा-
त्रिशरीरवान् पक्षमासर्तुऋक्षाणियुगकालव्यवस्थया योयंकालोमयाख्यातोसोनंतइतिकीर्त्यते सोहंकृष्णावतीर्णोत्रभूभारोत्तार
णायच दानवानांवधार्थायवसुदेवकुलोद्भवं मांविद्धिसततंपार्थसाधूनांपालनायच अनादिमध्यनिधनंकृष्णंविष्णुंहरिंशिवम् वै
कुंठंभास्करंसोमंसर्वव्यापिनमीश्वरं विश्वरूपंमहाबाहोयोगिध्येयमनुत्तमं विश्वरूपमनंतंचयस्मिन्निंद्राश्चतुर्दश वसवोद्वादशादि
त्यारुद्राएकादशस्मृताः सप्तर्षयःसमुद्राश्चपर्वताःसरितोद्रुमाः नक्षत्राणिदिशाभूमिःपातालंभूर्भुवादिकं माकुरुष्वात्रसंदेहंसोहंपा
र्थनसंशयः युधिष्ठिरउवाच अनंतव्रतमाहात्म्यविधिंवदविदांवर किंपुण्यंकिंफलंचास्यअनुष्ठानवतांनृणां केनचादौपुराचीर्णंमर्त्यके
नप्रकाशितं एवंसविस्तरंसर्वंब्रूह्यनंतव्रतंमम कृष्णउवाच आसीन्नृपुराकृतयुगेसुमंतुर्नामवैद्विजः वसिष्ठगोत्रसंभूतःसुरूपां
चभृगोःसुतां दीक्षानाम्नींचोपयेमेवेदोक्तविधिनानृप तस्याःकालेनसंजातादुहितानंतलक्षणा शीलानाम्नीसुशीलासावर्धतेपि
तृवेश्मनि मातावतस्याःकालेनज्वरदाहेनपीडिता विनष्टासानदीतोयेतयोस्स्वर्गंपतिव्रता सुमंतुस्तुततोन्यांवैधर्मपुंसःसुतांपुनः
उपयेमेविधानेनदुःशीलांनामनामतः दुःशीलाकर्कशाचंडीनित्यंकलहकारिणी साचशीलापितुर्गेहेगृहार्चनपरायणा कुड्यस्तंभव
हिर्द्वारदेहलीतोरणादिषु वर्णकैश्चित्रमकरोन्नीलपीतसितासितैः स्वस्तिकैःशंखपद्मैश्चअर्चयंतीपुनःपुनः ततःकालेबहुगतेको
मारवशवर्तिनी एवंसावर्धतेशीलापितृवेश्मनिमंगला तांदृष्ट्वाचिंतयामासवरानतुगुणान्भुवि कस्मैदेयामयाकन्याविचार्येति-
सुदुःखितः एतस्मिन्नेवकालेतुमुनिर्वेदविदांवरः कन्यार्थीचागतःश्रीमान्कौंडिण्योमुनिसत्तमः उवाचरूपसंपन्नांत्वदीयां
तनयांवृणे पितादादौद्विजेंद्रायकौंडिण्यायशुभेदिने गृह्योक्तविधिनापार्थविवाहमकरोत्तदा मंगलाचारनिर्घोषंतत्रकुर्वंतियोषि

नः ब्राह्मणाःस्वस्तिवचनंजयघोषंचबंदिनः निर्वर्त्योद्वाहिकंसर्वंप्रोक्तवान्कर्कशांद्विजः सुमंतुरुवाच किंचिद्द्व्यादिकंदेयंजामातुः
परितोषकं तच्छ्रुत्वाकर्कशाकुद्धाप्रोत्सार्यगृहमंडनं पेटकेस्कस्थिरंबध्वास्वगृहंगम्यतामिति उवाचवित्तंनैवास्तिगृहेपश्ययदि
स्थितं तच्छ्रुत्वाविमनाःपार्थसंयनात्मामुनिस्तदा भोज्यावशिष्टचूर्णेनपाथेयंचचकारसा कौंडिण्योपिविवाह्येनापथिगच्छ
न्शनैःशनैः शीलांस्कमंतोरादायनवोढागोरथेनहि ददर्शायमुनांपुण्यांतामुत्तीर्यनटेरथं संस्थाप्यावश्यकंकर्तुंगतःशिष्यान्नियुज्य
वै मध्यान्हेभोज्यवेलायांसमुत्तीर्यसारत्तटे ददर्शशीलासास्त्रीणांसमूहंरक्तवाससां चतुर्दश्यामर्चयंतंभक्त्यादेवंजनार्दनं·उपगम्य-
शनैःशीलापप्रच्छस्त्रीकदंबकं आर्याःकिमेतन्मेब्रूतकिंनामव्रतमीदृशं ताऊचुर्योषितस्तांतुशीलांशीलविभूषणां·अनंतव्रत-
मेतद्धिव्रतेनंनंतस्तुपूज्यते साब्रवीदहमप्येतत्करिष्येव्रतमुत्तमं विधानंकीदृशंतत्रकिंदानंकोत्रपूज्यते स्त्रियऊचुः शीलेसदन्नप्रस्थ
स्यपुन्नाम्नासंस्कृतस्यच अर्धंविभायदातव्यमर्धमात्मनियोजयेत् शक्त्याचदक्षिणांदद्याद्वित्तशाठ्यविवर्जितः कर्तव्यंयत्सरित्तीरक-
थांश्रुत्वाहरेरिमां शेषंकुशमयंकृत्वावंशपात्रेनिधायच स्नात्वानंतंसमभ्यर्च्यमंडलेदीपगंधकैः पुष्पैर्धूपैश्चनैवेद्यैर्नानापक्वान्नसंयुतैः त
स्याग्रतोदृढंसूत्रंकुंकुमाक्तंस्कदोरकं चतुर्दशग्रंथियुतंवामेकरतलेन्यसेत् अनंतसंसारमहासमुद्रमग्नंसमभ्युद्धरवासुदेव अनंतरूपेवि-
नियोजयस्वह्यनंतसूत्रायनमोनमस्ते अनंतंचकरेबध्वाभोक्तव्यंस्वस्थमानसैः ध्यात्वानारायणंदेवमनंतंविश्वरूपिणं भुक्त्वाचांतेव्र-
जेद्वेश्मभद्रेप्रोक्तंव्रतंतव कृष्णउवाच एवमाकर्ण्यराजेंद्रप्रहृष्टेनांतरात्मना साप्यचक्रेव्रतंशीलाकरेबध्वास्कदोरकं चतुर्दशग्रंथि
युतंवामबाहौयथोदितं पाथेयमर्द्धंविभायदत्वाभुक्त्वास्वयंततः पुनर्जगामसंतुष्टागोरथेनस्वकंगृहं भर्त्रासहैवशनैकैःप्रत्ययस्तत्
क्षणादभूत् तेनानंतव्रतेनास्यबभौगोधनसंकुलं गृहाश्रमंश्रियाजुष्टंधनधान्यसमन्वितं आकुलंव्याकुलंरम्यंसर्वदातिथिपूजनैः
सापिमाणिक्यकांचीभिर्मुक्ताहारैर्विभूषिता देवांगनेवसंपन्नासावित्रीप्रतिमाभवत् विचचारगृहेभर्तुःसमीपेस्कस्वरूपिणी
कदाचिदुपविष्टाया दृष्टोबद्धःस्कदोरकः शीलायाहस्तमूलेतुभर्त्रातस्याद्विजन्मना किमिदंदोरकंशीलेममवश्यायकल्पितं धृतंसु

दोरकंत्वेनाकिमर्थंब्रूहितत्त्वतः शीलोवा॰ यस्यप्रसादात्सकलधनधान्यादिसंपदः लभ्यंतेमानवैश्चापिसोनंतोयंमयाधृतः शीलायास्तद्वचःश्रुत्वाभर्त्रा
तेनाद्विजन्मना श्रीमदांधेनकौरव्यसाक्षेपंत्रोटितस्तदा कोनंतइतिमूढेनजल्पतापापकारिणा क्षिप्तोज्वालाकुलेवन्हौहाहाकृत्वाप्रधावती
शीलागृहीत्वातत्सूत्रंक्षीरमध्येसमाक्षिपत् तेनकर्मविपाकेनसाश्रीस्तस्यक्षयंगता गोधनंतस्करैर्नीतंगृहंदग्धंधनंगतं यद्यथैवागतंगेहे
तत्तथैवपुनर्गतं स्वजनैःकलहोनित्यंबंधुभिस्ताडनंतथा अनंताक्षेपदोषेणदारिद्र्यंपतितंगृहे नकश्चिद्वदतेलोकस्तेनसार्द्धंयुधिष्ठिर शा
रीरेणातिसंतप्तोमनसाप्यतिदुःखितः निर्वेदंपरमंप्राप्तःकौंडिण्यःप्राहतांप्रियां कौंडिण्यउवा॰ शीलेममेदमुत्पन्नंसहसाशोककारणं
येनातिदुःखितोस्माकंजातःसर्वधनक्षयः स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते शरीरेनित्यसंतापःखेदश्चेतसिदारुणः जानासिदुर्नयः
कोत्रकिंकृत्वासुकृतंभवेत् शीलोवाच भर्त्युवाचाथतंशीलासुशीलाशीलमंडना प्रायोनंतकृताक्षेपपापसंभवजंफलं भविष्यतिम
हाभागतदर्थंयत्नमाचर एवमुक्तःसविप्रर्षिर्जगाममनसाहरिम् निर्वेदान्निर्जगामाथकौंडिण्यःप्रगतोवनं तपसेकृतसंकल्पोवायुभक्षो
द्विजोत्तमः मनसाध्यायमानस्तुक्वद्रक्ष्यामिचतंविभुं यस्यप्रसादात्संजातमाक्षेपान्निधनंगतं धनादिकंममातीवस्फुरद्दुःखप्रदायकं ए
वंसंचिंतयन्सोथबभ्रामगहनेवने तत्रापश्यन्महाचूतंपुष्पितंफलितंद्रुमं वर्जितंपक्षिसंघातैःकीटकोटीसमावृतं तमपृच्छद्द्विजोनं
तःक्वचिद्दृष्टोमहाद्रुम ब्रूहिसौम्यममातीवदुःखंचेतसिवर्तते सोब्रवीद्द्विजनानंतोक्वचिद्दृष्टोमयाद्विज एवंनिराकृतस्तेनसंजगामाथदुःखितः
क्वद्रक्ष्यामीतिगच्छन्सगांददर्शसवत्सकां वनमध्यप्रधावंतीमितश्चेतश्चपांडव सोब्रवीद्धेनुकेब्रूहियद्यनंतस्त्वयेक्षितः गौस्तमथोवाच
गौरुवाचाथकौंडिण्यंनानंतंवेद्म्यहंद्विज ततोव्रजन्ददर्शाग्रेवृषभंशाद्वलेस्थितं दृष्ट्वापप्रच्छगोस्वामिन्ननंतोवीक्षितस्त्वया वृषभस्तमुवा
चेदंनानंतोवीक्षितोमया ततोव्रजन्ददर्शाग्रेरम्यंपुष्करिणीद्वयं अन्योन्यजलकल्लोलैर्वीचीपर्यंतसंगतं छन्नंकमलकल्हारैःकुमुदोत्प
लमंडितं सेवितंभ्रमरैर्हंसैश्चक्रकारंडकेश्चकैः तेप्रपृच्छद्द्विजोनंतस्ताभ्यांनोपलक्षितः ऊचतुस्तेपुष्करिण्यौनानंतोवीक्षितोद्विज ततोव्रजन्ददर्शाग्रेगर्दभंकुंज
रंतथा तावपृच्छद्द्विजोनंतोभवद्भ्यांनोपलक्षितः एवंसपृच्छन्नाशास्तत्रैवनिषसादह कौंडिण्योविह्वलीभूतोनिराशोजीवितेनृप दीर्घमुष्णंचानःश्वस्य

पपातभुविभारत प्राप्यसंज्ञामनंतेतिजल्पन्नुत्थायसद्विजः नूनंत्यक्ष्याम्यहंप्राणानितिसंकल्प्यचेतसि यावद्बुद्धिंधनंवृक्षेचक्रेतावद्युधिष्ठिर कृपयानंतदे
वोपिप्रत्यक्षःसमजायत वृद्धब्राह्मणरूपेणइतएहीत्युवाचतं प्रगृह्यदक्षिणेपाणौगुहायांप्रविवेशतं स्वांपुरींदर्शयामासदिव्यनारीनरैर्युतां यस्यांनिविष्टमा
त्मानंदिव्यसिंहासनेशुभे पार्श्वस्थशंखचक्राब्जगदागरुडशोभितं दर्शयामासविप्रायविश्वरूपमनंतकं विभूतिभेदैश्चानंतैरनंतममितौजसं कौस्तुभे
नविराजंतंवनमालाविभूषितं नंदृष्ट्वानादृशंरूपमनंतमपराजितं वंद्यमानोजगादोच्चैर्जयशब्दपुरःसरं पापोहंपापकर्माहंपापात्मापापसंभवः त्रा
हिमांपुंडरीकाक्षसर्वपापहरोभव तच्छ्रुत्वानंतदेवेशःप्राहस्निग्धयागिरा माभैस्त्वंब्रूहिविप्रेंद्रयत्तेमनसिवर्तते कौंडिण्यउ० मयाभूत्यावलिप्तेन
त्रोटितोनंतदोरकः तेनपापविपाकेनभूतिर्मेप्रलयंगता स्वजनैःकलहोगेहेनकश्चिन्मांप्रभाषते निर्वेदाद्भ्रमतेरण्येतवदर्शनकांक्षया कृपयादेवदेवेश
त्वयात्मासंप्रदर्शितः तस्यपापस्यमेशांतिंकारुण्याद्वक्तुमर्हसि श्रीकृष्णउ० तच्छ्रुत्वानंतदेवेशउवाचद्विजसत्तमं भक्त्यासंतोषितोदेवःकिंनदद्या
द्युधिष्ठिर अनंतउवा० स्वगृहंगच्छकौंडिण्यमाविलंबंकुरुद्विज चरानंतव्रतंभक्त्यानववर्षाणिपंचच सर्वपापविशुद्धात्माप्राप्स्यसेसिद्धिमुत्तमां
पुत्रपौत्रान्समुत्पाद्यभुक्त्वाभोगान्यथेप्सितान् अंतेमत्स्मरणंप्राप्यमामुपेष्यस्यसंशयं अन्यच्चतेवरंदद्मिसर्वलोकोपकारकं इदमाख्यान
कवरंशीलानंतव्रतादिकं करिष्यंतिनरायस्तुकुर्वन्तुव्रतमीदृशम् सोचिरात्पापनिर्मुक्तःप्राप्नोतिपरमांगतिं गच्छविप्रगृहंशीघ्रंयथायेनो
गतोह्यसि कौंडिण्यउवा० स्वामिन्पृच्छामितेब्रूहिकिंचित्तत्कौतूहलंमया अरण्येभ्रमनादृष्टंतद्वदस्वजगद्गुरो यश्चूतवृक्षःकस्त
त्रकागौःकोवृषभस्तथा कमलोत्पलकल्हारैःशोभितंसुमनोहरं मयादृष्टंमहारण्येकिंतत्पुष्करिणीद्वयं कःखरःकुंजरःकोसौको
सौब्राह्मणोद्विजोत्तमः अनंतउवाच सचूतवृक्षोविप्रोसौविद्यावेदविशारदः विद्यानदत्ताशिष्येभ्यस्तेनासौतरुतांगतः यागौर्वसुध-
राह्यष्टपूर्वंसाबीजहारिणी वृषोधर्मस्त्वयादृष्टःशाद्वलंसत्यमास्थितः धर्माधर्मव्यवस्थानंतच्चपुष्करिणीद्वयं ब्राह्मण्यौकेचिदप्या-
स्तांभगिन्यौतेपरस्परं धर्माधर्मादियत्किंचित्तन्निवेदयतोमिथः विप्रायवेदविदुषेनदत्तंदुर्बलायवै भिक्षादत्तानचार्थिभ्यस्तेनपापे
नकर्मणा वीचीकल्लोलमालाभिर्गच्छतस्तेपरस्परम् खरःक्रोधस्त्वयादृष्टःकुंजरोमदउच्यते ब्राह्मणोसावनंतोहंगुहासंसारगह्वरं

इत्युक्त्वा देवदेवेशस्तत्रैवान्तरधीयत स्वममायनन्तोदस्वातातः स्वगृहमागतः कृत्वानंतव्रतं सम्यक् नववर्षाणि पंच च भुक्त्वा सर्वमनंतेन यथोक्तं पांडु
नंदन अंते त्वस्मरणं प्राप्य गतोनंतपुरीं द्विजः तथा त्वमपि राजर्षे कथां श्रुत्वा व्रतं कुरु प्राप्स्यसे चिंतितं सर्वमनंतस्य वचो यथा यद्वच्चतुर्दशो वर्षे
फलं प्राप्तं द्विजन्मना वर्षेकेन तदाप्नोति कृत्वोपाख्यानकं व्रतं एतत्ते कथितं भूप व्रतानामुत्तमं व्रतं यच्छ्रुत्वा सर्वपापेभ्यो मुच्यते नात्र संशयः ये
पि शृण्वंति सततं पठ्यमानं पठंति ये तेपि पापविनिर्मुक्ताः प्राप्स्यंति चक्रिणः पदं संसारगह्वरगुहासु सुखं विहर्तुं वांछंति ये कुरुकुलोद्भव शुद्धस
त्त्वाः संपूज्य च त्रिभुवनेशमनंतदेवं बध्नंति दक्षिणकरे वरदोरकं ते इति अनंतव्रतकथा समाप्ता अथानंतव्रतोद्यापनं. युधिष्ठिर उ
त्वत्प्रसादात्कृतं कृष्ण मयानंतव्रतं शुभं इदानीं ब्रूहि मे नंतव्रतोद्यापनमुत्तमं कृष्ण उवाच शृणु पांडव वक्ष्यामि व्रतोद्यापनमुत्तमं कृतेन स
फलं पार्थ व्रतं सर्वं नान्निश्चितं आदौ मध्ये तथा चांते व्रतस्योद्यापनं भवेत् यदि विघ्नस्य चित्तस्य संपत्तिः शुभकालता तदा चोद्यापनं कुर्याच्छुभ
लग्ने शुभे दिने चतुर्दशसु वर्षेषु मुख्यमुद्यापनं व्रतं कार्य शुद्धि स्त्रयोदश्यां ब्रह्मचारी व्रती ततः एकभक्तेन नियमं कृत्वा भक्तिसमन्वितः त
तः प्रातश्चतुर्दश्यां स्नात्वा नद्यां शुभे शुचिः संकल्पयेद्व्रतं कांतदेशकालावनुस्मरन् ततो नद्यां देवखाते तीर्थे प्रस्रवणे तथा सर्वौषधीः सर्वगं
धैस्तिलकल्कैश्चामलैः वेदोक्तविधिना स्नात्वा संतर्प्य पितृदेवताः ततो गृहं समागत्य वेदीं कृत्वा सुशोभनां तन्मध्ये तूपविश्याथ देशकालौ
स्मरेत्ततः गणेशं पूजयित्वाथ पुण्याहं वाचयेद्द्विजैः आचार्यं च सपत्नीकं वरयेद्वेदपारगं ब्राह्मणं च सदस्यं च ऋत्विजश्च चतुर्दश सर्वान्व
स्त्रैरलंकारैर्जलपात्रादिनार्चयेत् तत्रालिखेन्मंडलकं पंचवर्णैः सुशोभनैः विरच्य सर्वतोभद्रं मंडपांतस्तु मध्यगं ब्रह्मादिदेवतास्तस्मिन्नावा
ह्यापि च पूजयेत् तन्मध्ये पंकजे धान्यं यथाशक्ति क्षिपेत्ततः सौवर्णं राजतं वापि ताम्रजं वापि मृन्मयं तस्योपरि न्यसेत्कुंभमव्रणं सुनवं दृढं त
स्मिन् जलं गंधपुष्पफलपल्लवमृत्तिकाः क्षिप्त्वा रत्नं हिरण्यं च वस्त्रयुग्मेन वेष्टयेत् सौवर्णं राजतं ताम्रं मृन्मयं वंशजं तथा पात्रं तदुपरि न्यस्य
पट्टकूलादिकं शुभं लिखेदष्टदलं तत्र चंदनेन सुगंधिना पद्मं विरच्य तन्मध्ये नंतमूर्तिं विधाय च पलेन वा तदर्धेन माषकेणापि वा कृतां सौ
वर्णीं रमया युक्तां शंखचक्रगदाब्जकां आवाहनाद्युपचारैः पूजयेत्सुसमाहितः पंचामृतेन स्नपयेत्ततश्च वसनद्वयं पट्टकूलादिकं पीतम्

पंयित्वार्चयेद्व्रती पुष्पधूपैस्तथादीपैर्नैवेद्यैश्चप्रपूजयेत् पुनः पुष्पाणिसंगृह्यपूजयेन्नामभिःक्रमात् अनंतायनमःपादौगुल्फौसंकर्षणायच
कालात्मनेजानुनीचजघनेविश्वरूपिणे कटीवैविश्वरूपायमेढ्रंवैविश्वसाक्षिणे नाभिंतुपद्मनाभायहृदयंपरमात्मने कंठंश्रीकंठनाथायबाहू
सर्वास्त्रधारिणे मुखंतुवाचस्पतयेचक्षुषीकपिलायच ललाटेकेशवायेतिशिरःसर्वात्मनेतथा नमःपादौपूजयामीत्येवमादिप्रपूजयेत् ए
वंसंपूज्यविधिनारात्रौजागरणंचरेत् गीतवादित्रनृत्यादिपुराणश्रवणान्वितं प्रतिमांचप्रकुर्वीतपूजांगंधादिनाहरेः नानाफलानिभक्ष्या-
णिखाद्यान्यर्चनिवेदयेत् ततःप्रभातसमयेस्नात्वाचार्यादिभिःसह अनंतंपूजयेत्प्राग्वज्जुहुयात्पश्चिमेततः कुंडेवास्थंडिलेकुर्यादग्नि
स्थापनपूर्वकं आज्यभागांतमाचार्यःस्वगृह्योक्तविधानतः ततोऽश्वत्थसमिद्भिस्तदभावेन्याभिरेवच दुग्धमध्वाज्यदधिभिस्तिलैर्वापाय
सेनच आज्येनचप्रतिद्रव्यमष्टोत्तरसहस्रकं अष्टोत्तरशतंवाष्टाविंशतिंजुहुयात्क्रमात् अतोदेवेतिमंत्रेणस्त्रीणांवैनाममंत्रतः प्रणवा-
दिचतुर्थ्यंतनमोंतानंतनामतः नाममंत्रैश्चजुहुयाच्चतुर्दशभिरादरात् पुरुषसूक्तेनजुहुयादतोदेवेतिवापुनः शतमष्टोत्तरंयावत्प्रत्येकं
जुहुयाच्चरुः चरुहोमस्तथाकार्योमंत्रैरेतैर्विचक्षणः एतैर्वक्ष्यमाणमंत्रैर्जुहुयाच्चरुणातथा ॐ अनंतायस्वाहा ॐ कालायस्वा० ॐ
अहोरात्राय० ॐ अर्धमासाय० ॐ मासाय० ॐ ऋतुभ्य० ॐ परिवत्सराय० ॐ कपिलाय० ॐ शेषाय० ॐ कालात्मने० ॐ उग्रसेन० ॐ
काष्ठाय० ॐ मुहूर्ताय० ॐ शेषाय० ॐ भूरग्नयेचपृथिव्यैचमहतेचस्वाहा ॐ भुवोवायवेचांतरिक्षायचमहतेचस्वाहा ॐ स्वरादि
त्यायचदिवेचमहतेचस्वाहा ॐ भूर्भुवस्स्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्यश्चमहतेचस्वाहा आज्यतिलैःस्विष्टकृतंप्रजापतिंच्यो-
जुहुयात् समिदादिभिरेवंचप्रत्येकंजुहुयात्क्रमात् एवंस्विष्टकृतादीनिपूर्णपात्रांतमाचरेत् जपेत्पुरुषसूक्तंतुस्मृत्वानंतंस्वरोत्तमं पू
र्णाहुतिंचजुहुयाद्धोमांतेविश्वमित्यृचा होमशेषंसमाप्याथकृत्वात्र्यायुषमेवच ततोवैलोकपालांश्चग्रहान्पूज्ययथाक्रमं गीतवादित्रनिनदे
र्दत्वापूर्णाहुतिंप्रति केचिन्मतेरात्रिहोमः पूजयित्वाहरिंदेवमाचार्यंपूजयेत्ततः परिपूज्यसपत्नीकंवस्त्रालंकारभूषणैः वस्त्रालं
कारभूषाद्यैस्ततोधेनुंसमर्चयेत् पयस्विनींसुशीलांचवस्त्रालंकारभूषितां स्वर्णशृंगींरौप्यखुरींताम्रपृष्ठींसुशोभनां कांस्यदोहांरत्नपु-

कपिलांग्ढां सवत्सकां सुरभिर्वैष्णवीमाता नित्यं विष्णुपदेस्थिता ग्रासं गृहाण मया दत्तं गोमातस्त्रातुमर्हसि गवामंगेषु तिष्ठंति भुवनानि चतुर्दश
यस्मात्तस्माच्छुभं मे स्यादिहलोके परत्र च गावो मे अग्रतः संतु गावो मे संतु पृष्ठतः गावो मे हृदये संतु गवां मध्ये वसाम्यहं मंत्रेणानेन संपूज्य-
आचार्याय निवेदयेत् गोदानस्य विधानार्थं दद्यात्स्वर्णं यथाविधि अनंतं परिवारं च ब्राह्मणाय निवेदयेत् ऋत्विजः पूजयित्वाथ तेभ्यो द-
द्याच्च दक्षिणां चतुर्दशैव कुंभांश्च पक्वान्नपरिपूरितान् वस्त्रोपवीतं दद्याच्च अनंतः प्रीयतामिति आचार्यादीन् भोजयित्वा पूर्णतां वाचयेत्ततः
अथानंतं विसृज्यापि गृह्णीयादाशिषस्ततः भक्तियुक्तो नमस्कृत्य ब्राह्मणानां क्षमापयेत् ततो हृष्टो बंधुयुतो भुंजीयात्सुसमाहितः ए
वं कृते नंतफलदाताऽनंतो भवेन्नृणां इति श्रीभविष्योत्तरपुराणे अनंतव्रतोद्यापनं संपूर्णं अथ नष्टदोरकविधिः युधिष्ठिर उवाच
अनंतव्रतमाहात्म्यं कृत्स्नं कृष्ण त्वयोदितं भगवन् दोररूपेण भाग्यदोऽसि महात्मना दोरं प्रमादतो नष्टं यदि स्याद्दैवतो जनैः तदा किं करणी
यं स्याद्व्रतं त्रैलोक्यपावनं कृष्ण उवाच दोरे नष्टे महादोषः प्रभवेद्व्रतिनामिह तस्मात्तद्दोषनाशार्थं प्रायश्चित्तं विधीयते गुरुं प्रदक्षि
णीकृत्य नमस्कृत्य समाहितः विज्ञाप्य दोरनाशं च कृत्वा दोरं व्रती ततः हव्यवाहं प्रतिष्ठाप्य तस्मिन् ध्यात्वा हरिं परं आज्यमग्नावधिश्रि
त्य दद्याद्द्विप्राय चासनम् अष्टोत्तरशतं हुत्वा मूलमंत्रेण वैष्णव नाममंत्रेण तत्र हुत्वा द्वादशाक्षरसंयुतं केशवादि सहस्रं तु त्वा प्रायश्चि-
त्तं तु शक्तितः पूर्णाहुतिं ततो हुत्वा होमशेषं समापयेत् व्रतं च्छिद्रं जपच्छिद्रं यच्छिद्रं व्रतकर्मणि वचनाद्भूमिदेवानां सर्वं संपूर्णतां व्रजेत्
मंत्रहीनं क्रियाहीनं भक्तिहीनं जनार्दन यत्पूजितं मया देव परिपूर्णं तदस्तु मे आचार्यपूजनं कार्यं दक्षिणाद्यैर्नृपोत्तम एवं शांतिविधिं
कृत्वा पूर्ववद्व्रतमाचरेत् तस्मात्सर्वप्रयत्नेन प्रायश्चित्तं चरेत्सुधीः इति भविष्योत्तरपु० नष्टदोरकविधिः स० अथ भाद्रपदशुक्ल
चतुर्दश्यां कार्तिक्यां वा माघ्यां वा वैशाख्यां वा कदलीव्रतं हेमाद्रौ भविष्योत्तरे सा पूर्वाह्णव्यापिनी ग्राह्या अथ रंभारोपणविधिः
रंभावृक्षं रोपयित्वा स्वहस्तेन सुभूमिकां वर्षमेकं तु संपूज्य उदकुंभेन सिंचयेत् यावत्प्रसवपर्यंतं पूजयेच्च यथाविधि पूर्वस्यां तु यथा स
म्यगुत्तरस्यां तथैव च दक्षिणे पश्चिमे हानी रंभा प्रसवलक्षणं अथ कदलीव्रतविधिः यदा वित्तस्य चित्तस्य संपत्तिः शुभकालता त

दाचोद्यापनंकुर्याच्छुभलग्नेशुभेदिने कायशुद्धिस्त्रयोदश्यांब्रह्मचारीव्रतीकृती एकभक्तेननियमंकृत्वाभक्तिसमन्वितः ततःप्रातश्चतुर्दश्यं
स्नात्वातीर्थेशुभेशुचिः उपवासंतुसंकल्प्यदेशकालावनुस्मरन् ततोगृहंसमागत्यवेदींकृत्वासुशोभनां तन्मध्येउपविश्याथदेशकालौस्म
रेत्ततः गणेशंपूजयित्वाथपुण्याहंवाचयेद्द्विजैः आचार्यंचसपत्नीकंवरयेद्वेदपारगं गोचर्ममात्रंसंलिप्यसर्वतोमंडलंशुभं लिखेत्सम्यक्
तथावर्णैर्नीलपीतैःसितासितैः विरच्यलिंगतोभद्रंमंडपस्यतुमध्यगं ब्रह्माद्यादेवतास्तत्रस्थापयित्वाप्रपूजयेत् अथवास्वस्तिकंकुर्यात्
पद्ममष्टदलंतुवा ततःसाग्रांसुपर्णांतुसम्यग्वृत्तांसुशोभनां समूलांकदलींस्थाप्यपूजयेत्ताथयथाविधि उत्तमोदकमानीयसेचयेत्तांस-
माहितः यथारंभेविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्द्धयमांदेविसेचये पार्वतीप्रिये इतिसेचनमंत्रः तन्मध्येपंचकंधान्यंच
प्राक्षिक्षिपेत्ततः सौवर्णंराजतंवापिताम्रजंवापिमृन्मयं कुंभंन्यसेत्तदुपरिअव्रणंसुनवंदृढं तस्मिन्जलंगंधपुष्पंफलपल्लवमृत्तिकाः
क्षिप्त्वारत्नंहिरण्यंचवस्त्रयुग्मेनवेष्टयेत् सौवर्णंराजतंताम्रंमृन्मयंवंशजंतथा पात्रंतदुपरिन्यस्यपट्टकूलादिकंशुभं लिखेदष्टदलं
तत्रचंदनेनसुगंधिना पलेनवातदर्धेनमाषकेणापिवाकृतां उमामहेश्वरौतत्रमूलमंत्रेणपूजयेत् इतिकदलीव्रतविधिः अथउमा
महेश्वरसहितकदलीपूजनं मासपक्षाद्युल्लिख्यममपापनिर्मुक्तपुत्तमसिद्धिपुत्रपौत्रावैधव्यसितभोगधनधान्यप्राप्तयेउमामहेश्वर
सहितकदलीपूजनंकरिष्ये तथाचकलशार्चनं करिष्ये कदल्यागच्छहेदेविसौभाग्यफलदायिनि रूपंदेहिजयंदेहियशोदेहिसुभि
क्षितं आगच्छवरदेदेविशंकरेणमहेश्वरि करिष्यमाणांपूजांमेगृहाणानुग्रहंकुरु आवाहनं कार्तस्वरमयंदिव्यंनानामणिगणान्वितं अ
धितिष्टमहादेविशिवेनसहपार्वति आसनं दूर्वाक्षतादिभिर्युक्तंस्वर्णपात्रस्थितंशुभं पाद्यार्थंकल्पितंभक्त्यागृहाणपरमेश्वरि पाद्यं
अर्घ्यंपात्रस्थितंतोयंफलपुष्पसमन्वितं अर्घ्यंगृहाणमेदेविभक्त्यादत्तंशिवप्रिये अर्घ्यं कर्पूरोशीरसुरभिशीतलंविमलंजलं गंगाया
स्तुसमानीतंगृहाणाचमनीयकं आचम० गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं स्नानार्थंतुमयादेविगृहाणेदंसुरेश्वरि स्नानं यथा-
रंभेविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्द्धयमांदेविसेचनात्पार्वतीप्रिये सेचनं वस्त्रंशुभमिदंदिव्यंकुंकुमाक्तंसुशोभनं गृहाणा

च्छादनं देवि तथाच्छादयमां सदा वस्त्रं उपवस्त्रं कंचुकीमुपवस्त्रं च नानारत्नैः समन्वितं गृहाण त्वं मया दत्तं पार्वत्यै च नमो-
स्तु ते कंचुकीं उपवस्त्रं गंगादिसर्वतीर्थेभ्यो मयानीतं सुनिर्मलं तोयमेतत्सुखस्पर्शं गृहाणाचमनीयकं. आचमनं श्रीखंडं
चंदनं दिव्यं गंधाढ्यं सुमनोहरं विलेपनं गृहाणेदं रुद्राणीप्रियवल्लभे चंदनं अक्षताश्च सुर० हरिद्राकुंकुमं सौभाग्यद्रव्याणि मा
लतीचंपकादीनि शतपत्रादिकानि च सुगंधीनि गृहाण त्वं पूजार्थं सुमनांसि च पुष्पाणि अगरुं गुग्गुलं धूपं दशांगं सुमनोहरम्
गृहाणेमं तृप्तिकरं घ्राणस्य दयितं परं धूपं चक्षुर्दं सर्वलो० दीपं नानापक्वान्नसंयुक्तं० नैवेद्यं पूगीफलं महत्० तांबूलं इदं फ
लमिति फलं हिरण्यगर्भेति दक्षि० नीराजयामि देवेशि भक्तानां भयनाशिनि देहि मे सर्वसौभाग्यं पार्वत्यास हितेनघे ॥ नीराजनं या
निकानि च पापानि० प्रदक्षिणां आश्रये देवपत्नीनां पूजिते च श्रियास्त्वयं सौभाग्यारोग्यमायुश्च देहि रंभे नमोस्तु ते नमस्कारं त्वमिं
द्राणी प्रिया नित्यं पार्वत्याश्चातिवल्लभा सतीनां कामदा पूज्या कामान्मे परिपूरय प्रार्थना इति पूजनं अथ कथा युधिष्ठिर उवाच कृ
ष्ण कृष्ण महाबाहो सर्वविद्याविशारद अनाथनाथ विश्वात्मन् दीनदैन्यनिकृंतन त्वमस्माकं परो बंधुस्त्वमस्माकं परं सखा त्वयाभि
रक्षितानित्यं विचरामोत्र निर्भयाः किंचित्पृच्छामि देवेश कृपां कुरु वदस्व मे यत्कृत्वा सर्वधर्मेषु कृते यस्मिन् महत्फलं सौभाग्यारोग्य
दं पुण्यं धनधान्यविवर्धनं अन्नाच्छादनपुत्रादिवर्धनं श्रीनिकेतनं तन्ममाचक्ष्व भगवन् लोकानामुपकारकं श्रीकृष्ण उवा०
शृणु राजन् प्रवक्ष्यामि व्रतानामुत्तमं व्रतं यत्कृत्वा सर्वदुःखेभ्यो नारी मुच्येत संकटात् वस्त्रान्नपानविच्छित्तिर्न भवेत्तु कदाचन पु
रा मामेत्य वै कांता रुक्मिणी प्राणवल्लभा प्रणिपत्याब्रवीद्दीना सर्वकामाश्रयं प्रभा सौभाग्यं मे कथं देव भवेज्जन्मनि जन्मनि सप
त्नीनां श्रियं वीक्ष्य स्पृहा मे जायते प्रभो इति प्रियाया वचनं श्रुत्वाहं तां समब्रुवं रंभाव्रतं कुरुष्वाशु सौभाग्यावाप्तये शुभं कृते यस्मिन्
व्रते देवि परं सौभाग्यमाप्स्यसि इति श्रुत्वा वचो देवि रुक्मिणी मामभाषत रंभाव्रते भवेत्किं भो को विधिः किं च पूजनं केन चादौ पु-
रा चीर्णं मर्त्ये केन प्रकाशितं रुक्मिण्या भाषणं श्रुत्वा पुनरेवाहमब्रुवम् रंभाव्रतविधिं वक्ष्ये शृणु देवि यथोदितं गोचर्ममात्रं संलिप्य

सर्वतोलिंगभद्रकं लिखेत्सम्यक्पंचवर्णैर्नीलपीतैःसितासितैः ब्रह्माद्यादेवताःसर्वाःस्थापयित्वाप्रपूजयेत् कलशोपरिसंस्थाप्यवैष्णवे पटलेशुभे उमामहेश्वरौतत्रमूलमंत्रेणपूजयेत् अथवास्वस्तिकंकृत्वापद्ममष्टदलंतुवै ततःसाग्रांसपर्णांचसम्यग्वृत्तांसुशोभनां समूलांकदलींस्थाप्यपूजयेत्तांयथाविधि उष्णोदकमानीयसेचयेत्तांसमाहितः यथारंभोविवृद्धिस्तेशाखादीनांसदाभवेत् तथावर्द्धयमांदेविसेचनात्पार्वतीप्रिये सदायथातेप्रसवोवर्द्धतेकदलीशुभे तथामनोरथानांमेप्रभवोभवतुस्वयं एवंसंपूज्यविधिवद्भक्तियुक्तेनचेतसा रात्रौजागरणंकुर्याद्गीतवादित्रनिःस्वनैः एवंयाकुरुतेनारीव्रतानामुत्तमव्रतं कृत्स्नात्तुविविधान्भोगान्सौ- भाग्यंविंदतेध्रुवं एवंयाकुरुतेदेविकदलीव्रतमुत्तमं तस्मात्कुरुविधानेनयथोक्तंफलमाप्स्यसि इतिश्रुत्वाविधानेनचकारव्रतमुत्तमं अवापसकलकाममनसायदभीप्सितं अन्यच्चशृणुराजेंद्रव्रतस्यफलमुत्तमं अत्याश्चर्यकरंपुंसांशृणुष्वावहितोभवान् द्यूतेयदाजितात्पूर्वंकृष्णानीतासभांप्रति दुःशासनेनदुष्टेनद्रौपदीमुक्तमूर्धजा आकृष्यमाणेवस्त्रेतुचिंतेमामस्मरत्तदा तूर्णंतत्रगतोराजन्शैपद्यास्त्राणनायवै अदृश्योहंतुकृष्णायैव्रतंसमुपदिष्टवान् तदाकर्तुमशक्येतुव्रतेस्मिन्राजसत्तम रुक्मिण्याचरितंपूर्वंयदेतद्व्रतमुत्तमं तस्यपुण्यफलंदत्तंकृष्णायैराजसत्तम तत्कालमेववस्त्राणांसमृद्धिरभवत्पुरा दुःशासनेनदुष्टेनआक्षिप्तेषुशुकेषुच प्रादुर्भूतानिवस्त्राणिनानावर्णानिभारत खिन्नोदुःशासनःपापोविरराभांशुकग्रहात् तावद्बभूवुर्वस्त्राणिकदलीगर्भवन्नृप इत्थंव्रतप्रभावोयंगुह्योपिकथितोमया कारयस्वविधानेनपूर्णकामोभविष्यसि इतिकदलीव्रतकथासमाप्ता अथोद्यापनं युधिष्ठिरउवाच कस्मिन्मासेतिथौकस्यामाचरेद्व्रतमुत्तमं कदन्यभावेकिंकार्यंतन्ममाचक्ष्वकेशव श्रीकृष्णउ॰ शुक्लपक्षेचतुर्दश्यांमासिभाद्रपदेनृप कार्तिकेमाघमासेवावैशाखेचैतरेतथा पुण्येमासिप्रकुर्वीतपौर्णमास्यांशुभेदिने तिथिक्षयंवर्जयीतशुभायांसुसमाहितः यस्मिन्देशेनलभ्येतकदलीराजसत्तम सुवर्णस्यशुभांतत्रकृत्वापूजांसमाचरेत् यदिलभ्येतकदलीमारोप्यादौप्रपूजयेत् यावत्तस्याफलंतावत्सिंचेन्नीरेणभूपते फलेषुपक्वजातेषुपश्चाद्विप्रान्समाह्वयेत् प्रभातेविमलेस्ना

स्नानयाद्दोश्चिमलेजले अहतेवाससीगृह्य कृत्वासंध्यादिकर्मच अरत्निमात्रंकृत्वातुस्थंडिलंवाग्यतः शुचिः अग्निंसंस्थाप्यविधि
वत्तत्रहोमंसमाचरेत् शतमष्टोत्तरंविद्वान्तिलाज्याहुतिभिस्तथा एकाग्रचित्तः संहृष्टः कृतीव्याहृतिभिः पृथक् ब्रह्मादिदेवता
भ्यश्चनाममंत्रैः पृथक् पृथक् उमामहेश्वरायापिमूलमंत्रेणदापयेत् आचार्यंचसपत्नीकंवस्त्राद्यैः पूजयेत्ततः धेनुंपयस्विनींव
त्सवस्त्रालंकारभूषिताम् स्वर्णशृंगींरौप्यखुरींताम्रपृष्ठींसुवाससं कांस्यदोग्ध्रींरत्नपुच्छांनिककंठींसघंटिकां अभ्यर्च्यवेद
विदुषेआचार्यायनिवेदयेत् पादुकोपानहौछत्रमलंकारानेनकशः यथाशक्तिप्रदेयानिव्रतस्यपरिपूर्तये चतुर्विंशत्षोडशवायुग्मान्या
हूयसंयतः वस्त्रालंकारगंधाद्यैः पूजयित्वातुभोजयेत् वायनानिचदेयानिवंशपात्रैस्तुशक्तितः दद्याच्चदक्षिणांसम्यग्यथाविभवसारतः
अन्येभ्योपियथाशक्तिदद्यादन्नंसुसंस्कृतं क्षमापयित्वातांदेवींव्रतस्यपरिपूर्तये कदल्यैकामदायिन्यैमधायैतेनमोनमः रंभायैप्र
तिसारायैसर्वसौख्यप्रदेनमः यथायथानप्रसवोवर्द्धतेकदलिध्रुवं तथाममोरयानांमेप्रभवोवर्धतुस्वयं इतिकदलीदानमंत्रः एवंनारीन
रोवापियः कुर्यात्कदलीव्रतं सर्वान्कामानवाप्नोतिस्वर्गलोकेमहीयते इतिश्रीभविष्योत्तरेकदलीव्रतोद्यापनंसंपूर्णं अथपौर्णिमां
तमासेनकार्तिककृष्णचतुर्दशीनरकचतुर्दशी तस्यांतिलतैलेनस्नानमुक्तंभविष्ये कार्तिकस्यासितेपक्षेचतुर्दश्यांनिशामुखे यमदी-
पंबहिर्दद्यादपमृत्युर्विनश्यति कार्तिकस्यासितेपक्षेचतुर्दश्यांविधूदये अवश्यमेवकर्तव्यंस्नानंनरकभीरुभिः दिनद्वयेविधूदयेचतुर्दशी
सत्वे पूर्वविद्धचतुर्दश्यांकार्तिकस्यसितेतरे पक्षेप्रत्यूषसमयेस्नानंकुर्यात्प्रयत्नतः इतिनिर्णयदीपिकोक्तेः परदिनएवेत्यंन्ये दि
नद्वयेचतुर्दश्याभावेतु चतुर्दश्यांचतुर्थयामेस्नानमितिदिवोदासनिबंधे स्मृतिदर्पणेपि चतुर्दशीयाश्वयुजस्यकृष्णास्वात्यर्कयुक्ता
हिभवेत्प्रभाते स्नानंसमभ्यर्च्यनरैस्तुकार्यंसुगंधतैलेनचविप्रयुक्तैः तैलेलक्ष्मीर्जलेगंगादीपावल्याश्चतुर्दशीं प्रात्यर्तिविशेषः आश्विनस्या
सितेपक्षेभूतायांनोदितोरविः यामिन्याःपश्चिमेयामेतैलाभ्यंगोविशिष्यते मृगांकोदयवेलायांत्रयोदश्यांयदाभवेत् दर्शोयामंगलस्नानंदुःख-
शोकभयप्रदम् कालादर्शेत्रयोदशीनिषेधश्च त्रयोदशीयदाप्रातःक्षयंयातिचतुर्दशी रात्रिशेषेत्वमावास्यातदाभ्यंगस्त्रयोदशी चतुर्थयामेस्नान

तिथयस्त्रयः दीपदानादिकार्येषु कर्तव्याः पूर्वसंयुताः इतिनरकचतुर्दशीदीपदानंसमाप्तं अथकार्तिकशुक्लचतुर्दश्यांवैकुंठचतुर्दशीव्र
तदुक्तंसनत्कुमारसंहितायां वर्षेवैहेमलंबाख्येमासिश्रीमतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणोदयसंभवे महादेवतिथौब्राह्मेमुहूर्ते
मणिकर्णिके स्नात्वाविश्वेश्वरोदेव्याविश्वेश्वरमपूजयत् संक्षेपंज्योतिषस्तस्यप्रतिष्ठाख्यंतदाकरोत् स्वयमेवतदात्मानंचरन्पाशु
पतव्रतं ततःप्रभातेविमलेकृत्वापूजांमहद्भुतां दंडपाणेर्महानाम्निवनेस्मिन्कृतपारणः श्रीमद्भवानीसदनंप्रविश्येदमनुत्तमं इतिसन
त्कुमारसंहितोक्तेः अथकथा वालखिल्याऊचुः कार्तिकस्यसितेपक्षेचतुर्दश्यांसमागमत् वैकुंठेशस्तुवैकुंठाद्वाराणस्यांकृते
युगे रात्र्यांतुर्यांशशेषायांस्नात्वासोमणिकर्णिके गृहीत्वाहेमपद्मानांसहस्रंवैततोव्रजत् अतिभक्त्यापूजयितुंशिवंप्रासादितंवि
भुं विधायपूजांवैश्वेशींततःपद्मैरपूजयत् सहस्रसंख्यांकृत्वादावेकनाम्नाततःपरं आरब्धंपूजनंतेनशिवस्तद्भक्तिमैक्षत एक
पद्मंपद्ममध्यान्निलीयात्तंहरेणतु ततःपूजितवान्विष्णुरेकोनंकमलंत्वभूत् इतस्ततस्तेनदृष्टंपद्मंतिष्ठतिनक्वचित् कमलेषुक्र
मोजातोऽथवानामस्वमेक्रमः क्षणंविचार्यसहरिर्नमेनामक्रमोऽभवत् पद्मेष्वेवक्रमोजातोविचार्यैवंपुनःपुनः सहस्रपद्मसंकल्पः
पूजार्थंतुकृतोमया अर्च्यःकथंमहादेवएकोनकमलैर्मया यद्यानेतुंगमिष्यामिभंगःस्यादासनस्यतु किंविधेयमतःशंभोःपूजने
चिंतयन्हरिः एकःप्रकारउत्पन्नोहृदयेस्यमुनीश्वराः पुंडरीकाक्षइत्येवंमांवदंतिमुनीश्वराः नेत्रंमेपद्मसदृशंपद्मार्थेत्वर्पयाम्य
हं इतिनिश्चित्यमनसिदत्वातर्जनिकांसतु नेत्रमध्यात्तदुत्पाट्यमहादेवस्तुपूजितः ततोमहेश्वरस्तुष्टोवाक्यमेतदुवाचह महादेव
उवा० त्वत्समोनास्तिमद्भक्तस्त्रैलोक्येसचराचरे राज्यंदत्तंत्रिलोक्यास्तेभवत्वंलोकपालकः अन्यद्वरयमद्दत्तंवरंयन्मनसेप्सितं
अवश्यमेवदास्यामिनात्रकार्याविचारणा मद्भक्तिंतुसमालंब्ययेद्विषंतिजनार्दनं तेमद्द्वेष्यानराविष्णोव्रजेयुर्नरकंध्रुवं विष्णुरु
वाच त्रैलोक्यरक्षाकरणंममादिष्टंमहेश्वर दुर्मदाश्चमहासत्वादैत्यामार्याःकथंमया शिवउवा० एतत्सुदर्शनंचक्रंसर्वदै
त्यनिकृंतनं गृहाणभगवन्विष्णोमयातुभ्यंनिवेदितं अनेनसर्वदैत्यानांभगवन्कदनंकुरु एवंचक्रंहरेर्दत्वाततोवचनमब्रवीत् शि

वउवाच वर्षेचहेमलंबाख्येमासिश्रीमतिकार्तिके शुक्लपक्षेचतुर्दश्यामरुणाभ्युदयंप्रति महादेवतिथौब्राह्ममुहूर्तेमणिकर्णिके
स्नात्वाविश्वेश्वरंलिंगंवैकुंठादेत्यपूजनम् सहस्रकमलेस्तस्माद्भविष्यतिममप्रिया विख्यातासर्वलोकेषुवैकुंठाख्यचतुर्दशी
अन्यंवरंप्रदास्यामिश्रृणुविष्णोवचोमम पूर्वरात्रौतुतत्पूजाकर्तव्यासर्वजातिभिः उपवासंदिवाकुर्यात्सायंकालतदर्चनम् पश्चान्म
मार्चनंकार्यमन्यथानिष्फलंभवेत् ग्राह्यातुहरिपूजायांरात्रिव्यासाचतुर्दशी अरुणोदयवेलायांशिवपूजांसमाचरेत् सहस्रकमलैर्विष्णु
राद्यैर्ये:पूजितोनरैः पश्चादीशःपूजितश्चजीवन्मुक्तास्तएवहि सायंस्नात्वापंचनदेबिंदुमाधवमर्चयेत् सहस्रनामभिर्विष्णोःक
मलैःसुमनोहरैः मणिकर्ण्यांततःस्नात्वाविश्वेश्वरमथार्चयेत् सहस्रनामभिःपुण्यैर्जीवन्मुक्तःसएवहि स्नात्वायोविष्णुकां
च्यांवानंतसेनंसमर्चयेत् रुद्रकांच्यांततःस्नात्वाप्रणवेशंसमर्चयेत् पृथिव्यांचश्रुतोयेयधर्माःप्रोक्तामहर्षिभिः सर्वेषांफलमाप्नोतिनात्र
कार्याविचारणा आदौस्नात्वावन्हितीर्थेयजेन्नारायणंततः रेवोदकेततःस्नात्वाकेदारेशंसमर्चयेत् इहैवार्थवनामयौभवन्नास्त्यत्रसंश
यः स्थलपद्मैस्त्वत्रपूजाकर्तव्याजलजक्षयात् आदौस्नात्वासूर्यपुत्र्यांवेणीमाधवमर्चयेत् जान्हव्यांचततःस्नात्वासंगमेशंप्रपू
जयेत् रक्तपद्मैःश्वेतपद्मैर्हरिरुद्रक्रमेणतु सर्वाःश्रियस्तस्यवश्याःसत्यंविष्णोमयोदितं मोक्षार्थेकाशिकामध्येतिष्ठतःशुभदाय
कौबिंदुमाधवविश्वेशौजगदानंददायकौ नलभेत्पूजयित्वाकिंमोक्षंविश्वेश्वरंहरिं विनायोहरिपूजांतुकुर्याद्रुद्रस्यचार्चनं
वृथातस्यभवेत्पूजासत्यमेतद्वचोमम एवंतस्मैवरंदत्वातत्रैवांतरधीयत तस्मात्सर्वप्रयत्नेनपूज्योहरिहरावुभौ प्राप्तेकलियुगेघो
रेशौचाचारविवर्जिते तत्वसंख्येवर्षशतेगतेदेवोमहेश्वरः वाराणसीस्थलिंगानिपातालसंनिधक्षति ततोद्विगुणवर्षैस्तुगंगावाराणसी
तथा भविष्यतिअदृश्यासाततोवैशुभमुनीश्वराः अंतर्हितायदाकाशीभविष्यतितदासुने नाशस्तुलिंगचिन्हानांनिःप्रभाःसकलाजनाः
चतुर्दशाब्दंदुर्भिक्षंमहामारीसमुद्भवः गोवधश्चापिसर्वत्रमृत्तिकाभस्मसन्निभा गंगोत्तर्यांतुयाधारापतेद्भगिरथाश्रमे हरिद्वाराच्च
वायव्यांतस्यालोपोभविष्यति भागीरथ्यांगतायांतुमर्कटीततुसन्निभाः भविष्यंतिजलेकीटास्तोयंनीलीनिभंतथा चतुर्वर्षसहस्रे

स्तुशैलस्थाः सर्वे देवताः सत्वंत्य क्काऽगमिष्यंति मानसंच्चसरोवरम् गतेषुशैलदेवेषुराजानोधैर्यविच्युताः पापिष्ठाश्चदुराचारानानादुः
खेनदुःखिताः कलेरयुतवर्षाणिभविष्यंति यदाखग श्रौतमार्गस्यलोपोहिभविष्यतिनसंशयः तदालोकाभविष्यंतिमद्यपानपरा
यणाः स्वल्पायुषःस्वल्पभाग्यानानारोगैश्चपीडिताः द्विजास्तुदक्षिणंदेशंवेदज्ञाःसंभवंतिच्च आनीयतान्शाककर्ताधर्मसं
स्थापयिष्यति इतिसनत्कुमारसंहितायांवैकुंठचतुर्दशीकथासमाप्ता अथशिवरात्रिव्रतं अमांतमासेनमाघकृष्णा
चतुर्दश्यांशिवरात्रिव्रतं तच्चार्धरात्रव्यापिन्यांकार्यं तदुक्तंनारदसंहितायां अर्धरात्रयुतायत्रमाघकृष्णाचतुर्दशी शिवरात्रि
व्रततत्रसोऽश्वमेधफलंलभेत् ईशानसंहितायामपि माघकृष्णाचतुर्दश्यामादिदेवोमहानिशि शिवलिंगतयोद्भूतःकोटिसू
र्यसमप्रभः तत्कालव्यापिनीग्राह्याशिवरात्रिव्रतेतिथिः माघकृष्णात्वंचात्रामांतमासपरत्वेन अतएव चतुर्दश्यांतुकृष्णा
यांफाल्गुनेशिवपूजनं तामुपोष्यप्रयत्नेनविषयान्परिवर्जयेत् इतिस्कंदतुवचनेपौर्णमांतमासोऽप्युक्तः महानिशाच महानिशाद्वे
घटिकेरात्रेर्मध्यमयामयोरितिदेवलोक्तनिशीथरूपैव एवंचार्धरात्रशब्दोऽपितत्परएव दिनद्वयेनिशीथव्याप्तावव्याप्तौवापरैवप्रदोष
व्यापिनीलाभात् दिनद्वयेचतुर्दश्यांपूर्वान्याज्यापराशुभा आदित्यास्तमयेकालेअस्तिचेद्याचतुर्दशी प्रदोषव्यापिनीग्राह्याशिव
रात्रेचतुर्दशी रात्रौजागरणंयस्मात्तस्मात्तांसमुपोषयेत् अहोरात्रव्रतंयच्चएकमेकतिथौगतं तस्यासुभययोभिन्यामाचरेत्त द्व
तंव्रतीतिकामिकाशिवरात्रिः शिवरहस्ये स्मृत्यंतरादिवचनाच्च नचपूर्वदिनेधिकव्याप्तिवशात् पूर्वैवेतिशंक्यम् एतस्यभू
यसास्यात् अर्धत्वभितिन्यायमात्रत्वेनवचनबाधकत्वायोगात् प्रत्युतनिरुक्तवचनेरेवतद्बाधाच्च पूर्वदिनेनिशीथेपरदिनेप्रदो
षेतदापूर्वैव अर्धरात्रात्पुरस्ताच्चेज्जयायोगोयदाभवेत् पूर्वविद्धैवकर्तव्याशिवरात्रिःशिवप्रिया इतिपाद्मेजयायोगस्यविहित- 
त्वात् महतामपिपापानांदृष्टावैनिःकृतिःपुरा नदृष्टाकुर्वतांपुंसांकुहूयुक्तांतिथिंशिवां इतिस्कांदे दर्शयोगस्यनिंदितत्वाच्च य
त्तुकालतत्वविवेचनेनव्यैर्दिनद्वयेनिशीथव्याप्तावेवपूर्वविद्धाविधायकान्युत्तरविद्धानिषेधकानिवचनानिसावकाशानीत्युक्त्वापू

र्थैवग्रात्यमुक्तं तन्नसमंजसं निशाद्वयेचतुर्दश्यांपूर्वात्याज्या पराशुभेतिमाधवाद्युदाहृतकामिकवचनविरोधात् नच पूर्वविद्धा-
विधायकानांउत्तरविद्धानिषेधकानांविषयालाभइतिशंक्यम् प्रदोषनिशीथयोर्विरोधेनिशीथव्याप्ततायाउपोद्बलबलत्वेनाविषयला
भस्यानुपदमेवोक्तत्वात् प्रदोषव्याप्त्यभावात् यदादिनद्वयेनिशीथव्याप्तिस्तदापरैवमाघासितेभूतादर्ना हराजन्तुपांतयागय
दिपंचदश्याः जयाप्रयुक्तांनतुजातुकुर्याच्छिवस्यरात्रिप्रियकृच्छिवस्य इतिहेमाद्रिमाधवेद्युदाहृतपुराणवचनादितिपरेव
अस्मिन्व्रतेउपवासजागरणपूजायांफलसंबंधात् त्रयमपिप्रधानं तथाचनागरखंडे उपवासप्रभावेनबलादपिचजागरात् शिवरात्रे
स्तथातस्यांलिंगस्यापिप्रपूजया अक्षय्यांल्लभतेकामान्शिवसायुज्यमाप्नुयात् इदंचव्रतंसंयोगपृथक्त्वन्यायेननित्यंकाम्यंच परास्त
रतरंनास्तिशिवरात्रिपरात्परा नपूजयतिभक्त्येशंरुद्रंत्रिभुवनेश्वरं जंतुजन्मसहस्रेषुयुज्यतेनात्रसंशयः इतिस्कांदे पारणंचै
तद्व्रते स्कांदेतिथिमध्येतदंतेचोक्तं उपोषणंचतुर्दश्यांचतुर्दश्यांतुपारणं कृतैःसुकृतलक्षैश्चलभ्यतेयदिवानवा ब्रह्मांडोदरमध्येतु
यानितीर्थानिसंतिवै संस्थितानिभवंतीहभूतायांपारणेकृते तिथ्यंतेपारणंकुर्याद्विनाशिवचतुर्दशीं तथा कृष्णाष्टमीस्कंदषष्ठीशिवरा
त्रिस्तथैवच एताःपूर्वयुताःकार्यास्तिथ्यंतेपारणंभवेत् अनयोर्विरुद्धवचनयोर्व्यवस्थैवंमाधवेनोक्ता यामत्रयोर्ध्वगामिन्यांप्रातरेवहि
पारणमिति वचनाद्यामत्रयमध्येचतुर्दशीसमाप्तौतिथ्यंतेतदुत्तरगामित्वेतुप्रातस्तिथिमध्यएवेति तिथिमध्यकालोमुख्यस्तदंतकालोगौणः
उत्तरभावित्वादित्याहुः केचित्तु शक्तस्तिथ्यंते अशक्तस्तिथिमध्यएवेत्यूचुः शिवरात्रिग्रहणंतुपूर्वविद्धाविधानार्थमिति वस्तुतस्तु सात्वस्त
मयपर्यंतव्यापिनीचेत्स्मरेद्दिने दिवैवपारणंकुर्यान्पारणंनैवदोषभाक् शिवरात्रिकरणपाठलकालादर्शादिलिखितवचनाद्व्याप्तितिथिसमा-
प्तौतिथ्यंतेन्यथातन्मध्यएवेति इतिनिर्णयः अथव्रतविधिः मासपक्षाद्युल्लिख्यममपापक्षयार्थंमक्षय्यमोक्षभोगप्राप्त्यर्थंशिवरात्रिव्र
तंकरिष्ये इतिसंकल्प्य षोडशोपचारैःशिवपूजांकुर्यात् तत्रपूजा आगच्छदेवदेवेशमर्त्यलोकहितेच्छया पूजयामिविधानेनप्रसन्नः
सुमुखोभव सहस्रशीर्षेत्यावाहनं पादासनंकुरुप्राज्ञनिर्मलंस्वर्णनिर्मितं भूषितंविविधैरत्नैःकुरुत्वंपादुकासनं पुरुषएवेदमित्यासनं

गंगादिसर्वतीर्थेभ्योमयाप्रार्थनयाहृतं तोयमेतत्सुखस्पर्शंपाद्यार्थंप्रतिगृह्यतां एतावानस्येतिपाद्यं गंधोदकेनपुष्पेणचंदनेनसुगंधि
ना अर्घ्यंगृहाणदेवेशभक्तिंमेह्यचलांकुरु त्रिपादूर्ध्वइत्यर्घ्यं कर्पूरोशीरसुरभिशीतलंविमलंजलं गंगायास्तुसमानीतंगृहा
णाचमनीयकं तस्माद्विराळित्याचमनीयं मंदाकिन्याःसमानीतंहेमांभोरुहवासितं स्नानायतेमयाभक्त्यानीरंस्वीक्रियतांवि
भो यत्पुरुषेणेतिस्नानं वस्त्रंसूक्ष्मंदुकूलंचदेवानामपिदुर्लभं गृहाणत्वमुमाकांतप्रसन्नोभवसर्वदा तंयज्ञमितिवस्त्रं य
ज्ञोपवीतंसहजंब्रह्मणानिर्मितंपुरा आयुष्यंभववर्चस्वउपवीतंगृहाणभो तस्माद्यज्ञात्सर्वहुतउपवीतं श्रीखंडचंदनंदिव्यंगंधा
ढ्यंसुमनोहरं विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यतां तस्माद्यज्ञात्सर्वहुतइतिगंधं माल्यादीनिसुगंधीनि० तस्मादश्वेतिपुष्पं
वनस्पतिरसोद्भूतो० यत्पुरुषमितिधूपं साज्यंचवर्तिं० ब्राह्मणोस्येतिदीपं नैवेद्यंगृह्यतांदेव० चंद्रमामनसइतिनैवेद्यं
पूगीफलंमहद्दिव्यं० तांबूलं हिरण्यगर्भेतिदक्षिणां चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृहा
णपरमेश्वर नीराजनं फलेनफलितंसर्वंत्रैलोक्यंसचराचरं तस्मात्फलप्रदानेनसफलाश्चमनोरथाः फलं यानिकानिचपा
पानि० नाभ्याआसीदितिप्रदक्षिणां मंत्रहीनंक्रियाहीनंभक्तिहीनंसुरेश्वर यत्पूजितंमयादेवपरिपूर्णंतदस्तुमे सप्तास्यासन्निितिनम
स्कारं सद्योजातमितिवामदेवायेतिवा यज्ञेनयज्ञमितिमंत्रपुष्पांजलिं श्रूयतांधर्मसर्वस्वंशिवरात्रौशिवार्चनं ब्रह्मयज्ञविधानेनस्व-
र्गपुण्येनकर्मणा कृत्वास्नानंशुचिर्भूत्वाधौतवस्त्रसमन्वितः स्थापयेद्देवदेवेशंमंत्रैर्वेदसमुद्भवैः ततःपूजाप्रकर्तव्यापूर्वोक्त
विधिनाततः नमोयज्ञजगन्नाथनमस्त्रिभुवनेश्वर पूजांगृहाणमद्दत्तांमहेशप्रथमंपदं प्रथमप्रहरपूजा पूर्वेनंदीमहाकालाश्च
गीभृंगीचदक्षिणे वृषस्कंधोपश्चिमेचदेशकालौतथोत्तरे गंगाचयमुनाचैवपार्श्वेचैवव्यवस्थिते नमोव्यक्तायसूक्ष्मायनमस्ते
त्रिपुरांतक पूजांगृहाणदेवेशयथाशक्त्योपपादितं द्वितीयप्रहरे बद्धोहंविविधैःपाशैःसंसारभयबंधने पतितंमोहजाले
मांत्वंसमुद्धरशंकर तृतीये चतुर्थेप्रहरेआद्यवत् नमःशिवायशांतायसर्वपापहरायच शिवरात्रौमयादत्तंगृहाणार्घ्यं-

प्रसीदमे द्वितीये दुःखदारिद्र्यभावैश्च दग्धोहं पार्वतीपते मां त्वं पाहि महादेव गृहाणार्घ्यं नमोस्तु ते तृतीये किं न जानासि देवेश तावद्भ-
क्तिं प्रयच्छमे स्वपादाग्रतले देव दास्यं देहि जगत्पते चतुर्थे इति प्रार्थना इति शिवपूजा समाप्ता अथ कथा सूत उवाच प्रकारण
मशेषस्य जगतः सर्वदा शिवः गोब्राह्मणनृपाणां च शिवं भवतु मे सदा कैलासशिखरासीनं देवदेवं जगद्गुरुं पंचवक्त्रं दशभुजं
त्रिनेत्रं शूलपाणिनं पिनाकशोभितकरं खड्गखेटकधारिणं कपालखट्वांगधरं नीलकंठसुशोभितं भस्मांगव्यालशोभाढ्यम
स्थिमालाविभूषितं नीलजीमूतसंकाशं सूर्यकोटिसमप्रभं क्रीडंतं च शिवं तत्र गणैश्च परिवारितं विसृज्य देवताः सर्वास्तिष्ठंतं
परमेश्वरं तं दृष्ट्वा देवदेवेशं प्रहस्योत्फुल्ललोचनं पार्वती परिपप्रच्छ विनयावनता स्थिता गौरी प्रोवाच भर्तारं विस्मयोत्फुल्ललोच
ना पार्वत्युवाच कथयस्व प्रसादेन यज्ञोप्यं व्रतमुत्तमं श्रुतास्त्वयोक्ता देवेश व्रतानां निर्णयाः शुभाः तथा वेदाश्च धर्माश्च तीर्थध
र्मास्त्वयोदिताः नास्ति मे निश्चयो देव श्रोताहं च पुनः पुनः तस्माद्वदस्व मे देव त्वयैकं निःसंशयं प्रभो व्रतानामुत्तमं देव भुक्तिमुक्तिप्र
दायकं तदहं श्रोतुमिच्छामि कथयस्व समप्रभो ईश्वर उवाच शृणु देवि प्रवक्ष्यामि व्रतानामुत्तमं व्रतं यन्न कस्यचिदाख्यातं रह-
स्यं मुक्तिदायकं येनैव कथ्यमानेन यमो विलयतां व्रजेत् तदहं कथयिष्यामि शृणुष्वैकमनाः प्रिये माघमासे कृष्णपक्षे अमायु
क्ता चतुर्दशी शिवरात्रिस्तु सा ज्ञेया सर्वयज्ञोत्तमोत्तमा दानैर्यज्ञैस्तपोभिश्च व्रतैश्चापि विविधैरपि न तीर्थैस्तद्भवेत्पुण्यं शिवरात्रि
व्रतोद्भवं शिवरात्रिसमं नास्ति व्रतानामुत्तमं व्रतं ज्ञानतोज्ञानतो वापि कृत्वा मोक्षमवाप्नुयात् मृतास्ते निरयं त्यक्त्वा गतास्ते शिवसन्नि-
धौ सर्वमंगलशीला च सर्वामंगलनाशिनी भुक्तिमुक्तिप्रदा चैषा सत्यं सत्यं वरानने देव्युवाच कथं यमपुरं त्यक्त्वा शिवलोकं व्रजेन्नरः ए
तन्मे महदाश्चर्यं प्रत्यक्षं कुरु शंकर शंकर उवाच शृणु देवि यथावृत्तां कथां पौराणिकीं शुभां यमशासनहंत्रीं च शिवस्थानप्रदा-
यिनीं कश्चिदासीत्पुरा देवि निषादो जीवघातकः प्रत्यंतदेशवासी च भूधरासन्निकेतनः सीमांते स सदा तिष्ठन्कुटुंबपरिपालकः क्रूरो
नित्यं धनुर्धारी श्यामांगः कृष्णकंचुकः बद्धगोधांगुलित्राणः सदैव मृगयारतः एवंविधो निषादोसौ चतुर्दश्यां दिने शुभे व्यवहारिकेभ्य

र्थायदेवागारेप्रबोधितः तेनापिदेवतादृष्टाजनानांवचनंश्रुतं उपवासव्रतानांत्वशिवःशिवशिवेतिच दिनांतेनैस्तदामुक्तःपानईयंप्रदीयतां ततो
सोधनुरादाय दक्षिणेनगतःस्वयं आगच्छन्सवनोद्देशेजनहासंचकारसः शिवःशिवकिमेतद्धिकुर्वंतिनगरेजनाः वनेचरान्निरीक्षंस्तुच
तुर्दिक्षुइतस्ततः पदंचमृगमार्गंचअन्वेष्यन्सूकरान्मृगान् इतश्चेतश्चधावन्वेआमिषेलुब्धमानसः वनंचपर्वतान्सर्वान्भ्रमित्वा
गिरिकंदराः संप्राप्तेतेननोकिंचिन्मृगसूकरचित्तलं निराशोलुब्धकस्तिष्ठन्तदात्यस्तंगतोरविः चिंतयित्वाजलोपांतेजागरंजीवघातनं
संविधास्याम्यहोरात्रौनिश्चितंममजीवनं गतोसोजलसामीप्यंतीरस्थोजालिमध्यतः आश्रमंकर्तुमारेभेआत्मनोगुप्तिकारणात् जालिम
ध्येमहालिंगंस्थितंस्वायंभुवंशुभं बिल्ववृक्षोमहान्दिव्योजालिमध्येचसंस्थितः गृहीत्वातस्यपर्णानिमार्गशुद्ध्यर्थमक्षिपत् क्षि-
प्तानिदक्षिणेभागेनिपेतुर्लिंगमूर्धनि नदिवाभोजनंतस्यआमिषेलुब्धमानसः ततश्चिंतयमानस्यनानिद्रासमजायत तस्यगंधसमासाद्यलुब्ध-
कस्यवरानने नतिष्ठंतिमृगाःसर्वेशरघातभयात्तदा मृगान्निरीक्षतस्तस्यनिद्रानाशोप्यजायत बिल्वमध्येगतस्यास्यप्रथमःप्रहरोगतः त
तोजलार्थमायाताहरिणीगर्भसंयुता यांवनस्थासरूपाचस्तनपीनास्तशोभना निरीक्षंतीदिशःसर्वाश्चपश्चमुत्फुल्ललोचना लुब्धकेनापिसादृष्टा
बाणगोचरमागता बाणश्चसंधितस्तेनएकदृष्टेनचेतसा त्रोटयित्वाथपत्राणिप्रक्षिप्तानिशिवोपरि शिवंदेवंसदाध्यायन्शीतेनपरिपीडि
तः एतस्मिन्नंतरेदृष्टोहरिण्यालुब्धकस्तदा लुब्धकस्तुस्वरूपेणकृतांतइवदृश्यते दृष्ट्वातुतस्यसंधानंयमदंष्ट्रासमंप्रभुः मृगीसादृश्ययावा
चालुब्धकंवाक्यमब्रवीत् मृग्युवाच स्थिरोभवमहाव्याधसर्वजीवनिकृंतन कथयस्वमहाबाहोकिमर्थंमांहनिष्यसि लुब्धकउवा० कुटुंबंपी
डितंमेद्यक्षुधयात्वमयासह पुष्याम्यहंसदेवापिद्यामिषाहारभोजनैः धनंवैमगृहेनास्तितेनत्वांहन्मिशोभने सूतउवा० यावत्पूर्वं[illegible]
वेनजागरोपोषणेनच चतुर्थांशेनपापानांविमुक्तोलुब्धकस्तदा लुब्धकस्तुततोदृष्ट्वामृगींमानुषभाषिणीं आश्चर्यंपरमंदृष्ट्वाकिंचि
ज्जर्मसमन्वितः लुब्धकउवाच मयाहिघातिताजीवाउत्तमाधममध्यमाः नश्रुताईदृशीवाणीश्वापदानांकथंचन कस्मिन्देशेत्वमुत्प
न्नाकस्मात्स्थानादिहागता कथयस्वप्रयत्नेनपरंकौतूहलंहिमे मृग्युवाच शृणुत्वंलुब्धकश्रेष्ठकथयामितवाखिलं आसीत्पूर्वंमहारम्या

स्वर्गे शक्रस्य चाप्सरा अनंतरूपलावण्यासौभाग्येन च गर्विता सौभाग्यमदपुष्टांगी दानवो बलगर्वितः मयैकं च कृतो भर्ता हिरण्याक्षो
महासुरः तेन सार्द्धं मया भुक्तं चिरकालं यथेप्सितं एवं काले गते त्वाधक्रीडंत्यामसुरेण च एकदा प्रेक्षितं नूनं त्र्यंबकस्य गतागतं यावद्ग
च्छाम्यहं तत्र तावन्मां शंकरोऽब्रवीत् कृशगात्रि त्वं वरारोहे केन वा संगता शुभे किं वा सौभाग्यगर्वेण नायाता मम मंदिरं सत्यं कथय शीघ्रं त्वं नो-
चेच्छापं ददामि ते शापभीत्या मया तत्र इत्युक्ते शंकरायतः शृणु देव प्रवक्ष्यामि शापानुग्रहकारक ममास्ति भर्ता विख्यातो दानवेंद्रो महाबलः
तेन सार्द्धं मया देव क्रीडितं निजमंदिरे तेनाहं नागता शीघ्रं सृष्टिसंहारकारक रुद्रस्तद्वचनं श्रुत्वा सकोपो वाक्यमब्रवीत् मृगः कामातुरो नित्यं हि
रण्याक्षो भविष्यति त्वं मृगी तस्य भार्या वै भविष्यसि न संशयः त्यक्त्वा स्वर्गं नित्यादेवान्दानवं भोक्तुमर्हसि द्वादशाब्दानि भो भद्रे भविता शापगौर
वे परस्परस्य शोकेन शापान्तोऽपि भविष्यति अनुग्रहः पुनस्त्वेषः शंकरेण कृतः स्वयं कदाचिद्वै व्याधवरो मम सान्निध्यमाश्रितः वधार्थं त-
स्य संप्राप्ता पूर्वजन्म स्मरिष्यसि तत ऊर्ध्वं नदी रुद्रं दृष्ट्वा मोक्षं भविष्यसि शंकरान्मया दृष्टा लोकसंन्यासिन्महावने ततो दुःखमनुमासा मांसमद
विवर्जिता गर्भाक्रांता विशेषेण न वध्या च विनिश्चितं त्वत्कुटुंबस्य तेनूनं भोजनं न भविष्यति आयास्यति मृगी त्वन्या मार्गेणानेन लुब्धक पीन
यौवनसंपन्ना बहुमांसा मदोद्धता भोजनं सकुटुंबस्य तव संध्या भविष्यति अथवान्या मृगी व्याध पानार्थं तु जलाशये आगमिष्यति सत्यं ते स्क
न्नोऽनेस्य न संशयः गर्भं त्यक्त्वा पुनः प्रातर्बालान्संदिश्य बंधुषु शपथैरागमिष्यामि संदिश्य च स्वजनं तस्यास्तद्वचनं श्रुत्वा व्याधो वि-
स्मयमागतः क्षणमेकं तथा स्थित्वा व्याधो वचनमब्रवीत् नागमिष्यसि चेत्त्वं जीवन्त्वमपि गच्छसि क्षुधया पीडितो ह्यहं वै कुटुंबं च विशेषतः
मानस्त्वया मम गृहमागंतव्यं यथा यथं शपथैश्च व्रजत्वं हि यथा मे प्रत्ययो भवेत् पृथिवी वायुरादित्यः सत्यानि संनिदेवताः तस्मात्सत्येन
गंतव्यं भवत्या स्वगृहं प्रति तस्य तद्वचनं श्रुत्वा गर्भार्ता सा मृगी तदा चक्रे सत्यप्रतिज्ञां वै व्याधस्याग्रे पुनः पुनः मृग्युवाच द्विजो भूत्वा तु
योऽन्याधवेदक्रमशो भिजायते स्वाध्यायसंध्यारहितः सत्यशौचविवर्जितः अविक्रय्याणां विक्रेता अयाज्यानां च याजकः तस्य पापेन लि-
प्यामि यद्यहं नागमं पुनः दुष्टबुद्धिं नृपं सापं धूर्तं वा ग्रामकंटके नास्तिके च विशीले च परदाररते तथा वेदविक्रयिणी चैव शवसूतकभोजने

तेनपापेनलिप्यामियद्यहंनागमेपुनः मृनशय्यामनिग्राहेमानापित्रोरपालके तेनपापेनलिप्यामियदिनायामिनेगृहं दानंदातुंमन्वनस्ययो
नरायकरोनरः तेनपापेनलिप्यामियदिनायामिनेगृहं देवद्रव्यंगुरुद्रव्यंब्रह्मद्रव्यंहरेत्तुयः तेनपापेनलिप्यामियदिनायामिनेगृहं दीप
दीपनयःकुर्यात्पादंपादेनधावयेत् तेनपापेनलिप्यामियदिनायामिनेगृहं भर्तारंस्वामिनंमित्रमात्मानंबालमेवच गांविप्रंचगुरुंनारीयोमारय
तिदुर्मतिः तेनपापेनलिप्यामियदिनायामिनेगृहं अवेष्यावचयत्पापंयत्पापंदांभिकेजने अजितेंद्रियेषुयत्पापंपरदोषानुकीर्तने कृत
घ्नेचकदर्येचपरदाररतेनथा सदाचारविहीनेनपरपीडाप्रदायके परपंशन्यसुकेचकन्याविक्रयकारके हेतुकेबककर्मेनोचकूटसाक्ष्य-
प्रदेतथा एतेषांपातकंमह्यंयदिनायामिनेगृहं यत्पापंब्रह्महत्यायांपितृमातृवधेतथा तेनपापेनलिप्यामियदिनायामितेगृहं यत्पापंलु
ब्धकानांचयत्पापंगरदायिनां तेनपापेनलिप्यामियदिनायामितेगृहं द्विभार्यःपुरुषोयस्तुसमदृष्ट्यानपश्यति तस्यपापेनलिप्यामि
य० सकृद्दत्वातुयःकन्यांद्वितीयायप्रयच्छति तेनपापेनलिप्यामियदिनायामिनेगृहं कथायांकथ्यमानायामंतरंकुरुतेनरः तस्यपापे
नलिप्यामियदिनायामिनेगृहं परनिंदापरोनित्यंवेदनिंदापराहियः तस्यपापेनलिप्यामियदिनायामितेगृहं यस्यसंग्रहणीभार्याब्रा
ह्मणीचविशेषतः तस्यपापेनलिप्यामिय० येनश्राद्धेतुयोभुंक्ते पतितेनबहुधान्नक असच्छास्त्रार्थनिपुणेपुराणार्थविवर्जिते सूरेणपारव
डनिरतेक्रयविक्रयकेद्विजे एतेषांपातकंमह्यंयदिनायामितेगृहं एकार्कोमिष्टमश्नातिभार्यापुत्रविवर्जितः आत्मजांगुणसंपन्नांस-
मानसदृशेवरे नप्रयच्छतियःकन्यांनरोविज्ञानदुर्लभः तेनपापेनलिप्यामियदिनायामिनेगृहं मृगीवाक्यंननश्रुत्वालुब्धकोन्दमान
सः संत्यज्यबाणसंधानान्मुमोचहरिणींतदा तस्यासुकिमप्रभावेनलिंगस्यापिप्रपूजनात् मुक्तोसौपातकेःसर्वैस्तत्क्षणान्नात्रसंशयः
द्वितीयेप्रहरेप्राप्तेमध्यरात्रेमहानिशि तस्मिन्नेवक्षणेप्राप्तेपराप्राप्तामृगीतदा संत्रस्ताभयसंभ्रांतापतिमन्वेष्यतीमुहुः जालिमध्य-
स्थितेनाथदृष्टासालुब्धकेनतु पुनर्वृक्षस्यपत्राणित्रोटयित्वाकरेणतु क्षिप्तानिदक्षिणेभागेलिंगोपरिदैवक्षया तस्यावधार्यते
नाथोबाणोधनुषिसंधितः तिष्ठंस्तत्रेकचित्तेनकुटुंबार्थंजिघांसया निरीक्ष्यलुब्धकोयावद्धृणंतस्याविमुंचति तावन्मृग्यास-

संदृष्टोहःस्वातंविह्वलाभवत् अद्यैवमभगिनीमेहिलुब्धकेनविनाशिता ममकिंजीवितव्येनतस्यादुःखेनपीडिता १०० वरोमृत्युर्नशोकोवैहृ
ष्ट्वाव्याधंविशेषतः एवंसंचिंत्यहरिणीलुब्धकंवाक्यमब्रवीत् हरिण्युवाच धनुर्धरवरव्याधसर्वजीवनिकृंतन देहिमेवचनंचैकंपश्चा
त्त्वमांनिपातय आयाताहरिणीचैकामार्गेणानेनलुब्धक समायांताथवानैवसत्यंकथयसुव्रत तच्छ्रुत्वालुब्धकस्तत्रावास्मिताक्षणमस्तत न
स्यास्तुयादृशीवाणीअस्याश्चैवतुतादृशी साचैषाचागतानूनंप्रतिज्ञापालनायच अथवान्यासमायातायातयाकथितापुरा लुब्धकउवाच
अहोरात्रंकृतंकष्टंकुटुंबार्थेमयामृगि अधुनात्वांहनिष्यामिदेवानांस्मरणंकुरु व्याधोक्तंवचनंश्रुत्वा हरिणीदुःखिताभृशम् व्याधंप्राहरु
दित्वावैभोमांव्याधनिपातय तेजोबलंतथासर्वंनिर्दग्धंविरहाग्निना अहंप्राणान्विमोक्ष्यामिभोजनंतेनजायते बलवांश्चमहातेजा मे
दमांससमन्वितः अन्यश्चपीनगौरांगोमृगोह्यत्रागमिष्यति अहंचदुर्बलानूनंमेदमांसविवर्जिता केवलंपापभाक्त्वंहि ममप्राणविमोचकः
मार्गेणानेनभोव्याधमृगआयास्यतिस्फुटम् तंहत्वातेकुटुंबस्यतृप्तिर्नूनंभविष्यति तयोक्तंलुब्धकःश्रुत्वाकिंकरोमीत्यचिंतयत् मृ
ग्योक्तोहिसयुक्तार्थएषमेनिश्चयोहृदि संचिंत्यलुब्धकःप्राहमृगींशोकातुरांकृशाम् सत्यंवदमहाभागेप्रत्ययोमेयथाभवेत् तस्यतद्व
चनंश्रुत्वाहरिणीदुःखकर्शिता चक्रेसत्यप्रतिज्ञांतुव्याधस्याग्रेपुनःपुनः मृग्युवाच क्षत्रियस्तुरणंश्रुत्वासंग्रामंयोनगच्छति तस्यपापेन
लिप्येहंयदिनायामितेगृहम् भेदयंतितडागानिवापीश्चाथगवामपि मार्गस्थानंचयेघ्नंतिसर्वसत्वभयंकराः तेषांवैपातकंमह्यंयदि
नायामितेगृहम् एतच्छ्रुत्वातुव्याधेनसापिमुक्तामृगीतदा जलंपीत्वातुबहुशोगतावासघोयथागतम् जालिमध्येस्थितस्यास्यद्वितीयःप्र
हरोगतः त्रोटित्वाबिल्वपत्राणिपुनर्देवेनियोजयत् पीडितोतीवशीतेनक्षुधयागृहचिंतया शिवःशिवेतिजल्पन्वैननिद्रामुपलब्धवा
न् कृतंस्मरार्चनंतेनप्रहरेप्रहरेगते वीक्ष्यंश्चैवदिशःसर्वाःसत्वमार्गान्निरीक्षयत् लुब्धकेनाथदृष्टोसौहरिणश्चत्वलक्षणः विलोकय
न्दिशःसर्वामार्गमाणोमृगीपदः सौभाग्यबलदर्पाढ्योमदनोन्मत्तपीवरः तंदृष्ट्वाबाणमाकृष्यह्याकर्णंतुष्टमानसः बाणंमुंचतियावद्वै-
तावदृष्टोमृगेणतु कालरूपंतुतंदृष्ट्वामृगश्चिंतितवान्भृशम् निश्चितंभवितामृत्युर्गोचरस्यसत्वोयतः भार्याप्राणसमामेऽघव्याधे

नेहनिशानिता तयाविरहितस्याद्यनूनंमृत्युर्भविष्यति हाहाकालकृतंपापंयन्मद्भार्यादुःखमागतम् भार्ययानसमंसौख्यंगृहेपिचवनेपि
च तयाविनानधर्मोस्तिनार्थकामौविशेषतः वृक्षमूलेऽपिदयितायत्रतिष्ठतितद्गृहम् प्रासादोऽपितयाहीनःकांतारादतिरिच्यते धर्मका
मार्थकार्येषुभार्यापुंसःसहायिनी विदेशेचगतस्यापिसैवविश्वासकारिणी नास्तिभार्यासमोबंधुर्नास्तिभार्यासमंसुखम् नास्तिभार्यासम-
लोकेनरस्यार्तस्यभेषजम् यस्यभार्यागृहेनास्तिसाध्वीचप्रियवादिनी अरण्यंतेनगंतव्यंयथारण्यंतथागृहं एकाप्राणसमामेभूद्द्वितीयाप्राणदा
मम इत्येवंचिंतयित्वातुलुब्धकंवाक्यमब्रवीत् मृगउवाच शृणुव्याधनरश्रेष्ठत्वामिषाहारभोजन यत्तेपृच्छाम्यहंवीरतद्भवान्वक्तुमर्हसि आग
तंहरिणीयुग्मंकेनमार्गेणतद्वनम् त्वयाविनाशितंवाथसत्यंकथयमेऽधुना तस्यतद्वचनंश्रुत्वालुब्धकोविस्मयंगतः असावपिनसामान्योदेवताक
ल्पनुत्तमा उवाचलुब्धकःसद्यस्तस्याग्रेवाक्यमुत्तमम् लुब्धकउवाच तेगतेऽनेनमार्गेणसत्यंकृत्वाममाग्रतः ताभ्यांदत्तोसिभुक्त्यर्थंममत्वम
धुनानघ संप्रतित्वांहनिष्यामिनैवमोक्ष्यामिकर्हिचित् मृगउवाच तत्सत्यंकीदृशंताभ्यांवाक्यमुक्तंतवाग्रतः येनतेप्रत्ययोजातोमुक्तंत-
द्धरिणीद्वयम् तेगतेकेनमार्गेणयेमुक्तेव्याधतेऽधुना व्याधउवाच तेगतेऽनेनमार्गेणस्वमाश्रमपदंप्रति व्याधेनकथितास्ताभ्यांशपथायेहृ
तास्तदा तच्छ्रुत्वावचनंतस्यहरिणोहृष्टमानसः मृगउवाच ताभ्यांव्याधयदुक्तंचतत्करोमिनचान्यथा प्रभातेतद्गृहंनूनमागमिष्यामि
निश्चितं भार्यांऋतुमतींमेद्यकामार्तांप्यधुनाभृशम् गत्वागृहेयभुक्त्वातामापृच्छ्यचसुहृज्जनान् शपथैरागमिष्यामिगृहंतेनात्रसंशयः म
द्गृहंस्वगृहेनाद्यनेतुंशक्तःकथंचन तद्धत्यामरणंमेस्याद्यद्यहंघातितस्त्वया लुब्धकउवाच असत्यंभाषसेधूर्तप्रतारयसिमांवृथा कृत्वा
मृत्स्थितंतत्रनदागच्छतिकोल्पधीः व्याधस्यवचनंश्रुत्वाहरिणोवाक्यमब्रवीत् शपथैरागमिष्यामियथातेप्रत्ययोभवेत् व्याधउवाच
मृगत्वंशपथान्ब्रूहिविश्वासोमेभवेद्यथा यथाहिप्रेषयामित्वांस्वगृहंप्रतिकामुक मृगउवाच भर्तारंवंचयेद्यास्त्रीस्वामिनंवंचतेनरः
मित्रंचवंचयेद्यस्तुगुरुद्रोहंकरोतियः विरसंतुरसंदद्यात्प्रेमभेदंकरोतियः भेदयेद्यस्तडागानिप्रासादंपातयेत्तथा प्रवासशीलोयोवि २०५
प्रःक्रयविक्रयकारकः संध्यास्नानविहीनश्चवेदशास्त्रविवर्जितः मद्यपास्त्रीषुरक्ताश्चयेपरनिंदारताश्चये परस्त्रीसेवकाविप्राःपरपैशून्यसूच

काः शूद्रान्नभोजिनोयेन्वभार्यापुत्रांस्त्यजंतिये वेदनिंदापरायेन्ववेदशास्त्रार्थनिंदकाः तेषांवैपातकंमह्यंयदिनायामितेगृहम् भार्यासंग्रहणा
यस्यव्रतशौचविवर्जिता सर्वाशीसर्वविक्रेताद्विजानामपिनिंदकः विप्रवर्णेषुशुश्रूषांयः शूद्रोनकरोतिवै विप्रवाक्यंपरित्यज्यपाखंडाभि
रताःसदा ब्रह्मचर्यरताःशूद्रायेचपाखंडसंश्रिताः तेषांवैपातकंमह्यंयदिनायामितेगृहम् तिलास्तैलंघृतंक्षौद्रंकंबलंलवणंगुडम् लोहंला
क्षादिकंसर्वरंगान्नानाविधानपि विक्रियात्तेनशूद्रश्चेत्तत्रदोषोनविद्यते मद्यंमांसंविषंदुग्धंनीलंचवृषभंतथा मीनंक्षीरंसर्पकूटंचित्रा
न्नकफलानिच मद्यादिविक्रयेयस्तुशूद्रोपिमदमोहितः आदित्यंविष्णुमीशानंगणाध्यक्षंतुपार्वतीम् एतान्त्यक्त्वागृहेमूढोयोन्यंपूज
यतेनरः तस्यपापेनलिप्यामियदिनायामितेगृहम् योगांस्पृशतिपादेनद्यूतादिनैःकैवसर्प्यति एकाकीमिष्टमश्नातितस्यपापस्यभाग्य
हम् मातापित्रोरपोष्टाचक्रियामुद्दिश्यपाचकः कन्याशुल्कोपजीवीच देवब्राह्मणनिंदकः गोग्रासंहंतकारंच अतिथीनांचपूजनम् येन
कुर्वंतिगृहिणस्तेषांपापंभवेन्मम वृंताकंचपटोलंचकालिंगंतुंबिकाफलम् मूलकंलशुनंकंदंकुसुंभंकनशाककम् एतानिभक्षयेद्य
स्तुनरोवैज्ञानदुर्बलः तस्यवैजायतेशुद्धिश्चांद्रायणशतैरपि एतेषांपातकंमह्यंयदिनायामितेगृहम् यः पठेत्स्वरहीनंचलक्षणेनविवर्जि
तं इयासुःसंचरन्विप्रोवेदानुद्धारयेत्तुयः विप्रस्यपठतःकापिशृणोतिइहचांत्यजः वेदोपजीविकोविप्रोऽतिलोभाच्छूद्रभोजनः तस्यपापे
नलिप्यामियदिनायामितेगृहम् शूद्रान्नेषुचयेसक्ताःशूद्रसंपर्कदूषिताः तेनपापेनलिप्यामियदिनायामितेगृहम् नेरवकश्चित्रकर्तावै
द्योनक्षत्रसूचकः कूटकर्ताद्विजोयश्चतस्यपापस्यभाग्यहम् कूटसाक्षीमृषावादीपरद्रव्यस्यतस्करः परदाराभिगामीचयेचविश्वासघा
तकाः द्रव्येद्रव्यंविनिक्षिप्यपानकूटसमाश्रिताः वेश्यारताःसदायेचदानदातुर्निवारकाः भर्त्तारंद्रव्यहीनंचकुरूपंव्याधिपीडितम् यान
पूजयतेनारीरूपयौवनगर्विता एकादशीतथामाघेयासौशिवचतुर्दशी तांपूर्वविद्धांकुर्वंतितेषांपापस्यभाग्यहम् अथकिंबहुनोक्तेनमो
लुब्धकतवाग्रतः यदिनायामितेगेहंममसत्यंभवेत्तव तेनवाक्येनसंतुष्टोव्याधोवैवातकल्मषः संहृत्यधनुषोबाणंमृगोमुक्तोगृहंप्र
ति जलंपीत्वातुहरिणःप्रविष्टोगहनंप्रति गतोसौतेनमार्गेणागतंयेनमृगीद्वयम् लुब्धकेनतदानत्रजालिमध्येस्थितेनाहि मयूरपिबिल्वपत्राणि

चोटथित्वामतर्थ्यंच शिवः शिवेतिजल्पन्नेत्याशक्रयातोनिजाश्रमम् अथोदितेसूर्यबिंबे अकामाज्जागरेकृते पापान्मुक्तोप्यसौसद्यःशि
वपूजाप्रभावतः यावद्दिशोनिरीक्षेतनिराशोभोजनंप्रति तावच्छिशुवृतात्वान्यामृगीतत्रसमागता दृष्ट्वामृगींतदाव्याधोबाणंधनुषि
योजयत् यावन्मुंचत्यसौबाणंतावदुक्तंतयातदा माबाणान्मुंचधर्मात्मन्धर्मंमामुंचसुव्रत अहंनवध्यासर्वेषामितिशास्त्रविनिश्चयः शया
नोमैथुनासक्तस्तनपोव्याधिपीडितः नहंतव्योमृगोराज्ञामृगीचशिशुनावृता अथवाधर्ममुत्सृज्यमांहनिष्यसिमानद् बालकंस्वगृहेमु
क्त्वासरवीनांचनिवेद्यवै शपथैरागमिष्यामिशृणुव्याधवचोमम यास्वभर्तारमुत्सृज्यपरंपुंसिरतासदा तस्याःपापेनलिप्यामियदिनायया
मितेगृहम् मद्यंमांसंविषंदुग्धंनीलीकुंभफलानिच एतानिविक्रयेद्यस्तुनरोमोहसमन्वितः तेषांपापेनलिप्यामियदिनायामितेगृहम् तस्या
स्तद्वचनंश्रुत्वाव्याधोविस्मयमागमत् ततोव्याधेनसामुक्तागतावैनिजमंदिरम् व्याधोपितत्स्थलंत्यक्त्वाजगामस्वगृहंप्रति सर्वेषांवचनं-
ध्यायन्मृगाणांसत्यवादिनाम् एतेषांघातकोनित्यमहंयास्यामिकांगतिं क्रमाद्गृहंसमायाताबालकाःक्षुधयार्दिताः नान्नंमांसंगृहेतस्यभो
जनंयेनजायते निरामिषंतुतंदृष्ट्वानिराशास्तेऽभवंस्तदा व्याधोपिचतदातत्रतेषांवाक्यानिसंस्मरन् नभोजनंननिद्रांचलभतेविस्मि
तस्यवै आगमिष्यंतितेनूनंशपथैरपियंत्रिताः नतानहंवधिष्यामिसतांव्रतमनुस्मरन् लुब्धकेनतदामुक्तोहरिणःशपथैर्वृतः स्वमा-
श्रमंतुसंप्राप्तोयत्रतद्धरिणीद्वयम् सद्यःप्रसूतासाचैकाद्वितीयारतिलालसा तृतीयापिसमायाताबालकैर्बहुभिर्वृता सर्वाःसमेताए
कत्रमरणेकृतनिश्चयाः परस्परंप्रजल्पंत्योलुब्धकस्यविचेष्टितम् आयाताहरिणीमुक्त्वारूपाढ्यांरतिलालसाम् कृतहृत्योभवत्ताभि
स्तेभ्योवाक्यमथाब्रवीत् युष्माभिरिहसंस्थेयंकर्तव्यंप्राणरक्षणम् व्याघ्राद्द्वीपालुब्धकेभ्योबालकानांप्रयत्नतः योहिसत्यानुगोभार्यांनमुंक्ते
मोहसंवृतः भ्रूणहासतुविज्ञेयस्तस्यजन्मनिरर्थकम् संतानात्स्वर्गमाप्नोतिइहकीर्तिंचशाश्वतीम् संतानार्थंयत्नतःपाल्यास्वर्गसौख्यप्रदा
यिका अपुत्रस्यगतिर्नास्तिइहलोकेपरत्रच येनकेनाप्युपायेनपुत्रमुत्पादयेत्पुमान् मयाद्यवनंगंतव्यंयत्रव्याधस्यमंदिरम् सत्यंतु
पालनीयंस्यात्सत्येधर्मःप्रतिष्ठितः एतच्छ्रुत्वातुतानार्योवाक्यमूचुःप्र[illegible]स्थिताः वयमप्यागमिष्यामस्त्वयासार्द्धंमृगोत्तम तथा

तेविप्रियंकांत नस्मरामःकदाचन पुष्पितेषुवनांतेषु नदीनांसंगमेषुच कंदरेषुच॥ अनोसुखामीरक्षितावयम् नकार्यमद्यचास्माकं
क्रीडितेनत्वयाविना नारीणांपतिहीनानांजीवितेः किंप्रयोजनम् मितंददातिहिपितामितंभ्रातामितंसुतः अमितस्यहिदातारंभर्ता
रंकानपूजयेत् अपिद्रव्ययुतानारीबहुपुत्रसुहृद्वृता साशोच्याबंधुवर्गस्यपतिहीनाकुलांगना गंधमाल्यैःसुवस्त्रैःभूषयंतभर्तुरग्र
तः नातंत्रीवाद्यतेवीणानाचक्रोभ्रमतेरथः नापतिःसुखमाप्नोतिनारीपुत्रशतैर्वृता नास्तिभर्त्रासमोधर्मोनास्तिधर्मसमःसुहृत् नास्ति
भर्त्रासमोनाथःस्त्रीणांभर्तापरागतिः एवंविलप्यताःसर्वामरणेकृतनिश्चयाः बालकैस्तैःसमायुक्ताभर्तृशोकेनदुःखिताः मृगस्तासांवचः
श्रुत्वाहृदितापपरोभवत् गंतव्यंकिंनगंतव्यंमयाव्याधस्यमंदिरम् एकतस्तुकृतंरक्षन्कुटुंबस्यक्षयोभवेत् नरहितंकंनचेघाभ्रमममसत्यं
क्षयंव्रजेत् वरंपुत्रस्यमरणंभार्यायाआत्मनस्तथा सत्येत्यक्तेनरोनित्यमाकल्पंरौरवंव्रजेत् तस्मात्सत्यंपालनीयंनरैःश्रेयोर्थिभिःस
दा एवंसंचिंत्यहरिणोधर्मान्हृदिमनोरमान् ताभिःसहेवशनकैःक्षणात्तस्याश्रमंययौ तस्मिन्सरसिसंस्नात्वाकर्मन्यासंचकारह तल्लिं
गंप्रणिपत्याशुहृदिध्यायन्सदाशिवम् स्नानंपानंपरित्यज्यमैथुनंभोगमेवच कामंक्रोधंतथालोभंमायांमोक्षविनाशिनीम् वंदयित्वातु
तंदेवंलुब्धकाभिमुखंययौ तस्यभार्याश्चपुत्राश्चमरणेकृतनिश्चयाः अनशनंव्रतंगृह्यपृष्ठलग्नाःसमाययुः भार्यापुत्रैःपरिवृतोमृगस्तं
देशमागमत् क्षुधितैर्बालकैर्युक्तोलुब्धकोयत्रतिष्ठति मृगस्तंदेशमागत्यकुटुंबेनसमन्वितः पालयन्सर्ववाक्यानिलुब्धकंवाक्यमब्रवी
त् मृगउवाच हनमांप्रथमंव्याधपश्चादेतान्क्रमेणतु बालकानिततःपश्चाद्धन्यतांमाविलंबय लुब्धकेस्तुमृगाणांमस्यानास्तिदोषःक
दाचन वयंयास्यामःस्वर्लोकंसत्यपूतानसंशयः तथातेसकुटुंबस्यप्राणपुष्टिर्भविष्यति एतच्छ्रुत्वातुवचनंमृगेणपरिभाषितम्
आत्मानंनिंदयित्वातुलुब्धकोवाक्यमब्रवीत् व्याधउवाच अहोमृगमहासत्वगच्छगच्छस्वमाश्रमम् आमिषेणनमेकार्यंय
द्भाव्यंतद्भविष्यति जीवानांघातनेचैवविमुखस्तर्जनेतथा नैवपापंकरिष्यामिकुटुंबार्थेकदाचन त्वंगुरुर्ममधर्मात्मापुपदेष्टा
मृगोत्तम गच्छगच्छमृगश्रेष्ठकुटुंबेनसमन्वितः मयात्यक्तानिशस्त्राणिसत्यधर्मसमाश्रितः मृगउवाच कर्मन्यासमहंकृत्वा

त्वत्सकाशमिहागतः हन्यतांहन्यतांशीघ्रंनतेपापंभविष्यति मयादत्तापुरावाक्तनयाबद्धोनयाम्यहम् एतच्छ्रुत्वातुवचनंलुब्धकोवाक्य मब्रवीत् लुब्धकउवाच त्वंबंधुस्त्वंगुरुस्त्राताचमेमातापितासुहृत् मयात्यक्तानिशस्त्राणित्यक्तंमायादिकंबलम् कस्यभार्यासुताःक स्यकुटुंबंकस्यतन्मृग तैःस्वकर्मचभोक्तव्यंमृगगच्छयथासुखम् इत्युक्त्वासतदातूर्णंबभंजसशरंधनुः मृगंप्रदक्षिणीकृत्यनमस्कृत्य क्षमापयत् एतस्मिन्नंतरेनेदुर्देवदुंदुभयोदिवि आकाशात्पुष्पवृष्टिस्तुपपातसुमनोहरा तदादूतःसमायातोविमानंगृह्यशोभनम् देवदूतउवाच अहोव्याधमहासत्वसर्वसत्वक्षयंकर विमानमिदमारुह्यसदेहःस्वर्गमाविश शिवरात्रिप्रभावेनपातकंतेक्षयंगतम् उप वासस्तुसंजातोनिशिजागरणंकृतम् यामेयामेकृतापूजाअज्ञानेनशिवस्यच सर्वपापविनिर्मुक्तोगच्छत्वंरुद्रमंदिरम् विमानंचसमारु ह्यसत्याच्चित्रपदंव्रज मृगराजमहासत्वभार्यापुत्रसमन्वितः भार्यात्रितयसंयुक्तोनक्षत्रपदमाप्नुहि तवनाम्नातुतदृक्षंलोकेख्यातंभवि ष्यति एतच्छ्रुत्वातुवचनंलुब्धकेनसमन्वितः विमानंतुतदारुह्यनक्षत्रपदमागतः हरिणीद्वयमन्वेष्टुंपृष्ठतोमृगमेवच तारात्रितयसं युक्तंमृगशीर्षंतदुच्यते बालकद्वितयंचाग्रेतृतीयापृष्ठतोमृगी पृष्ठतस्तत्रसंप्राप्तामृगशीर्षस्यसन्निधौ मृगराट्दृश्यतेद्यापिकृक्षंव्योमगमुत्त मम् उपवासंकरिष्यंतिजागरेणसमन्वितम् यथोक्तशास्त्रमार्गेणतेषांमोक्षोनसंशयः शिवरात्रिसमंनास्तिव्रतंपापक्षयावहम् यत्कृत्वासर्वपापेभ्यो मुच्यतेनात्रसंशयः अश्वमेधसहस्राणिवाजपेयशतानिच प्राप्नोतितत्फलंसर्वंनात्रकार्याविचारणा इतिश्रीलिंगपुराणेउमामहेश्वरसंवादे शिवरात्रिव्रतकथासमाप्ता अथोद्यापनम् स्कंदउवाच व्रतस्योद्यापनंकर्मकथंकार्यंचमानवैः कोविधिःकानिकर्माणिकथयस्वममप्रभो ईश्वरउवाच शृणुषण्मुखयत्नेनलोकानांहितकाम्यया उद्यापनविधिंचैवकथयामितवाग्रतः यदासंजायतेवित्तंभक्तिश्रद्धासमन्वितम् सएवव्र तकालःस्याद्यतोनित्यंहिजीवितम् चतुर्दशाब्दंकर्तव्यंशिवरात्रिव्रतंशुभम् एकभक्तंत्रयोदश्यांचतुर्दश्यामुपोषणम् संपाद्यसर्वसंभा रान्मंडपंतत्रकारयेत् वस्त्रैःपुष्पैःसमाच्छन्नंपट्टवस्त्रैश्चशोभितम् तन्मध्येलेखयेद्दिव्यंलिंगतोभद्रमंडलं अथवासर्वतोभद्रंमंडपांतःप्रक ल्पयेत् शोभोपशोभासंयुक्तंदीपैःसर्वत्रसोज्ज्वलम् आचार्यंपूजयेत्तत्रऋत्विग्भिःसहितंशुचिः शिवरूपाश्चतेविप्राःपूज्याश्चंदनपुष्पकैः

अनुज्ञातश्चतैर्विप्रैः शिवपूजांसमारभेत् रुद्रनाम्नानमंत्रेणब्राह्मणानपिपूजयेत् अव्रणंसजलंकुंभंतस्योपरितुविन्यसेत् सौवर्णं
जतंताम्रंमृन्मयंवानवंदृढम् कुंभोपरिन्यसेद्देवं उमयासहितंशुभम् सौवर्णेप्यथवारौप्येवृषभेसंस्थितंशुभे रत्नालंकरणैर्हेमैरलंकृ
त्यप्रपूजयेत् पलेनवातदर्धेनतदर्धार्धेनवापुनः वस्त्रयुग्मेनसंवेष्ट्यबिल्वपत्रैःप्रपूजयेत् उमामहेश्वरींमूर्तिंपूजयेद्वृषभेस्थिताम्
सोमंचसगणंचैवपूजयित्वामहेश्वरम् पुराणस्तोत्रपाठैश्चरात्रिशेषंनयेद्बुधः ततःप्रभातसमयेकृत्वासंध्यादिकाःक्रियाः ततःपूजांप्रकुर्वी
ततनोहोमंसमाचरेत् तिलव्रीहियवैश्चैवपायसान्नेनभक्तितः त्र्यंबकमितिमंत्रेणत्र्योंनमःशंभवे तिच गौरीर्मिमायमंत्रेणशतमष्टोत्तर
हूयम् होमंकुर्याच्चमतिमान्बिल्वपत्रैश्चनामभिः अजैकपादहिर्बुध्न्योभवःशर्वउमापतिः रुद्रःपशुपतिःशंभुर्वरदःशिवईश्वरः महादे
वो हरोभीमोनामान्येवंचतुर्दश पूर्णाहुतिंचतुर्हुत्वाकर्मशेषंसमापयेत् एतैर्होमःप्रकर्तव्यःकुंभदानेऽपितान्स्मरेत् भोज्यंक्षमापयेद्देव
मेभिर्नामपदैःपृथक् प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो तवरूपप्रदानेनममसंतुमनो
रथाः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः सवस्त्रांगांततोदद्यात्व्रतसंपूर्णहेतवे अन्येभ्योपियथाशक्त्याब्राह्मणेभ्योहिदक्षि
णाम् चतुर्दशप्रदातव्याविप्रेभ्योजलपूरिताः कुंभा यज्ञोपवीतानिवस्त्राणिचपृथक्पृथक् सुसूक्ष्माणिचवस्त्राणिशय्यांसोपस्क
रांतथा द्वादशैवतुगादद्यात्परिधानादिकंतथा अथवादक्षिणामेवप्रदद्यात्तुष्टयेद्विजान् व्रतमेतत्कृतंयन्मेपूर्णंवापूर्णमेवच सर्वंसंपूर्ण
तांयातुप्रसादाद्भवतांमम इतिसंप्रार्थ्यतान्विप्रान्प्रणम्यचपुनःपुनः ततश्चस्वजनैःसार्द्धंस्वयंभुंजीतसुव्रती इतिश्रीस्कंदपुराणेशि
वरात्रिव्रतोद्यापनंसंपूर्णम् इतिचतुर्दशीव्रतानिसमाप्तानि अथपौर्णिमाव्रतानिलिख्यंते चैत्रीपौर्णमासीसामान्यनिर्णया
सरैव अत्रविशेषोनिर्णयामृतेविष्णुस्मृतौ चित्राऋक्षयुताचैत्रीपरास्नानादिकर्मणि चित्रवस्त्रप्रदानेनसौभाग्यमाप्नोतिवैनरः मंदा
केचगुरौवारेयदाभवतिपूर्णिमा तत्राश्वमेधजंपुण्यंस्नानश्राद्धादिभिर्भवेत् वायवीये संवत्सरकृतार्चायाःसाफल्यायाखिलंसुरान्
दमनेनार्चयेच्चैत्र्यांविशेषेणसदाशिवम् इयंमन्वादिरपि इतिचैत्रीपूर्णिमा वैशाखपौर्णमास्यांविशेषःस्मर्यते भविष्ये वैशाखीकार्ति

काम्याधीतिथयोतीवपूजिताः स्नानदानादिहीनास्तानन्नेयाःपांडुनंदन अथज्येष्ठकृष्णपौर्णमास्यांअमायांवावटसावित्रीव्रतंलिख्यते इयंचपूर्व
विद्धाग्राह्या भूतविद्धानकर्तव्याअमावास्याचपौर्णिमा वर्जयित्वामुनिश्रेष्ठसावित्रीव्रतमुत्तमम् इतिब्रह्मवैवर्तात् ज्येष्ठमासिसितेपक्षे
द्वादश्यांरजनीमुखे इत्युपक्रम्य व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौस्थिराभवेत् ज्येष्ठमासिसितेपक्षेपूर्णिमायांतथाव्रतम् चीर्णंव्रतंम
हाभक्त्याकथितंतेमयानघे धर्मराजउवाच इतिदाक्षिणात्याश्चैवमाचरंति पाश्चात्यादयस्तुअमावास्यायामाचरंति तच्चोक्तंनि
र्णयामृतेभविष्ये अमायांत्वतथाज्येष्ठेवटमूलेमहासती त्रिरात्रोपोषितानारीविधिनानेनपूजयेत् अशक्तौतुत्रयोदश्यांनक्तंकुर्या-
ज्जितेंद्रिया अयाचितंचतुर्दश्याममायांसमुपोषणमिति हेमाद्र्यादिभिस्तुभाद्रपदपौर्णमास्यामिदमुक्तम् तेतुतदानीमाचरंति यदात
ष्टादशघटिकाचतुर्दशीतदापरैव पूर्वविद्धैवसावित्रीव्रतेपञ्चदशीतिथिः नाड्योष्टादशभूतस्यतत्रकुर्यात्परेहनीतिमाधवोक्तेः वस्तुत
स्तुभूतविद्धानिषेधएव भूतोष्टादशनाडीभिरितिवाक्यम् अन्यथासावित्रीव्रतेष्टादशनाडीवेधदोषकल्पनायां निषेधांतरकल्पनागौ
रवम् ज्येष्ठमासित्रयोदश्यांदंतधावनपूर्वकम् दंतकाष्ठंशुभंशुक्लंजातीयंचतुरंगुलम् तस्यापराह्णसमयेनद्यादौविमलेजले तिलामल
ककल्केनकेशान्संशोध्ययत्नतः स्नात्वाचैवशुचिर्भूत्वावटंसिंचेद्बहूदकैः वृद्धिःक्षयेनतथारोगेऋतुमत्यांतथैवच कारयेद्विप्रहस्तेनसर्वंसं
पद्यतेशुभम् इदंचत्रयोदशीमारभ्यपौर्णिमांतंकर्तव्यम् सधवाविधवावापिसपुत्रापुत्रवर्जिता भर्तुरायुर्विवृद्ध्यर्थंकुर्याद्व्रतमिदंशुभम्
ज्येष्ठेमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता स्नात्वाचैवशुचिर्भूत्वानियमंकारयेत्ततः अथव्रतविधिः वटसमीपेगत्वातत्रसंस्कारयुक्तवट
पूजाउक्ता आचम्यमासपक्षाद्युल्लिख्यममभर्तुःपुत्राणांआयुरारोग्यप्राप्तयेजन्मजन्मन्यवैधव्यप्राप्तयेचसावित्रीव्रतमहंकरिष्ये इतिसंक
ल्प्य वटमूलेस्थितोब्रह्मावटमध्येजनार्दनः वटाग्रेतुशिवंविद्यात्सावित्रीवटसंयुता वटसिंचामितेमूलंसलिलैरमृतोपमैः सूत्रेणावेष्ट
येद्भक्त्यागंधपुष्पाक्षतैःशुभैः नमोवटसावित्रीभ्यांभ्रामयंतीप्रदक्षिणाम् सावित्रींचवटंसम्यगेभिर्मंत्रैःप्रपूजयेत् एवंविधिंबहिःकृ
त्वासम्यग्वैगृहमागता हरिद्राचंदनेनैवगृहमध्येलिखेद्वटम् तत्रोपविश्यसंकल्प्यपूजांकार्याप्रयत्नतः तिथ्यादिसंकीर्त्यममजन्मजन्मनिअ

वैधव्यप्राप्तये भर्तुश्चिरायुरारोग्यसंपदादिकामनया सावित्रीव्रतमहं करिष्ये नियममंत्रः त्रिरात्रं लंघयित्वा तु चतुर्थे दिवसे त्वहम् चंद्रा
यार्घ्यं प्रदत्त्वा च पूजयित्वा कृतां सती मिष्टान्नानि यथाशक्त्या भोजयित्वा द्विजोत्तमान् भोक्ष्येहं तु जगद्धात्रि निर्विघ्नं कुरु मे शुभे इति निय
ममंत्रः अथ पूजा ततः भूमिं स्पृष्ट्वा महीद्यौः पृथिवीति ऋक् ओषधयः सं० आकलशेषु कलशं निधाय पंचपल्लवसप्तमृत्तिकाहिर-
ण्ययवान्कुंभे निक्षिप्य तदुपरि वंशपात्रं निधाय तस्योपरि सप्तधान्यानि पृथक् स्थाप्यानि तदुपरि वस्त्रं वस्त्रोपरि द्वात्रिंशद्भुक परिमि
तां वालुकाप्रतिमां ब्रह्मणासह संस्थाप्य पूजयेत् पद्मपत्रासनस्थश्च ब्रह्माकार्यश्चतुर्मुखः सावित्री तस्य कर्तव्या वामोत्संगगता तथा आ
दित्यवर्णा धर्मज्ञा साक्षमाला करा तथा ध्यानं ब्रह्मणा सहितां देवीं सावित्रीं लोकमातरम् सत्यव्रतं च सावित्रीं वटं चावाहयाम्यहम् आवाहनं
ब्रह्मणासह सावित्रि सत्यवत्सहिते प्रिये हेमासनं गृह्यतां तु धर्मराजसुरेश्वर आसनं गंगाजलं समानीतं पाद्यार्थं ब्रह्मणः प्रिये भक्त्या दत्तं धर्म
राजसावित्रि प्रतिगृह्यताम् पाद्यं भक्त्या समाहृतं तोयं फलपुष्पसमन्वितम् अर्घ्यं गृहाण सावित्रि मम सत्यव्रतप्रिये अर्घ्यं सुगंधि सहकर्पूरसु
रभि स्वादु शीतलम् ब्रह्मणासह सावित्रि कुरुष्वाचमनीयकं आचमनीयं पयो दधि घृतं चैव शर्करा मधुसंयुतम् पंचामृतेन स्नपनं प्रीयतां पर
मेश्वरि पंचामृतस्नानम् मंदाकिन्याः समानीतं हेमांभोरुहवासितम् सावित्रि ब्रह्मराजेन स्नानार्थं प्रतिगृह्यताम् स्नानम् सूक्ष्मतंतुयुतं व
स्त्रयुग्मं कार्पाससंभवम् सावित्रि सत्यवत्कांते भक्त्या दत्तं प्रगृह्यताम् वस्त्रं सावित्रि सत्यवत्कांते धर्मराजसुरेश्वरि सावित्रि ब्रह्मणा सार्द्धमु
पवीतं प्रगृह्यताम् उपवीतं भूषणानि च दिव्यानि मुक्ताहारयुतानि च त्वदर्थमुपक्लृप्तानि गृहाण शुभलोचने भूषणानि कुंकुमाग
रुकर्पूरकस्तूरीरोचनायुतम् चंदनं तु मया दत्तं सावित्रि प्रतिगृह्यताम् चंदनं अक्षताश्च सुरश्रेष्ठ कुंकुमाक्ताः सुशोभनाः मया निवेदिता भ
क्त्या गृहाण परमेश्वरि अक्षताः हरिद्रा कुंकुमं चैव सिंदूरं कज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तं सावित्रि प्रतिगृह्यताम् सौभाग्यद्रव्यम्
माल्यादीनि सुगंधीनि मालत्यादीनि वै प्रभो मयाहृतानि पुष्पाणि पूजार्थं प्रतिगृह्यताम् पुष्पाणि अथांगपूजा सावित्र्यै नमः पादौ पूज
यामि वटप्रियायै० जंघे० कमलपत्राक्ष्यै० कटी पूज० भूतधारिण्यै० उदरं० गायत्र्यै० कंठं पू० ब्रह्मणः प्रियायै० मुखं० सौभाग्यदात्र्यै० शिरः

पू॰ अथब्रह्मसत्यपूजा धात्रेनमः पादौपूजयामि विधात्रेन॰ जंघेपू॰ स्रष्टे॰ उरू॰ प्रजापतये॰ मेढ्रं॰ परमेष्ठिने॰ कटीपू॰ अग्निरूपाय॰ ना
भिं॰ पद्मनाभाय॰ हृदयंपू॰ वेधसेन॰ बाहू॰ विधयेन॰ कंठं॰ हिरण्यगर्भायन॰ मुखं॰ ब्रह्मणे॰ शिरःपू॰ विष्णवे॰ सर्वांगंपू॰ देवद्रुमरसोद्भूतः कृ
लागरुसमन्वितः आघ्रेयतामयंधूपः सावित्रीप्रतिगृह्यताम् धूपम् चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणं आर्तिक्यंकल्पितंभक्त्यागृह्णी
णपरमेश्वरि दीपं॰ अन्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् मयानिवेदितंभक्त्यानैवेद्यंप्रतिगृह्यताम् नैवेद्यं॰ मध्येपानीयं॰ उत्तरापोशनं
मुखप्रक्षालनं॰ इदंफलमितिफलं॰ पूगीफलमितितांबूलं॰ हिरण्यगर्भेतिदक्षिणां॰ नमोब्रह्मण्यदेविलंसततंब्रह्मणःप्रिये पूजितासिद्विजैः
सर्वैःस्त्रीभिर्मुनिगणैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयासुशोभने मयादत्तांचपुष्पांजलिंगृहाणनमोस्तुते पुष्पांजलिं॰ ततोऽर्घ्यत्रयंदद्या
त् ॐकारपूर्वकेदेविसर्वदुःखनिवारिणि देवमातर्नमस्तुभ्यंसौभाग्यंचप्रयच्छमे इदमर्घ्यं॰ पतिव्रतेमहाभागेब्रह्माणिचशुचिस्मिते
दृढव्रतेदृढमतेभर्तुश्चप्रियवादिनि अर्घ्यं॰ अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसौख्यंचगृहाणार्घ्यंनमोस्तुते अर्घ्यं॰
३ सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वंशचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्व
मेवचजगन्माताखमुद्धरवरानने यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भस्मीभवतुतत्सर्वंअवैधव्यंचदेहिमे अवियोगोयथादे
वसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयाज्जन्मनिजन्मनि इतिप्रार्थना सुवासिन्यस्ततःपूज्यादिवसेदिवसेगते सिंदूरं
कुंकुमंचैवतांबूलंचपवित्रकम् तथादद्याच्चशूर्पाणिभक्ष्यभोज्यादिकंसदा माहात्म्यंचैवसावित्र्याःश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यं
सतीनांचरितंशुभम् इतिपूजाविधिः ततःव्रतपूजासांगतासिद्ध्यर्थंब्राह्मणायवायनप्रदानंकरिष्ये फलवस्त्रसमायुक्तंसौभाग्यद्रव्य
संयुतम् वंशपात्रेनिधायादौब्राह्मणायनिवेदयेत् उपायनमिदंद्रव्यंव्रतसंपूर्णहेतवे वाणकंद्विजवर्यायसहिरण्यंददाम्यहम् इति
वायनम् इतिवटसावित्रीपूजनंसमाप्तम् अथकथा सनत्कुमारउवाच कुलस्त्रीणांव्रतंदेवमहाभाग्यंतथैवच अवैधव्यकरं
स्त्रीणांपुत्रपौत्रप्रदायकम् ईश्वरउवाच आसीन्मद्रेषुसर्वात्माज्ञानीपरमधार्मिकः नाम्नाचाश्वपतिर्वीरोवेदवेदांगपारगः अनप

त्योमहाबाहुः सर्वैश्वर्यसमन्वितः सपत्नीकस्तपस्तेपेसमाराधयतेनृपः सावित्रींचप्रसावित्रींजपन्नास्तेमहामनाः जुहोतिचैवसावित्रीम
त्यापरमयायुतः ततस्तुष्टातुसावित्रीसादेवीद्विजसत्तम साविग्रहवतीदेवीतस्यदर्शनमागता भूर्भुवः स्वर वत्येषासाक्षसूत्रकमंडलुः तांतुदृष्ट्वा
जगद्धात्रींसावित्रींचनृपोत्तमः प्रणिपत्यनृपोभक्त्याप्रहृष्टेनांतरात्मना तंदृष्ट्वापतितंभूमौतुष्टादेवीजगादह सावित्र्युवाच तुष्टाहंतवराजेंद्रवरं
वरयसुव्रत एवमुक्तस्तयाराजाप्रसन्नांतामुवाचह अनपत्योस्म्यहंदेविपुत्रमिच्छामिशोभने नान्यंवृणोमिसावित्रिपुत्रमेकंजगन्मये अन्यद
स्तिसमग्रंमेक्षितौयच्चापिदुर्लभम् प्रसादात्तवदेवेशितत्सर्वंविद्यतेगृहे एवमुक्तातुसादेवीप्रत्युवाचनराधिपम् सावित्र्युवाच पुत्रस्तेना-
स्तिराजेंद्रकन्यकातेभविष्यति कुलद्वयंतुसाराजन्नुद्धरिष्यतिभामिनी मन्नाम्नाराजशार्दूलतस्यानामभविष्यति इत्युक्त्वातंमुनिश्रेष्ठ
राजानंब्रह्मणःप्रिया अंतर्धानंगतादेवीसंतुष्टोसौमहीपतिः ततःकतिपयाहोभिस्तस्यराज्ञीमहीभुजः ससत्वासमजायेतपूर्णेकालेसु
षावहे सावित्र्यातुष्टयादत्तासावित्र्याजप्तयातथा सावित्रीतेनवरदातस्यानामबभूवह राजतेदेवगर्भाभाकन्याकमललोचना तांदृष्ट्वा
हेमगर्भाभांराजाचिंतामुपेयिवान् अयाच्यमानांचवरैरूपेणाप्रतिमांभुवि तस्यारूपेणतेसर्वेसान्निरुद्धामहीभुजः ततःसराजाचाहूय
उवाचकमलेक्षणाम् पुत्रिप्रदानकालस्तेनचयाचंतिकेचन वरंवरयत्वंहृद्यंतेपतिंगुणसमन्वितम् मनःप्रह्लादकरणंशीलेनाभिजनेनच
इत्युक्त्वातांवराजेंद्रोवृद्धामात्यैःसहैवताम् वस्त्रालंकारसहितांधनरत्नैःसमन्विताम् विसृज्यचक्षणंतत्रयावत्तिष्ठतिभूमिपः ताव-
त्तत्रसमागच्छन्नारदोभगवानृषिः संपूज्यचततोराजाअर्घ्यपाद्येनतंमुनिम् आसनेचसुखासीनः पूजितस्तेनभूभुजा पूजयित्वामुनिं
राजाप्रोवाचेदंद्विजोत्तमम् पावितोऽहंत्वयाविप्रदर्शनेनाद्यनारद यावदेवंवदेद्राजातावत्साकमलेक्षणा आश्रमादागतादेवीवृद्धा
मात्यैःसमन्विता अभिवाद्यापितुःपादौववंदेसामुनिंततः नारदेनतुतुष्टांतांदृष्ट्वाप्रोवाचभूमिपम् कन्यांचदेवगर्भाभांकिमर्थंनप्रयच्छसि
वरायत्वंमहाबाहोवरयोग्यांहिसुंदरीम् एवमुक्तस्तदातेनमुनिनानृपसत्तमः उवाचतंमुनिंवाक्यमनेनार्थेनप्रेषिता आगतेयंविशाला
क्षीमयासंप्रेषितासती अनयाचवृतोभर्त्तापृच्छत्वंमुनिसत्तम सापृष्टातेनमुनिनातस्मैचाचष्टभामिनी सावित्र्युवाच

मत्सेनस्यराज्यंवैवैरिणारुक्मिणाहृतम् दैवादंधः स्त्रीसहितः सत्यवान् तत्कृतोवने आश्रमेसत्यवान्नामद्युमत्सेनसुतोमुने भर्तेति मनसाविप्र वृतोसौराजनंदनः नारदउवाच कष्टंकृतंमहाराजदुहित्रातवसुव्रत अजानंत्यावृतोभर्तागुणवानितिविश्रुतः सत्यंवदत्यस्यपितासत्यंमाताप्रभाषते स्वयंसत्यंप्रभाषेतसत्यवानितितेनसः तथाचाश्वाःप्रियास्तस्य अश्वैःक्रीडतिमृन्मयैः चित्रेपिविलिखत्यश्वान् चित्राश्वस्तेनचोच्यते रूपवान्गुणवांश्चैवसर्वशास्त्रविशारदः नतस्यसदृशोलोकेविद्यतेचेहमानवः सर्वैर्गुणैश्चसंपन्नोरत्नैरिवमहार्णवः एकोदोषोमहानस्यगुणानावृत्यातिष्ठति संवत्सरेणक्षीणायुर्देहत्यागंकरिष्यति अश्वपतिरुवाच अन्यंवरयभद्रंतेवरंसावित्रिगम्यताम् विवाहस्यतुकालोयंवर्ततेशुभलोचने सावित्र्युवाच नान्यमिच्छाम्यहंतातमनसापिवरंप्रभो योमयाचवृतोभर्तासमेनान्योभविष्यति विचिंत्यमनसापूर्वंवाचापश्चात्समुच्चरेत् क्रियतेचततःपश्चाच्छुभंवायदिवाशुभम् तस्मात्तुमांसंमनसाकथंचान्यंवृणोम्यहम् सकृज्जल्पंतिराजानःसकृज्जल्पंतिपंडिताः सकृत्कन्याप्रदीयंतेत्रीण्येतानिसकृत्सकृत् पतिंमत्वानमेबुद्धिर्विचलेच्चकथंचन सगुणोनिर्गुणोवापिमूर्खःपंडितएवच दीर्घायुरथचाल्पायुःसवैभर्ताममप्रभो नान्यंवृणोमिभर्तारंयदिवास्याच्छचीपतिः इतिमत्वात्वयातातयत्कर्तव्यंकुरुष्वतच्च नारदउवाच स्थिराबुद्धिश्चराजेंद्रसावित्र्याःसत्यवान्प्रति त्वरयस्वविवाहायभर्त्रासहकुरुष्वेमाम् ईश्वरउवाच निश्चितांतुसुनिर्ज्ञात्वास्थिताबुद्धिश्चनिश्चला सावित्र्याश्चमहाराज्ञःप्रतस्थेसौवनंप्रति गृहीत्वातुधनंराजाद्युमत्सेनस्यसन्निधौ स्वल्पानुगोमहाराजोवृद्धामात्यैःसमन्वितः नारदस्तुततःस्वैवैतत्रैवांतरधीयत सगत्वाराजशार्दूलोद्युमत्सेनेनसंगतः वृद्धश्चांधश्चराजासौवृक्षमूलमुपाश्रितः सावित्र्यश्वपतीराजापादौजग्राहवीर्यवान् स्वनामचसमुच्चार्यतस्थौतस्यसमीपतः उवाचराजातंभूपंकिमागमनकारणम् पूजयित्वार्घ्यदानेनवन्यमूलफलैश्चसः ततःपप्रच्छकुशलंसराजामुनिसत्तमः अश्वपतिरुवाच कुशलंदर्शनेनाद्यतवराजन्ममाद्यवै दुहितामामसावित्रीतवपुत्रमभीप्सति भर्तारंराजशार्दूलप्राप्तोस्मियमनिंदिता ममेदंकांक्षितंपूर्वंभर्तारमनयाविभो आवयोश्चैवसंबंधोभवत्वद्यममेप्सितः द्युमत्सेनउवाच वृद्धश्चांधश्चराजेंद्रफलमूलाशनोनृप राज्या

स्नुतश्च गोपुत्रोवन्येनाद्यवजीवति साकथंसहतेदुःखंदुहितातवकानने अनभिज्ञात्वदुःखानामित्यहंनाभिकांक्षये अश्वपतिरुवाच
अनयात्ववृतोभर्ताजानंत्याराजसत्तम अनेनसहवासस्तेतवपुत्रेणमानद स्वर्गतुल्योमहाराजभविष्यतिनसंशयः एवमुक्तस्तदातेनरा
जाराजर्षिसत्तमः तथेतिसप्रतिज्ञायचकारोद्वाहमुत्तमम् कृत्वाविवाहंराजेंद्रंसंपूज्यविविधैर्धनैः अभिवाद्यद्युमत्सेनंजगामनगरंप्रति
सावित्रीतुवरंलब्ध्वाइंद्रंप्राप्यशचीयथा सत्यवानपिराजर्षेतयापत्न्याभिनंदितः क्रीडतेतत्र[illegible]गौरीलोमध्यामघवा इव नारदस्यवचतेहृ
द्यंहृदयेतुमनस्विनी वहंतीनियमंचक्रेव्रतस्यास्यचभामिनी गणयंतीदिनान्येवनलेभेहर्षमुत्तमम् ज्ञात्वातद्दिवसंविप्रभर्तुर्मरणकारणं
व्रतंत्रिरात्रमुद्दिश्यदिवारात्रौस्थिराभवत् ततस्त्रिरात्रंनिर्वर्त्यसंतर्प्यपितृदेवताः अस्यांतंनियमंकृत्वात्रिदिनस्यमनस्विनी अस्मिन्दिनेच
भर्तव्यमितिसत्यवतामुने कुठारंसंपरिगृह्यपिटकंचैवदारुकम् प्रस्थितंचवनायैवसावित्रीवाक्यमब्रवीत् नगंतव्यंवनंत्वद्यममवाक्येनमा
नद अथवागम्यतेसाधोमयासहवनंव्रज संवत्सरंभवेत्पूर्णमाश्रमेस्मिन्ममप्रभो तद्वनंद्रष्टुमिच्छामिप्रसादंकुरुमेप्रभो सत्यवानुवाच
नाहंस्वतंत्रःसुश्रोणिपृच्छस्वपितरौमम ताभ्यांमत्स्याःपितागच्छमयासहशुचिस्मिते एवमुक्तातदातेनभर्त्रासाकमलेक्षणा श्वश्रूःश्वशु
रयोःपादौअभिवाद्येदमब्रवीत् वनंद्रष्टुंगमिष्यामिआज्ञामह्यंप्रदीयताम् उवाचवचनंसाध्वीधर्मैकंप्रयच्छमे भर्त्रासहवनंगंतुंमेनत्वरय
तेमनः तस्यास्तद्वचनंश्रुत्वाद्युमत्सेनोब्रवीदिदम् व्रतंकृतंत्वयाभद्रेपारणंकुरुसुव्रते पारणांतेततोभीरुवनंगंतुंत्वमर्हसि सावित्र्युवाच
नियमश्चकृतोस्माभीरात्रौचंद्रोदयेसति जातेभयाप्रकर्तव्यंभोजनंतातमेशृणु वनदर्शनकामोस्मिभर्त्रासहममाद्यवै नमेतत्रभवेद्भ्रमो नि-
र्भर्त्रासहनराधिप इत्युक्तस्तुतयाराजाद्युमत्सेनोमहीपतिः यत्तेऽभिलषितंपुत्रिनत्कुरुष्वसमध्यमे नमस्कृत्वातुसावित्रीश्वश्रूश्वशु
योरपि सहिताराजशार्दूलतेनसत्यवताविभो विलोकयंतीभर्तारंश्यामकांतंमनस्विनी वनंचफलितंवृक्षपुष्पितद्रुमसंकुलम् द्रुमाणां-
चैवनामानिमृगाणांचैवभामिनी पश्यंतीमृगयूथानिवृदयेनप्रवेपती तत्रगत्वासत्यवान्वैफलान्यादायसत्वरम् काष्ठान्यत्रसमादायब
बंधभारकंतदा काष्ठभारंक्षणात्कृत्वावटशाखावलंबनम् वटवृक्षस्यसासाध्वीउपविष्टामहासती काष्ठंपातयतस्तस्यजाताशिरसिवे

दना ग्लानिश्चमहतीजातागात्राणांवेपथुस्तदा आगत्यवृक्षसामीप्यंसावित्रीमिदमब्रवीत् ममगात्रेतिकंपश्चजाताशिरसिवेदना कंटकैर्भि
द्यतेभद्रेशिरोमेशूलसंमितैः उत्संगेतवसुश्रोणिस्वप्तुमिच्छामिसुव्रते अभिज्ञातद्विशालाक्षीतस्यमृत्योर्मनस्विनी प्राप्तकालंमन्यमानात
स्यतत्रैवभामिनी सत्यवानपिसुश्रस्तुकृत्वोत्संगेशिरस्तदा तावत्तत्रसमागच्छत्पुरुषः कृष्णपिंगलः जाज्वल्यमानोवपुषाददर्शाथमनस्वि
नी उवाचवाक्यंवाक्यज्ञाकस्त्वंलोकभयंकरः नाहंधर्षयितुंशक्यापुरुषेणापिकेनचित् इत्युक्तःप्रत्युवाचेदंयमोलोकभयंकरः यमउवाच
क्षीणायुस्तुवरारोहेभर्तातवमनस्विनि नेष्याम्येनमहंबध्वाह्येतन्मेचचिकीर्षितम् इत्युक्त्वापितृराजेनतांतदास्वंचिकीर्षितम् यथाव
त्सर्वमाख्यातंसत्क्रियार्थंप्रचक्रमे अयंहिधर्मसंयुक्तोरूपवान्गुणसागरः नार्होमत्पुरुषैर्नेतुमतोस्मिस्वयमागतः ततःसत्यवतःकाया
त्पाशबद्धंवसत्वरम् अंगुष्ठमात्रंपुरुषंनिश्चकर्षयमोबलात् ततःसमुद्धृतप्राणंगतश्वासंहतप्रभम् निर्विचेष्टंशरीरंतद्बभूवाप्रियदर्शनम्
यमस्तुतंतथाबध्वाप्रययौदक्षिणामुखः सावित्रीचापिदुःखार्तायममेवान्वगच्छत नियमव्रतसंपन्नामहाभागायतव्रता यमउवाच निव
र्त्यगच्छसावित्रिकुरुष्वास्यौर्ध्वदैहिकम् कृतंभर्तुस्त्वयानृण्यंयावद्दृश्यगतंत्वया सावित्र्युवाच यत्रमेनीयतेभर्तास्वयंवायत्रगच्छति
मयापितत्रगंतव्यंएषधर्मःसनातनः तपसागुरुवृत्त्याचभर्तृस्नेहाद्व्रतेनच तवचैवप्रसादेनननमेप्रतिहतागतिः प्राहुःसप्तपदंमैत्रंबुधा
स्तत्वार्थदर्शिनः मित्रतांतुपुरस्कृत्यकिंचिद्वक्ष्यामितच्छृणु नानात्मवंतोहिवनेचरंतिधर्मंचसत्यंचपरिश्रमंच विज्ञानतोधर्ममुदाहरंति
तस्मात्संतोधर्ममाहुःप्रधानम् यमउवाच निवर्त्यतुष्टोस्मितवानयागिरास्वराक्षरव्यंजनहेतुयुक्तया वरंवृणीष्वेहविनास्यजीवितंददामितेस
र्वमनिंदितेवरम् सावित्र्युवाच च्युतस्वराज्याद्वनवासमाश्रितोत्यलब्धचक्षुःश्वशुरोममाश्रमे सलब्धचक्षुर्बलवान्भवेन्नृपस्तवप्रसादाज्ज्व
लनार्कसन्निभः यमउवाच ददामितेसर्वमनिंदितेवरंयथात्वयोक्तंभवितातत्तथा तवाध्वनोग्लानिमिवोपलक्षयेनिवर्तगच्छस्वनतेश्रमो
भवेत् सावित्र्युवाच कुतःश्रमोभर्तृसमीपतोह्यमेयतोहिभर्तामपसागतिर्ध्रुवा यतःपतिंनेष्यसितत्रमेगतिःसुरेशभूयश्चवचोनिबोधमे स
तांसकृत्संगतमीप्सितंपरेस्ततःपरंमित्रमितिप्रचक्षते नचाफलंसत्पुरुषेणसंगतंततःसतांसन्निवसेत्समागमे यमउवाच मनोनुकूलंबुधब

द्विर्वर्द्धनंत्वयायदुक्तंवचनंहिताश्रयम् विनापुनःसत्यवतोहिजीवितंवरंद्वितीयंवरयस्वभामिनि सावित्र्युवाच हृतंपुरामेश्वशुरस्यधीमतः
स्वमेवराज्यंसलभेतपार्थिवः नचस्वधर्मंप्रजहीतमेगुरुर्द्वितीयमेवंवरयामितेवरम् यमउवाच [illegible]निगन्नचस्व
धर्मान्परिहास्यतेनृपः कृतेनकामेनमयानृपात्मजेनिवर्तगच्छस्वनतेश्रमोभवेत् सावित्र्युवाच प्रजास्त्वयैतानियमेनसंयतानियम्यचैता
नयसेनकाम्यया अतोयमत्वंतवदेवविश्रुतंनिबोधयेमांगिरमीरितांमया अद्रोहःसर्वभूतेषुकर्मणामनसागिरा अनुग्रहश्चदानंचसतांध-
र्मःसनातनः एवंप्रायश्चलोकोयंमनुष्याःशक्तिपेशलाः संतःस्वेष्वप्यमित्रेषुदयांप्राप्तेषुकुर्वते यमउवाच पिपासितस्येवयथाभवत्प-
यस्तथात्वयावाक्यमिदंसमीरितम् विनापुनःसत्यवतोस्यजीवितंवरंवृणीष्वेहशुभेयदीच्छसि सावित्र्युवाच ममानपत्यःपृथिवीप
तिःपिताभवेत्पितुःपुत्रशतंचऔरसम् कुलस्यसंतानकरंचतद्भवेत्तृतीयमेवंवरयामितेवरम् यमउवाच कुलस्यसंतानकरंसुवर्चसंश
तंसुतानांपितुरस्तुतेशुभे कृतेनकामेननराधिपात्मजेअतीवदूरंहिपथस्त्वमागता सावित्र्युवाच नदूरमेतन्ममभर्तृसन्निधौमनो
हिमेदूरतरंप्रधावति अथव्रजन्नेवगिरासमुन्नतांमयोच्यमानांशृणुधर्ममेवचः विवस्वतस्त्वंतनयःप्रतापवान् ततोहिवैवस्वतउच्यतेबुधैः
समेनधर्मेणचरंतिताःप्रजास्ततस्तवेहेश्वरधर्मराजता आत्मन्यपिनविश्वासस्तावद्भवतिसत्सुयः तस्मात्सत्सुविशेषेणसर्वःप्रणय
मिच्छति सौहृदात्सर्वभूतानांविश्वासोनामजायते तस्मात्सत्सुविशेषेणविश्वासंकुरुतेजनः यमउवाच उदाहृतंतेवचनंयदंगनेशु
भेनतादृक्त्वदृतेमयाश्रुतं अनेनतुष्टोस्मिविनास्यजीवितंवरंचतुर्थंवरयस्वगच्छच सावित्र्युवाच ममात्मजंसत्यवतस्तथौरसंभ
वेदुभाभ्यामिहयत्कुलोद्भवम् शतंसुतानांबलिनांमहात्मनामिमंचतुर्थंवरयामितेवरम् यमउवाच शतंसुतानांबलवीर्यशालिनां
भविष्यतिप्रीतिकरंतवाबले परिश्रमस्तेनभवेन्नृपात्मजेनिवर्तदूरंहिपथस्त्वमागता सावित्र्युवाच सतांहियाशाश्वतधर्मवृत्तिः
संतोनसीदंतिनचव्यथंतिते सतांसद्भिर्नाफलःसंगमोस्ति सद्भ्योभयंनानुभवंतिसंतः संतोहिसत्येननयंतिसूर्यंसंतोभूमिंतप
साधारयंति संतोगतिर्भूतभव्यस्यराजन्सतांमध्येनावसीदंतिसंतः आर्यजुष्टमिदंवृत्तमितिविज्ञायशाश्वतं संतःपरार्थंकुर्वाणानावेक्षं

तेप्रीतिक्रियाम् नत्वप्रसादःसत्पुरुषेषुमोघोनचव्यर्थस्तपस्यतिचाभिमानः यस्मादेतन्नियतंसत्सुनित्यंतस्मात्संतोरक्षितारोभवंति य
मउवाच यथायथाभाषसिधर्मसंहितंमनोनुकूलंसुफलमहार्थवत् तथातथामेत्वयिभक्तिरुत्तमावरंवृणीष्वाप्रतिमंपतिव्रते
सावित्र्युवाच नतेपवर्गःसुकृताद्विनाकृतस्तथान्यथान्येषुवरेषुमानद वरंवृणेजीवतुसत्यवानयंयथामृताह्येवमहंविनापतिम् नका
मये भर्तृविनाकृतंसुखंनकामयेभर्तृविनाकृतादिवं नकामयेभर्तृविनागतांश्रियंनभर्तृहीनाव्यवसामिजीवितुम् वरोपिवैवस्वत-
स्योरसात्मजशतेषुदत्तोभवताकृपालुना वरंवृणेजीवतुसत्यवानयंनवैवसत्यंवचनंभविष्यति तथेत्युक्त्वातुतान्पाशान्मुक्त्वावैवस्वतो
यमः धर्मराजःप्रहृष्टात्मासावित्रीमिदमब्रवीत् एषभद्रेमयामुक्तोभर्त्तातेकुलनंदिनि आरोग्यवयसीप्राप्यसिद्धार्थश्चभविष्यति चा
तुर्वर्षशतंचायुस्त्वयासार्द्धमुपेष्यति सागतावटसामीप्यंकृत्वोत्संगेशिरस्ततः प्रबुद्धस्तुततोब्रह्मन्सत्यवानिदमब्रवीत् मयास्वप्नेवरा
रोहेदृष्टोह्येवंत्वभामिनि तत्सर्वंकथितंतस्यायद्वृत्तंसर्वमेवतत् तथाचकथितःसर्वःसंवादश्चयमेनहि अस्तंगतेततःसूर्येद्युमत्सेनोम
हीपतिःपुत्रस्यागमनेकांक्षीइतश्चेतश्चधावति आश्रमादाश्रमंगच्छन्पुत्रदर्शनकांक्षया आवयोरंधयोर्यष्टिःक्वगतोसिविनावयोः एवं
सविविधंक्रोशन्सपत्नीकोमहीपतिः चकारदुःखसंतप्तःपुत्रपुत्रेतिचासकृत् अकस्माद्देवराजेंद्रोलब्धचक्षुर्महीश्वरः तंदृष्ट्वापरमा
श्चर्यंचक्षुःप्राप्तिंद्विजोत्तमाः सांत्वपूर्वंतदावाक्यमूचुस्तेनापसाभृशम् चक्षुःप्राप्यामहाराजसूचितंतेमहीपते पुत्रेणत्वसमागमंप्राप्स्य
सेनृपसत्तम ईश्वरउवाच यावदेवंवदंत्येतेतापसाद्विजसत्तम सावित्रीसहितःप्राप्तःसत्यवान्द्विजसत्तम नमस्कृत्यद्विजान्सर्वान्मातरं
पितरंतथा सावित्रीचततोब्रह्मन्ववंदेचरणाविति श्वश्रूश्वशुरयोर्ब्रह्मन्सावित्रीकमलेक्षणा मुनयऊचुः वरंसावित्रिजानासिकारणंवर
वर्णिनि वृद्धयोश्चक्षुषःप्राप्तेःश्वश्रूश्वशुरयोः शुभे सावित्र्युवाच नजानामिमुनिश्रेष्ठाश्चक्षुषःप्राप्तिकारणम् चिरंसुप्तस्तुमेभर्तातेनका
लव्यतिक्रमः सत्यवानुवाच अस्याःप्रभावात्संजातंदृश्यतेकारणंनच तत्सर्वंविद्यतेविप्राःसावित्र्यास्तपसःफलम् एतस्यैवतुमाहात्म्यं
दृष्टमेतन्मयाधुना ईश्वरउवाच एवंतुवदतस्तस्यतदासत्यवतःप्रभो पौराःसमागतास्तस्य आचरन्नृपतेर्हितम् येनराज्यंबलाद्राज

न्त्हतंमंत्रेणमंत्रिणा अमात्येनहतःसोपिइतिपौराःसमागताः पौराऊचुः उत्तिष्ठराजशार्दूलस्वंराज्यंपालयप्रभो अभिषिंचस्वराजेंद्रपुरे
मंत्रिपुरोहितैः ईश्वरउवाच सगत्वाराजशार्दूलःस्वपुरंजनसंवृतः पितृपैतामहंराज्यंसंप्रापसचमहात्मना सावित्रीसत्यवांश्चैवपरांमु
दमवापतुः जनयामासपुत्राणांशतंवैबाहुशालिनाम् व्रतस्यैवतुमाहात्म्यात्तस्याःपितुर जायत पुत्राणांचशतंब्रह्मन्प्रसन्नाच्चयमात्तथा
एतत्तेकथितंसर्वंव्रतमाहात्म्यमुत्तमम् क्षीणायुर्जीवितोभर्ता व्रतस्यास्यप्रभावतः कर्तव्यंसर्वनारीणामवैधव्यफलप्रदम् सनत्कुमारउ०
विधानंब्रूहिदेवेशव्रतस्यास्यचत्र्यंबक क्रियतेविधिनाकेनस्त्रीभिस्त्रिपुरसूदन ईश्वरउवाच वर्षेकंनियमंकृत्वाएकभक्तेनमानद नक्ता
हारेणताविप्रभुंक्तेप्राप्यद्विजर्षभ त्रिदिनंलंघयित्वात्वचतुर्थेदिवसेशुभे चंद्रायार्घ्यंप्रदद्याच्चपूजयित्वासुवासिनीम् सावित्रींचप्रसावित्रीं-
गंधपुष्पैश्चपूजयेत् मिथुनानियथाशक्त्याभोजयित्वायथासुखम् भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे दिनंप्रतिदिनंश्रेष्ठंकुर्या-
न्न्यग्रोधसेचनम् कृत्वावंशमयेपात्रेवालुकाप्रस्थमेवच सप्तधान्यभृतंपात्रंप्रस्थैकेनद्विजोत्तम प्रस्थंद्वात्रिंशद्बुकंप्रमाणंपरिसंमितं
कारयेन्मुनिशार्दूलवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेद्देवींसावित्रींब्रह्मणासह सावित्रीसत्यवांश्चैवकार्यौरोप्यमयौशुभौ पिटकंचकुठारं
चकृत्वारोप्यमयौशुभौ फलैःकालोद्भवैर्देवींपूजयेद्ब्रह्मणःप्रियाम् हरिद्रारंजितैश्चैवकंठसूत्रैःसमर्चयेत् सतीनांकंठसूत्राणित्रिदिनं
प्रतिदापयेत् पक्वान्नानिनैवेद्यानिनित्यमेवद्विजोत्तमान् माहात्म्यंचैवसावित्र्याःश्रोतव्यंमुनिसत्तम पुराणश्रवणंकार्यंसतीनांचरितं
शुभम् पूजयेच्चतथानित्यंमंत्रेणानेनसुव्रत सावित्रीत्वंप्रसावित्रीसततंब्रह्मणःप्रिया पूज्यसेहूयसेदेविद्विजैर्मुनिगणैःसदा त्रिसंध्यं
देविभूतानांवंदितात्वंजगन्मये सावित्रीत्वंप्रसावित्रीद्विधाभूतासिशोभने जगत्त्रयस्थितादेवित्रिसंध्यंचतथानघे श्रेष्ठेदेवित्रिलोके
चत्रेताग्नेत्वंमुनेश्वरी व्यापितःसकलोलोकअतोमांपाहिसर्वदा रूपंदेहियशोदेहिसौभाग्यंदेहिमेशुभे पुत्रान्देहिधनंदेहिसर्वदाजन्मज
न्मसु यथानेनर्वियोगोस्तिभर्त्रासहसुरेश्वरि तथाममहाभागेकुरुत्वंजन्मजन्मनि एवंसंपूजयेद्देवींकमलासनसंस्थिताम् एवंदिनत्र
यंनीत्वाचतुर्थेहनिसत्तम मिथुनानिचसंभोज्यषोडशानिद्विजोत्तम अर्चयित्वातथाचार्यंसपत्नीकंसुसंमतम् तस्मैसंकल्पितंसर्वंहेम

सावित्रिसंयुतम् मंत्रेणानेनदातव्यंद्विजमुख्यायसुव्रत सावित्रींकल्पविदुषींप्रणिपत्यतथामुने सावित्रीजगतांमातासावित्रीजगतःपिता म
याद्त्तांचसावित्रींब्रह्मणःप्रतिगृह्यताम् अवैधव्यंचमेनित्यंभूयाज्जन्मनिजन्मनि मृतान्चवसतेलोकेब्रह्मणापतिनासह नचैवचचिरं-
कालंभुक्त्वाभोगाननुत्तमान् धर्मराजवरदानानंतरम् सावित्र्युवाच यामदीयंव्रतंदेवभक्त्यानारीकरिष्यति भर्तुःसासहि
नासाध्वीसमस्तसुखभाग्भवेत् धर्मराजउवाच गौरीप्रमुग्धावृद्धावाअपुत्रापतिवर्जिता सभर्तृकासपुत्रावाकुर्याद्व्रतमिदंशु
भं ज्येष्ठमासेतुसंप्राप्तेपौर्णमास्यांपतिव्रता स्नात्वाचैवशुचिर्भूत्वावटंसिंच्यबहूदकैः सूत्रेणवेष्टयेद्भक्त्यागंधपुष्पाक्षतैःशुभैः नमोवैवस्व
तायेतिभ्रामयंतीप्रदक्षिणाम् रात्रौकुर्वीतबकंस्वत्र्यब्दमेकंसमाहिता तथैववटवृक्षंचपक्षेपक्षेप्रपूजयेत् अनेनैवविधानेनकर्तव्यंव्रतमुत्त
मम् सर्वान्मनोरथान्प्राप्यप्रांतेरुद्रोपिजायते इतिश्रीस्कंदपुराणेवटसावित्रीकथासमाप्ता अथोद्यापनम् संप्राप्तेतुपुनर्ज्येष्ठेनक्त
त्रयोदशीनयेत् दंतधावनपूर्वादिस्नात्वानियममाचरेत् त्रिरात्रंलंघयित्वातुचतुर्थीदिवसेत्वहम् चंद्रायार्घ्यंप्रदत्वाचपूजयित्वातु
तांसतीम् मिष्टान्नानियथाशक्त्याभोजयित्वाद्विजोत्तमान् भोक्ष्येहंतुजगद्धात्रिनिर्विघ्नंकुरुमेशुभे नियममंत्रः कृत्वावंशमयेपा
त्रेवालुकाप्रस्थमेवच सप्तधान्ययुतंपात्रंप्रस्थैकेनद्विजोत्तम वस्त्रद्वयोपरिस्थाप्यसावित्रींब्रह्मणासह हैमींकृत्वातयोर्मूर्तिंत्रिरात्र
व्रतमाचरेत् न्यग्रोधस्यतलेतिष्ठेद्यावच्चैवदिनत्रयम् सौवर्णींचैवसावित्रींसत्येनसहकारयेत् रौप्यपर्यंकमारोप्यरथस्थोपरिविन्य
सेत् पलादूर्ध्वंयथाशक्त्यारथंरौप्यमयंशुभम् काष्ठभारंकुठारंचवटंचैवसुविस्तृतम् धर्मराजंनारदंचतत्रैवपरिकल्पयेत् वटमूलेप्र
कुर्वीतमंडलंगोमयेनहि संस्थाप्यतत्रसावित्रींचतुष्कोपरिशोभनाम् एवंचमिथुनंकृत्वापूजयेद्गतमत्सरा पंचामृतेनस्नपनंगंधपुष्पाद
कनच चंदनागरुकर्पूरमाल्यवस्त्रविभूषणैः पीतपिष्टेनपर्यंकंचंदनेनाथवालिखेत् देवींसंपूजयेत्तत्रमंत्रैरेभिर्विधानतः नमःसावित्र्यैपादौ
तुप्रसावित्र्यैतुजानुनी कटिंकमलपत्राक्ष्यैउदरंभूतधारिण्यै गायत्र्यैचनमःकंठेशिरसिब्रह्मणःप्रिये अथब्रह्मसत्यवतोःपादौधात्रेनमःपूज्यावूरू
ज्येष्ठायवैनमःपरमेष्ठिनेतुवैमेढ्रमग्निरूपायवैकटी वेधसेचोदरंपूज्यंपद्मनाभायवैहृदि कंठंविधात्रेपूज्यंहिहेमगर्भायवैमुखं ब्रह्मणे नैशिरः

पूज्यंसर्वांगंविष्णवेनमः अभ्यर्च्यैवंक्रमेणैवशास्त्रोक्तविधिनाशुभम् ततोरजतपात्रेणअर्घ्यंदद्याद्द्वयोरपि अथार्घ्यमंत्रः ॐकारपूर्वके देविवीणापुस्तकधारिणि देवमातर्नमस्तुभ्यमवैधव्यंप्रयच्छमे पतिव्रते महाभागेवन्हिजातेशुचिस्मिते दृढव्रते दृढमने भर्तुश्चप्रिय वादिनि अवैधव्यंचसौभाग्यंदेहित्वंममसुव्रते पुत्रान्पौत्रांश्चसरव्यत्वंगृहाणार्घ्यंनमोनमः अथब्रह्मसत्यवतोरर्घ्यमंत्रः त्वयासृष्टंजगत्सर्वंस देवासुरमानुषं सत्यव्रतधरोदेवब्रह्मरूपनमोस्तुते अथयमस्यअर्घ्यमंत्रः त्वंकर्मसाक्षीलोकानांशुभाशुभविवेककृत् वैवस्वतगृहाणार्घ्यं धर्मराजनमोस्तुते धर्मराजःपितृपतिःसाक्षीभूतोसिजंतुषु कालरूपगृहाणार्घ्यमवैधव्यंचदेहिमे गंधपुष्पैश्चनैवेद्यैःफलैःकर्पूरदीपकैः रक्तव स्त्रैरलंकारैःपूजयेदूतमत्सरा सावित्रीप्रार्थना सावित्रीब्रह्मगायत्रीसर्वदाप्रियभाषिणी तेनसत्येनमांपाहिदुःखसंसारसागरात् त्वंगौरीत्वं शचीलक्ष्मीस्त्वंप्रभाचंद्रमंडले त्वमेवचजगन्मातामामुद्धर वरानने सौभाग्यंकुलवृद्धिंचदेहित्वंममसुव्रते यन्मयादुष्कृतंसर्वंकृतंजन्मशतैरपि भ स्मीभवतुतत्सर्वमवैधव्यंचदेहिमे अथसावित्रीसत्यवतोःप्रार्थना अवियोगोयथादेवसावित्र्यासहितस्यते अवियोगस्तथास्माकंभूयात् ज्जन्मनिजन्मनि यमप्रार्थना कर्मसाक्षिन्जगत्पूज्यसर्वबंधप्रसीदमे संवत्सरंव्रतंसर्वंपरिपूर्णंतदस्तुमे सावित्रीप्रार्थना सावित्रीत्वंयथादे विचतुर्वर्षशतायुषं पतिंप्राप्तासिगुणिनंममदेवितथाकुरु सावित्रीत्वमसावित्रीसततंब्रह्मणःप्रिये पूजितासिद्विजैःसर्वैःस्त्रीभिर्मुनिग- णैस्तथा त्रिसंध्यंदेविभूतानांवंदनीयासिसुव्रते मयादत्तांचपूजेयंत्वंगृहाणनमोस्तुते जागरंतत्रकुर्वीतगीतवादित्रमंगलैः सुवासिन्यस्ततः पूज्यादिवसेदिवसेशुभाः सिंदूरंकुंकुमंचैवतांबूलंवस्त्रपूगकम् तथादद्याच्चशूर्पाणिभक्ष्यंसौभाग्यमष्टकं संतिष्ठेच्चदिवारात्रौकामक्रोधविवर्जि ता दिनत्रयेपिकर्तव्यमेवमर्घ्यादिपूजनम् ततश्चतुर्थदिवसेयत्कार्यंतच्छृणुष्वमे मिथुनानिचतुर्विंशत्षोडशद्वादशाष्टवा पूजयेद्वस्त्रगोदानैर्भू षणाच्छादनासनैः अथवागुरुमेकंवाव्रतस्याधिकारकम् सर्वलक्षणसंपन्नंसर्वशास्त्रार्थपारगं वेदविद्याव्रतस्नातंशांतंतुविजितेंद्रियम् स पत्नीकंसमभ्यर्च्यवस्त्रालंकारमंडनैः शय्यांसोपस्करांदद्याद्दृढंचैवातिशोभनं अशक्तस्तुयथाशक्त्यास्तोकंस्तोकंचकल्पयेत् सावित्रीत्वंय थादेविचतुर्वर्षशतायुषा सत्यवसतिनासार्द्धंमयादत्तातथाकुरु मयादत्ताचसावित्रीब्रह्मणाप्रतिगृह्यतां मयागृहीतासावित्रीत्वयादत्तासु

शोभने यावच्चंद्रश्चसूर्यश्चसहभर्त्रासुखीभव न्यग्रोधस्यसमीपेतुगृहेवास्थंडिलेपिवा सावित्र्याश्चैवमंत्रेणघृतहोमंतुकारयेत् पायसंजुहु
याद्भक्त्याघृतेनसहभामिनि व्याहृत्याचैवमंत्रेणतिलव्रीहियवांस्तथा गुरुंचगुरुपत्नींचततोभक्त्याक्षमापयेत् धर्मराजोयमोधातानीलःकालां
तकोव्ययः वैवस्वतश्चित्रगुप्तोदध्नोमृत्युःक्षयोवटः मासिमासितथात्वेतैर्नामभिःसेचयेद्वटम् न्यग्रोधेहंवसाम्येवतस्माद्यत्नेनसेचयेत् होमां
तेदक्षिणांदद्यादृत्विजश्चक्षमापयेत् भुंजीतवासरांतेतुनक्तेशांतातपस्विनी अर्घ्यंदद्यादरुंधत्यैहस्ताभ्यांचैवप्रणम्यच अरुंधतिनमस्तेस्तुवसि
ष्ठस्यप्रियेशुभे अर्घ्यमेतन्मयादत्तंफलपुष्पसमन्वितम् पुत्रान्देहिसुखंदेहिगृहाणार्घ्यंनमोस्तुते सर्वाभिर्ब्राह्मणैःसार्द्धंभुंजीतसुविजितें
द्रिया एवंकरोतियानारीव्रतमेतदनुत्तमं भ्रातरःपितरौपुत्राःश्वशुरौस्वजनास्तथा चिरायुषस्तथारोगाभवंतिचनसंशयः भर्त्राचसहिता
साध्वीब्रह्मलोकेमहीयते इतिश्रीस्कंदपुराणेसावित्रीव्रतोद्यापनंसंपूर्णम् •अथआषाढपौर्णमास्यांगोपद्मव्रतंतत्रपूजा चतुर्भुजंमहा
कायंजांबूनदसमप्रभम् शंखचक्रगदापद्मरमागरुडशोभितम् सेवितंमुनिभिर्देवैर्यक्षगंधर्वकिन्नरैः एवंविधंहरिंध्यात्वाततोयजनमा
रभेत् ध्यानं आवाहयामिदेवेशंभक्तानामभयप्रदम् स्निग्धकोमलकेशंचमनसावाहयेद्धरिम् सहस्रशीर्षेत्यावाहनं सुवर्णमणिभिर्दि-
व्यैरचितेदेवनिर्मिते दिव्यसिंहासनेकृष्णउपविश्यप्रसीदमे पुरुषएवेदमित्यासनं पादोदकंसुरश्रेष्ठसुवर्णकलशेस्थितम् गंधपुष्पाक्षतैर्यु
क्तंपाद्यंमेप्रतिगृह्यताम् एतावानस्येतिपाद्यं अष्टद्रव्यसमायुक्तंस्वर्णपात्रोदकंशुभं भोःभयंकरभक्तानांगृहाणार्घ्यंजगत्पते त्रिपादूर्ध्वइत्य
र्घ्यं कर्पूरेणसमायुक्तमुशीरेणसुवासितम् दत्तमाचमनीयार्थंनीरंस्वीकुरुतांप्रभो तस्माद्विराळित्याचमनीयं गंगागोदावरीचैवयमुनाच
सरस्वती नर्मदासिंधुकावेरीताभ्यःस्नानार्थमाहृतम् यत्पुरुषेणेतिस्नानं वस्त्रयुग्मंसमानीतंपट्टसूत्रेणनिर्मितं सुवर्णरचितंदिव्यंगृह्
णत्वंसुरेश्वर तंयज्ञमितिवस्त्रं कार्पासतंतुभिर्युक्तंब्रह्मणानिर्मितंपुरा अनेकरत्नरचितमुपवीतंगृहाणभो तस्माद्यज्ञादितियज्ञोपवीतम्
चंदनंमलयोद्भूतंकस्तूर्यादिचारुचंदनम् कर्पूरेणचसंयुक्तंस्वीकुरुष्वानुलेपनम् तस्माद्यज्ञात्सर्वहुतमितिगंधं शतपत्रैःकर्णिकारैश्चंपकैर्मल्लि
कादिभिः तुलसीयुक्तपुष्पाणिगृहाणपुरुषोत्तम तस्मादश्वेतिपुष्पं दशांगंगुग्गुलोद्भूतंसुगंधिंचमनोहरं कृष्णागरुसमायुक्तंधूपंदेवगृहा

णमे यत्पुरुषंव्यदधुरितिधूपं साज्यंचवर्तिसंयुक्तंवन्हिनायोजितंमया दीपंगृहाणदेवेशत्रैलोक्यतिमिरापहन् ब्राह्मणोस्येतिदीपं अ
न्नंचतुर्विधंस्वादुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् चंद्रमामनसेतिनैवेद्यंसम० आचमनीयं करोद्व
र्तनं इदं फलमितिफलं पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां० यानिकानि० नाभ्याआसीदितिप्रदक्षिणां०नमोस्त्वनंताय०सप्त
स्यासन्नितिनमस्कारः देवदेवजगन्नाथगोपालप्रतिपालक गोपदेकृतसंत्राणगृहाणकुसुमांजलिं यज्ञेनयज्ञमितिपुष्पांजलिं तद्रूपोक्तंवा
यनं परमान्नमिदंविप्रकांस्यपात्रेणसंयुतं त्वत्प्रसादाद्दहंविप्रव्रतस्यफलमाप्नुयाम् मंत्रहीनंक्रियाहीनमितिप्रार्थना इतिगोपद्मपूजा अथ
कथा सूतउवाच नाथैकंत्वांहिपृच्छामिचतुर्वर्गफलप्रदम् सर्वरोगप्रशमनंविष्णुसारूप्यमुक्तिदं नारीणामथवापुंसांभक्तिमुक्तिफलप्र
दम् ब्रूहिचेदस्तिदेवर्षेकृपांकृत्वाममोपरि नारदउवाच भगवन्सर्वमाख्यास्येयत्पृष्टंविदुषात्वया गोपद्मकंव्रतंह्येतद्व्रतानांव्रतमुत्तमम्
कर्तुःसिद्धिकरंदिव्यंविख्यातंभुवनत्रये सनत्कुमारउवाच भगवन्भूतभव्येशसर्वशास्त्रविशारद तद्व्रतंब्रूहिमेब्रह्मन्कथमुद्यापनंभ
वेत् पुरेदंकेनवाचीर्णंदेवर्षेकथयव्रतम् नारदउवाच आषाढपौर्णमास्यांवातथाष्टम्यांहरेर्दिने प्रारभेद्व्रतमेतच्चकार्तिकावधितत्ति-
थौ तिलामलककल्केनस्नानंनित्यंविधायच नदीतीरेथवागोष्ठेशिवागारेहरेर्गृहे वृंदावनेवापिलिखेद्गोपद्मकपदंक्रमं त्रयस्त्रिंशत्तुपद्मा
निकुर्याद्व्रतस्यादिनेदिने तत्संख्ययाप्रकर्तव्याअर्घ्यप्रदक्षिणानतीः बालकृष्णंसमुद्दिश्यलक्ष्म्यासहजगद्गुरुम् गंधाद्यैरुपचारैस्तुयथाश
क्त्याप्रपूजयेत् ब्राह्मणांस्तुततःपूज्यपद्मसंख्याकमुत्सृजेत् प्रथमाब्देथवटकैर्द्वितीयेपूपकैर्व्रती तृतीयेशालिपिष्टान्नैश्चतुर्थेपूरिका
दिभिः पंचमेपरमान्नैस्तुसम्यगेवंपूजयेद्व्रती अत्रैवोदाहरंतीममितिहासंपुरातनम् ऋषीणांपृच्छमानानांसूतेनोक्तंपुरातनं सूतउवा
च पुराशक्रोमरावत्यांदेवदानवकिन्नरैः रुद्रैरादित्ययक्षाद्यैर्गंधर्वैर्वसुभिःसह रंभानृत्यंसमारेभेक्रीडालोभेनविह्वला एवंनृत्ये
क्रियमाणेत्रुटितवाद्यमंडलं क्षणमात्रंविचार्याथधर्मराजस्तुउक्तवान् यमउवाच जन्ममध्येव्रतंयैश्चनकृतंप्राणिभिःक्वचित् तच्च
र्मस्नायुभिःशक्रकर्तव्यंछादनंदके नारदेनश्रुतंतच्चजगादयदुनंदनं स्वर्चयित्वातुतंकृष्णोवचनंचेदमब्रवीत् कृष्णउवाच सर्वलोकज्ञ

देवर्षेभुवनेषुचरन्सदा आश्चर्यंवददेवर्षेयद्यस्तिशुभदायकम् नारदउवाच गतंमयामरावत्यामाश्चर्यंधर्मसंसदि तत्रसर्वेसमाया
ताःसुराइंद्राश्चतुर्दश रुद्राएकादशविधिरादित्याद्वादशापिच वसवोष्टौतथानागायक्षराक्षसपन्नगाः रंभयाचसमारब्धंनृत्यंशक्र
स्यपश्यतःत्रुटितंचर्मवाद्यानामब्रुवंस्तस्यसाधनम् यमःप्राहतथादूतान्सुभद्राह्यव्रतास्तिभो तामानयध्वंतच्चर्मवाद्ययोग्यंसदास्त्विति
तच्छ्रुत्वातुमयाभीत्यासर्वंत्वयिनिवेदितं सूतउवाच इतिनारदवाक्यंतुश्रुत्वाकृष्णस्त्वरान्वितः सुभद्रायागृहंगत्वापूजितस्तामुवाचह श्री
कृष्णउवाच किंचिद्व्रतंत्वयाभद्रेकृतंवानेतिसंशयः सुभद्रोवाच सर्वव्रतानिभोकृष्णकृतान्येवनसंशयः नोचेत्त्वद्भगिनीचाहंनस्याम
र्जुनवल्लभा पुत्रोभिमन्युश्चकथंकथयस्वजगत्पते कृष्णउवाच तथापित्वंमहाभागेव्रतमेकंसमाचर गोपद्मेतिचविख्यातंत्रिषुलोके
षुविश्रुतम् इतिकृष्णवचःश्रुत्वासुभद्रातत्तदाकरोत् कृष्णोपदिष्टविधिनासत्वरंचसमापितम् सोद्यापनेव्रतेचीर्णेकालेयमभटाययुः
दूताऊचुः सुभद्रेतवदेहस्यचर्मार्थेत्यागतावयम् त्वच्चर्मसुरवाद्यार्थंयमेनचप्रकल्पितम् इतिदूतवचःश्रुत्वासव्रतास्मीतिचाब्रवीत् ततो
भटाःसर्वएवदहृशुःसादरास्तदा पद्मानांनिचयंतस्यागृहेगांचसवत्सकाम् स्थंडिलेहस्तमात्रेतुसुसमिद्धंहुताशनं कृष्णोपदिष्टंवीक्ष्ये
वंदूताजग्मुर्यमांतिकम् प्रतिपदेप्रभावेनसुभद्रापदमच्युतं नारदउवाच इतिसूतवचःश्रुत्वाऋषयश्चक्रिरेव्रतम् सूतउवाच भोभो
नारददेवर्षेसर्वशास्त्रविशारद शीघ्रंब्रूहिसरवेपद्मव्रतस्योद्यापनेविधिः नारदउवाच पूर्णेतुपंचमेवर्षेव्रतस्योद्यापनंभवेत् श्री
कृष्णप्रतिमाकार्यासुवर्णस्यपलेनवै पुष्पमंडपिकाकार्याचतुर्द्वारसुशोभना तन्मध्येपूजयेद्रत्नस्यारमयासहितंहरिं त्रयस्त्रिंशत्त
तोविप्रान्वृत्वाहोमंसमाचरेत् अतोदेवेतिमंत्रेणजुहुयात्तिलपायसम् ब्राह्मणान्भोजयेत्पश्चाद्दोभिःसंपूजयेद्वती यंयंचिंतयते
कामंतंतंप्राप्नोत्यसंशयम् इतिभ० गोपद्मव्रतोद्या० संपूर्णा० अथआषाढशुक्लपौर्णमास्यांकोकिलाव्रतम् यदाआषाढाधिकमा
सस्तदाकोकिलानुष्ठानंकार्यं तद्विधिः आचम्यप्राणानायम्यमासपक्षाद्युल्लिख्यममेहजन्मनिजन्मांतरस्थसर्वपापक्षयार्थंपुत्रपौत्रलक्ष्मी
वृद्ध्येसौभाग्यवृद्धिद्वाराअवैधव्यसपत्ननाशायकोकिलारूपगौरीप्रीत्यर्थंकोकिलाव्रतंकरिष्येइतिसंकल्प्य आषाढपौर्णमास्यांतुसंध्याका

लेह्युपस्थिते संकल्पयेन्मासमेकं श्रावणे प्रत्यहं ह्यहं स्नानं करिष्ये नियमान्ब्रह्मचर्यस्थिता सती भोक्ष्यामि नक्तं भूशय्यां करिष्ये प्राणिनां दयामित्युक्त्वा स्नानं करोमि देवेशि कोकिले शीतये तव जलेऽस्मिन्पावने पुण्ये सर्वदेवजलाशये इति मंत्रेण तिलामलककल्केन सर्वौषधिजलेन च वचापिष्टेन वाष्टौ दिनानि प्रत्येकं च सौषधियुक्तेन च षट् दिनान्येवं मासावधि स्नाने क्रमः एवं स्नात्वा रविं ध्यात्वा तस्मा अर्घ्यं संदापयेत् आदित्य भास्कर रवे अर्क सूर्य दिवाकर प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोऽस्तु ते इति सूर्यार्घ्यमंत्रः ततः स्वर्णपक्षां रौप्यपादां मौक्तिकनेत्रां प्रवालमुखीं रत्नपृष्ठां चूतचंपकवृक्षस्थां पक्षिरूपिणीं कोकिलां लिखित्वा पूजयेदित्युक्तं स्वर्णपक्षां रक्तनेत्रां प्रवालमुखरूपां कज्जलकस्तूरीवर्णसंयुक्तां समुत्पन्नां नंदने वने चूतचंपकवृक्षस्थां पुष्टस्वरसमन्विताम् चिंतयेत्पार्वतीं देवीं कोकिलारूपधारिणीम् ध्यानं आगच्छ कोकिले देवि देहि मे वांछितं फलम् चंपकद्रुममारूढा क्रीडंती नंदने वने आवाहनं आसनं क्षौमवस्त्रेण निर्मितं ह्यनघे तव गृहाणेदं मया देवि कोकिले प्रियवर्द्धिनि आसनं तिलस्नेहे तिलमुखे तिलसौरभ्ये तिलप्रिये सौभाग्यं धनपुत्रांश्च देहि मे कोकिले नमः तिलपुष्पफलैर्युक्तं पाद्यं मे प्रतिगृह्यतां पाद्यं रत्नचंपकपुष्पैश्च पीतचंदनसंयुतं हेमपात्रे स्थितं नार्यं गृहाणार्घ्यं नमोऽस्तु ते अर्घ्यं निर्मलं सलिलं गांगं कोकिले पक्षिरूपिणि वासं तेन सुगंधेन गृहाणाचमनीयकं आचमनीयं पंचामृतेन स्नपनं कोकिले कलकंठके मया दत्तेन शीतात्वं भवमे परमेश्वरि पयो दधि घृतं चैव शर्करा मधुसंयुतम् पंचामृतेन स्नपनं दत्तं स्वीकुरु कोकिले पंचामृतस्नानं मंदाकिनीजलं पुण्यं सर्वतीर्थसमन्वितम् स्नानार्थं ते मया दत्तं कोकिले गृह्यतां नमः स्नानं पट्टसूत्रकार्पाससूत्रेण वासांसि विविधानि च पीतवस्त्रप्रदानेन प्रीता भव मम अंबिके वस्त्रं कंचुकं च मया दत्तं नानावर्णविचित्रितम् कोकिले गृह्यतां देवि प्रसीद परमेश्वरि कंचुकीं हरिद्रारंजितं देविकंठसूत्रं समर्पितम् कोकिले सुभगे देवि वरदा शुभदा अंबिके कंठसूत्रं यानि रत्नानि सर्वाणि गंधर्वे पूरगेषु च तैर्युक्तं भूषणं हैमं कोकिले प्रतिगृह्यताम् भूषणानि श्रीखंडं चंदनं दिव्यं गंधाढ्यं सुमनोहरम् विलेपनं सुरश्रेष्ठे चंदनं प्रतिगृह्यतां चंदनं अक्षताश्च सु० अक्षतान् कुंकुमालक्तकं दिव्यं कामिनीभूषणास्पदं सौभाग्यदं गृहाणेदं प्रसीद हरवल्लभे हरिद्रां कुंकुमं चैव सिंदूरं कज्जलान्वितं सौभाग्य

द्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्यं करवीरैर्जातिकुसुमैश्चंपकैर्बकुलैःशुभैः शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वरीं पुष्पा
णि वनस्पतिरसोद्भूतो॰ धूपं साज्यंचेतिदीपं॰ शर्कराखंडखाद्यानिदधिक्षीरघृतानिच आहारार्थंमयादत्तंनैवेद्यंप्रतिगृह्यतां ने
वेद्यं पाटलोशीरकर्पूरसुरभिस्वादुशीतलं तोयमेतत्सुखस्पर्शंकोकिलेप्रतिगृह्यताम् आचमनीयं॰ चंदनागरुकर्पूरकस्तूरी
केसरान्वितं करोद्वर्तनकंदेविगृह्यतांहरवल्लभे करोद्वर्तनं कूष्मांडनारिकेरंचपनसंकदलीफलं जंबीरंमातुलिंगंचफलंगृण्ह्ने
मोस्तुते फलं॰ पूगीफलमितितांबूलं हिरण्यगर्भेतिदक्षिणां॰ कोकिलेकृष्णवर्णेत्वंसदावससिकानने भवानीहरकांतासिकोकि
लायैनमोनमः नीराजनं पूजितापरयाभक्त्याकोकिलागिरिशप्रिया पुष्पैर्नानाविधैःश्रेष्ठैर्वरदास्तुसदामम पुष्पांजलिं यानिका
निचेतिप्रदक्षिणां॰ नमोदेव्यैनमस्कारं॰ कोकिलारूपधारिण्यैजगन्मात्रेनमोस्तुते शरणागतदीनानांत्राहिदेविसदांबिके गंध
पुष्पाक्षतैर्युक्तंतोयंहेमफलान्वितम् अर्घ्यंगृहाणदेवेशिवांछितार्थप्रयच्छमे आषाढस्यासितपक्षेमेघवर्णेहरिप्रिये कोकिलेत्वंज
गन्मातर्गृहाणार्घ्यंनमोस्तुते पुनरर्घ्यम्॰ तिलस्नेहे॰ रूपंदेहिजयंदेहि॰प्रार्थना॰ व्रतांतेहैमींतिलपिष्टजांकोकिलांकृत्वाविप्रायदद्यात्
देविचैत्ररथोत्पन्नेविंध्यपर्वतवासिनि अर्चितापूजितासित्वंकोकिलेहरवल्लभे कोकिलेकलकंठासिमाधवेमधुरस्वरे वसंतेदेविगच्छ
त्वंदेवानांनंदनेवने इतिविसर्जनं इतिकोकिलापूजा अथकथा युधिष्ठिरउवाच स्वभर्त्रासहसंयोगःस्नेहःसौभाग्यमेवच भ
वेद्यथाकुलस्त्रीणांतद्व्रतंब्रूहिकेशव श्रीकृष्णउवाच यमुनायास्तटेरम्येमथुरानगरीशुभा तस्यांशत्रुघ्ननामाभूद्राजाराघववंशजः
तस्यभार्याकीर्तिमालानाम्नासीत्प्रथिताभुवि प्रणम्यभगवान्पृष्टोवसिष्ठोमुनिसत्तमः कीर्तिमालोवाच वदमेत्वंमुनिश्रेष्ठसौभाग्यप्राप्ति
दंव्रतम् पूज्यःकथंचभगवान्शिवःकेनव्रतेनच वसिष्ठउवाच यदिपृच्छसिमेत्वंहिव्रतानामुत्तमंव्रतम् तारणंसर्वपापानां
कथयामिनिबोधतत् दक्षप्रजापतेर्यज्ञेपुरादेवाःसमागताः ऋषयश्चतथासर्वेविद्याधरगणास्तथा ब्रह्माविष्णुश्चवायुश्चदेवरा
जस्तथैवच वरुणोग्निर्ग्रहाश्चैवयेचान्येचदिवौकसः वसिष्ठोवाल्मिकिर्गार्ग्योविश्वामित्रोमहानृषिः एतेचान्येचऋषयःसर्वेयज्ञार्थमागताः

अपश्यन्नारदस्तत्रसंतिकेत्वागताइति ईश्वरेणविनासम्यक्दृष्ट्वा सर्वान्समागतान् शिखांसंस्पृश्यपाणिभ्यांननर्तकलहप्रियः ज्ञात्वासक
लमूलंचततःकैलासमाययौ सर्वाघनाशनंपुण्यंकैलासशिखरंशुभम् तत्रदृष्ट्वासमासीनंगौरीसहितशंकरं कृतांजलिपुटोभूत्वाप्रणिप
त्यमुनिःस्थितः ईश्वरस्तमुवाचाथनिःश्वसंतमनंकथा किमागमनकृत्यंतेमदीयंसदनंप्रति श्वासोश्वासेनसंयुक्तस्त्वंमेब्रूहिद्विजोत्तम ईश्वरस्य
वचःश्रुत्वाशिखांसंस्पृश्यपाणिना दुःखयुक्तइवोवाचनारदःकलहप्रियः नारदउवाच यन्निमित्तंमहादेवमर्त्यलोकात्समागतः वदामिदुः
खसंयुक्तंतच्छृणुष्वजगत्पते दक्षयज्ञमहंदृष्ट्वमद्यदेवात्समागतः तत्रयज्ञेस्थिताःसर्वेदक्षजामातरःप्रभो दृष्ट्वातांश्चनतन्मध्येदृष्टस्त्रिभुव
नेश्वरः तवावज्ञाकृतानेनदक्षेणापुण्यकर्मणा तेनवैश्वाससंयुक्तआगतोस्मितवांतिकम् ईश्वरेणविनाकिंचिद्धर्मकार्यंनसिध्यति अतोस्यावि
फलःसर्वःप्रयासःस्वमरवंप्रति तस्यतद्भाषितंश्रुत्वानतन्मिथ्येत्यचिंतयत् सक्रोधस्तत्तदाजातोहीश्वरोजगदीश्वरः गौर्याचप्रार्थितोदेवःश्रु
त्वातन्नारदेरितम् तस्ययज्ञस्यघातायदेवतत्रव्रजाम्यहम् इत्युक्त्वाचलितारोषादीश्वरेणनिवारिता जगदीशनमस्तुभ्यंव्रजामिपितृवेश्म
नि नारदेनाथसहितागणेशेनचसंयुता यज्ञार्थमागताचैवदक्षद्वारेशिवप्रिया वन्हौदृष्ट्वावसोर्धारांनज्जिनाचशिवप्रिया तिष्ठंतींद्वारितांद
क्षोनददर्शमहासतीम् क्षणमेकंचतिष्ठंतीयदादक्षोनपश्यति तदैवंचिंतितंगौर्याजीवितव्यंमयाकथम् धावित्वाकुंडनिकटेहाहाकृत्वाचसात
तःक्षिप्तंवन्हौतदागौर्याशापंदत्वाचदारुणम् दृष्ट्वातच्चगणेशेनपाशःपरशुरुद्यतः क्षुब्धोन्यसौतदान्यर्थंगौर्यर्थंचगणाधिपः पाशेनब
ध्वाकतिचित्क्रोपान्निहतवान्सुरान् दक्षेणनोदितादेवाःसर्वेयुद्धायनिर्ययुः महद्युद्धमभूद्भूयःसहदेवैर्गणेशितुः तंदृष्ट्वानारदःशीघ्रंपुनः
कैलासमाययौ निवेदयामासतदायुद्धंगौर्याविसर्जनं तच्छ्रुत्वास्फालयामासजटांकोपादुमापतिः ततोजातोतिविकटःपुरुषोरक्तलोचनः सप्रमाषेमहादेवं
स्वामिन्नाज्ञांचदेहिमे वीरभद्रेतिनामास्यकृत्वाचाज्ञांसमर्पयत् दक्षयज्ञविघातार्थंगच्छवीराशिसत्वरम् श्रुत्वातदीश्वरवचःसर्वप्रमथसंवृतः आ
ययौयज्ञसदनमसृग्वान्हिषुनिक्षिपत् ततइंद्रादयोदेवास्तद्धायाविनिर्ययुः क्षणात्पराजितास्तेनविद्रुताश्चदिशोदश अनुद्रुतश्चतान्सोपिपूष्णो
दंतानपातयत् भगस्यनेत्रेनासांचसरस्वत्याश्चकृंतत एवंविद्राव्यतान्सर्वान्शिरोदक्षस्यचिच्छिदे कृत्वैवंयज्ञघातंसआजगामशिवांतिकं

नमस्कृत्यपुरःस्तस्थौ कृतंकार्यमितिब्रुवन् तथाप्यशांतः कोपोस्यज्ञात्वेतिज्ञानचक्षुषा प्रसादयितुमासीनंब्रह्माविष्णूसमीयतुः नम
स्कृतस्ततस्ताभ्यांप्रसन्नोभूत्सदाशिवः नारदस्तुंबरुश्चैवगीतैः शिवमतोषयत् प्रसन्नंवीक्ष्यतंविप्रशिरवांसंस्पृश्यपाणिना ननर्दनारद
स्तत्रतोषयन्नधिकंशिवम् एतस्मिन्नंतरेब्रह्माविष्णुश्चप्रमथाधिपम् व्यजिज्ञपत्तंदक्षादीन्कृपाहस्याविलोकय कृत्तांगान्कुरुपूर्णांगान्मृ
तान्संजीवयप्रभो विलोकितास्तेदेवेनकृपादृष्ट्याविलोकिताः पूषादयश्चसांगावैअभूवंस्तत्प्रसादतः उत्थितःपादयोर्मूलंपपौदक्षःपिनाकि
नः अपराधंक्षमस्वेतिपुनःपुनरुवाचह उत्थापितःकरेणासौनतोदक्षःपिनाकिना उक्तश्चमापुनःकार्षीरेवमीशावमानकम् विचरस्वस्वकर्मेणेति
भूयस्तंकोपआविशत् शशापचतदागौरींयज्ञविघ्नकरींशिवः मुखंविघ्नंकृतवतीदक्षस्यैषाततोचिरात् तिर्यग्योनिसमापन्नाविचरिष्यसिभूतले
ततोगौरीबभाषेतंप्रणिपत्यसदाशिवम् कथंयास्यामितिर्यक्त्वंभूतलेचस्थितिःकथं अन्यथानैवभविताशापएषत्वयोदितः कोकिलामधुराला
पाभवेयंनंदनेवने कोकिलानांस्वरोरूपंरूपंस्त्रीणांपतिव्रतम् विद्यारूपंकुरूपाणांक्षमारूपंतपस्विनाम् अचिरादेवचपुनःकुलेमहतिजन्मभे भू
यास्त्वमेवभर्ताचनवियोगश्चमेमतः वरयेत्कुलजांप्राज्ञःकुरूपामपिकन्यकां दुष्टकुलेसमुत्पन्नाभर्त्तुःपातयतेकुलम् नदीपातयतेकूलंनारी·
पातयतेकुलं नदीनांचैवनारीणांस्वच्छंदंललितागतिः ततस्तुष्टोमहादेवश्चक्रेशापविमोचनम् दशवर्षसहस्राणिकोकिलारूपधारिणी नंदने
देवविपिनेचरिष्यसिततःपरं हिमाचलसुताभूत्वामत्प्रियत्वमुपैष्यसि देवानांचयथाविष्णुःसहकारोमहीरुहां गंगाचसर्वतीर्थानांतथातिर्यक्षु
कोकिला आषाढोह्येयदास्यात्तांकोकिलायास्तदार्चनम् तथायाकुरुतेनारीनसावैधव्यमाप्नुयात् वसिष्ठउवाच एतद्वाक्यावसानेतुगौरी
साकोकिलाभवत् तदारभ्यप्रशस्तंहितत्प्रथितंकोकिलाव्रतम् यानारीनैवकुरुतेमोहात्साविधवाभवेत् कुरुत्वमेतत्कल्याणिकीर्तिमालेव्र
तोत्तमम् कीर्तिमालोवाच कथमाराध्यतेदेवीकोकिलारूपधारिणी विधानंब्रूहितद्विप्रत्वत्प्रसादात्करोम्यहम् वसिष्ठउवाच कोकि
लाव्रतमाहात्म्यंविधानंचवदामिते शृणुदेविप्रयत्नेनमंत्रैःपौराणिकैर्युतम् मलमासेत्वतिक्रांतेशुद्धाषाढेसमागते आषाढ्यांपौर्णमास्यांतु
संध्याकालेह्युपस्थिते संकल्पयेन्मासमेकंश्रावणप्रभृतिस्त्वहं स्नानंकरिष्येनित्यंचब्रह्मचर्यस्थितासती भोक्ष्येनक्तंचभूशय्यांकरिष्येप्रा

णिनां दयाम् सौभाग्यधनधान्यादिप्राप्तये शिवतुष्टये इति संकल्प्य विप्राग्रे नारी विप्रेभ्य एव च प्राप्यानुज्ञां तु संपाद्य सामग्रीं सकलामपि प्रत्यूषेच
प्रतिदिनं दंतधावनपूर्वकम् नद्यां गत्वाथ वाप्यां वा तडागे गिरिनिर्झरे स्नानं करोमि देवेशि कोकिलाप्रीतये तव जलेस्मिन्पावने पुण्ये सर्वदेकजला
शये स्नानं कृत्वा व्रतीदेवि सुगंधामलकैस्तिलैः दिनाष्टकं ततः पश्चात्सर्वौषध्या पुनः पृथक् वचापिष्टेन च स्नानं दिनान्यष्टौ समाचरेत् शिला
मलकपिष्टेन धत्रौषधियुतेन च षट्दिनानि ततः स्नानं संपूर्णफललिप्सया स्नात्वा ध्यात्वा रविं तस्मै दद्यादर्घ्यं प्रयत्नतः आदित्य भास्कर रवे
अर्क सूर्य दिवाकर प्रभाकर नमस्तुभ्यं गृहाणार्घ्यं नमोस्तु ते सूर्यार्घ्यमंत्रः कारयेत्कोकिलां देवीं सौवर्णीं सर्वकामदां रौप्यं चरणयोश्चैव
नेत्रयोश्चापि मौक्तिके रत्नानि पंच पृष्ठे तु चूतवृक्षसमाश्रिताम् अथवा तिलपिष्टेन कोकिलां पक्षिरूपिणीम् निधाय ताम्रपात्रे तां पूजयेत्सुस
माहितः उपचारैः षोडशभिर्यथावित्तं निबोध मे आवाहयामि तां देवीं कोकिलारूपधारिणीम् अवतारं कुरुष्वात्र प्रसादं कुरु सुव्रते आगच्छ को
किले देवि देहि मे वांछितं फलम् चूतवृक्षं समारूढा रमसे नंदने वने तिर्यग्योनिसमुद्भूते कोकिले कलकंठके तिलपुष्पाक्षतैर्युक्तं गृहाण त्वं
नमोस्तु ते आषाढस्यासिते पक्षे मेघवर्णस्वरूपिणि कोकिला नाम देवि त्वं स्नानार्थं प्रतिगृह्यताम् कुर्यादेवं विधां पूजां श्रावण्यंतं च पूजयेत्
विसर्जयेच्च पश्चात्तां सौवर्णीं कोकिलां यदि यदा च तिलपिष्टस्य कोकिला क्रियते तदा कुर्यात्स्वगृहमध्ये न भिन्ना वास्तु विसर्जनम् रम्यं वनं स
मागत्य श्रुत्वा कोकिलकूजितम् यदा न श्रूयते शब्दमुपवासं नु तद्दिने कोकिले कृष्णवर्णे त्वं सदा वासो वने षु ते सौभाग्यमतुलं देहि गृहाणार्घ्यं
नमोस्तु ते वसंते च समुत्पन्ने विंध्यपर्वतवासिनि गच्छ गच्छ महादुर्गे स्वस्थानं नंदने वने विसर्जनं रूपं देहि धनं देहि सर्वसौभाग्यदा हि
मे पुत्रान्देहि यशो देहि सौभाग्यं देहि संपदः इत्युक्त्वा तु ततः पश्चाद्धविष्यान्नेन सुव्रती नक्तभोजी भवेद्राजन्यावन्मासः समाप्यते मासां
ते ताम्रपात्रे तु कोकिलां स्वर्णनिर्मितां वस्त्रधान्यगुडैर्युक्तां श्रावण्यां कुंडलं तथा दद्याच्च दक्षिणां चापि देवज्ञवा पुरोहिते एवमाषाढमासस्य
हे विध्ये समुपस्थिते सधवा विधवा वापि या नारी कोकिलाव्रतम् करोति सप्त जन्मानि सौभाग्यं लभते तु सा मृता गौरीपुरं याति विमाने
नार्कतेजसा श्रीभगवानुवाच एतद्व्रतं वसिष्ठेन मुनिना कथितं पुरा तथा कृतं तु तत्पार्थ समस्तं कीर्तिमालया तस्याश्च सर्वं निष्प

न्वंवसिष्ठवन्वनंतथा एवमन्यापिकौंतेयकोकिलाव्रतमुत्तमं नकरोतियदानारीव्यालीभवतिकानने एकतः सर्वदानानिकोकिलाव्रतमे
कतः कृतंपुराप्सरोभिश्चऋषिपत्नीभिरादरात् अहिल्ययाचसापूर्वमर्चिताशापमुक्तये अरुंधत्यासहस्नात्वापूजिताकोकिलानृप सीतया
पूजितासापिसर्वकामार्थसिद्धये गौतम्यादंडकारण्येस्नानंकृत्वायथाविधि नलान्वेषणकामेनदमयंत्याचपूजिता रुक्मिण्याचततः
स्नात्वापूजिताकोकिलाशिवा विष्णोःपत्न्यरवाप्त्यर्थंतच्चजातंनसंशयः कुचैलामलिनादीनापरकर्मरतातथा एवंवंध्याकाकवंध्याविवत्सामृ
तवत्सका सर्वास्ताः फलभाजः स्युर्व्रतस्यास्यप्रभावतः आयुरारोग्यमैश्वर्यंसुरवंवृद्धिंयशःप्रजाम् सौभाग्यंसुंदरंरूपंनारीप्राप्नोतिनान्यथा
एतद्व्रतंमयाख्यातंकार्यंवारत्रयंनृप तृतीयांतेचविधिवत्कार्यमुद्यापनंशुभम् एकस्माज्जायतेद्रव्यंद्वितीयाल्लभतेसुतान् तृतीयाच्चापिसौभा
ग्यंप्राप्नुयान्नात्रसंशयः इतिवराहपुराणेकोकिलाव्रतम् अथोद्यापनम् उद्यापनविधिंब्रूहिव्रतस्यास्यममप्रभो येनविज्ञानमात्रेण
सौभाग्यंचभविष्यति श्रावणेपौर्णमास्यांतु शुक्लपक्षेतथैवच द्वितीयायामेकभुक्तंदंतधावनपूर्वकम् उपवासस्यनियमंकर्तुंव्रतपराय
णं तृतीयापुण्यफलदामध्यान्हेसमुपोषिता उपलिप्यशुचौदेशेमंडलंतत्रकारयेत् अष्टदलंलिखेत्पद्मंचतुष्कोणंचभद्रकं कलशंवारिपूर्णं
चपंचरत्नसमन्वितम् तस्योपरिन्यसेत्पात्रंप्रस्थेनैकेनपूरयेत् तदभावेतदर्धंवाकुडवेनाथनारद उर्णापट्टंकृष्णवर्णंयुग्मंदद्याच्चशक्तितः ते
स्योपरिन्यसेद्देवींकोकिलाप्रतिमांतथा अत्रगंधप्रदानेनधूपदीपप्रदानकम् नैवेद्यंमोदकान्दद्यात्पक्वान्नंघृतसंयुतं अर्घ्यंचैवप्रदातव्यंतां
बूलंफलमुत्तमम् रात्रौजागरणंकार्यंवाद्यनृत्यप्रभूषितम् पूजितापुंकचित्तेनफलंप्राप्नोतिचाक्षयम् प्रभातेविमलेस्नात्वासंध्यांकृत्वाविधा
नतः पूजयेद्विधिवद्देवींहोमंचविधिवद्द्विज तिलन्दंपकपुष्पैश्चतंडुलैर्घृतपायसैः अष्टोत्तरशतंहुत्वादुर्गामंत्रैश्चवैदिकैः कोकिलाप्रीतये
ब्रह्मन्व्याहृतीनांशतत्रयम् ब्राह्मणान्भोजयेत्पश्चात्सपत्नीकांश्चपंचच अशक्तौत्वेकयुग्मंचभोजयेच्चतथागुरुम् त्रिस्त्रिभ्यश्चप्रदात
व्यंधारिकापंचकंतथा मोदकांश्चससूत्रांश्चवंशपात्रसमन्वितान् कृष्णवर्णसमायुक्तान्पक्वान्नेनप्रपूरितान् सर्वोपस्करसंयुक्तांस्त्रिस्त्रि
भ्यश्चप्रदापयेत् आचार्यंपूजयेद्भक्त्यागांकृष्णांचसवत्सकाम् उपानहौतथाशय्यांचामरंछत्रमेवच मुद्रिकांकर्णवेष्टंचचंदनंकुसुमानिच

सर्वदद्याद्द्विजेंद्रायसपत्नीकायनारद दापयेद्द्विधिवत्सर्वंब्राह्मणायकुटुंबिने ब्रतोपदिष्टदानंचभोजनंचसदक्षिणं एवंयाकुरुतेराजन्को
किलाब्रतमुत्तमम् सर्वंप्राप्नोतिसौभाग्यंपुत्रधान्यधनानिच ततोभुंजीतनैवेद्यंपुत्रपौत्रैःसमन्विता कोकिलेपूजितेगच्छविधिवत्सर्व
कामदे कारयेत्कोकिलांदेवींसौवर्णींसर्वकामदां रौप्यचरणचंचूभिरन्वितांनेत्रमौक्तिकाम् पंचरत्नानिपृष्ठेचचूतवृक्षसमाश्रितां एवंत्वंच
यथापूज्यायथोक्ताचशनैःशनैः विप्रकरार्चिताल्लक्ष्मीःस्वस्वभावमिदंशृणु महाफलमवाप्नोति महामायाप्रसादतः इतिवराहपुराणेको
किलाब्रतोद्यापनंसंपूर्णं अथश्रावणपौर्णमास्यांरक्षाबंधनम् उक्तंहेमाद्रौभविष्ये युधिष्ठिरउवाच सर्वरोगोपशमनंसर्वाशु
भविनाशनम् सकृत्कृतेनाब्दमेकंयेनरक्षाकृताभवेत् श्रीकृष्णउवाच शृणुपांडवशार्दूलइतिहासंपुरातनं इंद्राण्यायत्कृतंपूर्वं
शक्रस्यजयवृद्धये देवासुरमभूद्युद्धंपुराद्वादशवार्षिकम् तत्रासुरैर्जितःशक्रःसहसर्वैःसुरोत्तमैः बृहस्पतिमुपामंत्र्यइदंवचनमब्र
वीत् नस्थातुंचैवशक्नोमिनगंतुंतैरभिद्रुतः सर्वथायोद्धुमिच्छामिगुरुस्त्वंचन्यवारय तयोःसंवदतोरेवंशचीप्राहसुरेश्वरं अद्यभूत
दिनंदेवप्रातःसर्वंभविष्यति अहंरक्षांविधास्यामियेनाजेयोभविष्यसि इत्युक्त्वापौर्णमास्यांसापौलोमीकृतमंगला बबंधदक्षिणेपाणौर
क्षापोटलिकांततः बद्धरक्षस्ततःशक्रःकृतस्वस्त्ययनोद्विजैः दुद्रावदानवानीकंक्षणात्कालइवप्रजाः शक्रस्तुविजयीभूत्वापुनरेवज
गत्त्रये एषप्रभावोरक्षायाःकथितस्तेयुधिष्ठिर जयदःसुखदश्चैवपुत्रारोग्यधनप्रदः युधिष्ठिरउवाच क्रियतेकेनविधिनारक्षाबंधःसु
रोत्तमैः कस्मांतिथौकदादेवएतन्मेवक्तुमर्हसि यथाहिभगवन्देवविचित्राणिप्रभाषसे तथातथानमेतृप्तिर्बह्वर्थाःशृण्वतःकथाः कृष्ण
उवाच संप्राप्तेश्रावणेमासिपौर्णमास्यांदिनोदये स्नानंकुर्वीतमतिमान्श्रुतिस्मृतिविधानतः ततोदेवान्पितृंश्चैवतर्पयेत्परमांभसा उपा
कर्माणिचैवोक्तमृषीणांतर्पणंतथा कुर्वीतब्राह्मणैःसार्द्धंवेदानुद्दिश्यशक्तितः शूद्राणांमंत्ररहितंस्नानंदानंचशस्यते ततोपराण्हसमयेरक्षा
पोटलिकांशुभां कारयेच्चाक्षतैस्तद्वत्सिद्धार्थैर्हेमचर्चितैः कार्पासैःक्षौमवस्त्रैर्वाविचित्रैर्मलवर्जितैः विचित्रतंतुग्रथितांस्थापयेद्भाजनोपरि
[illegible]गृहस्यरक्षावैगोमयैःशकृतंडुलैः दूर्वावर्णैःसितैश्चित्रैःसर्वपापविनाशिनी उपलिप्तेगृहमध्येसान्नंकुंभंचविन्यसेत् पीठोपरिविशेद्रा

आसन्निवेः सुमुहूर्तके वेश्याजनेनसहितोमंगलैःसहितःस्थितैः रक्षाबंधःकार्यसिद्धिःसर्वविघ्नोपशांतिदः पुरोधानृपतेरक्षांसम्यग्ब
ध्नीतमानवः येनबद्धोबलीराजादानवेंद्रोमहाबलः तेनत्वामपिबध्नामिरक्षेमाचलमाचल ब्राह्मणैःक्षत्रियैर्वैश्यैःशूद्रैरन्यैश्चमानवैः
कर्तव्योरक्षिकाबंधोद्विजान्संपूज्यभक्तितः अनेनविधिनायस्तुरक्षाबंधंसमाचरेत् ससर्वदोषरहितःसुखीसंवत्सरंभवेत् रक्षाबंधो
भद्रायांनकार्यः भद्रायांद्वेनकर्तव्येश्रावणीफाल्गुनीतथा श्रावणीनृपतिंहंतिग्रामंदहतिफाल्गुनी इतिवचनात् इतिभविष्योक्तंरक्षाबंध
नंसंपूर्णम् अथभाद्रपदपौर्णमास्यांउमामहेश्वरव्रतंशिवरहस्ये राजोवाच भगवन्मुनिशार्दूलव्रतमेकंवदस्वमे सांगंयस्मिन्कृतेचीर्णेस
र्वान्कामानवाप्नुयात् गौतमउवाच उमामहेश्वरंनामव्रतमस्तिव्रतोत्तमम् मासिभाद्रपदेशुक्लपौर्णमास्यां
प्रयत्नतः तद्व्रतंकार्यमनघैर्ब्राह्मणाद्यैर्विधानतः भाद्रशुक्लचतुर्दश्यांप्रातःस्नात्वाविधानतः शिवंसंपूज्यविधिवत्शैवानप्यतियत्नतः शि
वंध्यात्वाजगद्वंद्यंसोमंसोमार्धशेखरम् कृतांजलिपुटोभूत्वामंत्रमेतत्पठेन्नरः श्वःकरिष्येव्रतंयत्नादुमामहेश्वराभिधम् आज्ञांदेहिमहादे
वसोमसोमार्द्धशेखर इतिविज्ञाप्यदेवेशंपुनःसंपूज्ययत्नतः मध्याह्नेपिमहादेवमर्चयेन्नियतोव्रती ततोदेवानृषीन्सर्वानभ्यर्च्यविधिव
न्नृप हविष्याशीशिवंसायंपूजयेद्विधिपूर्वकम् निद्राकार्यातथायोगंमहादेवस्यसन्निधौ उत्थायपश्चिमेयामेमहादेवंततःस्मरेत् ततःशौ
चादिकंसर्वंनिर्वर्त्यप्रीतमानसः स्नानंकुर्याद्यथाभोगंयथाशास्त्रंयथाक्रमं परिधायततोवस्त्रंक्षालितंशुभमक्षतं उद्धूलनंततःकार्यंत्रिपुंड्रं
चयथाक्रमम् रुद्राक्षधारणंकार्यंसंध्याकार्याततःपरम् ततःशिवार्चनंकार्यंबिल्वपत्रादिभिर्नरैः ततोहोमोपिकर्तव्यःशिवप्रीत्यर्थमादरा
त् ततःपरंनियमनंप्रणमेत्सोममव्ययम् सग्रंथिकुशपिंजूलंततःसंपाद्यमादरात् गव्यंपंचदशग्रंथिंतत्पूजितंशिवात्मकम् एवंपंचदश
ग्रंथिदोरकंकुंकुमान्वितम् संपादनीयंयत्नेनव्रतनिष्ठेरनाकुलैः उमामहेश्वरंचैवसौवर्णंप्रतिमाद्वयम् संपादनीयं
यत्नेनराजतंवामनोहरम् पलादूनंनकर्तव्यंप्रतिमाद्वयमुत्तमम् अधिकंचेद्यथाशक्तिकर्तव्यमतियत्नतः
सौवर्णराजतंचापिताम्रंवामृन्मयंनवं संपादनीयंयत्नेनप्रयतैर्व्रततत्परैः ततःसदर्भमूर्तिंचवस्त्रयुग्मेनवेष्टयेत् पृथक्पृथ

कस्थापनीयं कलशे प्रतिमाद्वयम् आपोहिष्ठादिभिर्मंत्रैस्तथान्यैर्वरुणमंत्रकैः अभिषिच्य प्रयत्नेन पूजयेत्प्रतिमाद्वयं ततः प्रयत्नतो गच्छे
दलंकृतशिवालयम् शिवस्थानं ततो गच्छेत्तोरणाद्यैरलंकृतम् ततः षोडशकेप त्रैबहिर्गतश्चतुर्गुणे अलंकृतैः स्वर्णलिकाद्यैः स्थापयेत्कल
शं नवम् ध्यायेत्ततो महादेवमुमादेहार्द्धधारिणम् मुक्तामालापरीतांगं दुकूलपरिवेष्टितम् पंचाननमुमाकांतमनलेंदुरविप्रभम् चंद्रार्धशे
खरं नित्यं जटामुकुटमंडितं त्रिपुंड्रलेखाविलसद्भालनेत्रोपरिस्थितं भस्मोद्धूलितसर्वांगं रुद्राक्षाभरणान्वितं मंदस्मितमनाधारमाधारं ज
गतां प्रभुं देवैरनंतैरनिशं स्तूयमानमनेकधा देवात्मकं देववंद्यं विष्णुब्रह्मादिवंदितं विष्णुनेत्रान्वितारक्तपादपंकजमुत्तमं अप्रतिद्वंद्वमद्वंद्वं
सर्ववृंदारकार्चितं सर्वोत्तममनाद्यंतं सर्वदेवनिवेदितं सत्यं शब्दं परं ब्रह्म पुरुषं कृष्णपिंगलं ऊर्ध्वकेशं विरूपाक्षं विश्वरूपं चिदात्मकं निष्कलं
निर्गुणं शांतं निरवद्यं निरंजनम् अप्रमेयं जगज्जन्मध्वंसस्थितिसंस्कारकारणं विश्वबाहुं विश्वपादं विश्वाक्षं विश्वसंभवं विश्वनामयणं साध्यमक्षरं पर
मं पदं विश्वतः परमं नित्यं विश्वस्येशमनामयं एवं ध्यात्वा महादेवं सर्वदेवोत्तमोत्तमं ध्यायेत्ततः परं गौरीमादिविद्यामनामयीं लक्ष्मीसेवितपादा
आंशचीसेवितपादुकां सरस्वत्यादिभिर्नित्यं स्तूयमानपदांबुजां अधरोष्ठधरीभूतपक्वबिंबफलामुमां मुखकांतिकलापेतां पूर्णचंद्रामनामयीं
निरस्तालिमालांतामलकावलिभिः सदा पीनवक्षोजनिर्धूतचक्रवाकवरांगनां नित्यं तिरस्कृताभोगां नयनाभ्यामनिंदितां सीमंतधिक्कृताशे
षकामभल्लामहर्निशम् भृकुटीविकृताशेषशमभल्लामनाकुलां बाहुनालकलोद्भूतहेममालाविलासिनीम् रोमावलीनिरोभूतभ्रमद्भ्रमर
नालिकां नाभिरंध्रतिरोभूतघनावर्त्तामवर्तुलां उत्तमोरुनिरोभूतरंभास्तंभां शुभावहां पादयुग्मप्रभाक्रांतिनिर्जितारुणपंकजां उपेंद्रोपें
द्रजननीं महेशार्द्धांगभागिनीं महेशाब्धिप्रवामांगीं वरदाभयदां सदा प्रसन्नवदनां शांतां स्मितपूर्वाभिभाषिणीं पूर्णचंद्रदुकूलाद्यां नाना
भरणभूषितां स्तूयमानां सदा देवैर्यक्तैर्दानैश्च कोटिशः एवं ध्यात्वा ततः सम्यगुपचारान्प्रकल्पयेत् ततः पुष्पाणि संगृह्य शिवमावाहये
च्छिवां महादेव दयासिंधो विष्णुब्रह्मादिवंदित आवाहयामि देव त्वां प्रसीद परमेश्वर इत्यावाहनं आसनं पाद्यं अर्घ्यं आचमनं मधुपर्कं
पंचामृतस्नानं· स्नानं· वस्त्रं· उपवीतं· गंधं· आभरणानि· बिल्वपत्रं· पुष्पाणि· धूपं· दीपं· नैवेद्यं· आचमनीयं· फलं· तांबूलं· दक्षिणा· छत्रचामरं

व्यजनानि॰ नीराजनं॰ पुष्पांजलिं॰ प्रदक्षिणां॰ नमस्कारान् अथांगपूजा कपर्दिनेनमः शिरः पूजयामि भाललोचनाय॰ भालं॰ सोमसूर्याग्निलोचनाय॰ नेत्रत्रयंपू॰ सूत्रोत्राय॰ श्रोत्रेपू॰ घ्राणगंधाय॰ घ्राणं॰ स्मृतिदंताय॰ दंतान्पू॰ श्रुतिजिह्वाय॰ जिह्वांपू॰ सुकपोलाय॰ कपोलौ॰ ज्ञानोष्ठाय॰ ओष्ठौपू॰ विश्वजंघाय॰ जंघे॰ विश्वपादाय॰ पादौ॰ विश्वनखाय॰ नखान्पू॰ सर्वात्मकायन॰ सर्वांगं॰ अथशक्त्यंगपूजा शिवांगे॰ शिरःपू॰ पृथग्वेण्यैन॰ वेणींपू॰ सीमंतराजितायै॰ सीमंतंपू॰ कुंकुमभालायै॰ भालंपू॰ चक्षुष्मत्यै॰ नेत्रे॰ स्तुतिश्रोत्रायै॰ श्रोत्रे॰ गंधप्रियायै॰ घ्राणंपू॰ सुभगकपोलायै॰ कपोलौपू॰ कुड्मलदंतायै॰ दंतान्पू॰ विद्याजिह्वायै॰ जिह्वां॰ बिंबोष्ठायै॰ ओष्ठौपू॰ वृत्तकंठायै॰ कंठंपू॰ पृथुलकुचायै॰ कुचौपू॰ विश्वगर्भायै॰ उदरंपू॰ शुभकट्यै॰ कटींपू॰ दिव्यरुद्देशायै॰ ऊरूपू॰ वृत्तजंघायै॰ जंघेपू॰ लक्ष्मीसेवितपादुकायै॰ पादौ॰ महेश्वरप्रियायै॰ नखान्पू॰ शोभनविग्रहायै॰ सर्वांगं॰ अंगपूजांसमाप्यैवंदोरकंनविसर्जयेत् प्रत्येकंग्रंथिपुरस्त्वद्भावक्षोर्विल्वदलादिभिः प्रथमग्रंथिमारभ्यनमःसोमेतिमंत्रतः यथाक्रमेणसंपूज्यततोधार्यंहिदोरकम् तत्रोपचाराःसर्वेपितेनमंत्रेणसादरं प्रतिभिर्यत्नतःकार्यंकुंकुमांकितदोरकं ततः पंचदशप्रस्थागोधूमास्तंडुलांस्त्ववा उपायनार्थमानेयाःशल्यागोघृतपाचिताः यद्वापंचदशाज्याक्तागोधूमापूपमंडकाः ततः शिवैकशरणाः शैवाशिवव्रतप्रियाः पूजनीयाःप्रयत्नेनगंधपुष्पादिभिःक्रमात् ततःसवस्त्रकलशांशिवयोःप्रतिमाद्वयं शैवायदेयंयत्नेनसुवर्णफलसंयुतं आदावुपायनंदत्वादेयंह्येतदतःपरम् उपायनस्यमंत्रोपिवक्ष्यतेत्रविशेषतः उमेशःप्रतिगृण्हातित्युमेशोवेददातिच उमेशस्तारकोभाभ्यामुमेशायनमोनमः अमुंमंत्रंसमुच्चार्यदत्वादानंनिवेदयेत् अतःशैवाःप्रयत्नेनभोजनीयाविशेषतः सुवासिन्योपियत्नेनभोजनीयाःप्रयत्नतः शैवानेवंभोजयित्वास्वयंभुंजीतवाग्यतः अतिथीनपिसंतर्प्यद्वारदेशास्थितान्नृप एवंप्रयत्नतःकार्यंयावन्नवत्सरमादरात् नियमेनैवविधिवदुक्तरीत्यायथाक्रमम् ब्राह्मणाद्यैरिदंकार्यंघनमाहितमानसैः सर्वाभीष्टप्रदंपुण्यंव्रतमेतच्छिवात्मकम् प्राप्तेतुषोडशेवर्षेकार्यमुद्यापनंनृप उद्यापनविधानंचवक्ष्येशृणुयथाक्रमम् पौर्णमास्यांभाद्रपद्यांव्रतोद्यापनमादरात् कर्तव्यमितियत्नेनद्रव्यंसंपाद्यसादरं हैमीकार्यासार्द्धषड्भिःप्रतिमाचपलैःशुभा तदर्धेनाथवाकार्यातदर्द्धेनाथवानृप रजतेनाथवाकार्यापयोक्तपलमानतः संपादनीयाःकुंभाश्च

हैमाः पंचदशोत्तमाः अथवा राजताः कार्या यद्वा ताम्रमया नृप भाद्रशुक्लचतुर्दश्यां शैवा ब्राह्मणपुंगवाः निमंत्रणीया यत्नेन प्रातः सप्तदशोत्त
माः ततो गृहं वितानाद्यैरलंकृत्य प्रयत्नतः स्वस्तिकाद्यैरलंकुर्याच्छिवस्थानं शुभावहम् ततः सायं प्रयत्नेन तस्मिञ्छंकरमंदिरे पूजनीयाः प्रयत्नेन
शिवयोः प्रतिमे शुभे पूर्वोक्तेन विधानेन मंत्रैस्तैर्वरसाधनैः रात्रौ जागरणं कार्यं सोपवासं प्रयत्नतः ऋत्विग्भिः सह संस्थाप्य यामाद्याशनेन वा रात्रौ
शिवकथाः श्राव्याः श्रोतव्या यत्नतो नृप कर्तव्या यत्नतो गानोपि जायामचतुष्टये ततः स्थैर्यं प्रयत्नेन स्नात्वा शंकरसन्निधौ पूजनीयः प्रयत्नेन शि
वो देवशिखामणिः चतुरस्रं ततः कार्यं कुंडं प्रशस्तलक्षणान्वितम् तत्र वह्निं प्रतिष्ठाप्य विधिवद्गृह्यमार्गतः साज्येन परमान्नेन होमः कार्यस्ततः परं पंच
विंशतिसाहस्रं होमः सोमेति मंत्रतः कार्यः प्रयत्नतो राजन्नमः पूर्णान्सदा रतः ततः पूर्णाहुतिं हुत्वा शैवान्संपूजयेत्ततः बिल्वपत्रैः पुष्पमाल्यैर्भस्म
ना च यथाक्रमं एकैकस्मै प्रदातव्यं शिवयोः प्रतिमाद्वयम् कन्यकापि प्रदातव्या ततो वस्त्रद्वयान्वितः आचार्याय प्रदातव्यं स्वर्णशतमादरात्
ततो यत्नेन शैवेंद्राः पूजनीयाः कृतव्रतैः सुवासिन्योपि शैवानां भोजनीयाः प्रयत्नतः ततो देवाः स्वशक्त्या च भोजितेभ्यश्च दक्षिणाः ततश्च स्व
कृतं कर्म शिवाय च निवेदयेत् उद्यापनं कृतं शंभो मयेतदभूनाम्नो इदं संपूर्णतां यातु त्वत्प्रसादान्महेश्वर मंत्रहीनं भक्तिहीनं शक्तिहीनमुमा
पते कृतं कर्म भवत्वद्य त्वत्प्रसादात्फलप्रदं प्रायश्चित्तं वैदिकानां व्यंगानामपि कर्मणाम् शिवस्मरणमेवेति श्रुतिरप्यस्ति शांकरी अतः कृतमिदं
श्रौतं कर्म व्यंगमपि प्रभो सांगं भवतु विश्वेश तवैव स्मरणात्प्रभो इति संप्रार्थ्य देवेशं सांबं सर्वसुरोत्तमं भुंजीयाद्बंधुभिः सार्द्धं सप्तमे तैलवर्जि
तं एवं यः कुरुते सम्यगुमामहेश्वरव्रतं स सर्वान्भोगान्भुक्त्वांते मोक्षमाप्नोति सर्वदा राजोवाच गौतमेदं व्रतं चीर्णं पुरा केन वदस्व मे कस्य का
मप्रसिद्धिर्व्रतस्यास्य प्रभावतः गौतम उवाच पुरा शैववरो राजन्दुर्वासाख्यो मुनीश्वरः कदाचित्संचरँल्लोकान्ददर्श कमलापतिं ततः स
मागतं हरिं दृष्ट्वा दुर्वासा मुनिसत्तमः बिल्वमालां ददौ तस्मै शंकरेण समर्पितां गृहीत्वा बिल्वमालां तां हरिर्गमनसंभ्रमात् शिरसा पूजनीयां तां गरुडे स विनिक्षि
पत् ततस्तं तादृशं दृष्ट्वा दुर्वासाः क्रोधमूर्च्छितः हरिं शशाप बहुधा धिग्जन्मेति च संवदन् मया शिवार्पिता दत्ता माला नृप्यमयापहा सा कथं गरुड
स्कंधे विनिक्षिप्ता त्वया हरे गर्वस्य मूलभूतेयं लक्ष्मीस्तव विनश्यतु वैकुंठस्याधिकारोपि तव मास्तु ममाज्ञया निस्तेजस्कोवनीपृष्ठे संचराद्य

वधिध्रुवम् इत्युक्त्वासतुदुर्वासाययौलोकांतरंनृप ततःपपानदुग्धाब्धौलक्ष्मीर्विष्णुमनोहरा उवासाविपिनेघोरेस्वकृतंकर्मसंस्मरन् ततः
कदाचिद्भूपालमयातत्रगतंपुरा तदामामागतंहस्त्वापूजयामासमांहरिः ततोश्रुपूर्णनयनःकृतांजलिपुटोहरिः जगादपूर्ववृत्तांतंस्वलक्ष्मीना
शकारणम् ततोतिक्लांतचित्तायविष्णवेव्रतमुत्तमम् तत्पृष्टेनमयाभूपकथितंसादरंशिवम् ततोविलंबंविधिवच्चकारश्रद्धयान्वितः ततः
प्रसन्नोभगवान्हरयेपार्वतीपतिः ददौलक्ष्मींसगरुडांकरुणानिधिरव्ययः इदमेवव्रतंचीर्णमिंद्रेणापिहतौजसा तेनप्राप्तस्ततःस्वर्गःस्वर्गभो
गश्चशाश्वतः ब्रह्मणापिपुराचीर्णमिदमेवव्रतंनृप नष्टावागीश्वरीतेनसंप्राप्तादुर्लभापिसा मुनिभिश्चपुराचीर्णंव्रतमेतन्मुमुक्षुभिः अस्यव्र
तस्याचरणान्मुक्तिःप्राप्तामुनीश्वरैः इदंव्रतंप्रयत्नेनयःकरिष्यतिभक्तितः तस्यसौभाग्यसंपत्तिर्भविष्यत्येवसर्वथा यस्यास्त्यैश्वर्यभोगेच्छा
मोक्षेच्छाप्यनपायिनी यस्यसर्वाधिपत्येच्छातेनकार्यमिदंव्रतम् वैधुतेनापिविप्रेणमोक्षार्थमतियत्नतः कृतमेतद्व्रतंपूर्वंसर्वाभीष्टफलप्रदं
मुक्तिःप्राप्ताचतेनापिव्रतस्यास्यप्रभावतः यंयंकामंसमुद्दिश्यव्रतमेतदनुत्तमं यःकरिष्यतितंकामंससमाप्नोतिनिर्मलम् इदंव्रतंमहेशे
नसमाख्यातमुमांप्रति कुमारायसमाख्यातमुमयैतद्व्रतंशुभम् नंदिकेशायकथितंमयाचैतद्व्रतंशुभं नंदिकेशेनकथितंदुर्वाससेमु
नयेततः दुर्वाससापिकथितमगस्त्यायव्रतोत्तमम् व्रतंचप्रागरेमह्यमगस्त्येनमहात्मना मयातिक्लिन्नचित्तायविष्णवेकथितंपुरा तें
नचीर्णंव्रतमिदंसर्वसौभाग्यदायकम् ब्रह्मणेकथितंपूर्वमिदमेवव्रतंमया तेनचीर्णंव्रतंसांगंवाणीप्राप्त्यर्थमादरात् सूर्यायेंद्रायचंद्रा
यमयैतत्कथितंव्रतम् तेनचीर्णंव्रतमिदंसर्वसौभाग्यदायकम् कश्यपादिमुनिभ्यश्चकथितंव्रतमुत्तमं तैश्चचीर्णंव्रतंसम्यग्भुक्तिमुक्तिप्र
दम् भूपव्रतानिसंत्येवबहूनिविविधानिच तथाप्येतादृशंदेवव्रतंनास्त्येवसर्वथा भवानपिकुरुप्रीत्याभूपालव्रतमुत्तमम् इदंव्रतं
शिवक्षेत्रेयःकरिष्यतिभक्तितः तस्यसर्वार्थसंपत्तिर्भवत्येवनसंशयः शिवउवाच इत्येतद्वचनंश्रुत्वासराजाप्रीतमानसः सपुत्रः
पूजयामासगौतमंशैवपुंगवम् ततोधर्मव्रतंचैवमुपदिश्यसगौतमः पुनःसंपूजितोराज्ञास्वाश्रमंप्रतिसंययौ जगामपुत्रस्तद्वाक्यमिदंमा
हेश्वराभिधं व्रतंचकारविधिवद्यथाक्रममतंद्रितः इतिशिवरहस्येउमामहेश्वरव्रतोद्यापनंसंपूर्णम् इदंकर्नाटकेप्रसिद्धं अथाश्विनपौर्ण

मास्यांकोजागरव्रतम्   आश्विनपौर्णमासीपरायाह्या   अश्वयुजिकर्मणिपूर्वाण्हव्यापिनीदेवकर्मत्वात्प्राह्या अथ कोजाग[illegible]
व्यापिनीरात्रौलक्ष्मीपूजनाक्षक्रीडाप्रधानत्वात्प्रदोषव्यापिन्येवकार्या स्कांदे अस्तिकोजागरंनामव्रतानामुत्तमंव्रतम् यत्कृत्वासमवाप्नोति
जंतुर्लोकाननुत्तमान्  ऋषयऊचुः कार्तिकस्यउपांगानिव्रतानिकथयंतुनः कृतेषुयेषुभवतिसंपूर्णकार्तिकव्रतम्  वालखिल्याऊचुः
आश्विनेशुक्लपक्षेतुभवेद्याचैवपूर्णिमा तद्रात्रौपूजनंकुर्याच्छ्रियोजागृतिपूर्वकम् नारिकेरोदकंपीत्वाअक्षक्रीडांसमारभेत् निशीथेवर
दालक्ष्मीःकोजागर्तीतिभाषिणी जगत्प्रभुमतातस्यांलोकचेष्टावलोकिनी तस्मैवित्तंप्रयच्छामियोजागर्तिमहीतले सर्वथैवमकर्तव्यंव्र
तंदारिद्र्यभीरुभिः एतद्व्रतप्रभावेनवलितोपिधनीभवत् ऋषयऊचुः वलितःकोन्यतेकोसौलब्धवान्सकृतोव्रतम् एतदिच्छामहेश्रोतुंब्रूतवा
लखिल्यास्तपोधनाः  वालखिल्याऊचुः ब्राह्मणोवलितोनाममागधःकुशसंभवः नानाविद्यासवर्णोसौसंध्यास्नानपरायणः यत्वनेम
रणंतुल्यंमन्यतेसद्द्विजोत्तमः गृहागतंसगृण्हातिनान्यंयाचयतेक्वचित् तस्यभार्यामहाचंडीनित्यंकलहकारिणी मद्गिन्यःस्वर्णरौप्या
लंकारादिविभूषिताः नानामाल्यांबरधराद्दश्यादेवांगनाइव अहंदरिद्रस्यगृहेपतितास्मिदुरात्मनः लज्जामांबाधतेत्यंतंज्ञातीनांमुखदर्शने
धिगस्तुचैवविद्यायांनिर्धनस्यकुलस्यच एवंवदतिलोकेपुनकरोतिपतीरितम् संकल्पंकृतवानेकंयद्यद्भर्तावदिष्यति विपरीतंकरिष्यामि
यावल्लक्ष्मीःप्रसीदति भर्तःपाषाणबुद्धेत्वंचौर्यंकुरुनृपालये आनीयतांधनंभूरिनोचेत्संताडयाम्यहं क्षणंरोदितनाश्नाति कदाचिद्दुहुखा
दंति साकपालंताडयतीत्येवंक्लेशयतेपतिम् संत्वातस्यास्तुचरितंयत्नवनादुःखभागितः नोवाचवचनंकिंचिद्धैर्याल्लाभेनतोषितः एकस्मि
न्श्राद्धपक्षेतुद्व्यद्विग्नोभूद्द्विजोत्तमः एकस्मिन्वत्सरेसवंश्राद्धसामग्रिकंगृहे वर्ततेगृहिणीचेयंनकरिष्यतिकिंचन इत्युद्विग्नमनाविप्रोनभाष
यतिकिंचन चिंतयाविष्टमेवंतमाययौमित्रमुत्तमम् नाम्नागणपतिख्यातंतस्मिन्नभ्यागतेसति नोवाचपूर्ववद्वार्तांमित्रंवचनमब्रवीत् भोभो
वलितचित्तंतेकिमर्थंचिंतयान्वितम् अवश्यंत्वधियाकृत्वाचिंतांतेनिर्हराम्यहं   वलितउवाच  अधुनापितृपक्षेतुपितुःश्राद्धंसमागतम् सा
मग्रिकंचास्तिगृहेविपरीतकराप्रिया कथं[illegible]श्राद्धमितिचिंतायुतोस्म्यहम्   गणपतिरुवाच   धन्योसिकृतकृत्योसि भार्या यस्ये

दशीगृहे ब्रूहित्वंवैपरीत्येनभार्याकार्यंकरिष्यति वलितस्तुनथेत्युक्त्वासार्थंभार्यामभाषत अनर्थकारकेचंडि परश्वः श्राद्धंपितुः न
स्थापितधनंयस्मान्मदर्थेनस्तुपापकैः तस्मान्नशीघ्रंपाकंत्वंकुरुदुष्टेकरोतिचेत् ब्राह्मणायेद्यूतकाराः शौचाचारविवर्जिताः निमंत्र्या
स्तेत्वयाभद्रे नोत्तमास्तुकदाचन इतिभर्तृवचः श्रुत्वासंभारस्तुमहान्कृतः निमंत्रितास्तुसद्विप्राः कालेपाकः कृतस्तथा विपरीतैरेववा-
क्यैः श्राद्धंसंपादितंतया पिंडदानंततः कृत्वाभार्यावचनमब्रवीत् विसर्ज्यपिंडान्नीत्वात्वंक्षिपगंगाजलेशुभे पिंडान्नीतांस्तथेत्युक्त्वाशौच
कूपेव्यक्षिपत् तच्छ्रुत्वावलितोदुःखीबभूवाकुलिताननः क्रोधाद्दानयेयोगेहात्संकल्पंकृतवानिति लक्ष्मीर्यदिप्रसन्नास्यात्तदान्नंभक्षया
म्यहं इतिसंकल्प्यसोविप्रोगहनेनिर्जनेवने एकोधर्मनदीतीरेवृक्षवल्कलधारकः त्रिंशद्दिनानिचतदाआगतास्त्रिषपूर्णिमा कालीवंशस
मुद्भूतानागकन्याः सुलोचनाः निवसंतिवनेतस्मिन्व्रतंचक्रूरमामयं स्वतीकृतंतुस्कंधयागृहंचंद्रगृहोपमम् मंडलानिविचित्राणिनानाविधैः
कृतानिच पंचामृतानिरत्नानिदर्पणाच्छादनानिच स्थापयित्वेंदिरापूजाकृताताभिः प्रयत्नतः एवंतुप्रथमोयामोबालाभिनीतएवहि प्रारब्धं
चततोद्यूतंतुयैतास्तुनलेभिरे चतुर्भिस्तुविनाक्षाणांक्रीडनंनैवजायते तस्मान्मृग्यस्तुविचरन्विचार्यैवंपुनर्गताः कन्यकास्तुनदीतीरेददर्शव
लितंद्विजं ज्ञात्वातंसाधुचरितंसचिंतंतुमुखाकृतेः उवाचवचनंचारुद्विजकोसिसमागतः याह्यद्यक्रीडितंद्यूतंलक्ष्म्याः प्रीतिकरंपरम्
इत्थंतद्वचनंश्रुत्वावलितोवाक्यमब्रवीत् वलितउवाच द्यूतेनक्षीयतेलक्ष्मीर्द्यूताद्धर्मोविनश्यति मुधैतद्दसौकिंत्वंकथंलक्ष्मीः
प्रसीदति कन्योवाच माषसेत्वंपंडितवत्कर्मनोस्तितुमूर्खवत इषस्यशुक्लपूर्णायांद्यूताल्लक्ष्मीः प्रसीदति द्यूतक्रीडांतुकृत्वैवं
कौतुकंपश्यचेंदिरम् इत्युक्त्वासोतयानीतोक्रीडार्थंस्वस्यमंदिरे दत्वातस्मैनारिकेरंजलंभक्ष्यादिकंतथा आरब्धंचतथाद्यूतंश्रीलक्ष्मीः
प्रीयतामिति लापितानिचरत्नानिकन्याभिर्ब्राह्मणेनतु कौपीनंलापितंस्वीयंताभिर्निर्जितमेवतत् ब्राह्मणः क्रोधसंयुक्तोकिंकर्तव्यमया
धुना उपवीतंलापयित्वाततः स्वीयंकलेवरम् लापयिष्येविनिश्चित्यस्वोपवीतंलन्लापसः ताभिर्जितंचतदपिशरीरंलापितंस्वकं ततोर्ध
रात्रेसंजातेलक्ष्मीनारायणावुभौ आगतौलोकचरितंद्रष्टुं[illegible]हीनोपवीतकौपीनांचिंतयातिकृशीकृतं उवाचवचनंविष्णुः शृणुत्वं

पद्मलोचने तवव्रतकरोविप्रः कथंजातःसचिंतकः तस्मादेनंकुरुक्षिप्रंलक्ष्मीवंतंस्फुरत्वान्वितम् इतिविष्णु वचः श्रुत्वापद्मयासौ
कटाक्षितः बालाविप्रमहरोजातस्तत्कालमदनोपमः ततःकामेनसंविद्धास्तास्तुयानागकन्यकाः विप्रायवचनंप्रोचुः शृणुविप्रत
पोधन यद्यस्माभिर्जितस्त्वंचभर्तास्माकंवचोनुगः वयंत्वयानिर्जिताश्चेद्यथेच्छासितयाकुरु इतितद्वचनंश्रुत्वातथामेनेसचद्विजः
क्रीडनात्ताजिताःकन्यागांधर्वेणविवाहिताः तासांरत्नानिताश्चापिगृहीत्वास्वगृहंययौ प्रासंचंडीतिरस्कारान्मयेदंभाग्यमुत्त
मम् तस्मात्संमानिताचंडीसापिप्रीताबभूवह चकारस्वामिनश्चाज्ञामित्यंलक्ष्मीव्रतंत्विदम् बहुरात्रिव्यापिनीयासात्रपूर्णावि
शिष्यते तत्राराध्यमहालक्ष्मीमिंद्रमैरावतास्थितं उपवासंप्रकुर्वीतदीपान्दद्याच्चभक्तितः लक्षंतदर्धमयुतंसहस्रंशतमेववा घृ
तेनदीयतेदीपान्तिलतैलेनवाव्रती रात्रौजागरणंकुर्यान्नृत्यगीतपुरःसरम् यथाविभवतोदेयाःपुरोवीथिषुदीपकाः देवता
यतनेचैवआरामेषुगृहेषुच ततःप्रभातेस्रुस्नातःसंपूज्यचशतक्रतुम् ब्राह्मणान्भोजयेत्क्षीरघृतशर्करपायसैः वासोभिर्द
क्षिणाभिश्चसवस्त्रान्पूजयेद्द्विजान् यथाशक्तिचदातव्यादीपाःस्वर्णविनिर्मिताः एवंविधिंविनिर्वर्त्यततःपारणमाचरेत् व्रत
स्यास्यप्रभावेनकल्पसंख्यावसेद्ध्रुवम् अप्सरोभिःपरिवृतःस्वर्गलोकेनहीयते इहचायुष्यमारोग्यपुत्रपौत्रादिसंपदः एवंलक्ष्मी
व्रतंकृत्वानदरिद्रोनदुःखभाक् कथांश्रुत्वाविधानेनव्रतस्यापिफलंलभेत इतिसनत्कुमारसंहितायांकोजागरव्रतंसंपूर्णम्
अथकार्तिकपौर्णमास्यांत्रिपुरोत्सवः सचप्रदोषव्यापिन्यांकार्यः वालखिल्याऊचुः कार्तिकेपौर्णिमायांतुकुर्यात्त्रैपुरमुत्सव
म् दीपोदेयोवश्यमेवसायंकालेशिवालये त्रिपुरोनामदैत्येंद्रः प्रयागेतपआस्थितः लक्षवर्षंतपस्तप्तंत्रैलोक्यंसचराचरम् तत्त
पस्तेजसादग्धमारब्धंभुवनत्रयम् नानादेवांगनादेवैःप्रेषितास्तंविमोहितुम् नतासांवशगःसोभूद्दूषणैश्चापिधर्षितः नक्रोधलो
भमोहानांवशोदैत्योनजायते वरंदातुंययौब्रह्मानारदादिभिरन्वितः ब्रह्मोवाच वरंवरयभद्रंतेसंतुष्टोहंपितामहः तपसस्तु
फलेसिद्धेकःक्लेशंकुरुतेजनः त्रिपुरउवाच अमरंकुरुमांब्रह्मन्करोमित्यन्यथातपः दातुंभक्तोसित्वंह्यद्यनान्यथागच्छसत्व

रम् ब्रह्मोवाच मयापिबालमर्तव्यंमितरेषांतुकाकथा अवश्यंदेहिनांमृत्युःसंभाव्यंयाचयस्वमे त्रिपुरउवाच नमेमृत्युर्देव
ताभ्योमनुष्येभ्योनिशाचरात् नस्त्रीभ्योनचरोगेणदेह्येनंवरमुत्तमम् ब्रह्मणापितथेत्युक्त्वासत्यलोकंजगामसः एनंलब्ध
वरंज्ञात्वानानादैत्याःसमाययुः तान्दैत्यानागतान्दृष्ट्वाआज्ञापयतदानवान् अस्मद्विरोधिनोदेवाहंतव्याःसर्वएवहि नाने
धानिचरत्नानिदेवतानांसमीपतः गृहीत्वातानिसर्वाणिकुर्वंतूपायनंमम इत्याज्ञांतस्यशिरसिकृत्वातेसर्वराक्षसाः देवा
न्नागांश्चयक्षांश्चधृत्वाचाग्रेनिवेदिताः प्रणम्यसर्वदेवास्तेत्रिपुरंचव्यजिज्ञपुः गृह्यतांदैत्यराजेंद्रयदस्माकंभविष्यति व
यंकृत्वातुतेसेवांजीविष्यामोयथातथा इतिश्रुत्वावचस्तेषामधिकारान्प्रचक्रिरे तेषांस्त्रियःसमानीतादेववेश्याःसहस्रशः ए
वंभास्करमुत्सृज्यसर्वेदेवास्तदाज्ञया चक्रुर्यथोक्तंदैत्यस्यद्वारस्थाःसर्वएवहि सूर्यस्यनिकटेप्युक्तंमद्द्वारेस्थीयतांसदा तेनापिचतथेत्यु
क्त्वातद्द्वारेसंस्थितःक्षणम् ददाहभुवनंसर्वंस्वकरैःक्षणमात्रतः आदिष्टश्चततस्तेनस्वेच्छयागम्यतामिति ततोगतोसौभगवान्भुवना
निविभावयन् तदाज्ञांचक्रुर्देवाद्वारेतिष्ठंतिवारिताः कदाचित्तस्यगेहेतु नारदःसमुपाययौ तेनापिपूजितोभक्त्यापप्रच्छस्वंपराक्र
मम् नारदउवाच ईदृशोजयघोषस्तुकेनापिनकृतोभुवि अस्मिन्देशेतुदैत्येंद्रःकिमिदानींनिगद्यताम् त्रिपुरउवाच सर्वस्थानेषुमे
कीर्तिर्नगताकिंनुनारद मयाप्रस्थापितादैत्याःसर्वएवइतस्ततः नारदउ॰ योयत्रचगतोदैत्योजातस्तत्रविभुःसहि तवनामनगृह्णातिवन्हि
चस्वपराक्रमं इतिश्रुत्वामुनेर्वाक्यंसद्यएवहिदारुणं क्रोधस्तस्यमहान्जातः किंकर्तव्यंमयाधुना विश्वकर्माणमाहूयवाक्यमेतदुवाचह शी
घ्रंकुरुत्रिधातूनांविश्वकर्मन्पुरत्रयम् विमानतुल्ययत्रेच्छातच्चतत्रगमिष्यति इतितस्यवचःश्रुत्वात्वष्टापिचतथाकरोत् रूपत्रयंसमास्थायत्रि
पुरेषुसमाश्रितः नारदस्यतुवाक्येनदैत्याबंदिकृतास्तदा पुरेणैकेनपातालेभ्रमतेत्रिपुरासुरः स्वर्गेचापिपुरेणैकेनधरण्यांभ्रमतेसुरान्कांश्चित्सं
ताडयत्येवंसंमारयतिकानपि ददातिकेषांस्वामित्वंस्वेच्छाचारीमहाबलः तेनेत्थंपंचलक्षाणिसर्वलोकाउपद्रुताः तदादेवान्समागम्यनारदो
वाक्यमब्रवीत् नारदउवाच पराक्रमायास्तुधिक्तेदेवेंद्रधिक्कृतास्तुधीः विचरंतुचभोदेवावधायत्रिपुरस्यच इत्थंमुनिवचःश्रुत्वासलज्जो

भूदधोमुखः पुनस्तंनारदः प्राहब्रह्माणंशरणंव्रज ततउत्थायदेवेंद्रोवृतोदेवगणैःसह नारदेनसमायुक्तःसत्यलोकंजगामसः तत्रा
पश्यत्सधातारमुवाचकरुणंवचः इंद्रउवाच धातरस्मान्नातिनोंऽस्तिहनर्नीयास्त्वयावयम् नासाग्रसंस्थिताःप्राणास्त्रिपुरस्यतुशासनात्
इतींद्रस्यवचःश्रुत्वाब्रह्मासेंद्रमुनीश्वरैः युक्तोवैकुंठमगमद्यत्रास्तेमधुसूदनः तत्रगत्वामहाविष्णुंप्रणिपत्यास्थिताःसुराः अनुगृहीताहृक्ष्या
तान्तंब्रह्मावाक्यमब्रवीत् ब्रह्मोवाच भगवन्देवदेवेशदेवापातार्विनाशक त्रिपुरासुरनिर्दग्धान्किंदेवांस्त्वमुपेक्षसे विष्णुरुवाच त्वयैवना
शितंब्रह्मन्दत्तानानाविधावराः देवादिभ्यः कथंतस्यमृत्युःसंभाव्यतेधुना नभासतेविचारोमे तस्यमृत्योःसुरेश्वराः अस्तिकश्चिदृथोपायो
विचार्यकरवाण्यहम् इतिश्रुत्वावचोविष्णोःसर्वेनुध्यातुकुंठिताः यदानोचुर्वचःकिंचिन्नारदोवाक्यमब्रवीत् नारदउवाच देवाःकुरुतमाखे
दंउपायःकथ्यतेमया एकोहृष्टःसृष्टिमध्येनदेवोनचमानुषः नराक्षसोनैवदैत्योनभूतोनपिशाचकः नासौपुमान्ननस्त्रीसनजडोनच
पंडितः नास्यतातोनवामातानभ्रातानभगिनीनच नथैवतस्यसंतानंसएनंमारयिष्यति ब्रह्मोवाच एतादृशःक्वदृष्टोसौसत्यंवालीकमेववा
इतिब्रह्मवचःश्रुत्वाप्रोवाचजगदीश्वरः विष्णुरुवाच अहोत्रैलोक्यकर्त्तायोमहादेवोवृषध्वजः ब्रह्मन्कथंविस्मृतोसौसनःकार्यंकरि
ष्यति इत्युक्त्वासर्वएवैतेशंकरंशरणंययुः देवदेवमहादेवदुष्टदैत्यनिबर्हण त्वामेवशरणंप्राप्तास्त्रिपुरेणप्रतापिताः शिवउवाच ब्र
ह्मंस्त्वयावरोदत्तोत्युन्मत्तोसौभवत्ततः प्रददासिवरंकस्मात्पुनर्मारयसेकुतः मदीयंनाशितंनैवकस्माद्धन्योमयासुरः इतिरुद्रवचःश्रुत्वा
हताशास्तेसुरास्तदा विषण्णांस्तान्सुरान्दृष्ट्वाविष्णुर्वचनमब्रवीत् विष्णुरुवाच त्वयाप्रतिज्ञालोकानांपालनायसदाशिव कृताततः
समायाताःशरणंसर्वदेवताः मयानानाविधंदुःखं ह्रीयतेनुसदाशिव एतद्दुःखंमयाशक्यमपनेतुंयतोनहि अतस्त्वांयाचयाम्यघदेवान्व
धाद्विमोचय शिवउवाच तववाक्यंकरिष्यामिसामर्थ्यंनास्तिमेहरे ममापराधसहितंहनिष्यामिहदानवं विष्णुरुवाच सामर्थ्यंहिक
रिष्यामिसंग्रामार्थंसदाशिव करिष्यतिकथंदैत्यःशंभोरन्यायमेवसः इतिविष्णुवचःश्रुत्वाह्यकष्टमितिचाब्रुवन् अत्रागतांश्वसोस्मान्हिश्रृ
णुयात्त्रिपुरासुरः नविलंबभृतोकुर्यात्किमिदानींविधीयताम् सुरान्म्लानमुखान्दृष्ट्वानारदोवाक्यमब्रवीत् नारदउवाच सामर्थ्यंक्रियतांश्री

घमायातिस्त्रिपुरासुरः विष्णुंपलायितंज्ञात्वाहंकरुद्रोस्तीतिलोकयन् शिवउवाच मयाननाशितंतस्ययदिस्थास्यतिमत्स्थले योद्धुंतदावश्य
मेवमयामार्यःसदुर्मदः इतिरुद्रवचःश्रुत्वासमाश्वस्तास्तुदेवताः सामग्रींविष्णुरकरोद्युद्धार्थेसतुधूर्जटेः बाणःस्वयंबभूवास्य वन्हिःशा
ल्यंबभूवह वासुकिस्तुगुणरूपोभून्मेनाकंचधनुर्वरं स्यंदनंधरणीजातावेदाजाताहयोत्तमाः विधातासारथिर्जातः पताकाचदिवाकरः
आतपत्रंचचंद्रोभूद्गणेशाद्याःपदातयः ततोनेगात्समुत्पत्यनारदस्त्रिपुरंययौ दृष्ट्वानारदमायातंसत्कारैरर्चयच्चतम् मुनेपुराणिमे
पश्यसंत्यक्तानिसुरासुरैः त्रैलोक्येचाधुनाजातंत्वत्कृपातोयशोमम इतितस्यवचःश्रुत्वाललाटंकुट्टयन्मुनिः तूष्णीमासीद्भृशंत्वेतदव
लोक्यासुरोब्रवीत् त्रिपुरउवाच किमर्थमीदृशीचेष्टामुनेचाद्यकृतात्वया मद्भाग्यसमभाग्यश्चेदस्तिकश्चिन्निगद्यतां नारदउवाच कै
लासेतुगतश्चाहंदैत्येंद्रशृणुवैभवम् महेश्वरस्यकिंवाच्यंतल्लक्षांशोपिनत्वयि इतितद्वचनंश्रुत्वानारदस्तुविदायितः गृहीत्वादैत्यसंघां
स्तान्कैलासंत्रिपुरोययौ तत्रदेवैर्महद्युद्धंजातंतत्रदिनत्रयम् पश्चाद्धरेणनिहतस्त्रिपुरस्त्वेकबाणतः कार्तिक्यांपौर्णिमास्यांतुसर्वदेवाःप्र
तुष्टुवुः तस्मिन्दिनेसर्वदेवैर्दीपोदत्तोहरायच सर्वथैवप्रदेयोस्यांदीपस्तुहरतुष्टये विंशतिसप्तशतकसहितादीपवर्तयः इदंन्दीपंपौर्णमा
स्यांसर्वपापैःप्रमुच्यते पौर्णमास्यांतुसंध्यायांकर्तव्यस्त्रैपुरोत्सवः दद्यादनेनमंत्रेणप्रदीपांश्चसुरालये कीटाःपतंगामशकाश्चवृक्षाःज
लेस्थलेयेविचरंतिजीवाः दृष्ट्वाप्रदीपंनचजन्मभागिनोभवंतिनित्यंश्वपचाहिविप्राः कार्यस्तस्मात्पूर्णिमायांत्रिपुरस्यमहोत्सवः कार्तिक्यां
कृत्तिकायोगेयःकुर्यात्स्वामिदर्शनं सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगः कार्तिक्यांतुवृषोत्सर्गंकृत्वानक्तंसमाचरेत् शैवंपदमवाप्नोतिशिव
व्रतमिदंस्मृतम् इतिसनत्कुमारसंहितायांकार्तिकपौर्णमास्यांत्रिपुरोत्सवदीपदानंसंपूर्णम् अथकार्तिकमासोद्यापनं वालखिल्याऊ
चुः अथोर्जव्रतिनःसम्यगुद्यापनमथोच्यते कृतेउद्यापनेसांगंव्रतंभवतिनिश्चितम् ऊर्जेशुक्लचतुर्दश्यांकुर्यादुद्यापनंव्रती तुलस्याउपरि
ष्टात्तुकुर्यात्मंडपिकांशुभां तुलसीमूलदेशेतुसर्वतोभद्रमेवच तस्योपरिष्टात्कलशंपंचरत्नसमन्वितं पूजयेत्तत्रदेवेशंसौवर्णंगुर्वनुज्ञया रात्रौ
जागरणंकुर्याद्गीतवाद्यादिमंगलैः ततस्तुपौर्णमास्यांवैसपत्नीकान्द्विजोत्तमान् त्रिंशन्मितान्यथैकंवास्वशक्त्याविनिमंत्रयेत् अतोदेवाइति

द्वाभ्यांहोमयेत्तिलपायसम् ततोगांकपिलांदद्यात्पूजयेद्विधिवद्गुरुं एवमुद्यापनंकृत्वासम्यग्व्रतफलंलभेत् परांतुपौर्णमास्यग्रवाश्वायांपुष्क
रस्यच वरान्दत्वायतोविष्णुर्मत्स्यरूपीभवत्ततः तस्यांदत्तंहुतंजप्तंतदक्षय्यफलंस्मृतम् कार्तिक्यांपौर्णिमायांतुविष्णुंनीराजयेत्सदा प्रदोषसमये
राजन्नसदारिद्र्यमाप्नुयात् कार्तिक्यांकृत्तिकायोगेयःकुर्यात्स्वामिदर्शनम् सप्तजन्मभवेद्विप्रोधनाढ्योवेदपारगः एतानिकार्तिकेमासिनरःकु
र्याद्व्रतानिच इहलोकेशरीरंस्वंक्लेशयित्वाफलंलभेत् नकार्तिकसमोमासोविष्णुसंतुष्टिकारकः स्वल्पक्लेशोर्विष्णुलोकप्राप्तिकृन्नापरोभवे
त् सनत्कुमारउवाच इत्थंतेनैमिषारण्येवालखिल्यैरुदाहृतम् भास्करस्यमुखाच्छ्रुत्वाननस्तानभिवाद्यच ययुःसूर्यस्यनिकटेगायंतो-
भास्करस्तुतिम् इत्येतत्सर्वमाख्यानंकार्तिकस्यव्रतोत्तमम् इतिकार्तिकमासोद्यापनंसंपूर्णम् अथबत्तिशीपौर्णिमालिख्यते तत्र मार्ग
शीर्षसितेपक्षेपौर्णमास्यांशुचिव्रता प्रातःशुक्लतिलैःस्नात्वापरिधायांबरंसती पूजासंभारमासाद्यपिष्टदीपंविधायच पुत्रसौभाग्यप्रा
प्त्यर्थंमध्याह्नेपूजयेच्छिवम् साचमार्गशीर्षपौर्णिमामध्याह्नव्यापिनीग्राह्या तिथ्यादिसंकीर्त्यममेहजन्मनिजन्मांतरेचअखंडसौभाग्यपुत्र
पौत्रप्राप्त्यर्थंबत्तिशीपौर्णिमाव्रतंकरिष्ये तत्रनिर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकलशाराधनंकरिष्ये· पंचवक्त्रंत्रिनेत्रंचजटाखंडेंदुमंडितं
व्यालयज्ञोपवीतंचभक्तानांवरदंशिवं ध्यायामि आगच्छभगवन्शंभोसर्वालंकारभूषित यावद्व्रतंसमाप्येततावत्त्वंसन्निधोभव आवाह
नं·सिंहासनंस्वर्णपीठंनानारत्नोपशोभितम् अनेकरत्नसंयुक्तमासनंप्रतिगृह्यतां आसनं त्रिपुरांतकदेवेशसृष्टिसंहारकारक पाद्यंगृहाण
देवेशमयादत्तंहिभक्तितःपाद्यं· चंदनाक्षतसंयुक्तंनानापुष्पसमन्वितम् गृहाणार्घ्यंमयादत्तंईश्वरप्रतिगृह्यतां· अर्घ्यं· तोयमेतत्सुख
स्पर्शंकर्पूरेणसमन्वितम् शंभोशंकरसर्वेशगृहाणाचमनीयकम् आचमनं· पयोदधिघृतंचैवमधुशर्करयायुतम् पंचामृतेनस्नपनंकरिष्ये
भक्तवत्सल पंचामृतस्नानं· मयानीतानितोयानिगंगादीनांचहेमजे· स्नानंतैःकुरुदेवेशममशांतिर्विधीयतां स्नानं· श्वेतांबरयुगंदेवसर्व
कामार्थसिद्धये अंबिकाकांतदेवेशमयादत्तंप्रगृह्यतां वस्त्रं· कुंकुमाक्तंसुरश्रेष्ठक्षौमसूत्रविनिर्मितम् उपवीतंमयादेवभक्त्यादत्तंप्रगृह्यतां
उपवीतं· काश्मीरजेनसंयुक्तंकर्पूरागरुमिश्रितम् कस्तूरिकासमायुक्तंचंदनंप्रतिगृह्यताम् चंदनं· प्रक्षालिताश्चधौताश्चतंदुलाश्च

शिवप्रियाः मयानिवेदिताभक्त्यागृहाणजगदीश्वर अक्षताः कमलैर्मालतीपुष्पैश्चंपकैर्जातिसंभवैः बिल्वपत्रैर्महादेवकरिष्येतवपू
जनं पुष्पाणि· दशांगोगुग्गुलोद्भूतःसुगंधिश्चमनोहरः आघ्रेयतामयंधूपोदेवदेवदयानिधे धूपं· कार्पासवर्तिसंयुक्तंघृताक्तंतिमि
रापहम् भक्त्यासमर्पितंदीपंमयादत्तंप्रगृह्यतां दीपं· नैवेद्यंगृह्यतांदेव भक्तिमेह्यचलांकुरु ईप्सितंचवरंदेहि परत्रचपरांगतिम् नैवेद्यं
नैवेद्यमध्येपानीयं· उत्तरापोशनं· हस्तप्रक्षालनं· मुखप्रक्षालनं· पूगीफलंमहद्दिव्यंनागवल्यादलैर्युतम् कर्पूरैलासमायुक्तंतांबूलंप्रतिगृह्यतां तां
बूलं· इदंफलं· फलं· वक्ष्यमाणषोडशनामभिःपूजयेत् शंकरायत्रिनेत्रायकालरूपायशंभवे महादेवायरुद्रायशर्वायचमृडायचईश्व
रायशिवायेतिभूतेशायकपर्दिने मृत्युंजयायचोग्रायशितिकंठायशूलिने दुर्वा· तेजोमयंसलक्ष्मीकंदेवानामपिदुर्लभं हिरण्यंपार्वती
नाथमयादत्तंप्रगृह्यतां दक्षिणा· प्रसीददेवदेवेशचराचरजगद्गुरो वृषध्वजमहादेवत्रिनेत्रायनमोनमः नीराजनं· यानिकानिच प्र
दक्षिणाः इमानिबिल्वपत्राणिपुष्पाणिविविधानिच मयादत्तानिविश्वेशगृहाणवरदोभव पुष्पांजलिं· नमोस्त्वनंतायसहस्रमूर्तये
इतिनमस्कारं· भवायभवनाशायमहादेवायधीमते रुद्रायनीलकंठायशर्वायचनमोनमः ईशानायनमस्तुभ्यंपशूनांपतयेनमः
गुणत्रयात्मनेतुभ्यंगुणातीतायतेनमः नमःप्रसीददेवेशसर्वकामांश्चदेहिमे त्वमेवशरणंनाथक्षमस्वमयिशंकर प्रार्थना· वायनं
उपायनमिदंतुभ्यंव्रतसंपूर्णहेतवे वायनंद्विजवर्यायसहिरण्यंददाम्यहं वायनं· अस्यव्रतस्यसिद्ध्यर्थंहिरण्यंपापनाशनं ददामितुभ्यंविप्रेंद्रप्रणतो
स्मिप्रगृह्यताम् दक्षिणा· महात्मनाच्छकैलासंवृषारूढोगणैर्वृतः आहूतस्त्वंसमस्त्वंप्रसीदसन्मुखोभव विसर्जनम्· इतिपूजाविधिः अथ
कथा यशोदोवाच कृष्णत्वंसर्वदेवानांस्थितिसंहारकारकः अवैधव्यकरंस्त्रीणांयथार्थंवदतद्व्रतम् श्रीकृष्णउवाच यशोदेसाधुपृष्टोहं
सौभाग्यप्राप्तयेस्त्रियः बत्तिशीनामविख्यातंपौर्णमास्यांव्रतंमहत् तद्व्रतस्यप्रभावेनस्त्रीणांसौभाग्यदंभवेत् अवैधव्यकरंनामशिवप्री
तिकरंमहत् यशोदोवाच केनचीर्णंव्रतमिदंमृत्युलोकेकदावद विधानंकीदृशंदेवयेनशंभुःप्रसीदति श्रीकृष्णउवाच कांतिकानामन
गरीप्रसिद्धाभुविमंडले अनेकरत्नसंपूर्णाचंद्रहासेनपालिता तत्रैवासीद्द्विजःकश्चिद्धनेश्वरेतिनामतः तस्यभार्यातिरूपाचारानाम्ना·

रूपवतीसती अनपत्योमहाभागावुभौतौदुःखितौसदा तन्नगर्यांद्विजःकश्चिद्योगारूढोद्विजोजटी भिक्षांचकारसर्वत्रतस्तद्गृहंचाप्यवर्जयत् क
द्गृहेनैवभिक्षांसरूपवत्यासमर्पिताम् ययौतटाकतीरंसभिक्षाम्प्रक्षालयत्पुनः धनेश्वरेणतद्दृष्टंयोगिनायत्कृतंशुभम् भिक्षांगृह्ण
सिसर्वेषांगृहस्थानांद्विजोत्तम कदापिमद्गृहेविप्रनायासिवदकारणम् योग्युवाच अपुत्रस्यगृहस्थस्ययदन्नमुपभुज्यते पतिता
न्नसमंतत्तुनभोक्तव्यंकदाचन धनेश्वरेणश्रुत्वैतदात्मानंगर्हयन्बहु धनधान्यसमृद्धिश्चपुत्रहीनस्त्वहंप्रभो इत्युक्तोसौजटीप्राहग
च्छाराधयचंडिकां तस्यतद्वचनंगेहेभार्यायांविनिवेद्यच तपसेनिर्जगामासौचंड्याराधनमाचरत् उपवासैःषोडशभिःस्वप्नेवैवाहचंडिकां
भोधनेश्वरगच्छत्वंतवपुत्रोभविष्यति स्वसामर्थ्यवशाद्देव्यादीपावैपिष्टसंभवाः एकैकवृद्ध्याआदातव्याःषोडशद्व्यपूर्णिमाः इदंव्रतंस्वपत्न्यैत्वं
कथयस्वयथास्थितं आरुरोहाशन्वाम्रंत्वंफलमादायसत्वरम् स्वगृहंगच्छभार्यायैदेहिगर्भोभविष्यति ततःप्रभातसमयेसहकारमपश्य
त आरोढुंनैवशक्तःसचिंताव्याकुलमानसः स्तुतिंचक्रेगणेशस्यकृपांकुरुदयानिधे मनोरथोममैवास्तुत्वत्प्रसादाद्दयानिधे इत्युक्त्वाचततः
शीघ्रंफलमादायवेगतः भिवारमावृत्तिंकृत्वाफलमेकंददर्शसः वराल्लब्धंतदेवासीन्नान्यस्यादर्यनिश्चयः आगत्यकथितंतच्चभार्यायैद
त्तवान्फलं यदातदारूपवत्याभक्षितंगर्भमादधे तदादेव्याःप्रसादेनरूपोदार्यगुणान्वितः तस्यास्तदाभवत्पुत्रोदेवीदासेतिनामतः व्रतबंधंततः
प्रक्रेविवाहंनकरोतिसः मात्राचाग्रहतःपृष्टोसोवदत्सर्वचेष्टितम् ततस्तुदैवयोगेनकाश्यांनेयोमयाशिशुः इतिबुद्धिस्तदाज्ञातातदाचक्रेध
नेश्वरः तंप्रेषयन्महाश्वेनमातुलेनसहैवच कियंतिसमतीतानिदिनानिपथिगच्छता गच्छन्काशीपुरींप्राप्तोभागिनेयेनसंवृतः कस्यचिद्ब्रा
थविप्रस्यमंडलेप्रासवान्निशि तस्मिन्दिनेगृहस्वामीकन्यामुद्वाहयन्कृती तैलादिरोपणंचक्रेकृत्वावरनिवेशनं लग्नस्यसमयेप्राप्तेधनुर्वात
युतोनरः वरपित्रादिभिर्येनविचार्यच्चपुनःपुनः असौकार्पटिकोबालःसुंदरोमेसुतोयथा सार्द्धत्वनेनलग्नंवैकरिष्यामःक्रमेणतु इतिनि
धार्यमनसाप्रार्थयामासमातुलं घटिकाद्वयपर्यंतंदेहित्वंभागिनीसुतं मातुलउवाच मधुपर्कंतथाकन्यादानेयद्यत्प्रदीयते तदस्मा
कंयदिभवेत्तर्ह्यसौभवतांवरः तथाभवतुतेनोक्त्वाविधिवैवाहिकोभवत् पाणिंजग्राहयामासवरेणत्वयथाविधि वध्वासार्द्धंतथाप्यक्तुं

सवनोत्सहितः शिशुः उत्तिष्ठामीतिसंचिंत्यकस्यभार्याभवेदियं ततस्त्वेकांतसमयेनिश्वासान्मुमुचेबहून् साब्रवीत्कथमेतस्मात्त्वयाब्रह्म
सूव्रता त्वंमेपतिरहंपत्नीदेवाग्निद्विजसन्निधौ सोब्रवीन्माकुरुष्वेदंममायुःस्वल्पमेवच तथानेपिगतिर्भूपात्सेयंमह्यंभवेदिति उत्तिष्ठमोन
मोनाथक्षुधितोसिनसंशयः प्रीत्याप्रीतितंतयासार्द्धंभुक्तवान्सद्विजस्तथा अंगुलीयंददौतस्याःस्पष्टरत्नगतंनवं अंशुकंचददौतस्याःस्था
नत्रयविभूषितं नवरत्नमयींमुद्रांगृहीत्वाप्यंशुकंचसा इतिसंकेतकंकृत्वामहत्वचःकुरुमेप्रिये ममसंजीवनार्थायकुरुजात्यादिवाटिकां मनोरमाः
पुष्पजातिसुगंधिनवमल्लिकाः सिंचसिंचप्रतिदिनंक्रीडांकुरुयथासुखं यस्मिन्दिनेतुमत्प्राणवियोगःसमजायते तदापुष्पाणांजातीनांप्रा
णत्यागोभविष्यति पुनःसंजीवितास्ताश्चेत्तर्ह्यहंजीवितोहदं ततोब्राह्मेमुहूर्त्तेतुनिर्जगामवरःपथि अथप्रभातसमयेवाद्यनादोबभूवह
आच्छरिताचसाकन्याब्रूतेनायंपतिर्मम यदिचायंपतिस्तातब्रूयादेवमयार्पितम् मधुपर्केतथाकन्यादानेयद्भूषणादिकं कथयिष्यतिचेत्तर्हि
वृत्तांतंरात्रिभाषितं इतिकन्यावचःश्रुत्वाउवाचसवरस्तदा नैवजानामितद्वक्तुंव्रीडितोनिर्जगामह कृष्णउवाच ततस्तुबालकःकाशी
मासवानध्ययनेरतः दिनानिकतिचिज्जग्मुःकालस्यवशमागतः ततःकृष्णोमहानागोरात्रौभक्षितुमागतः परितःशयनात्तस्यदीप
ज्वालाभिरावृतः नैवशक्तस्तमत्तुंवैव्रतराजप्रभावतः तन्मात्राबन्निशीनामपूर्णिमायांव्रतंकृतं ततोमध्यान्हसमयेकालएवागमत्स्वयम्
ततस्तुकालसंविद्धस्त्वधोदकनियंत्रितः शंकरोप्यगमत्तत्रभवान्यासहएवच भवानीप्रार्थयामासदृष्ट्वावस्थांतुतस्यताम् अस्यमात्राकृतं
पूर्वंबन्निशीव्रतमुत्तमम् तस्यप्रभावतःसोयंबालोवैजीव्यतांप्रभो तथैवकृतवांस्तत्रभवानीप्रेमवत्सलः तद्व्रतस्यप्रभावेनमृत्युनापिनिराकृतः
जात्यादिपुष्पवाटिकांपत्रपुष्पाविवर्जिताम् पुनःसंजीवितांदृष्ट्वापितरंकन्यकाब्रवीत् अन्नसत्रंकुरुष्वत्वंजीवितस्यगवेषणे पत्यर्थंकुरुभोतात
काशीतोनिरगात्तुसःपुनस्तत्रैवसंयातोयत्रोद्वाहोभवत्पुरा ज्ञात्वाचपरमप्रीत्यादेवदत्तोनयद्गृहं ततोजनपदाःसर्वेइतिब्रूयुःपरस्परम् जा
मातादेवदत्तस्यअयमेवनसंशयः बालयाचतथाज्ञातःसोपिसंकेतमागतः प्रीत्याहूचुस्ततःसर्वेसाधुसाधुसमन्वितम् उत्साहोद्यभवत्तत्रनि
र्जगामाथतत्पुरात् श्वशुरेणतथावध्वामातुलेनसमन्वितः सपितुःप्रेषयामासभवत्पुत्रःसमागतः तावूचतुःकुतोस्माकंदुर्भगानांतुपुत्रकः कथि

तोन्यैरपिजनैस्ततः संहृष्यमानसः सुहृद्भिर्बांधवैः सर्वैरानयामासबालकम् ततोमहोत्सवंकृत्वादत्वाचबहुदक्षिणां एवंसपुत्रवान्जा
तोव्रत्तिशीव्रतसेवया याः कुर्वंतिव्रतमिदंविधवानभवंतिताः जन्मजन्मनिसौभाग्यंप्राप्स्यंतिचवचोमम एतत्तेकथितंसर्वंपुत्रप्राप्तिव्रतमव
द्दूनं यंयंचिंतयतेकामंतंतंप्राप्नोतिनिश्चितं यशोदोवाच उद्यापनविधिंब्रूहिपूर्णिमायाः सुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्णहे
तवे कृष्णउवाच पौर्णिमामार्गशीर्षस्यमाघवैशाखयोस्तथा व्रतंप्रारंभयेत्तस्यांपौषभाद्रंतुवर्जयेत् उमयासहितोदेवः पूजनीयोवृषध्वजः
उपचारैःषोडशभिरागमोक्तविधानतः एकैकंदीपकंकृत्वामासिमासिचदापयेत् एवंसार्द्धद्वयवर्षीद्विमासावधिआचरेत् ज्येष्ठस्यपूर्णिमायां
चकुर्यादुद्यापनंततः अथवाशुभमासस्यपूर्णिमायांसमाचरेत् चतुर्दश्यामुपवसेद्रात्रौपूजनमाचरेत् अष्टहस्तप्रमाणेनमंडपंकारयेत्त
तः तन्मध्येस्थापयेत्कुंभमव्रणंमृन्मयंनवं तस्योपरिन्यसेत्पात्रंवेणववस्त्रवेष्टितम् माषमात्रसुवर्णेनप्रतिमांकारयेत्सुधीः तदर्द्धार्द्धेनवाकु
र्याद्वित्तशाठ्यविवर्जितः कृत्वारूपंप्रयत्नेनपार्वत्याश्चहरस्यच तत्पात्रेप्रतिमेस्थाप्यवृषभेणसमन्विते पूर्वोक्तेनविधानेनसुपुष्पैश्चैवपूज
येत् धूपैर्दीपैश्चनैवेद्यैः फलैश्चविविधैःशुभैः एवंपूजाप्रकर्तव्यारात्रौजागरणंचरेत् गीतनृत्यादिसंयुक्तंकथापुस्तकसंयुतं ततःप्रभातस
मये कृत्वादानादिकाःक्रियाः पूर्ववदर्चयेद्देवंपश्चाद्धोमंप्रकल्पयेत् स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंबुधः प्रारभेच्चततोहोमंपंचास्यरमनुस्मृतः
तिलैर्यवैस्तथाज्येनपृथगष्टोत्तरंशतं नमःशिवायमंत्रेणउमायाइतिनामतः एवंसमाप्यहोमंतुआचार्यादीन्प्रपूजयेत् द्वात्रिंशद्वधनैर्युक्तंवंश
पात्रंमनोरमं द्वात्रिंशच्चमहादीपैर्द्वात्रिंशच्चमहाफलैः मातुलिंगंनारिकेलंजंबीरंखर्जुरीफलं अक्षोडंदाडिमंनिंबंनारंगादिशुभानिच कर्क
ट्यादिशुभैः सर्वैर्ऋतुकालोद्भवैः शुभैः द्वात्रिंशद्भिः फलैर्युक्तंसदीपंवस्त्रवेष्टितं व्रीहीणामुपरिस्थाप्य आचार्यायनिवेदयेत् वायनकंतवतुष्ट्य
र्थंददामिगिरिजापते तत्रमंत्रः महेशःप्रतिगृह्णातिमहेशोवैददातिच महेशस्तारकोभाभ्यांमहेशायनमोनमः द्वात्रिंशद्ब्राह्मणांश्चैवद्वा-
त्रिंशद्योषितस्तथा अन्येभ्योब्राह्मणेभ्यश्चभोजनंषड्रसैःसह पुमान्वत्ससंयुतांधेनुमाचार्यायनिवेदयेत् पश्चात्पूर्णाहुतिंकृत्वाहोमशेषंसमा
पयेत् पश्चाद्भुंजीतयच्छेषंयद्देवब्राह्मणार्पितं इत्येवंपूर्णिमायास्तुउद्यापनविधिःस्मृतः इत्येतत्कथितंसर्वंव्रतस्योद्यापनंमया याःकुर्वंतिव्रत

मिदंविधवानभवंतिताः इहभुक्त्वातुविपुलान्कामान्सर्वान्मनोगतान् स्वर्गमंतेगमिष्यंतिकुलकोटिशतैरपि इतिभविष्यपुराणेकृष्णाय
शोदासंवादे बत्तिशीपूर्णिमाव्रतकथासंपूर्णा उद्यापनसंकल्पः तिथ्यादिसंकीर्त्यममआत्मनः इहजन्मनिजन्मांतरेचसकलसौभाग्यपुत्रपौत्रादि
प्राप्त्यर्थंद्वात्रिंशत्पौर्णिमास्याचरितव्रतस्यघृताक्तव्रीहियमदीपप्रज्वलनस्यसंपूर्णफलावाप्त्यर्थंतदुद्यापनंकरिष्ये तदंगंगणपतिपूजनंस्वस्तिवा
चनंआचार्यवरणंचकरिष्ये इतिसंकल्पः अथफाल्गुनपौर्णमास्यांहोलिकोत्सवः नृपंप्रतिनारदवचोभविष्ये नारदउवाच अथपंच
दशीशुक्लाफाल्गुनस्यनराधिप अभयंचैवलोकानादीयतांपरमेश्वर यथात्वशंकिनोलोकारमंतिचहसंतिच दारुजानिचखंडानिगृ
हीत्वातुसमुत्सुकाः योधाइवविनिर्यांतुशिशवःसंप्रहर्षिताः संचयंशुष्ककाष्ठानामुपलानांचसंचयम् तत्राग्निंविधिवद्धुत्वामहामंत्रैश्चवित्त
मैः ततःकिलकिलाशब्दैस्तालशब्दैर्मनोहरैः तत्तेशब्देनसापापाहोमेनचसमाहता साढुंढाख्याराक्षसी तत्रैव सर्वदुष्टापहोह्येषसर्वरोगो
पशांतये क्रियतेस्यांद्विजैःपार्थतेनसाहोलिकास्मृता तमग्निंत्रिःपरिक्रम्यगायंतिचहसंतिच जल्पंतिस्वेच्छयालोकानिःशंकायस्ययन्मनः त
च्चपौर्णिमाप्रदोषव्यापिनीग्राह्या तपस्यपौर्णमास्यांतुरजन्यांहोलिकोत्सवः प्रतिपद्भूतभद्रासुयार्चिताहोलिकादिवा संवत्सरंचतद्राष्ट्रं
पुरंदहतिसाद्भुतम् प्रदोषव्यापिनीग्राह्यापौर्णिमाफाल्गुनीसदा तस्यांभद्रामुखंत्यक्त्वापूज्याहोलीनिशामुखे निशागमेनपूज्येवहोलिकास
र्वथाजनैः दिनद्वयेप्रदोषेतुव्याप्तासातुपरेवहि भद्रायांदीपिकाहोलिराष्ट्रभंगंकरोतिवै नगरस्यचनैवेष्टातस्मात्तांपरिवर्जयेत् दिनार्धात्स
रतोयास्यात्फाल्गुनीपौर्णिमायदि रात्रौभद्रावसानेतुहोलिकांतत्रदीपयेत् राकायामप्रदोषेयादूर्ध्वंचतुर्दश्यांयदाभवेत् होलीभद्रावसानेतुनि
शीथांतेपिदीपयेत् इतिपुराणसमुच्चयाच्च यत्तु भद्रायांविहितंकार्यंहोलिकायाःप्रपूजनम् गंधपुष्पैर्धूपदीपैर्नैवेद्यैर्दक्षिणाफलैः होलां
तुनाममंत्रेणपूजयेच्चयथाविधि योनिनाम्नाचमंत्रेणमहाशब्दंतुकारयेत् तत्रकिलकिलाशब्दैरन्योन्यमुच्चरेत्ततः योषितानांचमंकुर्याद्यो
निमंत्रेणपूर्वकम् योनिनामेवमंत्रंतुयोनरःपठ्यतेसदा नभवेच्चतदापीडाआवर्षंतुसुखंभवेत् मध्यरात्रिमतिक्रम्याविष्टेःपुच्छंयदाभवेत् प्र
दोषेज्वालयेद्वह्निंसुखसौभाग्यदायिनम् प्रदोषमध्यरात्र्यंतंहोलिकापूजनंशुभम् यदातुपूर्वरात्रौप्रदोषव्याप्त्यभावेनतत्सत्वेगभद्रारहितक्र

लोनप्राप्यतेउत्तरदिनेचप्रदोषेपौर्णिमाभावस्तदापुच्छेकार्यम् तथाल्लः पृथिव्यांयानिकार्याणिशुभानिह्यशुभानिच तानिसर्वाणिसिध्यंति
विष्टिपुच्छेनसंशयः अस्मिन्नेवविषयेउत्तरदिनेपौर्णिमासार्द्धयामत्रयमितात्ततोधिकावाप्रतिपद्वृद्धिस्तदापौर्णिमोत्तरंप्रतिपदिहोलिका
कार्या नतुपूर्वेद्युर्विष्टिपुच्छे सार्द्धयामत्रयंपूर्णाद्वितीयदिवसेयदा प्रतिपद्वर्द्धमानातुतदासाहोलिकास्मृता इतिभविष्योक्तेः साउत्तरदि
नेप्रदोषएकदेशव्यापिन्यस्तिपूर्वरात्रौचभद्रारहितानैवलभ्यते तदोत्तरैव यदापूर्वरात्रिर्भद्राव्याप्ताउत्तरेप्रदोषेचचंद्रग्रहणंतदान्त्र
स्नात्वाकार्या सर्वेषामेववर्णानांसूतकंराहुदर्शने स्नात्वाकर्माणिकुर्वीतशृतकान्नंविवर्जयेत् फाल्गुनोमलमासश्चेच्छुद्धेमासिचहोलिका पू
जामंत्रस्तु असृक्पाभयसंत्रस्तैः कृतात्वंहोलिबालिशैः अतस्त्वांपूजयिष्यामिभूतेभूतिप्रदाभव इतिहोलिकानिर्णयः इतिपूर्णिमाव्रता
निसमाप्तानि अथामावास्याव्रतानिलिख्यंते अथभाद्रपदअमावास्यायांकुशग्रहणम् हेमाद्रौउक्तंहारीतेन मासेनभस्यमावा
स्यातस्यांदर्भोच्चयोमतः अयातयामास्तेदर्भानियोज्याश्चपुनःपुनः नभश्रावणदर्शांतपक्षेणेदम् मदनरत्नेतु मासेनभस्य० मतः
इतिकुशग्रहणीअमा अत्रैवअमावास्यायांपिठोरीव्रतम् मध्यदेशेतुपोलाइतिप्रसिद्धम् साप्रदोषव्यापिनीग्राह्या यदापूर्वरात्रौप्रदो
षव्याप्त्यभावस्तदापराकार्या अथव्रतविधिः मासपक्षाद्युल्लिख्यममइहजन्मनिजन्मांतरेवापुत्रपौत्रफलावाप्त्यर्थंपिठोरीव्रतंकरिष्ये
इतिसंकल्प्य देवीपूजांकुर्यात्संध्याकालेस्नात्वाप्रदोषसमयेदेवींसंपूज्यषोडशोपचारैः ब्राह्मणान्सुवासिनीश्चसंभोज्यपश्चात्स्वयंभुंजीत
इतिविधिः नमोदेव्यैइतिमंत्रेणषोडशोपचारैःपूजनंकुर्यात् अथकथा इंद्राण्युवाच अपुत्रालभतेपुत्रंपरत्रचमहत्फलं व्रतानांपरमंश्रेष्ठंकथय
त्वंहिपार्वति पार्वत्युवाच प्राचीनःश्रीधरोविप्रअष्टपुत्रोधनेश्वरः तस्यभार्यासुमित्राचगृहधर्मेणवर्तते श्रीधरस्यसुतोज्येष्ठः शंकरोना
मनामतः तस्यभार्याविदेहाचमृतापत्याभवत्तदा श्रीधरस्यापितुःश्राद्धेविदेहाचप्रसूयते दुःखयुक्तासुमित्राचविदेहांपरिवर्जयत् दुः
खयुक्तावनंप्रापसामठमेकंददर्शसा सखिभिःप्रबलायत्रविदेहातत्रसागता मठमध्येस्थितानारीपश्यंतीचपुनःपुनः कुत्रेयमधुनाप्राप्तात्व
क्षणान्वितसुंदरी मठाधिपाविचार्यैवंविदेहामाहसत्वरम् झोटिंगोयक्षवेतालैरनेकैःस्थियतेशुभे त्वांग्रसिष्यंतिसकलागच्छशीघ्रंयथागतम्

विदेहोवाच दुःखयुक्तांचमांचात्रभ्रमंतींचवनांतरम् मायसेत्वंतुपिंगाक्षिक्षेमंममभवेत्कथम् मठनार्युवाच अत्रागत्यचतुःषष्टिदिव्य
योग्याद्यस्त्विमाः पूजनार्थंसमायातानिशामध्येशुभास्थिताः तवकामंप्रकुर्वंतिजीविष्यतिचबालकाः बिल्वपत्रेषुगुप्तात्वंमधुनाभवभा-
मिनि लुप्तातत्रविदेहाचबिल्वपत्रेषुसंस्थिता क्षणेनैकेनझोटिंगामठमध्येसमागताः ज्ञात्वामनुष्यगंधंचमठनारीमपृच्छत कुतोमनुष्यगंध
श्चमठगेहंसमाश्रितः निशामध्येचतुःषष्टिर्देव्यस्तत्रसमागताः अनेकैश्चमहारत्नैः फलैर्नानाविधैरपि निविष्टामठदेवीतामाह्वानंकुर्वतेस्म
हि श्रावणस्यतुमासस्यकृष्णपक्षेकुहूतिथौ पूजांकृत्वाचतुःषष्टिरतिथान्वुवतेस्मप्रहि वदतेस्ममनुष्यासालुप्ताथप्रकटाभवत् ममाशुभवि
त्वमापन्नमातमेबालकं मृतम् तवाग्रेमृतमादायस्थितास्मीतिचबालकम् ममगर्भाश्चतुःषष्टिसजीवाश्चभवंतिते तत्रास्थितंचवनेवर्धना
शित्वंप्रतिगृह्यताम् चतुःषष्टिस्ततस्तुष्टाददौतस्यैशुभंवरम् श्रीधरस्यस्नुषात्वंहिशंकरस्यचवल्लभा पुत्रपौत्रसुताराज्यंभुक्त्वापूज्या
सुरालये अष्टपुत्राभवंत्वाशुविदेहेगम्यतांपुरम् आगतायेनमार्गेणतेनैवपुनरेवहि पुरांतरं स्थितागत्वाप्रविवेशस्वमंदिरम् श्रीधरश्चसुमि
त्राचशंकरोबांधवैःसह विदेहाचाष्टपुत्रैश्चयुक्तासामंगलोत्सवैः गापुमंदंमहाभागादेवीनांचप्रसादतः द्विजमंत्रादिनिर्घोषैर्दुंदुभिपटहध्व
नैः मृगाक्षिमंगलाचारैर्मृदंगैर्नृत्यघोषकैः तयासंपूजितादेव्यश्चतुःषष्टिःप्रकीर्तिताः न इत्थंशृणुचेंद्राणिपिठोरारव्यंकुहूतिथौ तासांस्मरणे
मात्रेणपुत्रपौत्रधनान्विता नारीभवतिचेंद्राणिशृणुत्वंनामपूजनम् दिव्ययोगीमहायोगीसिद्धायोगीगणेश्वरी प्रेताक्षीडाकिनीकालीकाल
रात्रिर्निशाचरी झंकारीरौद्रवेतालीभूतलीभूतडांबरी ऊर्ध्वकेशीविरूपाक्षीशुष्कांगीनरभोजनी भद्रारीवीरभद्राचधूम्राक्षीकलहप्रिया
राक्षसीघोररक्ताक्षीविश्वरूपाभयंकरी चंडिकावीरकौमारीवाराहीमुंडधारिणी भास्वरीरौद्रझंकारीभाषिणीत्रिपुरांतका भैरवीध्वंसिनीक्रो
धादुर्मुखीप्रेतवाहिनी खड्गांगीदीर्घलंबोष्ठीमालिनीमंत्रयोगिनी कालाग्निग्रहणीचक्रीकंकालीभुवनेश्वरी कटकीकाटिनीरौद्रीयमदूतीक
रालिनी घोराक्षीकामुकीचैवकाकदृष्टीअधोमुखी मुंडाग्रधारिणीव्याघ्रीकिंकिणीतप्रभाषिणी कालरूपाचकामाख्याउग्राणीयोगपीठिका महा-
लक्ष्मीएकवीराकालरात्रीचपीटिका नमोस्तुवश्चतुःषष्टिदेवीभ्यःशरणंव्रजे पुत्रश्रीवृद्धिकामोहं भक्त्यासंपूजिताःशुभाः एवमिंद्राणिकथितंपि

ठोराख्यंमहाव्रतम् भक्त्याकुर्वीतियानार्यो॰ कृत्वाभवंतिताः सुखसौभाग्यसंयुक्ताश्चतुःपस्याःप्रसादतः इतिभविष्योत्तरपुराणेपिठोरा
व्रतंसंपूर्णम् अथआश्विनकृष्णाऽमावास्यायांगजच्छायापर्व अपरार्केयमः हंसेकरस्थितेयातु अमावास्याकरान्विता साज्ञेयाकुं
जरच्छायाइतिबोधायनोऽब्रवीत् हंसेसूर्येकरेहस्तेस्थितेसूर्ये तत्रस्नानंहुतंजप्तंदानंदद्यात्प्रयत्नतः पितृभिःसंप्रदास्यामअक्षय्य
मुपतिष्ठतु इतिगजच्छाया अथकार्तिकेअमावास्यायांलक्ष्मीव्रतम् वालखिल्याऊचुः स्नात्वाप्रभातसमये अमायांचमुनीश्वराः
नत्वादेवान्पितॄन्भक्त्यासंपूज्याथप्रणम्यच कृत्वातुपार्वणश्राद्धंदधिक्षीरघृतादिभिः भोज्यैर्नानाविधैर्विप्रान् भोजयित्वाक्षमापयेत् दि
वातत्रनभोक्तव्यमृतेबालातुराज्जनात् ततःप्रदोषसमयेपूजयेदिंदिरांशुभाम् कुर्यान्नानाविधैर्वस्त्रैःस्वच्छंलक्ष्म्याश्चमंडपम् ना
नापुष्पैःफलैर्वस्त्रैश्चित्रैश्चापिविचित्रितम् तत्रसंपूजयेल्लक्ष्मींदेवांश्चापिप्रपूजयेत् संपूज्यादेवनार्यापिवहुभिश्चोपचारकैः पादसंवाह
नंकुर्याल्लक्ष्म्यादीनांतुभक्तितः अस्मिन्नहनिसर्वेपिविष्णुनामोचिताःपुरा बलिकारागृहाद्देवालक्ष्मीश्चापिविमोचिता लक्ष्म्यासार्द्धंततोदे
वाजग्मुःक्षीरोदधौपुनः प्रसुप्ताबहुकालंतेसुखंतस्मान्मुनीश्वराः रचनीयाःसूत्रगर्भाःपर्यंकाश्चसतूलकाः दुग्धफेनोपमैर्वस्त्रैरास्तृता
श्चयथादिशम् स्वापयेत्तान्सुरान्लक्ष्मींवेदघोषसमन्वितः लक्ष्मीर्दैत्यभयान्मुक्तासुखंसुप्तांबुजोदरे अतश्चविधिवत्कार्यातुस्यैतुसु
खसुप्तिका तदाब्धिपद्मशय्यांयःपयासौख्याविवृद्धये कुर्यात्तस्यगृहंमुक्त्वानसाक्वापिनव्रजेत् नकुर्वंतिनराइत्थंलक्ष्म्यायेसुखसुप्ति
कां धनचिंताविहीनास्तेकथंरात्रौस्वपंतिहि तस्मात्सर्वप्रयत्नेनलक्ष्मींसुस्वापयेन्नरः दुःखदारिद्र्यनिर्मुक्तःस्वजातौस्यात्प्रतिष्ठितः जा
तीपत्रंलवंगैलाफलकर्पूरसंयुतम् पाययित्वागव्यदुग्धंसितांदत्वायथोचिताम् लड्डुकांस्तस्यकुर्वीतनांश्चलक्ष्म्यैसमर्पयेत् अन्यच्चतुर्विधं
भक्ष्यंदेशकालादिसंभवम् सर्वंनिवेदयेल्लक्ष्म्यैनमःश्रीःप्रीयतामिति दीपदानं ततःकुर्यात्प्रदोषेवनतोल्पकम् भ्रामयन्तस्याशिरसि
सर्वारिष्टनिवारणम् दीपवृक्षास्तथाकार्याःशक्त्यादेवगृहादिषु चतुष्पथेश्मशानेषुनदीपर्वतवेश्मसु वृक्षमूलेषुगोष्ठेषुचत्वरेषुगृहेषुच व
स्त्रैःपुष्पैःशोभितव्याराजमार्गस्यभूमयः गृहेषुस्थापयेन्नानापक्वान्नानिफलानिच नागवल्लीदलादीनिरचयित्वाचनिक्षिपेत् शोभांकु

यदिराजमार्गेकमलेष्वविशेषतः तदभावेवंशादीनांकृत्वातानिचशोभयेत् एवंपुरमलंकृत्यप्रदोषेनदनंतरम् ब्राह्मणान्भोजयित्वादौस
भोज्यन्बुभुक्षितान् लड्डुकापूपमंडाद्यैःशष्कुलीपूरिकादिभिः अलंकृतेनभोक्तव्यंनववस्त्रोपशोभिना ततःपराण्हसमयेघोषयेन्नग
रंनृपः अद्यराज्यंबलेर्लोकाःयथेच्छंक्रीडनान्मिति यथेच्छंक्रीड्यतांबालाइत्यादेश्यंनृपेणतु विलोक्यबालकक्रीडानानासामग्रिसंयुताः
तस्मादद्यात्क्रीडनकंततःपश्येच्छुभाशुभम् तेष्वेन्द्रदीपितोवन्हिर्नज्वालामुच्यतेयदा महामारीभयंघोरंदुर्भिक्षंवाथजायते बालशोके
राजशोकस्तेषांहृष्टेनृपेस्फुरं बाल्युद्धराजयुद्धंवदनबालकैःकृते अवश्यमेवमवर्तिवर्षाद्राष्ट्रविनाशनम् यष्टिकादिकृतानश्वानन्य
दारोहंतिबालकाः तदाराज्ञोजयोवाच्यःपरराष्ट्रंविमर्दयेत् यदाक्रीडंतिबालाश्चलिंगंधृत्वाकरादिषु तदाप्रसिद्धनारीणांव्यभिचारः
प्रजायते अन्नंयदागोपयंतिक्रीडनेबालकाजनाः दुर्भिक्षंतत्र्यभावश्चशीघ्रमेवप्रजायते एवंबालकृतांचेष्टांबुध्वाचास्यफलंवदेत् लोके
श्चापिपुरेरम्येस्फाधावर्लितांजिरे गीतवादित्रसंयुक्तेप्रज्वालितसद्दीपके अन्योन्यप्रीतिसंयुक्तेदत्ततालनकेजने तांबूलहृष्टहृदयेकुं
कुमाक्षदत्तार्चिते दुकूलपट्टवसनेनेपथ्यैःस्रग्हारजैः मित्रबंधुजनसंबंधिस्वगोत्रजान्प्रपूजयेत् बलिराज्येप्रकर्तव्यंनरेर्वारांगनादिकम्
अक्षक्रीडनकंचैनद्बलिराज्येनदोषभाक् आत्मीयस्यमोरव्यार्थेपरदुःखाकरंकृतम् वारांगनादिगमनंस्पृष्टास्पृष्टादिभक्षणं अन्यां
बरधृतिश्चापियूनायंननदुष्यति एवंतुसर्वथाकार्योबलिराज्यमहोत्सवः जीवहिंसासुरापानमगम्यागमनंतथा चौर्यंविश्वासघातश्चपंचै
तानिमुनीश्वराः बलिराज्येतुनरकद्वाराण्युक्तान्यतस्त्यजेत् ततोर्द्धरात्रसमयेस्वयंराजाव्रजेत्पुरम् अवलोकयितुंरम्यांपद्भ्यामेवश
नैःशनैः महतातूर्यघोषेणज्वलद्भिर्हस्तदीपकैः हर्म्यशोभास्फुरवयावन्कृतकेरम्वकेनरैः बलिराज्यप्रमोदंचदृष्ट्वासपुरमाव्रजेत्
एवंगतेनिशीथेचजनेनिद्रार्द्धलोचने तावन्नगरनारीभिःशूर्पडिंडिमवादनैः निष्काश्यतेप्रहृष्टाभिरलक्ष्मीःस्वगृहांगणात् दं
डैःकरजनीयोगेदर्शःस्यात्तुपरेहनि तदाविहायपूर्वेद्युःपरेन्हिस्फुरवरात्रिका येवैष्णवावैष्णवावाबलिराज्योत्सवंनराः नकुर्वंति
वृथातेषांधर्माःस्युर्नात्रसंशयः इतिलक्ष्मीव्रतंसंपूर्णम् अथमार्गशीर्षअमावास्यायांगौरीतपोव्रतम् सूतउवाच

इंद्राणीप्रांजलिर्भूत्वास्वपतिंवाक्यमब्रवीत् एकंव्रतंसमाचक्ष्वपुत्रपौत्रसुखप्रदम् इतिवाक्यंतदाश्रुत्वाश्रुत्वावचनंशचीम्·
शृणुचार्वंगिसकलंयन्मयासुकृतंकृतं बृहस्पतेस्तुजनकःपृष्टःप्राह्यांगिराःसुधीः तद्व्रतंकथयाम्यद्यसद्यःसुखकरंपरम् पतिपुत्रसु
खावाप्तिर्जायतेजगतिस्थिरा गौरीप्रीत्यर्थमेवादौस्त्रीभिर्यत्क्रियतेतपः गौरीतपइतिख्याततस्मात्तद्व्रतमुत्तमम् तस्मात्स्त्रियातपोभिस्त्व
तोषणीयाशिवप्रिया आदौमार्गशिरेमासिदर्शमावास्यादिनेशुभे गृण्हीयान्नियमंमंत्रंदंतधावनपूर्वकं उपवासस्यनक्तस्यगौरीशप्रीतये
मुदा ईशांगार्द्धस्थितेदेविकारिष्येहंव्रतंतव पतिपुत्रसुखावाप्तिंदेहिदेविनमोस्तुते नियममंत्रः ततोमध्यान्हसमयेस्नात्वानद्यादिषुव्र
ती सूर्यायार्घ्यंततोदत्वाध्यात्वागौरीश्वरंहरम् अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतम् तवाज्ञयामहादेवतत्रानिर्वहणंकुरु उक्त्वैवंनि
यमंगृण्हन्वर्षाण्येवतुषोडश गृहमागत्यपूजार्थमुपचारान्प्रकल्पयेत् शिवालयंततोगत्वाशिवंसंपूजयेत्सुधीः गौरीमभ्यर्चयेत्पश्चाद्वि
धिनायेनतंशृणु पार्वतीतुततःपादौजान्वौहैमवतीतिच जंघयोरंबिकेत्येवंगुह्यंगिरिशवल्लभा नाभिंगंभीरनाभीतिअपर्णेत्युदरंपुनः
महादेवीतिहृदयेकंठेश्रीकंठकामिनी मुखेपण्मुखमातेतिललाटेलोकमोहिनी मेनिकाकुक्षीरक्षेतिशिरस्यभ्यर्चयेत्ततः दक्षिणेगण
पःपूज्योवामेस्कंदःसवाहनः धूपदीपादिनैवेद्यंकृत्वानत्वाप्रदक्षिणाम् फलेनार्घ्यंततोदत्वाध्यात्वादेवींमहेश्वरीम् कृत्वाताम्रमयंपात्रं
मृन्मयंवैणवंतथा अष्टतंतुमयींवर्त्तीतस्मिन्पात्रेनिवेशयेत् घृतेनापूर्यगव्येनतत्पात्रंविमलेनच दीपमुज्ज्वालयेत्पश्चाद्यावत्सूर्योदयोभ
वेत् एवंसंक्षिप्यतांरात्रींजागरेणसमन्विताम् ब्राह्मेमुहूर्तेचोत्थायपूजयेद्द्विजदंपती कुर्याद्धोमंग्यदलिनांपापाग्निशमनीम्तदा पक्वान्ने
नगुडान्नाद्यैःपूर्णापूर्णफलप्रदम् ऋतूद्भवैःफलैश्चैवपूरिकातिलतंडुलैः सौभाग्याष्टकसंयुक्तंपात्रंकुर्याच्चधातुकं तस्योपरिस्थितंदीपं
पूजयेत्तिथिनामतः सुवासिनीवचोग्राह्यंदीपंसूर्यायदर्शयेत् यावत्कलकलशब्दंकुर्वंतेवककाककाः तावत्पुरस्तात्कर्तव्यंकीर्तनंचतदग्रतः
उत्तिष्ठंतेयदिनगाद्विहंगाश्चारुलोचने तदाकर्णनमात्रेणसौभाग्यंव्रजतिस्त्रियाः अतएवव्रतेनारीपश्चादुत्थापयेच्चतान् तिथिमेकांसमा
प्यैवंदंपतीभोज्यशक्तितः परिधायस्वलंकृत्यवासोभिर्भूषणांजनैः माल्यैःसुगंधैर्विविधैःफलसिंदूरकुंकुमैः संतोष्यसमनुज्ञाप्यस्वयंतु

जीतबंधुभिः एवंहितीयेवर्षेचनंदाद्याश्चावरोन्तिथीः वर्षंवर्षेक्रमादेवंहितीयादिषुचान्तरेन् एवंषोडशवर्षाणि कृत्वैतद्व्रतमुत्तमम् पश्चादुद्या
पनंकुर्याद्व्रतसंपूर्णहेतवे मार्गशीर्षेयसंप्राप्तेमासेगौरीश्वरप्रिये पौर्णमास्यांदिनेरम्यांनिमंत्र्य ह्यष्टदंपतीन् मध्यान्हेष्टदलपद्मेगौरींनारीं
समर्चयेत् यथोक्तेनविधानेनपुष्पधूपादिभिस्तथा सोहलीभिश्चकासारैःपूपापूपैश्चभामिनि पायसेनघृतेनापिशर्करामोदकैस्तथा
पूरयित्वाह्यष्टसंख्यान्धातुमृन्मयसंकटान् दंपतीन्भोजयित्वातु तेभ्योदद्याद्यथाविधि अलंकृत्यचयथाशक्त्यागौरीमेप्रीयतामिति
गुरवेदक्षिणोपेतांगौरींकनकनिर्मिताम् दद्याद्धेनुंसवत्सांचदक्षिणावस्त्रसंयुतां अन्यान्यपियथाशक्त्यादद्याद्दानानिभामिनि यद्यदिष्ट
तमंलोके नत्तद्देयंद्विजन्मने चापल्यमायुरारोग्यंज्ञात्वासंपत्स्वपिचसुंदर षोडशाब्दव्रतमिदंकुर्याद्धर्षेणभक्तितः गौरीतपोव्रतमिदंयाकरोती
हभामिनि बाल्येयौवनकालेवावार्द्धकेवाहरिप्रिये तस्यांसौभाग्यमतुलंधनधान्यसुतान्वितम् भवेदव्याहतैश्वर्यंभर्तृसौख्यंनसंशयः
दुर्लभंमानुषंजन्मतत्रापिद्विजजन्मना सदाचारपरत्वंचतत्रापितुविशिष्यते एवंवारत्रयंयास्त्रीकुरुतेव्रतमुत्तमम् मातापित्रोःप्रियंचापि
प्राप्नुयाच्छुद्धवंशताम् निर्मलंजन्मनोवापिमनसश्चापिसंपदः लभतेशंभतेजश्चपतिपुत्रसमन्विता इहभोगान्यथाकामंभुक्त्वास्वर्गमवा
प्नुयात् इत्थंगिरोवचनमाप्यपुरापुराणंगौरीतपोव्रतमिदंविदधेयथेच्छम् तस्यप्रभाववशतःसकलंस्वराज्यंसौख्यंहिसर्वमतुलंपतिपुत्र
युक्तम् निलादउवाच उद्यापनविधिंवक्ष्येव्रतंसांगंभवेद्यथा सुरासुरमुनीनांचदुर्लभंतद्विधिंशृणु पर्वण्याश्वयुजस्यांतेपायसंघृ
तप्लुतम् नक्तंभुंजीतशाल्यन्नमोदनंचेक्षवान्वितं आश्वयुजस्यांतेकार्तिकेपर्वणि अमावास्यायांकार्तिकांतेदर्श इत्यर्थः ऐक्षवंइक्षुरसः
शर्वर्यंतेशुचिर्भूत्वाबिल्वजंदंतधावनम् भुक्त्वाचैतन्महादेवंनत्वाभक्तियुतोव्रती अहंदेवव्रतमिदंकर्तुमिच्छामिशाश्वतं तवाज्ञयामहादे
वतत्रनिर्वहणंकुरु उक्त्वैनंनियमंगृण्हन् वर्षाण्येवतुषोडश तिथीःप्रतिपदाद्यास्तुपारयिष्याम्यनुक्रमात् ततोमार्गशिरेमासिप्रतिपद्यपरेहनि
उपवासेद्गुरुंपृष्ट्वामहादेवंस्मरन्मुहुः महादेवंस्मरन्विप्रान्नमस्येच्छन्नविग्रहान् षोडशाष्टौतदर्धंवादंपतींश्चनिमंत्रयेत् देवंचनक्तमासा
द्यदीपान्प्रज्वाल्यषोडश पशुनाथंमहादेवंभक्त्यानत्वानिवेदयेत् आचम्यचगृहंगत्वामहादेवंस्मरन्क्षितौ शुचिवस्त्रास्तृतायांतुनिरग्ना

रोनिशिस्त्वपेत् अथोदयेसहस्रांशोः स्नात्वाचादायदीपकान् नैवेद्यंस्त्नपनाद्यंचगृह्यगच्छेच्छिवालयम् स्नापयेत्पंचगव्येनघृतेनतदनंतरम् म
धुनाचतथाद् भ्राष्ट्रयश्चपयसातथा रसेनचाथखंडेनफलैश्चस्नापयेत्पुनः तिलांबुनाततःस्नाप्यपश्चादुष्णेनवारिणा लेपयेत्सुघनंपश्चात्कु
पूरागरुचंदनैः एवंसंपूज्यतंभक्त्याहेमन्यरव्यंव्रजेद्गृहम् हेमस्रुवर्णपुष्पम् नानाफलैश्चसंपूज्यदद्यान्नैवेद्यमेवहि गृहंगत्वायथान्या
यंहिरण्यरेतसंविभुम् जातवेदसमाधायतर्पयेत्तिलसर्पिषा व्रतिनश्चतथाचार्यंमिथुनानिचभोजयेत् हेमवस्त्रादिदानानियथाशक्त्या
तुदापयेत् एवंविसृज्यतान्सर्वान्सार्द्धंबंधुजनैःसह पीत्वादौपंचगव्यंचतुष्टोभुंजीतवाग्यतः यत्किंचिदेनदुर्दृष्टंमहादेवमुदीरयेत्
मारंभेचविधिंकुर्याद्दरिद्रोवाधनेश्वरः वित्तसामर्थ्यतश्चैवप्रतिमासंततश्चरेत् स्वल्पवित्तोथवाकश्चित्पुष्पादौकार्तिकावधि नक्तंकृत्वा
त्वमावास्यांप्रागुक्तविधिनाततः प्रतिपद्यामुपोष्यैवंपंचगव्यंपिबेच्छुचिः महादेवंस्मरन्सार्द्धंभक्त्याभुंजीतलिंगिभिः मासस्यकार्तिक
स्यांतेकृत्स्नंप्राग्विधिनाचरेत् नंदायांचद्वितीयायांशुभतिथ्यामुपोषयेत् एवंपौषेतुसंप्राप्तेप्रतिपन्नक्तमाचरेत् द्वितीयाब्देद्वितीया
यामुपवासंसमाचरेत् आददीततिथिंचैकांमासेमासेतथापराम् पूर्ववत्संत्यजेत्पौषंप्रत्यब्दंचैवमाचरेत् एवंषोडशवर्षेतुक्रमेणैवमुपोष
येत् पूर्ववद्देवमभ्यर्च्यकृशानुंधाम्नितर्पयेत् उमामहेश्वरप्रीत्यैदद्याद्गांचद्विजायच संपूज्यहेमवस्त्राद्यैर्यथाशक्त्यातुदक्षिणां छत्रोपान
हकुंभांश्चदद्यात्तेभ्यःपृथक्पृथक् भोजयेत्तान्विसृज्यैवंमिथुनानिचषोडश ब्राह्मणांश्चयथाशक्त्याभोजयेद्वेदपारगान् एवंमहाव्रतंचै
वब्रह्मघ्नस्याघमर्षणम् वाचकाःश्रावकाश्चैवश्रोतारोव्रतिनश्चये भवंतिपुण्यसंयुक्तास्तद्गुणाभिमुखाश्चये इतिश्रीहेमाद्रौकालिकापुराणे
गौरीतपोव्रतंसोद्यापनंसंपूर्णम् अथसोमवत्यमावास्यायांव्रतम् शंखः अमासोमसमायोगेश्राद्धंयद्यत्रलभ्यते तीर्थेकपिलधारेस्मिन्
गंगायांपुष्करेतथा दिव्यांतरिक्षभौमानियानितीर्थानिसर्वशः तान्यत्रनिवसिष्यंतिदर्शेसोमदिनान्विते अमावास्यातुसोमेनसप्तमीभा
नुनासह चतुर्थीभूमिपुत्रेणसोमपुत्रेणचाष्टमी चतस्रस्तिथयःकृष्णाःसूर्यग्रहणसन्निभाः स्नानंदानंतथाश्राद्धंसर्वंतत्राक्षयंभवेत् ति
थिवासरयोर्योगोयथाकालेभवेद्यदि प्रात्यंतेवाथमध्यान्हेपुण्यकालःसनान्यथा अथसंकल्पः तिथ्यादिसंकीर्त्य ममेह अस्यांसोमव

त्यमायांसकलपापक्षयार्थंपुत्रपौत्राद्यभिवृद्ध्यर्थंजन्मजन्मन्यवैधव्यसंततिचिरंजीवितपरमसौभाग्यप्राप्तिकामाअश्वत्थमूले लक्ष्म्यासहित
ब्रह्मशिवसहित अश्वत्थनारायणप्रीत्यर्थंविष्णुपूजांतदंगतयाकलशपूजनंकरिष्ये. अथपूजा शांताकारमितिध्यात्वा विश्वव्या
पकविश्वेशरूपयादानवत्सल मयोपपादितांपूजांगृहाणेमांहि माधव सहस्रशीर्षेत्यावाहनम् मूलानिब्रह्मणोयस्यऋग्वेदांगानिप
ल्लवाः फलानियज्ञशाखाश्चनारायणदयांकुरु सूर्यकोटिप्रभानाथसर्वव्यापिन्रमापते आसनंकल्पितंभक्त्यागृहाणपुरुषोत्तम पुरुष
एवेदमित्यासनं नारायणजगद्व्यापिन्जगदानंदकारक विष्णुक्रांतादिसंयुक्तंगृण्हपाद्यंमयार्पितम् एतावानस्येतिपाद्यं फलगंधाक्ष-
तैर्युक्तंपुष्पपूगसमन्वितम् अर्घ्यंगृहाणभगवन्विष्णोसर्वफलप्रद त्रिपादूर्ध्वमित्यर्घ्यम् कर्पूरैलालवंगादिशीतलंसलिलंप्रभो रमा
रमणकृपालंआचम्यंप्रतिगृह्यताम् तस्माद्विराळित्याचमनीयम् पंचामृतंमयानीतंपयोदधिघृतंमधु शर्करागुडसंयुक्तंस्नानार्थंप्रतिगृह्य
ताम् पंचामृतस्नानम् गंगाकृष्णागोतमीचकावेरीचशतद्रुदा ताभ्यआनीतंसुरवदंस्नानार्थंप्रतिगृह्यताम् यत्पुरुषेणेतिस्नानं पीतवास
स्त्वयिविभोमयायत्समुदाहृतम् वासःप्रीत्यागृहाणेदंपुरुषोत्तमकेशव तंयज्ञमितिवस्त्रम् उपवीतंसोत्तरीयंमयादत्तंसुशोभनं विश्वमू-
र्तेगृहाणेदंनारायणजगत्पते तस्माद्यज्ञेत्युपवीतम् अश्वत्थहुतभुग्वासगोविंदस्यसदाश्रय अशेषंहरमेपापंवृक्षराजनमोस्तुते अलंका
रान् सूत्रवेष्टनं मलयाचलसंभूतंघनसारंमनोहरम् विलेपनंसुरश्रेष्ठचंदनंप्रतिगृह्यताम् तस्माद्यज्ञात्सर्वहुतइतिगंधं अक्षताश्चसुरश्रे
ष्ठकुंकुमाक्ताःसुशोभिताः मयानिवेदिताभक्त्यागृहाणपरमेश्वर अक्षतान् तुलसीजातिकमलमल्लिकाचंपकानिच पुष्पाणिहरगोविंदगृहा
णपरमेश्वर तस्मादश्वेतिपुष्पं वनस्पतिरसोद्भूतोगंधाढ्यश्चमनोहरः आघ्रेयःसर्वदेवानांधूपायंप्रतिगृह्यताम् यत्पुरुषंव्यदधुरितिधूपं
चक्षुर्दंसर्वलोकानांतिमिरस्यनिवारणम् आर्तिक्यंकल्पितंभक्त्यागृहाणजगदीश्वर ब्राह्मणोस्येतिदीपं भक्ष्यभोज्यलेह्यपेयचोष्यरवा
द्यंमयाहृतम् प्रीतयेपरमेशस्यदत्तंमेस्वीकुरुप्रभो चंद्रमामनसइतिनैवेद्यं मध्येपानीयं उत्तरापोशनं इदंफलंमयादेवेतिफलं पूगीफलमिति
तांबूलं हिरण्यगर्भेतिदक्षिणां त्वद्भासाभासतेलोकःकोटिसूर्यसमप्रभ नीराजयिष्येत्वांविष्णोकृपांकुरुममप्रभो नीराजनं मयाकायेन-

मनसावाचाजन्मशतार्जितम् पापंप्रशमयश्रीशप्रदक्षिणपदेपदे नाम्न्याआसीदितिप्रदक्षिणाम् व्यक्ताव्यक्तस्वरूपायसृष्टिस्थि
त्यंतकारिणे आदिमध्यांतरहितविष्टरश्रवसेनमः समास्येतिनमस्कारम् मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपा
यअश्वत्थायनमोनमः यज्ञेनयज्ञमितिपुष्पांजलिं अमासोमपूजा अमायैचनमस्तुभ्यंसोमायैचनमोस्तुते उभयोःसंगमेविष्णुपूजा
फलमवाप्नुयात् अनेनषोडशोपचारैःपूजयेत ततःमूलतोब्रह्मरूपेतिमंत्रेण अष्टोत्तरशतप्रदक्षिणाःकार्याःवायनं अमासोमाव्र
तस्यास्यसंपूर्णफलहेतवे वायनंद्विजवर्यायसहिरण्यंददाम्यहम् इतिवायनमंत्रः यन्मयामनसावाचानियमात्पूजनंकृतम् सर्वसंपूर्ण
तांयातु तद्विष्णोश्चप्रसादतः इतिप्रार्थना इदंविष्णुरितिमंत्रेणपुरुषसूक्तेनवानथा षोडशैरुपचारैश्चअश्वत्थेविष्णुपूजयेत् पौराण मंत्रः
व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणे आदिमध्यांतहीनायविष्टरश्रवसेनमः मूलतोब्रह्मरू० नमोनमः इतिमंत्राभ्यांपूजाकार्या ततः
प्रदक्षिणाःकार्याः१०८ अथकथा सूतउवाच शरतल्पगतंभीष्ममुपगम्ययुधिष्ठिरः कृतप्रणामोधर्मात्माहितंवचनमब्रवीत् यु
धिष्ठिरउवाच हतेषुकुरुमुख्येषुभीमसेनेनकोपिना तथापरेषुभूपेषुहतेषुयुधिजिष्णुना दुर्योधनकुमंत्रेणजातोस्माकंकुलक्षयः न
संतिभर्ताविभूपालाबालवृद्धातुरावृते अवशिष्टावयंपंचवंशेभारतसंज्ञके एकातपत्रमपिचराज्यंमह्यंनरोचते जीवितेमयिजुगुप्सा
स्यान्मृतेनमकगतिःक्वचित् हस्वासंततिविच्छेदंसंतापोहृदयेनिशम् अश्वत्थामास्त्रनिर्दग्धोह्युत्तरागर्भसंभवः अतोमेद्विगुणंदुःखंवापिंड
विच्छेददर्शनात् किंकरोमिक्वगच्छामिपितामहवदाधुना येनसंपद्यतेसद्यःसंततिश्चिरजीविनी भीष्मउवाच शृणुराजन्प्रवक्ष्यामि
व्रतानांव्रतमुत्तमम् यस्यस्मरणमात्रेणसंततिश्चिरजीविनी अमावास्यायदापार्थसोमवारयुताभवेत् तस्यामश्वत्थमागत्यपूजयेज्ज
नार्दनं अष्टोत्तरशतंकुर्यात्तस्मिन्वृक्षेप्रदक्षिणाः तावत्संख्यान्युपादायरत्नधातुफलानिच व्रतराजमिदंराजनविष्णोःप्रीतिकरंशुभं
उत्तरांकारयप्राज्ञ गर्भोजीवमवाप्स्यति भविष्यतिगुणीपुत्रस्त्रिषुलोकेषुविश्रुतः श्रुत्वापितामहवचःप्रत्युवाचयुधिष्ठिरः युधिष्ठिरउ०
नद्वृतंव्रतराजाख्यंविस्तरेणप्रकाशय केनप्रकाशितंमर्त्येकेनेदंविहितंविभो भीष्मउ० आज्ञयासर्वविख्याताकांतिसंज्ञामहापुरी

रजताचलसंकाशसौधसंघैर्विराजिता सर्वेषैर्नागरजनैर्नारीभिरुपशोभिता ब्रह्मक्षत्रियविट्शूद्रैः स्वस्वकर्मरतैर्वृता रूपचा
तुर्यवर्याभिर्वेश्याभिः समलंकृता अलकेवकुबेरस्य शक्रस्येवामरावती तेजोवतीवरत्नाढ्यापावकस्यमहापुरी तत्र राजारत्न
सेनो बभूवामितविक्रमः तस्मिन्वसतिभूपालेजनानंदकरेशुभे तस्य राज्येवसद्विप्रोदेवस्वामीतिविश्रुतः तस्यस्त्रीरूपसं-
पन्नानाम्नाधनवतीशुभा यथार्थनामधेयासालक्ष्मीरिवसविग्रहा तस्यांसजनयामाससप्तपुत्रान्गुणान्वितान् एकांदुहितरंर-
म्यांनाम्नागुणवतींनृप कृतदाराश्चतेपुत्राविहरंतियथासुखम् कन्याकुमारिकाचासीदनुरूपप्रियार्थिनी अत्रांतरेद्विजः कश्चिद्भिक्षार्थंसमुपा
गतः दीप्यमानः स्वतेजोभिर्मूर्तिमानिवपावकः द्वारदेशमुपागत्यप्रयुयोजाशिषंतदा देवस्वामिस्नुषाःसप्तसमुत्थायससंभ्रमम् भिक्षां
प्रत्येकमानिन्युर्ददुस्तस्मैद्विजन्मने अवैधव्याशिषंप्रापुस्ताभ्यःसौभाग्यसंप्रदम् ततोगुणवतीमात्रासहितासहभिक्षया विप्रायभिक्षां
प्रददौकृत्वापादाभिवंदनम् आशिषंचददौविप्रः शुभेधर्मवतीभव सावैलक्ष्यंगुणवतीश्रुत्वाप्रत्याययौगृहं मात्रेनिवेदयामासआशिषं
तेनयोजितं श्रुत्वाधनवतीपुत्रींकरेधृत्वासमाययौ प्रणामंकारयामासपुनस्तस्मैद्विजन्मने तथैवाशिषमुच्चार्यविप्रस्तामभ्यनंदयत् श्रुत्वाशिषं
धनवतीसचिंताप्रत्युवाचह धनवत्युवाच प्रसीदभगवान्विप्रवचनंमेवधारय स्नुषाभ्यःप्रणताभ्योमेत्वयादत्तावराशिषः अवैधव्यकराःसु
खसुखसौभाग्यसाधकाः सुतायांप्रणतायांमेविपरीतंत्वयोदितं भद्रेधर्मवतीभूयइत्युदीर्यपुनःपुनः आशीःप्रयुक्तानिप्रर्षेकारणंवदसत्वरं
द्विजउवाच धन्यासित्वंधर्मवतीप्रख्यातचरिताक्वापि यथायोग्यंप्रयुक्तेयंमयाशीर्द्विजसत्तम [illegible]
धर्माचरणमत्यर्थंकर्तव्यमनयाशुभे अतोमयाशीर्दत्तेयंसुभेधर्मवतीभव श्रुत्वाधनवतीवाक्यंचिंताकुलितचेतसा उवाचवचनंदीनंप्रणिप
त्यपुनःपुनः धनवत्युवाच उपायंवेत्सिविप्रेंद्रवदशीघ्रंदयांकुरु उपायंवेत्सिचेद्विप्रकिंकरोमिदयानिधे द्विजउवाच यदागताभवेत्सो
मागृहेवैतवसुंदरि तस्याःपूजनमात्रेणप्रभवेद्वैधव्यनाशनम् धनवत्युवाच कासासोमात्वयाप्रोक्ताकाजातिःकुत्रसंस्थितिः य
स्यागमनमात्रेणाभवेद्वैधव्यभंजनं एतद्वदमहाभागनकालोविस्तरस्यमे द्विजउवाच सोमासारजकीजातिःस्थितिस्तस्याश्चसिंहले

सावेदायाति ते वेश्म तदा वैधव्यभंजनं इत्युक्त्वा ब्राह्मणोन्यत्र गतो भिक्षामनीक्ष्य धनवत्यपि पुत्रेभ्यः प्रोवाच वचनं तदा धनवत्युवाच
इयं दुर्ललिता पुत्राः स्वसा गुणवती शुभा सोमागमनमात्रेण भवेद्वैधव्यभंजनम् अस्ति यस्यापि तद्भक्तिर्मातृवचनगौरवम् समयातु
सह स्वस्रा सो मामानयितुं द्रुतम् पुत्रा ऊचुः ज्ञातं मातस्त्वत्स्वान्तं पुत्रीस्नेहवशंगतम् यातदशांतरपुत्राः प्रख्यापयासदुर्गमम् अंतर
दुस्तरः सिंधुः शतयोजनविस्तरः अशक्यं गमनं तत्र न क्षमा गमने वयम् देवस्वाम्युवाच अपुत्रः सप्तभिः पुत्रैरहं यास्यामि सिंहलं आ
नयिष्यामि तां सोमां पुत्री वैधव्यनाशिनीं एवंवादिनि सक्रोधे देवस्वामिनि तत्क्षणे शिवस्वामी कनिष्ठस्तु पुत्रः प्रोवाच संमतः तात मा वद चैवं त्वं
रोषावेशवशंगतः मयि तिष्ठति कः शक्तो गंतुं द्वीपं हि सिंहलं इत्युक्त्वा सह सोत्थाय प्रणम्याशिरसा मुदा प्रतस्थे सहितः स्वस्रा द्वीपं सिंहलसं
ज्ञितं सक्रियद्भिर्दिनैर्गत्वा तीरं प्राप सरित्पतेः तर्तुं तमंबुधिं तत्र प्रयत्नमकरोद्द्विजः स ददर्श स्वविस्तीर्णं न्यग्रोधद्रुममंतिके तत्कोटरे स्मरवासी
ना गृध्रराजस्य बालकाः तत्सादपतले स्थित्वा ताभ्यां नीतं तु तद्दिनम् शावकानां कृते गृध्रो गृहीत्वाशिशुभोजनम् शावकास्तु न वै गृध्राद्भोजनं
जग्धिरे भृशम् पप्रच्छ बालकान् गृध्रो चिंताकुलितमानसान् गृध्रराज उवाच कथं नु भुंजने पुत्रा भवंतः क्षुधिता अपि आनीतं कोमलं मांसं भव
द्योग्यमिदं मया शावका ऊचुः एतद्वृक्षतले तात मानवाववतिष्ठतः अस्वीकृत्यो स्तयोस्तात कथं भुंजामहे वयम् एतच्छ्रुत्वा स गृध्रस्तु करु
णार्द्रतचेतसः तयोरंतिकमागत्य वचनं संमभाषत गृध्रराज उ॰ जातस्तु युवयोः कामो वक्तव्योत्र मर्माद्विज क्रियते सर्वथा विप्र भोजनं क
र्तुमर्हसि द्विज उवाच सिंहले गंतुकामोहं जलधेः पारमद्य वै सोमागमनमिच्छामि स्वस्रवैधव्यनाशनम् गृध्रराज॰ पारमुत्तारयिष्या
मि जलधेः प्रातरेव हि सोमागृहमपि त्वद्दर्शयिष्यामि सिंहले ततो रात्र्यां व्यतीतायामुदिते तु दिवाकरे पारमुत्तारितौ तौ तु गृध्रराजेन वेगि
ना सिंहलद्वीपमागत्य स्थितौ सोमागृहांतिके ततः प्रत्यूषसमये समृज्यांगणमंडलं लेपनं चक्रतुस्तस्या दिवसं दिवसं शुभं एवं विदधतो
स्तत्र पूर्णः संवत्सरो गतः स्नुषाः पुत्रान् समाहूय सोमा पप्रच्छ विस्मिता मार्जनं लेपनं कोत्र करोति मम कथ्यतां एकदैवाथ जगदुः सर्वाः कृतमिदं
हि न ततः कदाचिद्द्विजकी निभृता संस्थिता निशि ददर्श ब्राह्मणीं कन्यां मार्जयंतीं गृहांगणं लिंपंतमंगणं प्रातर्भ्रातरं च शुचिव्रतं सोमा पप्रच्छ

तेगत्वाकोत्त्वंकथ्यतांमम ऊचतुस्तौतदांसोमामावांब्राह्मणपुत्रकौ सोमोवाच दग्धास्मिबतनष्टास्मिब्राह्मणोगृहमार्जकौ कांगतिं
बतयास्यामिपापादस्मादसंशयं पापजातिरहंरव्यातारजकीसर्वथाद्विज कथंत्वंब्राह्मणोभूत्वाविरुद्धंमेचिकीर्षसि शिवस्वाम्युवा॰ एषागु
णवतीनामस्वसाममस्कमध्यमा अस्याःसप्तपदामध्येवैधव्यंसंप्रपत्स्यते तवसान्निध्यमात्रेणवैद्वैधव्यभंजनं अतोहेतोःसहस्वस्वादा
सकर्मकरोमिते सोमोवाच अतःपरंनकर्तव्यंयास्यामितवशासनात् इत्युक्त्वागृहमागत्यस्नुषाभ्यःप्रत्युवाचह यःकश्चिन्ममराज्येस्मिन्
म्रियतेमानवःक्वचित् तथैवरक्षणीयोसौयावदागम्यतेमया कस्यचिद्वचनात्कोपिनदग्धव्यःकथंचन तथेत्युक्तास्नुषाभिःसासोमा
यातामहांबुधिम् पारमुत्तारयामासक्षणेनद्विजपुत्रकौ स्वयमाकाशमार्गेणसोत्ततारमहार्णवम् ग्रामाःकांचीपुरींसर्वेनिमेषात्तत्प्रसादतः
सोमांहृष्वाधनवतीहृष्टापूजामथाकरोत् अत्रांतरेशिवस्वामीनदादेशांनरात्स्वसुः सहृशंवरमानेतुंजगामोज्जयिनींप्रति आनिनायवरं
तत्रदेवशर्मसुतंसुधीः ब्राह्मणंरुद्रशर्माणंगुणिनंसदृशंस्वसुः ततःसारजकीसोमावैवाहिकमथाकरोत् सुलग्नेचसुनक्षत्रेदेवस्वामी
तुकन्यकाम् ददौतस्मैगुणवतींगुणिनेरुद्रशर्मणे ततोवैवाहिकेमंत्रैर्हूयमानेहुताशने ततःसप्तपदीमध्येरुद्रशर्मामृतस्तदा रुरुदुर्बांध
वाःसर्वेस्थितासोमानिराकुला आक्रंदश्चमहानासील्लोकानांतत्रपश्यताम् गुणवत्यैचसातूर्णंव्रतराजप्रभावजम् पुण्यंसंकल्प्यविधिवद्दौ-
मृत्युविनाशनं रुद्रशर्मापितस्माच्चव्रतराजप्रभावतः आससादतदाजीवंसुप्तवत्सहसोत्थितः एवंविवाहंनिर्वर्त्यव्रतराजंनिवेद्यच आमं
त्र्यतांधनवतींसोमाप्रायादृहंप्रति एवंसारजकीसोमाजीवयित्वामृतंद्विजं चचालहर्षसंपूर्णापूर्णकामास्वमंदिरम् अत्रांतरेगृहेतस्याःप्रथ
मंतनयामृताः पुनःस्वामीमृतस्तस्याजामाताचततोमृतः आगच्छंत्यास्तदातस्याःसोमवारान्वितातिथिः अमावास्याबभूवाथमृतसंजी
विनीतिथिः साददर्शजलोपांतेवृद्धांकांचित्स्त्रियंतदा तूलभारभराक्रांतांक्रंदमानांसुदुःखिताम् वृद्धोवाच अवतारयमेपुत्रि
तूलभारंशिरस्थितम् एतद्भारभराक्रांतांक्रंदमानांसुदुःखिताम् सोमोवाच अमावास्याद्यहेवृद्धेसोमवारयुतातिथिः तूलकं
नस्पृशाम्यद्यनियमोयंमयाकृतः पुनर्ददर्शयांतीसामूलभारवतींस्त्रियं साउवाचततःपुत्रीमूलभारोमहानिति अवतीर्यक्षणंतिष्ठस्व

गेयास्याम्यहंतव सोमोवाच अद्यमूलंतथातूलंनस्पृशामिकदाचन ततोश्वत्थतरुंप्राप्यनदीतीरभवंशुभम् स्नात्वाविष्णुंसमभ्यर्च्य
शर्कराभिः प्रदक्षिणाम् साचकारमहाभागा तदैवाष्टोत्तरंशतम् भीष्मउवाच यदाप्रदक्षिणांकर्तुंकृतंशर्करहस्तया तदाजीवितवां
तस्तज्ज्ञामातृपतिपुत्रकाः नगरंश्चासमाकीर्णंतद्गृहंचविशेषतः अथयातामहाभागासोमास्वभवनंप्रति जीवितंवीक्ष्यभर्तारंपुत्रान्जा
मातरंतथा अभिज्ञातान्समासाद्यजगामकृतकृत्यतां प्रणिपत्यस्नुषाःसर्वाःपप्रच्छुस्तांतपस्विनीं स्नुषाऊचुः मृतास्तेतनयादेविपतिजामातृबां
धवाः जीवितास्तेकथंदेविमृतास्तेचकथंवद सोमोवाच गुणवत्येमयादत्तंव्रतराजस्यपुण्यकं मृतास्तेतद्विपाकेनपतिजामातृपुत्रकाः तूल
कंनमयास्पृष्टंमूलकंचतथास्नुषाः अश्वत्थेविष्णुमभ्यर्च्यकृतास्तत्रप्रदक्षिणाः शर्करहस्तयातत्रकृतमष्टोत्तरंशतम् जीवितास्तत्प्रभावे
नअद्यजामातृपुत्रकाः सर्वाभिःक्रियतामद्यव्रतराजोविधानतः भविष्यतिनवैधव्यंसौभाग्यंसंभविष्यति स्नुषास्ताःकारयामासुस्तथा
सोमव्रतेश्वरं भुक्त्वाभोगान्बहूंस्तत्रपुत्रपौत्रादिभिःसह तैश्चसर्वैःपरिवृताविष्णुलोकमवापसा इत्येतत्कथितंपार्थविस्तरेणमयातव
युधिष्ठिरउवाच माहात्म्यंव्रतराजस्यकोविधिर्वदविस्तरात् कर्तव्यंकेनभीष्मेदंनारीभिःपुरुषेणवा भीष्मउवाच अमावास्यायदापार्थ-
सोमवारान्विताभवेत् तदापुण्यतमःकालोदेवानामपिदुर्लभः प्रातरुत्थायव्रतिनास्नानंकार्यंजलाशये स्नात्वामौनेनकौशेयंपरिधा
प्यव्रतीततः गत्वाअश्वत्थवृक्षस्यसमीपंकुरुनंदन अश्वत्थमूलेकर्तव्याविष्णुपूजासमंत्रका व्यक्ताव्यक्तस्वरूपायसृष्टिस्थित्यंतकारिणे
आदिमध्यांतहीनायविश्वस्यवसेनमः इतिपूजामंत्रः मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायअश्वत्थायनमोनमः
एवंसंपूज्यगोविंदंपीतवस्त्राक्षतैःफलैः कुसुमैर्विविधैश्चैवभक्ष्यभोज्यैस्तथाविधैः अश्वत्थपूजनंकार्यंप्रोक्तमंत्रेणपांडव अश्वत्थहु
तभुग्वासगोविंदस्यसदाश्रय अशेषंहरमेपापंवृक्षराजनमोस्तुते एवंपूजाविधिंकृत्वाततःकुर्यात्प्रदक्षिणाः मौक्तिकैःकांचनैरौप्यैर्हीरकै
र्मणिभिस्तथा कांस्यपात्रैस्ताम्रपात्रैर्भक्ष्यपूर्णैःपृथक्पृथक् गृहीत्वाभ्रमणंकार्यंयावत्संक्रमणंभवेत् तावत्प्रदक्षिणंकार्यंयावदष्टोत्तरं
शतं समर्पितंचयद्द्रव्यमर्पयेद्दुरवेशुभं सुवासिन्यश्चसंपूज्याःसोमासंतुष्टिहेतवे दत्वाचान्नंतुविप्रेभ्योस्वयंभुंजीतवाग्यता एषतेक

थितोऽयंपव्रतराजविधिर्मया द्रौपदींचसुभद्रांचकारयस्वयथोत्तराम् उत्तरागर्भस्तस्थस्तुजीवितंलभतेचिरात् युधिष्ठिरउवाच यास्वल्प
विभवानारीकांचनाद्यैर्विनाकृता साकथंलभतेपूर्णंव्रतराजफलंवद भीष्मउवाच फलैःपुष्पैस्तथाभक्ष्यैर्वस्त्राद्यैरपिपांडव कुर्या-
त्प्रदक्षिणावर्त्तसापिपूर्णंलभेत्फलम् व्रतमिदमखिलनरेंद्रविष्णोःश्रुतमनयाहिपराक्रमतस्थापि पतिसुतधनमिच्छतीपुरंध्रीसपदि
करोतुनचात्रविघ्नमस्ति शृणुपार्थप्रवक्ष्यामिह्युद्यापनविधिंशुभम् यंविनापूर्णतानस्याद्व्रतराजस्यवैनृप कारयेत्सर्वतोभद्रंतन्मध्ये
कुंभमुत्तमं वृक्षराजःसुवर्णस्यपंचरत्नस्यवेदिकाम् तन्मूलेप्रतिमांविष्णोःसौवर्णींचचतुर्भुजां लक्ष्मीवाहनसंयुक्तांमाषद्वयपलाव
धि उपचारैरनेकैश्चयथाविभवविस्तरैः नैवेद्यैःपुष्पधूपैश्चदीपैश्चपरितःस्थितैः रात्रौजागरणंकुर्यात्प्रभातेहोममाचरेत् समिद्भिःपैप्पलाभि
श्चपायसेनतिलैस्तथा इदंविष्णुरितिमंत्रेणहुत्वापूर्णाहुतिंचरेत् आचार्यंपूजयेत्पश्चाद्गांचदद्यात्पयस्विनीम् ब्राह्मणंवस्त्रभूषाद्यैःसद
स्यंचप्रपूजयेत् ऋत्विजोद्वादशाःपूज्याघृतपायसभोजनम् उपवीतानिवस्त्राणितेभ्योदद्याच्चदक्षिणाम् प्रणम्यदंडवद्भूमौप्रार्थयित्वा
विसर्जयेत् एवंद्वादशवर्षैर्वामध्येचादौसमाचरेत् कृत्वाह्युद्यापनंसम्यग्व्रतराजफलंलभेत् सर्वंनिवेदयेत्सोऽथमाचार्यायसदक्षिणम्
अच्छिद्रंवाचयेत्पश्चात्स्वयंभुंजीतवाग्यतः इतिभविष्योत्तरपुराणेसोमवत्यमावास्याव्रतोद्यापनंसंपूर्णम् अथमाघअमावास्या
अर्द्धोदयव्रतम् अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः अर्द्धोदयःसविज्ञेयःकोटिसूर्यग्रहैःसमः दिवैवयोगःशस्तोयंनतुरात्रौक-
दाचन इतिहेमाद्रौ अगस्त्यउवाच भगवन्त्वत्प्रसादेनश्रुतोयंव्रतविस्तरः अर्द्धोदयंतुमेब्रूहिदुर्लभःसचराचरैः जीवितंप्राणिनां
पुण्यंयदिच्चेद्वदसिप्रभो कथंकार्यःकृतेकिंस्यात्फलंकथयषण्मुख स्कंदउवाच श्रूयतांपुण्ययोगोयंदुर्लभोऽर्द्धोदयाह्वयः तिर्यङ्मनु
ष्यदेवानांदुःप्राप्यःसर्वकामदः माघामायांव्यतीपातेआदित्येविष्णुदैवते अर्द्धोदयंतदित्याहुःसहस्रार्कग्रहैःसमम् पुराकृतंवसि
ष्ठेनजामदग्न्येनसुव्रत सनकाद्यैर्मनुष्यैश्चबहुभिर्बहुविश्रुतैः अन्यैःसहस्रैश्चकृतंफविश्रेष्ठतुकुंभज दानानांयज्ञतीर्थानांफलं
येनकृतंभवेत् ससागराधरातेनसप्तद्वीपसमन्विता दत्तास्यात्सर्वभावेनयेनत्वर्द्धोदयःकृतः गंगायांचप्रयागेचपुष्कराणांजलेतथा

मानसादिषुयत्पुण्यंतीर्थेषुस्नानदानतः तत्सर्वंप्राप्यतेविप्रव्रतेनानेनकुंभज अश्वमेधयुतंपुण्यंइष्टापूर्तेनयद्भवेत् अर्द्धोदयकृतोयैस्तु विधिदृष्टेनकर्मणा यातिसत्यंगृहेलक्ष्मीः संततिश्चानपायिनी आयुर्यशोतिविपुलंव्रतकर्ताफलंलभेत् इंद्राग्नीयमलोकेषुनिर्ऋतीनामपांपतेः वायोःकुबेरस्येशस्यलोकेषुचरतोव्रती वासंश्चंद्रार्कलोकेचलोकपालैश्चसेवितः गोकोटिदानजंपुण्यंसर्वतीर्थनिवासजं अर्द्धोदयस्यसाम्यंतुकलांनार्हंतिषोडशीं भूलोकाधिपतिश्चैवभुवर्लोकाधिपस्तुयः स्वर्लोकेशोजनानांचनपोलोकजनेश्वरः महर्लोकेवसेन्नित्यंयावदिंद्राश्चतुर्दश ततोहिरण्यगर्भस्यपुरुषोव्रतकारकः सत्यलोकाधिपःसाक्षीलोकानांपुरुषोव्ययः अर्द्धोदयप्रसादेनब्रह्मलोकेवसेन्नृपः तथामानेनविष्णुलंब्रह्मारुद्रस्ततोभवेत् शिवलोकेगणैःपूज्योदेवराजसमन्वितः वसेच्छक्रस्यलोकेषुव्रतस्यास्यप्रभावतः ततोविष्णुस्वरूपेणत्रैलोक्याधिपतिर्भवेत् शंखचक्रगदाधारीवनमालीहरिःस्वयम् व्रतप्रभावाल्लक्ष्मीशोदेवोनारायणोभवेत्

अगस्त्यउवाच स्कंदकेनविधानेनकर्तव्यंव्रतमुत्तमम् अर्द्धोदयंमनुष्याणांजीवितंदुर्लभंभवि स्कंदउवाच कृतंकृतंवसिष्ठेनत्रेतायांरघुणाकृतम् द्वापरेधर्मराजेनकलौपूर्णादरेणच अन्यैर्देवमनुष्यैश्चदैत्यैश्चमुनिसत्तम कृतमर्द्धोदयंसम्यक्सर्वकामफलप्रदम् माघमासेकृष्णपक्षेपंचदश्यांरवेर्दिने वैष्णवेणतुऋक्षेणव्यतीपातेसुदुर्लभे पूर्वाण्हेसंगमेस्नात्वाशुचिर्भूत्वासमाहितः सर्वपापविशुध्यर्थंनियमस्थोभवेन्नरः त्रिदैवत्यंव्रतंदेवाःकरिष्येमुक्तिदंपरम् भवंतिसन्निधौमेयत्रयोदेवास्त्रयोग्नयः इतिनियममंत्रः ब्रह्मविष्णुमहेशानांसौवर्णफलसंख्यया शय्यायंत्रंततःकुर्यादुपस्करसमन्वितम् देवतात्रयमुद्दिश्यकर्तव्यंभक्तिशक्तितः ब्रह्माविष्णुशिवप्रीत्यैदातव्यंतुगवांत्रयम् हिरण्यभूमिधान्यादिदानंविभवसारतः दातव्यमाश्रयोपेतंब्राह्मणेभ्यस्तुयत्नतः मध्यान्हेतुनरःस्नात्वाशुचिर्भूत्वासमाहितः तिलपर्वतमध्यस्थंपूजयेद्देवतात्रयम् तत्रादौब्रह्मपूजा नमोविश्वसृजेतुभ्यंसत्यायपरमात्मने देवायदेवपतयेयज्ञानांपतयेनमः ॐ ब्रह्मणेनमः पादौपूजयामि ॐ हिरण्यगर्भाय॰ ऊरूपू॰ ॐ परमेष्ठिने॰ जंघे॰ ॐ वेधसेन॰ गुह्यं॰ ॐ पद्मोद्भवाय॰ नाभिंपू॰ ॐ हंसाय॰ कटी॰ ॐ शतानंदाय॰ वक्षस्थलं॰ ॐ सावित्रीपतये॰ बाहू॰ ॐ ऋग्वेदाय॰ नासिकांपू॰ ॐ यजुर्वेदाय॰ नेत्रेपू॰ ॐ सामवे

दायन॰ श्रोत्रेपू॰ ॐ अथर्ववेदाय॰ ललाटंपू॰ ॐ कपिलायन॰ शिरःपूजयामि ततोलोकपालान्पूजयेत् नाममंत्रैः हिरण्यगर्भपुरु
षप्रधानव्यक्तरूपक प्रसीदसुमुखोभूत्वापूजांगृण्हनमोस्तुते इतिप्रार्थना नारायणजगन्नाथनमस्तेगरुडध्वज पीतांबरनमस्तु
भ्यं जनार्दननमोस्तुते ॐ अनंतायनमः पादौपू॰ ॐ विश्वरूपाय॰ ऊरूपू॰ मुकुंदाय॰ जानुनीपू॰ गोविंदाय॰ जंघेपू॰ प्रद्युम्नाय॰ बाहूपू॰ वि
श्वतोमुखाय॰ मुखं॰ शतसहस्रशिरसेनमः शिरःपू॰ आदित्यचंद्रनयनदिग्बाहोदैत्यसूदन पूजादत्तामयाभक्त्यागृह्णाणकरुणाकर
इतिविष्णुंप्रार्थ्य महेश्वरमहेशाननमस्तेत्रिपुरांतक जीमूतकेशायनमोनमस्तेवृषभध्वज ईशानाय॰ पादौपू॰ चंद्रशेखराय॰ जंघे
पू॰ पशुपतयेन॰ जानुनीपू॰ शंकराय॰ ऊरूपू॰ उमाकांताय॰ गुह्यंपू॰ नीललोहिताय॰ नाभिंपू॰ कृत्तिवाससे॰ उदरंपू॰ नागयज्ञोपवीति
ने॰ हृदयं॰ भुजंगभूषणाय॰ बाहूपू॰ नीलकंठाय॰ कंठंपू॰ पंचवक्त्राय॰ मुखंपू॰ कपर्दिनेन॰ शिरःपू॰ महादेवमहाबाहोनमोलोकांत
कायच पूजामयाकृताभक्त्यागृहाणवृषभध्वज इतिमहेश्वरंप्रार्थ्य इतिपूजाक्रमःप्रोक्तोमंत्रैरेतैःप्रयत्नतः आचार्यंपूजयेद्भक्त्या
वस्त्रालंकारभूषणैः हस्तमात्राकर्णमात्रापीठंछत्रंकमंडलुं श्वेतवस्त्रयुगंदेयंब्रह्मणेसर्वमूर्तये उपवीतंवस्त्रयुगंविष्णुलोकहितंकरम्
पंचामृतेनस्नपनंपूजनंकुसुमैस्ततः कमलैस्तुलसीपत्रैर्बिल्वपत्रैरखंडितैः तत्कालसंभवैर्दिव्यैःपूज्यादेवायथाक्रमं यथाशक्त्याप्रक
र्तव्यंव्रतमेतत्सुदुर्लभम् जीवितंप्राणिनांराजन्ननित्यंनिश्चितंयतः व्रतस्योद्यापनंराजन्विधानंशृणुयत्नतः देवतात्रयमुद्दिश्ययशा
स्त्रदृष्टेनकर्मणा ब्रह्मणेविष्णुरूपायशिवरूपायतेनमः अनेनैवचमंत्रेणवन्हिंसंस्थाप्यभक्तितः ततोहोमंप्रकुर्वीतसहस्रनयसंमितम्
तिलाज्यशर्कराश्चैवहोमद्रव्याणिभिन्नतः ब्रह्मजज्ञानमंत्रेणब्रह्मणेचतिलान्हुनेत् आज्यंचैवइदंविष्णुस्त्र्यंबकंशर्करांहुनेत् अग्निंसं
पूज्यविधिवद्वांचदद्यात्पयस्विनीं आचार्यायततःपीठंदक्षिणासहितंशुभम् तेनदत्तंहुतंजप्तंइष्टंयशैःसहस्रधा कृतकृत्योभवेन्मर्त्यो
व्रतस्यास्यप्रभावतः एवंतवमयाख्यातंदुर्लभंव्रतमुत्तमं अर्द्धोदयंमयाख्यातंकिमन्यत्परिपृच्छसि इतिश्रीस्कंदपुराणेअर्द्धोदयव्रतं
संपूर्णम् इतिअमावास्याव्रतानिसमाप्तानि अथमलमासव्रतानिलिख्यते युधिष्ठिरउवाच देवदेवजगन्नाथभुक्तिमुक्तिप्रदा

यक कथयस्वप्रसादेनलोकानांहितकाम्यया कथयंतिमुनिश्रेष्ठाः कृष्णद्वैपायनादयः अदत्तंनैवलभ्येतदत्तमेवोपतिष्ठते यथावंध्यागृहस्थ
स्यपतिवंशविनाशिनी तथादानविहीनस्यजन्मसर्वंनिरर्थकं तथापिकथयंतीह देवज्ञाः शास्त्रकोविदाः मलिम्लुचेयदाप्राप्तेक्रियाकार्याक
र्थविभो क्षौरंमौंजीविवाहश्च व्रतंकाम्योपवासकं मलिम्लुचेसदात्याज्यंगृहस्थेनविशेषतः लक्ष्मीरुवाच अधिमासेत्वसंप्राप्तेकिंकार्यंव्रतमुत्त
मं कस्योद्देशेनदातव्यंकिंपरत्रप्रदायकं श्रीकृष्णउवाच शृणुदेविमहाभागेसर्वलोकस्यहेतवे स्वयंदातास्वयंभोक्तायोददातिद्विजातये
नान्योदातानभोक्ताच इहलोकेपरत्रच असंक्रांतेचमासेवैमामुद्दिश्यव्रतंचरेत् अधिमासस्यदेवोहंपुरुषोत्तमसंज्ञकः स्नानंदानंजपंहोमं
स्वाध्यायंपितृतर्पणं देवार्चनमथान्यच्चयेकुर्वंतिमनुष्यजाः अक्षयंतद्भवेत्सर्वंममोद्देशेनयत्कृतं मलमासोगतःशून्योयेषांदेविप्रमादतः दारि
द्र्यंपुत्रशोकंचपापपंकविगर्हितम् मर्त्यलोकेभवेज्जन्मतेषांदेविनसंशयः स्मरवप्रदासिदेविलंयेन्वैयंतिद्विजोत्तमान् यदामलिम्लुचोमासोप्रा
प्यतेमानवैःप्रिये महोत्सवस्तदाकार्यआत्मनोहितकांक्षिभिः कृष्णपक्षेचतुर्दश्यांनवम्यांवासुरेश्वरि अष्टम्यांवाथकर्तव्यंव्रतंशोकविनाश
नं यथालाभोपहारेणमासेचास्मिन्मलिम्लुचे पुण्येन्हिप्रातरुत्थायकृत्वापूर्वाण्हिकींक्रियां गृहीयान्नियमंपश्चाद्वासुदेवंहृदिस्मरन् उपवास
स्यनक्तस्यएकभक्तस्यभामिनि एकस्यनिश्चयंकृत्वाततोविप्रान्निमंत्रयेत् सपत्नीकान्सदाचारान्सुरूपान्सुरवेषकान् कृताध्ययनसंप
न्नान्कुलीनान्ज्ञातिसंभवान् युधिष्ठिरउ० अधिमासस्यमाहात्म्यंमार्कंडेयमुनेवद जपयज्ञादिकंपुण्यंवक्तव्यंऋषिसत्तम किंकर्तव्यंचवि
प्रेंद्रगंगास्नानंचदुर्लभम् कथयस्वमहाप्राज्ञकृपयाद्विजपुंगव मार्कंडेयउवा० मलमासस्तुमासानांमलिनःपापसंभवः तस्यपापविशुद्ध्य
र्थमलमासव्रतंकुरु प्रतिपत्तिथिमारभ्य अमावास्यावधिर्भवेत् उपवासेननक्तेनह्येकभक्तेनवानृप एकस्यनियमंकृत्वादानंदद्याद्दिनेदि
नेदानंकुर्यादपूपानांदक्षिणाघृतसंयुतम् अंतेचोद्यापनंकुर्यात्संपूज्यमधुसूदनं उपोष्यचचतुर्दश्यांसर्वपापैःप्रमुच्यते दारिद्र्येणव्यतीपातेप्य
थवाद्वादशीदिने पौर्णमास्यांचतुर्दश्यांनवम्यांवानृपोत्तम अष्टम्यांवाथकर्तव्यंव्रतंशोकविनाशनं यथालाभोपचारेणमासेचास्मिन्मलिम्लुचे त्रय
स्त्रिंशदपूपांश्चप्रदद्याद्घृतसंयुतान् श्रीसूर्यप्रीतयेराजन्सर्वपापविमुक्तये पात्रेजनार्दनेप्रीत्यादानंतत्सफलंभवेत् मलमासेतुसंप्राप्तेकार्ति-

केश्वावणेपिवा युधिष्ठिरउवाच मालमासः कथंज्ञेयः सर्वज्ञमुनिसत्तम तंब्रूहिसकलंविप्रविस्तरेणयथातथम् मार्कंडेयउवाच यस्मि
न्मासेनसंक्रांतिः संक्रांतिद्वयमेववा मलमासक्षयोमासौसर्वधर्मविवर्जितौ एवंसंज्ञोयदामासोयस्मिन्संवत्सरेक्कचित् उत्तरेदेवकार्याणिपि
तृकार्याणिदक्षिणे मलमासेतुसंप्राप्तेसंध्योपासनतर्पणम् नित्यंहिसफलंश्राद्धदानादिनियमव्रतम् मार्कंडेयउवाच शृणुधर्मभृतां
श्रेष्ठकौशिकोनामवैद्विजः महातपाध्यानरतः सत्यसंधोजितेंद्रियः विष्णुभक्तः सदाविप्रोवेदधर्मपरायणः तस्यसूनुर्महाक्रूरोद्विजोमै
त्रेयनामकः कामांधः स्वजनत्रासीसाधुद्वेषकरोधमः अधर्मिष्ठः पापरतिः शिवस्याविष्णोर्निंदकः गोत्रपीडाकरः पापोराहुरिवदिवाकरे
दारुणोदारुणाचारः सर्वभूतविहिंसकः मद्यपानरतोमूढोदस्युभिः सहसंगतः गतेबहुतरेकालेशृणुराजन्यसत्तम एकदाहयमारुह्यप्रया
तोनगरंप्रति व्यवसायस्वरूपेण सौराष्ट्रंनगरोत्तमं भृत्यैश्चसहितोविप्रवधंकृत्वास्वहस्ततः शस्त्रास्त्रकर्मभिर्घोरैर्धनंहृत्वानृपोत्तम हाहा
कारोमहान्जातः सौराष्ट्रनगरेततः सर्वैर्नागरिकैः पापोलोकैर्विनिहितोनृप इत्थंकृत्वासतन्मूढोविप्रवंशेकुलाधमः प्रतिषिद्धंचयत्कर्मकृतं
पातकसंचयात् भस्मीभूतंचतद्राष्ट्रंब्राह्मणस्यविघाततः मैत्रेयः स्वजनैः सार्द्धंब्रह्महत्यादिदोषकृत् ततःपंचमहत्कृत्वानिर्गत्ययमकिं
कराः छिंधिभिंधिवचोघोराउद्धृत्यदंडमुद्गरान् घातयित्वाचतंमूढंतालवृक्षशिलातले इत्थंचानेकदंडांश्चकृत्वापश्चाद्यमालयं आनीतो
सौपापरूपीयदाकौशिकनंदनः घोरेवैकृमिकुंडेचमैत्रेयः सनिपातितः यमाज्ञयाततः पापंपंचद्व्यसहस्रकं भुंजन्वैविप्रहत्यांतांतथा
प्रेताग्निवह्निना इत्थंचानेकशः सर्वयातनामुपभुंजते एतन्नारदवाक्याच्चकौशिकेनततः श्रुतम् लांछनंब्रह्महत्यानांवत्कुलेमुनिसत्तम त
त्पापपरिहारार्थंव्रतंचेदंमहोत्तमं श्रुतिशास्त्रेषुसंशोध्यऋषिभिः कथितंपुरा तच्छ्रुत्वाकौशिकेंद्रेणपुत्रोद्धरणहेतुना कौशिकउवा॰ त
द्व्रतंब्रूहिमेप्राज्ञब्रह्महत्याप्रणाशनम् मद्वंशलांछनंतातनशीघ्रंब्रूहिमहामते नारदउवा॰ शृणुकौशिकसर्वज्ञव्रतानामुत्तमंव्रतम्
प्रवक्ष्यामिहतेसर्वलोकानुग्रहकाम्यया ब्रह्महत्यासुरापानंस्तेयंगुर्वंगनागमम् कोटिजन्मार्जितंपापंतत्क्षणाद्व्रतयोगतः प्रणश्यति
नसंदेहोयथाकृष्णपदार्चनात् तस्मात्कौशिकविप्रेंद्रब्रह्महत्यांतरिष्यसि मार्कंडेयउवा॰ तच्छ्रुत्वाकौशिकोवाक्यंनारदस्यमहात्म-

नः सतद्यमलमासस्यव्रतंचक्रेथकौशिकः शतधातत्कृतंपुण्यंमलमासव्रतादिकम् दत्तंत्रिवार्षिकंतत्रकौशिकेनसुतायतत् दिव्यदेहस्तदा
जातोब्रह्मादीनामगोचरः मैत्रेयश्चमहाराजव्रतस्यास्यप्रसादतः निःपापश्चकृतोहृष्टःकौशिकेनद्विजन्मना प्रसादाच्चहरेःसाक्षाच्छृ
णुधर्मभृतांवर युधिष्ठिरउवाच कथंवाचरितंब्रह्मन् मलमासव्रतादिकम् तत्सर्वंब्रूहिमेविप्रसर्वलोकहितायच मार्कंडेयउवा० वि
स्तरेणार्चनफलंकविभिर्नैवशक्यते वक्तुंजनार्दने नेदंकिंपुनःप्राकृतैर्जनैः प्रतिपत्तिथिमारभ्यमासमेकंजनार्दनम् अर्चयेद्गंधपुष्पाद्यैः
पायसेनससर्पिषा विप्रांस्तुभोजयेत्पश्चाद्दक्षिणाभिश्चतोषयेत् एवंव्रतंमासमेकंकुर्याद्दानैर्विचित्रकैः अंतेप्राप्तेदिनेप्राप्तेउपोष्यसुस
माहितः पुण्येन्हिप्रातरुत्थायकुर्यात्पूर्वाह्णिकींक्रियाम् गृहीत्वानियमंपश्चाद्वासुदेवंहृदिस्मरन् त्रित्रिंशद्धर्मनिरतान् ततोविप्रान्नि
मंत्रयेत् सपत्नीकान्सदाचारान् सविद्यांश्चसुरूपकान् वेदाध्ययनसंपन्नान्सुकुलीनान्ज्ञातिसंभवान् ततोमध्यान्हवेलायांकृत्वामा
ध्यान्हिकीःक्रियाः पुष्पमंडपिकांकृत्वाविचित्रैस्तोरणादिभिः तस्मिन्सुशोभितेसर्वैर्मंडलेतूर्यनादिते सुलक्षणांलिखेत्तत्रसर्वतोभ
द्रमंडलम् स्थापयेद्व्रणंकुंभंपंचरत्नसमन्वितम् तस्योपरिन्यसेत्पात्रंदेवंतत्रप्रपूजयेत् आदौस्वस्त्ययनंकृत्वापूजांतत्रसमारभेत्
प्राणानायम्यविधिवन्मनःसंकल्पपूर्वकम् उपचारैःषोडशभिःपूजयेच्चजनार्दनम् गंधतोयेनसंस्नाप्यशुभैःपंचामृतैस्तथा स्थापयेद्व्रणंकुं
भंवस्त्रयुग्मेनवेष्टितम् ततस्त्रिंशच्चनामानिपूजयेच्चयथाविधि जिष्णुंविष्णुंमहाविष्णुंहरिंकृष्णमधोक्षजं केशवंमाधवंरामंमच्युतंपुरुषो
त्तमम् गोविंदंवामनंश्रीशंश्रीकंठंविश्वसाक्षिणम् नारायणंमधुरिपुमनिरुद्धंत्रिविक्रमम् वासुदेवंजगद्योनिंशेषतल्पगनंतथा संकर्षणं
चप्रद्युम्नदैत्यारिंविश्वतोमुखं जनार्दनंधराधारंश्रीधरंचसमर्चयेत् कुंभस्थितेकांस्यपात्रेपूजयेच्चजनार्दनम् आच्छाद्यवस्त्रयुग्मेनपीतेनच
यथाविधि विष्णवेचततोदद्यादुपवीतंचशोभने चंदनेनसुगंधेनपुष्पैर्नानाविधैर्नृप धूपैर्नानाविधैर्दीपैःपूजयेच्चयथाविधि मिष्टान्नैश्चैवनै
वेद्यैर्नागवल्लीदलान्वितैः घंटामृदंगनिर्घोषैः शंखध्वनिसमन्वितैः आरार्तिकंप्रकुर्वीतकर्पूरागरुचंदनैः प्रदक्षिणानमस्कारान्मंत्रपुष्पंयथा
विधि ताम्रपात्रस्थितंतोयंचंदनाक्षतपुष्पकैः अर्घ्यंदद्यात्सपत्नीकःसुहृष्टेनांतरात्मना नारिंगैर्नारिकेरैश्चफलैर्नानाविधैःशुभैः पंचरत्नसम

युक्तंजानुनीस्थाप्यभूतले आरोप्यभालेहस्तौच श्रद्धाभक्तिसमन्वितः अधिमासेतुसंप्राप्तेशुभेसूर्याधिदैवते देवदेवमहादेवप्रलयो
त्पत्तिकारक गृहाणार्घ्यंमयादत्तंकृपांकृत्वाममोपरि स्वयंभुवेनमस्तुभ्यंब्रह्मणेमिततेजसे नमोस्तुतेश्रियानंतब्राह्मणानांदयांकुरु एवंस्तु
त्वाजगन्नाथंगंधपुष्पोपहारकैः पूजयित्वाजगन्नाथंचतुर्षुप्रहरेषुच तथाजागरणंकुर्यात्कीर्तनश्रवणादिभिः ततःप्रभातसमयेअमावा
स्यादिनेनृप विष्णुंचपूजयेद्भक्त्यापश्चाद्धोमंसमाचरेत् समित्तिलाज्यचरुणापायसेनहुनेन्नृप अतोदेवेतिषट्केन अयुतंवासहस्रकम्
पूर्णाहुतिंततःकृत्वाहोमशेषंसमापयेत् गुरोःपूजांततःकुर्याद्वस्त्रधान्यादिसत्तकैः प्रदद्याद्देलुनासार्द्धंप्रतिमांचतथानृप त्रयस्त्रिंशदपू
पांश्चकांस्यपात्रसमन्वितान् प्रदद्याद्गुरवेराजन् घृतशर्करयासह अधिमासेतुसंप्राप्तेपापमुक्त्यैजनार्दनम् उद्दिश्यापूपदानेनघृते
नसहरुक्मकं विष्णुप्रीत्यैप्रदद्याच्चपृथ्वीदानफलंलभेत् त्रयस्त्रिंशदपूपांश्चदानार्हाश्चदिनेदिने सुवर्णगुडसंयुक्तान्कांस्यपात्रेनि
धायच अधिमासेतुसंप्राप्तेशुभेसूर्याधिदैवते नरकोत्तारणायैवमयादानंप्रदीयते त्रयस्त्रिंशदपूपांश्चघृतशर्करयासह सदक्षि
णामयातुभ्यंकांस्यपात्रेणदापिताः दातादिवाकरोदेवोगृहीताचदिवाकरः दानेनानेनविप्रेंद्रसूर्योमेप्रीयतामिति प्रीयतांदेवदेवे
शाब्रह्मशंभुजनार्दनाः तेषांप्रसादात्सकलाममसंतुमनोरथाः गृहाणपरमान्नेनकांस्यपात्रंप्रपूरितम् सघृतंगुडसंयुक्तंप्रीतोभवदि
वाकर त्वयादत्तमिदंप्रासंपरमान्नेनपूरितं सघृतंप्रतिगृण्हामिप्रीयतांमेदिवाकरः ब्राह्मणान्पूजयेत्पश्चाद्वस्त्रालंकारचंदनैःअपू
पदानंदद्याच्चकांस्यपात्रसमन्वितम् धेनुंसवत्सांदद्याच्चवस्त्रालंकारभूषिताम् कांस्यदोग्ध्रींरौप्यखुरांदक्षिणासहितांनृप नत्वा
तुवाचयेद्विप्रान्सफलंचास्तुमेव्रतं ऋत्विग्भ्योवाससीदद्यात्त्रयस्त्रिंशच्चकुंभकान् कांस्यपात्रसमायुक्तानपूपान्घृतसंयुतान् वट
कैःसहराजेंद्रयथाशक्त्याचदक्षिणाम् ब्राह्मणान्भोजयेत्पश्चाच्छर्कराघृतपायसैः द्वादश्यांमलमासस्यक्षयेप्राप्तेशुभेह्निवादुर्ब
लेनापिकर्तव्यंत्रयस्त्रिंशदपूपकम् मलमासेतुसंप्राप्तेएकस्मिंश्चशुभेदिने निष्किंचनेनदातव्यंघृतशर्करयासह मासानांमलमासो
यंमलिनःपापसंभवः तस्यपापस्यशांत्यर्थमन्नदानंकरोतियः यावंतिचैवछिद्राणि अपूपादिषुपांडव तावद्वर्षसहस्राणिस्वर्गलोकेमहीयते म

लमासव्रतंनारीयाकरोतीहभारत दारिद्र्यदुःखशोकंतुनवैधव्यंलभेतसा यइदंधर्मसर्वस्वंकुर्याल्लोकैःपुराकृतम् ब्रह्महत्यादिपाप
घ्नंप्राप्नुयाद्वैष्णवंपदम् एवंप्रार्थ्यचगोविंदंपूजयेद्ब्राह्मणानथ सपत्नीकान्शक्त्याविस्नातान्लक्ष्मीनारायणौस्मरन् पूजयित्वाविधानेनभोजये
द्घृतपायसैः भोजयित्वाविधानेनसपत्नीकंस्मरन्विभुम् स्मर्तव्योद्विजरूपेणपत्नीरूपेणवैनृप परिधाययथाशक्त्यावस्त्रालंकारकुंकुमैः
द्राक्षाम्रैश्चकपित्थैश्चपनसैःकदलीफलैः नारिकेरैश्चनारिंगैःकूष्मांडैर्दाडिमीफलैः उर्वारुकैःकर्कटैश्चशृंगवेरैःसमूलकैः अन्यैश्चवि
विधैःशाकैरन्वितैश्चपृथक्पृथक् घृतपक्वान्नगोधूमैःशुभैःसोहालिकैर्वटैःशर्कराघृतपूरैश्चफाणितैःषडमंडकैः भक्ष्यभोज्यैश्चलेह्य
द्याधिकंदुकानिविशेषतः गोरसानांविचित्राणिवासितानिइलादिभिः अन्यान्यपिचदानानिदेयानिविविधानिच वित्तशाठ्यंनक
र्तव्यमात्मनःश्रेयइच्छता यथावत्सरसंप्राप्यपरिवेष्यमृदुब्रुवन् इदंस्वादुइदंभोज्यंभवदर्थंविचिंतये याच्यतांरोचतेयच्चयन्मयापा
चितंप्रभो धन्योस्म्यनुगृहीतोस्मिपावितंममभंदिरम् विसर्जयेत्ततोविप्रान्दत्वातांबूलदक्षिणे आसीमांतमनुव्रज्य भुंजीतबंधुभिः
सह असंक्रांतव्रतंनारीयाकरोतिहरिप्रियं दारिद्र्यंपुत्रशोकंचवैधव्यंनभवेत्कदा एवंविधोपिपुरुषोयदिकुर्यान्मलिम्लुचे म
लिम्लुचंप्राप्यनपूजितोयैःश्रीनाथदेवःपरएवभक्त्या कथंभवेच्छ्रेयसंखंचसंपत्पुत्रःसुहृत्स्वजनाश्चापिभार्या कदाचिन्नकृतं
पापैर्मलमासव्रतंनरैः तेषांपापिष्ठतानित्यंब्रह्महत्यापदेपदे मार्कंडेयउवाच एतत्तेकथितंपार्थगुह्याद्गुह्यतरंपरम् वाजपेयायु
तफलंश्रोतावक्तालभेद्ध्रुवम् इतिश्रीभविष्योत्तरपुराणेमलमासव्रतोद्यापनंसंपूर्णम् अथस्वस्तिकव्रतंआषाढपौर्णिमामार
भ्यकार्तिकपौर्णिमावधि युधिष्ठिरउवाच सर्वासांचतिथीनांचकथितानिव्रतानिभो तथाचस्वस्तिकंनामयत्त्वयाकथितंप्रभो
नैवतस्यविधानंतुकथितंत्वंसुरेश्वर कोविधिर्देवताकाचकिंदानंपूजनंकथम् केनेदंहिपुराचीर्णंकिंफलंस्वस्तिकेव्रते श्रीकृष्णउ
वाच. साधुपृष्टंमहाभागलोकानांहितकाम्यया येनचीर्णेनराजेंद्रभूमिभुग्जायतेनरः स्वस्तिकस्यविधिंराजन्शृणुत्वेकाग्र
मानसः स्वस्तिकानालिखित्वादौपूजाकर्मसमारभेत् रमयासहितंदेवंपूजयेत्सत्यहंपुनः इतिसंकल्प्यमेधावीस्वस्तिकंकर्म—

कारयेत् अष्टोत्तर स्वस्तिकानिशत्यहं विष्णवेपुनः रंगवल्यालंकृतानियदिभक्त्यासमर्पयेत् शतजन्मार्जितंपापंतस्यनश्यतितत्क्षणात्
गोमूत्रंगोमयंराजन्स्थंडिलेसंविलेपयेन् रंगवल्यादिकंकार्यंसर्वंभक्त्यासमर्पयेत् नीलपीतसितैरक्तैरंगैःस्वस्तिकधारणं यत्रकुर्याद्विशः-
द्धात्माविष्णुलोकेमहीयते पंचवर्णैस्तुनालाद्यैःकुर्यात्स्वस्तिकमुत्तमं नारीवापुरुषोवापिप्रसन्नेचजनार्दने विष्णवालयेशिवद्वारेगवांगोष्ठेश्म-
शानस्थले विष्णुप्रीतिकरंकुर्यात्तस्यपुण्यमनंतकम् पंचरंगकवर्णैस्तुकोटियज्ञफलंलभेत् रंगवल्यादिकंकृत्वाविष्णोस्तुपुरतोन्यसेत् स्व
स्तिकैःशोभयित्वाचविष्णोःस्थानंशिवस्यच अशुभंतत्कुलेनैवस्याद्वैविष्णुप्रसादतः सहस्रंस्वस्तिकानांतुयेनभक्त्यासमर्पितं पुत्रपौत्र
समायुक्तोमोदमानःपुनःपुनः चिरवासोभवेत्स्वर्गेधनवान्भूमिपोभवेत् तत्कुलेपिदरिद्रत्वंनैवजायेतकर्हिचित् प्रयतंस्वस्तिकानांतुवि
ष्णवेद्यर्पयेद्यदि पुत्रपौत्रादिकंतस्यस्वस्तिमज्जायतेध्रुवम् नरोगार्तिर्भवत्येवगोपालस्यप्रसादतः नारीचैवहिधवानैवपुरुषोवापिकर्हि
चित् जायापत्यसमायुक्तोनात्रकार्याविचारणा नारीणांतुभवन्त्येवस्वस्तिकैःपूजनंपरम् अथस्वस्तिकलक्षंतुयःकुर्याद्विचक्षणा तस्याःपु
ण्यफलंवक्तुंकःशक्तोदिविवाभुवि आषाढेमासिराजेंद्रप्रथमंचरणंभवेत् आश्विनेतुसमाप्तिर्वैकर्तव्यास्वस्तिकारणा धनिनातुकृतंविप्र
गोदानादिपुरःसरं कर्तव्यंफलसिद्ध्यर्थंनात्रकार्याविचारणा कृतंयदिदरिद्रेणशुभंस्वस्तिकलक्षकं कंबलाद्यासनंदद्याद्व्रतसाद्गुण्यसि
द्धये विभवेसतिराजेंद्रहेम्नारौप्येणवाकृतम् स्वस्तिकंत्वासनंदद्याद्व्रतसंपूर्तिसिद्धये आहिताग्नेस्तुहोमार्थंतदभावेद्विजार्चनं द्विजसं
तर्पणादेतत्संपूर्णंजायतेनृप शुभकारिणिराजेंद्रस्वस्तिकानिविधापयेत् ब्राह्मणेभ्यःप्रदेयानिव्रतसंपूर्तिहेतवे यथावत्तुविधानेनगादि
तंपुण्यमुत्तमम् तथैवस्वस्तिपुण्यानामित्याहुर्वेदवादिनः अथहोमंप्रवक्ष्यामिलक्षस्वस्तिकसिद्धये पायसेनहुनेद्विद्वान्स्वसूत्रोक्तविधान
तः घृतपायसहोमःस्यात्तद्दशांशेनतर्पणं स्वस्त्ययनंतार्क्ष्यमरिष्टनेमीतिचमंत्रतः होमंमंत्रार्थविधिवत्कुर्वाणःसाधुसाधकाः आहिताग्ने
र्वैदिकैस्तुमंत्राःस्युर्होमसिद्धये मंत्राअनाहिताग्नेर्वैप्रोक्तास्तंत्रेविचक्षणैः तन्मंत्रंकथयिष्यामिफलानांतस्यसिद्धये स्वस्तिनामपरंदेवंस्व
स्तिकारणकारणं स्वस्तयेपायसंचाज्यंस्वाहाग्नयेचततपठेत् हुतंतुभ्यंमहादेवत्वंसोभवमहामते स्वस्तिकुरुमहादेवस्वाहयासंयुतःशिखिन्

एवंदशांशतोहोमंकुर्याद्विष्णोस्तुतुष्टये ब्राह्मणान्भोजयेत्पश्चात्तद्दशांशेनवैबुधः अथासनानिदेयानिपंचरंगयुतानिच ब्राह्मणेभ्योविशि
ष्टेभ्यस्तस्यवैफलसिद्धये और्णानिचापिदेयानिदर्भजान्यथवापुनः तत्पूजाविधिसिद्ध्यर्थमाचार्यंवरयेत्सुधीः त्वंविष्णोइतिमंत्रेणतमेवपू
जयेत्सुधीः पंचामृतैःस्नापयित्वापूजयेद्भक्तिसंयुतः धूपदीपैस्तथाभोज्यैर्नैवेद्यंपरिकल्पयेत् तांबूलंधूपदीपश्चकुसुमैश्चऋतूद्भवैः
शतपत्रैश्चकल्हारैरर्चयेत्परमेश्वरम् नमस्कारैस्तथादिव्यैस्तोत्रपाठैर्विशेषतः प्रदक्षिणांततःकृत्वावाग्यतःसंयतेंद्रियः ततोगोमि
थुनंदद्याद्व्रतसंपूर्तिहेतवे तदभावेत्वाढकानांद्रोणमात्रंप्रदीयते अथवान्याढकानांतुपाठकेपरिकीर्तनम् पूरिकामोदकाद्यैश्चभोजये
द्द्विजसत्तमान् आचार्यायतुतांशय्यांप्रतिमांदापयेत्सुधीः हस्तमात्राकर्णमात्राकटिसूच्यादिभिःपुनः पीतांबरैश्चसंपूज्यकोटियज्ञफ
लंलभेत् तस्मादादौप्रकर्तव्यंधर्मकामार्थसिद्धये राजानोभिरतायांतिशत्रवोयांतिदासताम् यएवंकुरुतेभक्त्याविष्णुभक्तिपुरःस
रः तस्यानंतफलंराजन्गदितंवेदपारगैः स्वस्तिकव्रतमेतत्तुगंगास्नानफलप्रदम् रोगानाभिभवंत्येवस्वस्तिकव्रतचारिणाम् स्त्रीभि
रेवंचकर्तव्यंसर्वसौभाग्यसिद्धये मासत्रयेसमाप्तिःस्याच्चतुर्भिर्वातथैवच एकस्मिन्नपिमासेनुसमाप्तिःकोटिपुण्यदा यइदंशृणु
याद्भक्त्यातस्यापिफलदंभवेत् नेदंकस्यापिव्याख्येयंयदीच्छेद्विपुलंधनम् नदेयंयस्यकस्यापिविकल्पोपहतात्मने भक्तिश्रद्धावि
हीनाययज्ञघातकरायच विकल्पहतचित्तायनास्तिकायशठायच नदेयंव्रतमेतत्तुस्वस्तिकारणमुत्तमं देयंपुत्रायशिष्यायफल्ग
नांतस्यसिद्धये एवंज्ञात्वातुतत्सर्वंचकारैवयुधिष्ठिरः इतिभविष्योत्तरपुराणेस्वस्तिकव्रतंसंपूर्णम् अथवारव्रतानिलिख्यं
ते तत्रादौरविवारव्रतंमदनरत्नेसौरधर्मे अथपूजा मासपक्षाद्युल्लिख्य ममसमस्तरोगनिरासार्थंआयुष्यादिसकल
कामनासिद्ध्यर्थंश्रीसूर्यनारायणप्रीत्यर्थंरविवारव्रतांगत्वेनपूजनमहंकरिष्ये गणपतिस्मरणपूर्वकंकलशादिपूजनमहंकरिष्ये
ताम्रपात्रेरक्तचंदनेनअष्टदलंकृत्वा तत्रदेवंपूजयेत् तेजोरूपंसहस्रांशुंसप्ताश्वरथवाहनम् द्विभुजंवरदंपद्मलांछनंसर्वकाम
दं ध्यानं आगच्छभगवन्सूर्यमंडलेचस्थिरोभव यावत्पूजासमाप्येततावत्त्वंसन्निधौभव आवाहनं हेमासनंमहादिव्यंनानारत्न

विभूषितम् दत्तंमेगृह्यतांदेवदिवाकरनमोस्तुते आसनंस० गंगाजलंसमानीतंपरमंपावनंमहत् पाद्यंगृहाणदेवेशधामरूपनमोस्तु
ते पाद्यंसम० भोभोसूर्यमहद्भूतब्रह्मविष्णुस्वरूपिणे अर्घ्यमंजलिनादत्तंगृहाणपरमेश्वर अर्घ्यंस० गंगादितीर्थजंतोयंजातीपुष्पैश्च
वासितम् ताम्रपात्रेस्थितंदिव्यंगृहाणाचमनीयकम् आचमनं० जान्हवीजलमत्यंतंपवित्रकरणंपरं स्नानार्थंचमयानीतंस्नानंकुरु
जगत्पते मलापकर्षस्ना० पयोदधिघृतैश्चैवशर्करामधुसंयुतैः कृतंमयाचस्नपनंप्रीयतांपरमेश्वरः पंचामृतस्नानं० गंगागोदावरीचै
वयमुनाचसरस्वती नर्मदासिंधुकावेरीताभ्यःस्नानार्थमाहृतम् स्नानं० आचमनं० रक्तपट्टयुगंदेवसूक्ष्मतंतुविनिर्मितम् शक्त्यैवम
यादत्तंगृहाणकमलाकर वस्त्रंस० नमःकमलहस्तायविश्वरूपायतेनमः उपवीतंमयादत्तंतद्गृहाणदिवाकरउपवीतं० कुंकुमागरुक
स्तूरीकगंधैश्चंदनादिभिः रक्तचंदनयुक्तंतुगंधंगृण्हप्रभाकर गंधं० जपाकदंबकुसुमरक्तोत्पलयुतानिच पुष्पाणिगृह्यतांदेवसर्वकामप्रदो
**भव पुष्पाणि**· रक्तचंदनसंमिश्राअक्षताश्चसुशोभनाः मयादत्तागृहाणत्वंवरदोभवभास्कर अक्षतान् आर्द्राक्षतान्प्रगृह्य· अंगपूजा·
ॐ मित्रायनमः पादौपू० रवयेनः जंघेपू० सूर्यायनः जानुनीपू० खगायनः ऊरूपू० पूष्णेनमः गुह्यंपू० हिरण्यगर्भाय० कटीपू० मरीचये·
नाभिंपू० आदित्याय० जठरंपू० सवित्रेन० हृदयंपू० अर्काय० स्तनौपू० भास्कराय० कंठं अर्यम्णेन० स्कंधौपू० भास्कराय· हस्तौपू० अह
स्कराय० मुखंपू० ब्रध्नेन० नासिकांपू० जगदेकचक्षुषेन० नेत्रे० सवित्रेनमः कर्णौपू० त्रिगुणात्मधारिणेन० ललाटंपू० विरिंचिनारायणाय०
शिरःपू० तिमिरनाशिनेन० सर्वांगंपू० दशांगगुग्गुलोद्भूतःकालागरुसमन्वितः आघ्रेयःसर्वदेवानांधूपोयंप्रतिगृह्यतां धूपं० कार्पासवर्तिका
युक्तंगोघृतेनसमन्वितम् दीपंगृहाणदेवेशत्रैलोक्यतिमिरापह दीपं० पायसंघृतसंयुक्तंनानापक्वान्नसंयुतं नैवेद्यंचमयादत्तंशांतिं
कुरुजगत्पते नैवेद्यंस० कर्पूरवासितंतोयंमंदाकिन्याःसमाहृतं आचम्यतांजगन्नाथमयादत्तंहिभक्तितः आचमनं· मलयाचलसंभूतंक
र्पूरेणसमन्वितम् करोद्वर्तनकंचारुगृह्यतांजगतःपते करोद्वर्तनं० इदंफलंमयादेवस्थापितंपरमेश्वर तेनमेसफलावाप्तिर्भवेज्जन्मनिज
न्मनि फलं· एलालवंगकर्पूरखदिरैश्चसपूगकैः नागवल्लीदलैर्युक्तंताम्बूलंप्रतिगृह्यताम् तांबूलं० दक्षिणाकांचनीदेवस्थापिताचत

वाग्रतः गृहाणस्कमुखोभूत्वाप्रभाकरनमोस्तुते दक्षिणां० पंचवर्तिसमायुक्तं सर्वमंगलदायकम् नीराजनंगृहाणेदं सर्वसौख्यकरो
भव नीराजनं० यानिकानिचपापानिजन्मांतरकृतानिच विनश्यंतितानीह प्रदक्षिणपदेपदे प्रदक्षिणाः नमः पंकजहस्तायनमः
पंकजमालिने नमः पंकजनेत्रायभास्करायनमोनमः नमस्कारः तंदुलैः पूरितंपात्रंहिरण्येनसमन्वितं रक्तवस्त्रयुगंचैवब्राह्मणा
यनिवेदयेत् वायनं यस्योदयेस्याज्जगतः प्रबोधोयः कर्मसाक्षीभुवनस्यगोप्ता कुष्ठादिकव्याधिविनाशकोयः सभास्करोमेदुरि
तंनिहन्यात् इतिप्रार्थयेत् अथकथा मांधातोवाच भगवन्ज्ञानिनांश्रेष्ठ कथयस्वप्रसादतः त्वद्वक्त्राच्छ्रोतुमिच्छामिव्रतंपा
पप्रणाशनम् सर्वकामप्रदंचैवसर्वामंगलनाशनम् पूजार्घ्यदानसहितंनैवेद्यप्राशनान्वितम् एतत्कथयसर्वस्त्वंप्रसन्नोसियदिद्वि
ज वसिष्ठउवाच शृणुराजन्प्रवक्ष्यामियदुर्ल्लभव्रतमुत्तमम् सर्वकामप्रदंपुंसांकुष्ठादिव्याधिनाशनम् भानोस्तुष्टिकरंराजन्भु-
क्तिमुक्तिप्रदायकम् यस्योदयेसुरगणामुनिसंघाः सचारणाः दैत्यादानवयक्षाश्चकुर्वंतिसततार्चनम् यस्योदयेतुसर्वेषांप्रबो
धोनृपसत्तम तस्यदेवस्यवक्ष्यामिव्रतराजंसविस्तरम् पूजार्घ्यप्राशनंदानंनैवेद्यंशृणुतत्वतः सर्वतीर्थेषुयत्पुण्यंसर्वतीर्थेषुय
त्फलम् सर्वदानेनतपसायत्पुण्यंसमवाप्यते प्रातःस्नानेनयत्पुण्यंतत्पुण्यंरविवासरे मार्गशीर्षादिमासेषुद्वादशस्वपिभूपते सू
र्यव्रतंकरिष्यामियावद्वर्षंदिवाकर व्रतंसंपूर्णतांयातुत्वत्प्रसादात्प्रभाकर नियममंत्रः ततः प्रातः समुत्थायनद्यादौविमलेजले
स्नात्वासंतर्पयेद्देवान्पितॄंश्चवसुधाधिप उपलिप्यशचौदेशेसूर्यंतत्रसमर्चयेत् विलिखेत्तत्रपद्मंतुरंगैर्द्वादशवर्णकैः ताम्र
पात्रेतथापद्मंरक्तचंदनवारिणा विलिखेत्सरयामन्त्रयासर्वसंतुष्टिकारकम् ततः संपूजयेद्देवंदिननाथंसुरेश्वरम् मांधातो
वाच द्वादशेषुचमासेषुकेकेदेवाः प्रकीर्तिताः कथंपूज्यास्त्वतेतेपितद्वदस्वममप्रभो वसिष्ठउवाच मासेमासेच
येराजन्विशेषास्तान्शृणुष्ववै मार्गशीर्षेयजेन्मित्रंनारिकेरार्घ्यमुत्तमम् नैवेद्येतंदुलादेयाः साज्याश्चगुडसंयुताः पत्र
त्रयंतुलस्यास्तुप्राश्यतिष्ठेज्जितेंद्रियः दद्याद्विप्रायभोज्यंतुदक्षिणासहितंनृप पौषेविष्णुंसमभ्यर्च्यनैवेद्यंकृसरंतथा-

बीजपूरेणनैवार्घ्यंघृतंप्राश्यपलत्रयम् दद्याद्धृतंतुविप्रायभोजनेनेनसमन्वितम् माघेब्रुरुणनामानंसंपूज्याज्यंतिलान्गुडं नैवे
द्येद्यर्घ्यमध्येतु दद्याद्वैबृहतीफलम् द्विजातयेचदद्याद्वैभोजनंचसदक्षिणम् मुष्टित्रयंतिलानांचप्राशयेन्नियतोव्रती फाल्गुने
सूर्यमभ्यर्च्य नैवेद्येसघृतंदधि अर्घ्यंजंबीरसहितंदधिप्राश्यपलत्रयम् दधितंडुलदानंचभोजनेसमुदाहृतम् चैत्रेभानुंचसंपूज्यनै
वेद्येघृतपूरिकाः दाडिमीफलमर्घ्येनप्राश्यदुग्धंपलत्रयम् विप्रायभोजनंदद्यान्मिष्टान्नंतुसदक्षिणम् वैशाखेतपनःप्रोक्तोमाषान्नेसंघृ
तंस्मृतं अर्घ्येदद्यात्तुद्राक्षाभिःप्राशनेगोमयंस्मृतम् कुर्यान्माषान्नदानंचसघृतंवैसदक्षिणम् ज्येष्ठेइंद्रंयजेद्राजन्नैवेद्येतुकरंभकम्
अर्घ्यंचसहकारेणप्राश्यांबुद्व्यंजलित्रयम् दध्योदनसमायुक्तंभोजनंब्राह्मणायच आषाढेरविमभ्यर्च्यनैवेद्येमधुनुत्तमम् विप्राय-
भोजनंदद्यात्प्राशयेन्मरिचत्रयम् गभस्तिंश्रावणेभ्यर्च्य नैवेद्येसक्तुपूरिकाः अर्घ्यदानेचाहिप्रोक्तंत्रपुसीफलमेवच मुष्टित्रयंचसक्तूनांप्रा
शनेसमुदाहृतम् विप्रायभोजनंदद्याद्दक्षिणासहितंनृप यमोभाद्रपदेपूज्योनैवेद्येसाज्यमोदनम् गोमूत्रप्राशनंप्रोक्तंब्राह्मणान्भोज
येत्तथा हिरण्यरेताआश्विनेचनैवेद्येशर्करास्मृता दाडिमेनार्घ्यदानंतुप्राश्यस्वंडंपलत्रयम् विप्रायपरयाभक्त्याभोजनंखंडपा
यसं दिवाकरःकार्त्तिकेचनैवेद्यंपायसंस्मृतम् रंभाफलेनार्घ्यदानंपायसंप्राशनेस्मृतम् पायसैर्भोजयेद्विप्रान्दद्यात्तांबूलदक्षिणे एवं
व्रतंसमाप्यैतत्ततउद्यापनंचरेत् ततोगुरुगृहंगत्वागृण्हीयाच्चरणांबुजे उद्यापनंकरिष्येहमागच्छममवेश्मनि माषकेणस्रुवर्णेनप्रति
मांकारयेद्रवेः पीठंरौप्यमयंकार्यंसर्वोपस्करसंयुतम् कृत्वाद्वादशपत्रंतुकमलंरक्ततंडुलैः स्थापयेदव्रणंकुंभंपंचरत्नसमन्वितम् तस्योप
रिन्यसेत्पात्रंताम्रंतंडुलपूरितम् रक्तवस्त्रसमाच्छन्नंपुष्पमालादिवेष्टितं पंचामृतेनस्नपनमग्न्युत्तारणपूर्वकं प्रतिष्ठांचततःकृत्वापू
जांदेवस्यकारयेत् चंदनैःकुसुमैरन्यैर्विविधैःकालसंभवैः अखंडपट्टवस्त्रैश्चकमंडलुसुपानहौ वर्द्धनान्वितयंतत्रस्थापयेद्देवसन्नि
धौ संज्ञायावस्त्रयुग्मंचकौसुंभंतुमहीपते प्रतिपात्रेषुसंपूज्यः सूर्योद्वादशनामभिः मित्रोविष्णुवरुणोसूर्योभानुर्वैतपनस्तथा इंद्रोर
विर्गभस्तिश्चशमनश्चतथास्मृतः हिरण्यरेतादिनकृत्पूज्याएतेप्रयत्नतः मध्येसहस्रकिरणःसंपूज्यःसंज्ञयासह पूगीफलैर्धूपदीपैर्नै

वेद्यैर्वस्त्रसंयुतैः नारिकेरेणचैवार्घ्यंदद्याद्देवायभक्तितः मंत्रेणानेनराजेंद्र व्रतस्यपरिपूर्तये नमः सहस्रकिरणसर्वव्याधिविनाशन गृ
हाणार्घ्यंमयादत्तंसंज्ञयासहितोरवे आरार्तिकंततःकुर्यान्नमस्कारप्रदक्षिणाः पुष्पांजलिंततोदद्यात्संकल्पंकारयेत्ततः ब्राह्मणान्
भोजयेद्भक्त्यामिष्टान्नैर्द्वादशप्रभो दंपत्योर्भोजनंदेयंपरमान्नसमन्वितम् ततस्तुदक्षिणादेयासमभ्यर्च्यस्रगादिभिः उपहारा
दितत्सर्वंगुरवेप्रतिपादयेत् गुरुंतथैवसंतोष्यब्राह्मणांश्चविसर्जयेत् मंत्रहीनंक्रियाहीनंभक्तिहीनंतुयत्कृतम् तत्सर्वंपूर्णतांयातु-
भूमिदेवप्रसादतः अनुव्रज्यगुरून्विप्रान्भोजनंतुसमाचरेत् गृहैश्चबंधुभिःसार्द्धंनत्वादेवंदिवाकरं एवंयःकुरुतेमर्त्योवित्तशाठ्य
विवर्जितः सूर्यव्रतंमहाराजतस्यपुण्यफलंशृणु ब्राह्मणोलभतेविद्यांक्षत्रियोराज्यमाप्नुयात् वैश्यःसमृद्धिंविपुलांशूद्रःसुखमवाप्नुयात्
अपुत्रोलभतेपुत्रंकुमारीलभतेपतिम् रोगार्तोमुच्यतेरोगाद्बद्धोमुच्येतबंधनात् यंयंचिंतयतेकामंतंतंप्राप्नोतिवैध्रुवम् यइदंशृणुयाद्भ
क्त्याह्येकचित्तेनवैनृप सर्वकामानवाप्नोतिप्रसादाद्भास्करस्यवै इतिभविष्यो॰ रविवारकथासमाप्ता अथआश्विनादिरविवारे
षुआशादित्यव्रतम् मासपक्षाद्युल्लिख्य ममसमस्तरोगनिरासार्थंआयुष्यादिसकलकामनासिद्ध्यर्थंद्वादशवर्षपर्यंतंएकवर्षपर्यंतं
वाश्रीसूर्यनारायणप्रीत्यर्थंआशादित्यव्रतंकरिष्ये इतिसंकल्प्य कलशाराधनंआसनबंधादिकृत्वासूर्यंपूजयेत् ताम्रेणकारये
त्पीठंरथंरौप्यमयंतथा भास्करंपूजयेत्तत्रस्वर्णेनतुकारितम् नारदउवाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतं सर्वरो
गप्रशमनमाशादित्यव्रतंशुभम् स्कंदउवाच शृणुनारदगुह्यंतदादित्याराधनंपरम् यत्कृत्वासर्वकामानांसकलंफलमाप्नुयात्
समुद्रतीरेविप्रेंद्रपुरीद्वारवतीशुभा वासुदेवेयदुश्रेष्ठेपुण्येराज्यंप्रशासति दुर्वासाअगमत्तत्रकृष्णदर्शनलालसः कृष्णेनपूजि
तःसोपिस्वर्घ्यपाद्यासनादिभिः भोजनंतस्यवैदत्तंयथाविभवसारतः संपूजितःसकृष्णेनयावद्गच्छत्यसौमुनिः सांबेनहसितस्तत्रसु
तेनसहसाकिल क्रुद्धोपिमुनिशार्दूलःकोपंसंहृतवान्स्वयम् पूजितेनमयेदानीमन्यत्कर्तुंकथंक्षमं सगत्वानारदंप्राहसांबेनहसि-
तोस्मिभो सभांसंचरतःकार्यंतस्यशिक्षापनंत्वया इत्युक्तोनारदःप्रायाद्द्वारकांकृष्णसन्निधौ स्वकंसैन्यंदर्शयस्वममदेवकिनंदन

देवयात्राभिषंकृत्वा हस्त्यश्वरथसंकुलम् नारदेनैवमुक्तस्तु तथैवकृतवान्विभुः दर्शितेत्तुबलेप्राह नारदसांबःप्रहृश्यतेमयैवानी
यतेशीघ्रंद्वारवत्यास्तवांतिकम् गत्वैवमुक्तोमुनिनाथेष्ठोजांबवतीसुतः सश्रृंगारस्तथानीतोमकरध्वजदर्शनः गत्वालिंग्यचुचुंबस्तं
गोप्यःकृष्णपरिग्रहाः नारदःप्राहभगवन्दुश्चरित्रंतथानघ क्रुद्धेनशौरिणाप्रोक्तः कुष्ठीभवनराधम एवमुक्तस्तथापुत्रःकुष्ठरोगातु
रोभवत् सांबःप्रणम्याहपितःकिमर्थंशापितस्त्वया स्वशान्तिज्ञानदृष्ट्यातुविचार्यैर्यविनिश्चितम् ध्यानाद्दुर्वाससोज्ञात्वाविक्रियाह्यत्र
कारणं अनुग्रहोमयापुत्रकार्यस्तेस्वस्त्ययेशतो आदित्यस्यव्रतंचैवकुरुकुष्ठविनाशनं सांबउवाच कथंतातमयाकार्यंव्रतंसर्वफलप्रदं
किंविधानंतुकेमंत्राःकिंदानंकस्यपूजनम् कृष्णउवाच मासमाश्वयुजंप्राप्ययदारविदिनंभवेत् तदाव्रतमिदंग्राह्यंनरैःस्त्रीभिर्विशेषतः
यावत्संवत्सरंतावद्विधिनानेनपुत्रकगोमयेनाक्षितौकुर्यान्मंडलवर्तुलंपुनः रक्तचंदनपुष्पैश्चयुक्तंतत्रसहाक्षतं मंत्रेणानेनसौवित्वमर्घ्यंदे
हिरविंप्रति यथाशाविमलाःसर्वाःसूर्यभास्वरभानुभिः तथाशासफलामस्तुकुरुनित्यंममार्घ्यतः अर्घ्यमंत्रः एवंतमर्चयेत्तावद्यावद्व
र्षंसमाप्यते समाप्तेतुव्रतेवत्सकुर्यादुद्यापनंशुभम् गोमयेनानुलिप्तायांभूमौमंडलमालिखेत् रक्तचंदनरेखाभिःकुंकुमेनवि-
शेषतः तन्मध्येकारयेत्पद्मंद्वादशारंसकर्णिकं सिंदूरपूरितदलंजपाकुसुमशोभितम् तन्मध्येस्थापयेत्कुंभंप्रवालांकुरसंयुतं शाली
तंदुलसंपूर्णंशर्कराचंदनान्वितम् तस्योपरिन्यसेत्पात्रंताम्रंशक्त्याविनिर्मितम् सौवर्णंभास्करंकृत्वापद्महस्तंस्वशक्तितः रक्तवस्त्रयु
गोपेतंपात्रोपरिनिवेशयेत् पंचामृतेनस्नपनंरक्तपुष्पैश्चपूजयेत् धूपदीपैश्चनैवेद्यैः फलैःकालोद्भवैस्तथा पूजयेज्जगतामीशंयथा-
विभवसारतः अथांगपूजा ॐ सूर्यायनमःपादौपूजयामि अरुणाय॰ जंघेपू॰ माधवाय॰ जानुनीपू॰ धात्रे॰ ऊरूपू॰ हरये॰ कटीपू॰
भर्गाय॰ गुह्यंपू॰ सुवर्णरेतसे॰ नाभिंपू॰ अत्रये॰ जठरंपू॰ दिवाकराय॰ हृदयं॰ तपनाय॰ कंठंपू॰ भानवे॰ स्कंधौपू॰ हंसाय॰ हस्तौपू॰ मित्रा
य॰ मुखं॰ रवये॰ नासिकांपू॰ खगाय॰ नेत्रेपू॰ पूष्णे॰ कर्णौपू॰ हिरण्यगर्भाय॰ ललाटंपू॰ आदित्याय॰ शिरःपू॰ भास्कराय॰ सर्वांगंपू॰
नमोनमःपापविनाशनायविश्वात्मनेसप्ततुरंगमाय सामर्ग्यजुर्धामनिधेविधातर्भवाब्धिपोतायनमःसवित्रे इतिप्रार्थना एवंसंपूजये

द्वात्रुं नक्तंभुंजीत वाग्यतः आचार्यं पूजयित्वा तु वस्त्रैराभरणैः शुभैः तस्मै नां प्रतिमां कुंभं सहिरण्यं च दापयेत् प्रीयतां भगवान्देवो मम
संसारतारकः ब्राह्मणान्भोजयेत्पश्चादपूपैः पायसैः सह तेभ्यस्तु कलशान्दद्याद्यथाशक्त्या तु दक्षिणां एवं यः कुरुते सम्यग्व्रतमेतदनु-
त्तमं आशादित्यमिति ख्यातं तस्य पुण्यफलं महत् निर्व्याधिश्च सतेजस्वी पुत्रपौत्रसमन्वितः भुक्त्वा च भोगान्विपुलानमरैरपि दुर्ल
भान् देहांते रविसायुज्यं प्राप्नुयादुत्तमोत्तमं प्राप्स्यते परमामृद्धिं विमुक्तः कुष्ठरोगतः आशाभंगो न तस्य स्यात्कदाचिदपि जन्मनि एत
स्मात्कारणाद्वत्स कुरुष्व व्रतमुत्तमम् एतच्छ्रुत्वा वचः सांबः पित्रा कृष्णेन भाषितम् व्रतं चीर्त्वा स संप्राप्तः सर्वसिद्धिं सुदुर्लभां य इदं शृणुया
द्भक्त्या श्रावयेद्वापि मानवः तावुभौ पुण्यकर्माणौ रविलोकमवाप्नुतः इति श्रीस्कंदपुराणे आशादित्यव्रतं संपूर्णम् अथ आश्विनशुक्ला
दि भानुवासरमारभ्य माघशुक्लसप्तम्यावधि दानफलव्रतं तत्र पूजा ध्येयः सदा सवितृमंडलमध्यवर्त्ती नारायणः सरसिजासनसन्नि
विष्टः केयूरवान्मकरकुंडलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः इति ध्यानं जगन्नाथाय० आवाहनं० पद्मासनाय० आ
सनं० गृहपतये० पाद्यं० तमोहर्त्रे० अर्घ्यं मित्राय० आचमनीयं० विश्वतेजसे० पंचामृतं० सवित्रे० शुद्धोदकं० जगत्पतये० वस्त्रं० त्रिमूर्त
ये० यज्ञोपवीतं० हरये० गंधं० सूर्याय० अक्षता० भास्कराय० पुष्पं० अहस्पतये० धूपं० अज्ञाननाशिने० दीपं० लोकेशाय० नैवेद्यं० रवये०
तांबूलं० भानवे० दक्षिणां० पूष्णे० फलं० खगाय० नीराजनं० भास्कराय० पुष्पांजलिं० सर्वात्मने० प्रदक्षिणां० नमस्ते पद्महस्ताय नमस्ते
वेदमूर्तये नमस्ते देवदेवेश नमस्ते सर्वकामद नमस्कारः दिवाकर नमस्तुभ्यं पापनाशय भास्कर त्रयीमयाय विश्वात्मन् गृहाणार्घ्यं
नमोऽस्तु ते अनेन द्वादशार्घ्याणि दद्यात् ततः ब्राह्मणपूजनं इति पूजा अथ कथा पितृगृहे वर्तमाना कुंती व्यासं ददर्श ह नमस्कृत्वा तु तं भक्त्या
पाद्यार्घ्याचमनीयकम् दत्वा संपूज्य तं व्यासं कुंती मुकुलितांजलिः पतिपुत्रान्नमोक्षार्थं व्रतं ब्रूहि महामुने व्यास उवाच शृणु दानफलं
नाम वच्मि सर्वव्रतोत्तमम् कैलासशिखरे रम्ये पार्वती परमेश्वरम् व्रतानां सर्वदानानां पृष्टं ब्रूहि तत्त्वतः शंकर उवाच साधु पृष्टं त्व
या देवि त्वद्वक्ष्यते सर्वतः शुभम् भूमौ तु भारते वर्षे पुण्ये च यमुनातटे ऋषिपत्नी समृद्ध्यर्थं व्रतं कर्तुं समागताः तत्र गत्वा देवि शृणु प्रवदिष्यं

तितः शुभं शंभोरनुज्ञयादेवीकैलासादागताशुभावि· यमुनांगंतुकामासा ददर्शकुसुमावतीं कांचिन्मार्गेतिदुःखेन क्लिश्यंतींचविप्रकां
विदेहवासिनींदीनांपतिभ्रष्टांसुदुःखिताम् कुसुमावतींतदादेवीत्युवाचमधुरंवचः आगच्छत्वंमयासार्द्धंकरिष्यावःशुभव्रतं पश्चाच
सहसंयोगः पुत्रप्राप्तिर्भविष्यति धनप्राप्तिश्चबहुलाकृतेदानफलव्रते तयासद्व्रतंह्येतत्कर्तुमासाशुभान्विस्मिता तथैवचपतिभ्रष्टापुत्र-
हीनास्मिदुःखिता इत्यन्यास्त्ववदद्देवींमयासहव्रतंकुरु तच्छ्रुत्वातांगृहीत्वानुताभ्यांसार्द्धंजगामह पुण्यांचयमुनांगत्वापूर्वाह्णेभानुवासरे त
त्रहस्त्वातुसादेवीपप्रच्छस्त्रीकदंबकम् इदंव्रतंकिमेतन्मेंवक्तव्यंतुऋषिस्त्रियः स्त्रियऊचुः पुण्यंव्रतमिदंदेविसौरंपापप्रणाशनम् सर्व
संपत्करंस्त्रीणांपतिपुत्रान्नमोक्षदम् धर्मार्थकाममोक्षादान्ददातीदंव्रतंनृणाम् कन्यादानसहस्राणांगोदानानांत्रिलक्षकम् भूहिरण्य
तिलादीनांसर्वेषामधिकंशिवम् सर्वदानस्यफलदंतस्माद्दानफलव्रतम् तच्छ्रुत्वापार्वतीप्राहकरिष्यामोवयंव्रतम् स्त्रियऊचुः प
द्मासनःपद्मकरः पद्मगर्भसमद्युतिः सप्ताश्वरथसंयुक्तोद्विभुजश्चसदारविः ध्येयःसदासवितृमंडल० चक्रः एवंध्यात्वाद्विजःसम्य
क्भास्करंदेवरूपिणम् आवाहयेज्जगन्नाथंभास्करंवेदरूपिणम् नमःपद्मासनायेतिदद्यादासनमुत्तमम् पाद्यंगृहपतेतुभ्यंमित्रा
याचमनंतथा त्रैलोक्यांधतमोहर्त्रेअर्घ्यंदद्यात्प्रयत्नतः पंचामृतविधानेनस्नापयेद्विश्वतेजसम् शुद्धोदकंचदद्याद्वैसर्वितेचहिपार्वति
जगत्पतिंतुवस्त्रंचस्फुपवीतंत्रिमूर्तये रक्तगंधंतुहरयेदद्यात्सूर्यायचाक्षतान् दद्यात्पुष्पंभास्करायकरवीरादिकंशुभं अहस्पतिंतुवैधू
पंदीपमज्ञाननाशिने लोकेशायचनैवेद्यंतांबूलंरवयेतथा दक्षिणांभानवेदद्यात्तंचार्तिक्यंगनगायन पलंनपूर्णोदद्यात्सर्वकाम!
र्थसिद्धये पुष्पांजलिंभास्करायदद्याद्वैपरयामुदा सर्वान्मनेंचदद्याद्वैप्रदक्षिणाःपुनःपुनः नमस्तेदेवदेवेशनमस्तेवेदमूर्तये नमःकम
लहस्तायआदित्यायनमोनमः नमस्कुर्यादनेनैवप्रार्थयेद्विश्वतेजसम् रक्तगंधाक्षतैस्ताम्रपात्रेणार्घ्यंसमंत्रकम् दद्यादनेनमंत्रेणव्रत
संपूर्तिहेतवे दिवाकरनमस्तुभ्यंपापंनाशयभास्कर त्रयीमयार्कविश्वात्मन्गृहाणार्घ्यंनमोस्तुते एवंद्वादशवारंचव्रतीदद्यात्समंत्रकम्
तैलाम्ललवणक्षारंवर्जयित्वातुभोजने बहुबीजफलंवर्ज्यंशेषंचैवतुभोजयेत् कंदमूलफलाहारोविशेषेणफलप्रदः नीवारधान्यदध्यादि

विशेषःसद्रसःस्मृतः एवंकुर्याद्व्रतंसम्यक्प्रत्येकेभानुवासरे माघमासेशुक्लपक्षेसप्तम्यायावदंतिकं षष्ठ्यामुपोष्यविधिवत्सप्तम्या
मुदयेरवेः रवेरभ्यर्च्यविधिवत्प्रतिमांवस्त्रसंयुताम् आचार्येणाग्निमादायगोमयेनोपलिप्यच सघृतंपरमान्नंचहोमयेत्सौरमंत्रतः पा
यसंप्रतिमांवस्त्रंब्राह्मणायनिवेदयेत् एवंकुर्यात्संचवर्षंपंचधान्यंसमर्पयेत् पंचप्रस्थप्रमाणंचप्रथमेव्रीहिमेवच गोधूमांश्चद्वितीयेच्च
तृतीयेचणकास्तथा चतुर्थेतिलदानंचपंचमेमाषमेवच सफलांदक्षिणांदद्याद्विप्रान्द्वादशभोजयेत् एवंकुर्याद्व्रतंसम्यक्संपूर्णफलमाप्नु
यात् तच्छ्रुत्वातागृहीत्वाथचक्रिरेव्रतमुत्तमं पद्मावतीपतिंप्राप्यदमयंतीयथानलम् सुमित्राप्राप्यपुत्रंचमानयंतीसुमांबहु.सर्वभाग्ययुता
गौरीस्वर्णमाधूफलंतथा तद्गृहीत्वागतामार्गेददर्शब्राह्मणोत्तमं विप्रायतत्फलंदत्वाततः शिवपुरंययौ ततःसफलविप्रश्चगृहंगत्वासविस्मयः
धनधान्यसमृद्धस्तुबहुगोधनसंकुलः सर्वरत्नमयोभूत्वाभार्यावचनमब्रवीत् सर्वसंपत्प्रदंचाद्यकिंकृतंहित्वयाशुभम् साब्रवीद्भगवन्स्वा
मिन्भवद्भिःफलमाहृतम् स्वर्णमाधूफलंतच्चकेनदत्तंवदप्रभो महादेव्याफलंदत्तंपार्वत्याकृपयामम इतितस्यवचःश्रुत्वाभार्यावचनमब्र
वीत् गंतव्यमाशुकैलासंमयासार्द्धंत्वयाप्रभो ततःशिवपुरंप्राप्तोभार्ययासंयुतोद्विजः नमस्कृत्ययथाभक्त्यापप्रच्छेवंशिवांद्विजः तत्फलं
कथ्यतांदेविकथंप्राप्यंत्वयाशुभं ततोदेव्याचतत्सर्वंकथितंफलदायकम् तदागत्यकृतंसर्वंतूर्णंदानफलव्रतम् कुंतित्वयापिकर्तव्यमि
दंदानफलव्रतम् यःपठेदिदमाख्यानंशृणोतिश्रद्धयान्वितः तेसर्वेपापनिर्मुक्तायास्यंतिपरमांगतिं इतिश्रीस्कंदपुराणे॰ दानफलव्रतंसं
पूर्णम् अथसोमवारपूजाविधिः येभ्योमातेतिजपित्वा आगमार्थंतु॰ घंटानादंकृत्वा अपसर्पंत्विति छोटिकामुद्रां॰ तीक्ष्णदंष्ट्रेतिक्षे
त्रपालंसंप्रार्थ्य आचम्यप्राणानायम्यतिथ्यादिसंकीर्त्य ममसकुटुंबस्यक्षेमस्थैर्यविजयायुरारोग्यैश्वर्याभिवृद्ध्यर्थंउमामहेश्वर
प्रीत्यर्थंचतुर्दशवर्षपर्यंतंसोमवारव्रतंकरिष्ये तदंगत्वेनषोडशोपचारैःउमामहेश्वरपूजनंकरिष्ये ध्यायेन्नित्यंमहेशंरजतगिरिनि
भंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यं
विश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् ध्यानं॰ ॐनमःशिवायेतिषोडशोपचारैःपूजयेत् अथकथा सूतउवाच नित्यानंदमयंशांतं

निर्विकल्पंनिरामयं शिवतत्त्वमनाद्यंतंयेविदुस्तेपरंगताः विरक्ताःकामभोगेभ्योयेचकुर्वंत्यहैतुकीम् भक्तिंपरांशिवेधीरास्तेषांमुक्तिर्नसंश
यः विषयानभिसंधाययेकुर्वंतिशिवेरतिं विषयैर्नाभिभूयंतेभुंजानास्तत्फलानपि येनकेनापिभावेनशिवभक्तियुतोनरः नविनश्यतिया
त्येवकालेनापिपरांगतिम् आरुरुक्षुःपरंस्थानंविषयांस्त्यक्तुमक्षमः पूजयेत्कर्मणाशंभुंभोगांतेशिवमाप्नुयात् अशक्ताःकेचिदुत्स्रष्टुं
प्रायोविषयवासनाम् अतःकर्ममयात्पूजाकामधेनुःशरीरिणां मायामयेपिसंसारेयेविहृत्यचिरंसुखं मुक्तिमिच्छंतिदेहांतेतेषांधर्मो
यमीरितः शिवपूजासदालोकेहेतुःस्वर्गापवर्गयोः सोमवारेविशेषेणप्रदोषादिगुणान्विते श्रावणेचैत्रवैशाखेऊर्जेवामार्गशीर्षके प्र
थमेसोमवारेतद्गृह्णीयाद्व्रतमुत्तमं केवलंचापियेकुर्युःसोमवारेशिवार्चनं नतेषांविद्यतेकिंचिदिहामुत्रचदुर्लभं उपोषितःशुचिर्भूत्वा
सोमवारेजितेंद्रियः वैदिकैर्लौकिकैर्मंत्रैर्विधिवत्पूजयेच्छिवं ब्रह्मचारीगृहस्थोवाकन्यावापिसभर्तृका विधवावापिसंपूज्यलभतेवरमी
प्सितम् अत्रापिकथयिष्यामिकथांश्रोतृमनोहरां श्रुत्वामुक्तिंप्रयात्येवभक्तिर्भवतिशांभवी श्रुत्वाकृतधियःशंभोर्भक्तिंकुर्वंतिसर्वदा
आर्यावर्तेनृपःकश्चिदासीद्धर्मभृतांवरः चित्रधर्मेतिविख्यातोधर्मराजोदुरात्मनां सगोप्ताधर्मसेतूनांशास्तादुष्पथगामिनां यष्टासम
स्तयज्ञानांत्राताशरणमिच्छतां कर्तासकलपुण्यानांदातासकलसंपदां जेतासपत्नवृंदानांभक्तःशिवमुकुंदयोः सोनुकूलासुपत्नी-
षुपुत्रमेकंनलब्धवान् चिरेणप्रार्थितोलेभेकन्यामेकांवराननां सलब्ध्वाननयांदिष्ट्याहिमवानिवपार्वतीं आत्मानंदेवसदृशंसंपूर्णं
चमनोरथम् सएकदाजातकलक्षणज्ञानाहूयसर्वान्द्विजवृंदमुख्यान् कौतूहलेनाभिनिविष्टचेताःपप्रच्छकन्याजननेफलानि अथत
त्रब्रवीदेकोबहुज्ञोद्विजसत्तमः एषासीमंतिनीनाम्नाकन्यातवमहीपते उमेवमांगल्यवतीदमयंतीवरूपिणी भारतीकपिलाभि
ज्ञालक्ष्मीरिवमहागुणा सुप्रजादेवमातेवजानकीवधृतव्रता रविप्रभेवसत्कांतिश्चांद्रीवमनोरमा दशवर्षसहस्राणिसहभर्त्राप्रमोदते
प्रसूयतनयानष्टौपरंसुखमवाप्स्यति इत्युक्तवंतंनृपतिर्धनैःसंपूज्यतंद्विजम् अवापपरमांप्रीतिंतद्वागमृतसेवया अथान्योपिद्विजः
प्राहधैर्यवानविशंकितः एषाचतुर्दशेवर्षेवैधव्यंप्रतिपत्स्यति इत्याकर्ण्यवचस्तस्यवज्रनिर्घाततिष्ठुरम् मुहूर्तमभवद्राजाचिं-

व्याकुलमानसः अथ सर्वान्समुत्सृज्य ब्राह्मणान्ब्रह्मवत्सलः सर्वं देवकृतं मत्वा निश्चिंतः प्रार्थितोऽभवत् सापि सीमंतिनी बालाक्र
मेणगतशैशवा वैधव्यमात्मनो भावि स्मृत्वा वाल्मसखीमुखात् परं निर्वेदमापन्ना चिंतयामास बालिका याज्ञवल्क्यमुनेः पत्नीं मैत्रेयीं पर्यपृच्छत
मातस्त्वच्चरणांभोजं प्रपन्नास्मि भयाकुला सौभाग्यवर्द्धनकरं मम शंसितुमर्हसि इति प्रपन्नां नृपतेः कन्यां प्राह मुनेः सती शरणं व्रज तन्वंगि
पार्वतीं शिवसंयुतां सोमवारे शिवं गौरीं पूजयस्व समाहिता उपोषिता च सुस्नाता विरजांबरधारिणी मितवाक् निश्चलमतिः पूजां कृत्वा यथो-
चितां अब्दमेकं व्रतं कुर्यात्ततो द्यापनमाचरेत् उमया सहितं रुद्रं सुवर्णेन च कारयेत् रौप्येण वृषभं कृत्वा कलशोपरि विन्यसेत् तस्याग्रे लिंग
तोभद्रं ब्रह्माद्यास्थापनं तथा स्वशाखोक्तेन विधिना हुनेद्धृततिलोदनं पृथक् शिवशिवामंत्रैरष्टोत्तरशतद्वयं कुर्यादुद्यापनं तस्य समाप्तौ यदुदी
रितम् उद्यापनं विना यत्तु न द्वतं निष्फलं भवेत् ब्राह्मणान्भोजयित्वाथ शिवं सम्यक् प्रदापय पापक्षयोऽभिषेकेण साम्राज्यं पीठपूजनात्
गंधदानाच्च सौभाग्यमायुरक्षतदानतः धूपदानेन सौगंध्यं कांतिर्दीपप्रदानतः नैवेद्येन महाभोगो लक्ष्मीस्तांबूलदानतः धर्मार्थकाममोक्षाश्च न
मस्कारप्रसादतः अष्टैश्वर्यादिसिद्धीनां जप एव हि कारणं होमेन सर्वसौख्यानां समृद्धिरुपजायते सर्वेषामेव देवानां तुष्टिः संयमिभोजनात् इ
त्थमाराधय शिवं सोमवारे शिवामपि अत्यापदमपि प्राप्ता निस्तीर्य संकटागमान् घोरात् घोरं विपन्नापि महाक्लेशभयानकं शिवपूजाप्रभावेन
तरिष्यसि महद्भयात् इत्थं सीमंतिनीं सम्यक् अनुशास्य मुनेः सती ययौ सापि वरारोहा राजपुत्री तथाकरोत् दमयंत्यां नलस्य प्रसोदिंद्रसेनाह्व
यः सुतः तस्य चंद्रांगदो नाम पुत्रोऽभूच्चंद्रसन्निभः चित्रवर्मा नृपश्रेष्ठः समाहूय नृपात्मजं कन्यां सीमंतिनीं तस्मै प्रायच्छद्दैवनुज्ञया अभून्महो
त्सवस्तत्र तस्या उद्वाहकर्मणि यत्र सर्वमहीशानां समुदायो महानभूत् तस्याः पाणिग्रहं काले कृत्वा चंद्रांगदः कृती उवास कांतिचिन्मासानेन
त्रैव श्वशुरालये एकदा यमुनां तर्तुं स राजतनयो बली ममज्ज सहकैवर्तैरावर्ताभिहनान्तरी हाहेति शब्दः सुमहानासीत्तस्यास्तटद्वये पश्य
तां सर्वसैन्यानां प्रलापो दिवमस्पृशत् तच्च सीमंतिनी श्रुत्वा पपात भुवि मूर्च्छिता इंद्रसेनोऽपि राजेंद्रः पुत्रवार्तां सुदुःसहां आबालवृद्धवनिताश्च
क्रुशुः शोकविह्वलाः सा च सीमंतिनी साध्वी भर्तृलोकमियासती पित्रा निषिद्धा स्नेहेन वैधव्यं प्रतिपद्यत मुनिपत्न्योपदिष्टं यत्सोमवारव्रतं शुभं

नतन्याजशश्भाचारावैधव्यंप्राप्नवत्यपि एवंचतुर्दशेवर्षेदुःखंप्राप्यसुदारुणम् ध्यायंत्याःशिवपादाब्जंवत्सरत्रयमत्यगात् चंद्रांगदोपिन
द्द्रतोनिमग्नोयमुनाजले अधोधोमज्जमानोसोददर्शोरगकामिनीः जलक्रीडानुसक्तास्ताहृष्ट्वाराजकुमारकम् विस्मितास्तमधोनिन्युःपाता
लंपन्नगालयं सनीयमानस्तरसापन्नगीभिर्नृपात्मजः तक्षकस्यपुरंरम्यंविवेशपरमाद्भुतं सोपश्यद्राजतनयोमहेंद्रभवनोपमं नागकन्यास
हस्रेणसमंतात्परिवारितं दृष्ट्वाराजसुतोधीरःप्रणिपत्यसभास्थले उत्थितःप्रांजलिस्तस्थौतेजसाक्षिप्तलोचनः नागराजोपितंदृष्ट्वाराजपुत्रंम
नोरमं अथपृष्टोराजपुत्रस्तक्षकेनमहात्मना कस्यासीत्तनयःकस्त्वंकोदेशःकथमागतः राजपुत्रउवाच अस्तिभूमंडलेकश्चिद्देशोनिष-
धसंज्ञकः तस्याधिपोभवद्राजानलोनाममहायशाः सपुण्यकीर्तिःक्षितिपोदमयंत्याःपतिःप्रभुः तस्यासीदिंद्रसेनाख्योपुत्रस्तस्यमहात्मनः चं
द्रांगदोस्मिनाम्नाहं नवोढःश्वशुरालये विहरन्यमुनातोयेनिमग्नोदैवचोदितः एताभिःपन्नगस्त्रीभिरानीतोस्मितवांतिकं दृष्ट्वाहंतवपादा
ब्जंपुण्यैर्जन्मांतरार्जितैः अथधन्योस्मिधन्योस्मिकृतार्थौपितरौमम तक्षकउवाच भोभोनरेंद्रदायादमाभैषीर्धीरतांव्रज सर्वदेवेषुकोदेवो
युष्माभिःपूज्यतेसदा राजपुत्रउवाच योदेवःसर्वदेवेषुमहादेवइतिस्मृतः पूज्यतेसहिविश्वात्माशिवोस्माभिरुमापतिः इत्याकर्ण्यवच
स्तस्यतक्षकःप्रीतमानसः जातभक्तिर्महादेवेराजपुत्रमभाषत तक्षकउवाच परितुष्टोस्मिभद्रंतेनवराजेंद्रनंदन दत्तवान्बहुरत्ना
निदिव्यान्याभरणानिच वाहनायददावेकंराक्षसंपन्नगेश्वरः तत्सहायार्थमेकंचपन्नगेंद्रःकुमारकं नियुज्यतक्षकःप्रीत्यागच्छेतिविससर्ज
तं इतिचंद्रांगदःसर्वंसंगृह्यविविधंधनं अश्वंकामगमारुह्यताभ्यांसहविनिर्ययौ ततोमुहूर्तेनोन्मज्ज्यतस्यादेवनदीजलात् विजहारतटेरम्ये
दिव्यमारुह्यवाजिनं अथास्मिन्समयेतन्वीसाचसीमंतिनीसती स्नातुंसमाययौतत्रसखीभिःपरिवारिता साददर्शनदीतीरेविहरंतंनृपात्म
जं रक्षसानररूपेणनागरूपेणचान्वितं दृष्ट्वावरूह्यतुरगादुपविष्टःसरित्तटे चंद्रांगदोवरारोहामुपवेश्येदमब्रवीत् कात्वंकस्यकलत्रंवाक
स्यासीत्तनयासती किमीदृशांगताबाल्येदुःसहंशोकलक्षणं इतिस्नेहेनसंपृष्टासावधूरश्रुलोचना लज्जितास्वयमाख्यातुंतत्सखीस
र्वमब्रवीत् इयंसीमंतिनीनाम्नास्नुषामगधभूपतेः चंद्रांगदस्यमहिषीतनयाचित्रवर्मणः अस्याःपतिर्दैवयोगान्निमग्नोस्मिन्महाज

ले तेनेयंप्राप्तवैधव्याबाल्यादुःखेनपीडिता एवंवर्षत्रयंनीतंशोकेनापिबलीयसा आद्येंदुवासरेप्राप्तेस्नातुमत्रसमागता श्रुत्वाचंद्रांगदःस
र्वंप्रियायाःशोककारणम् अथाश्वास्यप्रियांतन्वींविविधैर्वचनैर्नृपः क्वापिलोकेमयादृष्टस्तवभर्तावरानने त्वद्गताचरणाच्छांतःसद्यएवाग
मिष्यति नाशयिष्यतितेशोकंद्वित्रैरेवध्रुवंदिनैः एतच्छंसितुमायातस्तवभर्तुःसखास्म्यहम् अत्रकार्योनसंदेहः शपामिशिवपादयोः नाव
त्वयाहृदिस्थाप्यंप्रकाशयंनचकुत्रचित् लज्जानम्रमुखीकर्णेशशंसान्यत्प्रयोजनं इमंवृत्तांतमाख्यातंत्वत्पित्रोःशोकतप्तयोः इत्युक्त्वाश्वंस
मारुह्यजगामस्वतलंप्रति सापितद्वचनंश्रुत्वासुधाधाराशताधिकं एषएवपतिर्मेस्यात्ध्रुवंनान्योभविष्यति परलोकादिहायातःकथमेषःस्व
रूपधृक् मुनिपत्न्यायदुक्तंमेपरमापदुतापिच व्रतमेतत्कुरुष्वेतिनस्यवाफलमद्यमे नूनंतस्यावचःसत्यंकोविद्यादीश्वरेहितं निमित्तानि
च दृश्यंतेमंगलानिदिनेदिने प्रसन्नेपार्वतीनाथेकिमसाध्यंशरीरिणां इत्थंविमृश्यबहुधासापुनर्मुक्तसंशया एवंचंद्रांगदःपत्नीमवाप
समयेशुभे ययौस्वनगरींभूयःश्वशुरेणानुमोदितः चंद्रसेनोपिनृपतीराज्येस्थाप्यस्वमात्मजम् तपसाशिवमाराध्यलेभेसंयमिनांग
तिं दशवर्षसहस्राणिसीमंतिन्यास्वभार्यया सार्द्धंचंद्रांगदोराजाबुभुजेविषयान्बहून् प्रसूयतनयानष्टौकन्यामेकांवराननां पतिं
सीमंतिनीलेभेपूजयंतीमहेश्वरम् शिवलोकंततोगत्वाशिवेनसहमोदते विचित्रमिदमाख्यानंमयासमनुवर्णितम् यःपठेच्छृणुयाद्भक्त्याप्राप्नोति
परमांगतिम् इतिश्रीस्कं॰सोमवारकथासमाप्ता अथोद्यापनं स्कंदउवाच व्रतस्योद्यापनंकर्मकथंकार्यंचमानवैः कोविधिःकानिद्रव्याणि
कथयस्वममप्रभो ईश्वरउवाच शृणुषण्मुखयत्नेनलोकानांहितकाम्यया उद्यापनविधिंचैवकथयामितवाग्रतः यदासंजायतेनित्यंभ
क्तिःश्रद्धासमन्विता सएवव्रतकालश्चयतोनित्यंहिजीवितं चतुर्दशाब्दंकर्तव्यंसोमवारव्रतंशुभम् श्रावणेकार्तिकेज्येष्ठेवैशाखेमार्गशीर्ष
के सुस्नातश्चशुचिर्भूत्वाशुक्लांबरधरोनरः कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः संपाद्यसर्वसंभारान्मंडलंतत्रकारयेत् वस्त्रैःपुष्पैः
समाच्छन्नंपट्टवस्त्रैश्चशोभितम् तन्मध्येलेखयेद्दिव्यंलिंगतोभद्रमंडलं अथवासर्वतोभद्रंमंडपांतःप्रकल्पयेत् शोभोपशोभासंयुक्तं
दीपैःसर्वत्रसोज्ज्वलम् अव्रणंसजलंकुंभंतस्योपरितुविन्यसेत् सौवर्णंराजतंताम्रंमृन्मयंचापिकारयेत् आचार्यंवरयेत्तत्रऋत्विग्भिःस

हितंशुचिः शिवरूपाश्चतेविप्राः पूज्याश्चंदनपुष्पकैः अनुज्ञातश्चतैर्विप्रैः शिवपूजांसमारभेत् रुद्रनाम्नानमोंतेनब्राह्मणानपिपूजयेत् कुंभोपरिन्यसेद्देवमु
मयासहितंशुभम् सौवर्णेप्यथवारौप्येवृषभेसंस्थितंशुभं उमामहेश्वरींमूर्तिंपूजयेद्वृषभेस्थितां वस्त्रयुग्मेनसंवेष्ट्यबिल्वपत्रैःप्रपूजयेत् स्वगृह्योक्तेन
विधिनाकृत्वाग्निस्थापनंततः ततोहोमंचमंत्रेणत्र्यंबकेणचकारयेत् गौरीर्मिमायतिमंत्रेणशतमष्टोत्तरहुतं पलाशानांसमिद्भिश्चयवव्रीहितिलाज्यकैः
पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृदादिकं होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसाददेवेश–
सर्वलोकेश्वरप्रभो तवरूपप्रदानेनममसंतुमनोरथाः प्रतिमादानमंत्रः यद्भक्त्यादेवदेवेशमयाव्रतमिदंकृतम् न्यूनंवाथक्रियाहीनंपरि
पूर्णंतदस्तुमे भुंजीतसहधर्मात्माशिष्टैरिष्टैःस्वबंधुभिः अनेनैवविधानेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः हरलो
केसुखीभूयाद्भुक्त्वाभोगान्यथेप्सितान् इतिश्रीसोमवार॰संपूर्णम् अथप्रकारांतरेणसोमवारव्रतंलिख्यते गंधर्वउवाच कथंसो
मव्रतंकार्यंविधानंतस्यकीदृशम् कस्मिन्कालेतुकर्तव्यंसर्वंविस्तरतोवद गोशृंगउवाच साधुसाधुमहाप्राज्ञसर्वभूतोपकारक य
न्नकस्यचिदाख्यातंतदद्यकथयामिते सर्वरोगहरंदिव्यंसर्वसिद्धिप्रदायकम् सोमवारव्रतंनामसर्वभूतोपकारकम् सोमवारव्रतंनाम
सर्वकामफलप्रदम् सार्वकामिकविज्ञेयंवर्णाश्रमशुभकारकम् नारीनरैःसदाकार्यंदृष्टादृष्टफलोदये ब्रह्मविष्णवादिभिर्देवैःकृतमे।
न्महाव्रतम् पुनस्तत्सोमराजेनदक्षशापहतेनच अभिमानयुतेनाथशंभुनैवपरेणतु ततस्तुष्टोमहादेवःसोमराजस्यभक्तितः तेनत्वं
यदितुष्टोसितिष्ठात्रस्थोनिरंतरम् यावच्चंद्रश्चसूर्यश्चयावत्तिष्ठतिभूधराः तावन्मेस्थापितंलिंगंमयासहातिष्ठत सोद्भिण्याग्पतिरेवंतुप्रार्थ
यित्वामहेश्वरं ततःशुद्धशरीरोसौगगनस्थोविराजते ततःप्रभृतियेकेचित्कुर्वंतिभुविमानवाः तेपितत्पदमायांतिविमलांगाश्चसोमवत्
अत्रकिंबहुनोक्तेनविधानंतस्यकीर्तये यस्मिन्कस्मिंश्चिन्मासेचशुक्लेसोमोभवेद्यदा दंतशुद्धिंपुराश्राद्धंकृत्वास्नानंसमाचरेत् स्वधर्मेवि
हिं मंकृत्वास्थानेमनोरमे अव्रणाभिनवंशुद्धंन्यसेत्कुंभंसुशोभनम् चूतपल्लवविन्यासेचंदनेनविचर्चिते श्वेतवस्त्रपरीधानेसर्वाभरण
भूषित कुंभेपात्रंचविन्यस्यस्थाधारसहितंशिनम् अष्टौविघ्नेश्वरान्देवान्सोमनाथंसशक्तिकं वाससासहितंतत्रश्वेतपुष्पैःप्रपूजयेत् विविधं

भक्ष्यभोज्यंचफलंवैबीजपूरकं अनेनैवतुमंत्रेणपूजांहोमंसमाचरेत् कृत्वैवंदंनरात्रौप्राप्यचाज्ञांस्वपेन्नरः दर्भशय्यांसमारूढोध्यायन्सो
मेश्वरंहरं एवंकृतेतुप्रथमेकुष्ठानांनाशनंभवेत् द्वितीयेसोमवारेतुकरंजंदंतधावनम् देवंसंपूजयेत्सूक्ष्मंज्येष्ठाशक्तिसमन्वितं शतपत्रैः
पूजयित्वामधुप्राशययथाविधि नारिंगंतत्रगत्वातुशेषंपूर्ववदाचरेत् एवंकृतेद्वितीयेथगोलक्षफलमाप्नुयात् सोमवारेतृतीयेथवटजंदंत
धावनं शिवोत्तमंयजेद्देवंरौद्रीशक्तिसमन्वितम् पूजयेज्जातिपुष्पैश्चगोमूत्रंप्राशयेन्निशि नैवेद्यंदापयेच्छुद्धंभक्ष्यभोज्यसमन्वितम् एवंकृ
तेतृतीयेतुकोटियज्ञफलंलभेत् चतुर्थेसोमवारेतुअपामार्गसमुद्भवैः कृत्वाकाष्ठैर्दंतशुद्धिंतथानक्तंप्रपूजयेत् दाडिमीफलसंयुक्तंनैवे
द्यंक्षीरशर्करा दर्भस्तुप्राशनंकृत्वादर्भस्थोजागृयान्निशि एवंकृतेचतुर्थेतुयज्ञायुतफलंलभेत् पंचमेसोमवारेतुवृक्षाश्वत्थसमुद्भवम्
दंतकाष्ठंततःकृत्वाथेकंरुद्रंप्रपूजयेत् नैवेद्येदधिभक्तंचकूष्मांडीफलसंयुतं घृतंतुप्राशयेत्तत्रआचार्यंपूजयेत्ततः एवंकृतेपंचमेपिसप्तज
न्मसमुद्भवैः ब्रह्महत्यादिभिः सर्वैर्मुच्यतेपापराशिभिः सोमवारेपुनःषष्ठेनिर्गुंडीदंतधावनं त्रिमूर्तिंपूजयेद्देवंरक्तपुष्पैर्विधानतः देवींकलावि
करिणींफलपुष्पसमंडकैः कुशोदकंतुसंप्राश्यगीतैर्नृत्यैस्तुजागृयात् एवंकृतेततःषष्ठेषडब्दंचफलंलभेत् सप्तमेसोमवारेचप्लक्षजंदंतधाव
नं श्रीकंठंपूजयेद्देवंततःश्रीवृक्षपल्लवैः बलप्रमथिनींदेवींपूजयेच्चविधानतः विविधंभक्ष्यभोज्यंचनारिकेरसमन्वितम् दुग्धंवैप्राशयेत्तत्रशे
षंपूर्ववदाचरेत् सप्तसागरदानस्यसम्यगाप्तस्ययत्फलम् सोमवारेसप्तमेतुकृतेतत्फलमाप्नुयात् अष्टमेसोमवारेथखादिरंदंतधावनम् सर्व
भूतदमनंनाथंपूजयेद्देवंशिखंडिनं स्त्रगंधवृक्षकुसुमैर्यक्षकर्दमलेपनैः कदलीफलसंयुक्तंभक्ष्यंभोज्यंप्रदापयेत् गोमयंप्राशयेद्रात्रौजागरं
तत्रकारयेत् एवंकृतेष्टमेसोमेसंपूर्णफलमाप्नुयात् गंगास्नानेकृतेसोमेकोटिस्नानफलंस्मृतम् शतभारसहस्राणिकुरुक्षेत्रेरविग्रहे वि
प्रायवेदविदुषेयद्दत्वाफलमाप्नुयात् तत्पुण्यंकोटिगुणितंसोमवारव्रतेकृते गजानांचशतेदत्तेलक्षेचरथवाजिनाम् तत्फलंकोटिगुणितंसो
मवारव्रतेकृते गुग्गुलैर्धूपितंकृत्वाकोटिशोयत्फलंभवेत् तत्फलंतुभवेत्तस्यसोमवारव्रतेकृते सर्वैश्वर्यसमायुक्तः शिवतुल्यपराक्रमः
रुद्रलोकेवसेद्दीर्घंब्रह्मणासहमोदते संप्राप्तेनवमेवारेकुर्यादुद्यापनंशुभम् यथाभवतिगंधर्वतत्थावक्ष्यामितेधुना मंडपेमंडनंकृत्वापता

काभिश्चतोरणैः द्वाराणिचापिचत्वारि कुंडं कृत्वा विधानतः मध्येवेदीप्रकर्तव्याचतुरस्रासुशोभना निधायमंडपंसम्यक् मध्येपद्मंचकल्पयेत्
कलशान्नवदिग्भागेसहिरण्यान्पृथक्पृथक् स्थापयित्वाशक्त्यस्तुवामाद्याः पूर्वतः क्रमात् कर्णिकायांतुविन्यस्यश्रीसोमेशंमहाप्रभुं प्रतिरूपंप्र
सन्नायाजपाशक्तिसमन्वितः होमपात्रादिकेद्रव्ये मधुनापरिपूरिते रुक्मशय्यास्थितंदेवं यत्रस्थंपूजयेत्क्रमात् गंधपुष्पैश्चनैवेद्यैर्भक्ष्यभोज्यैः
पृथक्पृथक् वस्त्रालंकारतांबूलैश्छत्रचामरदर्पणैः दीपिकांचवितानंच पर्यंकंचसतूलकम् सोमेश्वरंसमुद्दिश्य देयंपौराणिकेगुरौ पूजयित्वा
तथाचार्यंहोमंतत्रैवकारयेत् देवस्यसान्निधौसम्यक् रात्रौजागरणंचरेत् पंचगव्यंततःपीत्वाध्यायेत्सोमेश्वरंहृदि प्रभातेचततः स्नात्वा
देयागौश्चविधानतः ततोभक्त्यादिगंधर्वक्षीरखंडादिनिर्मितैः भक्ष्यभोज्यैरनेकैश्चभोजयेद्ब्राह्मणान्यतीन् अष्टौविघ्नेश्वरायेचनैश्च-
होमंसमाचरेत् वस्त्रयुग्मंततोदत्वागांचदत्वाविसर्जयेत् एवंकृतेव्रतेसम्यक्लभतेपुण्यमक्षयम् धनधान्यसमायुक्तोपुत्रदारैःसम-
न्वितः नकुलेजायतेतस्यदरिद्रीदुःखितोपिवा अपुत्रोलभतेपुत्रंवंध्यापुत्रवतीभवेत् काकवंध्याचयानारीमृतपुत्राचदुर्भगा कन्याप्रसू
तथाकार्यंरोगिभिश्चविशेषतः एवंकृतेविधानेतुदेहपातेशिवंव्रजेत् कल्पकोटिसहस्राणिकल्पकोटिशतानिच भुंक्तेसोविपुलान्भो
गान्यावदाभूतसंप्लवम् इत्येतत्कथितंसर्वंसोमवारव्रतंक्रमात् इतिश्रीस्कंदपुराणेसोमवारव्रतंसंपूर्णम् अथएकभक्तसोमवा
रव्रतंलिख्यते श्रावणेचैत्रवैशाखेज्येष्ठेमार्गशिरेतथा प्रथमेसोमवारेचगृण्हीयाद्व्रतमुत्तमम् यदाश्रद्धाभवेत्कर्तुः सोमवारव्रतंप्र
ति तदाचार्यपुरस्कृत्यश्रद्धाभक्तिसमन्वितः सुस्नातश्चशुचिर्भूत्वाशुक्लांबरधरोनरः कामक्रोधाद्यहंकारद्वेषपैशुन्यवर्जितः आहरे
च्छ्वेतपुष्पाणिमालतीकुसुमानिच श्वेतपद्मानिदिव्यानिचंपकानितथैवच कुंदमंदारजैःपुष्पैःपुन्नागशतपत्रकैः अर्चयेदुमयासार्द्धंशंकरं
लोकशंकरं मलयाद्रिजधूपेनधूपयेत्पार्वतीपतिं कामिकेनापिमंत्रेणव्यापकेनमहेश्वरम् पूजयेन्मूलमंत्रेणत्र्यंबकेणाथवापुनः भवाय्भ
वनाशायमहादेवायधीमते उग्रायउग्रनाशायशर्वायशशिमौलिने रुद्रायनीलकंठायशिवायभवहारिणे ईशानायनमस्तुभ्यंसर्वकाम
प्रदायच नमोदेवाधिदेवायसर्वांगेपूजयेद्विभुं एवंसंपूज्यदेवेशमुपचारैःपृथक्पृथक् यथावित्तानुसारेणभक्त्यापादौप्रपूजयेत् शंकरा

यनमोजंघेशिवायेतिचजानुनी शूलपाणेनमोगुल्फेकव्यांशंभुंप्रपूजयेत् गुह्यंस्वयंभुनामानंपूजयेत्पार्वतीपतिम् ततोनमोमहादेवंपूजयेन्ना
भिमंडले उदरेविश्वकर्तारंपार्श्वयोः सर्वतोमुखम् स्थाणुंस्तनेचसंपूज्यनीलकंठंतुकंठके मुखंसंपूजयेन्नित्यंशिवनाम्नेमहात्मने त्रिनेत्रा
यचनेत्रायशिरसेनागभूषणे नमोदेवाधिदेवायसर्वांगेपूजयेद्विभुम् एवंसंपूज्यदेवेशमुपहारमनोरमैः यथाविनानुसारेणतस्य
पुण्यफलंशृणु सोमवारेर्चयंतोयेपार्वत्यासहशंकरम् तेलभंत्यक्षयाल्लोकानपुनरावृत्तिदुर्लभान् एकभक्तस्ययत्पुण्यंकथयामिसमा
सतः सप्तजन्मार्जितंपापमभेद्यंदेवदानवैः विनश्यत्येकभक्तेननात्रकार्याविचारणा एवंसंवत्सरंयावद्भक्त्याव्रतमिदंचरेत् यस्मिन्मासेप्रा
रभतेतस्मिन्मासिसमापयेत् उपवासेननैवायंसमाचरतिमानवः विरंव्रतंप्रकुर्वानकृतंसंपूर्णतांनयेत् खंडव्रतप्रभावेनतत्सर्वंनिष्फ
लंभवेत् उमामहेश्वरंहैमंवृषभेणसमन्वितम् यथाशक्त्याप्रकर्तव्यंवित्तशाठ्यंनकारयेत् मंडलंकारयेद्दिव्यंतन्मुलिंगोद्भवंशुभम् क
लशंपयसापूर्णंश्वेतवस्त्रसमान्वितं पात्रंशर्कर्यायुक्तंकुंभस्योपरिस्थापयेत् स्थापयेन्मंडलेदिव्यंकलशंकनकोज्ज्वलं तस्योपरिन्य
सेद्देवंतत्वमंत्रविधानतः श्वेतवस्त्रयुगेनैवपूजयेत्परमेश्वरम् उपवस्त्रंसोत्तरीयंभक्ष्याणिविविधानिच धान्यानियान्यभीष्टानितानि
तानिप्रकल्पयेत् शय्यांसतूलामादर्शंदेवस्याग्रेप्रकल्पयेत् अथश्वेतानिपुष्पाणिशिवस्योपरिविन्यसेत् ततोहोमंप्रकुर्वीतशिवमं
त्रेणवैव्रती पालाशाभिःसमिद्भिश्चजुहुयाच्छतमष्टकम् आप्यायस्वेतिमंत्रेणपृषदाज्याहुतीःशतमाः यवव्रीहितिलाज्येनऋत्विजश्च
पृथक्पृथक् होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः वस्त्रैराभरणैश्चापिगृहोपस्करणादिभिः श्वेतागौःकपिलावापिसुशीलाचपय
स्विनी सुवस्त्रवरपुच्छाचघंटाभरणभूषिता दक्षिणासहितादेयाशिवःसंप्रीयतामिति ब्राह्मणान्भोजयेत्पश्चात्त्रयोदशसुशोभनान्
घंटास्त्रयोदशादेयावंशपात्रंसमाहितः इदंपीठंगृहाणत्वंसर्वोपस्करसंयुतम् सर्वंमेपरिपूर्णंस्याच्छिवोमेप्रीयतामिति इतिश्रीस्कं॰सोमवा
संपूर्णम् अथोद्यापनं कैलासस्थंमहादेवमपर्णासहितंशिवम् पप्रच्छप्रणतोभूत्वार्किंचिदुद्दिश्यनमंगुहः देवनाखिलदेवेशसर्वभू
तात्मकप्रभो त्वत्प्रसादान्मयापूर्वंविज्ञातंधर्मसाधनम् किंचिज्ज्ञानव्यमस्त्यन्यत्त्वत्तएवमयाप्रभो यन्नदृष्टंश्रुतंवापितन्मेव्याख्यातुम

र्हसि किंदानंकिंतपस्तीर्थंकिंव्रतंवामहत्फलं यस्मि कृतेमहाप्रीतिर्युवयोःस्यादुमेशयोः तन्मेत्वंपुत्रवात्सल्यात्सर्वलोकहितायच विशेषं
ब्रूहिदेवेशयज्ज्ञात्वास्यान्महत्फलम् इत्याकर्ण्यवचस्तस्यप्रसन्नवदनोहरः परिष्वज्यसुतंप्रीत्याप्रोवाचेदंवचस्तदा शंकरउवाच सम्य
कपृष्टंत्वयावत्सप्रीतोस्मिवचसातव अस्तिकिंचिद्व्रतंपुण्यंतन्मेकथयतः शृणु वेदशास्त्रपुराणानांयद्रहस्यंव्रतंमहत् यदद्यकथनीयंते
त्वत्तःकोममवैप्रियः सोमवारव्रतंनामसर्वव्रतफलाधिकं यस्मिन्कृतेपराप्रीतिरावयोःस्यादुमेशयोः निशम्यैतद्व्रतंस्कंदःप्रोवाचवदतांव
रं कीदृशंतद्व्रतंदेवविधानंतस्यकीदृशं कदाग्राह्यंकथंकार्यंकिंदानंतस्यपूजनं उद्यापनविधानंचविस्तरेणवदस्वभो शिवउवाच म
धौमास्यष्टमीशुक्लाशिवेंदुदिनसंयुता तदाग्राह्यंव्रतंचैतदनेनविधिनाशुभं प्रातःकृष्णतिलैःस्नात्वाआचार्यसहितोव्रती पूर्वाण्हेविधि
वत्कार्यमुमाशंकरपूजनं ततःपुष्पांजलिंदत्वाप्रणम्यदंडवद्भुवि विधिनानेनगृण्हीयाद्व्रतंसंकल्पपूर्वकम् गृण्हामिभववरोगार्त्तःसोम-
वारव्रतौषधं व्रतेनानेनमेप्रीतौभवेतांपार्वतीश्वरौ विसर्जनंततःकुर्यादाचार्यंपूजयेत्ततः शिष्टैरिष्टैःपरिवृतोभोजनंकारयेत्ततः
अहःशेषंततोनीत्वासत्कथाश्रवणादिभिः शयीताधस्ततोरात्रावभुक्तोब्रह्मचर्यवान् अनेनविधिनावत्समदीयेवासरेयदा कुर्व
न्व्रतमवाप्नोतिमद्भावंनात्रसंशयः तस्मिन्दिनेकृतंकिंचिद्दानंहोमोजपस्तथा व्रतंवाप्रीतिदंस्कंदह्युमयासहितस्यमे अतःसोमाह्वयो
वारःप्रशस्तोयंममप्रियः एवंसोमाष्टकंकृत्वाव्रतस्योद्यापनंशुभं माघाद्येपंचकेकार्यंशुक्लपक्षेविशेषतः शिवर्क्षतिथियोगानामेकै
केनापिसंयुते सोमवारेविधातव्यंतथाचंद्रबलान्विते विधायरदनोल्लेखंप्रातःस्नात्वाविधानतः आचार्यंवरयेदेकंविधिज्ञंश्रु
तिपारगम् पुराणस्मृतिधर्मज्ञंनिगमागमवेदिनं उपोष्यसोमवारंचसायंसंध्यामुपास्यच शिवालयेहरेर्वापिशुचौदेशेथवागृहे
अष्टांगुलोच्छ्रितांवेदींवितस्तिद्वयसंयुतां तस्यांषोडशपत्राणितंडुलैःपरिपूरयेत् विचित्ररचनोपेतांपताकाद्युपशोभितां चित्रैर्वि
चित्रैर्विविधैःफलराजिविराजितां एवंप्रकल्प्यवेदींचतुरस्रांसमंततः ध्यात्वास्कंनियमंकृत्वासर्वाभ्युदयिकंतथा आचार्येणसमंकु
र्यान्मदाराधनमादरात् पद्ममध्येनवीनंचधवलंस्थापयेद्घटं वाससावेष्टितंपूर्णमक्षतैःपरिपूरितं समंतादंतिकेचापिनामभिस्त्वी

श्वरादिभिः गणेशंमातृकाश्चापिदुर्गांक्षेत्राधिपंतथा समाहितमनाः कोणेष्वाग्नेय्यादिषुविन्यसेत् ततःकनकसंभूतमद्रूपसुमयान्वितं पंचामृतोदकैः स्नाप्यगंधपुष्पाक्षतैर्जलैः गृहीत्वावाहयेत्कुंभेध्यायेन्मद्रूपमीदृशं त्र्यंबकंचतथागौरीमिमायेतिजपन्सुधीः पंचाक्षरंत थामंत्रंपूर्वादिषुदलेष्वपि मूर्तयोष्टौमदीयाश्चपूजनीयाःप्रयत्नतः अनंतंसूक्ष्मोत्तशिवस्ततश्चत्रिनेत्ररुद्रोचतथैवपूज्यौ त्रिमूर्तिश्रीकंठ शिखंडिनौत्वभागादिपत्रेषुसमर्चनीयाः तद्बहिर्लोकपालाश्चपूजनीयाःप्रयत्नतः विष्टराद्युपचाराश्चदातव्यामूलमंत्रतः बिल्वपत्राक्ष तैःपुष्पैर्धूपैर्दीपैःसमर्चयेत् मनोरमाविधातव्यापूजाविक्तानुसारतः ततोवेदेरधोभूमौसर्वतोभद्रमंडले ब्रह्माद्यादेवताःसर्वाःपूजनीयाःप्रय त्नतः नैवेद्यादिविचित्राणितांबूलानिप्रकल्पयेत् ततोजागरणंकुर्याद्गीतवादित्रनिःस्वनैः पुराणैरितिहासैश्चरात्रिशेषंनयेद्व्रती अपरेद्युः कृतस्नानःप्रातःसंध्यामुपास्यच पुनर्यागगृहंगत्वाह्युपचारान्प्रकल्पयेत् हवनार्थंविधातव्यमुपलेपादिकंततः प्रतिष्ठाप्यानलंसर्वम- न्वाधानादिपूर्वकम् स्वगृह्यविधिनाकार्यमाज्यभागांतमेवच अनादेशादिभिर्हुत्वामहाव्याहृतिसंज्ञकाः होतव्याःसर्पिषात्वेवपायसंस घृतंसुधीः त्वंसोमासीतिमंत्रेणहुनेदष्टोत्तरंशतं ततःस्विष्टकृतंहुत्वाहोमशेषंसमापयेत् ततोहोमावसानेत्वगामरोगांपयस्विनीं सव त्सांधवलांसाध्वींसवस्त्रांकांस्यदोहनीं दद्याद्व्रतसमृद्ध्यर्थमाचार्यायसदक्षिणां वस्त्रैराभरणैरन्यैराचार्यंपरितोषयेत् ततःषोडशसंख्या कान्भोज्यैर्नानाविधैस्तथा ब्राह्मणान्भोजयेत्तत्रआदद्यात्तेन्नामभिः क्रमात् सोमेश्वरस्तथेशानःशंकरोगिरिजाधवः महेशःसर्वभूतेशः- स्मरारिस्त्रिपुरांतकः शिवःपशुपतिःशंभुस्त्र्यंबकःशशिशेखरः गंगाधरोमहादेवोवामदेवइतिक्रमात् वस्त्राणिकुंडलादीनिचंद नैरुपलेपयेत् उपवीतानितेभ्योपिदद्यात्कुंभान्फलान्वितान् शक्त्याचदक्षिणादेयादंपतीपूजयेत्ततः अन्यानपियथाशक्तिब्राह्मणा नपितोषयेत् व्रतंममास्तुसंपूर्णमित्युक्त्वातान्प्रपूजयेत् अस्तुसंपूर्णमित्युक्तेततोयागंसुवंव्रजेत् उपचारादिकंकृत्वाक्षत्वानत्वापुनःपु नःविसर्जनंविधायाथशिष्टैरिष्टैःसमान्वितः भुंजीयाद्यज्ञशेषंतुह्याग्यतोनियतःशुचिः एवंकृतेमहापुण्येव्रतस्योद्यापनेशुभे नारीवापुरु षोवापिमहेशस्यपरंपदं अपुत्रोलभतेपुत्रान्निर्धनोधनवान्भवेत् अविद्योलभतेविद्यामितिधर्मविदोविदुः पृथिव्यांयानितीर्थानिव्रता

न्यन्यानियानितु सोमवारव्रतस्यास्य कलांनार्हंतिषोडशीम् इतिश्रीभविष्योत्तरे सोमवारव्रतोद्यापनं संपूर्णम् अथमंगलव्रतंकीर्त्ते
ष्ये भौमवारे अरुणोदयवेलायां अपामार्गेण दंतधावनं विधाय तिलामलकचूर्णेन नद्यादौ गृहे वास्नात्वा धौतमारक्तवस्त्रं परिधाय रक्तोत्त
रीयंवस्त्रं वाप्येवं परिदध्यात् ततस्ताम्रपात्रे रक्ताक्षतारक्तपुष्परक्तचंदनानि निक्षिप्य अग्निर्मूर्द्धेति मंत्रेण अष्टोत्तरशतार्घ्याणि दद्यात्
ततो गृहमागत्य रक्तगोमयेन भूमिं विलिप्य शुद्धदेशे पुत्रार्थधनार्थी चपत्न्यासह मंगलपूजामारभेत् तत्रविधिः मासपक्षाद्युल्लि
ख्य ऋणव्याधिनाशनार्थं पुत्रधनप्राप्तये च भौमव्रतं करिष्ये इतिसंकल्प्य तदंगत्वेन भौमपूजनमहं करिष्ये ततः प्रार्थयेत् अद्यदे
वेशते भक्त्या करिष्ये व्रतमुत्तमम् ऋणव्याधिविनाशाय धनसंतानहेतवे यंत्रोपरिस्थं भौमं पूजयेत् तत्र यंत्रप्रकारः कः संग्रहे त्रि
कोणं पूर्वमुद्धृत्य पंचधा विभजेत्ततः तृतीयरेखाचिन्हाभ्यां लांछयेत्सम भागतः आद्यरेखाग्रयुगुलं तृतीयाचिन्हयोर्न्यसेत् द्वितीयाग्रं
समाकृष्य तृतीयाचिन्हयोर्न्यसेत् पुनारेखां तृतीयां तु समांभज्यात्समांशकं तुर्यांचिन्हद्वयेनाथ त्रिभिश्चिन्हैस्तु पंचभिः तृतीयाग्रे प्रकु-
र्वीत पंचम्यामथ चिन्हिते तुर्याग्रे योजयेत्सम्यक् पंचम्ये चिन्हयोर्द्वयोः चिन्हैस्तु पंचभिर्दद्यात्सूत्रयुग्मं विचक्षणः एवमेकाधिकं सम्यक्
कोणानां विंशतिर्भवेत् तृतीयातुर्ययोर्मध्ये स्थितचिन्हगृहे न्यसेत् देवं तदग्रतो मंत्री त्रिकोणे दक्षिणक्रमात् मंगलाद्यांतरे पूर्वान्नमोंता
न्नेकविंशतिः एकविंशतिकोष्ठेषु नाममंत्रान्समालिखेत् ततः पूजाप्रकर्तव्या पुत्रसंपत्तिहेतवे पूजाप्रकारमाह रक्तमाल्यांबरधरः
शक्तिशूलगदाधरः चतुर्भुजो मेषगमो वरदः स्याद्धरासुतः एह्येहि भगवन्भौम अंगारक महाप्रभो त्वयि सर्वं समायातं त्रैलोक्यं स
चराचरम् भौममावाहयिष्यामि तेजोमूर्तिं दुरासदम् रुद्ररूपमनिर्देश्यं चक्रं च अरुणप्रभम् अग्निर्मूर्द्धा विरूपांगारकोगायत्री मंग
लावाहने विनियोगः ॐ अग्निर्मूर्द्धेतिऋक् ॐ नमो भगवते धनसमृद्धिदाय मंगलाय नमः मंगलं आवाहयामि अथन्यासः ॐ ह्रां
हृदयाय नमः ह्रीं शिरसे० ह्रूं शिखायै० ह्रैं कवचाय० ह्रौं नेत्रत्रयाय० ह्रः अस्त्राय फट् खंखः इति दिग्बंधः ॐ ह्रां अंगुष्ठाभ्यां० ॐ
ह्रीं तर्जनीभ्यां० ॐ ह्रूं मध्यमाभ्यां० ॐ ह्रैं अनामिकाभ्यां० ॐ ह्रौं कनिष्ठिकाभ्यां० ॐ ह्रः करतलकरपृष्ठाभ्यां० हंसः आत्मने नम० खंखः

परमात्मनेनमः ततः अग्निर्मूर्द्धेतिमंत्रेणवामंगलगायत्र्यावा आसनादिपुष्पांतांपूजयित्वा यंत्रस्थएकविंशतिकोष्ठेषुनाममंत्रेणपूजये
त् अर्घ्याणिचदद्यात् शिखायांमंगलःपातुभूमिपुत्रश्चमूर्द्धनि ललाटेऋणहर्ताचचक्षुषोश्चधनप्रदः स्थिरासनःश्रोत्रयोश्चमहाकाय
श्चनासिके आस्यदंतोष्ठजिह्वासुसर्वकर्मावरोधकः हनौमेलोहितःपातुलोहिताक्षश्चकंठके स्कंधयोरुरसोर्मेलात्सामगानांकृपाकरः धरा
त्मजोभुजौपातुकुजोरक्षेत्करद्वयम् भौमोमेहृदयंपातुभूमिदस्तुनथोदरे भूमिनंदननाभौतुगुह्येत्वंगारकंन्यसेत् ऊरूममधमोर
क्षेज्जान्वोरोगापहारकः जंघयोर्वृष्टिकर्ताचअपहर्ताचगुल्फयोः पादांगुष्ठेचपादौचसर्वकामफलप्रदः शक्तिर्मेपूर्वतोरक्षेच्छूलंरक्षेच्च
दक्षिणे पश्चिमेचधनुःपातुउत्तरेचशरस्तथा ऊर्ध्वंषडाननःपातुअधस्तात्पृथिवीमम एवंन्यस्तशरीरःसोचिंतयेद्भूमिनंदनम् अथ
ध्यानं असृगरुणवर्णरक्तमाल्यांगरागंकनककमलमालामालिनंविश्ववंद्यम् अतिललितकराभ्यांबिभ्रतंशक्तिशूलेभजतधरणि
सूनुंमंगलंमंगलानाम् इतिध्यात्वा अग्निर्मूर्द्धाइतिऋचं अष्टोत्तरशतंजपेत् अंगारकायविद्महेशक्तिहस्तायधीमहि तन्नोभौमः
प्रचोदयात् ततःस्तोत्रंपठेत् मंगलोभूमिपुत्रश्चऋणहर्ताधनप्रदः स्थिरासनोमहाकायःसर्वकर्मावरोधकः लोहितोलोहिताक्षश्च
सामगानांकृपाकरः धरात्मजःकुजोभौमोभूतिदोभूमिनंदनः अंगारकोयमश्चैवसर्वरोगापहारकः वृष्टिकर्तापहर्ताचसर्वकामफ
लप्रदः एतानिकुजनामानिनित्यंयःप्रयतःपठेत् ऋणंनजायतेतस्यसंतानंवर्द्धतेसदा एकविंशतिनामानिपठित्वातुदिनांतके रू
पवान्धनवांश्चैवजायतेनात्रसंशयः एककालेद्विकालंवायःपठेत्सुसमाहितः एवंकृतेनसंदेहोऋणंहित्वाधनीभवेत् इतिस्तो
त्रंपठेत् धरणीगर्भसंभूतंविद्युत्कांतिसमप्रभम् कुमारंशक्तिहस्तंचमंगलंप्रणमाम्यहम् इतिनमस्कारः खदिरांगारेणरेखा
त्रयंकृत्वा अंगारकमहीपुत्रभगवन्भक्तवत्सल त्वांनमस्यामिमेशेषंऋणमाशुविनाशय ऋणरोगादिदारिद्र्यंपापक्षुद्रापमृत्य
वः भयक्लेशमनस्तापानश्यंतुममसर्वदा ऋणदुःखविनाशायपुत्रसंतानहेतवे मार्जयाम्यसितारेखास्तिस्रोजन्मसमुद्भवाः दुःख
दौर्भाग्यनाशायसुखसंतानहेतवे कृतरेखात्रयंवामपादेनमार्जयाम्यहं इतिमंत्रेणमार्जयेत् ततःप्रार्थना ऋणहर्त्रेनमस्तेस्तुदुःखदा

रिष्टनाशक सुखसौभाग्यधनदोभवमेधरणीसुत ग्रहराजनमस्तेस्तु सर्वकल्याणकारक प्रसादात्तवदेवेशसदाकल्याणभाजन
देवदानवगंधर्वयक्षराक्षसपन्नगाः प्राप्नुवंतिशिवं सर्वसदापूर्णमनोरथाः प्रसादंकुरुमेभौम सौभाग्यंमंगलप्रद बालःकुमारकोयस्तु
सभौमः प्रार्थितोमया उज्जयिन्यांसमुत्पन्नोभौमोनामचतुर्भुजः भरद्वाजकुलेजातः शूलशक्तिगदाधरः इतिप्रार्थयेत् पुनःस्तोत्रं
पठेत् ततः वायनदानं तिलगुडमिश्रितेन एकविंशतिलड्डुकान् गोधूमेनवाफलदक्षिणासहितान् वेदविदेदद्यात् दानमंत्रः मंगला
यनमस्तुभ्यं सर्वमंगलदायक वायनेनचसंतुष्टः कुरुमेत्वं मनोरथान् देवस्यत्वेतिमंत्रेणमंगलःप्रीयतामितिदद्यात् आवाहनंन
जा॰ इतिपूजनं अथकथा सूतउवाच पूजितादेवदैत्यैस्तु मंगलोमंगलप्रदः गौतमेनपुरापृष्टोलोहितांगोमहाग्रहः गौतमउवा
च कथयस्वमहाभागगुह्यंपूजनमुत्तमम् मंत्रमाराधनंदानंसर्वपापप्रणाशनम् रूपंसुवर्णसंकाशंवाहनायुधसंयुतं येनपूजित
मात्रेणजायतेसुखमुत्तमम् धर्मार्थकाममोक्षाणांकालेनैवफलप्रदम् सर्वपापप्रशमनं सर्वव्याधिविनाशनं सर्वसौभाग्यदंदेवत्वयापा
तकनाशनम् सर्वयज्ञफलंप्रोक्तंसर्वकामफलप्रदम् तपसांजपदानानांफलंचैवतुलभ्यते तद्व्रतंब्रूहिमेदेवत्वंलोहितांगमहाग्रह यस्मि
न्नाराधितेमर्त्यःसर्वसौभाग्यवान्भवेत् मंगलउवाच शृणुविप्रमहाभाग सर्वज्ञऋषिसत्तम व्रतंचपूजनंदानंप्रख्यातंभुवन
त्रये आसीत्पूर्वंहिसर्वज्ञोब्राह्मणोवेदपारगः तस्यभार्यासुनंदाचनाम्नाख्यातासुलोचना तस्यापत्यंचसंजातंवृद्धत्वान्नकदाचन
तेनान्यस्यसुतांपुण्यांगृहीत्वापोषिताध्रुवम् ब्राह्मणस्यकुलेजातासुरूपागुणसंयुता सर्वलक्षणसंपन्नानयनेनगौतम पुराजनी
तयाचाहमेकभावेनपूजितः तांपुत्रींस्वगृहेनीत्वाब्राह्मणेनैवपालिता नित्यंहिस्नवनेतस्याअष्टांगंकनकंबहु तत्सुवर्णेनविप्रोसौ
धनाढ्योमदगर्वितः कोटिकोटीश्वरोजातोराजतेभूमिमंडले हृष्टानंदकविप्रेणदशवर्षावरार्थिनी विवाहार्थंचविप्रायदत्तासोमेश्व
रायच वेदोक्तविधिनातेनविवाहमकरोत्तदा वर्षैःकतिपयैर्विप्रःस्वांपत्नींप्रौढयौवनाम् लब्ध्वास्वदेशमार्गेण व्रजन्विप्रोप्यहर्नि
शम् निशांतेगह्वरेघोरे अरण्येपर्वतोत्तमे सर्वशून्येवनेतस्मिन्महालुब्धेनक्षोभितः मार्गेचलतिविप्रेस्मिंश्चोरैश्चविनिपातिते-

तंपतिंमृतमालोक्यसानारीशोकपीडिता पतिनासहविषेंद्रमरणेकृतनिश्चया स्वपतिंतन्मयंविश्वंचिंतयंतीपदेपदे पतिंप्रदक्षिणीकृत्य
चितायाश्चसमीपतः तस्मिन्क्षणेचतुष्टोहंवरार्थंचप्रचोदिता वरंब्रूहिमहाभागेयत्तेमनसिवर्तते इतिश्रुत्वाततोवव्रेसानारीपतिमान
सा ब्राह्मण्युवाच यदितुष्टोसिमेदेवतर्हिजीवतुमेपतिः मंगलउवाच अजरामरवत्साध्वीतवभर्त्ताभविष्यति अन्यच्च
चमहासाध्विवरंत्रिभुवनोत्तमम् ब्राह्मण्युवाच यदितुष्टोसिमेदेवग्रहाणामधिपेश्वरः येत्वांस्मरंतिदेवेशंरक्तचंदनचर्चितं
रक्तपुष्पैश्चसंपूज्यप्रत्यूषेभौमवासरे बंधनव्याधिरोगाश्चकदाचिन्नोपजायताम् नचसर्पाग्निशत्रुभ्योभयंचस्वजनैःसह नावि
योगोमहीपुत्रभक्तानांसौख्यदोभव मंगलउवाच एकविंशतिभौमांश्चएकभुक्तोजितेंद्रियः एकान्नेनासितान्नेनचतुर्दीपान्वितेगृहे
अर्घ्यंचमंगलेमंत्रैर्वेदपौराणिकोद्भवैः युवरक्तमनड्वाहंसर्वोपस्करसंयुतम् स्वशक्त्याभोजयेद्विप्रान्दातव्यंचहिरण्यकम् तेषांवैग्र
हपीडाचनभवेत्तुकदाचन भूतवेतालशाकिन्योनभवंतिचहिंसकाः दारिद्र्यंनश्यतेतेषांपुत्रपौत्रैश्चवर्द्धते एवमुक्त्वाचतत्रैवमंगलोऽ
पिदिवंगतः एवंव्रतंसमाख्यातंसर्वसौख्यप्रदायकम् इदंव्रतंकरिष्यंतितेषांपीडानजायते स्त्रीभिर्व्रतंप्रकर्तव्यंपुरुषैश्चविशेषतः ते
षांमुक्तिर्भवत्येवस्वर्गवासोनसंशयः इतिश्रीपद्मपुराणेभौमवारव्रतकथासंपूर्णा अथोद्यापनं गौतमउवाच उद्यापनविधिंब्रू
हिममसम्यग्ग्रहेश्वर येनजातेनजगतोह्युपकारोमहान्भवेत् मंगलउवाच विधेयोमंडपःसम्यगष्टहस्तप्रमाणतः स्थंडिलंम
ध्यतःकार्यंहस्तैकेनप्रमाणतः मंडलंतुप्रकर्तव्यंमामकंरक्ततंडुलैः पूर्वोक्तानिचनामानिमंडलेपूजयेत्ततः एकविंशतिकोष्ठेषुचतुर्दीपा
न्वितेषुच एकविंशतिकुंभांश्चस्थापयित्वाप्रयत्नतः सौवर्णींप्रतिमांतत्रस्थापयेत्कलशोपरि रक्तवस्त्रेणसंवेष्ट्यपूजयेत्कुसुमैःशुभैः अग्नि
र्मूर्धेतिमंत्रेणहोमंखादिरसंभवैः अष्टोत्तरशतंहुत्वादिक्पालांश्चहुनेत्ततः अंगपूजाप्रकर्तव्यानामभिर्ममसर्वदा मंगलायनमःपादौतुभूमि
पुत्रेतिगुह्यके ऋणहर्त्रेतुनाभौचमहाकालायवक्षसि सर्वकामप्रदात्रेचममबाहूप्रपूजयेत् लोहितोहस्तयोश्चैवलोहिताक्षश्चकंठके आ
स्येसंपूजयेन्मांचसामगानांकृपाकरः धरात्मजनासिकायांकुजंचनयनद्वये भौमंललाटेपादौचभूमिजायप्रभुषोस्तथा भूमिनंदननामा

नंमूर्ध्निसंपूजयेत्तथा अंगारकंशिखायांतुधमंतुकवचेसदा सर्वरोगापहारंच अस्त्रदेशेप्रपूजयेत् आकाशेदृष्टिकंनारिमपहर्त्तात्वध
स्तथा सर्वांगंचप्रभूतोस्मिसर्वकामफलप्रदः एवंपूज्यततोहोमंपश्चाद्दुग्धादिनार्चयेत् भोज्यैकविंशतिंविप्रान्दद्यात्कुंभान्सवस्त्रका
न् आचार्यंपूजयेत्पश्चाद्दत्वाधेनुंसवत्सकाम् सर्वंनिवेदयेत्सोऽगुरंवेचशर्मांचविस्मितः अच्छिद्रंयाचयेत्तेभ्योसर्वेब्रूयुव्रतंशुभं दत्वादी-
नांधकृपणान्स्वयंभुंजीतवाग्यतः इदंव्रतंकरिष्यंतिदारिद्र्यंनश्यतिध्रुवम् कर्तव्यंतुप्रयत्नेनउद्यापनसमन्वितम् इतिश्रीपद्मपुरा
णेमंगलव्रतोद्यापनंसंपूर्णम् अथश्रावणेशुक्रवारे वरदलक्ष्मीव्रतम् तत्रपूजाविधिः क्षीरसागरसंभूतांक्षीरवर्णसमप्रभाम्
क्षीरवर्णसमंवस्त्रंदधानांहरिवल्लभाम् ध्यानं ब्राह्मीहंससमारूढाधारिण्यक्षकमंडलू विष्णुतेजोधिकादेवीसामांपातुवरप्रदा
आवाहनं० महेश्वरिमहादेविआसनंतेददाम्यहम् महदैश्वर्यसमायुक्तेब्रह्माणिब्रह्मणःप्रिये आसनं० कुमारशक्तिसंपन्नेकौमारि
शिखिवाहने पाद्यंददाम्यहंदेविवरदेवरलक्षणे पाद्यं० तीर्थोदकेर्महादिव्यैःपापसंहारकारकैः अर्घ्यंगृहाणभोलक्ष्मीर्देवानामुपका
रिणि अर्घ्यं० वैष्णवीविष्णुसंयुक्ताअसंख्यायुधधारिणि आचम्यतांदेवपूज्येवरदेऽसुरमर्दिनि आचमनं० पयःपंचामृतैः शुद्धैः स्नपयि
ष्येहरिप्रिये वरदेशक्तिसंभूतेवरदेविवरप्रदे पयोदधिघृतंचैवमधुशर्करयातथा पंचामृतेनस्नपनंप्रीयतांपरमेश्वरि पंचामृत
स्नानं० गंगाजलंसमानीतंसुगंधिद्रव्यसंयुतं स्नानार्थंतेमयादत्तंगृहाणपरमेश्वरि स्नानं० रजताद्रिसमंदिव्यंक्षीरसागरसन्निभं
चंद्रप्रभासमंदेविवस्त्रंतेप्रददाम्यहम् वस्त्रं० मांगल्यमणिसंयुक्तंमुक्ताफलसमन्वितम् दत्तंमंगलसूत्रंतेगृहाणसुरवल्लभे कंठसूत्रं०
सुवर्णभूषितंदिव्यंनानारत्नसुशोभितम् त्रैलोक्यभूषितेदेविगृहाणाभरणंशुभम् आभरणानि० रक्तगंधंसुगंधाढ्यंअष्टगंध
समन्वितम् दास्यामिदेविवरदेलक्ष्मीर्देविप्रसीदमे गंधं० हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितम् सौभाग्यद्रव्यसंयुक्तंगृहाणपरमे
श्वरि सौभाग्यद्रव्यं० नानाविधानिपुष्पाणिनानावर्णयुतानिच पुष्पाणितेप्रयच्छामिभक्त्यादेविवरप्रदे पुष्पाणि० अथांगपूजा० वर
दलक्ष्म्यैनमःपादौपूजयामि० कमलवासिन्यै० गुल्फौ० पद्मालयायै० जंघेपू० श्रियै० जानुनीपू० इंदिरायै० ऊरूपू० हरिप्रियायै० नाभिंपू०

लोकधात्र्यैन· स्तनौपू॰ विधात्र्यै॰ कंठपू॰ धात्र्यैन॰ नासांपू॰ सरस्वत्यै॰ मुखंपू॰ पद्मनिधयेन॰ नेत्रेपू॰ मांगल्यै॰ कर्णौपू॰ क्षीरसागरजायै॰
ललाटंपू॰ श्रीवरदलक्ष्म्यै॰ शिरःपू॰ श्रीमहाकाल्यै॰ सर्वांगंपू॰ ३० धूपंदास्यामितेदेविगोघृतेनसमान्वितम् प्रतिगृह्णमहादेविभक्ता
नांवरदप्रिये धूपं॰ साज्यंचवर्ति॰ दीपं॰ नैवेद्यंपरमंदिव्यंदृष्टिप्रीतिकरंशुभम् भक्ष्यभोज्यादिसंयुक्तंपरमान्नादिसंयुतं नैवेद्यं॰
नागवल्लीदलैर्युक्तंचूर्णक्रमुकसंयुतं वरलक्ष्मीगृहाणत्वंतांबूलंप्रतिगृह्यतां तांबूलं॰ सुवर्णंसर्वधातूनांश्रेष्ठंदेविपरंसदा भक्त्यादद
मिवरदेस्वर्णवृष्टिंचदेहिमे दक्षिणां॰ नीराजनंसमांगल्यंकर्पूरेणसमान्वितम् चंद्रार्कवन्हिसदृशंगृण्हदेविनमोस्तुते नीराजनं॰ स
र्वमंगलमांगल्येसर्वपापप्रणाशिनि दोरकंप्रतिगृण्हामिसुप्रीताहरिवल्लभे दोरकग्रहणम् करिष्यामिव्रतंदेवित्वद्भक्तस्त्वत्परायणः
श्रियंदेहियशोदेहिसौभाग्यंदेहिमेशुभे दोरकबंधनम् क्षीरार्णवसुतेलक्ष्मीश्चंद्रस्यचसहोदरि गृहाणार्घ्यंमहालक्ष्मीदेवितुभ्यंन
मोनमः पुनरर्घ्यम् श्रीवृक्षस्यदलंदेविमहादेवप्रियंसदा बिल्वपत्रंप्रयच्छामिपवित्रंतेस्तुनिर्मलं बिल्वपत्रं॰ इहजन्मनियत्पापंम
मजन्मांतरेषुच निवारयमहादेविलक्ष्मीर्नारायणप्रियं प्रदक्षिणाः दामोदरिनमस्तेस्तुनमस्त्रैलोक्यनायिके हरिकांतेनमस्तेस्तुत्राहि
मांदुःखसागरात् नमस्कारः क्षीरार्णवसमुद्भूतेकमलेकमलालये प्रयच्छसर्वकामांश्चविष्णुवक्षस्थलालये व्रतसमर्पणम् छत्रंचा
मरमांदोलंदत्वाव्यजनदर्पणे गीतवादित्रनृत्यैश्चराजसन्माननैस्तथा सूपचारैःसमभ्यर्च्यक्षमाप्यचमहेश्वरीम् वरलक्ष्मीर्महादेवि
सर्वकामप्रदायिनि यन्मयाचकृतंदेविपरिपूर्णंकुरुष्वतत् प्रार्थना एकविंशतिपक्कान्नैर्घृतशर्करसंयुतैः इंदिराप्रीयतांदेविपद्मेशानि
प्रयच्छमे इंदिराप्रतिगृह्णातिइंदिरावैददातिच इंदिरातारकोभाभ्यामिंदिरायैनमोनमः इतिवायनमंत्रः पंचवायनकंदत्वापक्कान्नै
श्चसदक्षिणैः विप्रायचाथयतयेदद्येतुब्रह्मचारिणे सुवासिन्यैततस्त्वेकंदापयेच्चयथाविधि इतिपूजा अथकथा सूतउवाच कैलास-
शिखरेरम्येसर्वदेवनिषेविते गौर्यासहमहादेवोदीव्यन्नक्षैर्विनोदतः जितोसित्वंमयाचाहपार्वतीपरमेश्वरं सोपित्वंचजितेत्याहसाविवा
दस्तयोरभूत् चित्रनेमिस्तदापृष्टोमृषावादमभाषत तदाकोपसमाविष्टागौरीशापंददौततः कुष्ठीभवमृषावादिन्चित्रनेमिर्हतप्रभः नानृतं

हिसमंपापंकापिहृष्ट्ंकृतंमया चित्रनेमिर्महाप्राज्ञः सत्यंवदतिनोमृषा प्रसादः क्रियतांदेविदेवीमाहवृषध्वजः प्रसादसन्मुखीतस्मैविशापंकज
गाद्सा यदासरोवरेरम्येकरिष्यंतिशक्रचिव्रतम् ततः स्वर्गणिकाः सर्वावक्ष्यंतिलासमाहिताः तदातवविशापःस्यादित्युक्तः सपपातह त
नः कतिपयाहोभिश्चित्रनेमिः सरोवरे कुष्ठीभूत्वावसंस्तत्र ददर्शस्वर्विलासिनीः देवतापूजनासक्ताः पप्रच्छप्रणिपत्यताः किमेतद्भो
महाभागाः किंपूजाकिंचवाञ्छितं किंमयाचह्यनुष्ठेयमिहामुत्रफलप्रदं इतिव्रतंचित्रनेमिः पप्रच्छस्वर्विलासिनीः येनाहंगिरिजाशापान्मो
क्ष्यामिचिरदुःखतः अप्सरसऊचुः नाऊचुः क्रियतामद्यव्रतमेतदनुत्तमम् वरदलक्ष्मीव्रतंदिव्यंसर्वकामसमृद्धिदम् यदारवौकुलीरस्थे
मासेचश्रावणेतथा गंगायमुनयोर्योगेतुंगभद्रासरित्तटे तस्मिन्वैश्रावणेमासिशक्लपक्षेभृगोर्दिने शारब्धव्यंव्रतंतत्रमहालक्ष्म्यायतात्मभिः
स्वर्णप्रतिमांकुर्याच्चतुर्भुजसमन्विताम् पूर्वंगृहमलंकृत्यतोरणैरंगवल्लिभिः गृहस्यपूर्वदिग्भागेईशान्यांचविशेषतः प्रस्थमितांस्तंडुलांश्च
भूमौनिक्षिप्यपूजयेत् संस्थाप्यकलशंतत्रतीर्थतोयैःप्रपूजयेत् फलानिचविनिक्षिप्यस्वर्णंप्रक्षिपेत्ततः पल्लवांश्चविनिक्षिप्यवस्त्रेणा
च्छादयत्ततः प्रतिमांस्थापयेत्तत्र पूजयेच्चयथाविधि अग्न्युत्तारणपूर्वंतुशुद्धस्नानंयथाक्रमम् पंचामृतेनस्नपनंकारयेन्मंत्रतःसुधीः
शुद्धस्नानंततः कृत्वादेवीसूक्तेनवैततः अष्टगंधैःसमभ्यर्च्यपल्लवैश्चसमर्चयेत् अश्वत्थवटबिल्वाम्रमालतीदाडिमास्तथा एतेषांपत्रमा
दायएकविंशतिसंख्यया नानाविधानिपुष्पाणिमालत्यादीनिवैततः धूपदीपैर्महालक्ष्मींपूजयेत्सर्वकामदाम् पायसंभक्ष्यभोज्यंचनाना
नाव्यंजनसंयुतम् एकविंशतिसंख्याकैरपूपैःपूजयेच्छिवां निवेद्यसर्वंदेव्यैतुवरंसवृणुयात्ततः एवंसंपूजयित्वाचतांबूलाद्यैश्चषोडशैः
उपचारैःषोडशभि धूपदीपैरनेकधा नृत्यगीतादिसहितोदेवींसंप्रार्थयेच्छ्रियम् रमांसरस्वतींध्यायन्शचींचप्रियवादिनीम् अप्सरो
भिः कृतंसम्यक्व्रतंसर्वसमृद्धिदम् पूजावसानपर्यंतंचित्रनेमिरलोकयत् होमधूमंसमाघ्रायशतदीपप्रभावतः गतकुष्ठः स्वर्णतेजो-
शुचिस्तद्गतमानसः तत्रैवांचितयन्सम्यक्मनःसंधायतद्व्रतं पंचवायनकंदत्वाकथांश्रुणवीतयत्नतः यथामौनंगृहीत्वातुपंचार्तिक्येन
पूजयेत् व्रतंचकुर्वतांगृह्यएकंपूगफलंतथा पर्णैकंचूर्णसहितंचवर्णीयंप्रयत्नतः आरक्तंयदिजायेतकुर्याद्व्रतमनुत्तमं नोचेन्नतद्व्रतं

कार्यंसर्वथास्मृतिमिच्छता अनेनैवविधानेनव्रतंगृण्हीतयत्नतः अहंयत्नात्करिष्यामिव्रतंसर्वसमृद्धिदम् इत्युक्त्वासर्वदेवांस्तुकारयामास
तत्क्षणात् सुवर्णनिर्मितांदेवींवस्त्रालंकारसंयुतां पूर्वोक्तेनविधानेनपूजांकृत्वाप्रयत्नतः पंचवायनकंदत्वाकृत्वातेभ्योयथाक्रमं ततो
वैणवपात्राणिफलान्नैश्चसदक्षिणैः विप्रायचातिथयेदद्याद्वैतुब्रह्मचारिणे सुवासिन्यैततस्त्वेकमर्पितंचित्रनेमिना एवंसम्यक्क्रमेणै
तद्दत्वावायनपंचकम् ततोगृहंगतंतेनदेवींनत्वायथाक्रमम् ततोनुज्ञांचसंप्रार्थ्यभक्षणार्थंततोव्रती नागवल्लीदलंत्वेकंक्रमुकंचू
र्णवर्जितम् भक्षयित्वातुचैलांतेदंतांतेचनिरीक्ष्यच आरक्तेचततोजातेव्रतस्यास्यप्रभावतः अद्याहंगतपापोस्मिदेव्यादर्शनयोग
तः एतत्सम्यग्व्रतंचीर्णंभक्तिभावेनयन्मया चित्रनेमिर्व्रतंकृत्वाकैलासंशंकरालयम् गत्वाप्रणम्यदेवेशंदेवींसादरपूर्वकम् पार्वती
चतदाप्राहचित्रनेमेस्त्वपुत्रवत् पालनीयोमयात्वंचेत्सत्यमित्यवधार्यताम् चित्रनेमिस्तदाप्राहपार्वतीहरवल्लभे तवपादांबुजंदृष्टंव
रलक्ष्मीप्रसादतः महादेवस्तदाप्राहचित्रनेमिंशुचिव्रतम् अद्यप्रभृतिकैलासेभुंक्ष्वभोगान्यथेप्सितान् पश्चाद्गंतासिवैकुंठंव्रतस्यास्य
प्रसादतः पार्वत्यापिकृतंपूर्वंपुत्रलाभार्थमेवच लब्धश्चषण्मुखोदेव्याव्रतराजप्रसादतः नंदश्चविक्रमादित्योराज्यमापसोमहाव्रती नंदश्च
कांतयाहीनोकांतांलब्ध्वासुलक्षणां तयाचतद्व्रतंकृत्स्नंकृतंवैपुत्रहेतवे पुत्रंप्रसूषुवेसाचत्रैलोक्यभरणक्षमं इहभुक्त्वातुविपुलान्
भोगानेवसुमनोहरान् तदाप्रभृतिलोकेस्मिन्वरलक्ष्मीव्रतंशुभम् व्रतंकरोतियानारीनरोवापिशुचिव्रतः भुक्त्वाभोगांश्चविपुलानंतेशिवपुरंव्र
जेत् स्व्यातंपुण्यंमयाविप्रावरलक्ष्मीव्रतंशुभं यइदंशृणुयान्नित्यंश्रावयेद्वासमाहितः धनधान्यमवाप्नोतिवरलक्ष्मीप्रसादतः इतिश्रीभवि
ष्योत्तरपुराणेश्रावणशुक्लशुक्रवारेवरदलक्ष्मीव्रतंसंपूर्णम् अथश्रावणमंदवारेशनैश्चरव्रतं अद्येत्यादिममसमस्तरोगपरिहारार्थंदृ
ष्टादृष्टश्रुतस्मृतिपुराणोक्तफलप्राप्त्यर्थं जन्मलग्नाष्टमद्वादशचतुर्थस्थानस्थितशनैश्चरजनितसमस्तदुःखपीडानिरासार्थंशनैश्चरव्रतंकरिष्ये निर्विघ्नतासिद्ध्यर्थंगणपतिपूजनंकलशाराधनंचकरिष्ये कृष्णांगायनमःआ
वाहयामि नीलाय·आसनं· श्वेतकंठाय·पाद्यं· नीलमयूखाय·अर्घ्यं· नीलोत्पलदलाय·आचमनं·नीलदेहाय·स्नानं ·कुब्जाय·पंचामृत
स्नानं· शनैश्चराय·शुद्धोदकस्नानं· दीप्यमानजटाधराय·वस्त्रं·पुरुषगात्राय·यज्ञोपवीतं·स्थूलरोमाय·अलंकारान्·नित्याय·गंधं॰

धूर्ताय· अक्षतान्· सदावृमाय· पुष्पं· मंदाय· धूपं· निस्पृहाय· दीपं· तामसाय· नैवेद्यं· नीलोत्पलाय· आचमनं· कृष्णवपुषे· करोद्वर्तनं·
दीर्घदेहाय· तांबूलं· मंदगतये· दक्षिणां· ज्ञाननेत्राय· प्रदक्षिणाम्· सूर्यपुत्राय· नमस्कारं· कोणस्थः पिंगलोबभ्रुः कृष्णोरौद्रोंतकोयमः
सौरिः शनैश्वरो मंदः पिप्पलादेनसंस्तुतः एतानि शनिनामानि जपेदश्वत्थसन्निधौ शनैश्वरकृतापीडानकदाचिद्भविष्यति इतिप्रार्थना·
मूलतोब्रह्म· अश्वत्थाय नमोनमः सप्तप्रदक्षिणाःसप्तनमस्कारान्कुर्यात् इतिपूजा अथकथा दशरथउवाच नमःकृष्णांगनीलायश्वेत
कंठनिभायच नमःपुरुषगात्रायस्थूलरोमायतेनमः नमोमंदगतेतुभ्यंनिस्पृहायनमोनमः नित्यानित्यस्कधार्ताय सदावृमायतेनमः तप
सादग्धदेहायनित्ययोगधरायच नमस्तेज्ञाननेत्राय कश्यपायार्कसूनवे इतिश्रुत्वानृपश्रेष्ठंप्रसन्नश्चशनिस्तदा शनिरुवाच तुष्टोहंतव
राजेंद्र तपसापौरुषेणच दास्यामितेवरंभद्रंनिश्चयाद्रघुवंशज दशरथउ० अद्यप्रभृतिपिंगाक्षपीडाकार्यानतेमम जगत्त्रयंत्वयानाथ
पीडितोदुःखितोजनः तस्माज्जगत्त्रयंदेवरक्षणीयंत्वयानघ शनिरुवाच ग्रहाणामहमेकोहिमदधीनाग्रहाःसदा तपसानवतुष्टोहंपीडां
नचकरोम्यहं जगत्त्रयंमहाराजदुःखितंमेसदैवहि दशरथउ० भगवन्केनविधिनात्वदीयाराधनंभवेत् येनतुष्टोसिपिंगाक्षनत्सर्वंवक्तु
मर्हसि शनैश्वरउ० श्रावणेमंदवारेषु दंतधावनपूर्वकम् स्नानंस्कगंधतैलेननित्यकर्मसमाचरेत् कर्तव्यंसर्ववारेषुनेनतुष्टोस्म्यहंनृप शृ
विभूत्वाशमीवृक्षंगत्वातत्रैवपूजयेत् तदभावेथराजेंद्रगत्वाश्वत्थंप्रपूजयेत् तत्रसंपूज्यमांराजन्गंधपुष्पाक्षतादिभिः धूपदीपैश्चनैवेद्यै
स्तांबूलप्रार्थनादिभिः वेष्टयेत्सप्तसूत्रैश्चनमस्कारांस्तथैवच सप्तप्रदक्षिणाःकृत्वाश्रुत्वापुण्यकथांममां एवंविधांस्त्रयस्त्रिंशन्मंदवारान्कु
र्यान्मे ततःशांतिंचमेवारेकुर्यादुद्यापनंशुभं आचार्यंवरयेत्तत्रश्रोत्रियंवेदपारगं स्वर्णस्यशमीवृक्षंतदभावेतुपिप्पलं मदीयांप्रतिमांकुर्या
ल्लोहमत्वरसंयुताम् द्विभुजंदीर्घदेहंचदंडपाशधरंतथा पिंगाक्षंस्थूलदेहंचश्वेतग्रीवंतथार्चयेत् रुक्मपत्रंतयासप्त कृष्णवस्त्राणि
वेष्टयेत् उपवीतादिभिर्द्रव्यैःपूर्ववद्देवमर्चयेत् शमग्निरितिमंत्रेणहुनेदष्टाधिकंशतं कृसरान्नंहोमयेत्तुतेनैवबलिमुद्धरेत् कृष्णाधे
नुंसवत्सांचदद्यादथपयस्विनीं सप्तविप्रान्समभ्यर्च्यगंधपुष्पफलादिभिः वस्त्राणिदक्षिणांचैवयथाशक्त्याप्रदापयेत् तिलमाषविमिश्रान्नै

भोजियेद्विजसत्तमान् तेषांगृह्याशिषंपश्चाद्भुंजीयाद्बंधुभिःसह सवत्सप्रतिमांचैव आचार्यायनिवेदयेत् एवंकृतेथराजेंद्र सर्वाभीष्टंददा
म्यहं जपेद्दिदं पठेत्स्तोत्रंभक्त्याचैवकृतांजलिः सप्तजन्मसुराजेंद्र तस्यैश्वर्यंभविष्यति पुत्रपौत्रयुतोनित्यंततोमोक्षमवाप्स्यति तुष्टो
हंतवराजेंद्र पीडांनचकरोम्यहं गोचरे वाथवर्गेपिविषमस्थोयदाशनिः तुष्टोराज्यप्रदः सद्यः क्रुद्धोराज्यापहारकः जन्मस्थोद्वादशस्थो
वाअष्टमोवापिकुत्रचित् श्रावणेमंदवारेषुपूजितोहंसुखप्रदः ब्रह्माशिवोहरिश्चैवमुनयः सनकादयः लक्ष्मीरुमाचसावित्रीमुनिप-
त्न्यश्चवैशकभाः नृपाअन्येमयासर्वेराज्यभ्रष्टाश्चपीडिताः देशाश्चनगरग्रामागजोष्ट्रावथवाजिनः रौद्रदृष्ट्यामयादृष्टानाशमायांतितत्क्ष
णात् अतोमयापीडितानांमनुष्याणांनराधिप परिहर्तुंनशक्ताश्चब्रह्मविष्णुमहेश्वराः एतच्छ्रुत्वाशनेर्वाक्यंराजापरमहर्षितः प्रदक्षिणां
नमस्कृत्यवरंप्राप्यपुरंययौ गत्वास्वनगरंराज्ञापूजितोवैशनैश्चरः श्रावणादिषुवारेषुप्रसन्नोभूच्छनैश्चरः पृथ्वीपतिरभूद्राजाग्रहरा
जप्रसादतः यइमंप्रातरुत्थायसौरिवारेसदार्चयेत् तस्याभीष्टप्रदोमंदोभविष्यतिनसंशयः स्त्रियावापुरुषेणापिशनैश्चरव्रतंकृतं
मुच्यतेसर्वपापेभ्योसर्वाभीष्टंलभेत्क्षणात् ब्राह्मणोवेदसंपूर्णःक्षत्रियोराज्यमाप्नुयात् वैश्यस्तुलभतेवित्तंशूद्रःसुखमवाप्नुयात्
कन्यार्थीलभतेकन्यांपुत्रार्थीलभतेसुतं कामार्थीलभतेकामान्मोक्षार्थीलभतेगतिम् मुच्यतेसर्वपापेभ्योब्रह्मलोकंसगच्छति इतिश्रीस्कं
दपुराणेशनिवारव्रतोद्यापनंसंपूर्णम् अथव्यतीपातव्रतंलिख्यते युधिष्ठिरउवाच श्रुतानित्वन्मुखाद्देवव्रतानिसकलान्यपि व्यती
पातव्रतंब्रूहिसोद्यापनफलान्वितम् कृष्णउवाच पुराव्यासेनकथितंशुकायपृष्टवतेहृदये तदहंतंकथयिष्यामिशृणुराजन्यसत्तम
शुकउवाच कथंयोगस्ततःपूज्योव्यतीपातमहामुने पूजितेकिंफलंतातविधिंमेब्रूहिविस्तरात् व्यासउवाच इममर्थंपुरापृष्टोथ
रण्याचजगद्गुरुः व्यतीपातव्रतंसर्वंयत्समाख्यातवान्प्रभुः तदहंतंकथयिष्यामिपरलोकहितायच धरण्युवाच यस्त्वयोक्तोव्यतीपा
तस्तस्यकर्मवदस्वतत् कदाजातःकथंपूज्यःपूजितेचात्रकिंफलम् श्रीवराहउवाच यदाबृहस्पतेर्भार्यांताराजयाहशीतगुः मि
त्रत्वात्साहतंसूर्यस्त्यजदारान्बृहस्पतेः तदासोमोनिरुद्धश्चरविंक्रूरंविलोकयत् आदित्योपिनदारुष्टःक्रुधासोमंविलोकयत् उभयोर्दृष्टिस

पातान्नकुद्वयोः सोमसूर्ययोः उद्यनास्योभवद्घोरः पुरुषः पिंगलेक्षणः दष्टोष्ठदीर्घदशनो भ्रुकुटीकुटिलाननः पिंगलश्मश्रुकेशांतो लंबभ्रूश्च
कृशोदरः शिरालो दीर्घजिह्वश्च सूर्याग्नियमसन्निभः त्रैलोक्यं भक्षितुं सामोर्वी दुर्भ्यां निवारितः सोपृच्छदथ सूर्येंदू क्षुधितो भक्षयामि
किं त्रैलोक्यं भोक्तुकामोहं भवद्भ्यां विनिवारितः क्रोधक्षोभो मां बाधते पान्येनेकृतनेनमया सोमसूर्यावूचतुः कोपदृष्टेर्नौ विविधादतिपाताद्
वान भूत् व्यतीपातस्ततो नाम भवान् ख्याविभविष्यति सर्वेषामपि योगानां पतिस्त्वं भविता सदा तेषां मध्ये पुण्यतमो भविष्यसि न संशयः य
स्मिन्काले त्वदुसन्तिः कल्याणं नैव कारयेत् स्नानदानादिकं किंचित्कृतानैगक्षय भवेत् इति नाभ्यां वरं दत्तस्ततः प्रभृति योगराट् त्रिषु लोकेषु वि
ख्यातो बहुपुण्यफलप्रदः व्यतीपात महावीर त्रैलोक्यव्यापकप्रभो त्वयि मासेनरैः किंचिद्दातव्यं शुभकांक्षिभिः न हन्तुं क्षुधितो भुंक्ष्व नो चेत्को
पो निपात्यतां व्यतीपात उ॰ नमो वां पितरौ मेस्तु क्रोधपातस्य भाजनः दत्तो भवद्भ्यामधुना प्रसादः कीर्त्यतां मम रवींदावूचतुः स्नानदानज
पहोमपूर्वकं यस्त्वदीयसमये समाचरेत् तस्य पुण्यमिह ते प्रसादतोनंतमस्तु सुकृतं वै भवार्णवे तत्कालेन न विदधाति पूजनं यस्तस्य एव भवतु भ
वेत्सभद्ररूपः पुत्रायुर्धनसुखकीर्तिपुष्टिरूपारोग्याद्यं गुणिजनवल्लभं च पूर्वम् धरण्युवाच अस्यार्चनविधिं ब्रूहि विस्तरेण जगद्गुरो कृतेन
स्मिन्व्रते देव किं फलं प्राप्यते नरैः वराह उ॰ एतस्मात्कारणाद्भूमे व्यतीपातः स उच्यते अर्चिते च फलं यत्स्यात्तदुक्तं च समासतः विस्तरेणार्चन
विधिं कथितुं केन शक्यते यथार्चितो व्यतीपातः सविधिः श्रूयतामिह शुभे व्यतीपातदिने वगाह्य वेलां सेव्यमानेन महानदीजलम् उपाव
से हूपवमानजापकोजपेच्च मंत्रं व्यतीपातते नमः छादिते ताम्रवस्त्रेण शर्करापूरिते घटे कांचनाद्यं प्रतिष्ठाप्य हेममष्टभुजं नरम् अ
ष्टभुजमहादशभुजे उत्पत्तिवाक्ये व्यतीपातमूर्तेः अष्टदशभुजश्रवणादुत्पत्तिवाक्यानुसारित्वाच्च विनियोगवाक्यस्य तथा भगवद्गीता
सु च चत्वारो मनवस्तथेति चत्वारश्चतुर्दशेत्यर्थः गंधपुष्पाक्षतैर्धूपैर्दीपवस्त्रनिवेदनैः भक्ष्यैर्भोज्यैः फलैश्चित्रैर्मासि मार्गशिरेऽर्चयेत् नमस्ते-
स्तु व्यतीपात सोमसूर्यसुत प्रभो यद्दानादिकृतं किंचित्तदनंतमिहास्तु मे इत्युक्त्वा पंचरत्नाढ्यं सपुष्पाक्षतमंजलिं प्रक्षिप्य तत्क्षणादेव सर्व
पापक्षयो भवेत् यदि द्वितीये च दिने व्यतीपातो भवेन्नहि तदा पूर्वोपवासस्तु प्रदद्यात्सकलं गुणे पारणं च व्यतीपाते कुर्यात्संप्राश्य गोमयं अथै

कस्मिन्दिनेधात्रिव्यतीपातोभवेद्यदि तत्रैवाह्नितदादत्वाउपवासंसमाचरेत् कुर्यादेवंमासिमासिव्यतीपातांस्त्रयोदश चतुर्दशेतुसंप्राप्तेकुर्या
दुद्यापनंबुधः व्यतीपाताय स्वाहेतितिलीरवृक्षसमच्छनम् आज्यक्षीरफलानांचहोतव्यंवैशतंशतं शर्करापूर्णकुंभंतिसहसोपस्क
रंनरं शय्यांसोपस्करैर्युक्तांमदद्याद्गुरुदेशिने वंदेव्यतीपातमहंमहांतंरवींदुसूनुंसकलेष्टलब्ध्यै समस्तपापस्यममक्षयास्तुपुण्यस्य
चानंतफलंममास्तु इतिसमीर्यगुरुंपरिपूज्यतंकटककुंडलकंठविभूषणैः सकलमेवसमर्प्ययथोचितंतदुपलभ्यमिहशृणुतन्महि गां
चपयस्विनींदद्यात्स्वर्णवरदक्षिणां तस्मैशय्यांसमांदायसारदारुमयींदृढाम् दंतपत्रसितारम्यांहेमपट्टैरलंकृताम् हंसतूलीप्रतिच्छ
न्नांसुभगेंदुपधानकां मच्छादनपटीयुक्तांधूपगंधादिवासिताम् तांबूलंकुंकुमंमोदंकर्पूरागरुचंदनं दीपकोपानहौछत्रंमदद्याच्चामरासन
ने देहांतेसूर्यलोकायविमानैरत्नसन्निभैः अप्सरोगणसंभोगैर्गीतिनृत्यविलासिभिः गत्वाकल्पाऊदशतंसादरंत्रिदशार्चितः तदंतेराजराजः
स्याद्रूपसौभाग्यभाग्भवेत् कीर्त्याद्योगुणपुत्रायुरारोग्यधनधान्यवान् प्रतापादिमहैश्वर्ययुक्तोभोगीबहुश्रुतः जनसौभाग्यसंपन्नोयाव
ज्जन्मायुःकायुतं दर्शेदशगुणंदानंतच्छतघ्नंदिनक्षये शतघ्नंतच्चसंक्रांतौशतघ्नंविषुवेततः युगादौतद्दशगुणमयनेतच्छतंभवेत् सोमग्र
हेतच्छतघ्नंतच्छतघ्नंरविग्रहे असंख्येयंव्यतीपातेदानंवेदविदोविदुः उत्पत्तौलक्षगुणंकोटिगुणंभ्रमणन्नाडिकायांतु अर्बुदगुणितंपत
नेजपदानाद्यक्षयंपतिते जन्मद्वाविंशतिर्नाडीभ्रमणंत्वेकविंशतिं व्यतीपातस्यपतनंदशसमस्थितंविदुः संप्रार्थितंयद्व्यतीपातकालेपुनः
पुनस्तद्विशीतरश्मी प्रयच्छतः कल्पशतार्बुदानिविवर्धमानंनहिहीयतेतत् तस्मान्महितंव्यतीपातपूजांकुरुष्वचेत्पुण्यमनंतमिष्टं यदिस्थिर
लंशननंतुवेष्टुंसमस्तविरिष्टंयदभीप्सितंतत् गणयित्वाव्यतीपातकार्याभूतिव्यतीनरः सर्वपापहरोतस्यलभतेफलमीप्सितं पततिस्त्रिरव
तियः शृणोतिवैतत्कथयतिपश्यतिकारयत्यवश्यम् इतिशशिदिवसैयास्यमोपिदेवैश्चिरमयपरिपूज्यमानवास्ते इतिवराहेनोक्तं
व्यतीपातव्रतं अथतत्रैवनारदीयेव्यतीपातव्रतं युधिष्ठिरउ० केनव्रतेनचीर्णेननपश्येद्यमशासनम् परिपृच्छाम्यहंविप्रव्रतानामुत्त
मंव्रतं तद्व्रतंब्रूहिविप्रर्षेत्वत्तामवतिस्फप्रियं मार्कंडेयउवाच शृणुराजन्व्रतमिदंहर्यश्वेनपुराकृतम् तेनराज्ञातुवैदत्तंसूकरायचद्वः

खिने, कदाचिन्मृगयां कर्तुं हर्य्यश्वो राजसत्तमः वनमध्ये चरन्राजा ह्यपश्यत्तत्रैव सूकरम् दग्धपादकटिं चैव दग्धकंठमुखोदरम् दृष्ट्वा तथाविधं तं तु
कृपां चक्रे नृपोत्तमः केन कर्मविपाकेन त्वं ह्यवस्थामिमामवाप्तवान् अहो कष्टमहो कष्टं सूकरेणोपभुज्यते अवश्यमपि भोक्तव्यं कृतं कर्म शुभाशुभं
इत्युक्त्वा तत्स्वरूपेण राजा तं प्राह सूकरम् ईदृशी किमवस्था ते तन्मे ब्रूहि च सूकर तच्छ्रुत्वा नृपतेर्वाक्यं निःश्वसन् सूकरो मुहुः स्मृत्वा पुरा
कृतं कर्म प्रत्युवाच नृपं प्रति शृणु राजन्नहं पूर्वं वैश्यो धनबलान्वितः आशाकृष्टो न दत्तं हि आर्थितेभ्यश्च किंचन श्रुताश्च बहुशो धर्माः पुराण
श्रुतिचोदिताः तथापि पापबुद्ध्या मे नाकृतं चात्मनो हितं आशापाशमनुप्राप्तः शुभशास्त्रविवर्जितः कृतवान् पापमेवाहं न किंचित्सुकृतं कृ
तम् एकदा तु द्विजः कश्चिद्व्यतीपाते गृहं मम आगतो याचयन्मां च न किंचिद्दत्तवानहं मया निराकृतोऽत्यंतं वचोभिर्निष्ठुरैस्तथा व्यतीपातो
घोरे वैश्य किंचिद्देह्यर्थिने खलु तन्मे रूपं भवतीत्याप्स्यसे त्वन्यजन्मनि कुपितेन मया तस्मै निष्ठुरा वाक्समीरिता ततश्च कुपितो विप्रो मम
शापमथाददत् आशाग्निर्दहते यद्वन्ममांगानि पृथक्पृथक् तथैव तु तवांगानि दावाग्निः पुरुषाधम अरण्ये निर्जले देशे निर्जने द्रुमवर्जि
ते तत्र सूकरयोनौ त्वमुत्पन्नो दुःखमाप्नुहि प्रसादितो मया पश्चात्पुनरप्युक्तवांस्तदा उद्धरिष्यति राजा त्वां सूकर त्वं दयापरः इत्युक्त्वा च
जगामाथ अन्यवैश्यगृहं प्रति तेन शापेन वै राजन् सूकरत्वमवाप्तवान् अहं दुःखं च संजातो विजले निर्जले वने राजोवाच केन त्वं
मुच्यसे पापान्ममाचक्ष्वेह सूकर येन शक्योऽप्यहं कर्तुं तव शापस्य संक्षयं वराह उवाच श्रूयतां मम राजेंद्र मुक्तिः स्याद्येन कर्मणा व्य
तीपातव्रतं नाम कृतं राजंस्त्वया पुरा यथा मातास्कृतस्येह सर्वत्र सुखकारिणी तथा व्रतमिदं राजन्निह लोके परत्र च यथैषा ह्युदितः सू
र्योऽप्यशेषं च तमो दहेत् व्यतीपातस्तथैवेह सर्वपापं व्यपोहति यथा विष्णुर्ददातीह नृणां परमनिर्वृतिम् दत्तान्येतानि [illegible] या व्रतमिदं
शुभंम् शतमिंदुक्षये दानं सहस्रं तु दिनक्षये विषुवे शतसाहस्रं व्यतीपाते त्वनंतकम् विधानं व्यतिपातस्य शृणु राजन्प्रयत्नतः द्वाविंश
तिं समुत्पत्तौ २२ भ्रमणे चैकविंशतिः २१ पतने दश नाड्यस्तु १० पतिते सप्त नाडिकाः ७ यत्फलं तत्समुत्पत्तौ भ्रमणे कोटिरुच्यते पतने द
शकोट्यस्तु पतिते दत्तमक्षयं आकृतिर्मूर्च्छना काष्ठा शैल तुल्याश्च नाडिकाः लक्षकोट्यर्बुदगुणमनंतं स्याद्यथाक्रमम् व्यतीपातविभागं

षुदानमुक्तं नृपोत्तम शंखकर्णप्रलंबोष्ठं लंबश्मश्रुं दीर्घनासिकं अष्टनेत्रं चतुर्वक्त्रं भुजैरष्टादशैर्युतं शतयोजनविस्तीर्णं सोमसूर्यसुतं ध्रुवम्
माघे वा फाल्गुने मार्गे वैशाखे श्रावणेऽथवा व्यतीपातो दिने यस्मिन् आरभेद्व्रतमुत्तमम् व्यतीपातव्रते सम्यक् शुचिर्भूत्वा समाहितः पंचगव्यांति
लैर्धात्र्यैः शुचिः स्नायात्समाहितः ततः संकल्पयेदेतद्व्रतं सर्वार्थसाधकं व्यतीपातव्रतेनेति घ्नन् स्वर्णदानकरोम्यहम् नवारोन च न चांद्रेण
तिथिर्न च चंद्रमाः यदा वै जायते भक्तिस्तदा ग्राह्यमिदं व्रतम् किं व्रतैर्बहुभिश्चीर्णैः किं दानैर्बहुभिः कृतैः सर्वेषां फलमाप्नोति व्यतीपात
व्रतेन वै इति संकल्प्य मनसा व्यतीपातव्रतं चर सर्वपापविशुद्ध्यर्थं यावत्संवत्सरो भवेत् आमंत्र्य तद्दिने विप्रं वेदवेदांगपारगम् तिलैः पू
र्णं शरावं च सगुडं गुरवे र्पयेत् शंखचक्रगदापाणिं पद्महस्तं हिरण्मयम् वस्त्रयुग्मेन संवेष्ट्य पूजयेद्गरुडध्वजम् उपचारैः षोडशभिः पू
जयित्वा समाहितः हेमदानं ततः कुर्याद् द्विधा द्विभवसारतः मंत्रेणानेन विधिवत्करे धृत्वा सुवर्णकम् नमस्तेऽस्तु व्यतीपात सोमसूर्यसुत प्रभो
दास्यामि दानं यत्किंचित्तदक्षय्यमिहास्तु मे गुंजामात्रमपि स्वल्पं हेमविप्रकरार्पितम् गृह्यतां व्रतसिद्ध्यर्थं पूरयस्व मनोरथान् हेमाद्रिशि
खरं भूत्वा सुवर्णकोटिरुच्यते इदं क्षेत्रं कुरुक्षेत्रं साक्षान्नारायणो द्विजः सुवर्णस्य च दानेन प्रीतो भव जनार्दन नव हस्तो व्यतीपातो विंध्य-
तिश्चरणौ स्मृतौ संक्रांतिर्हृदयं स्थानं मम मावैनाभिरुच्यते पूर्णिमा पृष्ठतो ज्ञेया पंचांगं पंचपर्वणि एवं विष्णुशरीरस्य मुखं वै द्वादशी स्मृता
अमा च पितरो ज्ञेया माता मन्वादयस्तथा भगिनी द्वादशी ज्ञेया व्यतीपातस्तु सोदरः पितुः शतगुणं प्रोक्तं सहस्रं मातुरेव च भगिन्यां दश
साहस्रं सोदरे दत्तमक्षयम् व्यतीपातदिने देव किंचिद् द्विजे समर्पितम् भवत्वनंतफलदं मम जन्मनि जन्मनि एवं प्रार्थ्य हृषीकेशं नत्वा चैव
पुनः पुनः न सर्वं गुरवे दद्यात् श्रोत्रियाय कुटुंबिने व्रतोपदेष्ट्रे विप्राय पुराणज्ञाय भक्तितः ब्राह्मणान् भोजयित्वा तु व्रतमेतत्समापयेत् इदं
व्रतं मया देव गृहीतं पूर्वजन्मनि स्वर्गापवर्गदं नृणां सूकराय ददाम्यहम् एवमुक्त्वा नृपश्रेष्ठः सूकराय फलं ददौ तत्क्षणात्तेन पुण्येन सूकरो
मुक्तकिल्बिषः मुक्तः सूकरदेहाच्च सर्वाभरणभूषितः दिव्यं विमानं संप्राप्य गतो स्वर्गं च सूकरः न जानंति द्विजाः सर्वे व्यतीपातव्रतोत्तमं इहलोके
च सुखदं स्वर्गमोक्षप्रदायकं अतस्त्वं कुरु राजेंद्र व्यतीपातव्रतोत्तमं सर्वपापक्षयकरं नृणां भवति सर्वदा कुर्यादेवं मासि मासि व्यतीपातांस्त्रयोदश

चतुर्दशीतुसंप्राप्तेकुर्यादुद्यापनंबुधः आदौमध्येतथाचांतेयथाशक्तिस्तथाचरेत् निष्कत्रयेणचार्द्धेनतदर्द्धार्द्धेनवापुनः व्यती
पातस्वरूपंहिकुर्यादष्टभुजंनरः गणेशपूजनंकार्यंस्वस्तिवाचनमाचरेत् नांदीमुखांस्ततोऽभ्यर्च्य आचार्यंवरयेत्सुधीः
वरयेच्चततोविप्रान्ऋत्विजश्चत्रयोदश देवागारेतथागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकुर्यात्पट्टकूलादिवेष्टिताम्
तन्मध्येसर्वतोभद्रंरचयेल्लक्षणान्वितम् तत्पूर्वेस्थापयेत्कुंभंशर्करापूरितंशुभम् तस्योपरिन्यसेत्पात्रंताम्रंमृन्म-
यवैणवम् निष्कत्रयेणप्रतिमांसुवर्णपरिनिर्मिताम् स्वशक्त्याकारयेन्मूर्त्तिंलक्ष्मीनारायणस्यच लक्ष्मीनारायणी
मूर्त्तिंव्यतीपातसमन्विताम् स्थापयेत्प्रतिमांतत्रब्रह्माद्यावाहनंततः ततःपूजांविनिर्वर्त्यमहासंभारविस्तरैः अर्घ्यंचापिततो
देयंसुगंधैःकुसुमैर्जलैः गृहाणार्घ्यंव्यतीपातसोमसूर्यसुतप्रभो सप्तजन्मकृतंपापंत्वत्प्रसादात्प्रणश्यतु मंत्रेणानेनदेवायदद्यादर्घ्यंसमा
हितः होमंसमारभेत्पश्चात्सोमोधेनुमितिस्मृतः आकृष्णेनेतिमंत्रेणसूर्यायविधिवन्नरः अश्वत्थार्कसमिद्भिश्चशतमष्टोत्तरंतथा इदंविष्णुरि
तिमंत्रेणहोमःस्यात्पायसेनच व्याहृतीनांफलैर्होमंकुर्यादष्टोत्तरंशतम् त्रयोदशब्राह्मणांश्चभोजयेल्लड्डुपायसैः एवमाराधितान्विप्रान्द
क्षिणाभिश्चतोषयेत् आचार्यंपूजयेत्पश्चाद्गांचदद्यात्पयस्विनीम् इत्थंव्रतंतुयःकुर्यान्नरोभक्तिसमन्वितः कोटिजन्मकृतैःपापैर्मुच्यते
नात्रसंशयः अस्मिन्कृतेव्रतेराजन्वैधव्यंस्त्रीनचाप्नुयात् अकालमृत्युर्दारिद्र्यंशोकोदुःखंनजायते सर्वसौख्यमवाप्नोतिव्यतीपात
प्रसादतः इतिश्रीवराहपुराणेव्यतीपातव्रतंसोद्यापनंसंपूर्णम् अथआश्विनशुक्लैकादशीमारभ्यकार्तिकशुक्लैकादशीपर्यंतंमासो
पवासव्रतंलिख्यते हेमाद्रौविष्णुरहस्ये नारदउवाच भगवन्श्रोतुमिच्छामिव्रतानामुत्तमंव्रतम् विधिंमासोपवासस्यफलंचास्य
यथोदितम् यथाविधानरैःकार्याब्रह्मचर्यायथाभवेत् आरभ्यतेकथंपूर्वंसमासंचयथाविधि यावत्संख्यंचकर्तव्यंतद्ब्रूहिपितामह
व्रतमेतत्सुरश्रेष्ठविस्तरेणममानघ ब्रह्मोवाच साधुनारदपृष्टंहिसर्वेषांहितकारकम् यादृक्मतिमतांश्रेष्ठतच्छृणुष्वब्रवीमिते
सुराणांचयथाविष्णुस्तपतांचयथारविः मेरुःशिखरिणांयद्वद्वैनतेयस्तुपक्षिणाम् तीर्थानांतुयथागंगाप्रजानांतुयथाद्विजः श्रेष्ठ-

सर्वव्रतानां हि तद्वन्मासोपवासकम् सर्वव्रतेषु यत्पुण्यं सर्वतीर्थेषु यद्भवेत् सर्वदानोद्भवं वापि लभेन्मासोपवासकृत् अग्निष्टोमादिभिर्यज्ञै
र्विधिवद्भूरिदक्षिणैः न तत्पुण्यमवाप्नोति यन्मासपरिलंघनात् तेन दत्तं हुतं जप्तं तपस्तप्तं स्वधाकृतम् यः करोति विधानेन नरो मासमुपोषणं
प्रविश्य वैष्णवं यज्ञं पूजयेच्च जनार्दनम् गुरोराज्ञां ततो लब्ध्वा कुर्यान्मासोपवासकं वैष्णवानि यथोक्तानि कृत्वा तेनैव नान्यथा तु द्वादश्यादीनि
पुण्यानि ततो मासमुपावसेत् अतिकृच्छ्रं पराकं च कृच्छ्रं चांद्रायणं तथा मासोपवासं कुर्वीत ज्ञात्वा देहबलाबलम् वानप्रस्थो यतिर्वापि नारी
वा विधवा मुने मासोपवासं कुर्वीत गुरुर्विप्राज्ञया ततः आश्विनस्यामले पक्षे एकादश्यामुपोषितः व्रतमेतत्तु गृह्णीयाद्यावत्त्रिंशद्दिनावधि
वासुदेवं समुद्दिश्य कार्तिकं सकलं नरः मासं चोपवसेद्यस्तु स भुक्तिफलभाग्भवेत् अच्युतस्यालये भक्त्या त्रिकालं कुसुमैः शुभैः मालती
दीवरैः पद्मैः कमलैस्तु सुगंधिभिः कुंकुमागरुकर्पूरैर्विलिप्य च सुगंधकैः नैवेद्यैर्धूपदीपाद्यैरर्चयेत्तु जनार्दनम् मनसा कर्मणा वाचा पूजये
द्गरुडध्वजम् कुर्यान्नरस्त्रिषवणं महद्भक्त्या जितेंद्रियः नाम्नामेव तथालापं विष्णोः कुर्यादहर्निशम् सुरवैन च स्तुतिर्वाच्या मृषावादं वि
वर्जयेत् सर्वसत्वदयायुक्तः शांतवृत्तिरहिंसकः सुप्तो वा आसनस्थो वा वासुदेवं प्रकीर्तयेत् स्पृष्ट्वालोकेन गंधादिस्त्वाहत्नं न च कीर्तयेत्
अन्यस्य वर्जयेत्सर्वं आत्मनः शुभकांक्षिभिः गात्राभ्यंगं शिरोभ्यंगं तांबूलं च विलेपनम् व्रतस्थो वर्जयेत्सर्वं यच्चान्यच्च निराकृतं व्रतस्थो
न सदा किंचिद्दुष्कर्म स्यान्न कारयेत् देवतायतने तिष्ठेन्न गृहस्थः स्वरेद्वनम् कृत्वा मासोपवासं तु संयतात्मा जितेंद्रियः ततोर्चयेन्महा
भक्त्या गोविंदं गरुडध्वजम् पूजयेत्पुष्पमालाभिर्गंधधूपविलेपनैः वस्त्रालंकारवाद्यैश्च तोषयेदच्युतं नरः स्नापयेत्तु हरिं भक्त्या तीर्थ
चंदनवारिभिः चंदनेनानुलिप्तांगं पुष्पधूपैरनेकशः वस्त्रदानादिभिश्चैव भोजयेच्च द्विजोत्तमान् दद्याच्च दक्षिणां तेभ्यो तांबूलादि च
दापयेत् क्षमापयित्वा विप्रांश्च विसृजेन्नियतो व्रती एवं वित्तानुसारेण भक्तियुक्तेन चेतसा एवं मासोपवासं तु कृत्वाभ्यर्च्य जनार्दनं
भोजयित्वा द्विजांश्चैव विष्णुलोके महीयते एवं मासोपवासस्य त्रिंशद्दिनान्द्विजोत्तमः निर्वापयेत्ततश्चोच्चैर्विधिना येन तच्छृणु कारये
द्वैष्णवं यज्ञमेकादश्यामुपोषितः पूजयित्वा च देवेशमाचार्यानुज्ञया हरिम् अर्चयित्वा हरिं भक्त्या अभिवाद्य गुरुं तथा ततोऽनु भोजयेद्द्वि

मान् यथाशक्ति यथाविधि विशुद्धकुलचारित्रान् विष्णुपूजनतत्परान् पूजयित्वा द्विजान् सम्यक् त्रिंशद्द्भोजयेत्सुधीः तावंति वस्त्र
युग्मानि आसनादिकमंडलून् योगपट्टादिशस्त्राणि ब्रह्मसूत्राणि वै तदा दद्याच्चैव हि तेभ्यो द्विजाग्र्येभ्यः पूजयित्वा प्रणम्य च ततोनुकल्पयेच्छु-
भ्रां शय्यां स्तरणसंस्थितां वितानसंयुतां श्रेष्ठां सोपधानामलंकृताम् विष्णोस्तु कारयेन्मूर्तिं कांचनीं तु स्वशक्तितः न्यसेत्तस्यां तु शय्यायां अर्च
यित्वा स्रगादिभिः आसनं पादुके छत्रं वस्त्रयुग्मसुपानहौ पवित्राणि च पुष्पाणि शय्यायामुपकल्पयेत् एवं शय्यां तु संकल्प्य प्रणिपत्य च तान् द्विजान्
प्रार्थयेच्चानुमोदार्थं विष्णुलोकं व्रजाम्यहम् एवमभ्यर्चिता विप्रा वदेयुर्व्रतिनं तदा व्रज व्रज नरश्रेष्ठ विष्णोः स्थानमनामयं विमानं वैष्णवं दिव्यं स
शय्यापरिकल्पितम् तेन विष्णुपदं याहि सदानंदमनामयम् ततो विसर्जयेद्विप्रान् प्रणिपत्यानुगम्य च ततस्तु पूजयेद्दत्त्वा गुरुं ज्ञानप्रदायकं
तां शय्यां कल्पितां सम्यक् गुरुं व्रतसमापकम् प्रणम्य शिरसा शांतो गुरवे प्रतिपादयेत् एवं पूज्य हरिं विप्रं गुरुं ज्ञानप्रकाशकं कृत्वा मासोपवासं
च निर्वाप्य विधिवन्मुने कुलानां शतमुद्धृत्य विष्णुलोकं व्रजेन्नरः यस्मिन्वर्षे महापुण्ये कुर्वन्मासोपवासकृत् सर्वपापविनिर्मुक्तो विष्णुलोके महीय
यते नरो मासोपवासानां कर्ता पुण्यकृतां वरः पितृमातृकुलाभ्यां च समं विष्णुपुरं व्रजेत् नारी वा विधवा जाता यथोक्तव्रतचारिणी कृत्वा मासो
पवासं च व्रजेद्विष्णुं सनातनम् नारद उवाच दुष्करमिदं देव मूर्च्छाग्लानिकरं परम् अनं मासोपवासाख्यं भक्तिं जनयते च्युते पीडि
तस्य भृशं देव मुमूर्षोर्व्रतिनस्तदा त्यागो वानुग्रहो वाथ किं तु कार्यं पितामह ब्रह्मोवाच व्रतस्थं कर्षितं हन्त्या मुमूर्षुं वा नपोधनम् हस्तात्तु ब्राह्म
णास्तस्य कुर्युः सम्यगनुग्रहम् अमृतं पाययेत्क्षीरमिच्छमानं सदा निशि यथेह न वियुज्येत प्राणैः कृशीभूतो व्रती अतिमूर्च्छान्वितं
क्षीणं मुमूर्षुं क्लमपीडितम् पाययित्वामृतं क्षीरं रक्षेद्दत्वा फलानि च [illegible] व्रतचर्यो नित्यं व्रतस्थः परिपालयेत् पयोमूलफलं दत्वा र-
क्षेच्च व्रतिनं सदा एवं मासोपवासस्य आरूढः प्राणसंशये अव्रतघ्नाणि दिव्यैः परीप्से द्ब्राह्मणाज्ञया नेते व्रतं विनिघ्नंति हविर्विप्रानुमो
दनम् क्षीरौषधं गुरोराज्ञा ह्यापो मूलं फलानि च एवं कृत्वा परिरक्षेत मगुडं पायसं तथा पाययेत्क्षीरं तोयं च व्रतपश्चात्समापयेत् अथ विष्णुवचनं वि
ष्णुदर्ना विष्णुर्व्रती तथा सर्वं विष्णुमयं ज्ञात्वा व्रतस्थं क्षीणमुद्धरेत् यदा मुमूर्षुर्निश्चेष्टः परिग्लानोतिमूर्च्छितः न दा समुद्धरेत्क्षीणामिच्छतं विप्र

स्वंस्थितं परिपाल्यव्रतीदेहं व्रतशेषं समापयेत् यथोक्तं द्विगुणं तस्य फलं विप्रपुरवोदितम् इंद्रियार्थेष्वसक्तोयः सदैवविमलामतिः परि
तोषयते विष्णुं नोपवासो यतात्मनाम् किं तस्य बहुभिस्तीर्थैः स्नानहोमजपव्रतैः अजितोपींद्रियगणो जितो येन स्वचेतसा जितेंद्रियः
सदाशांतः सर्वभूतहिते रतः वासुदेवपरो नित्यं न क्लेशं कर्त्तुमर्हति कृत्वानूनं यथोक्तं तु वैष्णवपदमव्ययं प्राप्नोति पुरुषो नित्यं पुनरावृ-
त्तिदुर्लभम् ये स्मरंति सदा विष्णुं विशुद्धेनांतरात्मना ते प्रयांति परं स्थानं विष्णुलोकमनामयं ततो विष्ण्वर्चनं सम्यक् प्रातः सायाह्नमे
व च कीर्तयंत्यच्युतं ये वै ते तरंति भवार्णवम् आनंदितो न दुःखार्तः क्रुद्धः शांतोथवा हरिम् एवं यः कीर्तयेद्भक्त्या स गच्छेद्वैष्णवीं पुरीम्
गर्भजन्मजरारोगदुःखसंसारबंधनैः न बाध्यते नरो नित्यं वासुदेवमनुस्मरन् स्थावरे जंगमे सत्वे स्थूले सूक्ष्मे शुभाशुभे विष्णुं पश्यति सर्व
त्र यः स विष्णुः स्वयं नरः सर्वं विष्णुमयं ज्ञात्वा त्रैलोक्यं सचराचरम् यस्य शांता मतिस्तेन पूजितो गरुडध्वजः इदं कल्याणं कल्याप्यं व्रतानामु
त्तमं व्रतम् विष्णुलोकमवाप्नोति चक्रपाणेः प्रसादतः विधिर्मासोपवासस्य यथावत्परिकीर्तितः कृतस्त्वेतान्मुनिश्रेष्ठ सर्वलोकहिताय च कृ
त्वा विष्ण्वर्चनं भक्त्या नरो विष्णुपुरीं व्रजेत् नाभक्ताय प्रदातव्यं न देयं दुष्टचेतसे इति श्रीविष्णुरहस्योक्तं मासोपवासव्रतं संपूर्णम् अथ आ
षाढशुक्लैकादशीमारभ्य कार्तिकशुक्लैकादशीपर्यंत धारणापारणाव्रतं लिख्यते कृष्ण उवाच शृणु कौंतेय वक्ष्यामि धारणापारणाव्रतम्
बांधवादिवधोत्पन्नदोषघ्नं च सुखप्रदम् कुलवृद्धिकरं चैव सर्वेंद्रियनियामकं चातुर्मास्ये तथा चादौ मासि कौंतेय सुव्रतः पुण्याहं कारये
त्पूर्वमेकादश्यां शुभे दिने पश्चात्संकल्प्य राजेंद्र तदारभ्य व्रतं चरेत् आदौ मासे तथा चांते चातुर्मास्यमथापि वा एकस्मिन् धारणं कुर्यात्पार
णं च तथापरं उपवासो धारणं स्यात्पारणं भोजनं भवेत् पारणे तु दिने प्राप्ते अर्घ्यं पूर्वं निवेदयेत् पारणं तु ततः कार्यं मंत्रमष्टाक्षरं जपेत् अष्टो
त्तरशतं दद्यादर्घ्यं देवाय तन्मनाः समाप्ते मासि राजेंद्र कुर्यादुद्यापनं बुधः चातुर्मास्यव्रतं चाथ मासे मासे तु कारयेत् उपवासदिने प्रातः पु-
ण्याहं कारयेत्पुरा आचार्यं वरयेत्पश्चाद्ब्राह्मणांस्तु ततः परम् कुर्यात्तु प्रतिमां शुद्धां लक्ष्मीनारायणस्य वै पंचामृतैस्तथा पुष्पैस्तुलसीदल
चंपकैः मालतीकेतकीभिश्च मल्लिकाकुसुमैस्तथा रात्रौ जागरणं कुर्यात्पुराणपठनादिभिः प्रातःकाले समायाते ब्राह्मणांस्तु निमंत्रयेत् मा

सेविप्राः पंचदशाहमासोद्विगुणंभवेत् चातुर्मास्येतथाराजन्ब्राह्मणोस्तुशफविव्रतान् पश्चात्स्नानादिकंकृत्वादेवपूजांसमाचरेत् पश्चादग्निं
समाधायहोमंकुर्याद्यथाविधि विष्णुर्मोदेतिमंत्रेणजुहुयाच्चतिलोदनम् अरायिकाणेमंत्रेणजुहुयाच्चघृतोदनम् अष्टाक्षरेणमंत्रेणपाय
संजुहुयात्ततः लक्ष्मीनारायणंदेवंस्थापयेत्तत्रदेवताः पूर्णाहुतिंततोहुत्वाहोमशेषंसमापयेत् ब्राह्मणान्भोजयेत्पश्चादाचार्यंपूजयेत्त
तः एवंकृत्वामहाभागब्रह्महत्यादिपातकैः मुच्यतेनात्रसंदेहस्तस्मात्कुरुमहाव्रतम् सुग्रीवस्तुमहाराजन्हत्वावालिनमाहवे रामादिष्टंततः
कृत्वाधारणापारणाव्रतम् विमुक्तःसतदादोषान्नानापानकसंचयात् नारदेनतथाराजन्पूर्वजन्मनिशूद्रतः द्विजानामुपदेशाच्चधारणा
पारणाकृता होमादिकंविधायाथतस्यपुण्यप्रभावतः जितेंद्रियस्ततोजातोब्रह्मलोकादिकांश्चरन् तस्मात्सर्वप्रयत्नेनकुर्याद्धारणपारणम् इंद्रि
याणांवशार्थायसर्वपापापनुत्तये तस्मात्त्वमपिराजेंद्रकुरुध्वव्रतमुत्तमम् किंदानैस्तपसाकिंवानियमैश्चव्रतैर्यमैः धारणापारणाकुर्याद्व्रतानां
मुत्तमंव्रतम् सर्वयज्ञेषुतीर्थेषुसर्वदानेषुयत्फलं तत्फलंसमवाप्नोतिकृत्वाधारणपारणं इदंव्रतंमहापुण्यंतपसामुत्तमंतपः तस्मात्त्वमपिराजें
द्रकुर्विदंविधिपूर्वकम् बांधवादिवधाद्दोषान्मुच्यतेनात्रसंशयः इतितंसंवदिप्यार्थाविष्णुःस्वांचपुरींययौ वंद्यमानःपौरजनैःसमस्तैःपांडु
नंदनैः युधिष्ठिरोपिराजर्षिश्चकारेदंमहाव्रतम् विमुक्तःसर्वपापेभ्योवंशवृद्धिस्ततोभवत् इतिश्रीभविष्योत्तरपुराणेधारणापारणाव्रतंसं
पूर्णम् अथसंक्रांतिव्रतानिलिख्यंते तत्रादौधान्यसंक्रांतिव्रतं हेमाद्रौस्कांदे नंदिकेश्वरउवाच अथाहंसंप्रवक्ष्यामिधान्यव्रतमनुत्तमम् य
त्कृत्वेहनरोराजन्सर्वान्कामानवाप्नुयात् अयनेविषुवेचैवस्नानंकृत्वायथाविधि व्रतस्यनियमंकुर्यात्ध्यात्वादेवंदिवाकरं करिष्यामिव्रतंदेव
त्वद्भक्तस्त्वत्परायणः तत्रविघ्नोनमेभूयात्तवदेवप्रसादतः इत्युच्चार्यालिखेत्पद्मंकुंकुमेनाष्टपत्रकं भास्करंपूर्वपत्रेतुआग्नेयेचतथारविम् विव
स्वंतंतथायाम्येनैर्ऋत्येपूषणंतथा आदित्यंवारुणेपत्रेवायव्येतपनंतथा मार्तंडमुत्तरेकौबेरऐशान्येभानुमेवच एवंचक्रमशोभ्यर्च्यविश्वा-
त्मामध्यदेवता कृतांजलिपुटोभूत्वाअर्घ्यंदद्यात्समंत्रकं कालात्मासर्वदेवात्मावेदात्माविश्वतोमुखः व्याधिमृत्युजराशोकसंसारभयना
शनः इत्यर्घ्यमंत्रः पुष्पैर्धूपैःसमभ्यर्च्यशिरसाप्रणिपत्यच रविंध्यात्वाततोदद्याद्धान्यप्रस्थंद्विजातये प्रतिमासंपुनस्तद्वत्पूज्योदेवःसह

स्नपात् एवंसदाप्रदातव्यंधान्यप्रस्थंद्विजातये एवंसंवत्सरेपूर्णेकुर्यादुद्यापनक्रियाम् अर्घ्यपात्रंहिसौवर्णंकारयेन्मंडलंशुभम् द्विभुजंपूजयेद्दा
नुं रक्तवस्त्रयुगान्वितम् धान्यद्रोणेनसहितंनदद्यैनस्वशक्तितः स्वर्णशृंगीरौप्यखुरींकांस्यदोह्यांपयस्विनीम् रविरूपंद्विजंध्यात्वानत्सर्वंविनि
वेदयेत् अग्निष्टोमसहस्राणांफलमाप्नोतिमानवः सप्तजन्मसहस्राणिधनधान्यसमन्वितः निर्व्याधिर्निरुजोधीमान् रूपवानभिजायते
इतिश्रीस्कंदपुराणेधान्यसंक्रांतिव्रतम् अथलवणसंक्रांतिव्रतम् अथातःसंप्रवक्ष्यामिलवणसंक्रांतिमुत्तमां संक्रांतिवासरंप्राप्यस्ना
नंकृत्वाशुभेजले वस्त्रालंकारसंवीतोभक्तिभावसमन्वितः कुंकुमेनालिखेत्पद्ममष्टपत्रंसकर्णिकम् भास्करंपूजयेद्भक्त्याधान्यप्रस्थसम
न्वितः तदग्रेलवणंपात्रंसगुडंस्थापयेत्ततः पूजितस्त्वंयथाशक्त्याप्रसीदममभास्कर लवणंसगुडंपात्रंब्राह्मणायनिवेदयेत् एवंसंवत्स
रेपूर्णेभानुंकुर्याद्धिरण्मयम् रक्तवस्त्रयुगच्छन्नंरक्तचंदनचर्चितम् कंबलंलवणंपात्रंधेन्वासार्द्धंद्विजातये प्रदद्यादानुमुद्दिश्यविश्वात्मा
यनामिति एवंकृत्वातुयत्पुण्यंप्राप्यतेभुविमानवैः तत्केनगदितुंशक्यंवर्षकोटिशतैरपि लवणाचलदानस्यफलंप्राप्नोतिमानवः
सर्वकामसमृद्धात्माविमानवरमध्यगः सूर्यलोकेवसेत्कल्पंपूज्यमानःसुरासुरैः इतिलवणसंक्रांतिव्रतम् अथभोगसंक्रांतिव्र
तम् तत्रैव संक्रांतिदिवसंप्राप्यस्नात्वाचैवशुचिव्रतः सुवासिन्यैप्रदातव्यंनानासौभाग्यकंचुकम् कुंकुमंकज्जलंचैवसिंदूरंकुसु
मानिच सुगंधीनिचद्रव्याणितांबूलंचशताधिकम् तंडुलान्गुडसंयुक्तान्नृताभ्योदद्याद्विचक्षणः दद्यात्सहृष्टमनसामिथुनेभ्योयथावि
धि भोजयित्वायथाशक्त्यावस्त्रयुग्मंप्रदापयेत् एवंसंवत्सरस्यांतेरविंसंपूज्यपूर्ववत् धेनुंसदक्षिणांदद्यात्सपत्नीकद्विजायच स्वा
त्मरत्नीसर्वमर्त्येषु भोगीजन्मनिजन्मनि इतिभोगसंक्रांतिव्रतम् अथरूपसंक्रांतिव्रतम् तत्रैव संक्रांतिवासरेस्नानंकुर्यात्तैले
नवैसुधीः हेमपात्रंघृतयुतंहिरण्येनसमन्वितम् स्वरूपंवीक्ष्यतत्पात्रंब्राह्मणायनिवेदयेत् एकभक्तंततःकृत्वापूजयित्वारविंव्रती
व्रतांतेकांचनंदद्याद्घृतधेनुसमन्वितम् इतिरूपसंक्रांतिः अथतेजःसंक्रांतिव्रतम् शालितंडुलसंयुक्तंकरकंकारयेच्छुभम् दीपंसं
स्थाप्यतन्मध्येज्वलितंतुस्वतेजसा तन्मुखेमोदकंस्थाप्यब्राह्मणायनिवेदयेत् रविंसंपूज्ययत्नेनअर्घ्यंदद्याद्विचक्षणः एकभक्तंचकर्तव्यं

यावत्संवत्सरंभवेत् संवत्सरेतुसंपूर्णेकुर्यादुद्यापनंबुधः शोभनंदीपकंकार्यंसुवर्णेनतुनारद नाम्रस्यकरकंकुर्याद्दीपंन्यस्यततोपरि
कपिलासहदातव्याकरकेणाद्विजातये इतितेजःसंक्रांतिः अथसौभाग्यसंक्रांतिव्रतम् संक्रांतिवासरेप्राप्तेस्नात्वाचैवशुचिव्रतःपू
र्ववद्भानुमभ्यर्च्यतथाचैवसुवासिनीं सौभाग्याष्टकसंयुक्तंवस्त्रयुग्मंतुयोषिते विप्रायवेदविदुषेभक्त्यातत्प्रतिपादयेत् एवंसंवत्सरेपूर्णेकु
र्याद्ब्राह्मणपूजनं पर्वतंलवणंकृत्वायथाविभवसारतः कांचनंकमलंकृत्वाभास्करंचैवकारयेत् गंधपुष्पादिनापूज्यविप्रायप्रतिपादयेत् ऐक्षवं
तृणराजंचनिष्पावाश्चसुशोभनाः धान्यकंजीरकंचैवकौसुंभंकुंकुमंतथा लवणंचाष्टमंतत्रविप्रायविनिवेदयेत् इतिसौभाग्यसंक्रांतिःअ
थतांबूलसंक्रांतिव्रतम् संक्रांतौप्रातरुत्थायस्नात्वाचैवयथाविधिः रविमभ्यर्चयेद्यत्नेनचंदनेनसुगंधिना तांबूलंचंदनाद्यैश्चपूजयेच्च
द्विजोत्तमान् एवंसंवत्सरंकार्यंसंक्रांतौरविपूजनम् तांबूलभक्षयेद्विप्रैःकारयेत्तत्पुरःसरम् वत्सरांतेतुकमलंकृत्वाचैवतुकांचनम् पर्णको
शंप्रकुर्वीततथापूगफलालयम् चूर्णभांडंप्रकुर्वीतपूगप्रस्फोटनंतथा मुखवासादिचूर्णानांभांडानिविविधानिच द्विजदांपत्यमावाह्यस
र्वोपस्करसंयुतैः द्रव्यैस्तुपूजयेद्भक्त्याषड्रसैर्भोजयेद्द्विजान् उपकल्पितंतुयत्किंचि द्ब्राह्मणायनिवेदयेत् एवंकरोतियानारीतांबूलाख्यं
व्रतोत्तमम् भर्तापुत्रैश्चपौत्रैश्चमोदतेस्वगृहेसदा इतितांबूलसंक्रांतिः अथमनोरथसंक्रांतिव्रतम् गुडेनपूर्णकुंभेनवत्सरंतुस्वशक्तितः सं
क्रांतिवासरेदद्याद्ब्राह्मणायकुटुंबिने एवंसंवत्सरेपूर्णेप्रतिसंक्रमणोर्जिते रविमभ्यर्च्ययत्नेनकुर्यादुद्यापनंशुभम् गुडस्यपर्वतंकृत्वाव
स्त्ररत्नैश्चभूषितम् अयनेचोत्तरेदद्याद्विजश्रेष्ठायकारयेत् यंयंकामयतेकामंतंतंप्राप्नोतिपुष्कलम् शेषंधान्यसंक्रांतिवत् इतिमनो
रथसंक्रांतिव्रतंसंपूर्णम् अथअशोकसंक्रांतिव्रतम् अयनेविषुवेचैवव्यतीपातोभवेद्यदि एकभुक्तंततःकुर्यात्तिलदानपुरःसरम् कां
चनंभास्करंकृत्वायथाविभवशक्तितः स्नापयेत्पंचगव्येनगंधपुष्पैस्तुपूजयेत् सप्तधान्यंरक्तवस्त्राभ्यांताम्रपात्रेनिधायच भास्करायनमःपा
दौपूजयामि रवयेन॰ जंघेपू॰ आदित्याय॰ जानुनी॰ दिवाकराय॰ ऊरूपू॰ अर्यम्णेन॰ कटीपू॰ भानवेन॰ उदरंपू॰ पूष्णेन॰ बाहूपू॰ मित्राय॰ स्तनौ
पू॰ विवस्वते॰ कंठंपू॰ सहस्रांशवेन॰ मुखंपू॰ तमोहंत्रे॰ नेत्रेपू॰ तेजोराशये॰ शिरःपू॰ अरुणसारथिने॰ सर्वांगंपू॰ अर्घ्यंचपूर्ववत्कार्यंब्राह्मणा

यनिवेदयेत् एवंसंवत्सरेपूर्णेकांचनेनदिवाकरम् संपूज्यपद्मकुसुमैर्यथाविभवसारतः धूपैर्दीपैश्चनैवेद्यैरक्तवर्णेनवेष्टितम् ततोहोमंप्रकुर्वी
तरविमंत्रेणनारद द्वादशाःकपिलादेयावस्त्रालंकारसंयुताः अशक्तःकपिलामेकांवित्तशाठ्यविवर्जितः आयुरारोग्यमैश्वर्यंभार्यापुत्रस
मन्वितः इतिअशोकसंक्रांतिः अथआयुःसंक्रांतिः अथान्यांसंप्रवक्ष्यामिआयुःसंक्रांतिमुत्तमाम् संक्रांतिदिवसेस्नात्वापूजयेच्चदिवा
करम् कांस्येक्षीरंघृतंदद्यात्सहिरण्यंस्वशक्तितः मंत्राःपृथक्कवक्तव्याःपूजासैवप्रकीर्तिता त्वत्क्षीरंकरभोजातंपीयूषसमसर्पियुक् आयुरा
रोग्यमैश्वर्यमतोदेहिद्विजातये अनेनविधिनावर्षंसर्वंदद्याद्तंद्रितः उद्यापनादिकंसर्वंधान्यसंक्रांतिवद्भवेत् निर्व्याधिश्चैवदीर्घा-
युस्तेजस्वीकीर्तिमांस्तथा अपमृत्युभयंनास्तिजीवेच्चशरदांशतम् इतिआयुःसंक्रांतिः अथधनसंक्रांतिव्रतम् संक्रांतिदिवसेपू
र्ज्योभास्करस्तुविधानतः कलशंनिर्व्रणंगृह्यवारिपूर्णंनिदापयेत् सुवर्णप्रतिमांकृत्वाप्रतिमासंतुदापयेत् विधिनानेनवर्षांते प्रीयतां
मेदिवाकरः भानोरुदयवेलायांस्नात्वासूर्यंप्रपूजयेत् कृसरान्नेनपक्वान्नघृतयुक्तेनभूरिणा ब्राह्मणान्भोजयेद्यत्नाच्चापेमासेदिवाक
रे पूजाविधानंतद्वत्तुधान्यसंक्रांतिवद्भवेत् सौवर्णंकलशंकृत्वासूर्यंचोपरिविन्यसेत् सुवर्णघटितंपद्मंसूर्यायविनिवेदयेत् गोदानंतत्र-
दातव्यमेवंसंपूर्णतांव्रजेत् जन्मनांशतसाहस्रंधनयुक्तोभवेन्नरः आयुरारोग्यसंपन्नःसूर्यलोकेमहीयते इतिधनसंक्रांतिः अथस
र्वसंक्रांत्युद्यापनंलिख्यते हेमाद्रौमात्स्ये नंदिकेश्वरउवाच अथान्यदपिवक्ष्यामिसंक्रांत्युद्यापनंफलम् विषुवेचायनेचैवसंक्रांतिव्रतमा-
चरेत् पूर्वेद्युरेकभक्तेनदंतधावनपूर्वकम् संक्रांतिवासरेप्रातस्तिलैःस्नानंसमाचरेत् रविसंक्रमणेभूमौचंदनेनाष्टपत्रकं पद्मंसकर्णिकंकु
र्यात्तस्मिन्नावाहयेद्रविम् कर्णिकायांन्यसेद्देवमादित्यंपूर्ववत्तथा नमःसोमार्चिषेचाग्नेयाम्येऋग्मंडलायच नमःसवित्रेनैर्ऋत्येवारुणेतप
नंबुधः वायवेमित्रमावाह्यपूजयेच्चयथाक्रमम् मार्तंडमुत्तरेविष्णुमीशान्येविन्यसेत्सदा द्विजायसोदकंकुंभंतिलपात्रंहिरण्मयम् कम
लंतुयथाशक्त्याकारयित्वानिवेदयेत् चंदनोदकपुष्पैश्चदेवायार्घ्यंन्यसेद्भुवि विश्वायविश्वरूपायविश्वधाम्नेस्वयंभुवे नमोनंतनमोधात्रेऋ
क्सामयजुषांपते अनेनविधिनासर्वंमासिमासिसमाचरेत् वत्सरांतेतथाकुर्यात्सूर्यंद्वादशधानरः संवत्सरांतेघृतपायसेनसंतर्प्यवन्हिं

द्विजपुंगवान्वै कुंभात्पुनर्द्वादशधेनुयुक्तान्समर्प्य हैरण्मयपद्मगर्भान् पयस्विनीः शीलवतीश्च दद्यात्ताभ्यः सरूपेणसवर्णयुक्ताः गावोथवासप्त
चकांस्यदोहाः सवस्त्रांबरावा चतुरोप्यशक्तः द्वेवाप्यशक्तः कपिलामथैकां निवेदयेद्ब्राह्मणपुंगवाय हेमांचदद्यात्पृथिवीमशेषां कृत्वाथरौप्यामथ
वास्तुनाम्नीं पैष्टीमशक्तोथतिलैर्विधाय सौवर्णसूर्येणसमं प्रदद्यात् नवित्तशाठ्यंपुरुषोत्रकुर्यात्कुर्वन्नधोयातिनसंशयोत्र यावन्महेंद्रप्रमु
खानगेंद्राःपृथ्वीचसप्ताब्धियुतेहतिष्ठेत् तावत्सगंधर्वगणैरशेषैः संपूज्यतेनारदनाकपृष्ठे ततस्तुभूमौद्विजवर्यजोवाक्षत्राधिपःस्यात्कुल
शीलयुक्तः सुवेषमुख्यस्तुंगवपुःसभार्यः प्रभूतपुत्रोरिपुवंदितांघ्रिः इतिसंक्रांत्युद्यापनम् अथधनसंक्रमणेविशेषः रवौधनुर्षिसंप्राप्तेस्ना
याद्दर्णोदयेसदा सर्वंनित्यंचसंपाद्यमुहूर्तेनगतोरविः कृसरान्नेनविप्रान्वैभोजयेद्धृतपायसैः दक्षिणाभिश्चसंतोष्यस्वयंभुंजीतवाग्यतः एवं
निरंतरंकुर्याद्दशक्तोभानुवासरे इहभुक्त्वातुभोगान्वैसूर्यलोकंसगच्छति इतिधनुर्मासमहिमा अथरवेर्घृतस्नपनं हेमाद्रौभविष्ये
उत्तरेत्वयनेप्राप्तेघृतप्रस्थेनयोहरिं स्नापयित्वाब्राह्मणेभ्योयःप्रयच्छतिमानवः घृतधेनुंतथादद्याद्ब्राह्मणायकुटुंबिने सर्वपापविनि
र्मुक्तः सूर्यलोकेचिरंवसेत् ततोभवतिभूपालःप्रजानंदविवर्धनः इतिउदगयनेघृतस्नपनम् अथमकरसंक्रांतौशिवरहस्येघृतकंबलदा
नमहिमा माघेमासिमहादेवंयःकुर्याद्घृतकंबलं सभुक्त्वासकलान्भोगानंतेमोक्षंचविंदति नराभूपतयोजाताघृतकंबलदानतः जातिस्म
राश्चतेजातामुक्ताश्चांतेशिवार्चकाः पुरास्तनागसंविप्रंजाबालिंश्रुतिपारगं पप्रच्छशूलकर्णाभोधर्मंदारिद्र्यनाशकं सजाबालिरुवाच अ
सितायाःसितायावाधेनोर्घृतमनुत्तमं संपादनीयंयत्नेनघनीभूतंचशोभनं तद्घृतंतुलयोत्तीर्णंप्रस्थसार्द्धशतत्रयम् महाकंबलमेतद्धि
घृतस्यपरिकीर्तितं तदर्द्धंवातदर्द्धंवासायंनेयंशिवालये घृतेनान्येनदेवेशमभिषिच्यमहेश्वरं ततोघृतंघनीभूतमर्पयेच्छिवमस्तके त
तस्तिलैःसर्षपैश्चबिल्वपत्रैश्चकोमलैः हेमपद्मैश्चदेवेशःपूजनीयोमहेश्वरः धूपदीपादिकंदेयंमहानैवेद्यमादरात् ततोनीराजनंदत्वा
देयःपुष्पांजलिस्ततः प्रदक्षिणानमस्कारान्कृत्वाचनदनंतरम् शैवंपंचाक्षरंजप्त्वाशिवायैतन्निवेदयेत् ततोजागरणंकुर्याच्छिवस्मरण
पूर्वकम् ततःप्रातःसमुत्थायकृत्वास्नानादिकंपुनः पूजनीयोमहादेवोघृतसेचनपूर्वकम् भोजनीयास्तथाशेषाभक्ष्यैर्भोज्यैश्चयत्नतः ततः

स्वयंचभोक्तव्यंबंधुभिःसहसादरं अनेननवदारिद्र्यंनाशमेष्यतिसर्वथा भोगांश्चविपुलान्भुक्त्वाशिवलोकंगमिष्यसि इतिमकरसं
क्रांतौघृतकंबलदानंसमाप्तम् अथमकरसंक्रमणेदधिमंथनदानम् तद्विधिः मासपक्षाद्युल्लिख्य ममेहजन्मनिजन्मांतरेचअ
खंडितसौभाग्यपुत्रपौत्रधनधान्याभिवृद्ध्यर्थंश्रीसवितृसूर्यनारायणस्वरूपिणेब्राह्मणायदधिमंथनदानंकरिष्ये इतिसंकल्प्य ति
लोद्वर्तनपूर्वकंस्नात्वाशुक्लवस्त्रंपरिधाययशोदाकृष्णसुवर्णप्रतिमांसंपूज्यप्रार्थयेत् यशोदेत्वंमहाभागेसुतंदेहिमनोरमं पूजितासि
मयादेविदधिमंथनभाजने श्रीकृष्णपरमानंदसंसारार्णवतारक पुत्रंदेहिमनोज्ञंचऋणत्रयविमोक्षणम् इतिप्रार्थ्य दानमंत्रः गृहाणत्वं
द्विजश्रेष्ठदधिमंथनभाजनं नवनीतेनसहितंदेवक्यासहितंहरिम् प्रसादःक्रियतांमह्यंसूर्यरूपनमोस्तुते ब्रह्मांडपुराणेरंगदानमा
हात्म्येकृष्णंप्रतिदुर्वाससोपदिष्टं अथकथा सूतउवाच पीडिताहंदारिद्र्येणअपुत्राचतपोधन तपसोभंगभीत्याचयत्नंनाचरतेपतिःममस
र्वस्वमेकागौस्वल्पदोहावयोमहत् जीवनंममतक्रेणधर्मवार्तागरीयसी केनोपायेनभोब्रह्मन्नन्नंमेस्याद्धिसुखंमम दुर्वासाउवाच दानंदेहि
चसुभगेयेनपूर्णमनोरथा नंदजायासुतंलेभेब्रह्माद्यैःपूजितंमहत् श्रीकृष्णाख्यंपरंतत्वंयोगिभिश्चदुरासदम् दधिमंथनदानंचपुत्रप्रा
प्तिकरंपरम् नान्यदस्तिदरिद्राणांदानादस्मात्कथंचन तस्मात्त्वमपिदेयंमेक्षुधितायतपस्विने भविष्यतितववसुतोचिरंजीवीशुचिव्रतः
विरच्यस्वस्तिकंपूर्वमनुलिप्यमहीतलम् द्रोणमानंधान्यपुंजंगोधूमैश्चविशेषतः दध्यमत्रकमासाद्य कृष्णलीलांहृदिस्मरन् संस्थाप्य
थनेतस्मिन्सौवर्णींप्रतिमांतथा संकल्पादिविधायाथपूज्यभाजनमंथकम् हरिद्राकुंकुमाद्यैश्चदधिभांडंविलेपयेत् रक्तसूत्रेणसं-
वीतंरक्तवस्त्रेणवेष्टयेत् माल्यैरक्तैश्चसंयुक्तेदेवीमावाहयेत्तथा सूर्यंचावाहयेद्दूंडेदीपानशेषंप्रदीपयेत् लड्डुकान्पृथुकान्लाजानिक्षु-
खंडानिवैतथा नानाविधानिखाद्यानिसमंतात्स्थापयेत्ततः कृष्णप्रीतिकरंत्वेतद्धनधान्यसमृद्धिदम् क्षौमंवासःपृथुकटितटेबिभ्रती-
सूत्रनद्धंपुत्रस्नेहस्नुतकुचयुगंजातकंपंचसुभ्रूः रज्वाकर्षश्रमभुजलसत्कंकणौकुंडलेचस्विन्नंवक्त्रंकबरविगलन्मालतीनिर्ममंथ परिधा
वस्त्रमासाद्ययथाचेजननींहरिः गृहीत्वादधिमंथानंन्यषेधत्प्रीतिमावहन् नानाखाद्यैर्वारितोपिनचमुंचतिमाधवः अंकमारुह्यस्तन्यं

सपिबन्मुखविलोकयन् विचित्रैः पट्टकूलैश्च गंधमाल्यैर्विशेषतः पूजयित्वाप्रसाद्यैवं यशोदां पुत्रवत्सलाम् यशोदे त्वं महाभागे कृतं दे
हि मनोरमं पूजितासि मया देवि दधिमंथनभाजने श्रीकृष्णा परमानंद संसारार्णवतारक पुत्रं देहि मनोज्ञं मे ऋणत्रयविमोक्षणं ब्राह्मणं वे
दवेत्तारमुपवेश्य स्वासने गंधमाल्यैश्च संपूज्य दानं दद्याद्द्विजातये गृहाण त्वं द्विजश्रेष्ठ दधिमंथनभाजनं नवनीतेन सहितं देवक्यासहि
तं हरिं प्रसादः प्रीयतां मह्यं सूर्यरूप नमोस्तु ते दुर्वाससोपदिष्टा सा द्रोणभार्या सुलोचना मकरस्थे यदा सूर्ये तिलोद्वर्तनपूर्वकं स्नाता च
जाह्नवीतोये संप्रार्थ्य मुनिपुंगवम् पूजयित्वा मुनिं सापि अददद्दधिमंथनं अश्वत्थामानं च कृतं दधिमंथनदानतः रूपलेभे सुयश-
स्कं ऋणत्रयविमोक्षणं मुक्तादारिद्र्यदुःखात्सा बुभुजे भोगमुत्तमं एवं पूर्वं कृपी कृत्वा आनंदं समपद्यत एवं यः कुरुते नारी वित्तशाठ्यविवर्जि
ता सर्वान्कामानवाप्नोति सूर्यलोके महीयते इति श्रीब्रह्मांडपुराणे मकरसंक्रांतौ दधिमंथनदानं संपूर्णं अथ तांबूलोद्यापनं युधिष्ठिर उ
वाच तांबूलदानमाहात्म्यं कथयस्व मम प्रभो उद्यापनविधिं तस्य सर्वकामार्थसिद्धये श्रीकृष्ण उवाच सर्वेषामेव दानानां तांबूलं चोत्तमं स्मृ
तं आनंदो दीर्घमायुष्यं सौमनस्यं च पुष्टिदं सौभाग्यं चंदनादिभ्यो विद्यालाभस्तथैव च एतच्चतुष्टयं राजन् तांबूलाल्लभते नरः क्षुत्पिपासा
हरं स्वादु सौभाग्यं निर्मलं स्मृतं द्वात्रिंशत्पत्रकैर्युक्तं पूगीफलसमन्वितम् एलालवंगकर्पूरैर्युक्तं तांबूलमुच्यते यथालाभं भवेद्वापि देयं द्वि
जवराय च द्विजाभावे सुवासिन्यै तदभावे कुमारिकां उद्यापनं प्रकर्तव्यं यथाविभवसारतः शुभेह्नि मासे कर्तव्यं कुर्याद्वैवाहिके ततः पंच
सप्त च सद्द्विप्रान् सपत्नीकान्प्रपूजयेत् पूर्वरात्रौ च संपूज्य लक्ष्मीनारायणावुभौ उमामहेश्वरौ पूज्यौ ब्रह्माणं सावित्र्या सह रतिं च पंच
बाणं च पूजयेच्च यथाविधि ऋद्धिं सिद्धिं विघ्नराजं लोकपालांश्च पूजयेत् रात्रौ पूजा प्रकर्तव्या षोडशैरुपचारकैः तांबूलोपस्करांस्तत्र
संस्थाप्योत्तरदेवताः पुरुषोत्तमाय० शार्ङ्गपाणये० गरुडध्वजाय० अनंताय० यज्ञपुरुषाय० पुंडरीकाक्षाय० नित्याय० वेदगर्भाय० गोवर्द्धनाय०
सुब्रह्मण्याय० शौरिणे० ईश्वराय० एतानि द्वादशनामानि पूजने हवने तथा घृतं वा पायसं वापि पंचामृतं तिलौदनम् तत्तन्मंत्रैश्च
होतव्यमष्टाविंशतिसंख्यया पर्णस्थापनपात्रं च चूर्णपात्रं तथैव च स्वर्णरौप्यमयं वापि पित्तलं सीससंभवम् सर्वशोभासमायुक्तं लोह

जांपूगभाजिकां तेषांपूजाप्रकर्तव्यागंधपुष्पादिभिस्तथा पूर्णाहुतिंततः कुर्याद्ब्राह्मणान्भोजयेत्ततः तांबूलंसकृद्युयोदद्याद्ब्राह्मणेभ्योतिभ
क्तितः मेधावीसुभगःप्राज्ञोदर्शनीयश्चजायते फलेनतृप्यतेब्रह्मापत्रेणभगवान्हरिः चूर्णमीश्वरतृप्त्यर्थंखदिरःकामदृप्तये कर्पूरैलालवंगा
दिजातीपत्रफलैस्तथा इंद्राद्यालोकपालाश्चसंतुष्टाश्चभवंतिहि वारिदः सुखमाप्नोतिराज्यमाप्नोतिचान्नदः दीपदश्चक्षुराप्नोति प्रचंतांबूलदा
ततः एवंकृतेविधानेनसर्वान्कामानवाप्नुयात् इतिवायुपुराणेतांबूलव्रतोद्यापनंसंपूर्णम् अथमौनव्रतोद्यापनं नारदउवाच ब्रह्मन्ब्रूहिम
मत्वंवैमौनव्रतफलंशुभम् फलंकिमस्यदानंवाकथमुद्यापनंभवेत् ब्रह्मोवाच शृणुनारदयत्नेनसावधानेनचेतसा चातुर्मास्येव्रतंकुर्या
न्मौनाख्यंव्रतमुत्तमम् यस्याचरणमात्रेणगम्यतेविष्णुमंदिरम् विधिंतस्यप्रवक्ष्यामिशृणुनारदमन्मुखात् व्रतमध्येव्रतस्यांतेव्रतादौवा
यथाविधि उद्यापनंप्रकुर्वीतव्रतसंपूर्णहेतवे स्नात्वानित्यविधिंकृत्वाकुर्यात्संकल्पमादृतः सर्वतोभद्रमालिख्यतत्रविष्णुंप्रपूजयेत्
लक्ष्म्यायुतंतुदेवेशंब्रह्माद्यादेवतास्तथा द्वारदेशेतुसंपूज्यौपुण्यशीलसुशीलकौ जयंचविजयंचैवगदादीन्यायुधानिच मंडपंतोर
णैर्युक्तंपट्टवस्त्रेणभूषितम् सुवर्णप्रतिमांतत्रघंटांगरुडलांछितां उपचारैःषोडशभिरर्चयित्वारमापतिम् रात्रौजागरणंकुर्याद्गीतवा
द्यादिमंगलैः घृतेनाष्टोत्तरशतंपावकेहवनंचरेत् अतोदेवेतिमंत्रेणब्राह्मणान्भोजयेत्ततः पीठदानंततःकुर्याद्घंटादानंतथैवच घंटादा
नस्यमाहात्म्यंवक्तुंकेननशक्यते दीपदानंततःकुर्याद्व्रतसंपूर्णहेतवे इदंव्रतंमयापूर्वंकृतमुत्पत्तिहेतवे तेनव्रतप्रभावेनसूक्ष्मसत्तिर्म
याकृता कर्तव्यंतुप्रयत्नेनसर्वकामार्थसिद्धये यइदंकुरुतेवत्ससमाक्षान्मामकीतनुः इतिश्रीब्रह्मांडपुराणेब्रह्मनारदसंवादेमौनव्रतो
द्यापनंसंपूर्णं अथप्रपादानविधानं युधिष्ठिरउवाच कथंकृष्णतरंत्यत्रसंसारगव्हरान्नराः स्वल्पेनैवतुकालेनतथादानेनमेवद कृष्णउ
वाच विधानमेकमतुलंसामान्यंनरसेवितम् विधिंप्रपाख्यंराजेंद्रकथ्यमानंशृणुष्वतत् यस्मिन्पथिजलंनास्तिनास्तिग्रामःसमीपगःप्रपा
तत्रप्रकर्तव्यास्वर्गकामेप्सुभिर्नरैः माघमासेसितेपक्षेशिवरात्रौविशेषतः कृत्वातुमंडपंरम्यंचतुर्द्वारंसुशोभितम् छायाशीतमथाकार्याहृदैः
स्तंभैर्विशेषतः एकवल्क्याद्विवल्कावापूर्वोत्तरमुखाशुभा मार्गाणांपत्रबाहुल्यंतत्रकार्यांविचक्षणैः हृद्यांस्ताम्रमयान्रम्यान्मृन्मयान्वाप्रमाहि

नः पूजांचैवसमादिश्य सर्वकामः प्रयत्नतः प्राहडायातिथवद्देजलैः कुंभानूप्रपूरयेत् यवागूंतक्रसंयुक्तांव्यंजनैस्तुसमन्विताम् अन्यैश्चबहु
भिर्द्रव्यैः शर्करापानकैर्युताम् तक्रंलवणसंयुक्तंतांबूलंचयथाविधि प्रपायांभोजयेच्छक्त्याजलंवाकेवलंशुभम् ब्राह्मणार्थंपृथक्पात्रंब्र
ह्मचिन्हेनलक्षितम् स्वस्तिवाचनपूर्वंतु सर्वमेतत्प्रकल्पयेत् एवंविधाप्रपाप्रोक्ताविद्वद्भिर्धर्मकोविदैः शिशूनांजननीयद्वत्स्तन्यदाहरणेक्षमा
सर्वेषामपिवर्णानांप्रपावैपोषणेक्षमा नंदंतिपितरस्तस्यतुष्यंतिकुलदेवताः स्तुवंतिमनुजास्तंतु येनाध्वनिकृताप्रपा क्रतुकोटिशतैर्यत्तुपु
ण्यंचलभतेनरः उद्यापनविधिंकृत्वाप्रपादानमनुत्तमं तस्याः सर्वाणिपात्राणि ब्राह्मणायनिवेदयेत् भोजयेच्चयथाशक्त्याब्राह्मणांस्तोषयेत्त
तः प्रपामंदिरदानेनकृतकृत्योभवेन्नरः दुर्भिक्षेग्रासमात्रान्नंग्रीष्मेबिंदुसमंजलं तत्तुल्यंक्रतुलक्षेणद्वयमेतत्ततोधिकं एवंविधाप्रपाप्रोक्ता
मुनिभिस्तत्त्वदर्शिभिः वराबालघुवाराजन्सर्वकामविवर्धिनी कावडिस्थेनयत्नेनमार्गेतत्स्थापयेज्जलं इतिश्रीभविष्योत्तरपुराणेप्रपा
दानंसोद्यापनंसंपूर्णम् अथलक्षपद्मविधिः ब्रूहिकृष्णव्रतंश्रेष्ठंमुक्तिदंदुःखनाशनम् पुत्रपौत्रादिकंचैवकृपयामधुसूदन श्रीकृष्ण
उवाच शृणुराजन्प्रवक्ष्यामिव्रतानामधिकंव्रतम् सर्वदुःखहरंस्त्रीणांसर्वकामफलप्रदम् लक्षपद्मंरंगवल्याशुभेमासिसमारभेत्
गुरुशुक्रास्तरहितेशुक्लवर्णेनयत्नतः तंडुलैःपूजयेच्छ्वेतैःसूर्यस्थंजगदीश्वरं उद्यापनंसमासेचकुर्याद्यत्नेनसिद्धये संपूर्णंजायतेये
ननच्छृणुष्वप्रयत्नतः सूर्यस्यप्रतिमांकुर्यात्स्वर्णस्यचशक्तितः वेदिकायांप्रकर्तव्यंस्वस्तिकंपद्मसंयुतं तन्मध्येकलशंस्थाप्यरक्तवस्त्रे
णवेष्टितम् पंचामृतेनसंस्नाप्यदेवंतत्रप्रपूजयेत् गंधपुष्पास्ततैर्दिव्यैर्धूपदीपादिभिःशुभैः स्वर्णनिर्मितंपद्मंदेवायविनिवेदयेत् आचा
र्यंवरयेत्तत्रवेदवेदांगपारगम् ततोहोमःप्रकर्तव्यस्तिलाज्यैःपायसैस्तथा अष्टोत्तरंसहस्रंवाशतत्रयमथापिवा गायत्रीमंत्रतःकुर्या
न्मूलमंत्रेणहोमयेत् गोदानंचप्रकर्तव्यंसूर्यस्थहरितुष्टये ब्राह्मणान्भोजयेच्छक्त्याशर्कराघृतपायसैः तेभ्योपिदक्षिणांदद्याद्वित्तशा
ठ्यविवर्जितः प्रतिमांकलशंचैवदद्यात्पूजादिकंतथा अनेनैवेतिमंत्रेण आचार्यायनिवेदयेत् प्रदक्षिणांनमस्कारंकुर्यान्मूर्ध्निकृतांज
लिः श्रीकृष्णउवाच एतत्तेव्रतमाख्यातंस्त्रीणांकामफलाप्तये पुत्रपौत्रादिसंतानवृद्ध्यर्थंकुरुनंदन यानारीकुरुतेभक्त्याहरिस्तस्याःप्र

सीदति इतिश्रीसूर्यपुराणेलक्षपद्मप्रकरणोद्यापनंसंपूर्णम् अथलक्षदीपदानविधिः स्कंदउवाच रुद्रसंख्याशिवायाथअर्पये
द्दीपमुत्तमम् वर्षमेकंतदर्धंवावर्षद्वयमथापिवा लक्षसंख्यातदर्द्धंवाद्वि लक्षंवास्वशक्तितः लक्षदीपंप्रकुर्वंतिनराः परमधार्मिकाः
घृतेनयेप्रकुर्वंतितेषांपुण्यंवदामिते दीपमालायथाशक्त्याकार्तिकेश्रद्धयान्विताः यावत्कालंप्रज्वलंतिदीपायस्यशिवाग्रतः तावद्युग
सहस्राणिस्वर्गलोकेमहीयते कौसुंभेनचतैलेनदीपान्दद्याच्छिवालये तेनपुण्येनकैलासेवसतेशिवसन्निधौ अतसीतैलसंयुक्ता
न्दीपान्दद्याच्छिवालये दशपूर्वान्दशपरान्युक्तोगच्छेच्छिवालये ज्ञानिनोहिभविष्यंतिदीपदानफलेनहि तिलतैलेनयोदीपान्दद
तेचशिवालये तेजस्विनोमहाभागाःकुलेनचशतेनवै तैलयुक्ताःकृतादीपादापिताश्चशिवालये आर्तिक्यंचसकर्पूरंयेकुर्वंतिदिनेदिने
तेप्राप्नुवंतिसायुज्यंनात्रकार्याविचारणा लक्षदीपस्यसंपूर्त्यैकार्यमुद्यापनंबुधैः उपवासंप्रकुर्वीतपूर्वस्मिन्दिवसेतदा कर्षमात्रसुवर्णे
नतदर्धार्धेनवापुनः प्रतिमांशंकरस्याथउमयासहितस्यच आचार्यंवरयेत्तत्रअभिज्ञंवेदपारगम् कलशंस्थापयेद्धान्येस्वस्तिवाचनपू
र्वकं उमामहेश्वरंरम्यंस्थापयेत्कलशोपरि उपचारैःषोडशभिःपूजयेच्चपृथक्पृथक् रात्रौजागरणंकुर्यात्पुराणश्रवणादिभिः प्रातःस्नानं
विधायाथहोमकर्मसमारभेत् तिलसर्पिर्यवैश्चापिचरुणाबिल्वपत्रकैः आज्ययुक्तैश्चप्रत्येकंसद्योजातादिमंत्रतः शतमष्टोत्तरंहुत्वाहोम
शेषंसमापयेत् उमामहेश्वरंदेवंपूजयेत्तुपुनर्व्रती प्रतिमांवस्त्रसहितामाचार्यायनिवेदयेत् सहिरण्यांसवत्सांचधेनुंदद्यात्प्रयत्नतः अ
नेनविधिनायस्तुव्रतमेतत्समाचरेत् सभुक्त्वाविपुलान्भोगान्शिवसायुज्यमाप्नुयात् ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः
गुरोराज्ञांगृहीत्वातुभुंजीयाद्बंधुभिःसह एवंयःकुरुतेमर्त्योलक्षदीपप्रदीपनं नरोवाप्यथवानारीसोश्नुतेपदमव्ययं ज्ञानमुत्पघतेन
स्यसंसारभयनाशनम् सर्वपापक्षयकरंजन्मजन्मार्जितंचयत् बाल्येवयसियत्पापंयौवनेवापियत्कृतं वार्धकेपिकृतंपापंतत्सर्वंनश्यतिध्रु
वम् सर्वपापविनिर्मुक्तोभुक्त्वाभोगान्महीतले सर्वान्कामानवाप्यायसोश्नुतेपदमव्ययम् इतिश्रीस्कंदपुराणेलक्षदीपोद्यापनंसंपूर्णम्
अथलक्षदूर्वापूजनविधिः शूरसेनउवाच लक्षपूजाविधिंसम्यक्कथयस्वममाग्रतः यंकृत्वाप्राणिनःसर्वेभवंतिसुखभागिनः

श्रावणे च चतुर्थ्यां तु भौमवारो यदा भवेत् शुभेन्हि वासरे चापि पूजाकर्म समारभेत् दंपत्यूचतुः चक्रवर्ती नृपो जातस्तेन वृप्तिं न वै गमः
आवाभ्यां तु दरिद्राभ्यां किं देयं तृप्तिकारकं नदीनदजलैर्योब्धिः संपूर्णोनापि पूर्यते बिंदुमात्रेण सहसा स कथं पूर्यते वद कौंडि
ण्य उवाच भक्त्या दत्तं स्वल्पमपि बहुतृप्तिकरं मम अभक्त्या यच्च दंभेन बहु दत्तं वृथा भवेत् दंपत्यूचतुः आवयोर्न गृहे किंचि
त्खुभं वस्तु द्विजोत्तम पूजार्थे गणनाथस्य प्रातर्दूर्वांकुरा हृताः पूजितो गणनाथस्तु स एकोद्यावशिष्यते भक्त्या दत्तः स एकोपि तृप्त
ये स्यात्प्रदीयताम् कौंडिण्य उवाच विरोचना ददौ तस्मै श्रुत्वा वाक्यं तदीरितम् एकं दूर्वांकुरं भक्त्या नेनन्तृप्तो भवद्द्विजः शाल्यन्न
पायसान्नं च नानापक्वान्नमेव च व्यंजनान्यपि सर्वाणि लेह्यचोष्याण्यनेकधा भक्त्या विरोचना दत्ते जातं दूर्वांकुरेखिलम् गृहीत्वा
ब्राह्मणस्तं तु बुभुक्षुः परया मुदा तस्मिन्दूर्वांकुरे भक्त्या दत्ते तेन गाथ भक्षिते प्रशमः स्याद्द्विजस्यास्य तत्क्षणाज्ज्वरानलः तृप्ति
श्च परमा तेन मास्तात्क्षणमाभतः आलिलिंग त्रिशिरसं तृप्तोहं हर्षयन्द्विजः तत्याज कुत्सितं रूपमकटोभूद्गजाननः चतुर्भुजोर
विंदाक्षः शुंडादंडो विराजितः कमलं परशुं मालां दंतं करतले दधत् महार्हमुकुटो राजन्कर्णकुंडलमंडितः दिव्यवस्त्रपरीधानो दि
व्यगंधानुलेपनः उवाच तौ प्रसन्नात्मा दंपती स गजाननः वृणीतं तं वरं शीघ्रं मनसा यो यइच्छितः तावूचतुः जन्मजन्मांतरे चापि
भक्तिरस्तु दृढा वयोः मुक्तिर्वा दीयतां देव अस्मान्संसारसागरात् नायाचे किंचिदन्यं हि पादपद्मादि भानन कौंडिण्य उ॰ इति
तद्वाक्यमाकर्ण्य तथेत्युक्त्वा गजाननः पुनरालिंग्य प्रददे भक्तिं त्रिपुरसूदनः एतस्मान्पूर्वं भारो स्मै दीयतां दीयते मया अर्ध स्वाभ
क्षणाद्देवो न तृप्तिं च समाययौ दूर्वांकुरेण चैकेन तृप्तिं च परमां ययौ इति सम्यक्समाश्राव्य महिमानं परं शुभं दूर्वासमर्पणेनैव स
भवेत्सर्वकामदः इतिहासमिमं भक्त्या शृणुते श्रावयेच्च यः स पुत्रधनमाप्नोति स्वर्गलोके च मोदते गजानने च यो भक्तिं निष्कामो मोक्ष
माप्नुयात् श्रुत्वापीत्थमितीहासं आश्रयात्संशयं पुनः प्रपेदे हृदि तं ज्ञात्वा कौंडिण्यो मुनिरब्रवीत् आश्रये शृणु मे वाक्यं संशयस्यापनु
त्तये यद्वदामि हृदिस्थस्य मया ज्ञानस्य तेनघे एकं दूर्वांकुरं गृह्य गच्छ शीघ्रं बिडौजसं वदाशीर्वचनं पूर्वं पश्चाद्याचस्व कांचनं दूर्वा

कुरेणतुलितंगृहीत्वातुइहानय नन्यूनंनाधिकंग्राह्यंतस्यभाराच्छुभानने आज्ञांप्राप्यमुनेःसातुप्रस्थितासार्थसिद्धये एकंदूर्वांकुरं
गृह्यशक्रसन्निधिमाययौ तमुवाचाथयाशक्रदेहिमेकांचनंशुभं याचितुंत्वांसमायाताभर्तृवाक्यात्सुरेश्वर इंद्रउवाच किमर्थंत्वमि
हायाताममाज्ञाप्रेषिताभवत् मयातुप्रेषितंतस्यत्वशक्त्यातुसुवर्णकं आश्रयोवाच दूर्वांकुरस्यतुलयायद्देवकांचनंशक्रमम गृहीष्ये
शचिभर्तस्त्वंन्यूनंनचयतोधिकम् इंद्रउ० दूर्वांकुरप्रमाणंमेनास्तिद्रव्यंशुभानने कुबेरभवनंगच्छजातरूपंप्रदास्यति इंद्रेणप्रेषिता
साध्वीमुनिपत्नीमयासह प्रापितंभवनंतेद्यदेहिदूर्वांकितंधनम् कुबेरउवाच अत्याश्चर्यमहंमन्येमुनेःशक्रस्यचाश्रये मोहाविष्टोनजानातिदूर्वांकुर
मितंकियत् कांचनेनकिमेतेनबहुलंनेच्छतेकुतः आज्ञापयद्धनाध्यक्षोकोशकारंधनस्यच देहिअस्याधनंस्वेच्छंमुनिपत्न्याममाज्ञया एवं
श्रुत्वाददौतस्यैबहुलंकांचनंतुसः नजग्राहभयाद्भर्तुर्दूर्वाधिकविशंकया स्वर्णकारतुलायांतंदूर्वांकुरमधारयत् नाभवत्तुलयातस्यप
र्याप्तंतत्तुहाटकम् वणिक्तुलासमानीतातत्रापिनाभवत्समं तैलकारस्यमानीतानजातापूरणक्षमा धटेमहत्यंतोक्षिप्तंहाटकंदत्तमेक
तः दूर्वांकुरेपितत्रापिअधस्ताद्यातिभारतः अन्यदन्यद्ददौनच कुबेरःकांचनंबहु तदपिनाभवत्तेनसमंदूर्वांकुरेणच सर्वकोशगतंद्रव्यंदत्तं
गुरुतरंमहत् तथापिनाभवत्तुल्यंतेनदूर्वांकुरेणच पत्नीमाहूयतामाहकुबेरःकौतुकान्वितः कुरुमहाक्यतःसुभ्रूधटारोहणमग्रतः नसमं
चेत्समारोह्स्येनिजसत्वरिरक्षया पतिव्रतांनयातस्यधटमारुरुहेतदा ततोपिनसमाजातातनःसर्वपुरींददौ धटमध्येकुबेरोपिनोर्ध्वंजा-
तोंकुरस्ततः श्रुत्वादूतमुखादिंद्रोगजारूढःसमाययौ स्वकीयद्रव्यसहितोधटमारुरुहेस्वयं समनायातिदूर्वांवैधटभारेणचानघ अधोमु
खोगतश्चिंतांकिमेतादितिचिंतयन् विष्णुहरंचसंस्मारतत्रारोहणकाम्यया शिवोविष्णुःसमागत्यधटमारुरुहेतदा तथापिनोर्ध्वगमनंत
दादूर्वांकुरस्याहि शिवोविष्णुःकुबेरोपिआश्चर्यंसमपद्यत वरुणोदाग्निमरुतोकौंडिन्यंचसमाययुः देवादेवर्षयश्चापिसिद्धविद्याधरोरगाः
दिनांतेसमतुप्रासेयथागच्छंतिपक्षिणः नमस्कृत्यमुनिंसर्वेप्रोचुर्विद्याधरोरगाः सर्वऊचुः अज्ञानांविलयंयानंदर्शनात्त्वोमुनेनव पूर्वं
पुण्यभवादग्रेकल्याणंनोभविष्यति तत्पत्न्याहृतंसर्वंसर्वेषामनघस्फुटम् महिमानंनजानीमोदूर्वांकुरसमुद्भवम् एवंदूर्वांकुरतुलांवै

लोकत्र्यमपिनाभवत् गजाननशिरस्थस्यत्वयाभक्त्यार्पितस्यच जानीयान्महिमानंकःसम्यक्दूर्वांकुरस्यच गजाननैकभक्तस्यतपत
स्तपंतोभृशम् तवापिमहिमानंकोजानातिभुवनत्रये एवमुक्त्वामुनिंसर्वेपूज्यमानंगजाननं सर्वेसभार्याश्चयज्जुस्तुष्टुवुर्ननृतुर्जगुः न
ब्रह्मानहरिःशिवेंद्रमरुतोनाग्निर्विवस्वान्मरुच्छेषोशेषकलानिधिश्चवरुणोनोचंद्रमानाश्विनौ नोवाचामधिपोनचैवगरुडोयक्षा
धिपोनागिरामाहात्म्यंपरिवेदवेदनिगमैरज्ञानरूपस्यते एवंसंतोष्यसर्वेतेदेवदेवंगजाननं मुनिंचसमनुप्राप्ययपुःस्वंस्वंनिकेतनं आ
श्रयापितनोज्ञात्वादूर्वामाहात्म्यमुत्तमम् विश्वस्ताभर्तृवाक्येनसादूर्वांपर्यपूजयत् विघ्नेश्वरंसर्वदेवंसर्वदूर्वाभिरर्चितम् प्रणनामचकौं
डिण्यंभर्तारंसत्यवादिनं उवाचतंप्रसन्नात्मास्वात्मानंनिंदतीभृशम् मोदृशीनैवदुष्टास्तिपतिवाक्येनशासिता विशेषविदुषास्वामिन्विशेष
विदुषात्वया सम्यक्कृतंममविभोसर्वभूतदयावता तत्क्षमस्वापराधंमेत्वामहंशरणागता ततःप्रातःसमुत्थायदूर्वामादायसत्वरौ स्नात्वा
देवंसमभ्यर्च्यदूर्वार्पणमकुर्वताम् अनन्यभक्त्याज्ञात्वातौदूर्वामाहात्म्यमुत्तमं सायंप्रातर्देवदेवंपूजयंतौनिरंतरं त्यक्त्वायज्ञव्रतंदानंज्ञात्वा
देवोगजाननः कृपयापरयाविष्टोस्वधामप्रत्यचोदयत् गणाऊचुः अगाधंवर्णितंदूर्वामाहात्म्यमिदमुत्तमं अशेषवर्णनेशेषोनशक्तिंसमप
द्यत त्रैलोक्यंतुलयात्यस्यानसंजातंमहामुने दूर्वेतिस्मरणात्पापंत्रिविधंविलयंव्रजेत् तत्स्मृतंस्मर्यतेदेवोयतःसोपिगजाननः इतिर्विनाम
पोःक्षेत्रमहिमावर्णितःस्फुटं श्रवणात्कीर्तनाद्ध्यानाद्भुक्तिमुक्तिफलप्रदः एतस्मात्कारणाद्दानत्र्याणांप्रेषितंशक्रं रासभस्यमुखाद्दूर्वागतादे
वोपरिप्रभो चांडालशीतनाशायआनीतातृणभारतः वायुनाप्रेषितासापिगतादूर्वागजानने यतस्त्वास्यप्रियादूर्वासंतुष्टोसौविनायकः निः
पापत्वात्त्रयाणांचसान्निध्यंदत्तवान्निजं गंधमात्रेणदूर्वायाःसंतुष्टोजायतेविभुः प्रसन्नोवतिभक्त्यावैकिंपुनर्मस्तकार्पणात् ब्राह्मणाऊचुः
इतिदूतमुखाद्राजन्संश्रुतोमहिमातदा दूर्वायामुनिभिःसर्वैःसंपृष्टोनचसंश्रुतः स्नात्वादूर्वांकुरान्गृह्यपुपुजुस्तेविनायकं सेवकास्त्वापि
दूर्वाभिरानर्चुःश्रीगजाननं आसन्सर्वेदिव्यदेहास्तेजसासूर्यवर्चसः शृण्वंतोदिव्यविद्यानांनानारावान्समंततः विमानवरमारूढादि
व्यरत्नानुलेपनाः यातावैनायकंधामकेचिद्रूपंचधारिणः नरानागरिकाःकेचिदागतास्तंमहोत्सवं दृष्ट्वादूर्वाभिरानर्चुरेकविंशत्पृथक्पृथ

कृ भुक्त्वाभोगांश्चतेसर्वेगणेशस्थानमागमन् विमानमपिचलितमूर्ध्वंतत्पुण्यतेजसः तस्माद्गणेशभक्तेन कार्यंदूर्वाभिरर्चनम् नकरोतितन
रोयस्तुप्रसादात्ताभिरर्चनं चांडालःसतुविज्ञेयोनरकान्प्राप्नुयाद्बहून् नतन्मुखंनिरीक्षेत कदाचिदपिमानवः यस्तुदूर्वाभिःपूज्येत देवदेवंग
जाननं तस्यदर्शनतोन्योपिपापीशुद्धत्वमाप्नुयात् लक्षसंख्याकदूर्वाभिःपूजयेद्योगजाननं तेनापिकोटिगुणितं कृतंपूजानरोत्तमः
ब्रह्मोवाच उद्यापनंचकुर्यात्तुदेशकालानुसारतः माघेवाकार्तिकेभाद्रे आषाढेश्रावणेपिवा अन्येषुपुण्यमासेषुव्रतमेतत्समाचरेत् मा
नःस्नानंविधायाथदंतधावनपूर्वकम् धौतवस्त्रधरोभूत्वानित्यकर्मसमाचरेत् देवपूजागृहंवापिदेवालयमथापिवा गोमयेनानुलि
प्यशुधातुनामृन्मयेनवा पंचभिर्ब्राह्मणैःसार्द्धंकृत्वाचस्वस्तिवाचनं नांदीश्राद्धंप्रकुर्वीतलक्षपूजाविधौद्विजः प्राणायामत्रयंकृत्वादेशकालौ
स्मरेत्सुधीः गजाननंचतुर्बाहुंएकदंतंविपाटितम् विधायहेम्नाविघ्नेशंहेमपीठासनस्थितम् तथाहेममयींदूर्वांतदाधारेव्यवस्थितां संस्था
प्यविघ्नहर्तारंकलशेताम्रभाजने वेष्टितंरक्तवस्त्रेणसर्वतोभद्रमंडले पूजयेद्रक्तकुसुमैः शमीदूर्वाभिरर्चयेत् गंधपुष्पैश्चधूपैश्चदीपैः
नैवेद्यतोषकैः पश्चाद्दूर्वादिदूर्वाभिरर्चयेद्गणनायकं गणाधीशंसहस्रेणअथवाशतनामभिः सकृत्संख्यासफलापूजासंख्याहीनातुनिष्फ
ला एवंसंपूज्यविधिवत्पूजांतेहोममारभेत् आचार्यंवरयेत्पूर्वंऋत्विग्भिश्चैकविंशतिः गणानांत्वेतिमंत्रेण अयुतंहोममाचरेत् अथवा
दूर्वामंत्रेणअयुतंतुसमाचरेत् दूर्वामंत्रः त्वंदूर्वेमृतजन्मासिवंदितासिसुरासुरैः सौभाग्यंसंततिंदेहिसर्वकार्यकरीभव यथाशाखाप्र
शाखाभिर्विस्तृतासिमहीतले तथाममापिसंतानंदेहित्वमजरामरम् सहस्रनामभिर्होमंस्वाहाकारसमन्वितम् मधुमिश्रैस्तिलैर्ला
जैःपृथुकैरिक्षुखंडकैः लड्डुकैःपायसान्नेनसघृतेनहुनेत्ततः पूर्णाहुतिंततःकृत्वाबलिदानंततश्चरेत् होमशेषंसमाप्यैतब्राह्मणान्भो
जयेत्ततः आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारभूषणैः एवंमेब्रह्मणादिष्टंव्रतंलोकोपकारकम् तदेतत्कथितंतेद्यकुरुष्वचार्यमादरात् इतिना
नाविधाराजन्महिमाकथितस्तव सेतिहासस्तुदूर्वाणांश्रवणात्पापनाशनः नाख्येयोदुष्टबुद्धेस्तुभक्तपुत्रेनिवेदयेत् यइदंशृणुयाद्भक्त्या
वाजपेयफलंलभेत् इतिगणेशपुराणे उपासनाकांडे दूर्वामाहात्म्येलक्षदूर्वापूजोद्यापनंसंपूर्णम् अथशिवलक्षप्रदक्षिणावि

धिः युधिष्ठिरउवाच पुरातुऋषयःसर्वेनैमिषारण्यवासिनः शौनकाद्यामहात्मानःसर्वशास्त्रविशारदाः तीर्थयात्राप्रसंगेनगंगाद्वार
मुपागमन् तत्रस्नाताकृतजपाविधिवद्दत्तदक्षिणाः यावत्सुखोपविष्टास्तेहर्षनिर्भरमानसाः तावत्तेददृशुस्तत्रसूतंशास्त्रार्थकोविदम्
ददर्शसोपितांस्तत्रऋषीन्विगतकल्मषान् ननामदंडवद्भक्त्यातैश्चापिप्रतिपूजितः तेचक्रुःपरमातिथ्यंकुशलप्रश्नमेवच सुखोपविष्टं
तंसूतंपप्रच्छुरिदमादरात् ऋषयऊ० सूतसूतमहाभागचिरंदृष्टोसिसुव्रत कस्मिन्तीर्थेथवादेशेकाल्लोहिनिहतस्त्वया त्वद्दर्शनेनसौ
ख्यंतुजातंनःपरमाद्भुतं किंचिदिज्ञातुमिच्छामस्तच्छृणुष्वमहामते त्वयोक्ताविविधाधर्मास्तथानानाविधाःकथाः व्रतानिचविचित्राणि
मनोरथकराणिच इदानींवददेवस्यव्रतंपरमपावनं यत्कृत्वासर्वसिद्धिःस्यान्नराणांवांछितप्रदम् सूतउवाच सम्यक्पृष्टंऋषिगणा
व्रतंदेवस्यचाद्भुतम् ममापिकथितुंहर्षोजायतेनात्रसंशयः युधिष्ठिरउवा० धर्माबहुविधाःप्रोक्तास्त्वयानंतफलप्रदाः इदानींश्रोतुमि
च्छामिव्रतंसंपत्करंशुभं श्रीकृष्णउवाच शृणुराजन्प्रवक्ष्यामिशिवस्यव्रतमुत्तमम् लक्षप्रदक्षिणानामव्रतमस्तिसुदुर्लभं ब्रह्मघ्नस्य
सुरापस्यगुरुदारावमर्शिनः संकीर्णकानिपापानिसंकलीकरणानिच प्रकीर्णकानिपापानिमलिनीकरणानिच भ्रातृपत्नीसुतादीनांगामि
नःकाममोहिताः गुरोर्विश्वासहीनस्यव्रतभ्रष्टस्यपापिनः संध्याकर्मविहीनस्यजगत्कुमार्गवर्तिनः दासीवेश्यासंगिनश्चचांडालीगामिनस्त
था परस्वहारिणश्चापि देवद्रव्यापहारिणः ब्राह्मणद्वेषिणश्चापिवृत्तिच्छेदकरस्यच रहस्यभेदकस्यापिरहसिकृतपापिनः ब्रह्मयज्ञविहीन
स्यदुःशास्त्रनिरतस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः ब्रह्महत्यादिपापानांप्रायश्चित्तंयदीच्छसि संकलीकरणानांचमलिनीकरण
स्यच अपात्रीकरणानांचप्रायश्चित्तंयदीच्छसि भ्रातृपत्नीसुतानांचगामिनःशमनंतथा श्वश्रूभ्रातृवधूनांचइच्छयागामिनांतथा लक्षप्र
दक्षिणानामव्रतंकुर्यान्महीपते संध्याकर्मादित्यागस्यचांडालीगामिनस्तुवै दासीवेश्यासंगिनश्चक्षयंयातिनसंशयः वर्द्धनंसर्वभूतानांसदा
विजयकारणं किमेभिर्बहुभिर्वाक्यैःकथितैश्चपुनःपुनः दारिद्र्यनाशनंपुण्यंसर्वैश्वर्यप्रदंशिवम् दुर्लभंसर्वमर्त्यानांपुत्रपौत्रप्रवर्द्धनम् यो
यान्प्रार्थयतेकामान्सतानाप्नोतिमानवः ऋषयऊचुः सूतसूतमहाभागवेदविद्याविशारद यथाप्रदक्षिणाकार्याप्रनुजैर्विधिपूर्वकम्

सूतउवाच एवमेवपुरापृष्टोभगवान्शिवयाशिवः तद्ब्रवीमिमुनिश्रेष्ठाः शृण्वंतुविधिमुत्तमम् देव्युवाच भगवन्देवदेवेशप्रदक्षिण
विधिंवद शिवलक्षेप्यनेनाशु निःपापःपुण्यवान्भवेत् श्रीमहादेवउवाच श्रावणेमाधवेऊर्जेमाघमासेव्रतंचरन् लिंगप्रदक्षिणाः
कुर्याल्लक्षंदरीविधिपूर्वकाः श्रीदेव्युवाच लिंगप्रदक्षिणेदेवनियमाःकेप्रवर्तिताः वदस्वतितदा[illegible] शिवउवाच
प्रतिग्रहंपरान्नंचपरदाराभिभाषणम् परस्वग्रहणंस्नेहादसद्वार्तांचवर्जयेत् असतांपापिनांसंगंनकुर्यात्प्रयतोनरः असत्समागमा
त्सर्वेनिःफलंजायतेनृणां प्रमद्रोहपरैः साकंनव्रजेद्विष्णुनिंदकैः परापवादंनोकुर्यात्परद्रोहंनकारयेत् निंदांचगुरुशास्त्राणांशिवधर्मर
तात्मनाम् तीर्थलिंगतपोनिंदांनकुर्यात्तुकदाचन ब्रह्महत्यादिपापानांप्रायश्चित्तंनचापरं शिवलिंगेमहादेवियेकुर्वंतिप्रदक्षिणाः अनंतकोटि
गुणितंभवेत्सर्वंनसंशयः शिवप्रपतेःप्रत्यहंचपूजाकार्याप्रयत्नतः उमापतेःपूजनेनसिद्धिर्भवतिनान्यथा एवंयःकुरुतेमर्त्योव्रतमेतत्सुदुर्ल
भं यंयंचिंतयतेकामंतंतंप्राप्नोत्यसंशयः शिवउवा० लक्षंसमाप्यपश्चात्तुकुर्यादुद्यापनंव्रती एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने देव्युवाच
व्रतस्योद्यापनंकर्मकथंकार्यंचमानवैः कोविधिःकानिद्रव्याणिकथयस्वममप्रभो ईश्वरउ० शृणुभद्रेप्रयत्नेनलोकानांहितकाम्यया उ
द्यापनविधिंवैवकथयामितवाग्रतः यथासंजायतेवित्तंभक्तिः श्रद्धासमन्विता सएवव्रतकालश्चयतोनित्यंहिजीवितं कामक्रोधाद्यहंकारहे
षपैशून्यवर्जितः संपाद्यसर्वसंभारान्मंडपंतत्रकारयेत् प्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः मासतिथ्यादिसंकल्प्यकुर्यात्स्वस्त्ययनंत
तःपुण्याहवाचनंकार्यमाचार्यवरणंततः ततोब्राह्मणमाहूयवेदवेदांगपारगं आचार्यंवरयेत्पूर्वंश्रीलिंगेकादशैःसह देवागारेनथागोष्ठेशुद्धवासोयम
दिरे पुष्पमंडपिकांकुर्यात्पद्दकूलादिवेष्टितां तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितम् अव्रणंसजलंकुंभंतस्योपरितुविन्यसेत् सौवर्णंराजतंवा
मृन्मयंवापिकारयेत् तस्योपरिन्यसेत्पात्रंताम्रंमृन्मयवैणवम् कुंभोपरिन्यसेद्देवंसुमयासहितंशिवं उमामहेश्वरीमूर्तिंपूजयेद्वृषभेस्थिताम्
ब्रह्माणंदक्षिणेभागेसावित्र्यासहसप्रभम् कौबेर्यांस्थापयेद्विष्णुंलक्ष्म्यासहगरुत्मता महेशंस्थापयेन्मध्येशिवावृषसमन्वितं ततःपूजां
विनिर्वर्त्यमहासंभारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा ततःप्रभातसमयेस्नात्वाशु

हृज्लेशऋचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः प्रदक्षिणादशांशेनहवनंकारयेद्व्रती हवनस्यदशांशेनतर्पणंकारयेत्ततः तर्पणस्यदशांशेनमार्जनंकारयेत्ततः प्रदक्षिणादशांशेनब्राह्मणान्भोजयेत्सुधीः स्वशाखोक्तेनविधिनाहोमयेद्द्रुमपत्रकैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकं पलाशस्यसमिद्भिश्चयवव्रीहितिलाज्यकैः पूर्णाहुतिंततोदद्यात्कृत्वास्विष्टकृतादिकं होमांतेचगुरुंपूज्यसपत्नीकंसमाहितः प्रतिमांकुंभसहितामाचार्यायनिवेदयेत् शंभोप्रसीददेवेशसर्वलोकेश्वरप्रभो नवरूपप्रदानेनममसंतुमनोरथाः यद्दत्त्यादेवदेवेशमयाव्रतमिदंकृतंन्यूनंवाथक्रियाहीनंपरिपूर्णंतदस्तुमे अनेनैवविधानेनयइदंव्रतमाचरेत् यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः इहलोकेसुखंभुक्त्वा भुक्त्वाभोगान्यथेप्सितान् अंतेविमानमारुह्यशिवलोकंसगच्छति इतिस्कंदपुराणेशिवप्रदक्षिणाव्रतोद्यापनंसंपूर्णम् अथाश्वत्थप्रदक्षिणाविधिः ऋषिरुवाच भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद स्त्रीणांपुत्रविहीनानांनराणांसुखसंपदाम् उपायंचैवमेब्रूहिसुतसिद्धिःकथंभवेत् अथर्वणउवाच पुराब्रह्मादयोदेवाःसर्वेविष्णुंसमाश्रिताः अपृच्छन्देवदेवेशंराक्षसैःपीडितावयम् कथंभवेच्चनःशांतिरस्माकंवदनिश्चितम् ऋषयऊचुः पलाशत्वंकथंप्राप्तंब्रह्मणावैमहात्मना वटत्वंचशिवोवापिविष्णुर्वैपिप्पलोभवत् वालखिल्याऊचुः ब्रह्मणातुपुरासृष्टाःसर्वेदेवाःसवासवाः मिलित्वासर्वएवैतेब्रह्माणंवाक्यमब्रुवन् ब्रह्मन्सर्वाधिकोरुद्रःसर्वदेवेषुपठ्यतेकर्तुंतद्दर्शनंदेवगच्छामोभवतासह इतींद्रादिवचःश्रुत्वासर्वदेवपुरोगमः ब्रह्माकैलासमगमत्सर्वदेवगणैर्वृतः शिवद्वारंसमासाद्यदेवाःसर्वेपिसंस्थिताः नदृश्यतेद्वारपालःशिवश्चाभ्यंतरेस्थितः गंतव्यंवानगंतव्यमस्माभिःशिवसन्निधौ [illegible]तव्यमेववा एवंचिंतयमानैस्तैर्नारदोमुनिसत्तमः पुरादृष्टोदेववृंदैस्तमूचुःप्रणताश्चते देवाऊचुः मुनेवेदविदांश्रेष्ठब्रूहिप्रश्नंसुशोभनम् किंकरोतिमहादेवोगंतव्यंवावनांतरे नारदउवाच चंद्रनाशदशायांतुदेवाःसंप्रस्थितंगृहात् तस्मात्काश्चिन्महाविघ्नोभवतांसंभविष्यति किंकरोतिशिवश्चेतिप्रश्नोह्यंनेतथाविधोः तस्मात्संभोगकार्येयंवर्ततेत्रिपुरांतकः इंद्रउवाच सर्वेषामेवदुःखानांनाशकर्तादिवस्पतिः मय्यागतेकथंनाशोदेवतानांभविष्यति विभीषणायदेवानांवल्गानांचाकरोन्मुनिः इतींद्रस्यवचःश्रुत्वा- 

व्याकुलोभून्मुनिस्तदा कथंमद्वचनंसत्यंभविष्यत्यद्यवज्रिणि अद्यमद्वचनंसत्यं यदिशीघ्रंभविष्यति लक्ष्मीनारायणमुद्दिश्यैवव्रतमु
त्तमं एवंसंचिंत्यमनसातूष्णींभूत्वामुनीश्वरः इंद्रोविचारयन्देवाःकिमिदानींविधीयताम ततोवज्रीदृष्ट्वावाचेदंवन्हेमद्वचनंशृणु गृहीत्वाविप्र
रूपंत्वंशिवस्याभ्यंतरंविश यदिप्रसंगोस्त्यस्माकंतदावार्तांनिवेदय यदिनास्तिप्रसंगश्चेद्याचकत्वेनयाहिच अवध्यत्वादनाड्यत्वाद्भिक्षुक
त्वेनतद्व्रज इतिदेवेंद्रवचनंश्रुत्वावन्हिस्तथाकरोत् अभ्यंतरेददर्शेशंशिवयासहसंगतम् शिवयापिचसोदृष्टोलज्जितांभोगमत्यजत् भो
सिकोसीतिसंपृष्टोभिक्षुकोहंक्षुधायुतः वृद्धोस्म्यंधोस्मिदीनोस्मिभोजनंममदीयताम् तेनाहृष्टमनिज्ञात्वापार्वतीतमभोजयत् सोपिभु
क्त्वासमाचारंवक्तुंसंप्रस्थितोबहिः तस्मिन्नेवक्षणेगमोनारदःपार्वतीयया शिरोनिधायपार्वत्याःपदयोःसरुरोदह अहोबालक्कांकिंजातं
तच्छीघ्रमभिधीयतां करोमिनिष्कृतिंतस्यसाध्यासाध्यस्यनान्यथा मानवक्तुंनशक्नोमिन्मुपहासस्यकारणम् कृतंयद्यदादिदेवैस्तथाकोन्यःकरिष्य
ति इतितस्यवचःश्रुत्वापुनःपुनरपृच्छत मुद्रयित्वाततोनेत्रेकराभ्यांसमुनीश्वरः उवाचवचनंनीचमुखोसोगद्गदाक्षरम् नारद उवा
च इंद्रोयंयुवयोर्भोगंदेवताभ्योन्यदर्शयत युवयोस्त्वकृतानिंदातांश्रुत्वादुःखितोभृशम् भोगविच्छित्तयेवन्हिःप्रेषितोद्विजरूपकःअ
थवाकिमनेनापिकथनेनममांबिके जगन्मातासिदेवित्वंकातेस्यादुपहासता इतितस्यवचःश्रुत्वापार्वतीक्रुद्धमानसा स्फुरदोष्ठाग्न्वक्त्रे
त्रा दृष्ट्वातांनारदोयर्यो देवान्प्रतिस्पृवाचेदंसंभोगाद्विरतोहरः आगम्यतांदर्शनार्थंदूरतोसौविलोकितः वन्हेरेवंवचःश्रुत्वादेवेंद्रःसमा
गोयर्यो प्रणिपत्यमहादेवंकृतांजलिपुटोभवन् दृष्ट्वानथाविधंशक्रंपार्वतीवाक्यमब्रवीत् अहल्याजारदुष्टात्मन्सहस्रभगवासव गृप
हासःकृतोमेद्यफलंतत्समवाप्नुहि यावत्यःसंतिदेवानांनार्योवैसर्वएवते अजानन्तस्त्रीमत्वानिशाखिनःसंतुसस्त्रियः इतिदेवीवचःश्रुत्वा
कंपिताःसर्वदेवताः ब्रह्मविष्णुमहेशाद्यास्तुष्टुवुर्जगदंबिकाम ततोदेवीप्रसन्नाभूद्देवेंद्रंवाक्यमब्रवीत् देवामद्वचनंमिथ्याचिकालेपिन
जायते तस्मादेकांशतोवृक्षायूयंसर्वेभवंतुवै इतिदेव्यावचःश्रुत्वाजातादेवास्तुपादपाः अश्वत्थरूपीभगवान्वटरूपीसदाशिवः पलाशो
भूद्विधाताचवज्रःशक्रोबभूवह इंद्राणीसालताजाता देवनार्योलतास्तथा मालत्याद्याःपुष्पवृक्षाउर्वश्याद्यप्सरोभवन् तस्मात्सर्वमय

त्वेनसर्वदाश्वत्थमर्चयेत् नारीवापुरुषोवापिलक्षंकुर्यात्प्रदक्षिणाः लक्ष्मीनारायणंपूज्यमंदवारेचतत्तले दंपतीभोजयेल्लक्ष्मीनारायणस्वरूपिणौ भा
वयित्वासपत्नीकान्पश्चाद्भुंजीतवाग्यता वंध्यापिलभतेपुत्रमितरासांतुकाकथा मूलतोब्रह्मरूपायमध्यतोविष्णुरूपिणे अग्रतःशिवरूपायपिप्पलायनमो
स्तुते विष्णोश्चप्रतिमाभावेकीर्तनंजागरादिकं अश्वत्थमूलेकर्तव्यंविष्णोराराधनंपरं सदासान्निहितोविष्णुर्दृषत्सुब्राह्मणेतथा विष्णुरुवा० अहमश्व
त्थरूपेणशालग्रामशिलासुच तस्मात्सर्वप्रयत्नेनकुरुध्वतरुसेवनम् तेनसर्वाणिभद्राणि भविष्यंतिनसंशयः अश्वत्थपूजास्पर्शेनकर्तव्याश
निवासरे अन्यवारेश्वत्थसंगाद्दरिद्रोजायतेनरः विष्णुर्यदुक्तवांस्तेभ्यस्तद्वृत्तंतेवदाम्यहम् नदानैश्चतपोभिश्चनाध्वरैर्भूरिदक्षिणैः अश्व
त्थसेवनादन्यत्कलौनास्त्यपराक्रिया तद्विधानंनिमित्तानिसंख्याक्लृप्तिश्चपूजनम् हवनंतर्पणंविप्रभोजनंनियमंतथा व्रताधिकारिणस्तच्चवि
धानंचविशेषतः एतत्सर्वंपिप्पलादीन्वक्ष्यामितवसुव्रत दारुणोविविधोत्पातोदिव्यभौमांतरिक्षजः परचक्रभयंदेशविप्लवोदेशविग्रहः दुः
स्वप्नंदुर्निमित्तंसंग्रामोद्भुतदर्शनंः मारीभयंराजभयंतथाचौराग्निजंभयं क्षयापस्मारकुष्ठाद्याःप्रमेहोविषमज्वरः उदरंमूत्रकृच्छ्रंचग्रहश्च
स्तस्तथैवच अन्येचरक्तरोगाद्येव्रणरोगास्तथैवच एतेषांचविनाशायकुर्यादश्वत्थसेवनम् प्रातरुत्थायनद्यादौस्नात्वासम्यक्कृतक्रि
यः अश्वत्थदेशमाश्रित्यगोमयेनोपलेपयेत् तमश्वत्थमलंकृत्यसूत्रेणगैरिकादिना पूजाद्रव्याणिसंपाद्यपुण्याहंवाचयेत्तथा आचार्यं
ऋत्विजैःसाकंकृत्वापूजांसमाचरेत् ध्यानमावाहनंचैवपाद्यमाचमनंतथा तथैवपिप्पलतरुंतथानारायणंप्रभुम् श्वेतगंधाक्षतैःपुष्पैः
धूपदीपनिवेदनैः अर्चयेत्पुरुषसूक्तेनतथैवध्यानपूर्वकम् तेनैवहवनंकुर्यात्तर्पणंवानमस्क्रियाम् श्वेतवर्णंसलक्ष्मीकंचिंतयेत्पुरुषोत्त
मम् इतिध्यात्वावाहनाद्यैरुपचारैश्चषोडशैः ततअश्वत्थंअभिमंत्र्य आरात्तइत्यस्याग्निकांडांतःपातित्वादग्निर्ऋषिः वनस्पतिर्देवता अ
नुष्टुप्छंदः वनस्पत्यभिमंत्रणेविनि० आरात्तेअग्निरस्त्वाचआरात्परशुरस्तुते निवातेत्वाभिवर्षतुस्वस्तितेस्तुवनस्पते अदस्य्यदश्मुजस्मंद्
दुःस्वप्नंदुर्विचिंतितम् शत्रूणांचसमुत्पन्नंअश्वत्थशमयस्वमे ततःप्रदक्षिणाःकुर्यात्तत्सर्वंसफलंभवेत् लक्षमेकंद्विलक्षंवात्रिचतुःपंचलक्षकं
कार्यस्यगौरवंज्ञात्वाद्वादशांतंसमाचरेत् ब्रह्मचारीहविष्याशीस्थधःशायीजितेंद्रियः मौनीध्यानपरोभूत्वापिप्पलस्यस्तुतिंपठेत् विष्णोर्नामस

हस्तंचपौरुषंवैष्णवंतथा एवंसंपाद्यविधिवच्छुभेमासेशुभेदिने प्रातः स्नात्वाशुचिर्भूत्वाकुर्यादुद्यापनंबुधः गणेशपूजनंस्वस्तिवाचनादिचक्र
कारयेत् आचार्यंवरयेत्पश्चात्सर्वलक्षणसंयुतम् देवागारेतथागोष्ठेअश्वत्थेस्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टितां तन्मध्येसर्व
तोभद्रंरचयेल्लक्षणान्वितं तन्मध्येस्थापयेत्कुंभंसजलंवस्त्रसंयुतम् तस्योपरिन्यसेत्पात्रंताम्रंमृन्मयमेववा अष्टपत्रान्वितंपद्मंकर्णिकाभिः
समन्वितम् पंचकृष्णकलादूर्ध्वंस्वर्णपरिनिर्मितम् लक्ष्मीनारायणीमूर्तिमश्वत्थेनसमन्वितां स्थापयेत्पद्ममध्येतुश्रद्धयावाहनंततः ततः
पूजांविनिर्वर्त्यमहासंसारविस्तरैः परमान्नंचनैवेद्यंभक्त्यादेवायदापयेत् उपोष्यजागरंकुर्याद्रात्रौसत्कथयामुदा ततःप्रभातसमयेस्नात्वा
शुद्धेजलेशुचिः मृदाचस्थंडिलंकार्यंकुर्यादग्निमुखंततः कृतलक्षदशांशेनहवनंकारयेद्व्रती हवनस्यदशांशेनतर्पणंकारयेत्ततः पुरुषसूक्त
नजुहुयात्तिलाज्यंपायससंमिनन् स्वशाखोक्तेनविधिनाजुहुयाद्विष्णुमंत्रकैः उक्तैःषोडशभिर्मंत्रैःकुर्याद्धोमंयथाविधि हवनस्यदशांशेनाभि
ष्टान्नंभोजयेद्द्विजान् ब्राह्मणानांस्वयंकुर्याद्यथोक्तनियमंतथा असामर्थ्येस्वयंकर्तुंसर्वमन्येनकारयेत् उक्तप्रमाणादधिकंफलंदशगुणंभ
वेत् ततश्चतुर्गुणंपीठंरजतंचतुरस्रकं उपरिद्रोणमर्धंवातिलोपरिविनिक्षिपेत् श्वेतवस्त्रेणसंछाद्यपूर्ववत्पूजयेत्तरुं दरिद्रायसुशीला
यश्रोत्रियायकुटुंबिने उदङ्मुखायविप्रायस्वयंपूर्वमुखःस्थितः सुवर्णवृक्षराजंचमंत्रेणप्रतिपादयेत् इहजन्मनिवान्यस्मिन्बाल्ययौव
नवार्द्धके मनोवाक्कायजैर्दोषैर्मुच्यतेनात्रसंशयः आचार्येणाथविप्रेणसर्वंयत्नेनकारयेत् एवंकृत्वाव्रतीसम्यक्व्रतस्यपरिपूर्तये हेमाश्व
त्थतरुंदद्याच्छुक्लांगांचपयस्विनीम् पिप्पलीवृक्षराजेंद्रत्वग्निगर्भस्त्वमेवहि प्रभुर्वनस्पतीनांचसर्वजन्मानियत्कृतम् अघौघंनाशयक्षिप्रं
त्वत्तरुंदानतः अमुंतरुंगृहाणत्वंविष्णुरूपद्विजोत्तम स्वीकृत्यदुष्करंघोरंक्षिप्रंशांतिंप्रयच्छमे एवंव्रतंयःकुरुतेपुत्रपौत्रप्रवर्द्धकं भुक्त्वा
भोगान्सुविपुलान्विष्णुसायुज्यमाप्नुयात् इतिश्रीभविष्योत्तरपुराणेअश्वत्थप्रदक्षिणोद्यापनंसंपूर्णम् अथविष्णुलक्षप्रदक्षि
णाविधिः युधिष्ठिरउवाच भगवन्देवदेवेशसर्वविद्याविशारद किंचिद्वक्तुमिच्छामिवक्तुमर्हस्यशेषतः अज्ञानादथवाज्ञानात्प्रमादा
त्स्वकृतानिभो दायादवधपूर्वाणिकथंयांतिक्षयंविभो पापानिसुबहून्यत्रवदस्वमुनिसत्तम व्यासउवाच लक्षप्रदक्षिणावर्तनारदो

कंविधिंशृणु नारदउवाच येलोकाःपापसंयुक्तायर्माधर्मविवर्जिताः व्रतहीनाव्रतभ्रष्टादुराचाराश्चकुत्सिताः अग्निकार्येण रहिताः
शास्त्रधर्मविवर्जिताः नास्तिकाभिन्नमर्यादाहेतुकाः कितवाःशठाः मातापित्रोर्विरुद्धाश्चगुरुस्वशरद्रोहकाः एतेषांनिष्कृतिंतानरूप
यावदमेऽधुना अज्ञानांतुहिजीवानांसाधूनांत्वंसुहृत्त्पृनः अनाथनाथदेवेशतद्रूपास्तादृशाजनाः एतच्छुत्वाततोब्रह्माहर्षादुत्फुल्ल
लोचनः साधुसाध्वितिदेवेशोवचनंचेदमब्रवीत् ब्रह्मोवाच किंवर्णयामिसाधूनांमाहात्म्यंचभवादृशाम् हरेर्लोकैकनाथस्यकस
णामुक्तिदायिनी ब्रह्महत्यादिपापेषुसंकलीकरणेषुच जातिभ्रंशकलंकेषुअभक्ष्यभक्षणेषुच हरिणानिर्मितंपूर्वंव्रतंलक्षप्रदक्षि
णम् सर्वेषामपिपापानांमूलादुत्कृंतनंपरम् पापांधकारनाशायपापेंधनदवानलम् नारायणेजगन्नाथेयोगनिद्रामुपेयुषि प्रारभ्यव्रत
मिदंकुर्याद्यावत्प्रबोधिनी द्वादश्यांवाचतुर्दश्यांपौर्णमास्यामथापिवा स्नानंकृत्वानदीतोयेनित्यकर्मसमाप्यच पश्चात्प्रदक्षिणावर्तःकर्तव्यो
हरिरीश्वरःअनंतमव्ययंविष्णुंलक्ष्मीनारायणंहरिं जगदीशनमस्तुभ्यंप्रदक्षिणपदेपदे इतिमंत्रसमुच्चार्यकुर्यादावर्तमादरात् प्रद-
क्षिणाःप्रकर्तव्यादिवसेदिवसेविभोः यावत्प्रदक्षिणावर्तस्तावन्मणिविनिक्षिपेत् आवाहनादितःसम्यक्धूपदीपादिभिस्तथा नैवे
द्यंपायसंप्रोक्तंतांबूलंदक्षिणान्वितम् भोजयेच्चयथाशक्त्याविप्रान्सर्वफलप्रदान् सर्वपापविनाशार्थंनारीभिःपुरुषैरपि प्रदक्षिणाः
प्रकर्तव्यायावद्बोधिनीभवेत् लक्षप्रदक्षिणाःकार्याअंतेउद्यापनंचरेत् उपवासःप्रकर्त्तव्य अधिवासनवासरे सौवर्णींप्रतिमांकुर्या
विष्णोरमिततेजसः गरुडेनसमायुक्तांस्थापयेत्कलशोपरि आचार्यंवरयित्वातुऋत्विजश्चनिमंत्रयेत् होमंचविष्णुगायत्र्यांतद्दशांशेनवा
ग्यतः पायसंजुहुयात्तत्रअयुतंतिलसर्पिषा हुत्वास्विष्टकृदाज्यंचदद्याद्दानानिसर्वशः कार्पासंलवणंचैवगामेकांचपयस्विनी आचार्याय
सपीठांतांप्रतिमांचनिवेदयेत् ब्राह्मणान्भोजयेत्पश्चात्पंचविंशतिसंख्यकान् इतितस्यवचःश्रुत्वानारदस्तुतथाकरोत् धर्मेणचकृतंस
र्वंमुनेश्चवदनाच्छ्रुतम् इतिश्रीभविष्येविष्णुलक्षप्रदक्षिणोद्यापनंसंपूर्णम् अथतुलसीलक्षप्रदक्षिणाविधिः नारदउवाच केनतेयेन
विधिनातुलसीपूज्यतेसदा तदाचक्ष्वमहादेवममानुग्रहकारणात् महादेवउवाच शृणुपक्षेशुभेवारेशुभेऋक्षेशुभोदये सर्वथा

केशवार्थंतुरोपयेत्तुलसींमुने गृहस्यांगणमध्येवागृहस्योपवनेऽपिवा शस्तेदेशेचतुलसीमर्चयेद्बुद्धिमान्नरः मूलेचवेदिकांकुर्यादालवा
लसमन्विताम् प्रातःसंध्याविधिंकृत्वास्नानपूर्वंदिनेदिने गायत्र्यष्टशतंजप्त्वातुलसींपूजयेत्ततः प्राङ्मुखोवोदङ्मुखोवापिस्थित्वाप्रयतमान
सः ध्यायेच्चतुलसींदेवींश्यामांकमललोचनां प्रसन्नांपद्मवदनांवराभयचतुर्भुजां किरीटहारकेयूरकुंडलादिविभूषणां धवला[illegible]
ष्यासननिषेविताम् ध्यानं॰ देवित्रैलोक्यजननिसर्वलोकैकपावनि आगच्छभगवत्यत्रप्रसीदतुलसिप्रिये आवाहनं॰ सर्वदेवमयेदेविसर्व
दाविष्णुवल्लभे देविस्वर्णमयंदिव्यंगृहाणासनमव्यये आसनं॰ सर्वदेवमयेदेविसर्वदेवनमस्कृते दत्तंपाद्यंगृहाणेदंतुलसित्वंप्रसीदमे पाद्यं॰
सर्वतीर्थमयाकारेसर्वागमनिषेविते इदमर्घ्यंगृहाणत्वंदेविदैत्यांतकप्रिये अर्घ्यं॰ सर्वलोकस्यरक्षार्थंसदासन्निधिकारिणी गृहाणतुलसि
प्रीत्याइदमाचमनीयकं आचमं॰ गंगादिसर्वतीर्थेभ्योमयानीतंशुभंजलम् स्नानार्थंतुलसीस्वच्छंमान्यानस्प्रतिगृह्यतांम् स्नानं॰ क्षीरोदमथ
नोद्भूतचंद्रलक्ष्मीसहोदरे गृह्यतांपरिधानार्थमिदंक्षौमांबरंशुभे वस्त्रं॰ कंचुकीं॰ आचमनीयं॰ गंधपुष्पंतथाधूपंदीपंनैवेद्यमेवच तांबूलंदक्षि
णांचैवमंत्रपुष्पंततश्चरेत् प्रसीदममदेवेशिकृपयापरयामुदा अभीष्टफलसिद्धिंचकुरुमेमाधवप्रिये देवैस्त्वंनिर्मितापूर्वमर्चितासिमुनीश्वरैः
नमोनमस्तेतुलसिपापहरहरिप्रिये तुलस्यमृतजन्मासिसदात्वंकेशवप्रिये केशवार्थंविचिन्वामिवरदाभवशोभने इतिप्रार्थना इत्येवमर्चये-
न्नित्यंप्रातरेवशुचिर्नरः मध्यान्हेवाथसायान्हेपूजयेत्प्रयतोनरः वैशाखेकार्तिकेमाघेचातुर्मास्येविशेषतः पूजयेत्तुलसींदेवीमपूपफलपायसैः
अन्यद्गुह्यतमंकिंचित्कथयामितवाग्रतः प्रदक्षिणाफलंचैवनमस्कारास्तथैवच एवंकुर्याद्बुद्धिकामः सर्वकामःसदैवतु पंचाशद्भिर्भवेल्लक्ष्मीः श
तेनचविजयःस्मृतः विद्यार्थीतुसहस्रंवैस्त्ययुतंसर्वसंपदा लक्षेतुसर्वसिद्धिःस्यान्नात्रकार्याविचारणा यंयंचिंतयतेकामंतंतंप्राप्नोतिसर्वशः
भक्त्याकायथेप्सितान्भोगानंतेमोक्षमवाप्नुयात् इदंफलंकोटियुतंभवेदत्रनसंशयः लक्षसंख्याश्चकर्तव्यास्तुलस्याश्चप्रदक्षिणाः नदाउद्याप
नंकुर्यात्तेनसम्यक्फलंभवेत् उद्यापनंविनाविप्रफलंनैवप्रभवेत्क्वचित् तस्मात्सर्वप्रयत्नेनउद्यापनविधिंशृणु सौवर्णींप्रतिमांविष्णोःशं
खचक्रगदान्विताम् तुलस्यायतनंचैवकुर्यात्सौवर्णनिर्मितम् हेमाद्रिनिर्मितेकुंभेपूर्णपात्रसमन्विते पुण्योदकैःपंचरत्नैःकुशदूर्वाप्रपूरिते

नस्योपरिन्यसेद्विष्णुं लक्ष्म्याचतुलसीसमम् पूजांपुरुषसूक्तेनकुर्यात्सर्वंप्रयत्नतः उपचारैः षोडशभि र्भक्तिभावसमन्वितः रात्रौजागरणं
कुर्यात्पुराणैर्वेदपाठकैः वैष्णवैश्चप्रबंधैश्चनृत्यैर्वाद्यैस्तथैवच ततःप्रातःसमुत्थायहोमंकुर्याद्विधानतः वैष्णवेनतुमंत्रेणतिलाज्येनवि
शेषतः पायसेनघृताक्तेनअष्टोत्तरसहस्रकम् आचार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां ब्राह्मणान्भोजयेत्पश्चात्सहस्रंवाथशक्तितः
शतंवाभोजयेद्धीमानष्टाविंशतिवापुनः तेभ्योऽपिदक्षिणांदद्याद्वित्तशाठ्यंनकारयेत् एवंयःकुरुतेमर्त्यस्तस्यपुण्यफलंशृणु अश्वमेधस
हस्रस्यवाजपेयशतस्यच तत्पुण्यंलभतेमर्त्योनात्रकार्याविचारणा इदंरहस्यंपरमंनवाच्यंयस्यकस्यचित् विष्णुप्रीतिकरंयस्मात्तस्मात्स
र्वंशताधिकं तुलसीप्रदक्षिणानांतुमाहात्म्यंशृणुयान्नरः सकृद्वापठतेयोवैसगच्छेद्वैष्णवंपदम् इतिश्रीभविष्येलक्षतुलसीप्रदक्षिणोद्या
पनंसंपूर्णम् अथगोब्राह्मणाग्निहनुमल्लक्षप्रदक्षिणाविधिः युधिष्ठिरउ॰ भगवन्ज्ञानिनांश्रेष्ठसर्वविद्याविशारद किंचिद्विज्ञातुमिच्छा
मिवक्तुमर्हस्यशेषतः अज्ञानादथवाज्ञानात्प्रमादाद्वाकृतानिहियत् पापानिचबहून्यत्रविलयंयांतितद्वद व्यासउ॰ लक्षप्रदक्षिणाःकार्याब्रा
ह्मणेऽग्नौतथागवि नारद॰ येचपापरतानित्यंधर्माधर्मविवर्जिताः व्रतहीनादुराचाराज्ञानहीनाश्चजंतवः तेषांपापविनाशार्थंप्रायश्चित्तंकथं
भवेत् ब्रह्मोवाच किंवर्णयामिसाधूनांमाहात्म्यंचभवादृशां साधुसाधुचविप्रेंद्रवाञ्छितंव्रतमुत्तमं ब्रह्महत्यादिपापेषुसंकलीकरणेषुच जा
तिभ्रंशकरेचापिअभक्ष्यभक्षणेतथा विष्णुनानिर्मितंपूर्वंव्रतंलक्षप्रदक्षिणं सर्वेषामपिपापानांनाशकंपरमंशुभं आषाढेशुक्लपक्षेतु
एकादश्यांविशेषतः द्वादश्यांपौर्णमास्यांवाप्रारभेद्व्रतमुत्तमं देशकालौतुसंकीर्त्यनत्वागुरुविनायकौ लक्षप्रदक्षिणाःकार्यास्त्वीरग्नौश्च
शुचिव्रतः जितेंद्रियोजितप्राणोमुखेनमंत्रमुच्चरेत् नमस्तेगार्हपत्यायनमस्तेदक्षिणाग्नये नमआहवनीयायमहावेद्यैनमोनमः गवांप्र
दक्षिणाःकार्यालक्षसंख्यायथाविधि पूर्वंपूज्यचगामेकांदत्वानैवेद्यमुत्तमं पश्चात्प्रदक्षिणाःकार्यानत्वातांचपुनःपुनः गवामंगेषुतिष्ठंतिभु
वनानिचतुर्दश यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच एवंप्रदक्षिणांकृत्वासर्वपापैःप्रमुच्यते कर्मनिष्ठंशुचिंविप्रंपूजयेद्विधिवद्बुधः ततः
प्रदक्षिणाःकार्यायावल्लक्षंभवेद्व्रतं भूमिदेवनमस्तुभ्यंनमस्तेब्रह्मरूपिणे पूजितोदेवदेवैस्त्वमतःशांतिंप्रयच्छमे एवंहनूमतेकार्याप्भूत

प्रेतविनाशिने षोडशैरुपचारैश्चपूजयेद्वायुनंदनं ततःप्रदक्षिणाः कार्याआत्मकार्यार्थसिद्धये मंत्रः मनोजवंमारुततुल्यवेगंजितेंद्रियंबुद्धिम
तांवरिष्ठं वातात्मजंवानरयूथमुख्यंश्रीरामदूतंशरणंप्रपद्ये एवंप्रदक्षिणावर्त्तंकुर्यादेवंप्रयत्नतः भूतप्रेतपिशाचाद्याविनश्यंतिनसंश
यः आदित्यादिग्रहाःसर्वे शांतिंयांतिशिवाज्ञया उद्यापनंचसर्वासांकुर्यात्पूर्णफलाप्तये उद्यापनविधानादौपुण्याहंवाचयेत्ततः आचार्यंवरयि
त्वाचप्रतिमाःस्वर्णसंभवाः अव्रणंकलशंपूर्णंस्थापयेन्मंडलेशुभे विरच्यलिंगतोभद्रंपूजयेद्देवमंजसा पायसंजुहुयात्तत्र तत्तन्मंत्रैर्विच
क्षणः अष्टोत्तरसहस्रंतुप्रायश्चित्तंचरेच्छुभम् मंडलंदक्षिणायुक्तमाचार्यायनिवेदयेत् ब्राह्मणान्भोजयेच्छक्त्याविक्तशाठ्यविवर्जितः ये
कुर्वंतिव्रतमिदंपापमुक्ताभवंतिते भुक्त्वाचयथेप्सितान्भोगानंतेसायुज्यमाप्नुयात् इतिश्रीभ०विप्राग्निगोहनुमल्लक्षप्रदक्षिणोद्यापनंसंपूर्णं
अथलक्षबिल्वपत्रपूजा व्यासउवाच पूर्वजन्मनिव्याधोसौ क आसीद्राक्षसोपिसः किमर्थंकर्मकृतवान्कथंपत्रंसमर्पितं किंशीलंकःस
माचारस्तन्ममाचक्ष्वनाभिज किंनामसकथंप्राप्तःसालोक्यंनद्गदस्वमे ब्रह्मोवाच विदर्भदेशेनगरंमोदोशाख्यंबभूवह विख्यातंत्रिषुलोकेषु
कुबेरनगरोपमम् भीमोनामाभवेद्व्याधोनगरेमांसविक्रयी परेषांदोषकथनेदोषोयद्यपिवर्तते प्रश्नेकृतेप्रवक्तव्यंयथातथ्यंनमत्सरात्
ब्रह्मोवाच सराज्यकार्यंकुरुतेस्वयंभुंक्तेवरांगनाः राष्ट्रेशृणोतिरामांसयानांत्वासपतिर्यथा बलादानीयतेभोक्तुंक्रंदंतीरुदतीमपि नवांगनार्थं
परद्रव्याणिगृण्हातिथ
कुरुतेभेदंविषयलंपटः वाचोन्कंकुरुतेनारीनस्य दृष्टिपथंगता तामालिंग्यत्वसौकामीचुंबत्येतां भजत्यपि
नानिसबलात्पुनः सोपिताहग्गुणोमंत्रीदुष्टबुद्धिरघेरतः एवंदुराचाररतोनकन्यांनचमातरं नवर्जयतिसंभोगे भगिनीमपिनिर्घृणः नब्रह्म
हत्यांमनुतेनस्त्रीबालवधंतथा एवंपापसमाचारौपापस्यपर्वताविव आस्तांसुभौदुष्टबुद्धीराजामात्यौसदुःसहौ नब्राह्मणोनसन्यासीनद्र
हेयातिभिक्षितुम् नराष्ट्रेनामतस्यास दृण्हातिप्राकृतोपिच एकदामृगयार्थंतौयातौचगहनंवनम् हतानिमृगयूथानिपक्षिरूपाण्यनेकशः
तानिप्रापय्यनगरेअश्वारूढःस्वयंपुनः शिवस्यचमहास्थानंपथितोपश्यतःस्मह यस्मिन्विराजतेमूर्तिःशक्त्यासहशिवस्यच स्थापिता
नाममिषासापुत्रार्थंकुर्वंतातपः भक्त्यासाक्षात्कृतोयत्रदेवदेवोह्युमापतिः पंचाक्षरेणमंत्रेणध्यायताबहुवासरम् दत्वातस्मैवरान्देवोप्रददं

वांछितान्यपि ततोवसिष्ठहस्तेनतेनेयंस्थापितात्हदा उमामहेश्वरीमूर्तिर्वसिष्ठेनपुराकृता यस्यादर्शनतोनृणांपुरुषार्थाश्चतुर्विधाः स्मरणात्पूज
नाच्चापिसेव्यतेनात्रसंशयः एवंवसिष्ठवाक्येनसापतद्भुविपप्रथे शिवस्यभोजनेनास्यस्मरणेनार्चनेनच रामलक्ष्मणशत्रुघ्नभरताःसदृशाःसुताःजा
तालोकेषुविख्याताःसर्वज्ञाःशूरसंमताः एवंहस्वामहारम्यंप्रासादंराजनिर्मितं उमामहेश्वरींमूर्तिंराजामात्यौप्रपूजतुः बिल्वपत्रैश्चसंपूज्यअ-
च्छिद्रैःकोमलैःशुभैः प्रदक्षिणीकृत्यगृहमीयतुःक्षपायात्रतः एतदेवपुरेपुण्यंदैवाज्ज्ञातंतयोस्तदा एवंपापसमाचारौराज्यंकृत्वाथममृतुः बध्वा
पाशैर्यम्यहस्तैर्नीतौतौशमनांतिकम् चित्रगुप्तंसमाहूयपप्रच्छसशुभाशुभम् तेनोक्तंनैतयोरस्तिपुण्यलेशोरवेःसुत पापानांगणनानास्ति
ततोदूतानब्रवीद्यमः बध्यतांबध्यतामेतौक्षिप्यतांनरकेषुच मृत्युलोकेततोह्येतौनीचयोनिंगताबुभौ कुंडेवीचिमयेपंकेसहस्रंपरिवत्सरान् एके
कस्मिन्क्रमेणेतौकुंडेभुक्त्वाघसंचयौ अनयोःपुण्यलेशोस्ति दूताःशृणुतसत्कृतिं प्रसंगादर्चितोदृष्टोदेवआभ्यामुमापतिः तेनपुण्येननष्टेतौ
पापंत्यतितरिष्यतः एवमाकर्ण्यतद्वाक्यंदूतैर्बध्वाहतंहृदम् कुंभीपाकेशोणितोदेनिरयेगौरवेपितौ निक्षिप्तौकालकूटेचक्रमशःशतवत्सरान् ता
मिस्रेचांधतामिस्रेपूयशोणितकर्दमे कंटकेषुक्षतांगौतौसंतप्तौतप्तवालुके भक्षितौकृमिभिस्तत्रभृशंशुभनिसुखेक्षुभौ असीपत्रवनेघोरेत
तोनीतावुभावपि यत्रशस्त्राभिघातेनवर्माभिद्येतपापिनां ततस्तप्तशिलायांतौनिष्पिष्टौघनघाततः भुक्त्वातुनरकानेकविंशतिंबहुवासरं न
हुःस्वंशक्यतेवक्तुंशेषेणापिकदाचन एवंबहुसहस्राणिभुक्त्वाभोगाननेकशः निस्तीर्णभोगौतौपापशेषेणभुवमागतौ एकोजातःकाकयो
नौउलूकोःभूत्सरोपिच ततोएकोदर्दुरोभूदपरःसरठोभवत् ततएकोविषधरोपरोभूद्वृश्चिकोपिच तत्रापिकुरुतःपापंनानाल्लोकविदंशनः
शुनीमार्जारयोनौतौजातौनकुलसूकरौ वृकजंबूकयोनौतौजातौघोटकगर्दभौ ततउष्ट्रगजौजातौततोनक्रमहाझषौ ततोव्याघ्रमृगौजातौ
ततोवृषभकासरौ एवंनानायोनिगतौजातौचांडालअंत्यजौ राक्षसौभिल्लयोनिंचततस्थांनेसमीयतुः नपिंगाक्षिदुर्बुद्धिरितिनाम्नाजातौ
चभूतले आजन्मकृतपापस्यकथनेबहुदोषता यदातौराज्यप्रभृतिआस्तांपापरतौसदा एकंपुण्यंतयोरासीन्मृगयायासपंतोःक्वचित् शंकर
स्यचनमनंदर्शनंचप्रदक्षिणा अर्चनंबिल्वपत्राद्यैस्तुष्टआसीदुमापतिः अगाधंतत्तयोःपुण्यंपूर्वजन्मनिसंचितं यदापुनाराक्षसोसौभूमि

पंभक्षितुंगतः स आरूढोबिल्ववृक्षं तस्यत्राणिच मस्तके पतितानिउमेशस्यतुष्टोभूत्सहयोरपि दिव्यदेहं तयोर्दत्वास्वलोंकंप्रापयद्विभुः एतन्तेक
थितंपूर्वजन्मकर्मचचैतयोः बिल्वपत्रार्चनादेवतुष्टोभूत्सउमापतिः लक्षपूजांप्रकुर्याच्चप्रसन्नोहिशिवोभवेत् एवंहिबिल्वपत्रैश्चसर्वकामार्थसिद्ध
ये श्रीकामोबिल्वपत्रैश्चपूजयेच्चतथाशिवम् लक्षेणसर्वसिद्धिश्चनात्रकार्याविचारणा यंयंचिंतयतेकामं तंतंप्राप्नोतिसर्वशः [illegible]
ल्वपत्रैश्चपूजनम् शंभुप्रीतिकरंनृणांशिवभक्तिविवर्द्धनं वैशाखेश्रावणेऊर्जेबिल्वपत्रार्चनंस्मृतम् दिनेदिनेसहस्रेण अर्चयेद्बिल्वपत्रकैः एवंमासत्र
यंकुर्यात्ततउद्यापनंचरेत् उद्यापनंप्रवक्ष्यामिव्रतस्यपरिपूर्तये आहूयब्राह्मणान्सर्वान्सुचंद्रेचशुभेदिने यत्रचोद्यापनंकार्यंमंडलंतत्रकारयेत्
कर्तव्यंस्वगृहेर्विप्रैस्तत्सर्वंसुकृतंभवेत् वेदिकानवकर्तव्यामंडपेचसुशोभने गीतवादित्रघोषेणब्रह्मघोषेणभूयसा प्रविश्यमंडपेतस्मिन् आ
चार्येणाद्विजैःसह मासतिथ्यादिसंकीर्त्यकुर्यात्स्वस्त्ययनंततः पुण्याहवाचनंकार्यंआचार्यवरणंतथा ततोब्राह्मणमाहूयवेदवेदांगपारगम्
आचार्यंवरयेत्पूर्वंऋत्विगकादशैःसह देवागारेतथागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकांकृत्वापट्टकूलादिवेष्टिताम् तन्मध्येलिंगतोभद्रंरच
येल्लक्षणान्वितम् कुंभस्यरुद्रकोणेतुरचयेद्वेदिकांव्रती वस्त्रेणाच्छादितांवेदींरचयेत्तत्रतंडुलैः कुर्यात्तंडुलकैलासंत्रिकूटंतस्यचोपरि न्यसे
द्देविकयासार्द्धंशंकरंलोकशंकरं सौवर्णींप्रतिमांकृत्वास्थापयेत्तंडुलोपरि ब्रह्माणंदक्षिणेभागेसावित्र्यासहसुप्रभम् कौबेर्यांस्थापयेद्वि
ष्णुंलक्ष्म्यासहगरुत्मता महेशंस्थापयेन्मध्येपार्वत्यासहसुप्रभम् कलशंस्थापयेत्तत्रताम्रंवामृन्मयंशुभं गंगोदकसमायुक्तं पंचरत्नस
मन्वितम् पंचपल्लवसंयुक्तंस्थापयेच्चततोयतः वस्त्रयुग्मेनसंवेष्ट्यकैलासंकलशंशुभम् यदुक्तंतत्रकल्पोक्तंपूजनंतत्रकारयेत् वेदशास्त्रप्र
माणेनरात्रिंतांगमयेद्व्रती ततःप्रभातसमयेस्नात्वाचशुचिर्भवेत् स्थंडिलंकारयेत्तत्रस्वशाखोक्तविधानतः हवनंचप्रकुर्वीत सतिला
ज्येनपायसैः मूलमंत्रेणगायत्र्याशंभोर्नामसहस्रकैः येनमंत्रेणपूजातुकृत्वातेनैवकारयेत् हवनंतद्दशांशेन तद्दशांशेनतर्पणं वंदनं
तद्दशांशेनकुर्यात्तिलयवैःसह एवंहोमःप्रकुर्वीतअष्टोत्तरसहस्रकं बिल्वपत्रंसुवर्णस्य अर्पयेच्चउमापतिम् आचार्यंपूजयेद्विप्रां
स्तोषयेद्दक्षिणादिभिः पयस्विनींचगांदद्याद्धिरण्येनसहैवतु प्रतिमांचसवस्त्रांचकलशंपर्वतंतथा दत्वाक्षमापयेत्सम्यग्देवदेवज

गद्गुरुः अनेनैवविधानेनलक्षपूजांकरोतियः पुत्रपौत्रप्रपौत्रैश्चराज्यंप्राप्नोतिशाश्वतं यइदंपठतेनित्यंश्रद्धाभक्तिसमन्वितः देवदेवोमहादेवोददा
तिविपुलांगतिम् इतिश्रीस्कंदपु० बिल्वदललक्षपूजनोद्यापनंसंपूर्णम् अथशिवस्यनानालक्षपूजाविधिः ऋषयऊचुः यानिकानिचती
र्थानिपुण्यान्यायतनानिच किमुद्दिश्यचकार्याणितन्सर्वंकथयप्रभो शिवाख्यानपरोलोकेत्वत्तोन्योनहिविद्यते द्वैपायनव्यासदेवस्यसर्वज्ञोसि
महामते लोमशउ० पृथिव्यांयानितीर्थानिसागरांतानि भोद्विज माहात्म्यानिचशास्त्राणिकथितानिमयापुरा इदानींवक्तुमिच्छामिलक्षपूजांशिव
स्यच स्कंदेनचसमाख्याताअगस्त्यायमहामते तेनैवकथितापूजाममाग्रेलक्षपुष्पिका यद्यद्दत्तोभवेत्पुष्पंशंकरेतुसमर्पयेत् श्रावणेमा
धवेऊर्जेविदध्याल्लक्षपुष्पिकाम् एकैकंमूलमंत्रेणरुद्रमंत्रेणवापुनः अथवारुद्रसूक्तेनसहस्रेणाथवाव्रती अर्चयेत्पार्वतीनाथंनमोरुद्रा
यवाजपेत् अनेनैवप्रकारेणलक्षपूजांसमर्पयेत् ऋषयऊचुः यानिकानिचपुष्पाणिविशिष्टानिशिवार्चने तानिसर्वाणिभोब्रह्मन्क
थयस्वयथाक्रमम् लोमशउ० बार्हतंकर्णिकारंचकरवीरंतिलस्यच बिल्वपुष्पंचकल्हारमर्कमंदारमेवच नीलोत्पलंचकमलंकुमुदंचकु
शेशयं मालतीचंपकंचैवतथामोगरकंशुभं नगरंशतपत्रंचसौवीरंमुनिसंज्ञकम् जातीपाटलकंचैवपुन्नागंचविशिष्यते कदंबंचकुसुमंचअ
शोकंबकुलंतथा पालाशंकोरटंचैवकबिलंधत्तुरंतथा एतान्यन्यानिपुष्पाणिविशिष्टानिशिवार्चने एतेषांलक्षपूजांवैयःकरोतिनरोत्तमः भुक्त्वा
भोगान्सविपुलान्शिवेनसहमोदते आयुःकामेनकर्तव्यंचंपकैः पूजनंमहत् विद्याकामेनकर्तव्यमर्कपुष्पैर्विशेषतः पुत्रकामेनकर्तव्यंबार्ह
तैः पूजनंमहत् करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः बकुलातिलपुन्नागैर्धनकामेनपूजयेत् दुःस्वप्ननाशनार्थाय द्रोणपुष्पैस्तुपूजनं क
ल्हारैःकर्णिकारैश्चमंदारैःकुसुमैःशुभैः श्रीकामेनचकर्तव्यंबिल्वपत्रैश्चपूजनं विद्याकामेनकर्तव्यंशंकरस्यप्रपूजनं पालाशैःपाटलैश्चैवकदंबकु
सुमैस्तथा महाव्याधिनिरासार्थंपारिजातैस्तुपूजनं वशीकरणकामेनसौवीरैस्तोषयेत्तुयः तस्यविश्वंभवेद्वश्यं नात्रकार्याविचारणा देवदान
वगंधर्वावशीभवंतिनान्यथा पुत्रकामेनकर्तव्यंधत्तूरकुसुमैःशुभैः उत्तमांश्रियमाप्नोतिप्रसादाच्छंकरस्यच एवंसर्वैश्चपुष्पैश्चसर्वकामार्थसिद्धये
पूजयेत्पार्वतीनाथंभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः लक्षपुष्पैःपूजनेनप्रसन्नःशंकरोयथा उद्यापनंप्रवक्ष्यामिव्रतस्यप

रिपूर्तये आहूय ब्राह्मणान् सर्वान् शुभे चातिथिवासरे यत्रउद्यापनं कार्यं मंडपं तत्र कारयेत् स्वशास्त्रोक्तेन कर्तव्यं न तत्सर्वं सुकृतं भवेत् वेदि
कान्वभकर्तव्या मंडपे तत्र शोभने गीतवादित्रघोषेण ब्रह्मघोषेण भूयसा प्रविश्य मंडपे तस्मिन्नाचार्येण द्विजैः सह तिथिऋक्षं च संकल्प्य
कुर्यात्स्वस्त्ययनं ततः पुण्याहवाचनं कार्यमाचार्यवरणं ततः वेदिकायां तु कर्तव्यं स्वस्तिकं परमं शुभम् तन्मध्ये विधिवद्विद्वन् मनेवदां कस्वस्ति
कैः कुर्यात्तंडुलकैलासं भिक्कूटं तस्य चोपरि तस्योपरि न्यसेत्कुंभं ताम्रं मृन्मयमेव वा ब्रह्माणं दक्षिणे भागे उदीच्यां विष्णुमेव च सौवर्णीं प्र
तिमां कुर्यात्स्थापयेत्तंडुलोपरि महेशं स्थापयेन्मध्ये पार्वत्या सह सुप्रभम् पंचपल्लवसंयुक्तं स्थापयेत्तस्य चाग्रतः वस्त्रयुग्मेन संवे
ष्ट्य कैलासं कलशं शुभं यदुक्तं रुद्रकल्पे तु पूजनं तत्र कारयेत् वेदशास्त्रपुराणेन रात्रौ जागरणं चरेत् ततः प्रभातसमये नद्यां स्नात्वा शुभ
भे जले स्थंडिलं कारयेत्तत्र स्वशास्त्रोक्तविधानतः हवनं रुद्रमंत्रेण तिलाज्येन च पायसैः नानाविधैर्भक्ष्यभोज्यैर्गंधधूपादिभिस्तथा प्रार्थये
च्छंकरं देवं विरिंचिं विष्णुना सह सावित्रीं पार्वतीं चैव लक्ष्मीं गणपतिं तथा स्कंदं भैरवं चामुंडाः परिवारांस्ततोऽर्चयेत् नैवेद्यैर्विविधैश्चैव तोषये-
द्गिरिजापतिम् शर्करा घृतचूर्णेन चरुणा जुहुयात्सह श्रेयः संपादनं कार्यमाचार्यपूजनं तथा ऋत्विजः पूजयेत्पश्चाद्वस्त्रालंकरणैः शुभैः गोभू
हिरण्यवस्त्राद्यैस्तोषयेद्ब्राह्मणांस्ततः अभिषेकं ततः कुर्यात्पुराणश्रुतिचोदितम् ततः शिवालये गत्वा साचार्येण द्विजैः सह स्नानं पंचामृते
नैव रुद्रसूक्तविधानतः पूजां सुवर्णपुष्पैश्च ऋतुकालोद्भवैस्तथा कारयेत्तस्य लिंगस्य यथाशक्त्या तु पूजनम् वस्त्रयुग्मं समभ्यर्च्य दंपतीन् भो
जयेत्ततः प्रदक्षिणा नमस्कारान् कृत्वा भूमिं कृतांजलिः क्षमापयेन्महादेवं मुहुर्मुहुरतंद्रितः महादेव जगन्नाथ भक्तानां कार्यकारक त्वत्प्र
सादादहं यात्वे शीघ्रं कार्यं प्रदो भव अनेनैव विधानेन लक्षपूजां करोति यः पुत्रपौत्रप्रपौत्रैश्च राज्यं प्राप्नोति शाश्वतं यइदं पठते नित्यं श्रद्धा
भक्तिसमन्वितः देवदेवो महादेवो ददाति विपुलां मतिं इति श्रीस्कंदपु० उत्तरखंडे लक्षपुष्पोद्यापनं सं० अथ तुलसीलक्षपूजाविधिः मा
सपक्षाद्युल्लिख्य ममसमस्तपापक्षयार्थं श्रीमहाविष्णुप्रीत्यर्थं तुलसीलक्षपूजां करिष्ये इति संकल्प्य तुलसीप्रार्थना देवैस्त्वं निर्मिता पूर्व
मर्चितासि मुनीश्वरैः नमो नमस्ते तुलसि पापं हर हरिप्रिये प्रार्थना तुलस्यमृतजन्मासि सदा त्वं केशवप्रिये केशवार्थे विचिन्वामि वरदा भव

शोभने तुलसीपत्राणिसंगृह्य विष्णोर्भक्त्यासमर्पयेत् कृष्णउवाच अथराजन्प्रवक्ष्यामिलक्षश्रीतुलसीव्रतम् विष्णुप्रीतिकरंनृणां
विष्णुभक्तिविवर्द्धनम् तुलसीप्रभवैः पत्रैर्योनरः पूजयेद्धरिं नसलिप्येतपापौघैः पद्मपत्रमिवांभसा सुवर्णभारमेकंतु रजतंचचतु
र्गुणं तत्फलंसमवाप्नोतितुलसीदलपूजनात् रत्नवैडूर्यमुक्ताभिः प्रवालादिभिरर्चितः नतुष्यतितथाविष्णुस्तुलसीपूजनाद्यथा तुलसी
मंजरीभिस्तुपूजितोयेनकेशवः आजन्मकृतपापस्यतेनसंमार्जितालिपिः यादृष्टानिखिलाघसंघशमनीस्पृष्टावपुःपावनीरोगाणाम-
भिवंदितानिरसिनीसिक्तांतकत्रासिनी प्रत्यासत्तिविधायिनीभगवतःकृष्णस्यसंरोपितान्यस्यार्चाकरणेविमुक्तिफलदातस्यैतुलस्यैनमः
कार्तिकेमासिकुर्वीतमाघेवामधुसूदने दिनेदिनेसहस्रंतुस्वर्पयेत्तुलसीछदान् एवंमासत्रयंकुर्यात्ततउद्यापनंचरेत् वैशाखेमाघऊर्जेवा
कुर्यादुद्यापनंक्रमात् यस्मिन्मासेप्रकर्तव्यंगुरुशुक्रोदयेसति हरेर्दिनेशुभेमासिकुर्यादुद्यापनंव्रती आचार्यंवरयेदादौवेदवेदांगपारगं
दांतंशांतंतथासौम्यंनित्यंब्राह्मणवर्चसं विधिज्ञंतत्ववेत्तारंशुचिष्मंतंतपस्विनं स्वगृह्योक्तेनमार्गेणपरेद्युःस्वस्तिवाचनं सौवर्णींप्रतिमां
विष्णोः शंखचक्रगदान्विताम् तुलस्यायतनंचैवकुर्याद्धेमविनिर्मितं हेमादिनिर्मितंकुंभंपूर्णपात्रसमन्वितम् पुण्योदकैः पंचरत्नैःकुशदूर्वा
प्रपूरितम् तस्योपरिन्यसेद्विष्णुंलक्ष्म्याचतुलसीसमं पूजांपुरुषसूक्तेनकुर्याद्ब्रह्मादिदेवताः उपचारैःषोडशभिःपूजयेच्चतथाहरिम्
रात्रौजागरणंकुर्यात्पुराणैर्वेदपाठकैः ततःप्रातःसमुत्थायहोमंकुर्याद्विधानतः वैष्णवेनतुमंत्रेणतिलाज्येनविशेषतः पायसेनघृताक्ते
नत्वष्टोत्तरसहस्रकं आचार्यायसवत्सांगांदक्षिणावस्त्रसंयुतां ब्राह्मणान्भोजयेत्पश्चात्सहस्रंवायथाशक्तितः शतंवासार्धविंशतिंवाभो
जयेद्ब्राह्मणान्बुधः तेभ्योपिदक्षिणांदद्याद्वित्तशाठ्यंनकारयेत् एवंयःकुरुतेमर्त्योविष्णुसायुज्यतांव्रजेत् विष्णुप्रीतिकरंयस्मात्त-
स्मात्सर्वव्रताधिकं तुलसीलक्षपूजोक्तंमाहात्म्यंशृणुयान्नरः सकृद्वापिपठेन्नित्यंसगच्छेद्वैष्णवंपदम् होमभस्मसमादायरक्षांकृत्वा
तथात्मनः ब्रह्मराक्षसभूतानांशांतयेकारयेदिदं सर्पादिबाधकेप्राप्तेगर्भिण्याश्चाविनिर्गमात् भस्मप्रोक्षणमात्रेणसर्वंनश्येद्भयंनृणां इति
भ० लक्षतुलसीव्रतोद्यापनंसंपूर्णम् अथविष्णोर्लक्षपुष्पपूजाविधिः ऋषयऊचुः यानिकानिचतीर्थानिपुण्यान्यायतनानिच किमु

द्विश्यच्चकार्याणितत्सर्वंकथयप्रभो लोमशउवाच पृथिव्यांयानितीर्थानिसागरांतानिभोद्विजाः माहात्म्यानिचसर्वाणिकथितानिमयापुराइ
दानींवक्तुमिच्छामिपुष्पाणांपूजनंतव लक्षपूजांप्रवक्ष्यामिविष्णोरमिततेजसः पुष्पाणांलक्षपूजांतुकार्तिक्यांचसमाचरेत् माघेवाबहुलेवा
पिविदध्याल्लक्षपुष्पिकाम् यद्यद्धृतोभवेत्पुष्पंविष्णवेचसमर्पयेत् एकैकंमूलमंत्रेणविष्णुसूक्तेनवापुनः अथर्वाविष्णुगायत्र्यानाम्नानेन
पूजयेत् विष्णोःसहस्रनाम्नावैलक्षपूजांतुकारयेत् अतसीकर्णिकारंचकरवीरंतिलस्यच बार्हतंकेतकींचैवतथामंदारमेवच नीलोत्प
लंसकुमुदंमालतींचंपकंतथा जातीपाटलकेचैवपुन्नागंचकदंबकम् कल्हारंमोगरंचैवह्यशोकंबकुलंतथा मुनिपुष्पाणिशस्तानिवि-
ष्णोरमिततेजसः पालाशंकंटकीपुष्पंकमलंकोरदंतथा नीलपुष्पंधात्रिपुष्पंहरेःशस्तानिवैसदा एवंकुर्वंतियेभक्त्यातेयांतिहरिमंदि
रं आयुःकामेनकर्तव्यमतसीधात्रिजैस्तथा पुत्रकामेनकर्तव्यंबार्हतीपूजनंहरेः करवीरैर्जातिकुसुमैश्चंपकैर्नागकेसरैः बकुलैस्तिलपु
ष्पैर्धनकामेनपूजयेत् कल्हारैःकर्णिकारैश्चमांदारैःकुसुमैःशुभैः विद्याकामेनकर्तव्यंविष्णोर्भक्त्याचपूजनं पालाशैःपाटलैश्चैवक
दंबैःपूजनंमहत् महाव्याधिविनाशार्थंपारिजातैश्चपूजनम् वशीकरणकामेनसौवीरैस्तोषयेद्धरिं तस्यविश्वंभवेद्वश्यंनात्रकार्याविचा
रणा देवदानवगंधर्वावशीभवंतिनान्यथा श्रीकामेनतुकर्तव्यंकेतकीपूजनंमहत् एवंहिसर्वपुष्पैश्चसर्वकार्यार्थसिद्धये लक्षपूजांप्रकु
र्याच्चप्रसन्नोहिहरिर्भवेत् उद्यापनंतथाकार्यंमंडपंतत्रकारयेत् आहूयब्राह्मणान्सर्वान्सुनक्षत्रेशुभेदिने वेदिकाचप्रकर्तव्यामंडपेतुशुभे
दिने गीतवादित्रघोषेणब्रह्मघोषेणभूयसा प्रविश्यमंडपेतत्रस्वाचार्येणद्विजैःसह पुण्याहवाचनंकृत्वाआचार्यादीन्वरेत्ततः उमार्घ्यादिव
सैतस्मिन्रात्रौजागरणंचरेत् वेदिकायांतुकर्तव्यंस्वस्तिकंपरमाद्भुतं तन्मध्येतंडुलैःकुर्याद्धृतदीपंसुशोभनं पंचपल्लवसंयुक्तंन्यसेद्वस्त्रसं
शोभनं तस्योपरिन्यसेत्कुंभंपूर्णपात्रेणसंयुतं सौवर्णीप्रतिमांतत्रस्थापयेच्चहरेर्विभोः पूजांतत्रप्रकुर्वीतपंचामृतपुरःसरैः धूपदीपैश्चनै
वेद्यैर्गीतवादित्रनृत्यकैः वेदशास्त्रपुराणैश्चनारात्रिंगमयेद्व्रती ततःप्रभातसमयेसुस्नातश्चशुचिर्भवेत् स्थंडिलंकारयेत्तत्रस्वशाखो
क्तविधानतः हवनंचप्रकुर्वीतसतिलाज्येनपायसैः मूलमंत्रेणगायत्र्याविष्णोर्नामसहस्रकैः येनमंत्रेणपूजावाकृतानेनैवहोमयेत् शर्क

राघृतपूर्णेनचरुणाजुहुयात्ततः एवंहोमःप्रकर्तव्य अष्टोत्तरसहस्रकैः ततःस्विष्टकृतंहुत्वापूर्णाहुतिमतःपरम् श्रेयःसंपादनंपश्चादाचार्य
पूजयेत्ततः ब्राह्मणान्भोजयेत्पश्चात्तेभ्योदद्याच्चदक्षिणाम् आचार्यंपूजयेत्सम्यक्वस्त्रालंकरणैःशुभैः पयस्विनींचगांदद्याद्धिरण्या
दितथैवच प्रतिमांचसवस्त्रांचकुंभेनाचार्यमर्पयेत् दत्वाक्षमापयेत्पश्चाद्देवदेवंजनार्दनम् येनयेनप्रकुर्याच्चलक्षपूजांतुविष्णवे सौवर्णं
चैवतत्पुष्पमर्पयेच्चहरिंततः ब्राह्मणांश्चसपत्नीकान्भूषणैस्तोषयेत्ततः प्रदक्षिणानमस्कारान्कृत्वामूर्ध्निकृतांजलिः एवंयःकुरुतेपू-
जांतस्यविष्णुःप्रसीदति इतिविष्णु० विष्णोर्लक्ष० उद्याप० संपूर्णं अथबिल्ववर्त्युद्यापनविधिः द्रौपद्युवा० बिल्ववर्तिविधिंब्रूहिदुर्वासःसर्व
दर्शन कस्मिन्कालेसमारंभःकस्मिंश्चैवसमापनम् दुर्वासाउ० राजपुत्रिप्रवक्ष्यामिविधानंसर्वकामद श्रद्धावित्तंयदास्याद्वातदैवमार-
भेद्व्रतं कार्पासस्यस्वहस्तेनतंतुनिष्काशयेत्ततः स्वकीयैर्वाचविप्राद्यैरंगुलीत्रयसंमिता त्रिवृताशोभनाचैवबिल्ववर्तिरुदाहृता ततःसंव
र्तयेद्वर्तिंस्वप्रदेशिनिसंमितां एवंलक्षमिताःकार्याःशक्तोकोटिमिताअपि सर्वशक्तौतुकार्पासस्यांगुलेनैवनिर्मिताः घृतेनिमज्ज्यवातैलेस्था
पयेत्ताम्रपात्रके स्थापयेन्मृन्मयेपात्रेप्रत्यहंसंख्ययान्विताः श्रावणेमाधवेमाघेकार्तिकेतुविशेषतः दिनेदिनेसहस्रंतुअर्पयेद्बिल्ववर्तिकाः त्र्यं
बकेश्वरमुद्दिश्यदेवागारेविशेषतः गंगातीरेथवागोष्ठेमहाब्राह्मणसान्निधौ प्रज्वालयेत्तुपूजांतेब्रह्मलोकजिगीषया नारीवापुरुषोवापिभक्ति
युक्तेनचेतसा एकस्मिन्नेवादिवसेज्वालयेद्यदिसंभृतिं नमःशंभवइत्येवंमंत्रोरुद्राक्षरैर्मितः पूजनस्यदशांशेनशिवमंत्रेणकारयेत् तर्प
णंतद्दशांशेनतद्दशांशेनवंदनं तद्दशांशेनवैहोमंकुर्याच्चरुतिलाज्यकैः अष्टोत्तरसहस्रं [illegible] हवनद्र
व्यमनुमंतः एवंसंपाद्यवैशाख्यांकार्तिक्यांवाविशेषतः माघ्यांवाप्यथवायस्यांकस्यांचित्पूर्णमातिथौ प्रातःस्नात्वाशुचिर्भूत्वाकुर्यादुद्याप
नंबुधः गणेशपूजनंस्वस्तिवाचनादिचकारयेत् आचार्यंवरयेत्पश्चात्सर्वलक्षणसंयुतम् देवागारेथवागोष्ठेशुद्धेवास्वीयमंदिरे पुष्पमंडपिकां
कृत्वापट्टकूलादिवेष्टिताम् तन्मध्येलिंगतोभद्रंरचयेल्लक्षणान्वितं ततोवैरुद्रकोणेतुरचयेद्वेदिकांबनी वस्त्रेणाच्छादितांवेदींरचयेत्तत्र
तंडुलैः अष्टपत्रान्वितंपद्मंकर्णिकाभिःसमन्वितम् कलशंस्थापयेत्तत्रअव्रणंसजलंतथा [illegible] मृन्मयपात्रंवातस्योपरिन्यसेत्क्र

धीः तस्योपरिन्यसेद्देवमुमयासहितं शिवं सुवर्णनिर्मितं देवं वृषभेण समन्वितम् रजतस्य दीपपात्रं कृत्वा शक्त्या यथाविधि सुवर्णव
र्तिकां कृत्वा तन्मध्ये स्थापयेत्सुधीः स्थापयेल्लिंगतो भद्रे ब्रह्माद्यावाहनं ततः ततः पूजां विनिर्वर्त्य महासंभारविस्तरैः परमान्नं च नैवेद्यं
भक्त्या देवाय दापयेत् उपोष्य जागरं कुर्याद्रात्रौ सत्कथया मुदा ततः प्रभाते विमले जलस्नात्वा प्रसन्नधीः वर्तिसंख्या दशांशेन तत्
र्पणं कारयेद्व्रती तर्पणस्य दशांशेन होमयेद्रुद्रमंत्रतः तिलाज्यचरुभिर्बिल्वै रुद्रमंत्रेण होमयेत् आचार्याय प्रदातव्या गौः सवत्सा
पयस्विनी ब्रह्मादिमंडलं मूर्तिं दद्यात्सोपस्करां तथा यजमानमथाचार्यस्त्वभिषिंचेद्गृहान्वितम् विसर्जयेत्ततो देवं ब्रह्मादिसहितं पुनः
दद्याच्च भूयसीं कर्मसमाप्त्यार्थं विचक्षणः होमस्य तु दशांशेन ब्राह्मणान् भोजयेत्ततः दत्वा च दक्षिणां तेभ्यो गृण्हीयादाशिषः शुभाः वर्ध
मानं रौप्यमयं हेमवर्तिसमन्वितम् अथवा कांस्यपात्रं च घृतेनापूरितं शुभम् ब्राह्मणाय प्रदातव्यं दक्षिणासहितं शुभम् ततो भुंजीत तच्छे
षं शिष्टैरिष्टैश्च बंधुभिः एवं द्रुपदराजेंद्रपुत्रि सत्यं व्रतेन घे लक्षवर्तिव्रतविधिस्तवाग्रे कथितो मया यं कृत्वा भक्तिभावेन नारी वा पुरुषोऽपि वा दारि
द्य तमसः सद्यो मुच्यते नात्र संशयः पुत्रपौत्रप्रपौत्रं च सुखं संप्राप्य भूतले अंते दिव्यविमानेन लभते ज्वलितं पदं नैषधाधिपतेर्भार्या भर्तृदर्श
नलालसा कृत्वा व्रतमिदं प्रापराज्यं भर्तृसुतान्वितम् अन्याभिः ऋषिपत्नीभिः ऋषिभिश्चापि तत्वगैः कृतमेतद्व्रतं देवि स्वस्वकामार्थसिद्धये राज
पुत्रि महाभागे वनव्यसनदुःखिते कुरुष्वैतद्व्रतं सम्यक् माकृथाः कालवंचनं अयं कार्तिकमासश्च मासानामुत्तमोत्तमः आगामिन्यां पौर्णिमा
स्यामुद्यापनविधिं चर इदं दुर्वाससाख्यातं द्रौपद्यै व्रतमुत्तमं ये करिष्यंति मनुजा स्ते लभेयुः समीहितं इति जैमिनीये आरण्यके बिल्ववर्त्युद्यापनं
सं० अथ रुद्रवर्त्युद्यापनविधिः नारद उ० देवदेव जगन्नाथ जगदानंदकारक कौतुकेनेप्सितं किंचिद्धर्मप्रश्नं करोम्यहं श्रुतानि देवदेवेश
व्रतानि नियमास्तथा तीर्थानि च महं तीशयज्ञदानान्यनेकशः नास्ति मे निश्चयो देव श्रामितोऽहं त्वया पुनः कथयस्व महादेव यद्गोप्यं व्रतमुत्तमं
शिव उवा० शृणु नारद यत्नेन व्रतानां व्रतमुत्तमं रुद्रवर्त्यभिधं पुण्यं सर्वोपद्रवनाशनं सुखसंपत्करं चैव पुत्रराज्यसमृद्धिदम् शंकरप्रीतिजनकं शि
वस्थानप्रदायकं स्वभर्त्रा सह नारीणां महास्नेहकरं परम् शृणु नारद यत्नेन गिरिशो यत्र तुष्यति दीपानां लक्षदानं यत्कुर्यात्परमधार्मिकः यावत्

कालंप्रज्वलंतिदीपास्तुशिवसान्निध्यां ब्रह्मणोद्युगसाहस्रंदानात्सर्गंमहीयते कार्पासवर्तिकायुक्तादीपादत्ताःशिवालये स्फन्विरंतेपिकैलासेनिश्चं
तिशिवमूर्तयः एवंहिवहवःसंतिदीपाश्चद्विजसत्तम अधुनासंप्रवक्ष्यामियत्पूर्वंकथितंतव यत्कृत्वाकृतकृत्याःस्युर्देवा स्मरमुनीश्वराः एवंज्ञा
त्वानकुर्वंतितेज्ञेयादुःखभागिनः रुद्रवर्तिसमंनास्तित्रिषुलोकेषुसुव्रत अतएवसदाकार्यंव्रतमेतत्सुदुर्लभम् मयाख्यातंव्रतमिदंकिमन्यच्छ्रो
तुमिच्छसि नारदउ० केनचीर्णंव्रतमिदंकथयस्वप्रसादतः पूजाविधिंचमेब्रूहिउद्यापनसमन्वितम् शिवउवा० शृणुनारददेवर्षेयत्त्वंश्रोतुमिहे
च्छसि तदहंसंप्रवक्ष्यामिविस्तरेणमहामते नर्मदायुत्तरेदेशेपुरीचोज्जयिनीशुभा तस्यामासीत्सुगंधाचवारस्त्रीअतिसुंदरी तयाशृंगारकंकृतं
विप्रयुवभिश्चसुदुःसह सुवर्णानांशतंसाग्रंप्रतिज्ञातंचतैःकृतं युवानश्चतथाविप्राभ्रंशितास्वसुगंधया राजानोराजपुत्राश्चनग्नीकृत्यपुनःपुनः
येषांद्रव्यंगृहीतंचधिक्कृतास्तेसुगंधया एवंहिवहवोलोकालुंठितास्वसदानया कदाचित्सागताक्षिप्रांकौतुकाविष्टमानसा ददर्शचमनोरम्यांपक्षिभिःपरि
सेवितां केचित्ध्यानपराविप्राःकेचिज्जपपरायणाः केचिच्छिवार्चकाविप्राःकेचिच्छक्तिप्रपूजकाः तेषांमध्येवसिष्ठोहितयादृष्टोमहामुनिः उपविष्टःकर्मसु
वैकुशलोनीतिमार्गवित् तस्याधर्मेप्रवद्बुद्धिर्भाविपुण्यबलात्तदा विगताशाजीवनेसाविषयेषुविशेषतः विनम्रकंधराभूत्वाप्रणिपत्यपुनःपुनः सक
र्मपरिहारायपप्रच्छमुनिपुंगवं सुगंधोवा० अनाथनाथविप्रेंद्रसर्ववेदविशारद प्रसीदपाहिमांदेवशरणागतवत्सल मयाकृतानिविप्रेंद्रपापानि
सुबहूनिच तस्यपापस्यनाशायकारणंब्रूहिमेप्रभो शिवउवा० एवमुक्तस्तयाविप्रोवसिष्ठोमुनिरादरात् तेनज्ञातंचतत्सर्वंतस्याःकर्मपुरातनम्
ततोब्रवीत्सवमुनिर्वचस्तांसत्यसागरः वसिष्ठउ० शृणुसुश्रोणिसुभगेतवपापस्यसंक्षयः येनयज्ञायतेपुण्यंतत्सर्वंकथयामिते प्रत्यक्षतीर्थं
महत्पुण्यंत्रिषुलोकेषुविश्रुतं प्रयागमितिविख्यातंसर्वदेवैश्चरक्षितं गत्वातत्रप्रयागेवैव्रतंत्रैलोक्यदुर्लभम् रुद्रवर्त्यभिधंपुण्यंशिवप्रीतिक
रंपरम् कार्पासतंतुभिःकार्यारुद्रवर्तीशिवप्रिया हस्तेनैवप्रकर्त्तव्यायुग्मकंसुदृढंशुभम् एकादशैस्तंतुभिश्चकारयेद्रुद्रवर्तिकां लक्षसं
ख्याचकर्तव्यागव्याज्येनपरिप्लुता सौवर्णंराजतंताम्रंमृन्मयंवानवंदृढं तत्पात्रेस्थापयेद्वर्तींघृततैलेनपूरयेत् देयाशिवालयेनित्यंभक्तियु-
क्तेनचेतसा अथवातिलतैलेनकर्तव्यालक्षवर्तिका कृत्वाव्रतमिदंभद्रेयास्यसित्वंपरांगतिं शिवउवाच ततःसाकोशमादायभृत्यंचैवस्व-

मित्रकं आयातातीर्थराजंवैदत्वादानानिसर्वशः व्रतंकृत्वाययोकाश्यांस्वमित्रेणसमान्विता कृत्वासर्वाणितीर्थानिविश्वेशंप्रणिपत्यच
उपोष्यरजनीमेकांजागरश्चतथाकृतः स्नात्वाचोत्तरवाहिन्यांदत्वादानानिभूरिशः ततश्चक्रेव्रतंविप्रवसिष्ठेनोदितंचयत् यथोक्तवि
धिनासर्वंतथाचानुष्ठितंव्रतं ततःसास्वशरीरेणतस्मिन्लिंगेलयंययौ एवंवाकुरुतेनारीधनमेतत्कुलगम् यंयंचिंतयतेकामं
स्यास्यप्रभावतः पुत्रपौत्रान्धनंधान्यंलभतेनात्रसंशयः शिवउ० अथचोद्यापनंवक्ष्येव्रतसंपूर्णहेतवे प्रारभेत्कार्तिकेमाघेवैशा
खेश्रावणेतथा तेषुचोद्यापनंकार्यंयथोक्तविधिनाततः अष्टकर्णिकयायुक्तंमंडलंकारयेच्छुभम् कलशंस्थापयेत्तत्रपिधानेनसम
न्वितम् रौप्यंताम्रंमृन्मयंवावस्त्रयुग्मेनवेष्टितम् तस्योपरिन्यसेद्देवमुमयासहितंशिवम् रजतस्यदीपपात्रंकृत्वाशक्त्यायथाविधि
सुवर्णवर्तिकांकृत्वातन्मध्येस्थापयेत्सुधीः सुवर्णनिर्मितंदेवंवृषभेणसमान्वितम् पूर्वोक्तेनविधानेनपूजांकृत्वासमाहितः आचार्यं
वरयेत्पूर्वंद्विजैरेकादशैःसह होमंचैवसुसंपाद्यतिलपायससबिल्वकैः अष्टोत्तरसहस्रंवा अथवाष्टोत्तरशतम् रुद्रसूक्तेनवाविप्रमू
लमंत्रेणवापुनः दीपलक्षंप्रकुर्वीतनरःपरमधार्मिकः दीपान्घृतेनसंयुक्तान्नरोदद्याच्छिवालये स्वर्णवर्तियुतंदीपमाचार्यायनि
वेदयेत् ततःपूर्णाहुतिंकृत्वाब्राह्मणैःस्वस्तिवाचनम् आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः तस्मैदेयासवत्साचगौरेकासुप
यस्विनी ऋत्विजःपूजयेत्पश्चाद्वस्त्रालंकरणैःशुभैः वस्त्रोपानद्युगंचैवभोज्यैश्चविविधैरपि तेनैवभोजनीयाश्चसपत्नीकाःप्र
यत्नतः सुवर्णवर्तिकांकृत्वारौप्यपात्रेतथैवच दद्याच्छिवप्रीतयेच्चसर्वकामार्थसिद्धये घृतपूर्णंरौप्यपात्रंकांस्यपात्रंतथैवच सुव
र्णवर्तिसहितमाचार्यायनिवेदयेत् रुद्रपीठंसप्रतिममाचार्यायसमर्पयेत् कांस्यंविष्णुमयंरौप्यंगोघृतेनसमन्वितम् सुवर्णवर्तिसं
युक्तमतःशांतिंप्रयच्छमे महादेवजगन्नाथभक्तानुग्रहकारक त्वत्प्रसादादहंयाचेशीघ्रंकार्यप्रदोभव अनेनैवविधानेनरुद्रवर्तिं
करोतियः पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतं एवंयाकुरुतेनारीसर्वपापैःप्रमुच्यते श्रुत्वाकथांविधानेनस्थाप्यंसर्वंनिवेदयेत्
अश्वमेधसहस्राणिवाजपेयशतानिच कथाश्रवणमात्रेणतत्फलंलभतेनरः इतिभविष्योत्तरेशिवनारदसंवादेरुद्रवर्तिव्रतोद्याप

नंसंपूर्णम् अथ माणिक्यव्रतोद्यापनं अद्येत्यादिमासपक्षाद्युल्लिख्य ममइह जन्मनि जन्मांतरे वा रजोदोषनिमित्तपापपरिहारार्थं
पुत्रपौत्रावैधव्यप्राप्तये कृतं यल्लक्षवर्तिदीपदानं तत्सांगतासिद्ध्यर्थं तदुद्यापनं करिष्ये तदंगं गणपतिपूजनं स्वस्तिवाचनं आचार्यवर
णं च करिष्ये इति संकल्प्य शिव उवाच प्रसंगेनापि वक्ष्यामि वर्तिं माणिक्यसंज्ञिकाम् तस्या दानेन देवि त्वं ममार्द्धासनभागिनी जाता
सि मत्प्रिया हि त्वं यावदाभूतसंप्लवम् सूत उवा० आर्यावर्ते पुरा काचिद्वैश्याभूल्लक्षणाह्वया तस्या भुजंगो मित्रोऽभूद्दासो नाम महाबली सा
लक्षणा ऋतुस्नाता स्थिता गोदावरीतटे बालवैधव्यदुःखेन रुदती च कुमारिका मृतं पतिं पुरः स्थाप्य बंधुभिः परिवारिता विलपंती तु तां वी
क्ष्य शनैस्तां प्रत्यपद्यत लुठंतीं भुवि कायेन मुहुर्घ्नंतीं मुहुर्बहु जडानामपि कारुण्यं जायते तां प्रपश्यच तदा तां लक्षणा वाक्यं भुजंगो वाच
सत्तमः भुजंग उवा० कुलजानां च नारीणां दशेयं च सुदारुणा अवस्थात्रयमेतासां तत्रेयं च सुदारुणा कन्यात्वं जीवपत्नीत्वं विधवात्वमिति
त्रिधा पारवश्यं च नारीणां दुःखमामरणांतिकं मृतापत्यं च वैधव्यं तथैवाप्रसवता स्त्रियः आसह्यमेतत्त्रितयं वैधव्यं तत्र चोत्तरं बालेयं शोचते तो
व कस्येदं कर्मणः फलं निवर्तते वा केनेयं को वा वेत्ति तथाविधां उवाच दासनामासौ भुजंगः सूनृतं वचः भुजंग उ० शृणु भद्रे प्रवक्ष्यामि धात्रा सृ
ष्टाः पुरा द्विजाः देवानां चैव लोकानां हितार्थे मंत्रकोविदाः शास्त्रज्ञानात्स्वभावाच्च जीवानां यत्पुरा कृतम् जानंति कर्म च फलं पृष्टव्यास्त्वधृत
व्रताः भुजंगवचनं श्रुत्वा तथैवोर्मितिसा पुनः ततो गत्वा महादुर्द्दूयाजकं नाम वै द्विजं पप्रच्छ तं दयालुं च प्रश्नकातरमानसा लक्षणो
वाच मुने त्वहं दुराचाराकुलटा लक्षणाह्वया तथापि त्वां दयापात्रं पृच्छते मां निबोधय साधूनां समचित्तानां जनाः सर्वे समा-
भुवि दुर्गंधो वा सुगंधो वा यथा वायोः समो भवि मुने दशेयं नारीणां तृतीयार्तावदुःसहा कर्मणा जायते येन केन वाथ निवर्तते एतद्विचार्य
मे ब्रूहि त्वं कृपया वद सुव्रत शांडिल्य उ० इति तस्या वचः श्रुत्वा याजको वाक्यमब्रवीत् दैवे कर्मणि पित्र्ये च नार्यः पाकेषु संस्थिताः अ
कस्माच्चरतो ह्यस्पृष्टभांडाद्यपराः अज्ञानादाश्रया ह्यापि कामाल्लोभात्क्वचित्स्त्रियः अवेदयित्वा तिष्ठंति तेन दुष्यंति साक्षि
याः क्रियालोकपराद्येताः पापादस्माद्दुरत्ययात् दशामिमां प्राप्नुवंति सर्वा अपि न संशयः बाल्ये वा यौवने वापि वार्धक्ये वा कदा

चन नत्रयातुदुराचारापरानेवाभिकांक्षति श्वश्वोश्वपतिबंधूनांनित्यवाचासकृदुःखता एतत्सहायतोनारीयादृषयातिस-
क्रियाः बाल्येवैधव्यमाप्नोतिसानारीनात्रसंशयः ऋतुस्नातातुयानारीबालकानवलोकयेत् लब्धभर्तानतोगर्भबालाना
मपिघातिनी एतत्कर्मसहायेनरजसादूषितायुता मृतापत्यातथाभूत्वावैधव्यंयावनंव्रजेत् यानारीरजसादुष्टास[illegible]
दिसंकरम् कुरुतेयदिसानारीवैधव्यंवाऽर्कंव्रजेत् वाचानुकूलरहितापतिधर्मेषुसर्वदा बाल्येवैधव्यमापन्नागतिर्हीनाभ
वत्यलम् सर्वासामपिवैधव्यंनिदानंपापसंभवं शांतिंतत्रप्रवक्ष्यामिकर्मणोस्यापिलक्षणं ऋृणेपिमुनिपंचम्यांव्रतेपापविशोध
नम् हस्तेनकारयेद्वर्तिंक्षिप्रंसंशोध्यसप्रभम् अनेनैवविधानेनविष्णुवर्तिंकरोतिया पापंगच्छतिनाशंसाइतिवेदविदो
विदुः सशूर्पवायनंकृत्वा कृतेलक्षव्रतादिके समूलंशोधंव्रजतिरजोदोषोनसंशयः निर्मूलंचभवत्याशुलक्षवर्तिव्रतेशु
भे रजसोत्थमहापापंनारीणांनात्रसंशयः इतितस्यवचःश्रुत्वापुनःपप्रच्छलक्षणा मनसाशंकिताभूत्वासादरंमुनिपुंग
वम् साधुसाधुमहाभागचित्तंमेभयविह्वलम् लक्षवर्तिव्रतस्यास्यविधानंकीदृशंवद कस्मिन्मासेप्रकर्तव्यंकस्मिश्चैव
समर्पणम् उद्यापनंकथंकार्यंकिंफलंतस्यवामुने तयापृष्टोयाजकोऽपलोकानांहितकाम्यया फलंविधानंतत्सर्वंतदावोच
न्महामुनिः शांडिल्यउवाच कालोहिकार्तिकोमासोमाघवैशाखमेववा सहस्रगुणितंतत्तुव्रतमेतार्हकार्तिके तस्मा-
त्कोटिगुणंदत्तेमाघेमासिव्रतोत्तमम् तस्मादनंतगुणितंफलंवैशाखमासिवै तस्मान्मासत्रयेकार्यंयस्मिन्मासेसमाप्यते त
स्मान्मासद्वयात्पूर्वमारभ्यव्यंव्रतान्वितम् अंतेमासिप्रकुर्वीतसमाप्तिंचविचक्षणःसहस्रवर्तिभिःकुर्यादारार्तिंविष्णवेन्वहम्
घृतेनाप्ययनेनेनसम्यगन्येर्मनोरमैः यस्मिन्मासेसमाप्तिःस्यात्पूर्णिमायांचकारयेत् उद्यापनंविधानेनव्रतसंपूर्तिकारणम्
प्रातःस्नात्वाशुचिर्भूत्वापंचगव्यंतुप्राशयेत् पुण्याहवाचनंकृत्वावरेदाचार्यमुत्तमम् ब्रह्माणंऋत्विजश्चैवकुर्यात्तर्पणमंजसा सतिलै
श्चयवैःकुर्यादग्नेनयऋचाद्विजः वर्त्यादशांशतःकुर्यात्तर्पणंतुविचक्षणः तर्पणस्यदशांशेनहोमंकुर्याद्विधानतः तर्पणोक्तेनमंत्रेण

पायसंचघृतान्वितम् पालाशस मिधाचैवमंत्रैर्होमश्चवैष्णवैः घृतंतुविष्णुगायत्र्याहोमस्यायविधिःस्मृतः अष्टकर्णिकयायुक्तं सर्वतो
मंडलंलिखेत् कलशस्तुततःस्थाप्यः सपिधानःसवस्त्रकः रौप्यस्ताम्रोमृन्मयोवावस्त्रयुग्मेनवेष्टितः तस्योपरिन्यसेद्देवंलक्ष्म्यासह
सुवर्णकम् राजतंदीपपात्रंचस्वर्णवर्तिसमन्वितम् ततोमासाधिदेवांश्चस्थापयेद्देवसन्निधौ कालोविष्णुस्तथावन्हीरविर्दामोद
रोहरिः रुद्रःशेषोजगद्व्यापीतेजोरूपीनिशाकरः निरंजनोफलाध्यक्षोविश्वरूपीजगत्प्रभुः स्वप्रकाशोस्वयंज्योतिश्चतुर्व्यूहोज
नाश्रयः परंब्रह्मविंशतिभिःपूजयेज्जगदीश्वरम् शिरोललाटंनेत्रेचकर्णौनासामुखंतथा कंठस्कंधौतथाबाहूस्तनौवक्षस्तथो
दरम् नाभिंकटींचजघनेऊरूजानुनिगुल्फके पादौतदग्रक्रमशोयुगान्येतेश्चपूजयेत् धूपदीपौतथादत्वानैवेद्यंचनिवेदयेत्
आचार्यंपूजयेत्पश्चाद्ब्राह्मणान्ऋत्विजस्तथा गांप्रदद्यात्सवत्सांचसालंकारांगुणान्वितां त्रिंशत्पलंकांस्यपात्रंघृतेनपरिपूरितं
सुवर्णवर्त्तिसंयुक्तमाचार्यायनिवेदयेत् कांस्यंविष्णुमयंरौप्यंगोघृतेनसमन्वितम् सुवर्णवर्तिसंयुक्तमतःशांतिंप्रयच्छमे
इतिमंत्रेणदद्यात् तथादशपलंकांस्यंतथाघृतसमन्वितम् अथवातुयथाशक्त्यादद्यादावश्यकंत्विति व्रताभावेचयो
दद्यात्कांस्यंचघृतपूरितम् यावज्जीवंसुखमाप्नोतिभवत्येवनसंशयः रजोदोषाद्विमुक्तास्यात्पौर्णमास्यांददातिया ब्राह्म-
णान्भोजयेत्पश्चाद्वित्तशाठ्यंनकारयेत् यान्येवंकुरुतेनारीतस्याःपुण्यफलंशृणु यानिचान्यानिपापानिरहस्येवाकृतानिच नश्यं
तितानिसर्वाणिव्रतस्यास्यप्रभावतः चांडालगामिनीवापितथाशूद्राभिमर्शिनी कारुकरजकादीनांगामिनीदुष्टचारिणी ब्रह्मक्ष
त्रियवैश्येषुप्रतिलोमेषुगामिनी मातुलेयपितृव्यादिभ्रातृपुत्राभिगामिनी बालघ्नीवापितृघ्नीवाभर्तृमातृवधेरता गोघ्नीवा
तस्करीवापिरजःसंकरकारिणी वन्हिदागरदाचैवनित्यंचाप्रियवादिनी पत्यौजीवतियानारीमृतेवाव्यभिचारिणी एवमादिम-
हापापैरावृतापिकुलांगना कृत्वाचैतद्व्रतंपुण्यंमुच्यतेनात्रसंशयः व्रतानामुत्तमंचैवस्त्रीणामावश्यकंत्विदम् एकार्तिकंप्र
यत्नेनविष्णोरत्वमिततेजसः कोटयोब्रह्महत्यानामगम्यागम्यकोटयः तथैवात्यल्पपापानांकोटयोथसहस्रशः नश्यंतिनात्रसं

देहोनारीणांवानरस्यच विलक्षवर्तिभिर्विष्णोः कृतेचारार्तिकार्पणे किमत्रबहुनोक्तेननानेनसदृशंव्रतम् पुरुषोऽपिव्रतंकृत्वा
पूर्वोक्तैः पापसंचयैः मुच्यतेनात्रसंदेहोमधुसूदनशासनात् एतत्सर्वंमयाख्यातंपृच्छंत्यास्तवमानदे अतंकुरुसकरवंतिष्ठयथा
तेरोचतेमनः इतितद्वचनंश्रुत्वापुनःपप्रच्छलक्षणा अज्ञानाद्दुष्टभावाद्वानविश्वासोममेहवै प्रत्ययार्थंततोब्रह्मन्प्रत्यक्षंकुरुमे
धुना इतितद्वचनंश्रुत्वायाजकोवाक्यमब्रवीत् ६७ शांडिल्यउवाच कथंतेप्रत्ययोभूयादितितांकरुणानिधिः साचोवा
चपुनर्विप्रंविस्मयोत्फुल्ललोचना नववैधव्यमापन्नारुदत्येषाकुमारिका अस्याःपतिःकथंजीवेद्वैधव्यंचैवनश्यति तथाकु
रुमुनिश्रेष्ठदयादानवताधनम् इतितद्वचनंश्रुत्वाविस्मितोवाक्यमब्रवीत् शांडिल्यउवाच अधुनामकरंप्राप्तोभास्क
रोलोकभास्करः माघोयंचवरोमासः सर्वक्रतुफलाधिकः प्रातःस्नात्वाचमासेऽस्मिन्प्राप्नुवंत्यतुलंफलम् स्नानंकृष्णार्पणं
कृत्वादेहिभर्त्रेमृतायच तेनजीवेदयंनूनंब्रह्मघ्नोऽपिसुरापिच यस्मादयंराजयक्ष्मरोगेणचमृतिंगतः तथापिमाघमास-
स्यपुण्याद्दुज्जीवयिष्यति दापयित्वाहरेरार्तिंकांस्यपात्रेघृतेनच जीवत्पत्नीभवत्वंहियावदामरणंध्रुवम् लक्षणावचनंकृत्वा
जलंस्पृष्ट्वाचवाग्यता स्नानंविष्ण्वर्पणंकृत्वाददौतस्मैफलंतदा तदापुण्यप्रभावेणतत्क्षणादेवसोत्थितः भुजंगंसंप्रेषयित्वा-
नीत्वापात्रंचकांस्यकम् कुमार्यादापयामासवैधव्यस्यापनुत्तये एतत्पुण्यप्रभावेनकुमारीसापिशोभना यावज्जीवंजीवपत्नी
बभूवबहुपुत्रिका कुमारीशोभनानामपतिंप्राप्यसुशोभनम् तद्बांधवास्तथासर्वेतुष्टुवुस्तांचलक्षणाम् याजकंचबहुस्तुत्वा
जग्मुस्तेस्वंनिकेतनम् लक्षणासापिदानेनभुजंगेनचसंयुता माघस्नानंतथाकृत्वाव्रतमेतच्चकारसा ततस्तुमरणं
प्राप्तोदासस्तस्याःसहायकृत् गयोनाममहाराजाचक्रवर्तीबभूवसः सालक्षणाचतत्पत्नीसर्वलक्षणसंयुता बभूवलो
कविख्याताजीवत्पत्नीसुपुत्रिका अनेनैवविधानेनविष्णुवर्तिकरोतियः पुत्रपौत्रैःपरिवृतोराज्यंप्राप्नोतिशाश्वतम् एवं
याकुरुतेनारीसर्वपापैःप्रमुच्यते लक्षवर्तिकथामेतांयोऽन्यान्श्रावयिष्यतिमानवः सोपितत्फलमाप्नोतिनात्रकार्याविचारणा

इतिश्रीवायुपुराणेमाणिक्यवर्तिव्रतोद्यापनंसंपूर्णम् अथविष्णुवर्तिव्रतंलिख्यते युधिष्ठिरउवाच देवदेवजगन्नाथसंसारार्णवतारक वदमेसर्वपापघ्नंव्रतंसर्वव्रतोत्तमम् यस्याचरणमात्रेणजनानांसर्वकामदम् अस्तिकिंचित्तदाब्रूहि ममदेवदयानिधे श्रीकृष्णउवाच लक्षवर्तिव्रतंवच्मिसर्वकामफलप्रदम् विष्णुवर्तीतिविख्यातंशृणुराजन्समासतः शुभेतिथौशुभेलग्नेताराचंद्रेचशोभने सम्यक्कृविशोध्यकार्पासंतृणधूलिविवर्जितम् यस्यसूत्रंविधायाशुचतुरंगुलिकंतथा पंचसूत्रयुतावर्तिर्विष्णुवर्तीतिकथ्यते एवंकुर्याल्लक्षसंख्यागोघृतेनपरिप्लुताः उद्दीपयेच्चविष्ण्वग्रेपात्रेराजतमृन्मये अथवाप्रत्यहंदेयाः सहस्रद्वयसंमिताः एवंदिनानिपंचाशदंतेउद्यापनंचरेत् कुरुराजन्प्रयत्नेनसर्वपापप्रणाशनम् भुक्त्वायथेप्सितान्भोगानंतेसायुज्यमाप्नुयात् पार्वत्याचपुरापृष्टंशंकरायमहात्मने तेनेदंकथितंदेव्याविष्णुवर्तिव्रतंशुभम् तयाकृताविष्णुवर्तीलक्षसंख्याशुभप्रदा उद्दीपितातयाभक्त्यासंतुष्टोहंव्रतेनच दत्तंकैलासभवनंशंकरेणचधारिता कर्तव्यंतुप्रयत्नेनजनेनशुभमिच्छता येनउद्दीपितोविष्णुःसर्वसौभाग्यदायकः सभवेत्तापनिर्मुक्तोविष्णुलोकेमहीयते उद्यापनंयथार्थंतंशृणुराजन्नपायतः येनकृत्वाचसकलंफलंप्राप्नोतिमानवः कार्तिक्यामथवामाघ्यांवैशाख्यांवाशुभेदिने प्रतिमांकारयेद्विष्णोःसौवर्णीमाषमात्रतः कलशंकारयेत्ताम्रंपूर्णपात्रेणसंयुतम् आचार्यंवरयेत्पूर्वंपंचऋत्विग्युतंव्रती पुण्याहवाचनंकृत्वागणेशंपूजयेत्ततः विधायसर्वतोभद्रंपंचवर्णंयथाविधि स्थापयेत्प्रतिमांविष्णोःकलशेचनवेशुभे वस्त्रद्वयेनसंवेष्ट्यपूजयेत्कलशोपरि पूजयेच्चयथाशक्त्याब्रह्माद्यादेवताःशुभाः रात्रौजागरणंकुर्याच्छृणुयाद्वैष्णवींकथाम् प्रभातेविमलेस्नात्वापुनःसंपूज्यवैविभुम् प्रतिष्ठाप्यतमोवन्हिंपायसंहवनेस्मृतम् जुहुयाद्विष्णुगायत्र्यासहस्रंपायसंशुभम् तर्पणंदशसाहस्रंमार्जनंशतमाचरेत् सौवर्णींवर्तिकांकृत्वापात्रेरजतसंभवे कार्पासवर्तिसंयुक्तैर्नीराज्योहरिरीश्वरः आचार्यंपूजयित्वातुमंडलंतुनिवेदयेत् ब्राह्मणान्भोजयेत्सम्यक्स्वयंभुंजीतवाग्यतः इतिश्रीविष्णुरहस्येविष्णुवर्त्युद्यापनंसंपूर्णम् अथदेहवर्तिव्रतंलिख्यते

सूतउवाच कैलासशिखरासीनं देवदेवं जगद्गुरुम् पंचवक्त्रं दशभुजं शूलपाणिं त्रिनेत्रकम् कपालखट्वांगधरं खड्गखेटकधा
रिणं पिनाकपाणिं देवेशं वरदाभयपाणिनम् भस्मांगव्यालशोभाढ्यं शशांककृतशेखरम् कैलासशिखरे वासं सूर्यकोटि
समप्रभम् क्रीडते भगवांस्तत्र गणेशादीन्विसृज्य च विसृज्य देवताः सर्वा एकाकी उमया सह [illegible] देवेशं
प्रहृष्टं चारुलोचनम् अथापृच्छत्तदा देवी यद्गोप्यं व्रतमुत्तमम् देव्युवाच तदहं श्रोतुमिच्छामि कथयस्व मम प्रभो दान
धर्मान्यनेकांश्च तपस्तीर्थान्यनेकशः नास्ति मे निश्चयो देव श्राविता हं त्वया पुनः व्रतानामुत्तमं देव भुक्तिमुक्तिप्रदायकम्
कम् येन चीर्णेन देवेश मानुषैः प्राप्यते भुवि स्वर्गापवर्गदं सौख्यं नरकार्णवतारकम् तदहं श्रोतुमिच्छामि मनुष्या-
णां हिताय च येन कृतेन लोकोयं शिवसायुज्यमाप्नुयात् शिवउवाच यन्न कस्यचिदाख्यातं नराणां मुक्तिदायकं
शृणु देवि प्रयत्नेन कथयामि तवाखिलम् कार्तिके मार्गशीर्षे वा माघे मासि प्रयत्नतः पक्षयोरुभयोर्मध्ये शुभे योगे शुभे
दिने एकादश्यां त्रयोदश्यां चतुर्दश्यामुपोषितः कार्पासं निस्तृणं कृत्वा वर्तिं कृत्वा प्रयत्नतः पादांगुष्ठशिरोन्तं च स्वशरीरम
माणतः सूत्रं निर्माय यत्नेन तंतु त्रितयसंयुतम् तस्य वर्तिं विधायाथ सम्यग्लोज्य घृतेन वै दीपदानं प्रकुर्वीत प्रमानयेन
प्रत्यहं दापयेद्दीपं यावत्संवत्सरं भवेत् अथवा एकमासे वा षष्ट्युत्तरशतत्रयम् दीपान्प्रज्वालयेद्भक्त्या मम संतोषहेत
वे उद्यापनं वत्सरान्ते कुर्याद्विभवसारतः देहदीपसमं दानं न किंचिदिह विद्यते महापापप्रशमनं स्वर्गद्वारविवर्द्धनं अत्रेदं कथ
यिष्यामि इतिहासं पुरातनम् शृणु देवि प्रयत्नेन कथां पौराणिकीं शुभाम् ईश्वरउवाच अरण्ये वर्तमानास्ते पांडवा भार्यया सह
आत्मनो दुःखनाशार्थं प्रपच्छुः केशवं प्रति युधिष्ठिरउ० केनोपायेन देवेश संकटाद्दुस्तराम्यहम् भुक्त्वा राज्यं च देहान्ते केन मुक्ति
र्भवेन्मम श्रीकृष्णउ० अस्ति गुह्यं महाराज व्रतं सर्वार्थदायकम् नारीणां च विशेषेण पुत्रपौत्रप्रवर्द्धनम् देहवर्तिसमाख्यातं
प्राणिनां सौख्यदायका आत्मदेहसमं सूत्रं तंतु त्रितयसंयुतम् तस्य वर्तिं विधायाशु आज्ये योज्य प्रदीपयेत् एवं संवत्सरं प्र

र्णंदद्याच्छंकरतुष्टये अथवामासमध्येवादिनमध्येयथाविधि नीराजयेन्महादेवं तेनतुष्यतिशंकरः ददातिविपुलान्भोगानंतेसायु
ज्यमाप्नुयात् इतिश्रुत्वाचकारासौधर्मराजोनृपोत्तमः उद्यापनंतथाकुर्यान्मंडपंकारयेच्छुभम् पुण्याहवाचनंकार्यमाचार्यंवरये
त्ततः ऋत्विजश्चरुद्रसंख्यान्वृणुयाच्छिवतुष्टये विरच्यसर्वतोभद्रं कलशंचनवंदृढम् सौवर्णीप्रतिमांतत्र भवानीशंकरस्य
च उपचारैःषोडशभिः पूजयेत्कलशोपरि दीपपात्रंराजतंच वर्तिकलासुवर्णजाम् त्र्यंबकेणचमंत्रेणहुनेदष्टोत्तरंशतम् आ
चार्यायव्रतंतद्दद्याद्दक्षिणयायुतम् ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतवाग्यतः इदंव्रतंमहादेवि सर्वकामसमृद्धिद
म् कुरुत्वंचप्रयत्नेनसर्वान्कामानवाप्स्यसि इतिश्रीस्कंदपुराणेपार्वतीशंकरसंवादे देहवर्तिव्रतोद्यापनंसंपूर्णम्
अथविष्णुसूर्यलक्षनमस्कारविधिः अंबरीषउवाच इक्ष्वाकूणांकुलगुरोब्रह्मन्सर्वज्ञसुव्रत ब्रूहिपापक्षयकरंव्रतंसर्वो
त्तमंमुने ब्रह्मघ्नस्यसुरापस्य गुरुदाराभिमर्शिनः संध्याकर्मविहीनस्य तथादुर्मार्गवर्तिनः दासीवेश्यासंगिनश्चचांडाली
गामिनस्तथा परस्वहारिणश्चापि देवद्रव्यापहारिणः देवब्राह्मणवृत्तीनां छेदकस्यनरस्यच रहस्यभेदकस्यापिरहसिकृतपा
पिनः ब्रह्मयज्ञविहीनस्य दुःशास्त्रनिरतस्यच गुरुनिंदादिश्रोतुश्चगुरुद्रव्यापहारिणः नराणांचविशेषेणप्रायश्चित्तंव्रतंवद
वसिष्ठउवाच शृणुगोप्यातिगोप्यंचव्रतानामुत्तमंव्रतम् चतुर्वेदैःपुराणैश्चस्मृतिभिश्चैवनिश्चितम् ब्रह्महत्यादिपापानां
प्रायश्चित्तंयदीच्छसि संकलीकरणानांचमलिनीकरणस्यच अपात्रीकरणानांचप्रायश्चित्तंयदीच्छसि भ्रातृपत्नीसुतानांचगा
मिनःकामिनस्तथा श्वश्रूमातृवधूनांच इच्छयागामिनस्तथा नदालक्षनमस्कारंव्रतंकुरुमहीपते संध्याकर्मादित्यागस्यचांडाली
गामिनस्तुवै दासीवेश्यासंगिनश्चक्षयंचयदिवांछसि शृणुनृपविधिंवक्ष्ये स्मरणात्पापनाशनम् चातुर्मास्येतुसंप्राप्तेकेशवे
शयनंगते आषाढस्यसितेपक्षे एकादश्यांसमाहितः संकल्पंतुविधायादौपुरतश्चक्रपाणिनः अहंलक्षनमस्कारव्रतंकर्तुंसमु-
द्यतः निर्विघ्नंत्वत्प्रसादेनकुरुत्वंकृपयाहरे पापपंकेनिमग्नंमां पापरूपंदुरासदम् व्रतेनानेनसुप्रीतोसमुद्धरजगत्पते इति

संकल्प्यमनसासारमेद्वतमुत्तमम् विष्णोर्वाथसर्वदेवानमस्कारान्मयत्नतः प्रातः स्नात्वासदाकुर्यान्मध्यान्हावधिवाग्यतः यथासं
रव्यांमकुर्वीतकार्तिकेतुसमापयेत् दुष्टशाकमथान्नंवा न कंगतकदाचन अनृतंनवदेत्क्वापि नध्यायेत्पापपूरुषम् देवार्चनं
जपंहोमंनत्यजेत्तुकथंचन अतिथीन्पूजयेन्नित्यंयथाशक्त्यानुकारयेत् कार्तिके मासि संप्राप्ते ... पूर्णे
स्थाप्यकलशंपूर्णंसवस्त्रंसपिधानकम् विष्णोश्चप्रतिमांकुर्यात्सूर्यस्यापिसुवर्णजाम् नामभिः केशवाद्यैश्चमित्राद्यैश्चसंपू
जयेत् परमान्नंचनैवेद्यंकुर्यात्तस्याश्चतर्पणम् पौरुषेणचसूक्तेनतिलगोधूमतंडुलैः देवदेवजगन्नाथसर्वकृतुफलप्र
द व्रतेनानेनसंतुष्टोगृहाणार्घ्यंमयार्पितम् एवमर्घ्यत्रयंदद्यात्तस्याहोमंसमाचरेत् पौरुषेणचसूक्तेनशतमष्टोत्तरंच
रुम् आकृष्णेनेतिसूर्यार्थेशतमष्टोत्तरंहुनेत् होमशेषंसमाप्याथ पूर्णाहुतिमतःपरम् आचार्यपूजयेत्तस्मैदद्याद्रोमि
थुनंततः ब्राह्मणान्भोजयेत्पश्चात्षड्विंशतिमंतंच दक्षिणां ... मंडलंचैवदापयेत् अनुज्ञातस्तुतैरेवस्वयंभुंजी
तबंधुभिः इदंपुण्यंव्रतराजंनृपापारण्यदवानलम् सर्वकामप्रदंनृणांसद्योविष्णुप्रियंकरम् मोक्षप्रदंचकर्तॄणांज्ञानभाग्
प्रदंशुभम् नानेनसदृशंकिंचित्त्रिषुलोकेषुविद्यते ... नारीणांसधवानांचविधवानांविशे
षतः इतिश्रीभविष्योः सूर्यविष्णुलक्षनमस्कारोद्यापनंसंपूर्णम् ... पनपूजनविधिः युधिष्ठिरउवा०
उद्यापनविधिंब्रूहिव्रतराजस्यकेशव यतोनिरुद्यापनकंव्रतंनिष्फलमुच्यते कृष्णउवाच वदामिव्रतराजस्यस्त्रीणांकर्तव्य
मुत्तमम् श्रावणेमासिभौमेषुचतुर्षुव्रतमादरात् प्रातरुत्थायसंस्नातःसंकल्प्यव्रतमुत्तमम् दीपंमहांतंप्रज्वाल्यमंगलांपूजयेच्छु
चिः अथपूजाविधिः अद्येत्यादिदेशकालौसंकीर्त्यममपुत्रपौत्रादिवृद्धयेअवैधव्यादिसकलसिद्धिद्वाराश्रीशिवमंगलागौ
रीप्रीत्यर्थंपंचवर्षपर्यंतश्रीमंगलागौरीव्रतंकरिष्ये प्रथमेवत्सरेमातुर्गेहेकर्तव्यमेवच ततोभर्तृगृहेकार्यमवश्यंस्त्रीभिरा
दरात् पंचमेवत्सरेप्राप्तेकुर्यादुद्यापनंशुभम् आचार्यंवरयेत्तत्रवेदवेदांगपारगम् श्रावणेमासिभौमेषुह्युद्यापनविधिंचरेत्

प्रातरुत्थाय सुस्नाता संकल्प्य व्रतमुत्तमम् चतुस्तंभं चतुर्द्वारं कदलीस्तंभमंडितम् घंटिकाचामरयुतं कमलै रूपशोभितम् मध्ये
वितानं बध्नीयात् पंचवर्णैरलंकृतम् तन्मध्ये स्थापयेत्पीठं दृषदं उपलं तथा रौप्येण कारयेत्पीठं दंडः कांचननिर्मितः रौप्यहेम्नोरभावे पिष
णस्य विधीयते पीठोपरिन्यसेद्देवीं ततोऽग्रे दृषदं तथा तस्याग्रे लिंगतोभद्रं लिखेद्रंगैश्च पंचभिः हरिद्रापिष्टकं कृत्वा तन्मध्येऽष्टदलं लि
खेत् तस्योपरि न्यसेद्व्रीहीन् द्रोणेन परिसंमितान् सौवर्णं राजतं ताम्रं कलशं विन्यसेद्बुधः पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितम्
तस्योपरि न्यसेत्पात्रं ताम्रं वैणवसंभवम् उमामहेश्वरीं मूर्तिं कांचनेन च निर्मिताम् तस्योपरि न्यसेद्राजन्पूजयेच्छिवमंगलाम् गृहाणेड
तिमंत्रेण मूर्तिं पीठोपरि न्यसेत् तदस्तु मित्रावरुणेत्यृचावाहनमाचरेत् गोधूमोद्भवपिष्टेन कारयेद्दीपमुत्तमं कृत्वा प्रज्वालितो दीपो
घृतवर्तिसमन्वितः उपचारैः षोडशभिर्गंधपुष्पादिभिस्तथा पत्रैः पुष्पैः षोडशैश्च नानाजातैश्च जीरकैः तंडुलैर्धान्यकैश्चैव स्वच्छैः
षोडशसंज्ञकैः अपामार्गस्य पत्रैश्च दूर्वाधत्तूरसंज्ञकैः षोडशैर्दूर्वसंख्याकैर्बिल्वपत्रैश्च पंचभिः नीराजनं ततः कुर्याद्दीपैः षोडशसंख्य
कैः अथ पूजा कुंकुमागरुलिप्तांगां सर्वाभरणभूषिताम् नीलकंठप्रियां गौरीं वंदेऽहं मंगलाह्वयाम् ध्यानं० अत्रागच्छ महा
देवि सर्वलोकसुखप्रदे यावद्व्रतमहं कुर्वे पुत्रपौत्रादिवृद्धये आवाहनं० रौप्येण चासनं दिव्यं रत्नमाणिक्यशोभितम् मयानीतं
गृहाण त्वं गौरि कामारिवल्लभे आसनं० गंधपुष्पाक्षतैर्युक्तं पाद्यं संपादितं मया गृहाण मंगले गौरि सर्वान्कामांश्च पूरय पाद्यं समं०
गंधपुष्पाक्षतैर्युक्तमर्घ्यं संपादितं मया गृहाण पुत्रपौत्रादीन्प्रसन्ना भव देहि मे अर्घ्यं० कामारिवल्लभे देवि कुर्वाचमनमंबिके निरंत
रमहं वंदे चरणौ तव पार्वति आचमनीयं० पयोदधिघृतं चैव मधुशर्करया समम् पंचामृतेन स्नपनात्प्रीयतां परमेश्वरी पंचामृतस्नानं०
जान्हवीतोयमानीतं शुभं कर्पूरसंयुतम् स्नपयामि सुरश्रेष्ठे त्वां पुत्रादिफलप्रदाम् स्नानं० आचमनं० वस्त्रं च सोमदैवत्यं लज्जायास्तु
निवारणम् मया निवेदितं भक्त्या गृहाण परमेश्वरि वस्त्रं० कंचुकीमुपवस्त्रं च नानारत्नैः समन्वितम् गृहाण त्वं मया दत्तं पार्वति जगदी
श्वरि कंचुकीवस्त्रं० कुंकुमागरुकर्पूरचंदनकस्तुरीं तथा विलेपनं महादेवि गंधं दास्यामि भक्तितः गंधं समर्पयामि रंजनाकुंकुमौ

धेनअंक्षताश्चातिशोभनाः ममेषांदेविदानेन प्रसन्नाभवपार्वति अक्षतान् समर्पयामि हरिद्राकुंकुमंचैवसिंदूरंकज्जलान्वितम्
सौभाग्यद्रव्यसंयुक्तंगृहाणपरमेश्वरि सौभाग्यद्रव्याणिसमर्पयामि सेवंतिकाबकुलचंपकपाटलाब्जैःपुन्नागजाति
करवीररसालपुष्पैः बिल्वप्रवालतुलसीदलमालतीभिस्त्वांपूजयामिजगदीश्वरिमेप्रसीद पुष्पाणिस० अपामार्गस्यप
त्रैश्च दूर्वाधत्तूरसंज्ञकैः षोडशैर्द्रव्यसंख्याकैर्बिल्वपत्रादिपंचव अथपत्रपूजा अथांगपूजा उमायैनमः पादौपूजया
मि गौर्यैनमः जंघेपू० पार्वत्यैन० जानुनीपू० जगद्धात्र्यैन० ऊरूपू० जगत्प्रतिष्ठायै० कटीपू० शांतिरूपिण्यै० नाभिंपू० देव्यैन० उद
रंपू० लोकवंद्यायैन० स्तनौपू० काल्यैन० कंठंपू० शिवायैन० मुखंपू० भवान्यैन० नेत्रेपू० रुद्राण्यैन० कर्णौपू० महादेव्यै० ललाटंपू० मं
गलदात्र्यैन० शिरःपू० पुत्रदायिन्यैनमः सर्वांगंपूजयामि देवद्रुमरसोद्भूतोकृष्णागरुसमन्वितः आघ्रेयःसर्वदेवानांधूपोऽयंप्र
तिगृह्यताम् धूपं० त्वंज्योतिःसर्वदेवानांतेजसांतेजउत्तमम् आत्मज्योतिःपरंधामदीपोयंप्रतिगृह्यताम् दीपं० अन्नंचतुर्विधंस्वा
दुरसैःषड्भिःसमन्वितम् भक्ष्यभोज्यसमायुक्तंनैवेद्यंप्रतिगृह्यताम् नैवेद्यं० आचमनीयम् करोद्वर्तनं० फलं० तांबूलं० दक्षिणां०
वज्रमाणिक्यवैडूर्यमुक्ताविद्रुममंडितम् पुष्परागसमायुक्तंभूषणानिगृह्यताम् भूषणानि० नीराजनं० नमोदेव्यै० पुष्पांजलिं
प्रदक्षिणाः नमस्कारः पुत्रान्देहिधनंदेहिसौभाग्यंदेहिमंगले अन्यांश्चसर्वकामांश्चदेहिदेविनमोऽस्तुते इतिप्रार्थना ततोवे
णवपात्रेतुसौभाग्यद्रव्यमाक्षिपेत् अन्नंकंचुकिसंयुक्तंसवस्त्रफलदक्षिणम् वायनंगौरिविप्रायददामिप्रीतयेतव सौभाग्या
रोग्यकामानांसर्वसंपत्समृद्धये गौरीगिरिशतुष्ट्यर्थंवायनंतेददाम्यहम् इतिमंत्राभ्यांवायनम् ताम्रेवावैणवे
पात्रेसौभाग्यद्रव्यमाक्षिपेत् लड्डुकंचुकिसंयुक्तंसवस्त्रफलदक्षिणम् मात्रेसुवासिनिभ्यश्चदेयंवायनमुत्तमम् जन-
नीमातृसंबंधिस्त्रियःषोडशभोजयेत् नीराजनंततःकुर्याद्दीपैःषोडशसंख्यकैः भोक्तव्यादीपकाश्चाथस्त्रीभिःसहस्वयंततः
अन्नंलवणवर्ज्यंतुमौनेनभोजयेत्स्वयम् सुवासिनीश्चापितथावस्त्रालंकारभूषणैः पूजयेच्चततःपश्चात्कुर्याद्गौरी

विसर्जनम् विप्रायप्रतिमांदद्यात्तवस्त्राणिभूरिशः एवंकृतेविधानेऽस्मिन्नार्यवैधव्यमाप्नुयात् इतिमंगलागौरीपूजोद्यापन
विधिः अथकथा युधिष्ठिरउवाच नंदनंदनगोविंदश्रुण्वतीबहुलाःकथाः श्रुताउत्कृष्टपुत्राद्युत्करंश्रोतुंव्रतंमम
श्रीकृष्णउवाच अवैधव्यकरंवक्ष्येव्रतंचारिनिषूदन शृणुत्वंसावधानःसन् कथांवक्ष्येपुरातनीम् कुंडिनंनामनगरंस्या
तस्तत्राद्विजप्रियः आसीद्वणिग्धर्मपालोनाम्नाबहुधनोऽपिसः सपत्नीकोप्यपुत्रोसौनास्तीतिव्याकुलोहृदि तस्यगेहेभस्म
लिप्तोदेहेरुद्राक्षधारकः जटिलोभिक्षुकोनित्यमागच्छन्प्रियदर्शनः नस्वीकुर्वंस्तदन्नंसइतिहस्थाःवलावदन् स्वामिन्नयंस
दायातिभिक्षुकोजटिलोगृहे नस्वीकरोत्यस्मदन्नमितिहस्वाममाधिकम् दुःखंप्रजायतेनित्यंश्रुत्वाभार्यावचोऽब्रवीत् धर्मपा
लउवा॰ प्रियेकदाचिद्दुप्तात्वंसस्वर्णंगणेभव यदाभिक्षार्थमायातिभिक्षोर्वस्त्रांतरेत्वया तदातस्यप्रदेयानिस्वर्णानिप्रियेन
घे अनंतरंतस्यभार्याचैकरत्स्वामिनोदितं जटिलेनतुसाशप्तापत्यंतेनभविष्यति श्रुत्वाभिक्षोरिदंवाक्यंदुःखितातमुवाचह
स्वामिन्शप्तात्वयापापाच्छापादुद्धरसंप्रति इत्युक्त्वातस्यचरणौववंदेदीनभाषिणी जटिलउ॰ भर्तुःसमीपेवक्तव्यंत्वयापुत्रिममाज्ञया नी
लवस्त्रःसमारुह्यनीलाश्वंगच्छकाननं रवननंतत्रकर्तव्यंयत्राश्वस्तेस्खलिष्यति रम्यंपक्षिभिरायुक्तंमृगसंघद्रुमाकुलम् स्वर्णरचितंर
त्नमाणिक्यादिविभूषितम् नानापुष्पैःसमायुक्तंदृश्यंदेवालयंततः वर्ततेतत्रभवतीभवानीभक्तवत्सला आराधयत्वंमनसायथावि-
धुद्धरिष्यति त्वांभवानीतिवचनंश्रुत्वाभिक्षोःस्वरप्रदं ववंदेतस्यचरणौपुनःपुनरुवाचह तदैवकाले जटिलोअंतर्भूतोबभूवसः सावद
त्पतिमन्वैहिशृणुभिक्षूक्तमादरात् यथोक्तमवदद्भर्तातच्छ्रुत्वावाक्यमब्रवीत् नीलवस्त्रःसमारुह्यनीलाश्वंप्रस्थितोवनम् गच्छन्नाना
विधान्वृक्षान्पथिपश्यद्भयंकरान् मृगान्सिंहान्दंदशूकान्पथिपश्यन्भयाकुलः ददर्शासौतडागंचबाहुल्येनविराजितम् रक्त
नीलोत्पलैश्चक्रवाकद्वंद्वैश्चराजितम् स्नानंचकारतत्रासौतर्पणाद्यपिभूरिशः पुनरश्वंसमारुह्यजगामगहनंवनम् स्खलितंवाजि
नंपश्यन्नश्वादुत्तीर्यएवच खनन्पृथिवींतत्रयावद्देवालयंगतः ददर्शचमहास्थूलंदेवालयमसौततः रत्नैर्मुक्ताफलैश्चैवमा

णिक्येश्चापिसर्वतः पूजयामासजटिलवाक्यंस्मृत्वातिविस्मितः सुवर्णयुक्तवस्त्राणिचंदनान्यक्षतान्शुभान् चंपकादीनिपुष्पाणिधूप
दीपंविशेषतः नानापक्वान्नसंयुक्तंरसैःषड्भिःसमन्वितम् नानाशाकैःसमाक्रांतंसदुग्धघृतशर्करम् नैवेद्यंकरशुद्ध्यर्थंचंदनंमलया
द्रिजम् संपाद्यतुष्टहृदयःफलतांबूलदक्षिणाः जजापमंत्रान्गुप्तेसौसगुणध्यानपूर्वकं देवीभक्तगृहादेत्यलोभयामाससादरम्
प्रसन्नावददत्रेयंपूजासंपादिताकथम् येनसंपादितातस्मैददामिवरमद्भुतम् इतिश्रुत्वाधर्मपालोदेव्यग्रेप्रांजलिःस्थितः भगव
त्युवाच धर्मपालत्वयासम्यक्पूजासंपादितानघ वरंयाचयमद्भक्तददामिबहुलंधनम् धर्मपालउवाच बहुलाधनसंपत्ति
र्वर्ततेत्वत्प्रसादतः अपत्यंप्राप्तुमिच्छामिपितृणांनारकंशुभं आयातिभिक्षुकोगेहेगृण्हातिनमदन्नकम् तेनमेबहुलंदुःखंसु
भार्यस्योपजायते इतिदीनवचःश्रुत्वादेवीवचनमब्रवीत् देव्युवाच धर्मपालकुतेऽदृष्टेऽपत्यंनास्तिसुखप्रदम् तथापिकिंचा
वयसिकन्यांविगतभर्तृकाम् पुत्रमल्पायुषंवाथाप्यंधंदीर्घायुषंसुतम् धर्मपालउवाच पुत्रमल्पायुषंदेहितावतास्तुकृतकृत्यता
प्राप्नोमिचोद्धरिष्यामिपितरोममघोरगाः देव्युवाच मत्पार्श्वेवर्तमानस्यनाभावारुह्यशुंडिनः तत्पार्श्ववर्तिचूतस्यगृहीत्वा
फलमद्भुतम् पत्न्यैदेयंततःपुत्रोभविष्यतिनसंशयः इतिदेवीवचःश्रुत्वागत्वातत्पार्श्वएवच नाभिंगजमुखस्याथारुह्यजया
हमोहतः फलान्युत्तीर्यचततःपलमेकंददर्शसः एवंपुनःपुनःकुर्वन्फलमेकंददर्शसः क्रुद्धोगणपतिश्चाथधर्मपालायशप्तवा
न् षोडशेवत्सरेप्राप्तेअहिःपुत्रंदशिष्यति धर्मपालोफलंसम्यक्कृत्वैवाध्यागमद्गृहम् फलंपत्न्यैददौसापिभक्षयित्वापतिव्र
ता गर्भंसाधारयामासपत्यासहससंगता संपूर्णेनवमेमासेप्रासूतसुतमुत्तमम् जातकर्मचकारास्यपितासंतुष्टमानसः
षष्ठीपूजांचकारास्यषष्ठेतुदिवसेततः द्वादशेहनिसंप्राप्तेशिवनाम्नाजुहावतम् षष्ठेमासिचकारासावन्नप्राशनमद्भुतम् तृ
तीयेवत्सरेचूडामस्याष्टमेब्दस्यनुत्तमम् कृत्वोपनयनंपार्थविप्रोभूत्तुष्टमानसः दशमेवत्सरेप्राप्तेब्रवीद्भार्यापतिव्रता भार्योवा
च बालकस्यविवाहोपिकर्तव्यःसुमुहूर्तके धर्मपालउ० मयासंकल्पितंकाश्यांगमनंबालकस्यतत् कृत्वासमायातुततोविवा

होस्यभविष्यति पुत्रोसौमेषितस्तेनशालकेनसमन्वितः वाराणस्यांप्रस्थितोसौगृहीत्वाबहुलंधनम् कुर्वंतौपथिसद्धर्मंप्रतिष्ठापुर
मायतुः क्रीडंत्यःकन्यकादृष्टास्तत्रदेशेमनोरमे तासांसमाजेगौरांगीसुशीलानामकन्यका तयासहसखीकाचिच्चकारकलहंभृशम्
गालनंचददौतस्यैरंडेभाग्येमुहुर्मुहुः सुशीलोवाच सखित्वयागालनंमेव्यर्थंदत्तंशुभानने जनन्यामेमानवत्याश्चाति गौरी
व्रतंशुभम् तस्यप्रसादात्सकलाःसंबंधिन्यःप्रियाःस्त्रियः आजन्माविधवाजाताःकिंपुनःकन्यकाध्रुवम् वक्ष्येतस्यप्रभावंकिंव्रत
राजस्यभामिनि पूजनेधूपदीपोयंयत्रतत्रसुखंभवेत् इतिश्रुत्वाततोवाक्यंविस्मयोत्फुल्ललोचनः मातुलश्चिंतयामासबालकस्यपि
यंततः शतंजीवीभवेदेषाएतद्धस्ताक्षतायदि पतंत्यमुष्याशिरसिइतिभाव्यपुनःपुनः सुशीलामेवपश्यन्सविस्मयोत्फुल्ललोचनः
सुशीलाप्रस्थितागेहेतदनुप्रस्थितावुभौ स्वगृहंप्रापगौरांगीनिकटेतद्गृहस्यतौ सतडागेरम्यदेशेवासंचक्रतुरादरात् विवाहकाले-
संप्राप्तेसुशीलाजनकोहरिः विवाहोद्योगवान्जातोविचचारहरंवरम् असमर्थंहरंदृष्ट्वातन्मातापितरावुभौ ययाचतुःशिवंबध्वां
जलीविनयसंयुक्तौ वरपितरावूचतुः उपस्थितोविवाहोनौपुत्रस्यशुभयाहरेः सुशीलयाकन्ययायमसमर्थश्चदृश्यते अतोदेयःशि
वःश्रीमान्लग्नकालेत्वयाविभो लग्नंभविष्यतिततोदेयोऽस्माभिःशिवस्तव मातुलउ० अवश्यंलग्नकालेसौशिवोग्राह्यःप्रियंवदः
ततोमुहूर्त्तेसंप्राप्तेविवाहमकरोच्छिवः तत्रैवशयनंचक्रेससुशीलःप्रियंवदः स्वप्नेसामंगलागौरीमातृरूपेणभास्वता सुशीलामव
दत्साध्वींहितंवचनमेवच गौर्युवाच सुशीलेनवगौरांगिभर्तृदंशार्थमागतः महान्भुजंगउत्तिष्ठदुग्धंस्थापयतत्पुरः घटंचस्था
पयाशुत्वंतन्मध्येसगमिष्यति कूर्पासमंगान्निष्कास्यबंधनीयस्त्वयाघटः प्रातरुत्थायदेहित्वंमात्रेवायनकंशुभम् इतिगौरीवचःश्रु
त्वासुशीलाक्षणमुत्थिता ददर्शाग्रेनिःश्वसंतंकृष्णसर्पंमहाभयम् ततश्चकारगौर्युक्तंप्रवृत्तानिद्रितुंततः उवाचवरआसन्नोस्तुल्ल-
ग्नामहतीमम भक्षणायाशुदेहित्वंलड्डुकादिकमुत्तमम् श्रुत्वेतिवाक्यंपात्रेसाददौलड्डुकमुत्तमम् भक्षयित्वाशिवंहेमेतस्मिन्पात्रेंगु २८०
लीयकम् दत्वातत्स्थापयामासस्थलेशुभेशुभानन‌ः सुखेनशयनंचक्रेपृथिव्यांसर्वकोविदः ततःप्रभातसमयेशिवआगाद्गृहंस्व

कं स्नानशन्द्वासक्षशीलासामात्रेवायनकंददौ माताददर्शतन्मध्येमुक्ताहारमनुत्तमम् ददौप्रियायैकन्यायैसहसातुष्टमानसा क्रीडाका
लेक्षसंमासेहरआगात्तुमंडपे आदेशयत्क्षशीलांतांक्रीडार्थंजननींततः क्षशीलोवाच नायंवरोमेजननियेनपाणिग्रहः कृतः प्र
नेनसहमनसाक्रीडनेच्छातथानमे इतिश्रुत्वासमाक्रांतोचिंतयापितरौततः अन्नदानमुपायंचविरचेतुइतिद्रुतम् तदारभ्यचक्रतु
स्तोपुराणोक्तविधानतः क्षशीलापादयोश्चक्रेक्षालनंमुद्रिकान्विता जलधारांददौमाताचंदनंपुत्रकोहरेः हरिर्ददौचतांबूलंबुभुजुस्त
त्रमानवाः इतिरीत्यान्नदानंतत्प्रवृत्तंभिक्षसौख्यदम् तावुभौप्रस्थितौकाश्यांमासौकाशींसुखप्रदाम् निर्मलांभसिगंगायाः स्नानं
चक्रतुरादरात् स्वर्गद्वारंप्रस्थितौतौकुर्वंतौधर्ममुत्तमम् पीतांबराणिददतुर्भिक्षुकाणांगृहेगृहे आशिषश्चददुस्तस्मैचिरंजीवोभवेदिति
विश्वेश्वरंसमायातौनत्वास्तुत्वापुनःपुनः स्वयंगृहंप्रस्थितौतौशिवोमार्गेद्रुतंवदन् शिवउवा० कायेमेकिंचिदस्वास्थ्यंमातुलमतिभातिहि
ततःप्राणोत्क्रमेतस्ययमदूताउपस्थिताः मंगलागौरिकाचापितेषांयुद्धमभून्महत् जित्वातान्मंगलाप्राणान्ददौतस्मैशिवस्यच शिवोः
कस्मादुत्थितोसौमातुलंप्रत्युवाचह स्वप्नेयुद्धंमयादृष्टंमंगलायमभृत्ययोः जितास्तेमंगलागौर्यानतोऽहंशयनच्युतः मातुलउ० यज्ज्ञा
तंशिवतज्ज्ञातंनस्मर्तव्यंत्वयापुनः गच्छावआवांनगरेपितरौद्रष्टुमुत्सुकौ प्रस्थितौतौनतत्स्मात्प्रतिष्ठापुरमापतुः रम्येतडागेतत्रै
तौपाकारंभंविचक्रतुः दृष्टौतौहरिदासीभिर्धैर्यौदार्यधरौशुभौ दास्यऊचुः अन्नदानंहरेर्गेहेप्रवृत्तंतत्रगम्यताम् उभावूचतुः भो
दास्योयात्रिकावावांगच्छावोनक्वचिद्गृहे इतिश्रुत्वातयोर्वाक्यंदास्योजग्मुःस्वकंगृहम् स्वस्वामिनिकटेवाक्यमवदन्सादरंतदा सर्वदा-
सीवचःश्रुत्वातदर्थंप्रभुरादरात् प्रेषयामासहस्त्यादिरत्नवस्त्राणिभूरिशः तंदृष्ट्वाविस्मितौतावागच्छावश्चहरेर्गृहम् हरिर्मातुलमप्य
च्यंशिवंपूजितुमागतः क्षालयंतीचसाकन्याचरणौतस्यसत्रपा अभूद्वरोमेयमितिजननींमत्युवाचह हरिःपप्रच्छसाश्चर्यंशिवंमं
गलदर्शनम् हरिरुवा० किंचिच्चिन्हंनवास्त्यत्रब्रूहिमेवरदर्शन शिवउवा० ममेदंचिन्हमस्तीहइत्युक्त्वागृहमागतः ततआनीयतस्मा
चंदर्शयामाससादरम् तत्सात्रंचहरिर्दत्त्वाकन्यादानंचकारसः ददौरत्नानिवस्त्राणिसुवर्णानिबहून्यपि तामादायप्रस्थितौतौ

ददतोबहुलंधनं श्रावणेमासिसंप्राप्ते व्रतंभौमेचकारसा इत्युक्त्वासर्वेप्रस्थितास्तेयोजनंजग्मुरुत्तमाः सुशीलोवाच गौरीविसर्जनं चापिदीपमानंकरिष्यति ततोगंतव्यमस्माभिः पितरौद्रष्टुमादरात् १०० इत्युक्त्वा आगतास्तत्रगौर्या आवाहनंकृतम् ददृशुस्तत्रसौवर्णं देवालयमनुत्तमम् गौरीविसर्जनंदीपमानंसाचव्यचीकरत् ततःसर्वेप्रस्थितास्तेपितरौद्रष्टुमुत्सुकाः कुंडिनामनदेशेतान् दृष्ट्वाविस्मयिनोजनाः अब्रुवुस्तेधर्मपालंसोत्कंठंप्रियदर्शनाः जनाऊचुः धर्मपालाद्यतेपुत्रोसभार्यःशालकस्तथा समायातो वयंदृष्ट्वा अधुनैवसमागताः यावज्जनावदंस्तत्रतावत्सोपिसमागतः नमस्कारांश्चकारासौपितृभ्यांपितृवल्लभः मातुलोपिनतिंचक्रे भगिनीधर्मपालयोः सुशीलाश्वशुरायापिश्वश्रूंनत्वास्थितातदा श्वश्रूरुवा० सुशीलेनद्व्रतंब्रूहि यद्व्रतस्यप्रभावतः आयुर्वृद्धिःशिशोर्मेपिजाताकमललोचने सुशीलोवा० नजानेहंव्रतंश्वश्रूजानेप्रानवतीह्यसौ श्वशुरंधर्मपालंचश्वश्रूंचप्रवर्ततातथा मंगलांदेवतांजानेपरंतुयुवयोःसुतम् इत्युक्त्वाचसुशीलासाबुभुजेस्वांतहर्षिता कृष्णउवा० तस्माद्व्रतमिदंधर्मस्त्रीभिःकार्यंसदैवतु युधिष्ठिरउ० फलमस्यश्रुतंकृष्णविधानंब्रूहिकेशव कृष्णउ० श्रावणेमासिभौमेषुचतुर्षुव्रतमाचरेत् प्रातरुत्थायसुस्नातासंकल्प्यव्रतमुत्तमं उपचारैःषोडशभिःपूजयेन्मंगलांतथा नीराजनंततःकुर्याद्दीपैःषोडशसंख्यया मात्रेसुवासिनीभ्यश्चदेयंवायनमुत्तमम् भोक्तव्यादीपकाश्चापिअन्नंलवणवर्जितम् विसर्जनंमंगलायादीपमानंततःक्रमात् पंचसंवत्सरेष्वेवंकर्तव्यंपतिमिच्छुभिः इति श्रीभविष्येमंगलागौरीव्रतोद्यापनंसंपूर्णम् अथमौनव्रतं नंदिकेश्वरउ० कथयस्वप्रभावेनव्रतंपरमदुर्लभम् येनासौवरदोदेवस्तन्मेकथयषण्मुख स्कंदउवा० शृणुनंदिन्प्रवक्ष्यामिव्रतंपरमदुर्लभम् नकस्यचिन्मयाख्यातंत्वामेवकथयाम्यहम् येनसंतुष्टमात्रेणसर्वपापैःप्रमुच्यते शाकल्यनगरेरम्येसोमशर्माद्विजोत्तमः सर्वदादुःखितोदीनोद्रव्यहीनोबुभुक्षितः तस्यकन्याद्वयंजातंसौंदर्यंशुभलक्षणं रूपलावण्यसंपन्नागृहार्चनरतासदा ज्येष्ठारूपवतीनामकनिष्ठाचसुपर्णिका वत्सानांपालनार्थायजग्मतुस्तेसरोवरं हंसकारंडवाकीर्णंचक्रतुस्तेसरोवरम् कदलीपारिजातैश्चचंपकैर्बिल्वकैस्तथा तीरेजलगतंमध्येलिंगंतत्रैवतिष्ठति

तदार्चनरतानांच अप्सराणांकदंबकं ददर्शसासमूहंच अदृष्टंसमनोहरम् आवाहनंकृतंस्नानंताभ्यांतत्रसरित्तटे महादेवव्रतोदि
ष्टंक्रियतांममसन्निधौ एवंसंतुष्टमात्रेणसर्वान्कामानवाप्नुयात् पूज्यतांश्रीमहादेवंसकृभद्रेकन्यकेशिवां षोडशग्रंथिसंयुक्तंकरेबध्वासु
दोरकम् दूर्वांकुरैःषोडशभिर्देवस्योपरिविन्यसेत् पुष्पाक्षतादिधूपैश्चसर्वंमौनेनकारयेत् एवंविधिसमायुक्तंपूजयस्वमहेश्वरम्
नैवेद्यंतुकृतंदानंव्रतंताभ्यांगृहीतवान् दध्योदनंचतन्मध्यान्निक्षिप्त्वाचसरित्तटे फलानिपिष्टलड्डुकंस्वगृहेयातिगृह्यताम् ततःप्रभा
तसमयेनैवेद्यंतुसमर्पितम् तत्सर्वंहेमसंजातंव्रतस्यास्यप्रभावतः तद्दृष्ट्वामहदाश्चर्यंपितातस्यापिकंपितः रूपवत्यातदाप्रोक्तंव्रतस्या
स्यप्रभावतः नभेतव्यंत्वयातातगृहीतंतुमयावने द्वितीयेन्हिपुनस्ताभ्यांवत्सानीताःसरित्तटे वनेतुकन्यकेश्चाममन्तत्रराजाउपागतः
प्रतापमुकुरोराजामृगयासक्तमानसः श्रांतस्तृषितवान्प्राप्तोयत्रास्तेकन्यकाद्वयं राजाअपृच्छत्ताःकन्याउदकंतवंसन्निधौ इत्युक्तवति
राजेंद्रेरूपवत्यामुदान्वितं आनीतंशीतलंवारिओदनंदधिसंयुतम् ततोभुक्त्वातुराजासौपरिवारेणसंयुतःपुनःप्रष्टुंसमारेभेकस्याक
न्यासुलोचने रूपवत्युवाच सोमशर्मापिताराजन्जानासियदिवानवा तस्यकन्याद्वयंराजन्वनेचागतवत्यहम् इत्याकर्ण्यततोराजागत
वान्मंदिरंप्रति दूतान्संप्रेषयामासकन्यार्थंविप्रसन्निधौ अथजग्मुस्ततोदूताःसोमशर्मागृहंप्रति राजाआहूयतेशीघ्रंगच्छविप्रमही
पतिं ततोगत्वासमंदूतैस्तैराज्ञःसन्निवेदितः राज्ञातुप्रार्थिताज्येष्ठारूपवत्यभिधायिनी पुण्यमाणवकायैवकनिष्ठाचस्वर्णपर्णिका पाणि
ग्रहस्तदातत्रजातःकन्यकयोस्तयोः देवस्याराधनंत्यक्तंरूपवत्यामदेनच व्रतस्यत्यागदोषेणराज्यलक्ष्मीगताभवत् कनिष्ठायागृ
हेचैवराज्यंप्राप्तमनुत्तमम् तस्यावेश्मनिसंप्राप्ताज्येष्ठाभिक्षुगृहंप्रति तांदृष्ट्वादुःखिताजाताकनिष्ठाप्रत्युवाचह किमिदंतवदारिद्र्यं
राज्यंकुत्रगतंतव साब्रवीत्परसैन्यैश्चसर्वंजित्वादुरात्मभिः हृतंसर्वस्वमस्माकंतन्नास्तिइतिभुज्यते व्रतभंगप्रभावेनदारिद्र्यंसमु
पागतम् इत्याकर्ण्यस्वर्णपर्णासौधनकुंभंददौतदा धनकुंभंगृहीत्वासाज्येष्ठागच्छद्गृहंप्रति मार्गेचौरैस्ततोनीतोधनकुंभोमनोहरः
दुःखंतदानुसंप्राप्तंशोकाकुलितमानसा कनिष्ठायागृहंपश्चाज्जगामअतिदुःखिता पुनर्ददर्शतांज्येष्ठांकरुणासक्तमानसा व

शर्यष्टिंसमादाय नस्यांस्वर्णंनिधायच ददौज्येष्ठांरूपर्णासाविससर्जगृहंप्रति शनैःशनैस्तांगच्छंतींचोरास्तत्रसमागताः वंश
यष्टिंगृहीत्वातेजग्मुस्तत्रयथागतम् ज्येष्ठातुशोकसंपन्नारूपर्णांसमुपागमत् दुःखंवक्तुंसमारेभेकुपितःशंकरोमम रूपर्णात
द्वचःश्रुत्वादंडवत्प्रणिपत्यच रूपर्णोवाच धन्याहंरूपयादेवयदालोकितवानसि त्वत्प्रसादान्महादेवमुच्यतेकर्मबंधनात् रक्षर
क्षजगन्नाथत्राहिमांभवसागरात् रूपर्णांदेवदेवेशोमाभैर्माभैरभाषत पुनःरूपर्णाइत्याहश्रूयतांजगदीश्वर ज्येष्ठामेभगिनी
पापाव्रतंत्यक्तंतवेश्वर रक्षितव्याजगन्नाथयदितुष्टोसिशंकर ईश्वरउवाच त्वद्भगिन्यात्वजानंत्याव्रतभंगोमहान्कृतः सर्वंतद
स्तुसंपूर्णंत्वद्भक्त्यामत्प्रसादतः इत्युक्त्वादेवदेवेशोराज्यंदत्वादिवंययौ पुनर्व्रतप्रभावेनराज्यंप्रापमनोरमम् नंदिकेश्वरउ
देकेनप्रकारेणव्रतस्योद्यापनंवद कथ्यतांश्रीमहाभागव्रतसंपूर्णहेतवे स्कंदउवाच वर्षेषोडशसंपूर्णेकुर्यादुद्यापनंबुधः आ
दौमध्येतथाचांतेकुर्यादुद्यापनंबुधः मासेभाद्रपदेशुक्लेपक्षेप्रतिपदातिथौ मंडपंकारयेत्तत्रकदलीस्तंभमंडितम् नानापुष्पैश्च
शोभाढ्यंप्रवरंतत्रकारयेत् तन्मध्येलिंगतोभद्रंपंचरंगैःसमन्वितम् कलशंस्थापयेत्तत्रहेमपात्रसमन्वितम् भवानीसहितं
शंभुंस्वर्णेनचकारयेत् पुष्पैर्धूपैश्चदीपैश्चनानाफलसमन्वितम् पलानिपिष्टपक्वानिदद्याद्विप्रायषोडश तांबूलंदक्षिणोपेतंयथा
शक्त्यातुदापयेत् प्रसीददेवदेवेशचराचरजगद्गुरो ईशानायनमस्तुभ्यंव्योमव्यापिन्नमोस्तुते इतिक्षमाप्यदेवेशंभक्त्यातत्परमान
सः रात्रौजागरणंकुर्याद्गीतवाद्यादिमंगलैः ततःप्रभातेउत्थायस्नानंकृत्वाविधानतः होमस्तत्रप्रकर्तव्यस्तिलाज्येनसमन्वितः मूल
मंत्रेणहोतव्यमष्टोत्तरशतंबुधैः आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः धेनुंदद्यात्सवत्सांचवस्त्रालंकारसंयुताम् पयस्विनींकांस्यदो
हांनानालंकारसंयुताम् ततःशैवान्प्रपूज्याथषोडशैस्तांस्तपोधनान् कौपीनास्तुप्रदातव्यास्तथादद्यात्कमंडलून् भक्त्याससमाप्यतान्सर्वा
न्व्रतसंपूर्णहेतवे भोजनंतत्रदातव्यंलेह्यपेयसमन्वितम् दक्षिणांचततोदद्याद्वित्तशाठ्यंनकारयेत् एवंविधिसमायुक्तःकरोतिव्रतमु
त्तमम् राज्यंचलभतेलोकेपुत्रपौत्रैःसमन्वितः सर्वपापविनिर्मुक्तोसर्वदोषविवर्जितः भुक्त्वाभोगान्यथाकाममंतेगच्छेत्परंपदम्

दे

लभतेपरमांमुक्तिंशिवलोकेमहीयते ६२ इतिश्रीभविष्येमौनव्रतोद्यापनंसंपूर्णम् अथपंचधान्यलक्षपूजालिख्यते दे
व्युवाच देवदेवजगन्नाथभवसागरतारक सर्वकारणदेवेशसर्वसिद्धिप्रदायक अहमेकंमहागुह्यंप्रष्टुमिच्छामिशंकर श्रीमा
हंकेनपुण्येनत्वामाशुकथयस्वमे ईश्वरउवाच शृणुदेविप्रवक्ष्यामिपृष्टंयत्तुत्वयाप्रिये पुण्यात्पुण्यतरंश्रेष्ठमिहमोक्षप्रदायकम्
त्वयायल्लक्षपूजाख्यंकृतंतत्पूर्वजन्मनि तेनप्राप्तासिमांदेविसर्वैश्वर्यानुभाविनि पार्वत्युवाच महाश्चर्यकरंगुह्यंदेवदेवजगत्पते
विस्तरेणचतत्सर्वमाशुमेकथयप्रभो ईश्वरउवाच धान्यानांवैलक्षपूजाविधिंवक्ष्येचपार्वति लोकानामुपकारार्थंसर्वसंपत्करंशु
भम् श्रावणेकार्तिकेवापिमाघेवामाधवेपिवा शुभेवाप्यथवान्यस्मिन्यदाभक्तिःशिवेनृणाम् चित्तंवित्तंभवेद्यस्मिन्कालेचैवार्च
येच्छिवं नित्यकर्मसमाप्याथदोषविमुक्तःसमाहितः समभ्यर्च्यविधानेनलक्षपूजांसमाचरेत् पंचाक्षरेणमंत्रेणत्र्यंबकेणतथैवच
शिवनाम्नाथवाकुर्यात्पूजनंपार्वतीपतेः तंडुलानांमुष्टिमात्रंमृगीमुद्रातिलस्यच ग्रासार्धमात्रमन्नानांयवमंगुष्ठेनतर्जनीतथासंख्या
कृतंधान्यंसमूहंतंडुलादिकम् यवगोधूममुद्गाश्चतंडुलावैतिलाःक्रमात् पंचधान्यमितिप्रोक्तंशांतिकेदेवपूजने तंडुलैश्चप्रकुर्वीतलक्ष
पूजाविधिंनराः तेषांस्वर्गंचमोक्षंचप्रददातीहशंकरः एवंतिलैःप्रकुर्वीतलक्षपूजाविधिंनराः तेजस्विनोमहाभागाःकुलेनचशतेनवै
श्रीकामेनप्रकर्तव्यंगोधूमैःपूजनंमहत् उत्तमांश्रियमाप्नोतिप्रसादाच्छंकरस्यच पुत्रकामेनकर्तव्यंयवैःपूजनमुत्तमम् अंतेसायुज्य
माप्नोतिनात्रकार्याविचारणा वशीकामेनकर्तव्यंमुद्गैःपूजनमुत्तमम् देवदानवगंधर्ववशीभवतिनान्यथा पूजांकुर्यात्प्रयत्नेनयद्यश
क्तोभवेत्तदा कारयेद्ब्राह्मणद्वाराविधिनासर्वमानवैः पूजयेत्पंचधान्यानांसर्वकामार्थसिद्धिदा पूजयेत्पार्वतीनाथंभक्तियुक्तेनचेत
सा यंयंचिंतयतेकामंतंतंप्राप्नोतिमानवः समाप्तौधान्यपूजायाउद्यापनविधिंचरेत् आचार्यंवरयेत्तत्रवेदवेदांगपारगं पुष्पमंडपिकांकृ
त्वापूजास्थानेसमाहितः सुवर्णप्रतिमांकृत्वापार्वत्याःशंकरस्यच यथाशक्त्यानंदिनंचगणाध्यक्षेनसमन्वितम् अभिषिच्यमहादेवंप्रसुम
याम्नाहितंशिवं नवांबरेसितेशुद्धेस्थापयेत्पार्वतीपतिं समभ्यर्च्यद्विजैःसार्धंमहापूजांसमाचरेत् यवगोधूममुद्गैश्चतिलैर्हाटक-

निर्मितैः रौप्येणतंडुलंकृत्वाभक्तिभावपुरःसरः सुवर्णरौप्यधान्यानिकृत्वाशंभोः समर्पयेत् यत्रधान्यार्पणंकुर्यात्तत्रैवंपूजनंस्मृतं लक्षसं-
ख्याकृतंधान्यंसमूहंतंडुलादिकं स्वर्णरौप्यसहितंब्राह्मणायनिवेदयेत् अर्चनस्यदशांशेनब्राह्मणान्भोजयेत्ततः अशक्तश्चेन्नरोयस्तु
पंचाशत्पंचविंशतिः शक्तोसत्यांनकुर्याच्चेत्पूजनंनिष्फलंभवेत् तद्दशांशेनवैहोमंकुर्याच्चरुतिलाज्यकैः आचार्यंचसपत्नीकंतोषयेद्दक्षिणादि
भिः येकुर्वंतिनराभक्त्याशिवपूजाविधानतः भुक्त्वेहसकलान्भोगानंतेसायुज्यमेवच एतत्तेकथितंगुह्यंममसान्निध्यकारकं पुत्रपौत्रध
नायुष्यसंपत्तिस्वखदंतथा कांतात्वस्वभगातस्यभवेद्धर्ममतिःसदा ब्रह्महामद्यपस्तेयीतथैवगुरुतल्पगः सद्यःपूतोभवेल्लक्षपूजनात्सा
र्वतीपतेः इतिश्रीभ० पंचधान्यलक्षपूजोद्यापनसंपू० अथशिवामुष्टिव्रतंबाल्यावस्थायांस्त्रीणामुक्तं भविष्ये देव्युवाच देवदेवजगन्ना
थजगदानंदकारक कौतुकेनेप्सितंकिंचिद्धर्ममेतंप्रश्नंकरोम्यहं कृतानिदेवदेवेशव्रतानिनियमास्तथा तीर्थानिपुण्यक्षेत्राणियज्ञदानान्यनेकशः नास्ति
मेनिश्चयोदेवक्ष्यामिताहंत्वयापुनः कथयस्वमहादेवयद्गोप्यंव्रतमुत्तमं केनत्वंहिमयाप्राप्तस्तपोदानव्रतादिना अनादिमध्यनिधनोभर्त्तान्नेवजग
त्प्रभः शिवउवाच शृणुदेविप्रयत्नेनव्रतानामुत्तमंव्रतम् शिवामुष्ट्यभिधानंचसर्वोपद्रवनाशनम् सुखसंपत्करंचैवपुत्रराज्यसमृद्धिदं
शंकरप्रीतिजनकंशिवस्थानप्रदायकम् स्वभर्त्रासहनारीणांमहास्नेहकरंपरम् तेनव्रतप्रभावेनप्राप्तमर्धासनंप्रिये इतिहासं
पुरावृत्तंशृणुवेत्त्वंसमाहिता पुरासरस्वतीतीरेविमलाख्यामहापुरी तत्रचंद्रप्रभोनामराजाभूद्धनदोपमः तस्यस्त्रीरूपलावण्यसौं
दर्यस्मरविभ्रमा सहिचंद्रप्रभूराजाकौतुकेनसमन्वितः माहात्म्यंशिवपूजायाःपत्नीमत्यवदत्तदा महादीर्घविशालाक्षिभार्येबालमृगेक्ष
णे राज्ञश्चैकस्यनित्सप्तपुत्राजाताविशारदाः तेषांमध्येकश्चिदेकस्तस्यभार्यापतिव्रता तस्याःकालेहिसंजातौद्वौपुत्रौलक्षणान्वितौ ए
ककन्याप्रसूतासासर्वलक्षणसंयुता अप्रियास्वामिनेजातासाराज्ञीवनमागता साकदाचिद्वनंगत्वाचारयंतीगवांगणम् तत्रशार्दूलवा-
राहवनमाहिषकुंजरान् दृष्ट्वाभयेनव्यथितामूर्च्छितानिपपातह उत्थायचैवबभ्रामतृषार्तोविपिनंमहत् चकोरचक्रकारंडवंच
रीकशताकुलं उत्फुल्लपद्मकल्हारकुमुदोत्पलमंडितम् राजपत्नीतदापूर्वंददर्शाप्सरसांगणं समासाद्यसरस्तीरंपीत्वाजलमनुत्तमं शिवंचोमा

मर्चयंतं ददर्शाप्सरसांगणम् किमेतदितिपप्रच्छताऊचुर्योषितंप्रति शिवामुष्टिव्रतमिदंक्रियतेस्माभिरुत्तमं सर्वसंपत्करंस्त्रीणांतत्कुरुष्व
पतिव्रते राजपत्न्युवाच विधानंकीदृशंब्रूतकिंफलंचास्यतन्मम ताऊचुर्योषितःसर्वाः श्रावणेचेंदुवासरे प्रारब्धव्यंव्रतमिदंशिवोर्च्यःपंच
वत्सरान् तच्छ्रुत्वासापिजग्राहव्रतंनियतमानसा चतुर्ष्विंदुवारेषु फलैरन्यैः प्रपूजयेत् प्रथमेइंदुवारेन्हि पूजयेच्चशिवापतिं तंडुलैर्गो
धूमतिलैर्मुद्गैरन्यैःप्रपूजयेत् धान्यानांसार्द्धमुष्टिंच फलैःसहप्रपूजयेत् नारिकेरंमातुलिंगंरंभाकर्कटिसंभवं उमामहेश्वरींमूर्तिंस्था
पयित्वाप्रपूजयेत् ततस्तद्व्रतमाहात्म्यात्प्रीतिःप्रियतराभवेत् ततःप्राप्यव्रतंभक्त्याशिवमभ्यर्चयेत्सदा पूजयेद्बहुपुष्पैश्चगंधधूपैश्चदी
पकैः नानाप्रकारैर्नैवेद्यैः पूजयेच्चउमापतिम् रौप्येणतंडुलंकृत्वानारीकेरेणसंयुतम् गोधूमतिलमुद्गाश्च हाटकेनविनिर्मिताः मातुलिंगं
चकेरंचकर्कटींसहपूजयेत् एवंविधैर्धान्यफलैर्मंत्रेणानेनपूजयेत् ॐनमःशिवायशांतायपंचवक्त्रायशूलिने नंदिभृंगिमहाकालगणयु
क्तायशंभवे ब्राह्मणान्भोजयेत्तत्रयथाशक्त्याचभूरिशः भर्त्रासहकथांश्रुत्वाभक्तियुक्तेनचेतसा यंयंचिंतयतेकामंतंतंप्राप्नोतिभामि
नी देव्युवाच उद्यापनविधिंब्रूहिशिवमुख्याःसुरेश्वर भक्तितःश्रोतुमिच्छामिव्रतसंपूर्णहेतवे महादेवउ० उद्यापनविधिंवक्ष्येव्रतराजस्य
शोभने यस्यानुष्ठानमात्रेणसंपूर्णंहिव्रतंभवेत् तस्माद्व्रतमिदंदेविस्त्रीभिःकर्तव्यमद्भुतम् श्रावणेमासिसोमेषु चतुर्षुव्रतमाचरेत् प्रातरुत्था
यसुस्नातासंकल्प्यव्रतमुत्तमं पंचमेवत्सरेप्राप्तेकुर्यादुद्यापनंव्रती चतुस्तंभंचतुर्द्वारंकदलीस्तंभमंडितम् घंटिकाचामरयुतंकदलीरूपशो
भितम् चंदनागरुकर्पूरैर्लेपितंमंडपंशुभं मध्येवितानंबध्नीयात्पंचवर्णैरलंकृतम् तन्मध्येस्थापयेल्लिंगंपूजयेच्चसुमापतिम् सुवर्णरौ
प्यधान्यैश्चफलैरुक्तैश्चपूजयेत् ब्राह्मणान्भोजयेत्पश्चाद्वस्त्रालंकारभूषणैः अन्येभ्योविप्रवर्येभ्योदक्षिणाचप्रयत्नतः भूयसींप
रयाभक्त्याप्रदद्याच्छिवतुष्टये उद्दिश्यपार्वतीशंचसर्वंकुर्यादतंद्रितः बंधुभिःसहभुंजीतपतिपुत्रजनैःसह एवंयाकुरुतेनारी
व्रतराजंमनोहरम् सौभाग्यमखिलंतस्याःसप्तजन्मन्यसंशयः एतत्तेकथितंदेविनवाग्रेव्रतमुत्तमम् कोटियज्ञकृतंपुण्यम
स्यानुष्ठानमात्रतः जायतेनात्रसंदेहोऋषिभिःपरिकीर्तितम् येशृण्वंतिविमांभक्त्याकथांपापहरांशुभाम् व्रतजंप्राप्नुवंतीह

तोंहृत्पुण्यंनसंशयः   इतिश्रीभविष्योत्तरपुराणेगौरीशंकरसंवादेशिवामुष्टिव्रतोद्यापनंसंपूर्णम्   अथहस्तगौरीव्रतंलिख्यते
कुंत्यांवनादुपेतायांकरिणापुरमुत्तमं मानितायांनरेंद्रेण तनयैः पंचभिःसह   तस्याःकुशलमन्वेष्टुमाजगामसमाधवः अभिवं
द्यसुखासीनं देवदेवंजनार्दनम् उवाचकुंतीसानंदासम्यक्प्रश्नमिदंवचः कुंत्युवा० धन्यास्मिकृतकृत्यास्मिसनाथास्मिपरंतप अ
हंसंभावितायस्मात्त्वयायदुकुलेश्वर यदिमेसुप्रसन्नोसितदाचक्ष्वव्रतंप्रभो यद्विधानात्सुखंराज्यंप्राप्नुयांतनयैःसह   कृष्णउ० कुंति
तेकथयिष्यामिव्रतानामुत्तमंव्रतम् यत्कृत्वासुखसंतानधनधान्यसमन्विता विधूतदुष्कृतापुण्यासपुत्राराज्यमाप्स्यसि हस्तगौ
रीव्रतंभद्रेकुरुष्वस्वस्थमानसा यत्कृत्वाभक्तिभावेनलभ्यतेवांछितंफलं   कुंत्युवाच   यदुक्तंतेव्रतंनाथविधानंतस्यकीदृशं के
नपूर्वंकृतंवीर तन्मेब्रूहिजनार्दन   श्रीकृष्णउ०   कैलासशिखरेपूर्वंहस्तसंस्थेदिवाकरे दिवास्वापिनागौरीस्वप्नेशंभुंददर्शह अर्द्धदेहंद्व
षार्द्धेन अर्द्धचंद्रकलान्वितम् प्रबुद्धासातदागौरीशिवसान्निधिमागमत् प्रणम्यदेवदेवेशमिदमाहशुचिस्मिता देवखंडितदेहोयंस्व
प्नेदृष्टस्तवप्रभो किमिदंतन्ममाचक्ष्वतप्यतेमानसंमम   ईश्वरउवाच   देविपूर्वंनिषिद्धोस्तिहस्तऋक्षगतेरवौ स्वापस्तुविहितस्त्वद्द
ष्टंतस्यफलंत्वया शृणुदेवित्वयानेनखंडितोहंविलोकितः त्वयारब्धंव्रतंदेविममाराधनकाम्यया अपूर्णंचत्वयात्यक्तंममनापिसम
र्पितम् अपूर्णव्रतभावेनदृष्टोहंतादृशस्त्वया तत्कुरुष्वाधुनादेविहस्तगौरीव्रतंशुभे येनपूर्णव्रतानारीसंपूर्णव्रतमाप्नुयात् लभतेस
र्वसंपत्तिंपुत्रपौत्रसुखानिच   देव्युवाच   आरभ्यतेव्रतंनाथविधानेनमहेश्वर आरंभोस्यकदाकार्यःकोविधिःकस्यपूजनम्   ईश्वरउ०
यस्मिन्नहनिहस्तर्क्षेउदयंप्राप्यतेरविः तस्मिन्कुर्यात्प्रयत्नेनसौवर्णंकुंजरोत्तमं कांचनीप्रतिमागौर्याहेरंबस्यहरस्य तस्योपरिनिधात-
व्यासर्वालंकारभूषिता अन्वहंकांचनैःपुष्पैःपूज्यामुक्ताफलैःशुभैः नैवेद्यैश्चंदनैश्चैवशृणुयात्सत्यहंकथाम् दिनेचतुर्दशेप्राप्तेसु-
स्नाताशुचिमानसा शुक्लवस्त्रधराशांताभानवेर्घ्यंनिवेद्यच पूजागृहेसुसंलिप्तेस्थापयेत्प्रतिमांशुभाम् स्वर्णभाजनयुग्मंचपक्का-
न्नैःपाचितैःशुभैः सार्धत्रयोदशमितैर्नैवेद्यमुपकल्पयेत् फलमूलानिचान्यानिसमानिसमुदाहरेत् पूजयेत्स्वर्णकुसुमैःपुष्पैश्चान्यैः

स्रगंधिभिः देवींचंदनपुष्पैश्च तथापत्राक्षतैःशुभैः ध्यायेच्चहृदयेगौरींहरहेरंबसंयुतां दक्षिणांचततोदत्वानत्वादेवींविसर्जयेत् सार्द्धत्रयो
दशशतंदीपिकाःश्रद्धयान्वितः पतिवत्स्यैस्त्रियैदद्यात्तावतीःस्वयमाहरेत् व्रतंसमाचरेदेवंयावद्वर्षत्रयोदश स्वर्णभाजनयुग्मंचप्रतिव
र्षंविसर्जयेत् ततश्चतुर्दशेवर्षेतदुद्यापनमाचरेत् हेरंबशंभुगौरीश्चकांचनीगजपृष्ठके पूर्वोक्तविधिनापूज्यावासरशाणित्रयोदश चतुर्द
शदिनेप्रासेसंयुताप्रातरुत्थिता कृतोपवासनियमास्नातास्नाताशुद्धवेश्मनि स्थापयित्वाततोदेवींनक्तंकुर्यात्ततोऽर्चनम् सप्तविंशतिप
त्राणिपूर्वोक्तेनविधानतः पूर्वोक्तमेवपक्वान्नंविन्यसेच्चपृथक्पृथक् अन्यानिफलमूलानिपक्वान्नानिचकल्पयेत् धूपदीपाक्षतैःपु-
ष्पैश्चंदनैर्वरवाससा भक्त्यासमर्चयेद्देवींप्रतिमांप्रतिपादयेत् स्वंकथंपूजयामीतिमालांचिन्तेकथांकुरु अनादिव्रतमेतद्धिनात्रकार्या
विचारणा देव्युवाच सौवर्णीप्रतिमांहस्तिपात्रपुष्पाणिकल्पयेत् यस्यानशक्तिःसानारीकथंकुर्याद्व्रतंविभो ईश्वरउ० अशक्तोऽस्मि
दूजःकार्यःप्रतिमाचापिमृन्मयी पात्राणिवैणवान्येवपुष्पाणिऋतुजानिच अक्षतैस्तंडुलैश्चैवश्रद्धयाफलमाप्यते श्रीकृष्णउवाच
ततश्चक्रेव्रतंगौरीह्यलभद्वांछितंफलं पूर्णव्रताचसाजाताभाग्यसौभाग्यसंयुता त्वमप्येतद्व्रतंकुंतिकुरुश्रद्धासमन्विता अथहस्तिव्रतंकुंती
साभिमानाकरोद्व्रतं गांधारीचापितच्छ्रुत्वाचक्रेतद्व्रतमादरात् तस्याःपुत्रशतैश्चापिआनीताशुभमृत्तिका कृत्वावारणगांगौरींसपुत्रांसशिवां
तथा व्रतंत्वरितमारेभेनिशाम्यचविषादिनी तच्छ्रुत्वाशोकसंतापोकुंत्याभून्मानसोज्वरः कुंतीवाक्यमुवाचेदंगांधारीपुण्यकारिणी यस्याःपु
त्रशतंशक्तंशासनेवर्ततेसदा ममपंचसुतास्तेपिनशक्ताःक्वापिकर्मणि श्रुत्वातदर्जुनःप्राहमामातर्विमनाभव किंमृदःप्रतिमाकार्यात्वर
यासमुपाहरे साक्षादिहहरंगौरीमैरावतमिभंतथा कृत्वानत्पूजनंमातःसम्यक्फलमवाप्स्यसि इत्युक्त्वात्वरितंपार्थोगंगातीरसमाहितः त
त्रतुष्टावगौरीशंसूक्तैःस्तुतिसमीरितैः तस्यतुष्टोभवच्छंभुःसमायाच्चैवसंगतः अर्जुनउ० देवदेवगजासीनगौरीहेरंबसंयुतः गृहाणपूजामा
मागत्यममातुर्गृहेभव तथेत्युक्त्वाहरस्तस्यतद्विधोहरआगतः साक्षाद्गंगमणतागौरींकुंतीपूजामथाकरोत् पंचोपचारैःसंपूज्यनैवेद्या
दिभिरुत्तमैः तुष्टाचभक्तिभावेनसागौरीचततोऽब्रवीत् कुंतिनेपरितुष्टास्मिवरंवरयसुव्रते कुंत्युवाच देहिमेसर्वसंपत्तिंसर्वसौख्यंस

दोत्सवं प्रयच्छममपुत्राणांसदाराज्यमनामयं मयारत्नव्याहृतांभक्तिस्त्वयिजन्मनिजन्मनि व्रतमेतत्तुयःकुर्यान्नवलोकमवाप्स्यति नदारिद्र्यंनवैधव्यं
नशोकोनापिदुष्कृतं कृच्छ्रंनापदूनमिदंकदाचित्संभविष्यति तथेत्युक्त्वाततोगौरीसगजांतरधीयत एतद्व्रतंसकलदुःखविनाशदक्षंसौभाग्यराज्य
फलसाधनमाचरंत्यः यायोषितःसुखमनंतमिहोपभुज्यगौरीसमीपमुपयांतिहिदेहनाशे इतिश्रीप्र॰ हस्तगौरीव्रतोद्यापनंसं॰ अथहस्तगौ
रीपूजा देशकालौसंकीर्त्यममइहजन्मनिजन्मांतरेचाखंडसौभाग्यप्राप्तयेपुत्रपौत्रराज्यकामनयाहस्तगौरीव्रतांगत्वेनगौरीमहेश्वरप्रीत्यर्थंहेरंबशं
भुगौरीपूजनंकरिष्ये तदंगत्वेनगणपतिपूजनंस्वस्ति पुण्याहवाचनमाचार्यादिवरणंचकरिष्ये हस्तगौरींसदावंदेहृदयेभक्तवत्सलां शिवार्द्धांग
स्थितामेकदंतपुत्रेणशोभितां ध्यायामि आगच्छभोहस्तगौरिऐरावतगजोपरि शंभुनाचगणेशेनपार्षदैःस्वसखीगणैः आवाहयामि आस-
नेस्वर्णरत्नाढ्येसर्वशोभासमन्विते उपविश्यजगन्मातःप्रसादाभिमुखीभव आसनंस॰ इदंगंगाजलंसम्यक्सुवर्णकलशेस्थितं पा
द्यार्थंतेप्रयच्छामिक्षालयामिपदांबुजे पाद्यं॰ गंधपुष्पाक्षतारक्तपुष्पैस्तोयंसमन्वितं सुवर्णपात्रेशर्वांगिगृहाणार्घ्यंनमोस्तुते अर्घ्यं॰
कर्पूरैलामृगमदैःसुवासैरुपशोभितम् आचम्यतांमहादेविशिशिरंविमलंजलम् आचमनीयं॰ नदीनदसमुद्भूतंपवित्रंनिर्मलंजलं
स्नानार्थंतेप्रयच्छामिप्रसीदजगदंबिके स्नानं॰ पंचामृतेनस्नपनंकरिष्येभक्तवत्सले पयोदधिघृतंचैवमाक्षिकंशर्करायुतम् पंचामृतस्ना
नं॰ मंदाकिन्याःसमानीतंहेमांभोरुहवासितम् स्नानार्थंतेमयानीतंगृहाणजगदंबिके शुद्धोदकस्नानं॰ कौशेयंवसनंदिव्यंकंचुक्याचसमन्वि
तम् उपवस्त्रेणसंयुक्तंगृहाणपरमेश्वरि वस्त्रंयज्ञोपवीतं॰ इदंगंधंमहद्दिव्यंकुंकुमेनसमन्वितम् विलेपनंमयादत्तंगृहाणवरदाभव
गंधं॰ कज्जलंचैवसिंदूरंहरिद्राकुंकुमानिच भक्त्यार्पितंमयागौरिसौभाग्यंचगृहाणभो सौभाग्यद्रव्याणि॰ नानाविधानिमाल्या
निसुगंधीनिहरिप्रिये गृहाणसुमनानीशेप्रसादाभिमुखीभव पुष्पाणि॰ धूपंमनोहरंदिव्यंसुगंधंसुमनोहरं दशांगसहितंदेविधू
पंमेप्रतिगृह्यताम् धूपं॰ दीपंतमोहरंज्योत्स्नंज्ञानसंबोधकंसदा दीपंगृहाणमातस्त्वमपराधशतापहे दीपं॰ नानाविधानिभक्ष्याणि
व्यंजनानिहरप्रिये गृहाणदेविनैवेद्यंसुखदंसर्वदेहिनां नैवेद्यं॰ गंगोदकंसमानीतंमयाचमनहेतवे तेनाचम्यमहादेविवरदाभवचंडिके आ

आचमनं॰ करोद्वर्तनं॰ रंभाफलंदाडिमंचमातुलिंगंचरखर्जुरम् नारिकेरंचजंबीरंफलान्येतानिगृह्यताम् फलानि॰ पूगीफलमितितांबूलं॰ हिरण्य
गर्भेतिदक्षिणाम् नीराजयामिदेवेशि कर्पूराद्यैश्चदीपकैः गृहाणमंगलान्दीपान्वरदाभवशोभने नीराजनं॰ यानिकानिचपापानि
इतिप्रदक्षिणाः नानाविधानिदिव्यानिबिल्वपत्रयुतानिच दूर्वांकुरैःसंयुतानिह्यंजलिस्थानिगृह्यताम् मंत्रपुष्पम् अपराधसहस्रा॰
नमस्कारान्॰ यस्यस्मृत्येतिप्रार्थना॰ उपायनमितिवायनम् इतिभविष्येहस्तगौरीपूजाविधिःसमाप्तः अथकूष्मांडीव्रतंलिख्यते यु
धिष्ठिरउवाच कृष्णकृष्णमहाभागब्रह्मरुद्रादिवंदित व्रतधर्मास्त्वयाप्रोक्ताःश्रुतास्तेसकलामया इदानींश्रोतुमिच्छामिव्रतमेकं-
कृपानिधे यत्कृत्वासर्वपापानिविलयंयांतितत्क्षणात् संततिर्वर्द्धतेनित्यंसौभाग्यंचधनादिकम् अल्पायासंमहापुण्यंसर्वकामसमृ
द्धिदम् कथयस्वेंदिराकांतकृपायदिममोपरि श्रीकृष्णउवाच साधुपृष्टंमहाराजत्वयाकुरुकुलोद्भव वच्मिसर्वंविधानेनतच्छृणुष्व
जगद्धितम् व्रतस्थानांमहापुण्यंकूष्मांड्याख्यानमुत्तमम् तच्छृणुष्वमहाभागस्त्रीणांचापिसुखोदयम् सर्वसंपत्करंराजन्पुत्रपौत्रप्र
वर्द्धनम् नारदेनसमाख्यातंचंद्रसेनायभूपते आर्यावर्तेपुराकश्चिच्चंद्रसेनोमहीपतिः नारदंपरिपप्रच्छपुत्रपौत्रप्रदंव्रतम् चं
द्रसेनउवाच देवर्षेसर्वधर्मज्ञसर्वलोकनमस्कृत त्वत्समोनाखिललोकेषुहितवक्तापरोनृणाम् अधमन्दाग्ययोगेनसंजातंदर्शि
नंतव पृच्छाम्येकमिदानींत्वामात्मश्रेयस्करंपरम् दानंधर्मंवनंवापिवदसत्पुत्रदायकम् इदंराज्यंधनंवापिविनापुत्रेणमेप्रभो नि
ष्फलंमुनिशार्दूलकृपयावदमेप्रभो कृष्णउवाच इतितद्वचनंश्रुत्वानारदोमुनिसत्तमः चंद्रसेनमुवाचेदंव्रतंगोप्यंसुरेष्वपि नारद
उवाच चंद्रसेनमहाभागस्वरुच्याप्रिययासह व्रतंकुरुमयाप्रोक्तंकूष्मांड्याःसर्वसिद्धिदम् यत्कृत्वासर्वराजेंद्रभविष्यंतिमहाबलाः सु
पुत्राःपरधर्मज्ञाःवीर्यवंतोबहुश्रुताः आयुष्मंतोतिकुशलाराज्यपालनतत्पराः श्रीकृष्णउवाच तच्छ्रुत्वानारदेनोक्तंचंद्रसेनो
तिधार्मिकः व्रतंचकारकूष्मांड्याःपुत्राणांप्राप्तयेकिल अष्टौजाताःसुतास्तस्यदिक्पालसमतेजसः सुरूपःसुमुखःशांतःसुप्रसादो
थसोमकः चंद्रकेतुःसदानंदोसुतंतुश्चयथाक्रमात् पुत्रैस्तैःसहधर्मात्मासुरुच्याभार्ययासह संतोषपरमंप्रापदेवब्राह्मण-

पूजकः कूष्मांडीव्रतमाहात्म्याद्यत्पुरामनसीप्सितम् तत्सर्वंप्राप्यराजेंद्रः कृतकृत्योबभूवह श्रीकृष्णउवाच त्वम
पीदंव्रतंराजन्समाचरयथाविधि द्रौपद्यासहधर्मज्ञसर्वान्कामानवाप्स्यसि युधिष्ठिरउवाच कर्तव्यंतुकदाकृष्णविधिं
तस्यवदस्वमे कस्मिन्मासेतिथौकस्यांरोपणीयाथवाभवेत् श्रीकृष्णउवाच वैशाखस्यासितेपक्षेचतुर्दश्यांनराधिप शु
चौदेशेस्थलंशोध्यंकूष्मांडींरोपयेदथ षण्मासंपूजयेन्नित्यंषण्मंत्रैर्नामभिः सह ब्रह्मणानिर्मितासित्वंसावित्र्याप्रतिपालिता
ईप्सितंममदेवित्वंदेहिसौभाग्यमेवनः सौभाग्यायै० आषाढेपूजयिष्येत्वांमातः सर्वसुखायाहि आशांकुरुष्वसफलांसर्वकामप्रदे
नमः सर्वकामदायै० श्रावणेपूजयिष्यामि भक्त्याविघ्नविनाशिनि कूष्मांडीबहुबीजाढ्यापुत्रदेत्वांनमोस्तुते पुत्रदायै० भद्रेभाद्रपदेशु
भ्रेभद्रपीठोपरिस्थिते पूजयिष्यामिमातस्त्वांधनदायैनमोनमः धनदायै० आश्विनेपूजयिष्यामिबहुबीजप्रपूरिते कूष्मांडीनामसं
युक्तेफलदेत्वांनमोनमः कूष्मांड्यै० कार्तिकेपूजयिष्यामिसफलांसुकलांशुभाम् सफलायै० सुखदेशुभदेमातर्मोक्षदेत्वांनमोनमः ष
ण्मासंपूजयेदेवंकूष्मांडींधर्मनंदन मोक्षदायै० ततः स्वर्णमयींकृत्वाकूष्मांडींसफलांशुभाम् परितः पूजयेद्देवान्लोकपालांश्चमंडले
मंडलेपूजयेत्तत्र सर्वतोभद्रदेवताः कूष्मांडींपूजयेत्कुंभेवस्त्रालंकारभूषिताम् सौभाग्यद्रव्यसंयुक्तांपुष्पमालाभिरावृताम् तन्मू
लेसंप्रतिष्ठाप्यचतुर्दश्यांप्रपूजयेत् मंडपंकारयेत्तत्रतोरणैरुपशोभितम् चतुर्द्वारसमायुक्तंपताकाभिरलंकृतम् तन्मूलेवेदिकांचैवच
तुरस्रांतुकारयेत् एवंकृत्वामहाराजआचार्यंवरयेत्ततः सपत्नीकंसुशीलंचवेदवेदांगपारगम् वरणात्पूर्वमेवेहकारयेत्स्वस्तिवाचनं
सर्वत्रमंडपंकुर्याद्रंगवल्यामनोहरा तदग्रेसर्वतोभद्रंनानारंगैस्तुकारयेत् अव्रणंकलशंस्थाप्यवस्त्रयुग्मेनवेष्टयेत् महाफलेनसं
युक्तंपंचरत्नसमन्वितम् जलप्रपूरितंकृत्वापुष्पपल्लवसंयुतम् ब्रह्माणंचैवसावित्रींपूजयेद्विधिवद्व्रती पंचामृतेनसंस्नाप्यततः
कुर्याच्चपूजनम् षोडशैरुपचारैश्चपूजयेत्परमेश्वरीम् पूजयेत्पुरुषसूक्तेनमूलमंत्रेणवाव्रती कूष्मांड्यैकामदायिन्यैब्रह्माण्यैव्रतदे
तवे नमोस्तुशिवरूपिण्यैसकलंकुरुमेव्रतम् एवंकृत्वामहाराजपूजनंसर्वकामदम् रात्रौजागरणंकृत्वागीतवाद्यादिमंगलैः क

थांकृत्वाविधानेनयथोक्तांराजसत्तमः ततः प्रभातेपूर्णायांहोमंकुर्याद्यथाविधि प्रणोदेवीतिमंत्रेणजुहुयात्तिलसर्पिषा अष्टोत्तरशतं-
होमंकुर्यात्तस्ययथाविधि होमशेषंसमाप्याथसपत्नीकंतुतोषयेत् वस्त्रादिभिरलंकारैस्तोषयेच्चसपत्निकम् षड्विमाश्चाथसंपूज्य
दक्षिणावस्त्रभूषणैः ततोदानंचकुर्वीतकूष्मांड्याःपीठसंयुतम् दानमंत्रः कूष्मांडींबहुबीजाढ्यांवस्त्रालंकारभूषिताम् हेमयुक्तांमयादत्तां
गृहाणद्विजसत्तम कूष्मांडीव्रतसिद्ध्यर्थंकुर्याद्गोदानमुत्तमं व्रतसंपूर्तिसिद्ध्यर्थमाचार्यायनिवेदयेत् ततश्चशक्त्याविप्रेभ्योदानंभोजनमुत्तमम्
संयुतः दक्षिणांचततोदद्याद्व्रतसंपूर्णहेतवे एवंकृतेमहाराजव्रतेसर्वसुखप्रदे ईप्सितांल्लभतेकामान्नात्रकार्याविचारणा इतिश्रीभ
विष्यपुराणेकूष्मांडीव्रतोद्यापनंसंपूर्णम् अथकर्कटीव्रतंलिख्यते ऋषयऊचुः कथितानित्वयासाधोश्रेयांसिसुबहून्यपि आख्याता
निविचित्राणिचतुर्वर्गफलान्यपि पुण्यानिचव्रतान्यादौतत्फलान्यपिभागशः स्वर्गसाधनभूतानिनिःश्रेयसकराण्यपि तत्रयद्भवता
मोक्तंयोषिद्वैधव्यनाशनं पुत्रपौत्रादिजनकंभर्तुरारोग्यदायकम् कामभोगप्रदंचान्यद्व्रतमस्तीतिचोक्तवान् नैद्भवान्व्रतकंपुण्यंव
क्तुमर्हस्यशेषतः येनचीर्णेनसर्वज्ञनवैधव्यमवाप्नुयात् ईप्सितांल्लभतेकामान्भर्तुरायुश्चशाश्वतं एवंनिशम्यमुनिवर्यवचोभिशेषप्रश्न
प्रहृष्टवदनःसूतस्सूतसूनुः आनंदयन्मुनिसदःसुवचोमृतौदैः प्रोवाचशौनकमिदंबहुदीक्षिताग्र्यम् सूतउवाच साधुप्रश्नोमहा
भागाभवद्भिर्यदुदाहृतः तद्वक्ष्येचयथाज्ञानंश्रुतंवोजनकात्ध्रुवम् योषिन्मूलोहिसंसारःपुंसःश्रेयोविधानकः योषितोपिमहाभाग
स्तारयंतिनिजंपतिम् आपद्भ्योनरकेभ्यश्चपातिव्रत्यपरायणाः सीमंतिन्योधारयंतिभुवनत्रयमंडपम् पातिव्रत्येनधर्मेणप्रदमेन
नियमेनच भानुर्बिभेतिसततंकरैःस्प्रष्टुंपतिव्रताम् साचेद्भर्तृयुतासाध्वीतारयेद्भुवनत्रयम् दैवाद्यदिविमुक्तास्यादशक्ताचेत्तुसदैव
हि अमंगलेभ्यःसर्वेभ्योप्यमावैधव्यमंगना जलहीनायथागंगाप्राणहीनायथातनुः दर्भहीनायथासंध्याधर्महीनायथाक्रियाःस
त्यहीनायथावाणीनृपहीनायथापुरी भर्तृहीनातथानारीभातिलोकेनकुत्रचित् तस्माद्वैधव्यशांत्यर्थंयत्नःकार्योहियोषिताम् नप्रयत्ने
र्बहुविधैर्वैधव्यंयांतियोषितः विनापुण्यैर्व्रतैर्वापिभूरिदानैरहर्निशम् तस्मादेकंव्रतंविप्रायोषिद्वैधव्यनाशनं कथयामीष्टफलदंसंवादं

शिवयोः शृणु। पुरावंतीपुरेह्यासीद्धरिदीक्षितसंज्ञकः वेदवेदांगसंपन्नः कौशिकोद्विजसत्तमः यज्वाविदिततत्वार्थोज्ञानदीपोभवार्णवे त
स्यभार्यागुणवतीसतीसर्वगुणान्विता पतिशुश्रूषणरतातत्पदांबुनिषेविनी भर्त्तुः सकाशात्साधासाकन्यारत्नानिसप्तवै वत्सरेवत्सरेसा
वैवरिष्ठासर्वयोषिताम् ताः कन्यारूपसंपन्नावद्वृधुः पितृवेश्मनि इलासृताशुचिः शांतागुणज्ञामलिनीध्रुवा रूपलावण्यसंपन्नाः कन्या
स्ताश्चारुहासिनीः दृष्ट्वाननंदतुस्तौहिदंपतीपरयामुदा ददौपिताप्रमुनींद्रायइलांसत्यायधीमते विवाहमकरोद्यत्नात्स्नीत्यापरमथा
सुतः जातेपरिणयेसोथसत्यः पितृगृहेवसन् कालधर्मसुपेयायशीतज्वरप्रपीडितः दिनानिपंचषट्चैवंभुक्त्वाविषयजंशुकसं मृते
थजामातरिसोपिदीक्षितोवत्सेतिचुक्रोशसुदुःखपीडितः हाहेतिकिंनेभगवन्विचेष्टितंदिनेशदुःखंमयिपातितंत्वया विलपन्निति
विप्राग्र्योजामातुःसमकारयत् और्ध्वदेहिकसंस्कारं ददौचापितिलांजलिम् इलावैधव्यसंपन्नापन्नगीवश्वसन्मुहुः समूर्च्छाचक्ष
णंबालाबालवैधव्यपीडिता षडेवंचापिताः सर्वावैधव्यंप्रतिपेदिरे मातुःशोकंकराश्चैववैधव्येनप्रपीडिताः पाणिपीडनवेलायांचरमायां
द्विजोत्तमः चिंतादुःखार्णवेमग्नः कर्तव्यंनाभ्यपद्यत यस्ययस्यायनिलयेआगमद्धरिदीक्षितः ध्रुवांदातुंनशक्तोभूत्सत्यंसत्यंप्रयातुमा
न् वयोवृद्धिंध्रुवायाश्चवीक्ष्यचिंतामवापसः इत्थंमनसिसंचिंत्यत्यगमत्कामिनंद्विजः ध्रुवमादायसुश्रोणींगतोरण्यंमहत्सुवम् रुतानिप
क्षिणांयस्मिन्नसंतिनचमानवाः तद्भूनंनार्ककिरणायस्मिन्शक्ताः प्रकाशितुम् अनेकमृगसंकीर्णंशार्दूलमृगसेवितम् अन्यैश्चविविधैःस
त्वैः सेव्यमानमहर्निशम् तत्रोपलंमहानीलंमपश्यच्चद्विजाग्रणीः चिंतयित्वामनस्येवमश्मनेप्रददौसुताम् वेदोक्तेनैवविधिनापाणिग्राहमकार
यत् त्वंधर्मचारिणीचास्यसुतेभवभयंत्यज भर्तृबुद्ध्याभजस्वैनासुपलंफलमाप्स्यसि इतिदत्वासुतांतस्मैसद्विजोगात्स्वमंदिरम् कं
दमूलफलानांचमिषेणैवजगामसः गतेपितरिसाबालादुःखशोकाकुलाभवत् कांतारेकुररीयद्वच्चुक्रोशप्रभृशदुःखिता चिंतयित्वा
त्वामनस्येवंभर्तृबुद्ध्यामहोपले दधारहृदभावज्ञानन्वसोमेपतिर्ध्रुवम् ननुदेवाः प्रयच्छंतिशिलाप्रतिमसंस्थिताः वांछितार्थान्
मनुष्याणांभावोहिफलदायकः एतस्मिन्नंतरेकालेजगादोच्चैःपुरंदरः पपातचाशनिस्तस्मिन्महत्युपलमस्तके सभिन्नोवज्रया

नेनचूर्णीभूतोततः क्षणात् हस्वाश्रुवापितत्सर्वंपुनर्निंदांचकारसा एतस्मिन्नेवकालेतुपार्वत्यात्रिपुरांतकः युक्तोयदृच्छयागच्छन्व्योम
यानेनमंदिरम् पार्वत्युवाच भगवन्कथमद्यस्त्रीरुदतीयंकृपानिधे दीनादीननरानित्यंतत्सर्वमेवदप्रभो इतिदेव्यावचःश्रुत्वाप्रोवाचगि-
रिशःशिवाम् महादेवउ० देविकौशिकदायादोहरिदीक्षितसंज्ञकः तस्येयमात्मजासाध्वीवैधव्यमगमत्क्षवम् प्राप्तोमरणधर्मंयःपाणा-
णोपतिंजानीहि एवमन्याःसोदरास्याःषडतीवमनोहराः वैधव्यमापुःसर्वास्ताःपाणिग्रहणमात्रतः पित्रादत्तामुनींद्राणांपुत्रेभ्योविपदं
गताः आसांललाटगारेखादैवाद्वैधव्यदायिनी तांनिराकर्त्तुकामोयंमस्त्ररायसमर्पयत् सोपिपंचत्वमापन्नोदैवीरेखाबलीयसी सर्वज्ञ
स्यवचःश्रुत्वाकृपाक्रांताब्रवीदुमा पार्वत्युवाच कर्मणाकेनभगवन्वैधव्यंप्रापिताःसुताः मुनेरनुत्तमंब्रूहितत्पापंपूर्वजन्मजं कथंवाशु-
भजन्मासांभवेद्भवदनुग्रहात् गिरिजावचनंश्रुत्वाप्राहशंभुर्यथोदितम् पूर्वमेवंमुनेःपुत्र्यःसमासनृगुणशालिने पित्रादत्तामुनींद्रायसु
नयेविधिपूर्वकम् मुनींद्रंप्राप्यभर्तारंसमासन्दुष्टचेतसः सापत्न्यभावाद्दुष्टास्तानित्यंकलहतत्पराः परस्परेर्ष्ययानित्यंभर्त्तुःसेवांनच-
क्रिरे स्वयंमिष्टान्नभोजिन्योभर्तृद्वेषणतत्पराः तेननापेनसंतप्तोगतोवैस्वर्गमुत्तमं सप्तापिचसपत्न्यस्ताःप्रत्ययातायमालयम् या
मिनींयातनांभुक्त्वादुःखिताःपुनरागताः इहजन्मनिकस्यापिकौशिकस्यसुताभवन् रूपलावण्यसंपन्नावैधव्यंप्रतिपेदिरे प्रलंभि
तःपतिःपूर्वंतेनदोषेणवंचिताः पतयोवंचयांचक्रुःकृत्वावैपाणिपीडनम् इतिशंभोर्वचःश्रुत्वाहिमाद्रितनयाब्रवीत् पार्वत्युवाच भवंत्ये
वंविधाःसर्वाभर्तृद्वेषणतत्पराः अस्यदुर्गोचरीन्वैयंनोपेक्ष्याकरुणानिधे एवमाकर्ण्यपार्वत्यावचनंत्रिपुरांतकः वैधव्यभंज
नंलोकेकथयामासतद्व्रतम् येनचीर्णेनपौरंध्र्यो वैधव्यंप्राप्नुवंतिहि उमेशृणुष्वव्रतकंयोषिद्वैधव्यनाशनम् तारणंसर्वपापा
नांयोषितांचविशेषतः कर्कटीद्युमणौकल्केवल्लुशीघ्रंदधत्फलम् कर्कटीसफलाह्येषावांछितार्थप्रदायिनी तद्व्रतंतेविधास्या
मिशृणुष्वश्रोणिसादरम् कर्कटीव्रतपुण्येनसर्वान्कामानवाप्नुयात् योषिद्वापुरुषोवापिनात्रकार्याविचारणा त्वमप्येतद्व्रतंसु
भ्रुकुरुष्वममसर्वगा कर्कटस्थेरवौनारीश्रावणेमासिभामिनि चंद्रवारेविशेषेणस्त्रीभिःकार्यमिदंशुभं प्रातःशुक्लतिलैः-

स्नात्वादंतशुद्धिंविधायच त्यक्त्वाचशतगंडूषान्मुखदुर्गंधिनाशिने पंचगव्यंगृहीत्वाथव्रतसंकल्पमाचरेत् आचार्यंवरयेत्प्राज्ञं
शांतंदांतंकुटुंबिनं सर्वलक्षणसंपूर्णंवस्त्रैराभरणैस्तथा मंडपंकारयेत्पश्चाच्चतुर्द्वारंसतोरणम् तन्मध्येभद्रपीठस्थांपूजयेदुमया
सह सौवर्णींप्रतिमांकृत्वा वृषभंरजतस्यच कर्कटींपूजयेद्यत्नात्सफलांकांचनींशुभाम् वस्त्रयुग्मेनसंवेष्ट्यकुंभोपरिनिधा
यच कल्पवल्लिमहाभागेसदासौभाग्यदायिनि प्रार्थयिष्येव्रतादौत्वांभर्तृश्रेयोभिवृद्धये इतिसंपूज्यतातत्रकर्कटींचशिवंतथा उप
चारैः षोडशभिर्भक्तिभावसमन्वितः नैवेद्यंसफलंदत्वाप्रांत्वासंतोष्यशोभने एकादशफलानांवैवाणकंचप्रदापयेत् वेणुपात्रेणस
हितंसतांबूलंसदक्षिणम् कर्कटीनामयावल्लीविधात्रानिर्मितापुरा भवंतितत्प्रदानेनसफलाश्चमनोरथाः गीतैर्वाद्यैश्चनृत्यैश्चपुरा
णपठणादिभिः रात्रौजागरणंकुर्यात्सपत्नीकोद्विजैः सह प्रभातेविमलेस्नात्वाप्रातःसंध्यांविधायच स्वशाखोक्तविधानेनहोतव्यंक
र्मसिद्धये प्रधानंपायसंसर्पिःसतिलंजुहुयाद्बुती अष्टोत्तरसहस्रंतुशतमष्टोत्तरंतुवा कद्रुद्रायेतिमंत्रेणजुहुयाद्रुद्रतुष्टये गौरीर्मि
मायेतितथापार्वत्याःप्रीतयेहुनेत् होमकर्मसमाप्याथहुनेत्पूर्णाहुतिंतथा आचार्यंपूजयेत्पश्चाद्वस्त्रालंकारभूषणैःगौर्देयातुसवत्साच
वस्त्रालंकारभूषिता आचार्यायप्रदातव्याव्रतसंपूर्णहेतवे दशदानानिकुर्वीतशक्त्यावित्तानुसारतः सवस्त्रप्रतिमं कुंभमाचार्यायनिवेद
येत् यथाशक्त्याप्रकुर्वीतवित्तशाठ्यविवर्जितः दानमंत्रः गृहाणेमांकर्कटींत्वंद्विजस्वर्णेननिर्मितां संपूर्णमेव्रतंचास्तुदानेनानेनशंकर इ
मंमंत्रंसमुच्चार्यदद्यात्कर्कटिकांद्विजे ब्राह्मणान्भोजयेत्पश्चाद्रुद्रसंख्यामितांस्तथा आशिषोप्रतिगृण्हीयाद्विजानांसुफलाप्तये व्रतमेत
द्वरंकांतेभोगस्वर्गापवर्गदं ध्रुवांकथयसाध्वित्वंव्रतंवैधव्यभंजनं इतितस्यवचःश्रुत्वाविमानादवरुह्यच ध्रुवांसाकथयामासकृपांकृत्वाव्र
तंशुभं स्वर्गंगत्वामहेशानीअनु  गद्विजात्मजां ध्रुवापिचव्रतंचक्रेकांतारेऋषिमंडले तदैवदिव्यपुरुषःपाषाणादाशुसंस्थवाः सोपिद्विजःपू
र्वपतिस्तस्याएवमृगीदृशः वरयामासतांबालांतदद्भुतमिवाभवत् शापेनकस्यचित्सोपिपाषाणत्वमुपागतः तौदंपतीबहून्वर्षान्भुक्त्वाभो
गान्यथेप्सितान् पुत्रपौत्रसमृद्धिंचप्राप्यांतेपिपरंपदं एवंरहस्यंपरमंकथितंवोमुनींद्रकाः कथाश्रवणमात्रेणनारीसौभाग्यमाप्नुयात् कर्तव्यंतुप्रयत्ने

नचतुर्वर्णाभिरुत्तमम् ९४ इतिश्रीस्कंदपुराणेकर्कटीव्रतोद्यापनंसंपूर्णम् अथकर्कटीपूजनम् तिथ्यादिसंकीर्त्यममअखंडसौ
भाग्यप्राप्त्यर्थंपुत्रपौत्रादिसंतत्यैकर्कटीव्रतांगत्वेन कर्कटीपूजनंकरिष्ये पंचवक्त्रंत्रिनयनंसुमयासहितंशिवम् शुद्धस्फटिकसंकाशंचिंत
येद्भक्तवत्सलम् ध्यानं आवाहयामिदेवत्वामस्मिन्स्थानेस्थिरोभव कर्कटीव्रतहेतोर्हिपार्वतीसहितप्रभो आवाहनम् आस
नंमणिसंयुक्तंचतुरस्रंसमंततः भक्त्यानिवेदितंतुभ्यंगृहाणस्मरसत्तम आसनम् देवदेवनमस्तेस्तुभक्तानामभयप्रद पाद्यं
गृहाणदेवेशपार्वतीसहितप्रभो पाद्यम् गौरीवल्लभदेवेशत्रिपुरांतकशंकर भालनेत्रनमस्तेस्तुगृहाणार्घ्यंममप्रभो अर्घ्यम् कां
चनेकलशेसंस्थंस्वगंधंचस्वशीतलम् आचम्यतांमहादेवपार्वत्यासहितप्रभो आचमनं पयोदधिघृतंचैवमधुशर्करयायुतं पंचामृ
तेनस्नपनंकरिष्येभक्तवत्सल पंचामृतस्नानं. गंगागोदावरीरेवासमुद्भूतंस्वशीतलम् स्नानार्थंतेमयानीतंगृहाणजगदीश्वर स्नानं
आचमनं चंद्ररश्मिसमंश्लक्ष्णंकार्पासेनविनिर्मितम् देहसंरक्षणार्थायवस्त्रंशंकरगृह्यताम् वस्त्रं॰ त्रिवृत्त्यात्रिवृतंशस्त्रंविधात्रानि
र्मितंपुरा ब्रह्मण्यरक्षणंसूत्रंउपवीतंगृहाणप्रभो उपवीतम्॰ श्रीखंडंचंदनंदि॰ गंधं॰ अक्षताश्चसुरश्रेष्ठ॰ अक्षता॰ नानाविधानिपु
ष्पाणिबिल्वपत्रयुतानिच पूजार्थंतेप्रयच्छामिगृहाणपरमेश्वर पुष्पाणि॰ वनस्पतिरसोद्भूतो॰ धूपं॰ साज्यंचवर्तिदीपं॰ अन्नंचतुर्वि
धंस्वादुरसैःषड्भिःसमन्वितम् गृहाणपार्वतीकांत कर्कटीसहितंप्रभो नैवेद्यं॰ उत्तरापोशनं॰ करोद्वर्तनं इदंफलंमहादेव कर्कटी-
संभवंशुभम् गृहाणवरदोभूत्वापूजांमेसफलांकुरु फलंपूगीफलं॰ तांबूलम् हिरण्यगर्भौतिदक्षिणाम् चक्षुर्दंसर्वलोकानांतिमि
रस्यनिवारणम् सर्वसौख्यकरंदेविआर्तिक्यंप्रतिगृह्यताम् नीराजनं नमोस्तुकर्कटीदेविसर्वसौभाग्यदायिनि मंत्रपुष्पंगृहाणेद
मुमयासहितप्रभो मंत्रपुष्पं॰ यानिकानिचपापानीतिप्रदक्षिणा. नमस्तेदेवदेवेशनमस्तेस्मरवल्लभ वनसंपूर्णकामश्चनमस्कारंकरो
म्यहम् नमस्कारः अपराधसहस्राणि॰प्रार्थना कर्कटीव्रतांगविहितब्राह्मणायवायनप्रदानमहंकरिष्ये॰ ब्राह्मणंसंपूज्य एकादश
फलान्यहाकर्कटीसंभवानिप्रभो तांबूलदक्षिणाभ्यांचगृहाणद्विजसत्तम वायनं॰ विसर्जयामिशंभोत्वांकर्कट्याउमयासह पूजां

प्रतिगृह्याथगम्यतांनिजमंदिरम् विसर्जनम् आचार्यायचपीठंतन्निवेद्यसकलंततः ब्राह्मणाभोजनीयाश्चरुद्रसंख्यामिताःशुभाः इति
कर्कटीपूजासमाप्ता अथविष्णुपंचकव्रतंलिख्यते सूतउवाच द्वापरांतेमहाराजःकुंतीपुत्रोयुधिष्ठिरः भ्रातृभिःसहधर्मात्माद्रोणभी
ष्मंतथाकुरून् पुत्रान्पौत्रांस्तथाभ्रातृनन्यानपिमहीपतीन् राज्यस्यहेतवेतत्रकुलक्षयमथाकरोत् हत्वावंश्यान्कुरून्राजापश्चा
त्तापेनतापितः राजाकुरुमहीपालस्तत्पापक्षयकारणात् चतुरंगबलोपेतोभ्रातृभिःपरिवारितः यत्रसस्थापितःकृष्णोद्वारवत्यां
जगत्प्रभुःसजगाम तदातत्रप्रणम्यजगदीश्वरम् कृष्णंसंस्तूयवचसातेनापिप्रतिपूजितः पप्रच्छकिलवंश्यानांवधदोषप्रशांतये
व्रतमेकंसमाचक्ष्वयेनायंप्रतिशाम्यति कुलक्षयकृतंदोषंक्षयंकर्तुंत्वमर्हसि इतिविज्ञापनंकृत्वापश्चात्तापोभवेत्पुनः युधिष्ठिरउ०
यत्कृत्वामुच्यतेजंतुर्महापातकपंचकात् तद्व्रतंब्रूहिगोविंदयदितुष्टोसिकेशव श्रीकृष्णउवाच साधुसाधुमहाभागशृणुष्वैका
ग्रमानसः येनसंचीर्यमाणेनमुच्यतेपंचपातकात् तथाव्रतमिदंवक्ष्येममप्राणस्त्वमेवहि निमित्तमात्रंभवताकुलक्षयकृतोभुवि
प्रोष्ठपद्यांसितेपक्षेद्वादश्यांश्रवणेथवा तदारभ्यव्रतंकार्यंमार्गशीर्षेतथानृप एकादश्यामुपवसेत्प्रतिपक्षेतु पर्वणि श्रवणेचतथो
पोष्यपूजयेद्गरुडध्वजं एवंवर्षंभवेद्यावत्तावत्संपूज्यकेशवम् वत्सरांतेप्रकुर्वीतपंचमूर्तिजनार्दनम् सश्रीकंचसकामंचसचक्रंसग
दंविभुम् होमंतत्रप्रकुर्वीतएभिर्नामपदैःशुभैः श्रावणेदेवतानांचअपूपैर्जुहुयाद्धुतम् पुरुषोत्तमःशार्ङ्गधन्वातथैवगरुडध्वजः
गोवर्द्धनोच्युतस्तत्रपुंडरीकाक्षएवच तथानित्योवेदगर्भोयज्ञःपुरुषएवच सुब्रह्मण्योजयःशौरिरेताःश्रवणदेवताः शुक्लद्वादशि
देवेभ्योजुहुयाद्गुडपायसम् नामभिःकेशवाद्यैश्चद्वादशैर्जुहुयात्सुधीः एताःसंपूजयेच्छुक्लद्वादश्यामधिदेवताः पौर्णमास्यां
श्चदेवेभ्योजुहुयाद्धुतपायसं विधुःशशीशशांकश्चचंद्रःसोमस्तथोडुपः मनोहरोमृगांकश्चहिमांशुःपावनस्तथा निशाकरश्चंद्रमा
श्चपूर्णिमादेवताःक्रमात् कृष्णद्वादशिदेवेभ्योहुनेत्पंचामृतौदनम् संकर्षणादिनामानःकृष्णद्वादशिदेवताःमुद्गौदनतिलाज्यंच
अमावास्यांतुदेवताः महीधरोजगन्नाथोदेवेंद्रोदेवकीसुतः चतुर्भुजोगदापाणिःसुरमौढःसुलोचनः चार्वंगश्चक्रपाणिश्चसुरमित्रो

स्रुरांतकः दर्शस्यपक्षमासेषु देवताःषष्टिकीर्तिताः स्वाहाकारान्विनैरेतैःश्चतुर्थ्यंतैश्चहोमयेत् एवंविधिविधानंचहोतव्यंचपृथक्पृथक्
होमांतेपूजयेद्गुरुंवैराचार्यंभूषणैःशुभैः भूमिंसस्यवतींश्रेष्ठांसवत्सांगांपयस्विनीम् गोमेदंपुष्करागंचवैडूर्यंचेंद्रनीलकं माणिक्यं
चप्रदातव्यंपंचपातकनाशन पंचरत्नानिदेयानिपंचपातकनाशने पंचमूर्तिःस्रुवर्णेनजातरूपंजनार्दनम् सवस्त्रंसकलंचैवआ
चार्यायनिवेदयेत् इरावतीतिमंत्रेणगांदद्यात्सपयस्विनीम् घृतवतीतिसूक्तेनभूदानंकारयेत्ततः तद्विष्णोरितिमंत्रेणजातमूर्तिंप्रदा
पयेत् हिरण्यगर्भमंत्रेणदातव्यंचहिरण्यकम् पंचमहापातकानिक्षयंयांतिनसंशयः ब्रह्माणंचगणेशंचवस्त्रालंकारभूषणैःवस्त्रां
नेपूजयेद्दत्त्वागोभूरत्नंहिरण्मयम् दत्वादक्षिणांकृत्वायथानुज्ञांविसर्जयेत् ब्राह्मणान्भोजयेद्राजन्वैष्णवान्सप्तसंख्यकान्
ब्रह्महत्यासुरापानंस्रुवर्णस्तेयमेवच गुरुस्त्रीगमनंचैवतत्संसर्गीचपंचमं गोघ्नश्चैवकृतघ्नश्चभ्रूणहात्मघ्नलीप्तिः अन्येभ्योविविधे
भ्यश्चपापेभ्योमुच्यतेनरः वसतेचैववैकुंठेयावद्विष्णुःसनातनः इहलोकेस्रुखासीनःपुत्रपौत्रादिसंपदः अविच्छिन्नप्रियंभुक्त्वाअंते
यातिपरांगतिम् तस्मात्त्वंकुरुराजेंद्रव्रतंपातकनाशनम् अयोध्यानगरेरम्येत्रेतायांचनराधिपः राजादशरथोनामशशासपृथिवीमि
माम् सराजामृगयासक्तोजगामगहनंवनं शरयूनामनद्याःसतीरेगत्वामहावने धनुर्बाणयुतोरात्रौस्थितोसौमृगसाधने अर्धरात्रौ
व्यतीतायांतस्यास्तीरेमुनीश्वरः पितृभक्तिसदाचारःपितरौतेननीयते तस्यतौपितरौतत्रतृषयापीडितौतदा जलमानीयतांपुत्र
ताभ्यांसंप्रेषितःस्रुतः सकुंभोमुनिपुत्रेणजलपूर्णमकारितः निशम्यराजातच्छब्दंमुमोचशरमुत्तमम् मृगमन्वेषयन्राजामृगवु
द्ध्याजिघांसितः विलोकयत्तत्रराजाब्राह्मणंशंसितव्रतम् आत्मानंब्रह्महंतारंज्ञात्वाराजास्रुदुःखितः तत्पापपरिहारार्थंनैमिषार
ण्यमागतः यत्रज्ञात्वाज्ञानवृद्धान्प्रणिपत्ययथाक्रमम् शृण्वंतुमुनयःसर्वेब्रह्महत्यामयाकृता कथंपापाद्विमुच्येहंवक्तव्यंतुमहर्षयः
ऋषयऊचुः क्षणंध्यात्वामहाभागाराजानमिदमब्रुवन् राजन्रघुकुलश्रेष्ठकुरुव्रतमुत्तमम् विष्णुपंचकसंज्ञंचपंचपातकनाशनं
मासेभाद्रपदेशुक्लेद्वादश्यांश्रवणायदि तदारभ्यव्रतंकार्यंमार्गशीर्षेथवानृप एकादशीद्वयंचैवश्रवणंपौर्णमासिका दर्शंचोपोषयेद्ब-

त्त्यांवर्षमेकंसमाचरेत् एकादशीद्वयेमासेश्रवणांविष्णुदैवतम् पौर्णमास्यांशशीचैवदर्शेविष्णुःसनातनः द्वादशैवतुनामानिप्रत्येकंपू
जयेद्व्रती माघेमासेपंचकंचपूजयेच्चजगत्प्रभुम् नामभिर्द्वादशेमासेपंचधादशसंख्यया उद्यापनंततःकुर्याद्दोमध्येप्रयत्नतःअंते
वापिप्रकर्त्तव्यंव्रतसादुण्यहेतवे घृतप्लुतंचश्रवणेशक्रेतुगुडपायसम् पायसाज्यंपौर्णमास्यांकृष्णेपंचामृतोदनम् तिलैश्चदर्शेसुद्रा
व्यंहोतव्यंघृतसर्पिषा अनेनविधिनाराजन्कुरुष्वव्रतमुत्तमम् पापेभ्योमुच्यतेराजन्पुत्रपौत्रांश्चमाप्स्यसि नेष्टानदृचनस्थुत्वाचका
रव्रतमुत्तमं राजादशरथःसद्योमुक्तोवैपातकान्ततः तस्माद्वृत्रवधान्मुक्तोअहल्यादोषतःप्रभुःसुराचार्योमहाराजसुरापानाद्दहस्प
तिःगुरुस्त्रीगमनाच्चंद्रःस्वर्णहरणाद्बलिः अन्यैरपिमहीपालैर्दिलीपसगरादिभिः महापातकजैर्दोषैर्विमुक्त्यर्थंकृतंतदा त
स्मात्त्वमपिराजेंद्रकुरुष्वव्रतमुत्तमं कुलक्षयकृतेभ्यश्चदोषेभ्योमुच्यसेध्रुवात् यदीच्छसिमहाराजसद्गतिंगतिमात्मनःमाकुरु
ष्वात्रसंदेहोव्रतंकुरुयथोचितं उपाख्यानंचश्रोतव्यंयदुक्तंविष्णुपंचकं येचशृण्वंतिसततंयेपठंतिद्विजोत्तम सर्वेतेमुक्तिमायांति
महापातकजाद्भयात् कथानुवादकंभक्त्यापूजयेच्चसदानरैः तेनसंतुष्यतेविष्णुर्जगत्कर्ताजनार्दनः इतिभविष्योत्तरपुराणेवि
ष्णुपंचकव्रतंसंपूर्णं अथोद्यापनं ममइहजन्मनिजन्मांतरेचब्रह्महननमद्यपानस्वर्णस्तेयगुरुतल्पगमनागम्यागमनतत्संसर्गजनितोप
पपातकानांबुद्धिपूर्वाणामबुद्धिपूर्वाणांमहापातकानांलघुपातकानांप्रायश्चित्तार्थंविष्णुपंचकव्रतंकरिष्ये विष्णुपंचकव्रतस्यसंपूर्णता
सिद्ध्यर्थंउद्यापनंकरिष्ये पुण्याहंवाचयित्वासर्वतोभद्रेब्रह्मादिदेवताआवाह्य कलशेविष्णोःस्वर्णप्रतिमांस्थाप्यरात्रौजागरणंकुर्यात्
प्रभातेस्नात्वाशुद्धदेशेस्थंडिलंकृत्वाअग्निंप्रतिष्ठाप्यअन्वाधानंकुर्यात् चक्षुषीत्यंतमुक्त्वा अत्रप्रधानं पुरुषोत्तमं·शार्ङ्गधन्वानं·गरु
डध्वजं·अनंतं·पुंडरीकाक्षं·नित्यं·वेदगर्भं·यज्ञपुरुषं·सुब्रह्मण्यं·जयं·शौरिं·एताःश्रवणदेवताः अपूपद्रव्येण केशवादिद्वादशनाम
देवताःएताःशुक्लद्वादशीदेवताःगुडपायसेन विधुं शशिनं शशांकं चंद्रं सोमं उडुपं मनोहरं अमृतांशुं हिमांशुं पावमानं निशाकरं
चंद्रमसं· एताःपूर्णिमादेवताः घृतपायसेन संकर्षणादिकृष्णांताःएताःकृष्णद्वादशीदेवताःपंचामृतोदनेन महीधरंजगन्नाथंदेवेंद्रं

देवकीसुतनम् चतुर्भुजं गदापाणिं सुरमीढं सुलोचनं चार्वंगं चक्रपाणिं सुमित्रं असुरांतकं एताः दर्शदेवताः तिलमुद्गौदनेन शेषेण
स्विष्टकृतमित्युक्त्वा होमशेषं समाप्य आचार्यं पूजयेत् पीठदानं कुर्यात् तथा यथाशक्त्या ब्राह्मणान् भोजयेत् तेभ्यो वस्त्रालंकारान्
दद्यात् स्वयं वाग्यतो भूत्वा बंधुभिः सह भुंजीत इति विष्णुपंचकव्रतोद्यापनं संपूर्णम् अथ कोटिदीपदानविधिः स्कंद उवाच
रुद्रसंख्या शिवायाथ अर्पयेद्दीपमुत्तमं कर्षमेकं तदर्धं वा वर्षद्वयमथापि वा कोटिसंख्यार्द्धसंख्या वा तदर्धं वा स्वशक्तितः तस्य दीप
स्य संपूर्त्यै कुर्यादुद्यापनं बुधः उपवासं प्रकुर्वीत पूर्वस्मिन् दिवसे तदा कर्षमात्रसुवर्णेन तदर्द्धार्द्धेन वा पुनः प्रतिमां शंकरस्याथ उमा
यासहितस्य च कलशं स्थापयेद्राचौ स्वस्तिवाचनपूर्वकं आचार्यं वरयेत्तत्र अभिज्ञं वेदपारगम् उमामहेश्वरं चात्र स्थापयेत् कलशो
परि उपचारैः षोडशभिः पूजयित्वा पृथक् पृथक् रात्रौ जागरणं कुर्यात् पुराणश्रवणादिभिः प्रातः स्नानं विधायाथ होमशेषं समारभेत्
तिलैर्यवैश्चचरुणा सर्पिषा बिल्वपत्रकैः आज्यप्लुतैश्च प्रत्येकं सद्योजातादिमंत्रतः शतमष्टोत्तरं हुत्वा होमशेषं समापयेत् उमामहेश्व
रं देवं पूजयेच्च पुनर्व्रती प्रतिमां वस्त्रसहितां आचार्याय निवेदयेत् सहिरण्यां सवत्सां च धेनुं दद्यात्प्रयत्नतः अनेन विधिना यस्तु व्रत
मेतत्समाचरेत् स भुक्त्वा विपुलान् भोगान् शिवसायुज्यमाप्नुयात् ब्राह्मणान् भोजयेत्पश्चाद् वस्त्रालंकारभूषणैः गुरोराज्ञां गृही
त्वा तु सेष्टो भुंजीत मानवः एवं यः कुरुते मर्त्यः कोटिदीपप्रदीपनम् नरो वाप्यथवा नारी सोऽश्नुते पदमव्ययम् ज्ञानमुत्पद्यते तस्य संसा
रभयनाशनम् सर्वपापक्षयकरं जन्मजन्मार्जितं बहु बाल्ये वयसि यत्पापं यौवने वापि यत्कृतम् वार्द्धकेपि कृतं पापं तत्सर्वं नश्यति ध्रु
वम् सर्वपापविनिर्मुक्तो भुक्त्वा भोगाननेकशः सर्वान्कामानवाप्याथ सोऽश्नुते पदमव्ययम् परममितिहासं पावनं तीर्थभूतं वृजिन
विलयहेतुं यः शृणोतीह भक्त्या स भवति खलु पूर्णः सर्वकामैरभीष्टैर्जयति च सुरलोकं दुर्लभं यत्तसंधे: इति श्री स्कंदपुराणे को
टिदीपोद्यापनं संपूर्णम् अथ पार्थिवलिंगोद्यापनम् नारद उवाच कथं पार्थिवपूजाया विधिर्ज्ञेयः सुरे
श्वर किं फलं वास्य विज्ञेयं कथमुद्यापनं भवेत् कियत्कालं च कर्तव्यं प्रारंभश्च कदा भवेत् कथयाशु महादेव लोकानामुप

कारकम् ईश्वरउवाच धर्मार्थकाममोक्षार्थंपार्थिवंपूजयेत्सदा मृदमानीयशुद्धांहि शर्करावर्जितांशुभाम् सिंच्योद
केनशुद्धेनमर्दयित्वातुवंदयेत् प्रारंभोस्यप्रकर्तव्योमाघमासंसितेतरे चतुर्दश्यांविशेषेणसर्वकार्यार्थसिद्धये अथवाश्रा
वणेमासिइंदुवारेशुभेग्रहे स्नात्वासंपूज्यगणपंस्वस्तिवाचनपूर्वकम् आजन्मपूजयेच्छंभुंसंवत्सरमथापिवा संपाद्यस
र्वसंभारान्पूजयेन्मृन्मयंशुभम् शिवेतिमृदमादायमहेशोघट्टनेस्मृतः शंभुःप्रोक्तःप्रविष्टायांपिनाकीप्राणनेमतः शा
शिशेखरःपूजायांवामदेवोपिधूपके विरूपाक्षोपिविज्ञेयोदीपदानेविशेषतः उपहारेकपर्दीस्यात्तांबूलेशितिकंठकः द
क्षिणायामुमाकांतोनीललोहितोविसर्जने एवंपूजाप्रकर्तव्यातंडुलैर्बिल्वपत्रकैः संवत्सरेतुसंपूर्णेउद्यापनविधिंचरेत् आ
चार्यंवरयेत्पूर्वंद्वादशान्मृत्विजस्ततः विरिंच्यालिंगतोभद्रंपंचवर्णैःशुभंस्मृतम् ब्रह्मादिस्थापनंकृत्वाकलशंस्थापयेत्ततःशिव
प्रतिमासौवर्णीरजतस्यवृषस्ततः वस्त्रद्वयेनसंवेष्ट्यउपचारैस्तुषोडशैः पूजयित्वाविधानेनअधिवासनपूर्वकम् गीतवादित्रनि
र्घोषैर्जागरंतत्रकारयेत् स्तोत्रैश्चविविधैःसूक्तैःपूजयेत्परमेश्वरम् चतुर्दशीदर्शयुक्तापारणेप्यधिकामता मृत्युंजयेतिमंत्रेण
अग्नौहुत्वाचपायसं लिंगसंख्यादशांशेन होमःकार्योविधानतः अथवानाममंत्रेणपायसंजुहुयाद्वती तर्पणंचप्रकर्तव्यंतद्द
शांशेनसर्वदा मार्जनंतद्दशांशेनतद्दशांशेनभोजयेत् आचार्यंपूजयेद्भक्त्यावस्त्रालंकारभूषणैः धेनुंदद्यात्सवत्सांचशिव
संतोषहेतवे शिवरूपाश्चतेविप्रादक्षिणावस्त्रसंयुताः पूजयित्वाविधानेननमस्कुर्यात्पुनःपुनः शिवपीठंचतत्सर्वमाचार्याय
निवेदयेत् शिवभक्त्यात्मकंयस्माज्जगदेतच्चराचरम् तस्मादेतेनमेसर्वंकरोतुभगवान्शिवः कैलासवासोगिरिशोभगवा
न्भक्तवत्सलः चराचरात्मकोलिंगरूपीदिशतुवांछितम् इतिप्रार्थ्यततोविप्रान्नमस्कृत्वाविसर्जयेत् स्वयंभुंजीतवैभक्त्या
बंधुवर्गैःसमान्वितः इतितेकथितंविप्रसर्वकामार्थसिद्धिदं शिवलोकंसमासाद्यतत्रैववसतेचिरं इतिभ॰पार्थिवलिं॰ग्रहनंसं॰ व्रतार्के-
चिंतितानर्थान्शुभार्थंचविपश्चितान् बहून्यपंचितानर्थान्दर्शयामियथाक्रमं व्रतस्यलक्षणंचादौकालदेशौततःपरं व्रताधिकारिणःपश्चाद्

र्मास्ततः परं उपवासश्चधर्मश्चहविष्याणिव्रतस्यच पंचरत्नस्वरूपंचपल्लवानांततः परम् पंचगव्यस्वरूपंचमंत्रास्तत्रयथाक्रमं
पंचामृतस्वरूपंचषड्रसानांतथैवच गंधस्यभागमानंचदेवतानांयथाक्रमं सर्वगंधमितिप्रोक्तंयक्षकर्दमसंज्ञकं सर्वौषधीततः प्रो-
क्तामंडलेपंचवर्णकं मृदः सप्तविधाः प्रोक्ताधातवश्चतथास्मृताः सप्तधान्यंततः प्रोक्तंयथाष्टादशसंख्यकं कुंभस्यलक्षणंपश्चात्प्र
तिमाद्रव्यतन्निधिः धान्यमानंततः प्रोक्तंकलशस्थापनेशुभम् पूजाद्रव्याणिसर्वाणियथादेवतमादिशेत् धूपाश्चापितथाप्रोक्ता
देवताभेदतः परं अनादेशेचसंख्याया अष्टोत्तरशताधिका होमद्रव्यप्रतिनिधिर्मंत्रेदेवतयोस्तथा कथनंचाप्यनादेशेद्रव्यप्रतिनिधे
स्तथा पवित्रलक्षणंपश्चात्पात्रसंख्याततः परं धूपाश्चापितथाप्रोक्ताहोमयोग्याग्नयोपिच हेमरोप्यादिधातूनांधान्यानांमानमीरि
तम् होमद्रव्यस्यमानंचऋत्विजांवरणंतथा आचार्यकर्मकरणंअग्न्यावाहनमेवच सर्वतोभद्रसंज्ञंचलिंगतोभद्रमेवच अथमंडलदे
वानांमुद्राणांलक्षणानिच षोडशाद्युपचाराणांकथनंचपृथक्पृथक् विधिश्चोद्यापनेप्रोक्तोव्रतभंगेतथैवच उपयुक्तपदार्थानामभि
धेयंपरिभाषणं अथव्रतानिकथ्यंतेप्रतिपत्प्रभृतिक्रमात् चैत्रशुक्लप्रतिपदिसंवत्सरविधिः स्मृतः आरोग्यप्रतिपत्पश्चाद्विद्याप्र-
तिपदस्तथा तिलकव्रतकंप्रोक्तंबिल्वरोपाख्यकंतथा दौहित्रप्रतिपत्प्रोक्तानवरात्रकं घृतप्रतिपदाप्रोक्तानतः स्कंदव्रतंस्मृ ता
चंपाषष्ठीविधिस्तत्रबलिराज्यमतः परं पूजागोवर्धनस्याथप्रतिपद्यांयथाविधि ततोयमद्वितीयाचेष्यात्संज्ञाततः परं तृतीयायांत
तः प्रोक्तंसौभाग्यशयनव्रतं गौर्यांदोलोत्सवः प्रोक्तःअक्षय्याख्याततः स्मृता स्वर्णगौरीततः प्रोक्ताहरितालिततः स्मृता बृहद्गौ-
रीततः प्रोक्तासौभाग्याख्याततः परं चतुर्थ्यामथसंप्रोक्तंश्रावणेकृष्णपंचके संकष्टाख्यव्रतंप्रोक्तंगणेशस्यशुभप्रदं श्रावणे-
शुक्लपक्षेतुदूर्वागणपतिर्द्विधा ततः सिद्धिविनायख्यास्यमताख्यानमेवच कपर्दीगणपतिः प्रोक्तोकरकाख्याततः स्मृता शु
भ्राज्ञेयादशरथीततोगौरीतिसंज्ञिता वरदाख्याततोज्ञेयाशुक्लावेगणनायके संकष्टामाघकृष्णेतुचतुर्थ्यंगारकीतथा व्रतंच
नागपंचम्यानागदष्टव्रतंतथा ऋषिपंचमिसंज्ञाश्चमुपांगललितास्मृता वसंतपंचमीप्रोक्तामाघशुक्लहरिप्रिया आद्यातुललिता

षष्ठीकपिलाव्रतकंतथा स्कंदषष्ठीततःप्रोक्ताचंपाषष्ठीततःस्मृता गंगाख्यासप्तमीप्रोक्ताशीतलासप्तमीततः मुक्ताभरणसंज्ञा-
ख्यासरस्वत्याश्चपूजनं रथसप्तमीविज्ञेयाअचलासप्तमीतथा पुत्रसंज्ञाचतत्रैवसप्तमीव्रतमुत्तमं बुधाष्टमीततःप्रोक्तासैवगोकु
लसंज्ञका ज्येष्ठाष्टमीततोज्ञेयादूर्वाष्टमीशुभप्रदा महालक्ष्मीस्ततःप्रोक्ताव्रतंषोडशवासरं महाष्टमीततःप्रोक्ताअशोकाष्टमिसं
ज्ञिका कालाष्टमीततोज्ञेयाभैरवाख्याशिवप्रिया नवमीरामविख्यातासर्वपापहराशुभा ततोवैरामनामस्यलेखनंपूजनंशुभं न
वमीशारदाप्रोक्तादुर्गासंख्याशुभप्रदा अक्षय्यनवमीसंज्ञाकार्तिकेशुक्लपक्षके ततोविवाहोधात्र्याश्चतुलस्याश्चशुभप्रदः ततो
दशाहरास्तोत्रंव्रतंदशहरंशुभं आशादशम्यथख्याताव्रतंदशवतारकं दशमीविजयानामशम्यापात्राभिमानतः एकादशीततःप्रो
क्तासनिर्णयशुभप्रदा निर्णयोद्वादशीनांचअशनापरिकीर्तितः उद्यापनमथोच्यतेएकादश्याःशुभप्रदं शुक्लकृष्णादिधाप्रोक्ता
सामान्याद्वादशीतथा मार्गशीर्षादिमारभ्यकथनंत्वघनाशनं चतुर्विंशतिसंख्याकमेकादशीव्रतंशुभं चतुर्विंशतिनामानिमहि-
मावपृथक्पृथक् शयन्येकादशीप्रोक्ताचातुर्मास्यव्रतेशुभा व्रतानितत्रकथ्यंतेवार्षिकाणिबहूनिच सोद्यापनानिसर्वाणिमानवानां
शुभानिच भीष्मपंचकसंज्ञंचगोपद्माख्यव्रतंशुभं प्रबोधेवैतुलस्याश्चकर्तव्योवैशुभद्वये द्वादश्योत्यकथ्यंतेदमनाख्याशुभप्र-
दा वैशाखीयोगयुक्ताचव्यतीपाताभिधासता आषाढीपारणेज्ञेयापवित्रारोपणंततः वामनाख्याविशेषेणश्रवणेनसमन्विता
ततोज्ञेयासरूपावैद्वादशीपरिकीर्तिता त्रयोदशीजयाप्रोक्तापार्वतीपूजनेशुभा गोत्रिरात्रव्रतंप्रोक्तंदशभेदाद्विधास्मृता अशो-
काख्यंततःप्रोक्तंमहावारुणिकंततः शनिप्रदोषसंज्ञंचपक्षसंज्ञप्रदोषकं अनंगाख्याभिधाज्ञेयात्रयोदशीशुभास्मृता चतुर्दशीमधौ
प्रोक्तास्नानेवैशिवसन्निधौ नृसिंहाख्याततःप्रोक्ताततोनंतचतुर्दशी रंभाव्रतेततःप्रोक्तानरकाख्याततःपरं वैकुंठाख्याततःप्रो
क्ताचतुर्दशीशिवप्रिया शिवरात्रिस्ततोज्ञेयाशिवव्रतविधास्मृता पौर्णिमावटसावित्रीगोपद्माख्याततःपरं कोकिलाव्रतमाहात्म्य
ततोरक्षाभिधास्मृता उमामहेशभिज्ञाचपौर्णमासीशुभप्रदा कोजागरंततःप्रोक्तंत्रिपुरोत्सवमग्रतः बत्तिशीपौर्णिमाज्ञेयालो-

हितारव्यानतः परं अमापिठोरिसंज्ञारव्यालक्ष्मीसज्ञाततः पर गाराभपाव्रतप्रोक्तमभासामिनसंयुता अर्धोदयस्ततः प्रोक्तः अमाव
स्याविशेषतः अतःपरंप्रवक्ष्यामिमलमासादिकंव्रतं स्वस्तिकारव्यंव्रतंपश्चात्तंचवर्णैः सुशोभितं रविवारव्रतंपश्चाद्दाशादित्य
व्रतंतथा ततोदानफलंप्रोक्तंभानुवारेमहत्फलं सोमवारव्रतंपश्चात्काम्यमोक्षार्द्धधानतथा विशेषणंबुधवारेवेएकभक्तिव्रतंततः
भौमवासरसंज्ञंचततोवैभृगुवासरं शनैश्चरव्रतंपश्चान्व्यतीपातंततःपरम् मासोपवासकंपश्चाद्धारणापारणाततः धान्यसंक्र
मणंपश्चाल्लुवणारव्यंततःपरम् भोगसंक्रमणंपश्चाद्रूपसंक्रमणंतथा तेजसंक्रमणंज्ञेयंसौभाग्यारव्यंततःपरं प्रोक्तातांबू
लसंक्रांतिर्मनोरथविधानतः अशोकारव्याततःप्रोक्ता आयुर्वृद्धिकरीततः धनसंक्रमणंप्रोक्तंकृसरान्नेनभोजनं ततोमकर
मासेवैघृतस्नानंरवेःस्मृतं घृतकंबलदानंचदधिमंथनमेवच तांबूलस्यततोदानंसोद्यापनमुदाहृतं मौनव्रतंततोज्ञेयंप्रपादान
ततःपरं लक्षपद्मंततःप्रोक्तंलक्षदीपास्ततःपरं लक्षदूर्वास्ततःप्रोक्ताःशिवलक्षपरिक्रमं प्रदक्षिणाविधिःप्रोक्तोह्यश्वत्थस्यबुधै
स्ततः विष्णुप्रदक्षिणाःप्रोक्तास्तुलस्याश्चततःपरं विप्राग्निगोहनुमतःप्रदक्षिणामतःपरं लक्षबिल्वदलैःप्रोक्तंनानापुष्पैस्तुपू
जनं तुलसीलक्षसंख्याकाविष्णुपूजाततःपरं बिल्ववर्तीततोज्ञेयारुद्रवर्तीततःपरं माणिक्यवर्तिसंज्ञंचविष्णुवर्तीततःपरं देहवर्ती
ततःप्रोक्तासर्ववर्तीततःस्मृता विष्णुसूर्यनमस्कारालक्षसंख्यास्ततःपरं मंगलारव्याततोगौरीमौनव्रतमतःपरं पंचधान्यारव्यपूजा
वैशिवामुष्टिस्ततःपरं हस्तगौरीततोज्ञेयाकूष्मांडीचततःपरं कर्कोटिकाततोज्ञेयाविष्णुपंचकसंज्ञकं कोटिदीपास्ततोज्ञेयाःपार्थि
वोद्यापनंततः शिवमस्तुसर्वजगतःपरहितनिरताभवंतुभूतगणाः दोषाःप्रयांतुनाशंसर्वत्रजनःसुखीभवतु ॥ इतिश्रीविश्व
नाथविरचितेव्रतराजार्केअनुक्रमणिकासमाप्ता ॥ अथसप्तधान्यलक्षपूजाविधिर्लिख्यते तिलसार्धलक्षसप्तक
र्षैर्लक्षसंख्याभवति तिललक्षपूजनाद्वर्षषष्टिसहस्रंस्वर्गवासः तंडुलप्रणार्धेनलक्षः तस्यपूजनाद्वर्षचत्वारिंशच्चइंद्रलोकवा
सः ॥ २ मुद्गप्रणार्द्धेनलक्षः तस्यपूजनाद्वर्षलक्षषष्टिस्वर्गवासः ३ माषप्रणार्द्धेनलक्षः तस्यपूजनाद्वर्षसहस्रंस्वर्गवासः

४ गोधूमकर्षविंशत्यालक्षः तस्यपूजनाद्वर्षाशीतिस्वर्गेवासः ५ यवमणेनलक्षः तस्यपूजनाद्वर्षसहस्रपंचकंस्वर्गेवासः ६
कर्पूरस्लक्षपूजनाच्छिवलोकमाप्यकल्पांतपर्यंतं पश्चाच्चक्रवर्ती ७ अथफलानालक्षपूजा कदलीफललक्षपूजनाद्वर्षसह-
स्रस्वर्गवासः पश्चाद्राजाभवेत् १ पूगीफललक्षपूजनाद्वर्षमेकंस्वर्गवासः नारिंगीफललक्षपूजनाद्वर्षलक्षाष्टकंस्वर्गेवासः २
कर्कटीफललक्षपूजनाद्वर्षलक्षद्वयंस्वर्गेवासः पश्चान्महाराजोभवेत् ३ जांबीरलक्षपूजनेनवर्षशतत्रयंशिवपुरेवासः अनं
तापनिबंचभवति ४ बीजपूरलक्षपूजनाद्वर्षलक्षचतुष्टयंशिवपुरेवासः ५ लवंगपूजनाद्वर्षलक्षषट्कंशिवपुरेवासः ६ आरोग्
यपूजनाद्वर्षसप्तलक्षकंशिवपुरेवासः पश्चाद्धनपुत्रादिप्राप्तिर्भवति ७ पनसलक्षपूजनाद्वर्षसहस्राष्टकंस्वर्गेवासः ८ रा
यफलपूजनाद्वर्षलक्षदशकंस्वर्गेवासः पश्चात्पृथिवीशोभवति ९ सहकारलक्षपूजनात्कोटिवर्षस्वर्गेवासः १० जंबूफ
ललक्षपूजनेनवर्षकोटिस्वर्गेवासः ११ एलाफललक्षपूजनेनद्वादशसहस्रस्वर्गेवासः पश्चाच्चक्रवर्तीभवति १२ अखंडबि-
ल्वपत्रलक्षपूजनात्कल्पांतंशिवपुरेवासः १३ जीरलक्षपूजनात्सप्तजन्मपर्यंतंसौभाग्यंपश्चाद्राज्यप्राप्तिः १४ छ्ः इति-
धान्यफललक्षपूजाविधिः अथलक्षपूजोद्यापनम् यथाशक्तिब्राह्मणभोजनंनारीकेलार्घ्यदानं गजध्वजपताकाशिव
स्योपरिकार्याश्वेतवस्त्राच्छादनं तत्राचार्यलक्षणं ह्रस्वंचहृष्पलंचैवमतिदीर्घजडंतथा चेतसांचापिषेक्तारंबधिरंहीनलिं
गकं वेदहीनंदुराचारंमलिनंबहुभाषिणं निंदकंपिशुनंदक्षंअंधकंचविवर्जयेत् सपत्नीकंसपुत्रंच अनाचारमनिंदकं
कर्मज्ञंदोषरहितंसंतुष्टंतुपरीक्षयेत् पूजांतेचततोहोमंतिलद्रव्येणकारयेत् यद्वारेमत्तमातंगावायुवेगास्तुरंगमाः पूर्णे-
दुवदनानार्योलक्षपूजाविधेःफलं नमःशिवायशांतायसगणायससूनवे निवेदयामिचात्मानंत्वंगतिःपरमेश्वर भूमौ-
स्खलितपादानांभूमिरेवावलंबनं त्वयिजातापराधानांत्वमेवशरणंमम छ्ः इतिश्रीब्रह्मपुराणेलक्षपूजोद्यापनंसं
पूर्णम् ॥ छ्ः॥ श्रीसांबसदाशिवार्पणमस्तु ॥ छ्ः॥ ॥ छ्ः॥ ॥ छ्ः॥ श्रीलक्ष्मीप्रसन्न ॥ छ्ः॥



चिंतिनानर्थानशःमार्थंचविपाश्चतान् वहू...

हा ग्रंथ मुंबईंत. बापुसदाशिवशेट हेगिष्टे शेट्ये श्रीवर्धनकर, याणीं आपले शिलाछापखान्यांत छापून लोककल्याणार्थ, प्रसिद्ध केला असे. शक १७८९ प्रभवनामसंवत्सरे कार्तिकमासे शुक्लपक्षे १३ तिथौ समाप्तोयं ग्रंथः

॥ इतिव्रतराजः समाप्तः ॥